**व्यतिरेकव्याप्ति does not directly help Anumāna**

In Nyāya system अनुमान is classified as केवलान्वयि, केवलव्यतिरेकि and अन्वयव्यतिरेकि. This is based on the operation of the two types of व्याप्ति viz., अन्वयव्याप्ति and व्यतिरेकव्याप्ति. These two are defined as साधनस्य साध्येन व्याप्तिः अन्वयः and साध्याभावस्य साधनाभावेन व्याप्तिः व्यतिरेकः. The instances where अन्वयव्याप्ति alone operates are केवलान्वयि । The instances where व्यतिरेकव्याप्ति alone operates are केवलव्यतिरेकि and such instances wherein both operate are अन्वयव्यतिरेकि ।

This arrangement is not acceptable to Dvaita. The reason for not accepting are : व्यतिरेकव्याप्ति is not useful for establishing साध्य । When a positive entity is to be established by means of another positive entity by showing their व्याप्ति relation, the व्याप्ति relation between their absences is not of any help.

व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धौ अनुपयोगात् । नहि भावेन भावसाधने अभावस्य अभावेन व्याप्तिः उपयुज्यते ।

In the instance of the so called केवलव्यतिरेकि viz. जीवच्छरीरजातं सात्मकं प्राणादिमत्त्वात्, the व्याप्ति 'यत् प्राणादिमत् तत् सात्मकम्' itself helps the establishment of साध्य. However, as there is no instance with reference to which this व्याप्ति could be comprehended. This difficulty could be overcome by व्यतिरेकव्याप्ति. The व्यतिरेकव्याप्ति only helps to infer the अन्वयव्याप्ति which establishes साध्य ।

तत्रापि यत् प्राणादिमत् तत् सात्मकमित्येव व्याप्तिः । किन्तु व्याप्तिग्रहणस्थानस्यैव विप्रतिपत्ति विषयत्वप्राप्त्या सा दर्शयितुमशक्याऽभूत् । ततोऽनुमानेन तां साधयितुं व्यतिरेकव्याप्तिरुपन्यस्यते । प्राणादिमत्त्वादिति प्रयुक्ते कथमस्य व्याप्तिरित्याकांक्षायां प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं तदभावव्यापकाभावप्रतियोगित्वात् । यद् यदभावव्यापकाभावप्रतियोगि तत् तेन व्याप्तम् । यथा धूमवत्त्वमग्निमत्त्वस्य । (प्र.प)

Thus व्यतिरेकव्याप्ति does not directly establish साध्य but only helps the comprehension of अन्वयव्याप्ति which establishes साध्य. Therefore, the classification fo this type of अनुमान as केवलव्यतिरेकि has no ground. In case of अन्वयव्यतिरेकि, the व्यतिरेकव्याप्ति is not necessary even for this purpose. Therefore, the classification as अन्वयव्यतिरेकि is also not necessary. Hence, the three-fold grouping of अनुमान in Nyāya system is an unnecessary exercise.

In respect of परार्थानुमान, Dvaita holds that working out all the five अवयवs-प्रतिज्ञा, हेतु etc., in all instances is not necessary. It depends upon the need of each case. Sometimes even one is sufficient. This position of Dvaita is explained in प्रमाणपद्धति in detail.

**उपपत्तिदोषाः**

Earlier अनुमान is defined as निर्दोषोपपत्तिरनुमानम्. Therefore, it is necessary to state as to which are उपपत्तिदोषs. These are defined as 'यत् सद्भावे लिङ्गाभिमतं ज्ञानमेव न जनयति संशयविपर्ययौ वा करोति ते दोषाः'. This definition is briefly stated as 'प्रमाप्रतिबन्धकत्वं दोषत्वम्'. These उपपत्तिदोषs are broadly classified as अर्थदोष and वचनदोष । विरोध and सङ्गति are अर्थदोष while न्यून and अधिक are वचनदोष. However both अर्थand वचनदोषs affect both. 'योग्यताभाव: विरोध:' 'आकांक्षाविरह: असङ्गति:' 'अवश्यवक्तव्यस्य एकदेशमात्रवचनं न्यूनम्' 'आकांक्षितस्यैव अन्येन कृतकार्यस्य वचनमधिकम्' (प्र.प) These are found in respect of कथा i.e., debate and अनुमान i.e., syllogisms framed. Detailed account of various defects coming under these broad division is given in प्रमाणपद्धति. We will notice only such of them that are especially envisaged in the Dvaita tradition. For instance, under प्रबलप्रमाणविरोधप्राबल्य it is explained that प्राबल्यं द्विविधम् । बहुत्वेन स्वभावेन । स्वभावश्च उपजीव्यत्वं निरवकाशत्वमित्यादिरूप: ।

विरोध, असङ्गति etc., four metioned above, and संवाद and अनुक्ति, these six constitute निग्रहस्थानs. All other निग्रहस्थानs mentioned in Nyāya system come under these only. The twenty-two निग्रहस्थानs are listed in प्रमाणपद्धति and the nature of each is explained with suitable examples. It is further explained as to how these come under these only. The twenty two निग्रहस्थानs are listed in प्रमाणपद्धति and the nature of each is explained with suitable examples. It is further explained as to how these come under one or the other of six निग्रहस्थानs viz., विरोध, असङ्गति etc. Explaining जाति which is explained as 'दूषणासमर्थं उत्तरम्'. Twenty-four varieties of असाधारण असामर्थ्य viz., साधर्म्यसम, वैधर्म्यसम etc., are explained, Finally the हेत्वाभासs viz., असिद्धविरुद्धानेकान्तिकानध्यवसितकालात्ययापदिष्ट सत्प्रतिपक्ष प्रकरणसमा: are explained with suitable examples. Whether अनध्यवसित, सत्प्रतिपक्ष and प्रकरणसम are separate हेत्वाभासs or not is discussed. It is pointed out that ultimately all these निग्रहस्थानs are included under the six दोषs -विरोध, असङ्गति etc.,

**Definition of आगम**

आगम is defined as 'निर्दोष: शब्द: आगम:'. The दोषs of शब्द are listed as अबोधकत्व, विपरीतबोधकत्व etc. The expression शब्द in this definition should be taken as referring to both पद and वाक्य. This is because even पदs convey the Supreme God. Though the यौगिकपदs are as good as वाक्य, these are not पदसमुदायात्मक. Therefore, if शब्द is taken to refre to वाक्य only the पदs will be excluded from the scope of the definitionl. This is not desirable. Therefore, the expression of शब्द in the definition should be taken as referring to both पद and वाक्य. This is made clear by the statement निर्दोष वाक्यमिति वा (प्र.प)

शब्दः पदवाक्यात्मको न तु वाक्यात्मक एव । सिद्धान्ते वैदिकानामपि पदानां महायोगवृत्त्या भगवति प्रामाण्यस्योक्तत्वात् । न च यौगिकपदानामपि प्रकृतिप्रत्ययविभागेन च संसर्गबोधकतया वाक्यात्मतैवेति वाच्यम् । तथापि पदसमुदायरूपवाक्यात्मकत्वाभावात् । तथा चात्र लक्षणे पदवाक्योभयरूपोऽपि शब्दः लक्ष्यत्वेन विवक्षितः । (वेदेशतीर्थ)

**Definitions of पद and वाक्य**

पद and वाक्य are defined as 'विभक्त्यन्ताः वर्णाः पदम्', 'आकांक्षा सन्निधियोग्यतावतां पदानां समूहो वाक्यम्' (प्र.प) respectively. The plural as वर्णाः is not a necessary condition since even a singly वर्ण can make a पद.

'वर्णा इति बहुवचनमतन्त्रम्' तेन 'अ' इति ब्रह्म 'कश्छन्दसां योगमित्यादौ 'अ, कः' इत्यादेः पदत्वसिद्धिः । विभक्तिश्च सुप्तिङौ सुप्तिङौ विभक्तिसंज्ञौ भवतः इति वैयाकरणोक्तेः । (राघवेन्द्रतीर्थ)

आकांक्षा जिज्ञासा । सा चेतनधर्मः । तद्विषयत्वादर्थाः साकांक्षाः । तत्प्रतिपादकत्वात् पदान्यपि । सन्निधिरविलम्बेन उच्चरितत्वं पदधर्म एव । प्रतीतान्वयस्य प्रमाणविरोधाभावः योग्यता पदार्थधर्मः । तद्वाचकत्वात् पदान्यपि योग्यतावन्तीत्युच्यन्ते ।

These explanations of आकांक्षा, सन्निधि and योग्यता reveal considerable improvement over the Nyaya explanatiton of these and are more exact to the nature of these requirements.

According to Dvaita वर्णs are नित्य and व्याप्त. Therefore, it is not possible to work out क्रम i.e., sequence spatially or temporally. Hence, the sequence has to be

only in terms of the sequence of comprehension. This is also difficult since the comprehension of each वर्ण is momentary and cannot conect it with the comprehension of next वर्ण. Thus it seems difficult to evolve the noting of a पद. The difficulty applies to वाक्य also.

The above difficulties are solved as follows :

When the ear grasps the last letter of a word it produces the comprehension of पद aided by the संस्कारs of पूर्वपूर्ववर्णs and also the संस्कार of the comprehension of वाच्यवाचकसम्बन्ध. Similarly, पूर्वपूर्वपदानुभवजनितसंस्कारसहकृतमन्त्यपदविषयं श्रोत्रमनेकेषु पदेषु एकां वाक्यबुद्धिमाकाङ्क्षाद्यनुसारेण जनयति । (प्र.प) When the ear grasps the last word of a sentence it produces the comprehension of a sentence aided by the संस्कारs of the previous words as per the आकांक्षा etc., requirements present. This explanation does away with the need of पदस्फोट and वाक्यस्फोट concepts.

ननु क्रमविशेषविशिष्टवर्णसमूहस्य पदत्वं वाच्यम् । न च नित्येषु व्याप्तेषु च वर्णेषु कालतः देशतो वा स्वतः क्रमः सम्भवति । अतः प्रतीतिक्रमेणैव तेषु क्रमो वक्तव्यः । नचैवं समुदायो सम्भवति । प्रतीतानामाशुतरविनाशित्वेन मेलनासम्भवात् । अतः वर्णेषु पदत्वमेव ज्ञातुमशक्यम् । कुतस्तद्धटितं वाक्यत्वमित्याशङ्कायामाह - पूर्वपूर्वेति । (वेदेशतीर्थ)

पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितं वाच्यवाचकभावसम्बन्धग्रहणसंस्कारानुगृहीतमन्त्यवर्णसन्निकृष्टं श्रोत्रमनेकेष्वपि वर्णेषु एकां पदबुद्धिं जनयति । (प्र.प)

**Meaning of a word**

As regards the meaning of a word Dvaita holds the view that व्यक्ति is the meaning of a word. Sri Jayatirtha mentions the views of other systems in this connection and finally states the Dvaita position.

(१) जातिरेव वाच्या पदानां व्यक्तयस्तु लक्ष्याः इति भाट्टाः ।
(२) जातिविशिष्टाः व्यक्तयः वाच्याः इति वैशेषिकाः ।
(३) क्वचिद् जातिः क्वचिद् व्यक्तिरिति वैयाकरणाः ।
(४) क्वचिद् जातिः क्वचिद् व्यक्तिः क्वचिदाकृतिरिति नैयायिकाः ।
(५) अन्यापोह इति बौद्धाः ।
(६) व्यक्तय एव वाच्याः समयप्रतिपत्तौ तु सादृश्यमुपधानमित्याचार्याः ।

This problem of the meaning of a word is very much discussed in a different systems. The main objection for taking व्यक्ति as the meaning of a word is - there are many व्यक्तिs in each group and if one व्यक्ति is converyed by a word how to comprehend the other व्यक्तिs of the same group by that word. If each व्यक्ति is separately conveyed by a word then, one has to get introduced to its power of conveying i.e., शक्ति each time separately. This difficulty is overcome by जातिशक्तिवादिन्s by saying that the word conveys जाति which is present in all व्यक्तिs of the group. In Dvaita, जाति or सामान्य of Nyāya type is not accepted. Therefore, Dvaita solves this difficulty differently. व्यक्तिs are similar to each other. When a व्यक्ति is comprehended as a meaning of a word all other व्यक्तिs of the same group are also comprehended as its meaning through सादृश्य. Thus the role played by जाति in जातिशक्तिवाद is played by the सादृश्य here.

ननु अनुगतजात्यभावे व्यक्तीनामानन्त्येन सङ्केतग्रहायोगः इत्यत आह - समयप्रतिपत्ताविति । सादृश्यमुपधानमुपाधिः । निमित्तमिति यावत् । चक्षुसन्निकृष्टे पुरोवृत्तिगोपिण्डादौ विद्यमानेन अतीतानागतसर्वगोप्रतियोगिकेन सादृश्येन स्वप्रतियोगिष्वनन्तगवादिषु प्रतियोगितासम्बन्धेन उपस्थापितेषु गोपदशक्तिग्रहसम्भवादिति । यथा परमते पुरोवृत्तिनिष्ठगोत्वजात्या स्वविशेषणसम्बन्धेन सर्वगोपिण्डेषु उपस्थापितेषु गोपदशक्तिग्रहः तद्वदिति भावः । (राघवेन्द्रतीर्थ)

### योग्येतरान्विताभिधानवाद

In respect of the formation of sentence meaning, Dvaita goes by अन्विताभिधानवाद theory of its own that is different from Prabhakara's theory.

(१) पदैः अभिहिताः पदार्थाः एव आकाङ्क्षादिशालिनः अन्वयबोधका इति भाट्टाः ।

(२) प्रत्येकमपि पदानि अन्वयविशेषाभिधानसमर्थानीति प्राभाकराः ।

(३) प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽपि अन्वितान् स्वार्थनभिदधति । तथा अनुभवादित्याचार्याः ।

Both Prābhākara and Dvaita go by the theory that पदान्येव अन्वितस्वार्थाभिदायीनि. But according to Prābhākaras the words convey विशेषान्वितस्वार्थ at the very first step of conveying meaning while according to Dvaita a word conveys its meaning as connected with the meaning of a suitable some other word in a general way

and then conveys it as connected with the meaning of a particular word given in the sentence. This position is explained in अनुव्याख्यान as follows:

(१) शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ।
अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा ॥

(२) अत: सामान्यतो ज्ञात: पदान्तरबलात् पुन: ।
भवेद् विशेषतो ज्ञात: तेन स्यादन्वितोक्तिता ॥ (अनुव्याख्यान)

प्रत्येकं हि पदानि सामान्यत: आकांक्षितसन्निहितयोग्येतरान्वितस्वार्थाभिदानसामर्थ्यानि । सामान्यतो ज्ञाते हि विशेषजिज्ञासा दृष्टा । पदान्तरस्य विशेषान्वयप्रतीतार्थत्वेनैव सार्थक्यम् । (वेदेशतीर्थ)

Words are capable of covneying their meaning as connected with the meaning of a suitable other word in a general way. After this is done there arises a need to get connected with the meaning of a particular word. This is provided by the particular word in the respective sentence.

The above explanation, however, gives rise to another problem. In effect it means that words have two powers namely -

(1) To convey the connection with the meaning of a suitable word in a general way.

(2) To convey the connection with the meaning of a suitable particular word. This difficulty can be overcome by considering the two processes as one power of the word operating in stages.

(१) न चैवं पदानां प्रत्येकं सामान्यतो योग्येतरान्वये शक्ति: । पदान्तरसमभिव्याहारेण विशेषान्वये शक्तिरिति कल्पनागौरवमिति वाच्यम् । या शक्ति: पदान्तरसमभिव्याहारनिरपेक्षा सामान्यान्वयबोधिका तस्या एव पदान्तरसमभिव्याहारसापेक्षया: विशेषान्वयबोधाङ्गीकारात् । (वेदेशतीर्थ)

(२) पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतु: न पुनरविद्यमानशक्त्याधानम् ।

(३) यद्वा प्रत्येकं पदानि सामान्यतो योग्येतरान्वितस्वार्थेषु शक्तानि । तेषु पदान्तरसमभिव्याहाररूपसहकारिसामर्थ्येन विशेषतोऽपि अन्वितस्वार्थबोधानुकूलशक्त्यन्तराभिधानमिति यथान्यासमेव साधु । गौरवस्य प्रामाणिकत्वेन ग्राह्यत्वमदत एवाह । तथानुभवादिति । (वेदेशतीर्थ)

This approach of सामान्यान्विताभिधान and then, विशेषपर्यवसान helps to avoid अन्योन्याश्रय which is a major drawback in the Prabhakara approach of विशेषान्विताभिधान. The अन्योन्याश्रय in Prabhakara view is generally pointed out as -

क्रियापदेन आनयनरूपे क्रियाविशेषे अभिहिते घटपदेन तदन्वितघटाभिधानम् । एवं घटपदेन घटरूपे कारकविशेषे अभिहिते क्रियापदेन तदन्वितक्रियाभिधानमित्यन्योन्याश्रयत्वम् ।

There is no room for such अन्योन्याश्रय in the Dvaita approach. The सामान्यान्वितस्वार्थ of a word is conveyed without depending upon the other word. Then, the other word is utilised for विशेषपर्यवसान. Thus, Dvaita theory of सामान्यान्वितस्वार्थाभिधान leading to विशेषपर्यवसान is an improvement over the Prābhākara approach.

**अपौरुषेयागमस्वरूप**

आगम is of two types viz., पौरुषेय and अपौरुषेय. According to Dvaita, वर्णs are कूटस्थनित्य and सर्वगत. The पदs are also नियत i.e., एजकजातीयानुपूर्विक. पदपदार्थसम्बन्ध is स्वाभाविक. This much is common to both पौरुषेय वाक्य and अपौरुषेय वाक्य. The only difference between the two is in the case of पौरुषेयवाक्य the आनुपूर्वी or the order of words is स्वतन्त्रपुरुषपूर्वक While in अपौरुषेय वाक्य it is not so. वाक्ये पदानामानुपूर्वीविशेषस्य स्वतन्त्रपुरुषपूर्वकत्वभावाभावाभ्यामयं भेदः । Here by स्वतन्त्रपुरुष a person who is not merely repeating what is already there is meant. सजातीयोच्चारणमनपेक्ष्योच्चारयिता स्वतन्त्रः इत्युच्यते । For instance when व्यास dictated the Mahabharata he was not merely repeating what was already there but he himself composed the Mahabharata. In the case of the Vedas nobody composed them. Teacher aftter teacher recited the Vedas. अप्रमितकर्तृवाक्यत्वं वेदत्वम् ।

**अर्थापत्ति etc., are included in other प्रमाणs**

The Vaiśeṣika view that शब्द is not a separate प्रमाण and the Prabhakara view that पौरुषेयशब्द is not a separate प्रमाण are not acceptable to Dvaita.

अर्थापत्ति is defined as अनुपपद्यमानार्थदर्शनात् तदुपपादके बुद्धिरर्थापत्तिः (प्र.प). Dvaita does not accept this अर्थापत्ति as a separate प्रमाण. It is included under अनुमान. The stock example of अर्थापत्ति viz., जीवन् चैत्रः गृहे नास्तीति ज्ञाने बहिर्भावज्ञानम्. Drawing the conclusion that Chaitra is outside home since he is not at home but he is alive, could be easily put in a syllogistic form as चैत्रः बहिरस्ति जीवनवत्त्वे सति गृहे असत्त्वात्. The only objection against this syllogism is, how can the two facts viz., जीवनवत्त्व and गृहे असत्त्व that are opposed to each other could be put together as हेतु, is not

tenable, because these two are सामान्य and विशेष type. जीवनवत्त्व is a general position (of being somewhere) while गृहे असत्त्व is a particular position. Therefore, there is no diffeculty in putting these two together as हेतु.

These two जीवनवत्त्व and गृहे असत्त्व are not capable of being हेतु separately but together these can be हेतु.

'यद्यपि एकैकस्य बहिर्भावलिङ्गत्वं नोपपद्यते । व्यभिचारात् । तथापि मिलितयोः जीवनगृहाभावयोः लिङ्गत्वमुपपद्यत एव । विरुद्धयोः विशेषणविशेष्यभावानुपपत्तिरिति चेन्न । सामान्यविशेषयोः अविरोधस्य स्वस्मिन्नेव (अर्थापत्तिपृथक् प्रामाण्यवादिनि एव) दृष्टत्वात् ।

उपमान is also not accepted as a separate प्रमाण. Its nature is explained as सादृश्यज्ञानमुपमानम्. However its different aspects are included under प्रत्यक्ष, आगम and अनुमान as under:

(१) तेन अयं सदृशः, सदृशौ इमौ इत्यादिज्ञानं प्रत्यक्षम् ।

(२) गोगवयौ सदृशौ इति वाक्यजं तु आगम एव ।

(३) गृह्यमाणे स्मर्यमाणसादृश्यं दृष्ट्वा स्मर्यमाणे यद् गृह्यमाणसादृशं प्रत्येति तदनुमानमेव । 'सः गौ एतद्गवयसदृशः अस्य गवयस्य तद्गोसदृशत्वात् । यो यत्सदृशः स तत्सदृशः । यता यमो यमान्तरेण । (प्र.प)

अभाव which is explained as 'अभावज्ञानकरणभावप्रमाणम्' is also not acceptable to Dvaita. The अभावज्ञान in various contexts is explained away as follows :

(१) इदानीं कौरवाद्यभावः भारताद्यागमात् गम्यते ।

(२) देवदत्तस्य चक्षुराद्यभावः रूपाद्यदर्शनलिङ्गेभ्यः ।

(३) सुखाद्यभावप्रमितिः साक्षिप्रत्यक्षेणैव ।

(४) पुरोवृत्तिघटाद्यभावप्रमितिस्तु झटिति जायमाना प्रत्यक्षफलमेव ।

The usual objection for considering अभाव as प्रत्यक्षवेद्य viz., अभावस्य इन्द्रिय-सन्निकर्षानुपपत्ति is ruled out by holding that भाववदभावस्यापि इन्द्रियसन्निकर्षे बाधकाभावात् ।

**सम्भव and ऐतिह्य are also not separate प्रमाणs**

**प्रामाण्यविचारः**

Finally Sri Jayatirtha discusses प्रामाण्य. He states the views of different systems in this respect as under :

# प्रमाणपद्धतिः

## विषयानुक्रमणिका

### ॥ प्रत्यक्षपरिच्छेदः ॥



### ॥ अनुमानपरिच्छेदः ॥



### ॥ आगमपरिच्छेदः ॥



॥ ग्रन्थश्चायं सम्पूर्णः ॥

# ॥ प्रमाणपद्धतिः ॥

## ॥ प्रत्यक्षपरिच्छेदः ॥

**प्रणम्य चरणाम्भोजयुगलं कमलापतेः ।**
**प्रमाणपद्धतिं कुर्मो बालानां बोधसिद्धये ॥ १ ॥**

### ग्रन्थारम्भसमर्थनम्

(२) यद्यपि भगवत्पादैरेव प्रमाणलक्षणादिकमभिहितम् । तथापि गम्भीरया वाचा विक्षिप्य वर्णितं न मन्दैः शक्यते सुखेन बोद्धुमिति तदर्थमिदं प्रकरणमारभ्यते ॥

### लक्षणस्वरूपविवरणम्

(३) यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मो लक्षणमित्युच्यते ॥

(४) यथा गोः सास्नादिमत्त्वम् । तद्धि गोषु सर्वत्र अस्ति नास्ति चागोषु । अन्यथाभूतन्तु अलक्षणम् ॥

(५) तत्त्रिविधम् । असम्भवि यल्लक्ष्ये सर्वथा न वर्तते । यथा गोरेकशफत्वम् । अव्यापकं यल्लक्ष्यैकदेशे वर्तमानमपि तदेकदेशान्तरे न वर्तते । यथा गोः शबलत्वम् । अतिव्यापकं यल्लक्ष्यादन्यत्रापि वर्तते । यथा विषाणित्वम् । सजातीयविजातीयव्यावृत्ततया लक्ष्यावधारणं लक्षणज्ञानस्य प्रयोजनम् । अस्मिन् ग्रामे देवदत्तगृहमिति वार्तां श्रुतवतो हि तद्ग्रामस्थेषु सर्वेष्वपि गृहेषु देवदत्तगृहबुद्धिः प्रसक्ता । ततो यत्र पताका तद्देवदत्तगृहमिति लक्षणज्ञाने सति इदमेव नान्यदिति अवधारणं जायते । शब्दव्यवहारो वा लक्षणज्ञानस्य प्रयोजनम् । सास्नादिमान् गौः इति लक्षणज्ञाने सति यं यं सास्नादिमन्तं पिण्डं पश्यति तं तं गोशब्दवाच्यं प्रत्येति । यावदन्यतो व्यावर्तनीयं यावति च एकः शब्दो व्युत्पादनीयः तदुच्यते लक्ष्यमिति ॥

### प्रमाणसामान्यलक्षणम्

(६) तत्रादौ तावत् प्रमाणसामान्यलक्षणमुच्यते । यथार्थं प्रमाणम् । प्रमाणमिति लक्ष्यनिर्देशः । यथार्थमिति लक्षणोक्तिः । एवम् उत्तरत्रापि ज्ञातव्यम् । अत्र यथा

शब्दोऽनतिक्रमे वर्तते । अर्थशब्दश्च अर्यते इति व्युत्पत्त्या ज्ञेयवाची । ज्ञेयमनतिक्रम्य वर्तमानं-यथावस्थितमेव ज्ञेयं यद्विषयीकरोति नान्यथा तत् प्रमाणम् इत्यर्थः ।

(७) ज्ञेयविषयीकारित्वं च साक्षाद्वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा विवक्षितम् इति न अनुप्रमाणेषु अव्याप्तिः । ज्ञेयविषयीकारित्वेनैव प्रमातृप्रमेययोः व्यवच्छेदः । तयोः साक्षात् ज्ञेयविषयीकारित्वाभावात् । साक्षात् ज्ञेयविषयीकारिकारणत्वेऽपि तत्साधनत्वाभावाच्च ॥

**प्रमास्वरूपम्, संशयस्वरूपम्**

(८) प्रमावान् प्रमाता । प्रमाविषयः प्रमेयम् । यथार्थज्ञानं प्रमा । यथार्थग्रहणेन संशय विपर्ययतत्साधनानां निरासः । अनवधारणं ज्ञानं संशयः । अनवधारणग्रहणं सम्यग्ज्ञान-विपर्ययव्युदासार्थम् । घटादिनिवृत्त्यर्थं ज्ञानमिति ॥

(९) तस्य निर्णायकाभावसहकृताः साधारणधर्मासाधारणधर्मविप्रति-पत्त्युपलब्ध्यनुपलब्धयः पञ्चकारणानि इति केचिदाहुः । तद्यथा– स्थाणुपुरुषयोः साधारणमूर्ध्वतालक्षणं धर्मं पुरोवर्तिनि उपलभ्य स्थाणुपुरुषौ स्मृत्वा विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिकं पुरुषत्वनिश्चायकं शिरःपाण्यादिकं च अनुपलभमानस्य डोलायमानं संशयज्ञानमुत्पद्यते किमयं स्थाणुर्वा पुरुषो वा इति । शब्दे च आकाशविशेषगुणत्वमसाधारणधर्ममुपलभमानस्य निर्णायकमजानतः संशयो भवति किं शब्दो नित्यः अनित्यो वा इति । इन्द्रियेषु वैशेषिकसाङ्ख्ययोः भौतिकत्वाभौतिकत्वविप्रतिपत्तिं पश्यतः निश्चायकम् अजानतः सन्देहो भवति किम् इन्द्रियाणि भौतिकानि उत अभौतिकानि इति। कूपखननानन्तरं जलोपलब्धौ सत्यां निश्चायकाभावे संशयो जायते किं प्राक् सदेव उदकं कूपखननेन अभिव्यक्तमुपलभ्यते उत असत् तेन उत्पन्नमिति । अस्मिन् वटे पिशाचः अस्तीति वार्तां श्रुतवतः वटसमीपं गतस्य तत्र पिशाचानुपलब्धौ सत्यां निर्णायकाभावे संशयो भवति किं विद्यमानः एव पिशाचः अन्तर्धानशक्त्या नोपलभ्यते किं वा अविद्यमानः एवेति ॥ उपलब्ध्यनुपलब्ध्योः साधारणधर्मे एव अन्तर्भावात् त्रीण्येव कारणानि इति अपरे । उपलब्धिर्हि सतामेव घटादीनां प्रदीपारोपणेन दृष्टा । असतां च कुलालादिव्यापारानन्तरमिति । तथा अनुपलब्धिः सतामीश्वरादीनामसतां च शशविषाणादीनां दृष्टा इति ॥

(१०) वयन्तु ब्रूमः । असाधारणधर्मविप्रतिपत्त्योरपि साधारणधर्मे एव अन्तर्भावः । असाधारणो हि धर्मः न स्वरूपेण संशयहेतुः । विशेषस्मरणकारणत्वाभावात् । किन्तु व्यावृत्तिमुखेनैव । तथा च नित्यव्यावृत्तत्वमनित्यस्य अनित्यव्यावृत्तत्वं च नित्यस्य धर्मः इति साधारणः एव ॥

(११) न च एकेनैव साधारणधर्मेण भाव्यमिति नियमोऽस्ति । तथा तथा प्रतिपन्नत्वं तस्य तस्य धर्मः इति विप्रतिपत्तिरपि साधारणी इति । विपरीतनिश्चयः विपर्ययः विपरीतेति सम्यङ्निश्चयव्युदासः । निश्चयः इति संशयज्ञानस्य । स च प्रत्यक्षानुमानागमाभासेभ्यः जायते । यथा शुक्तिकायामिदं रजतम् इत्यादि ।

**प्राभाकरादिमतनिरासः**

(१२) अयथार्थज्ञानमेव नास्तीति प्राभाकरादयः । तन्न । अनुभवसिद्धत्वात् । एतावन्तं कालमहं शुक्तिकामेव रजतत्वेन प्रतिपन्नोऽस्मि इति उत्तरकाले परामर्शाच्च । प्रतीतं च रजतं देशान्तरे सदेव इति वैशेषिकादयः । ज्ञानस्वरूपमेव इति विज्ञानवादिनः । तत्रैव तात्कालिकमुत्पन्नं सत् इति भास्करः । न सत् न असत् न सदसत् किन्तु अनिर्वचनीयमेव इति मायावादिनः । असदेव रजतं प्रत्यभात् इति उत्तरकालीनानुभवात् शुक्तिरेव अत्यन्तासद्रजतात्मना प्रतिभातीत्याचार्याः । अनध्यवसायः स्वप्नश्च अयथार्थज्ञानान्तरमस्तीति वैशेषिकाः ॥

**अनध्यवसायस्य ऊहस्य च संशय एवान्तर्भावः**

(१३) किं संज्ञकोऽयं वृक्षः इत्यनध्यवसायः । स तु कोटीनामतिबाहुल्यात् अनिर्दिष्टकोटिकः संशयः एव । वटादिव्यावृत्तिं पश्यतोऽपि पनसे यत्किञ्चित्संज्ञकोयं वृक्षः इति उत्पद्यते तत् ज्ञानमेव न भवति । किन्तु संज्ञाविषयं जिज्ञासामात्रम् । स्वप्नेऽपि गजादिदर्शनं चेत् यथार्थमेव । मानसवासनाजन्यत्वात् गजादीनाम् । तेषु यत् बाह्यत्वज्ञानं सः विपर्ययः एव । बाह्यालीप्रदेशे पुरुषेण अनेन भवितव्यमिति ऊहापरनामकं सम्भावनाज्ञानमपि अन्यतरकोटिप्रापकप्राचुर्यनिमित्तः अन्यतरकोटिप्रधानः संशयः एव ॥

(१४) तर्कः अनुमानमेव इति वक्ष्यामः । स्मृतौ अतिव्यापकं प्रमाणलक्षणमिति चेन्न । तस्याः अपि प्रमाणत्वेन लोकवेदयोः संव्यवहारात् ।

## मीमांसकमतनिरासः

अनुभूतिः प्रमाणम् । स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिः इति प्राभाकराणां लक्षणम् । संशयविपर्ययव्यापकत्वात् स्मृतौ वेदादिषु च यथार्थज्ञानसाधनेषु अव्यापकत्वाच्च अयुक्तम् । ज्ञाततताप्राकट्यापरपर्यायवाच्यस्य प्रमेयाश्रितस्य प्रकाशविशेषस्य साधनं क्रियाज्ञानं प्रमाणमिति भाट्टानां लक्षणमप्ययुक्तम् । ज्ञानव्यतिरिक्तायां ज्ञाततायां प्रमाणाभावेन असम्भावितत्वात् । अतीतादिविषयज्ञानानां आश्रयाभावेन तज्जनकत्वायोगाच्च । वेदादिषु अव्याप्तेश्च । अनधिगततथाभूतार्थज्ञानं प्रमाणमिति तेषामेव लक्षणान्तरमपि अयुक्तम् । स्मृतौ वेदादिषु च अव्याप्तेः ।

## नैय्यायिकमतनिरासः

(१५) सम्यगनुभवसाधनं प्रमाणम् इति नैय्यायिकादयः । तदपि असत् । यथार्थज्ञाने अव्याप्तेः । प्रमाव्याप्तं प्रमाणमिति उदयनः । तदपि, सर्वस्यापि प्रमेयस्य ईश्वर-प्रमाव्याप्तत्वेन अतिव्यापकत्वात् अयुक्तम् । साधनाश्रययोः अन्यतरत्वे सति प्रमाव्याप्तत्वं विवक्षितमिति चेन्न । आश्रयग्रहणवैयर्थ्यात् । ईश्वरस्यापि प्रामाण्यसिद्ध्यर्थं तत् इति चेन्न। कर्तरि प्रमाणशब्दस्य अननुशासनात् । यथार्थज्ञानेषु अव्याप्तेश्च । तस्मात् याथार्थ्यमेव प्रमाणलक्षणं युक्तम् ॥

## प्रमाणस्य द्वैविध्यम्

(१६) द्विविधं प्रमाणम् । केवलम् अनुप्रमाणं चेति । तत्र यथार्थज्ञानं केवलप्रमाणम् । यथार्थमिति संशयादिव्युदासः । ज्ञानमिति प्रत्यक्षस्य । लिङ्गज्ञानं वाक्यज्ञानं च लिङ्गिनि वाक्यार्थे च अनुप्रमाणमपि लिङ्गे वाक्ये च केवलप्रमाणमिति न अतिव्याप्तिः । इदं च साक्षाज्ज्ञेयविषयीकारित्वात् केवलमित्युच्यते ॥

## केवलज्ञानस्य चातुर्विध्यम्

(१७) तच्च चतुर्विधम् । ईश्वरज्ञानं, लक्ष्मीज्ञानं, योगिज्ञानं, अयोगिज्ञानं चेति । तत्र सर्वार्थविषयकमीश्वरज्ञानम् । नियमेन यथार्थम् । तत्स्वरूपमनादिनित्यम् । स्वतन्त्रम् । निरतिशयस्पष्टं च । ईश्वरे तु असार्वत्रिकमन्यत्र अनालोचनेऽपि सर्वविषयं लक्ष्मीज्ञानम् । तदपि नियमेन यथार्थम् । तत्स्वरूपमनादिनित्यं च । ईश्वरैकाधीनम् । तदपेक्षया स्पष्टत्वे न्यूनम् । स्पष्टत्वं च अपरोक्षत्ववत् ज्ञानगतः एव विशेषः न विषयौपाधिकः ॥

### योगिज्ञानप्रभेदाः

(१८) योगप्रभावलब्धातिशयं योगिज्ञानम् । तत्त्रिविधम् । ऋजुयोगिज्ञानं, तात्त्विकयोगिज्ञानं, अतात्त्विकयोगिज्ञानं चेति । ऋजवो नाम ब्रह्मत्वयोग्याः जीवाः । ईश्वरादन्यत्र आलोचने सर्वविषयं तज्ज्ञानम् । ईश्वरे तु असार्वत्रिकमेव । तद् द्विविधम् । स्वरूपं मनोवृत्तिरूपं चेति । तत्र स्वरूपम् अनादिनित्यम् । योगप्रभावात् आमुक्तेः व्यक्त्यतिशयोपेतम् । मुक्तौ एकप्रकारम् । वृत्तिज्ञानं तु प्रवाहतोऽनादि । योगानुगृहीतप्रत्यक्षादिजन्यम् । मुक्तौ तु नास्त्येव । द्वयमपि नियमेन यथार्थम् । ईश्वरे तु अन्यजीवेभ्योऽधिकविषयम् । तदतिरिक्ताः तत्त्वाभिमानिनो देवाः तात्त्विकाः । अनादित्वे सति ईश्वरादन्यत्र आलोचनेऽपि असर्वविषयं तज्ज्ञानम् । तदपि स्वरूपं बाह्यं चेति द्विविधम् । तस्य अनादित्वं पूर्ववत् । स्वरूपं यथार्थमेव । बाह्यं कदाचित् अयथार्थमपि । तद्व्यतिरिक्ताः देवादयः योगिनः अतात्त्विकाः । सादित्वे सति ईश्वरादन्यत्र अल्पाज्ञानयुक्तं तज्ज्ञानम् । तदपि पूर्ववत् द्विविधम् । तत्र स्वरूपस्य सादित्वं व्यक्त्यपेक्षया । अन्यस्य प्रवाहोत्पत्त्यपेक्षया । याथार्थ्यनियमादि पूर्ववत् ॥

### अयोगिज्ञानप्रभेदाः

(१९) तद्व्यतिरिक्ताः जीवाः अयोगिनः । ईश्वरादन्यत्र अज्ञानप्रचुरं तज्ज्ञानम् । तदपि पूर्ववत् द्विविधम् । उत्पत्तिविनाशवच्च । अयोगिनः अपि त्रिविधाः । मुक्तियोग्याः, नित्यसंसारिणः, तमोयोग्याश्च इति । तत्र मुक्तियोग्यानां स्वरूपज्ञानं यथार्थमेव । नित्यसंसारिणां तु मिश्रम् । अन्येषाम् अयथार्थमेव । बाह्यन्तु त्रयाणामपि उभयविधम् इति ॥

### वैशेषिकमतनिरासः

(२०) इन्द्रियजं, लिङ्गजं, स्मृतिः, आर्षं चेति चतुर्विधं यथार्थज्ञानम् इति वैशेषिकाः । तदसत् । नित्यस्य आगमजन्यस्य च असङ्ग्रहात् । स्मृतेः इन्द्रियजन्यत्वेन आर्षस्य योगिज्ञानत्वेन च पृथग्ग्रहणायोगाच्च ॥

### अनुप्रमाणलक्षणम्

(२१) यथार्थज्ञानसाधनम् अनुप्रमाणम् । यथार्थमित्येव उक्ते केवलेऽतिव्याप्तिः । ज्ञानमित्येव उक्ते तत्र संशयादौ च । प्रत्यक्षे अव्याप्तिश्च । साधनमित्येवोक्ते कुठारादौ

अतिव्याप्तिः । यथार्थज्ञानमित्युक्ते केवले अतिव्याप्तिः । प्रत्यक्षे अव्याप्तिश्च । यथार्थसाधनमित्युक्ते प्रत्यक्षसाधने अतिव्याप्तिः । ज्ञानसाधनमित्युक्ते संशयादिसाधने अतिव्याप्तिः । यथार्थज्ञानकारणमित्युक्ते प्रमात्रादौ अतिव्याप्तिः इति सर्वं सार्थकम् । यज्जातीयानन्तरं नियमेन कार्योत्पत्तिः तदत्र साधनं विवक्षितम् । अतः न यादृच्छिकसंवादादिषु अतिव्याप्तिः ॥

(२२) ननु त्रिविधं प्रमाणम् इति वक्तव्यम् । ल्युटः अधिकरणेऽपि अनुशासनात् । सत्यम् । तथापि प्रमाणशब्दस्य अधिकरणे प्रयोगाभावात् तदसङ्ग्रहः । तथापि प्रमाणशब्दः भावसाधनः करणसाधनश्च इति अनेकार्थः । तत्र किम् अनुगतलक्षणकथनेन इति । उच्यते । नायम् अक्षादिशब्दवत् अत्यन्तभिन्नार्थः । किन्तु धात्वर्थानुगमस्तु उभयत्र समः इति एकार्थत्वमाश्रित्य अनुगतलक्षणोक्तिः इत्यदोषः ॥

**अनुप्रमाणप्रभेदाः, प्रत्यक्षलक्षणम्**

(२३) त्रिविधम् अनुप्रमाणम् । प्रत्यक्षम्, अनुमानम्, आगमश्चेति । तत्र निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् । अर्थशब्देन इन्द्रियविषयाः गृह्यन्ते । तेषां दोषाः - अतिदूरत्वम्, अतिसामीप्यं, सौक्ष्म्यं, व्यवधानं, समानद्रव्याभिघातः, अनभिव्यक्तत्वं, सादृश्यं च इत्यादयः । तेषु सत्सु क्वचित् ज्ञानमेव न जायते । क्वचित् विपरीतज्ञानम् उत्पद्यते ॥

(२४) इन्द्रियशब्देन ज्ञानेन्द्रियं गृह्यते । तद् द्विविधम् । प्रमातृस्वरूपं प्राकृतं चेति ।

**साक्षीन्द्रियस्य स्वरूपम्, विषयाः**

तत्र स्वरूपेन्द्रियं साक्षी इति उच्यते । तस्य विषयाः - आत्मस्वरूपं, तद्धर्माः, अविद्या, मनः, तद्वृत्तयः, बाह्येन्द्रियज्ञानसुखाद्याः, कालः, अव्याकृताकाशश्च इत्याद्याः । स च स्वरूपज्ञानमभिव्यनक्ति ॥

**प्राकृतेन्द्रियाः**

(२५) प्राकृतं षड्विधम् । घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदात् । तत्र गन्धः तद्विशेषाश्च घ्राणस्य विषयाः । रसः तद्विशेषाश्च रसनस्य । महान्ति रूपवन्ति द्रव्याणि, केचित्

गुणाः, कर्माणि, जातयश्च चक्षुस्त्वचोः । वायुस्पर्शोऽपि त्वचो विषयः । शब्दः श्रोत्रस्य । एतेषां पञ्चानां मनोऽनधिष्ठितत्वं काचकामलादयश्च दोषाः । मनसस्तु बाह्येन्द्रियाधिष्ठानेन एते सर्वे विषयाः । स्वातन्त्र्येण स्मरणसाधनं मनः । तस्य दोषाः रागादयः ।

**स्मृतेः प्रामाण्यम्**

(२६) ननु स्मृतेः याथार्थ्यमेव नास्ति । न हि यदा यादृशः अर्थः स्मर्यते तदा असौ तादृशः । पूर्वावस्थायाः निवृत्तत्वात् इति चेन्न । यतः ज्ञानकाले वस्तुनः तथात्वं याथार्थ्योपयुक्तं न भवति । किन्तु यद्देशकालसम्बन्धितया यद्वस्तु ज्ञानेन यादृशं गृह्यते तद्देशकालयोः तस्य तथात्वम् । स्मृतिश्च तत्र तदा असौ तादृशः इति गृह्णाति । न च तत्र तदा असौ न तादृशः । ननु पूर्वानुभवजनितसंस्कारः स्मृतिकारणम् । स च अनुभूतविषये एव स्मृतिजननस्य ईष्टे । न च अनुभवेन निवृत्तपूर्वावस्थतया अर्थः गृहीतः । तत् कथम् अनुभवसमानविषयसंस्कारजन्या स्मृतिः अर्थं निवृत्तपूर्वावस्थतया विषयीकुर्यात् इति । मैवम् । भवेदेतदेवं यदि संस्कारमात्रजन्यत्वं स्मृतेः अभ्युपगच्छामः । न चैवम् । मनोजन्या स्मृतिः । संस्कारस्तु मनसः तदर्थसन्निकर्षरूपः एव । यथा योगीन्द्रियाणां योगजः धर्मः । ततश्च संस्कारसहकृतं मनः अननुभूतम् अपि निवृत्तपूर्वावस्थां विषयीकुर्वत् स्मरणं जनयेत् इति को दोषः । वर्तमानमात्रविषयाण्यपि इन्द्रियाणि सहकारिसामर्थ्यात् कालान्तर-सम्बन्धितामपि गोचरयन्ति । यथा संस्कारसहकृतानि सोऽयमिति अतीतवर्तमानत्व-विशिष्टविषयप्रत्यभिज्ञासाधनानि । प्राकृतेन्द्रियाणि मनोवृत्तिज्ञानं जनयन्ति । तत्र सन्निकर्षः प्रत्यक्षं इत्युक्ते चक्षुराकाशसन्निकर्षे अतिव्याप्तिः । अर्थसन्निकर्षः इत्युक्ते पूर्ववत् अतिव्याप्तिः । दुष्टार्थानां दुष्टेन्द्रियैर्वा सन्निकर्षं व्यावर्तयितुम् उभयत्र निर्दोषग्रहणम् ॥

**प्रत्यक्षशब्दार्थः**

(२७) ननु प्रत्यक्षं करणविशेषः । करणस्य च अवान्तरव्यापारेण भवितव्यम् । यथा छिदाकरणस्य परशोः दारुसंयोगः अवान्तरव्यापारः । सत्यम् । अत्रापि इन्द्रियं करणधर्मि । तस्य अर्थसन्निकर्षः अवान्तरव्यापारः । तत्र अवान्तरव्यापारप्राधान्यविवक्षया अर्थेन्द्रियसन्निकर्षः प्रत्यक्षम् इत्युच्यते । क्वचित्तु धर्मिप्राधान्यविवक्षया स्वस्वविषयसन्निकृष्टम् इन्द्रियं प्रत्यक्षमित्युच्यते । स्वरूपेन्द्रियस्यापि आत्मतद्धर्मैः विशेषशक्त्या सन्निकर्षः अस्त्येव ।

### प्रत्यक्षप्रभेदाः

चतुर्विधं प्रत्यक्षम् । ईश्वरप्रत्यक्षं, लक्ष्मीप्रत्यक्षं, योगिप्रत्यक्षं, अयोगिप्रत्यक्षं चेति । तत्र आद्यद्वयं स्वरूपेन्द्रियात्मकमेव । उत्तरद्वयन्तु द्विविधेन्द्रियात्मकम् । विषयस्तु तत्तज्ज्ञान-विषयवद्विवेक्तव्यः ॥

### बाह्येन्द्रियत्रैविध्यम्

(२८) बाह्येन्द्रियं त्रिविधम् । दैवम्, आसुरं, मध्यममिति । तत्र यथार्थज्ञानप्रचुरं दैवम् । अयथार्थज्ञानप्रचुरमासुरम् । समज्ञानसाधनन्तु मध्यमम् । स्वरूपेन्द्रियमपि उत्तमानां विषयस्वरूपे प्रकारे च यथार्थमेव । अधममध्यमानां तु स्वरूपमात्रे यथार्थमेव । प्रकारे तु अयथार्थं मिश्रं चेति ।

### नैय्यायिकाभिमतषड्विधसन्निकर्षनिरासः

इन्द्रियार्थयोस्तु सन्निकर्षः अपरोक्षज्ञानहेतुः षोढा भिद्यते इत्येके । तद्यथा संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्य-भावश्चेति । तत्र चक्षुःस्पर्शनयोः घटादिद्रव्यैः, मनसश्च आत्मना संयोगः । तेषां स्वविषय-गतगुणकर्मसामान्यैः संयुक्तसमवायः । तथा घ्राणरसनयोः गन्धरसाभ्याम् । एतेषां स्वविषयगुणकर्मगतसामान्यैः संयुक्तसमवेतसमवायः । श्रोत्रस्य शब्देन समवायः । तद्गत-सामान्यैः समवेतसमवायः । एतेषामेतत्पञ्चविधसम्बन्धसम्बद्धार्थस्य अभावसमवायाभ्यां पञ्चविधः विशेषणविशेष्यभावः इति । तदसत् । गुणादीनां गुण्यादिभिः अभेदेन समवाया भावात् । आत्मनः तद्धर्माणां च साक्षिविषयत्वेन मनोविषयत्वाभावात् । वर्णात्मकस्य शब्दस्य द्रव्यत्वेन आकाशविशेषगुणत्वाभावात् । अतः सर्वेन्द्रियाणां स्वस्वविषयैः स्वस्वविषयप्रतियोगिताकाभावेन च साक्षादेव रश्मिद्वारा सन्निकर्षः ॥

### निर्विकल्पकसविकल्पकस्वरूपविचारः

(२९) निर्विकल्पकसविकल्पकभेदेन च द्विविधं प्रत्यक्षम् इत्याचक्षते । तत्र वस्तुस्वरूपमात्रावभासकं निर्विकल्पकम् । विशिष्टाकारगोचरं सविकल्पकम् । तदष्टविधम् । तत्र द्रव्यविकल्पो यथा दण्डीति । गुणविकल्पो यथा शुक्लः इति । क्रियाविकल्पो यथा गच्छतीति । जातिविकल्पो यथा गौरिति । विशेषविकल्पो यथा विशिष्टः परमाणुः इति ।

समवायविकल्पो यथा पटसमवायवन्तः तन्तवः इति । नामविकल्पो यथा देवदत्तः इति । अभावविकल्पो यथा घटाभाववद्भूतलमिति । एतदप्यसत् । विशेषसमवाययोः अप्रामाणिकत्वात् । नाम्नः पश्चात्स्मरणेन अभावस्य च प्रतियोगिस्मरणाधीनज्ञानत्वेन तद्विकल्पस्य प्रथमाक्षिसन्निकर्षानन्तरमेव उत्पत्त्यभावेऽपि द्रव्यादिविकल्पानां प्रथममेव उत्पत्तौ बाधकाभावेन निर्विकल्पकानुपपत्तेः ॥

**प्रत्यक्षस्य फलम्**

(३०) हानोपादानोपेक्षाबुद्धयः प्रत्यक्षस्य फलमिति केचित् आहुः । तदप्यसत् । तासाम् अनुमानफलत्वात् । तथा हि । कण्टकादिस्वरूपमात्रं प्रदर्श्य प्रत्यक्षं निवर्तते । अथ इदानीं पूर्वानुभूतस्य कण्टकादेः अनिष्टसाधनत्वम् अनुभूतं स्मृत्वा अस्य च कण्टकादित्वेन तदनुमिमानस्य हानबुद्धिः उपजायते । एवं कदलीफलादौ इष्टसाधनत्वानुमानानन्तरं उपादानबुद्धिः उत्पद्यते । तृणादौ च औदासीन्यं अनुमाय उपेक्षाबुद्धिः प्रतिपद्यते । अतः विशिष्टविषयसाक्षात्कारः एव प्रत्यक्षस्य फलमिति ॥

इति श्रीमज्जयतीर्थपूज्यचरणविरचित प्रमाणपद्धतौ प्रत्यक्षपरिच्छेदः समाप्तः ॥ १ ॥

# ॥ अनुमानपरिच्छेदः ॥

## अनुमानलक्षणम्

(१) निर्दोषोपपत्तिरनुमानम् । उपपत्तिर्व्याप्यं युक्तिर्लिङ्गमिति पर्यायः । अविनाभावो व्याप्तिः । साहचर्यनियम इति यावत् । व्याप्तेः कर्म व्याप्यम् । तस्याः कर्तृ व्यापकम् । यथा धूमस्याग्निना व्याप्तिरव्यभिचरितः सम्बन्धः । यत्र धूमस्तत्राग्निरिति नियमात् । तत्र धूमो व्याप्यः । अग्निर्व्यापकः ।

## धर्माणां व्याप्यव्यापकभावव्यवस्था

(२) चतुष्टयी खलु धर्माणां गतिः । केचित्समवृत्तयो यथा निषिद्धत्वपापसाधनत्वे । यत्र निषिद्धत्वं तत्र पापसाधनत्वं, यत्र पापसाधनत्वं तत्र निषिद्धत्वमिति नियमात् । तत्र द्वयोरप्यन्योन्यं व्याप्यव्यापकभावः । केचिन्न्यूनाधिकवृत्तयः । यथा धूमवत्त्वाग्निमत्त्वे । तत्र न्यूनवृत्तिधूमवत्त्वं व्याप्यमेव । अधिकवृत्त्यग्निमत्त्वं व्यापकमेव । केचित्परस्परपरिहारेणैव वर्तन्ते । यथा गोत्वाश्वत्वे । यतो यत्र गोत्वं न तत्र सर्वथाऽश्वत्वम् । यत्र चाश्वत्वं न तत्र सर्वथा गोत्वम् । तेषां नान्योन्यं व्याप्यव्यापकभावः । सम्बन्धस्यैवाभावात् । केचित्कचित् समाविष्टा अपि क्वचित्परस्परपरिहारेणैव वर्तन्ते । यथा पाचकत्वपुरुषत्वे । तयोः पुरुष-विशेषे समावेशेऽपि पाचकत्वं पुरुषत्वपरिहारेण स्त्रीषु वर्तते । पुरुषत्वमपि पाचकत्व-परिहारेणापचति पुरुषे वर्तते । तेऽपि नान्योन्यं व्याप्यव्यापकभाववन्तः । सत्यपि सम्बन्धे परस्परव्यभिचारित्वात् । तत्र व्याप्यो धर्मो व्यापकप्रमितिसाधनं भवन्ननुमानमित्युच्यते । व्यापकश्चानुमेय इति ॥

## व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गस्य सम्यग्ज्ञानमनुमानम्

(३) ननु पर्वते वर्तमानो धूमो गृहान्तर्वर्तिनः पुरुषस्य किमित्यग्निप्रमां न जनयति । उच्यते । न प्रत्यक्षवदनुमानमज्ञातकरणम् । किन्तु सम्यग्ज्ञातमेव । तथापि नारिकेल-द्वीपवासिनो देशान्तरं गतस्य धूमप्रमितावपि कस्मान्नाग्निप्रमोदयः । उच्यते । तस्य धूमस्वरूपज्ञानेऽप्यग्निव्याप्ततया तज्ज्ञानाभावात् । ज्ञातव्याप्तिकस्यापि कुतः कदाचिदग्नि-प्रमाऽनुत्पत्तिः । व्याप्तिस्मरणाभावात् । व्याप्तिस्मरणवतः पर्वते धूमं दृष्टवतोऽपि कथं पर्वतादन्यत्राग्निप्रमानुद्भवः । व्याप्तिप्रकारमपेक्ष्य लिङ्गज्ञानस्य लिङ्गिज्ञानजनकत्वनियमात् ।

तथाहि । कयोश्चित्समानदेशकालयोर्व्याप्तिः । यथा रसस्य रूपेण । कयोश्चित् समानदेशत्वेऽपि भिन्नकालयोः । यथा धूमस्याग्निना । कयोश्चित्समानकालत्वेऽपि भिन्नदेशयोः । यथा कृत्तिकोदयस्य रोहिण्युदयासत्त्या । कयोश्चित् भिन्नदेशकालयोः । यथाऽधोदेशे नदीपूरस्योर्ध्वदेशवृष्ट्या । कस्यचित् कादाचित्कस्य समानदेशत्वेऽपि सार्वकालीनेन । यथा पतनस्य गुरुत्वेन । कस्यचित्समानदेशत्वेपि सार्वकालिकस्य कादाचित्केन । यथा शरीरत्वस्य विनाशेन । कस्यचित् प्रदेशवर्तिनो व्याप्यवर्तिना । यथा संयोगस्य द्रव्यत्वेन । कस्यचिव्द्याप्यवर्तिनः प्रदेशवर्तिना । यथा रूपस्य संयोगेन । कयोश्चिदेकावयववर्तिनोरप्यवयवभेदेन । यथा तुलोन्नमनावनमनयोरित्यादि तथा च व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गस्य सम्यग्ज्ञानं, सम्यग्ज्ञातं वा लिङ्गं व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गिप्रमां जनयदनुमानमित्युक्तं भवति । अत एव लिङ्गिस्वरूपस्य ज्ञातत्वेऽपि देशविशेषादिसंसृष्टतया ज्ञापकत्वान्नानुमानस्य वैयर्थ्यम् । ततश्चानुमानस्य द्वयं सामर्थ्यम् । व्याप्तिः समुचितदेशादौ सिद्धिश्चेति । न तु पक्षधर्मतानियमः ।

**प्रत्यक्षानुमानागमैः व्याप्तिज्ञानम्**

(४) ननु व्याप्तिज्ञानं केन प्रमाणेन जायते । यथायथं प्रत्यक्षानुमानागमैरिति ब्रूमः । तत्र तावद्धूमस्याग्निना व्याप्तिः प्रत्यक्षगम्या । तथा हि । महानसादौ धूमाग्र्योः साहचर्यं पश्यतः पुरुषस्यैष विमर्शो जायते । किमत्रैवैतौ धूमाग्री सहचरितावन्यत्र देशान्तरे कालान्तरे चैतज्जातीयौ परस्परपरिहारेण वर्तेते । उतान्यतर एवान्यतरपरिहारेण । किंवा सकलदेशकालयोः सहचरितावेवेति । ततो भूयोभूयो धूमं पश्यन्नग्निं पश्यति । अग्र्यभावे च धूमाभावम् । तथा धूमाभावेऽपि क्वचिदग्निसद्भावम् । ततः पुनरेष विचारो भवति । यथा बहुषु स्थलेषु धूमेन सहचरितोप्यग्निः क्वचित्तं परित्यज्य वर्तते तथा धूमो मत्परिचितस्थलेष्वग्निना सह वर्तमानोऽपि क्वचित् तं परित्यज्य वर्तते । किंवा सर्वत्र तत्सहचरित एवेति । ततः पुनरेषा बुद्धिरुत्पद्यते । अग्नेर्धूमसम्बन्धेऽस्त्यार्द्रेन्धनसंयोगः उपाधिः । स च धूमव्यापकः । स्वयं व्यावर्तमानस्तं व्यावर्तितवान् । न पुनरग्निम् । तदव्यापकत्वात् । तथा धूमस्याग्निसम्बन्धे यदि कश्चिदुपाधिः स्यात्तदा सोऽप्यग्निं व्यभिचरिष्यति । न चेन्निर्निमित्तस्य सम्बन्धस्य धूमस्वभावत्वेन न क्वापि तदभावो भविष्यतीत्येवं निश्चित्य महानसादावुपाधिगवेषणे प्रवर्तते ॥

(५) तत्र केचिद्धर्मा उभयव्यपकाः । यथा प्रमेयत्वम् । नैतत्सम्बन्धं विघटयितुमीशते । केचिदुभयाव्यापकाः । यथा महानसत्वम् । तेऽपि नैतत्सम्बन्धविघटनाय समर्थाः । केचिद्धूमव्यापका अग्र्यव्यापकाः । यथाऽऽर्द्रेन्धनसंयोगः । तेऽप्यग्नेर्धूमवियोजने शक्ता अपि न धूमस्याग्निवियोजने । यस्त्वग्नेर्व्यापको धूमस्य त्वव्यापकः स स्वयं व्यावर्तमानः शक्ष्यत्येतत्सम्बन्धं विघटयितुम् । स तु नास्त्येव । अनुपलम्भात् । अतीन्द्रियोऽपि प्रमाणान्तरवेद्यः स्यात् । न च तत्प्रमाणमुपलभ्यते । न चाप्रामाणिकः शङ्कामप्यधिरोहति । अतो नात्रोपाधिरस्तीति निर्णीतवतोऽविनाभावप्रमितिरुत्पद्यते ।

(६) नन्वेवं सति न प्रत्यक्षं व्याप्तिग्राहकम् । मैवम् । यतः साहचर्यग्राहिणः प्रत्यक्षस्य भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चयाः सहकारिणः । न च सहकारिभेदेऽपि प्रत्यभिज्ञायामिव प्रमाणान्तरत्वम् । वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षं कथमतीताद्यास्पदानां व्याप्तिं गृह्णीयादिति चेन्न । सहकारिसामर्थ्येन करणानां शक्त्यन्तराविर्भावस्य बहुलमुपलम्भात् ।

(७) किञ्च प्रतीतस्य धूमस्याग्निसम्बन्धे स्वाभाविकतया निश्चिते यद्यन्यत्रापि धूमः स्यात्तर्हि तस्याप्येवमित्येवं व्याप्तिग्रहो भवतीत्यतः कात्रानुपपत्तिः । एतेन प्रमेयत्वाभिधेयत्वयोर्व्याप्तिं गृह्णतः सार्वज्ञप्रसङ्ग इत्यपि परास्तम् । कुत एतत्सर्वं कल्प्यत इति चेत् । कार्यदर्शनादेव । अस्ति तावद्धूमदर्शनानन्तरमग्निज्ञानम् । न च तदयथार्थम् । संवादित्वात् । न चान्यदर्शनेनान्यज्ञानं निर्निमित्तं भवितुमर्हति । अतिप्रसङ्गात् । न च व्याप्तिप्रमां समुचितदेशत्वप्रमां चापहाय निमित्तान्तरमस्तीति कार्यमेवैतत्कल्पयति । यथा खलु शिलाशकलादावनुपलब्धामपि क्षितिसलिलादिसहकारिसमुद्भूतां बीजस्य शक्तिमङ्कुरदर्शनं कल्पयतीति । अनुमानगम्यां तु व्याप्तिमुत्तरत्रोदाहरिष्यामः । न च तस्याप्यनुमानस्य व्याप्त्यपेक्षायामनवस्था । अन्ततः प्रत्यक्षागममूलत्वात् । ब्राह्मणो न हन्तव्यो गौर्न पदा स्पृष्टव्येत्यागमगम्या व्याप्तिः । न चात्र कश्चित्क्षुद्रोपद्रवो नापि दृष्टान्तापेक्षेति ।

**अनुमानप्रकाराः**

(८) त्रिविधमनुमानम् । कार्यानुमानं कारणानुमानमकार्यकारणानुमानं चेति । तत्राद्यं यथा धूमोऽग्नेः । द्वितीयं यथा विशिष्टमेघोन्नतिर्वृष्टेः । इयांस्तु विशेषः । कार्यं कारणमात्रमनुमापयति । कारणं तु समग्रमेव कार्यमिति । तृतीयं यथा रसो रूपस्येति ।

पुनर्द्विविधम् । दृष्टं सामान्यतो दृष्टं चेति । तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम् । यथा धूमोऽग्नेः । प्रत्यक्षायोग्यार्थानुमापकं सामान्यतो दृष्टम् । यथा रूपादिज्ञानं चक्षुरादेः । अथवा यथा भूतयोर्व्याप्तिग्रहणं तथा भूतयोरेव लिङ्गलिङ्गिभावे दृष्टम् । यथा धूमाग्न्योः । व्याप्यव्यापकयोरन्यादृशत्वेपि तत्सामान्याकारानुगमेन लिङ्गलिङ्गिभावे सामान्यतो दृष्टम् । यथा कृषीवलस्य कर्षणादिप्रवृत्तेर्धान्यादिफलवत्त्वदर्शनेन यज्ञादेः स्वर्गादिफलानुमानम् । प्रेक्षावत्प्रवृत्तिफलवत्त्वसामान्यानुगमात् ।

(९) पुनर्द्विविधम् । साधनानुमानं दूषणानुमानं चेति । तत्राद्यं यथा । धूमप्रमित्याऽग्निप्रमितिसाधनम् । दूषणानुमानमपि द्वेधा । दुष्टप्रमितिसाधनं तर्कश्चेति । तत्राद्यं यथा । नेदं स्वसाध्यसाधनसमर्थम् प्रमाणबाधितत्वादित्यादि । कस्यचिद्धर्मस्याङ्गीकारेऽर्थान्तरस्यापादनं तर्कः ।

## तर्कस्य पञ्चाङ्गानि ।

(१०) तस्य पञ्चाङ्गानि । आपादकस्यापाद्येन व्याप्तिः प्रतितर्केणाप्रतिघात. आपाद्यस्यानिष्टत्वम् । तद्द्विविधम् । प्रामाणिकहानमप्रामाणिककल्पनं चेति । तत्राद्यं त्रेधा । दृष्टानुमितश्रुतहानभेदात् । द्वितीयमप्यदृष्टाननुमिताश्रुतकल्पनाभेदात्त्रिविधम् । एतदेव कल्प्यानेकत्वे कल्पनागौरवमित्युच्यते । आपाद्यस्य विपर्यये पर्यवसानं परस्याननुकूलत्वं चेति । आपाद्यमनिष्टं पुनः पञ्चधा भिद्यते । आत्माश्रयत्वमन्योन्याश्रयत्वं चक्रकाश्रयत्वमनवस्था केवलानिष्टं चेति । तद्भेदात् तदापादनरूपस्तर्कोऽपि पञ्चविधः । तत्र तस्यैवोत्पत्तिज्ञप्त्यर्थं तदुत्पत्तिज्ञप्त्यपेक्षाङ्गीकारे स्वापेक्षया पूर्वभावित्वरूपमात्माश्रयत्वमापाद्यते । यदि घटोऽयमस्यैव घटस्योत्पादकः स्यात्तर्हि स्वतोऽपि पूर्वभावी स्यात् । यद्यस्य कारणं तत्ततोऽपि पूर्वभावि दृष्टम् । यथा पटकारणं तन्तवस्तदपेक्षया पूर्वभाविनः । न चात्र प्रतिकूलस्तर्कोऽस्ति । यदि घटस्य घट एव कारणं न स्यात्तर्हिदमापद्यत इति । अनिष्टं चेदम् । स्वापेक्षया पूर्वभावित्वस्याप्रामाणिकत्वात् । व्याहतत्वेनाङ्गीकर्तुमनुचितत्वाच्च । पूर्वभावित्वं हि तदभाववति काले भावः । न च स्वाभाववति काले स्वयं भवतीति न व्याहतम् । न चेत्पूर्वभावित्वमङ्गीक्रियते तदा न स्वस्य स्वयं कारणम् । न चैवमेवापादकं प्रत्यापादयितुं शक्यत इति पञ्चाङ्गानि । एवं ज्ञप्तावपि तज्ज्ञानस्य तज्ज्ञानं प्रति पूर्वभावित्वमापाद्यम् । द्वयोरितरेतरकारणत्वाङ्गीकारे त्वन्योन्यापेक्षया पूर्वभावित्वरूपमन्योन्याश्रयत्वमापाद्यम् ।

बहूनां चक्रवत्कार्यकारणभावाभ्युपगमे त्वन्योन्यापेक्षया पूर्वभावित्वरूपमन्योन्याश्रयत्व-मापाद्यम् । बहूनां चक्रवत्कार्यकारणभावाभ्युपगमे पूर्वभावित्वलक्षणं चक्रकाश्रयत्वम् । अनवस्थितासिद्धकारणापेक्षायां मूलक्षयापरनामकप्रतीतकार्यविलोपलक्षणानवस्था ।

(११) केवलानिष्टापादनमपि त्रेधा । दृष्टानुमितश्रुतहानापादनभेदात् । अदृष्टाननुमिता-श्रुतकल्पनापादनभेदाच्च । एतदेव कल्प्यानेकत्वे कल्पनागौरवमित्युच्यते । दृष्टहानं यथा यदि पर्वतो निरग्निकस्तर्हि निर्धूमः स्यादिति । एवमन्यस्याप्युदाहरणं शास्त्रे द्रष्टव्यम् । अनुमानत्वेऽपि तर्कस्यापादकासिद्धिरदूषणम् । पराभ्युपगममात्रस्य तत्र सिद्धिपदार्थत्वात् ।

(१२) एवमापाद्यस्य प्रमाणविरोधोऽपसिद्धान्तश्च न दूषणम् । निर्धूमो भवतीत्यसाधनात् । यथा साधनानुमाने न व्याप्तिमात्रं नापि पक्षधर्मतामात्रं साध्यप्रमितिसाधनं किन्तु मिलितमेव । एवमनिष्टापादनं विपर्यये पर्यवसानं चोभयं मिलितमेवानुमितिसाधनं भवतीति तर्कस्य प्रामाण्यमुपपद्यते । सोऽयं क्वचिद्विपरीतशङ्कानिरसनद्वारेण प्रमाणानामनुग्राहकोऽपि भवतीति ।

**व्यतिरेकव्याप्तेः अप्रयोजकता**

(१३) केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्त्रिविधमनुमानमित्येके । साध्यधर्म-विशिष्टो धर्मी पक्षः । तत्र व्याप्त्या वर्तमानम् । निश्चितसाध्यसमानधर्मा धर्मी सपक्षः । तत्र सर्वस्मिन्नेकदेशे वर्तमानम् । साध्यतत्समानधर्मरहितो धर्मी विपक्षः । तद्रहितं केवलान्वयि । तद्द्विविधम् । सर्वसपक्षतदेकदेशवृत्तिभेदात् । शब्दोऽभिधेयः प्रमेयत्वादिति सपक्षव्यापकम् । सर्वस्मिन्नभिधेयतया सम्प्रतिपन्ने प्रमेयत्वस्य वृत्तेः । गुणत्वादिति सपक्षैकदेशवृत्ति । रूपादौ वृत्तेर्घटादाववृत्तेः ।

(१४) द्विविधा किल व्याप्तिः । अन्वयतो व्यतिरेकतश्चेति । साधनस्य साध्येन व्याप्तिरन्वयः । साध्याभावस्य साधनाभावेन व्याप्तिर्व्यतिरेकः । तत्रास्य केवलमन्वय एवास्ति । यत्प्रमेयं तदभिधेयं यथा घट इति । न तत्र व्यतिरेकः । यदभिधेयं न भवति तत्प्रमेयं न भवतीति निदर्शनाभावात् । सर्वस्याप्यभिधेयत्वेनानभिधेयासम्भवात् । तेनैत्केवलान्वयीत्युच्यते ।

(१५) पक्षव्यापकमविद्यमानसपक्षं सर्वस्माद्विपक्षाद्व्यावृत्तं केवलव्यतिरेकि । यथा जीवच्छरीरजातं सात्मकं प्राणादिमत्त्वादिति । अस्य हि यत्सात्मकं न भवति

तत्प्राणादिमन्न भवति यथा घट इति व्यतिरेक एवास्ति । न तु यत्प्राणादिमत्तत्सात्मकमित्यन्वयः । सर्वस्यापि जीवच्छरीरस्य पक्षत्वात् । अन्यस्य सर्वस्य निरात्मकत्वात् । तेनैतत्केवलव्यतिरेकीत्युच्यते ।

(१६) पक्षव्यापकं सपक्षवृत्ति सर्वविपक्षव्यावृत्तमन्वयव्यतिरेकीति । तदपि द्विविधम् । सर्वसपक्षतदेकदेशवृत्तिभेदात् । शब्दोऽनित्यः कृतकत्वादिति सपक्षव्यापकम् । सर्वस्मिन्ननित्ये कृतकत्वस्य वृत्तेः । पर्वतोऽग्निमान्धूमवत्त्वादिति सपक्षैकदेशवृत्ति । अग्निमत्यपि क्वचिद्वृत्तेः । क्वचिच्चावृत्तेः । इदं हि यद्धूमवत्तदग्निमद्यथा महानसः । यदग्निमन्न भवति तद्धूमवन्न भवति यथा ह्रद इति व्याप्तिद्वयसद्भावादन्वयव्यतिरेकीत्युच्यते ।

(१७) तदिदमसत् । व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धावनुपयोगात् । न हि भावेन भावसाधनेऽभावस्याभावेन व्याप्तिरुपयुज्यते । व्याप्तिपक्षधर्मतयोर्वैय्यधिकरण्यं चैवं सति स्यात् । कथं तर्हि केवलव्यतिरेकिणः शास्त्रे संव्यवहारः । इत्थम् । तत्रापि यत्प्राणादिमत्तत्सात्मकमित्येव व्याप्तिः । किन्तु व्याप्तिग्रहणस्थानस्यैव विप्रतिपत्तिविषयत्वप्राप्त्या सा दर्शयितुमशक्याभूत् । ततोऽनुमानेन तां साधयितुं व्यतिरेकव्याप्तिरुपन्यस्यते । प्राणादिमत्त्वादिति प्रयुक्ते कथमस्य व्याप्तिरित्याकाङ्क्षायां प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम् । तदभावव्यापकाभावप्रतियोगित्वात् । यद्यदभावव्यापकाभावप्रतियोगि तत्तेन व्याप्तम् । यथा धूमवत्त्वमग्निमत्त्वेनेत्यस्यार्थस्य विवक्षितत्वात् । अन्वयव्यतिरेकिणि तु व्यतिरेकव्याप्तिरनुपयुक्तैव । विवक्षितव्याप्तेः प्रत्यक्षादिनैव सिद्धत्वात् । व्यभिचाराभावदर्शनमुखेन कथञ्चिदुपयुज्यते वेति ।

## परार्थानुमाने पञ्चावयवनियमो नास्ति

(१८) पुनरनुमानं द्विविधम् । स्वार्थं परार्थं चेति । तत्र परोपदेशमनपेक्ष्य यत्स्वयमेव व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गज्ञानमुत्पद्यते तत्स्वार्थानुमानम् । यत्तु परोपदेशापेक्षमुत्पद्यते तत्परार्थानुमानम् । तज्जनकत्वात्परोपदेशोऽपि परार्थानुमानमिति क्वचिदुपचर्यते । परोपदेशस्तु पञ्चावयववाक्यानीति नैय्यायिकादयः । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । एत एव वैशेषिकैः प्रतिज्ञोपदेशनिदर्शनानुसन्धानप्रत्याम्नाया इत्युच्यन्ते । तत्र पक्षवचनं प्रतिज्ञा । यथा पर्वतोऽग्निमानिति । तत्र धर्मिणमुद्दिश्य पश्चाद्धर्मो विधातव्यः । साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनं हेतुः । यथा धूमवत्त्वादिति ।

व्याप्तिग्रहणस्थलं दृष्टान्तः । स द्विविधः । साधर्म्यदृष्टान्तो वैधर्म्यदृष्टान्तश्चेति । तत्रान्वय-व्याप्तिग्रहणस्थल साधर्म्यदृष्टान्तः । यथा धूमानुमाने महानसः । व्यतिरेकव्याप्तिग्रहणस्थल वैधर्म्यदृष्टान्तः । यथा तत्रैव महाह्रद इति । सम्यग्व्याप्तिप्रदर्शनपूर्वकं दृष्टान्ताभिधान-मुदाहरणम् । तद् द्विविधम् । साधर्म्योदाहरणं वैधर्म्योदाहरणं चेति । अन्वयव्याप्तिप्रदर्शन-पूर्वकं साधर्म्यदृष्टान्ताभिधानं साधर्म्योदाहरणम् । यथा यो यो धूमवान्स सोऽग्निमान्यथा महानस इति । व्यतिरेकव्याप्तिप्रदर्शनपूर्वकं वैधर्म्यदृष्टान्ताभिधानं वैधर्म्योदाहरणम् । यथा योऽग्निमान्न भवति स धूमवान्न भवति । यथा महाह्रद इति । दृष्टान्ते प्रसिद्धाविनाभावस्य लिङ्गस्य पक्षे व्याप्तिरव्यापकं वचनमुपनयः । सोऽपि दृष्टान्तानुसारेण द्विविधः । तत्र महानस इव पर्वतो धूमवानिति साधर्म्योपनयः । न च ह्रद इवायं निर्धूमः पर्वत इति वैधर्म्योपनयः । पुनः सहेतुकं पक्षवचनं निगमनम् । यथा तस्मात्पर्वतोऽग्निमानिति ।

(१९) प्रतिज्ञाहेतूदाहरणान्युदाहरणोपनयनिगमनानि वा त्रय एवावयवा इति भाट्टाः । उदाहरणोपनयौ द्वावेवेति बौद्धाः । तदेतदसत् । व्याप्तिद्वैविध्यनिराकरणेनोदाहरणोपनय-द्वैविध्यस्यापि निराकृतत्वात् । नियमानुपपत्तेश्च । न हीदं वाक्यमागमतया व्याप्त्यादि-बोधकम् । येनाकाङ्क्षाद्यनुसारेण पञ्चावयवादिनियमः स्यात् । परस्य परस्मिन्नाप्त्य-निश्चयात् । निश्चये वा प्रतिज्ञामात्रेण पूर्तेर्हेत्वाद्यभिधानवैय्यर्थ्यात् । किन्तु गृहीतव्याप्त्यादेः पुरुषस्य तत्स्मारकत्वादिनाऽगृहीतव्याप्त्यादेस्तु तज्जिज्ञासाजनकत्वेनोपयुज्यते । व्याप्ति-स्मरणादिकं चैतैश्चतुर्भिरपि प्रकारैर्भवदनुभूयते । तत्किमनेन नियमेन ।

(२०) सम्भवन्ति चान्येऽपि प्रकाराः । पर्वतोऽग्निमान्धूमवत्त्वान्महान्नसवदिति वा । धूमवान्पर्वतोऽग्निमानिति हेतुगर्भं पक्षवचनं वा । विवादेनैव प्रतिज्ञासिद्धौ कुतः पर्वतोऽग्नि-मानिति प्रश्ने धूमवत्त्वादिति हेतुमात्रं वा । पर्वतस्याग्निमत्त्वे किं प्रमाणमिति पृष्टे धूमवत्त्वमिति लिङ्गोक्तिमात्रं वा । धूमवन्महानसवत्पर्वतोऽग्निमानिति सप्रतिज्ञं हेतुगर्भं दृष्टान्तवचनं वा । अग्निव्याप्यो धूमोऽत्र पर्वतेऽस्तीत्युपनयो वा । व्याप्त्यादिमद्धूमवत्त्वा-त्पर्वतोऽग्निमानिति निगमनं वेति । सांव्यावहारिकैश्चैते प्रकाराः सर्वेषु शास्त्रेष्वित्येवं-प्रकारमनुमानमिति ।

## उपपत्तिदोषाः

(२१) अथ निर्दोषोपपत्तिरनुमानमित्युक्तम् । के तत्रोपपत्तिदोषाः । यत्सद्भावे लिङ्गमाभिमतं ज्ञानमेव न जनयति संशयविपर्ययौ वा करोति ते दोषाः । ते द्विविधाः ।

अर्थवचनदोषभेदात् । तत्र साक्षादुपपत्तेरेव दोषौ विरोधासङ्गती । तद्द्वारा वचनस्यापि । वचनदोषौ न्यूनाधिक्ये । वचनद्वारेणार्थस्यापि । तत्र योग्यताभावो विरोधः । आकाङ्क्षाविरहोऽसङ्गतिः । अवश्यवक्तव्यस्यैकदेशमात्रवचनं न्यूनम् । सन्निध्यभावविशेषः । आकाङ्क्षितस्यैवान्येन कृतकार्यस्य वचनमाधिक्यम् ।

**विरोधप्रकाराः**

(२२) एते च विरोधादयो द्विविधाः । समयबन्धप्रश्नस्वपक्षसाधनपरपक्ष-निराकरणात्मककथारूपसाधारणा अनुमाननिष्ठाश्च । तत्रानुमाननिष्ठास्तावदुच्यन्ते । त्रिविधोऽनुमानविरोधः । प्रतिज्ञाहेतुदृष्टशन्तविरोधभेदेन । तत्र प्रमाणविरोधः स्ववचनविरोध इति द्विविधः प्रतिज्ञाविरोधः । प्रमाणविरोधोऽपि द्वेधा । प्रबलप्रमाणविरोधः समबल-प्रमाणविरोधश्चेति । हीनबलस्यानेनैव बाधितस्याकिञ्चित्करत्वात् । प्राबल्यं च द्विविधम् । बहुत्वेन स्वभावेन च । स्वभावश्चोपजीव्यत्वं निरवकाशत्वमित्यादिरूपः । प्रत्यक्षादि-विरोधभेदेन द्वावपि प्रत्येकं त्रिविधौ । समबलानुमानविरोधोऽपि द्वेधा । तेनैवानुमानेनानु-मानान्तरेण चेति । स्ववचनविरोधोऽपि द्विविधः । अपसिद्धान्तो जातिरिति । तत्र पूर्वाचार्यैर्यत्प्रामाणिकतयाभ्युपगतं तद्विरुद्धाङ्गीकरोऽपसिद्धान्तः । पूर्वाचार्यवचनस्यापि स्वयमङ्गीकृतत्वेन स्ववचनत्वात् ।

(२३) स्ववचन एव व्याहतिर्जातिः । सा त्रिविधा । एककर्तृके वाक्ये पदयोरवान्तर-वाक्ययोर्वा मिथो व्याघातः स्वक्रियाविरोधः स्वन्यायविरोधश्चेति । हेतुविरोधोऽपि द्विविधः। असिद्धिरव्याप्तिश्चेति । समुचितस्थले लिङ्गस्याप्रमितिरसिद्धिः । अव्याप्तिस्त्रिविधा । लिङ्गस्य साध्येन तदभावेन च सम्बन्धः साध्यसम्बन्धाभावे सति तदभावेनैव सम्बन्ध उभयसम्बन्धा-भावश्चेति । दृष्टान्तविरोधोऽपि द्विविधः । साध्यवैकल्यं साधनवैकल्यं चेति । हेत्वादौ स्ववचनविरोधोऽसिद्ध्यादिनैव सङ्गृहीत इति नोक्तः ।

एवमसङ्गतिन्यूनाधिक्यान्यपि प्रतिज्ञाहेतुदृष्टान्तसम्बन्धभेदेन प्रत्येकं त्रिविधानि । एतेषा-मुदाहरणानि कथारूपसाधारणान्विरोधादींश्च परोदीरितनिग्रहस्थानानामेतेष्वेवान्तर्भावं वदन्तो दर्शयिष्यामः । न केवलमुपपत्तिदोषाणां विरोधादिभिः सङ्ग्रहः । किं नाम । नैय्यायिकनिरूपिताशेषनिग्रहस्थानानां वक्तृदोषाभ्यां संवादानुक्तिभ्यां युतेष्वेवान्तर्भावः । ततश्च विरोधासङ्गती न्यूनाधिके संवादानुक्ती इति षडेव निग्रहस्थानानि । विप्रतिपन्न-

प्रमेयाङ्गीकारः संवादः । परबोधनार्थस्यावश्यं वक्तव्यस्यावचनमनुक्तिः । कथायामखण्डिताहङ्कारेण परेण परस्याहङ्कारखण्डनं पराजयो निग्रह इति चोच्यते । तन्निमित्तं निग्रहस्थानम् । अहङ्कारखण्डनं च स्वपक्षसाधनपरपक्षदूषणसङ्कल्पभ्रंशः । अत एव कथाबाह्यानि कथायामप्यपस्मारोन्मादादिदशापन्नानि झटिति संवरणेन तिरोहितोद्भावनावसराणि पुरस्स्फूर्तिकानधिकृतोद्भावितानि च व्यवच्छिन्नानि परोक्तस्ववक्तव्ययोरज्ञानं विपरीतज्ञानं वा निग्रहः । तल्लिङ्गं निग्रहस्थानमिति वा ।

## निग्रहस्थानानि

(२४) तानि च ॥१॥ प्रतिज्ञाहानिः ॥२॥ प्रतिज्ञान्तरम् ॥३॥ प्रतिज्ञाविरोधः ॥४॥ प्रतिज्ञासन्न्यासः ॥५॥ हेत्वन्तरम् ॥६॥ अर्थान्तरम् ॥७॥ निरर्थकम् ॥८॥ अविज्ञातार्थम् ॥९॥ अपार्थकम् ॥१०॥ अप्राप्तकालम् ॥११॥ न्यूनम् ॥१२॥ अधिकम् ॥१३॥ पुनरुक्तम् ॥१४॥ अननुभाषणम् ॥१५॥ अज्ञानम् ॥१६॥ अप्रतिभा ॥१७॥ विक्षेपः ॥१८॥ मतानुज्ञा ॥१९॥ पर्यनुयोज्योपेक्षणम् ॥२०॥ निरनुयोज्यानुयोगः ॥२१॥ अपसिद्धान्तः ॥२२॥ हेत्वाभासश्चेति द्वाविंशतिः ।

(२५) ॥१॥ प्रतिज्ञाहानिः ॥ तत्र येन यद्यथा साध्यत्वादिना निर्दिष्टं तेन तस्य तथा परित्यागः प्रतिज्ञाहानिः । यथा पर्वतोऽग्निमान्प्रमेयत्वादित्युक्तेऽनैकान्तिकत्वेन च प्रत्युक्ते मा भूत्तर्हि पर्वतोग्निमानिति । अयन्तु संवाद एव ।

(२६) ॥२॥ प्रतिज्ञान्तरम् ॥ प्रथममविशिष्टतयोक्ते साध्यभागे पुनर्विशेषणप्रक्षेपः प्रतिज्ञान्तरम् । प्रतिज्ञोदाहरणे प्रयोज्यभागो निगमनं चेति साध्यभागः । यथा शब्दोऽनित्य इति प्रतिज्ञाते ध्वनिभिः सिद्धसाधनत्वोद्भावने वर्णात्मकः शब्दोऽनित्य इत्यादि । अथ वक्तव्यम् । किं पूर्वैव कथाऽनुवर्ततेऽथ कथान्तरम् । नाद्यः । एकस्य साधनस्य दूषणस्य वा स्थितौ भङ्गे वा कथायाः परिसमाप्तत्वात् । साधनान्तरोपन्यास स्यावसराभावात् । न चेदं पूर्वोक्तमेव । तथात्वे पूर्वदूषणेनैव दुष्टत्वप्रसङ्गात् । न द्वितीयः । तथा सति प्रथममेव विशिष्टस्योपात्तत्वेन प्रतिज्ञान्तराभावात् । वादे तु कथैक्येऽपि न निग्रहस्थानम् । शङ्कानिवृत्तिपर्यन्तं प्रतिवक्तव्यत्वात् । सत्यम् । निवृत्तयोरपि जल्पवितण्डयोः पुनर्विशेषणं प्रक्षिपतः को दोष इति चेत् । असङ्गत्यादिकमिति ब्रूमः । तदपि कथाबाह्यत्वान्न निग्रहस्थानम् ।

(२७) ॥३॥ प्रतिज्ञाविरोधः । एकवक्तृके वाक्ये पदानामवान्तरवाक्यानां वा मिथो व्याघातः प्रतिज्ञाविरोधः । यथा मे माता वन्ध्येति । द्रव्यं गुणव्यतिरिक्तमव्यतिरिक्त-त्वादिति । अयं च प्रथमजातित्वात् स्ववचनविरोध एत्त ।

(२८) ॥४॥ प्रतिज्ञासन्यासः । स्वोक्तापलापः प्रतिज्ञासन्यासः । यथाऽग्निरनुष्ण इत्युक्ते प्रत्यक्षविरोधे चाभिहिते ब्रवीति न मयाऽग्निरनुष्ण इत्यभिहित इति । सोऽपि प्रमाणविरोध एव । उक्तेः प्रमितत्वात् ।

(२९) ॥५॥ हेत्वन्तरम् । प्रथममविशिष्टतयोक्ते साधकांशे पुनरधिकप्रक्षेपो हेत्वन्तरम् । हेतुरुदाहरणे प्रयोजकांश उपनयो दूषणं चेति साधकांशः । यथा शब्दोऽनित्य ऐन्द्रिय-कत्वादित्युक्ते सामान्येनानैकान्त्येऽभिहिते सामान्यवत्त्वे सतीत्यादि । एतत्प्रतिज्ञान्तर-निरासेनैव निरस्तम् । प्रतिज्ञाग्रहणस्योक्तोपलक्षणत्वेन पृथङ् न वक्तव्यं च । अनुप-लक्षणत्वे तूदाहरणान्तरादिकमपि पृथग्वाच्यं स्यात् । प्रतिज्ञापदेन साध्यांश एवोपलक्ष्यत इति चेन्न । वैय्यर्थ्यात् । अन्यथा प्रतिज्ञाहान्यादावपि किं विभागो न क्रियत इति ।

(३०) ॥६॥ अर्थान्तरम् । प्रकृतानुपयुक्तान्वितोक्तिरर्थान्तरम् । यथा शब्दो नित्यः प्रमेयत्वादित्यत्र प्रमेयत्वं हेतुः । हेतुशब्दश्च हिनोतेर्धातोस्तुन्प्रत्यये कृते सति कृदन्तं पदमित्यादि । इदमनाकाङ्क्षितत्वादसङ्गतिरेवेति ।

(३१) ॥७॥ निरर्थकम् । अवाचकपदप्रयोगो निरर्थकम् । यथा शब्दो नित्यः कचटतपानां जबगडदत्वादित्यादि । इदं त्वनुक्तिरेव ।

(३२) ॥८॥ अविज्ञातार्थम् । त्रिवारमुक्तेऽपि परिषत्प्रतिवादिभ्यामविज्ञातार्थवाचक-पदमविज्ञातार्थम् । यथा कश्यपतनयाधृतिहेतुरयं त्रिनयनतनयासनसमाननामधेययुक्त इत्यादि। तद्ध्वजवत्त्वादित्यादि । इदमप्यनुक्तिरेव ।

(३३) ॥९॥ अपार्थकम् । अनन्वितवाचकपदादिप्रयोगोऽपार्थकम् । यथा कुण्डमजाजिनं दशदाडिमानि षड़पूपा इत्यादि इदं च स्फुटमसङ्गतम् ।

(३४) ॥१०॥ अप्राप्तकालम् । क्रमविपर्यासोऽप्राप्तकालम् । यथा कृतकत्वादनित्यः शब्द इत्यादि । इदं किञ्चिन्न निग्रहस्थानम् । प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमित्यादि-संव्यवहारात् । निग्रहस्थानं त्वसङ्गतिरेव ।

(३५) ॥११॥ न्यूनम् । अवश्योपादेयानामन्यतमानुपादनं न्यूनम् । यथा पर्वतोऽग्निमान्महानसवदित्यादि । एतन्न्यूनमेव ।

(३६) ॥१२॥ अधिकम् । अन्वितोपयुक्तापुनरुक्तकृतकार्यप्रयोगोऽधिकम् । यथा पर्वतोऽग्निमान्धूमवत्त्वात्प्रकाशविशेषवत्त्वाच्चेत्यादि । एतदधिकमेव ।

(३७) ॥१३॥ पुनरुक्तम् । प्रतीतार्थस्य पुनः स्ववचनेन प्रयोजनं विनाऽभिधानं पुनरुक्तम् । यथा पर्वतोऽग्निमान्पर्वतोऽग्निमानित्यादि । एतदधिकमेव ।

(३८) ॥१४॥ अननुभाषणम् । वादिनोक्तस्य प्राश्निकैर्विज्ञातार्थस्य वादिना परिषदा वा पुनरनूद्य दत्तस्योच्चारणयोग्यस्य स्वाज्ञानमनाविष्कुर्वता कथामविच्छिन्दता यदप्रत्युच्चारणं तदननुभाषणम् । तत्पञ्चविधम् । यत्तदित्याद्यनुवादो दूष्यैकदेशानुवादः केवलं दूषणोक्तिरन्यथानुवादस्तूष्णींभावश्चेति । तत्राद्यत्रयं न्यूनम् । चतुर्थमसङ्गतम् । पञ्चममनुक्तिः ।

(३९) ॥१५॥ अज्ञानम् । वादिना त्रिवारमभिहितस्य परिषदा विज्ञातार्थस्य वाक्यस्यार्थाप्रतिपत्तिरज्ञानम् ।

(४०) ॥१६॥ अप्रतिभा । वादिनोक्तस्य प्रत्युत्तराप्रतिपत्तिरप्रतिभा ।

(४१) ॥१७॥ विक्षेपः । केनचिद्व्याजेन कथाविच्छेदो विक्षेपः । यथा कथामारभ्याह अद्य मे महत्प्रयोजनमस्ति तस्मिन्नवसिते वक्ष्यामीति । एतत्त्रयमनुक्तिरेव ।

(४२) ॥१८॥ मतानुज्ञा । इष्टापादनं मतानुज्ञा । यथा केनचित्स्वस्य चोरत्वमभ्युपेत्य त्वं चोरः पुरुषत्वादित्युक्ते तर्हि तवपि चोरत्वं प्रसज्येतेति । इयमसङ्गतिरेव ।

(४३) ॥१९॥ पर्यनुयोज्योपेक्षणम् । अवश्योद्भाव्यतया प्राप्तनिग्रहस्थानानुद्भावनं पर्यनुयोज्योपेक्षणम् । इदमप्यनुक्तान्तर्गतम् ।

(४४) ॥२०॥ निरनुयोज्यानुयोगः । अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं निरनुयोज्यानुयोगः । स चतुर्विधः । (१) छलम् (२) जातिः (३) हान्याद्याभासः (४) अप्राप्तकाले ग्रहणं चेति । (१) तत्र परोक्तस्य तदनभिप्रेतार्थान्तरं परिकल्प्य तद्दूषणेन परोक्तभङ्ग छलम् । यथा गृष्टिविवक्षया गामानयेत्युक्ते पृथिवीविवक्षया गवानयनमशक्यमिति ।

एतदसङ्गतम् । विवक्षितदूषणस्यैवाकाङ्क्षितत्वात् । छलवाक्यस्याप्यर्थान्तरं परिकल्प्य गवानयनमित्यनन्वितमिति दूषणसम्भवेन स्वन्यायविरोधेऽप्यन्तर्भवति छलम् ।

**जातयः**

(४५) ॥२०॥ (२) जातिः । सिद्धमपि दूषणासमर्थमुत्तरं जातिः । असामर्थ्यं च द्विविधम् । साधारणमसाधारणं च । तत्र साधारणं स्वव्याहतिः । असाधारणं तु युक्ताङ्ग-हीनत्वमयुक्ताङ्गाधिकत्वमविषयवृत्तित्वं चेति । सा च साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्या-वर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषो-पपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमभेदाच्चतुर्विंशातिधा । तत्र वादिना स्थापनाय हेतौ प्रयुक्तेऽनभ्युपेतयुक्ताङ्गेन प्रतिपक्षोद्भावनं प्रतिधर्मसमा जातिः । सा च प्रत्यक्षाभासादिभेदेन बहुविधा ।

(४६) ॥२०॥ (२-१) साधर्म्यसमः । तत्र व्याप्तिहीनेनानुमानेन यत्प्रतिपक्षचोदनं तद्द्विविधम् । साधर्म्येण वैधर्म्येण च । तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः प्रतिषेधः । यथा यदि महानससाधर्म्याद्धूमवत्त्वादग्निमान्पर्वत इष्यते तर्हि ह्रदसाधर्म्याद् द्रव्यत्वादनग्निरपि किं नेष्यत इति ।

(४७) ॥२०॥ (२-२) वैधर्म्यसमः । वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः प्रतिषेधः । यथा यदि ह्रदवैधर्म्याद्धूमवत्त्वात्पर्वतोऽग्निमानिष्यते तर्हि महानसवैधर्म्यात्पर्वतत्वादनग्निः किं नेष्यत इति । अत्र व्याप्तिलक्षणयुक्ताङ्गराहित्यमेव प्रथममुद्भाव्यम् । न तु जातित्वम् । परचित्तवर्तिनो व्याप्त्यनभ्युपगमस्याद्यपि ज्ञातुमशक्यत्वात् । यदा तु परो ब्रूयात्साधर्म्य-वैधर्म्यमात्रं प्रयोजकं किं व्याप्त्येति । तदा वक्तव्यम् । एवं सति नेदं साधकं सत्प्रति-पक्षितत्वादिति । त्वदनुमानस्यापि व्याप्तिहीनेन साधर्म्येण वैधर्म्येण वा प्रतिपक्ष-सम्भवाव्याघात इति । तथा च प्रतिषेधे स्वन्यायविरोधात्मकतृतीयजातावन्तर्भावः ।

(४८) ॥२०॥ (२-३) उत्कर्षसमः । वादिसाधनसामर्थ्येन साधनस्येव व्याप्तिं विना कस्यचिदनिष्टधर्मस्य दृष्टान्तात्पक्ष उत्कर्ष उत्कर्षसमः । यदि धूमवत्त्वान्महानसवदग्नि-मान्पर्वतस्तर्हि तत एव तद्वदेव स्थाल्यादिमानपि स्यादिति । अत्रापि व्याप्तिवैकल्या-त्तर्काभासोऽयमित्युत्तरं वक्तव्यम् । साहचर्यमात्रेण तर्कस्य प्रवृत्तेः किं व्याप्त्येति वदतः स्वन्यायविरोधेन व्याघात इति ।

(४९) ॥२०॥ (२-४) अपकर्षसमः । पक्षादिष्टधर्मापकर्षणमपकर्षसम इत्येके । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते तर्हि तत एव तद्वदेव शब्दः श्रावणोऽपि मा भूदिति । अत्र वक्तव्यम् । किमिदं साधनमुतापादनमिति । नाद्यः । अर्थान्तरत्वेन निरनुयोज्यानुयोगत्वाभावात् । द्वितीये तूत्कर्षसम एवायम् । न हि भावोत्कर्षोऽभावोत्कर्ष इत्येतावता भेदः सम्भवति । उदयनस्तु दृष्टान्ते साध्येन साधनेन वा सहचरितस्य कस्यचिद्धर्मस्य निवृत्त्या पक्षे तयोरन्यतराभवसाधनमपकर्षसम इत्याह । यथा महानसेऽग्निमत्त्वेन धूमवत्त्वेन वा सहदृष्टस्य स्थाल्यादिमत्त्वस्य पर्वतेऽभवात्तयोरप्यभावः । तत्र साध्याभावसाधने सत्प्रतिपक्षत्वं बाधो वाऽऽरोप्यः । साधनाभावसाधने त्वसिद्धिरिति । इदमप्यसत् । साध्याभावसाधने साधर्म्यसमप्रकरणसमाभ्यां भेदाभावप्रसङ्गात् । तस्माव्द्याप्त्यनपेक्षया पक्षे साधनाभावसाधनमेवापकर्षसमः । तत्र व्याप्त्यभावः साधनग्राहकप्रमाणविरोधश्चेत्युत्तरं वाच्यम् । साहचर्यमेव प्रयोजकं किं व्याप्त्यादिनेति ब्रुवाणं प्रति स्वन्यायविरोध इति ।

(५०) ॥२०॥ (२-५) वर्ण्यसमः । पक्षवद् दृष्टान्तस्यापि साध्यत्वचोदनं वर्ण्यसम इत्येके । तदसत् । दृष्टान्ते साध्यसाधनविप्रतिपत्त्या चोदने सदुत्तरत्वात् । एवमेव चोदनस्य निर्बीजतयाऽसम्भवदुक्तिकत्वात् । एवं तेनैव हेतुना साध्यत्वचोदनमपि निर्बीजम् । पक्षे हेतुः साध्येन सहचरित उपलब्धो दृष्टान्तस्यापि तदापादयतीत्येवं चोदनायामुत्कर्षसम एव । पक्षे दृष्टान्ते चोत्कर्षणमित्येतावता भेदेऽतिप्रसङ्गः । साध्यसमाच्च भेदाभावः । तस्मात् पक्षमात्रविवक्षितासिद्धार्थत्वादिरूपवद्धेतुमत्त्वतदभावयोर्दृष्टान्तस्यसाध्यत्वापादनं वर्ण्यसम इत्युदयनः । यथाऽसिद्धार्थं धूमवत्त्वं पर्वत इव महानसेऽस्ति चेत्सोऽपि साध्यवत्तया साध्यः स्यात् । न चेत्साधनवत्तया साध्यः स्यादिति । अत्रापि हेतुस्वरूपस्य सद्भावमात्रेण दृष्टान्तत्वोपपत्तौ रूपविशेषचिन्ता व्यर्थेति वाच्यम् । तदावश्यकत्वाभ्युपगमे तु स्वन्यायविरोध इति ।

(५१) ॥२०॥ (२-६) अवर्ण्यसमः । दृष्टान्तवत्पक्षस्याप्यसाध्यत्वचोदनमवर्ण्यसम इत्येके । अत्रापि सिद्धत्वाभिमानेन चोदने सदुत्तरम् । अन्यथा निर्बीजत्वम् । साधनसाहचर्यबलेनापादने तूत्कर्षसम एव । तस्माद्दृष्टान्तमात्रविवक्षितसिद्धार्थत्वादिरूपवद्धेतुमत्त्वतदभावयोः पक्षस्यासाध्यत्वचोदनमवर्ण्यसम इत्युदयनः । यथा सिद्धार्थं धूमवत्त्वं महानस इव पर्वते वर्तते चेत्साध्यस्य सिद्धत्वादसाध्यत्वम् । न चेदुपायाभावादसाध्यत्वमिति । अस्यापि पूर्ववदन्तर्भावो वाच्य इति ।

(५२) ॥२०॥ (२-७) विकल्पसमः । धर्माणां धर्मान्तरव्यभिचारदर्शनेन साधनस्यापि साध्यव्यभिचारचोदनं विकल्पसमः । यथा कृतकत्वाविशेषेऽपि किञ्चिन्मूर्तं दृष्टं घटादि किञ्चिदमूर्तं रूपादि तथा कृतकमपि किञ्चिन्नित्यं किञ्चिदनित्यं किं न स्यादिति । अत्र शङ्कामात्रं चेत्सदुत्तरमेव । उपाध्यभावादिना समाधेयं धर्मान्तरव्यभिचारेणास्यापि व्यभिचार साधनं चेद्धर्मान्तरव्यभिचारो हेतुर्वा स्याद् दृष्टान्तो वा । आद्ये व्याप्त्यभावो वक्तव्यः । द्वितीये हेत्वभावान्न्यूनम् । हेतोरनङ्गत्वादिहेत्वङ्गीकारे प्रतिदृष्टान्तसमसाङ्कर्यम् । धर्मत्वादिहेत्वङ्गीकारे व्याप्त्यभाव एव । तदनङ्गीकारे तु स्वन्यायविरोध इति ।

(५३) ॥२०॥ (२-८) साध्यसमः । साध्यवद् दृष्टान्तस्यापि साध्यत्वचोदनं साध्यसम इत्येके । तदसत् । विप्रतिपत्त्या चोदने सदुत्तरत्वात् । एवमेव चोदनेऽसम्भवदुक्तिकत्वात् । तेनैव हेतुना साध्यत्वापादनेऽप्येवमेव । वर्ण्यसमवद्बीजोपपादने तु तदभेदः । तस्मात्क्रोडीकृतधर्म्यादिविषयस्य लिङ्गस्य धर्म्यादावप्रयोजकत्वे साध्येऽपि तथात्वप्रसङ्गात्तेनैव हेतुना धर्म्यादेरपि साध्यत्त्वापादनं साध्यसम इत्युदयनः । व्याप्तिपक्षधर्मवत्तयैव प्रयोजन-कत्वोपपत्तेस्तत्सिद्धतामात्रेण साधनाङ्गत्वसम्भवात्तेनैव हेतुना साधनमित्युत्तरं वाच्यम्। तदनङ्गीकारे तु स्वन्यायविरोध इति ।

(५४) ॥२०॥ (२-९,१०) प्राप्तिसमः । अप्राप्तिसमः । साधनस्य साध्य-प्राप्तिपक्षनिरासेन तस्य साधनत्वभङ्गः प्राप्तिसमः । अप्राप्तिपक्षनिरासेन तद्भङ्गोऽप्राप्तिसमः । कृतिज्ञप्तिसाधारणमिदं जातिद्वयम् । यथा धूमज्ञानमग्निज्ञानं प्राप्य जनयति चेत्सतैव प्राप्तिरिति तस्य प्राक् सिद्धत्वान्नोत्पादकम् । तथा धूमज्ञानमग्निं प्राप्य ज्ञापयति चेत्तर्ह्य-न्यस्याः प्राप्त्यसम्भवाद्विषयविषयिभावे वक्तव्ये धूमज्ञान एवाग्नेः स्फुरणान्न तज्ज्ञापकत्वमिति प्राप्तिसमः । अप्राप्योत्पादकत्वं ज्ञापकत्वं चेत्तन्न । क्वाप्यदर्शनात् । न ह्यप्राप्याग्निः काष्ठं दहति । नापि प्रकाश्यमप्राप्य प्रदीपः प्रकाशयति । अतिप्रसङ्गश्चान्यथेत्यप्राप्तिसमः । अत्र कृतौ सामर्थ्यलक्षणप्राप्तिसद्भावेनातिप्रसङ्गाभावात्स्वरूपप्राप्तिरनपेक्षितैव । ज्ञप्तावपि तव्द्याप्त-लिङ्गविषयत्वरूपप्राप्तिसद्भावेनातिप्रसङ्गाभावाद्विषयविषयिभावोऽनपेक्षित एवेत्युत्तरं वाच्यम् । एतदनङ्गीकृत्य स्वरूपप्राप्त्यादिकमपेक्षमाणस्य स्वन्यायेन व्याघात इति ।

(५५) ॥२०॥ (२-११) प्रसङ्गसमः । अनवस्थाभासप्रसञ्जनं प्रसङ्गसमः । यथा पर्वतस्योत्पादकं वाच्यम् । तस्यापीत्यनवस्था । एवं पर्वतस्य ज्ञापकं वाच्यं तस्यापीत्य-

नवस्थेति । अत्र सिद्धविषयत्वेनावस्थानसम्भवेन मूलक्षयाभावाददोषत्वमिति वाच्यम् । तदनङ्गीकारे तु स्वन्यायविरोध इति ।

(५६) ॥२०॥ (२-१२) प्रतिदृष्टान्तसमः । प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसम इत्येके । तदसत् । साधर्म्यसमादावपि तद्भावात् । यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते वदति यदि घटदृष्टान्तेनैन्द्रियकत्वादनित्यस्तर्हि सामान्यदृष्टान्तेन नित्यः किं न स्यादिति । व्यभिचारचोदनाभिप्रायेण प्रवृत्तेर्न साधर्म्यसमादिसाङ्कर्यमिति चेन्न । अस्य सदुत्तरत्वात् । तस्माद्धेतुनिरपेक्षेण प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधयोरन्यतरोद्भावनं प्रतिदृष्टान्तसम इत्युदयनः । यथा यदि महानसदृष्टान्तेनाग्निमानिष्यते तर्हि ह्रददृष्टान्तेनानग्निकोऽस्त्वित्यादि। अत्र न्यूनत्वं वाच्यम् । हेतोरनङ्गत्वाभिमाने तु स्वन्यायविरोध इति ।

(५७) ॥२०॥ (२-१३) अनुत्पत्तिसमः । पक्षादीनां प्रागुत्पत्तेर्हेतुवृत्त्यभावेनासिद्ध्युद्भावनमनुत्पत्तिसमः । यथा पर्ततस्योत्पत्तेः प्राक् तत्र धूमवत्त्वं न वृत्तमिति भागासिद्धमित्यादि । अत्रानुत्पन्नस्य पर्वतत्वाभावेनापक्षत्वात्तत्र वृत्त्यभावो न दोषायेति वाच्यम् । न चेदेवं तदा स्वन्यायविरोध इति ।

(५८) ॥२०॥ (२-१४) संशयसमः । सत्यपि निर्णयकारणे साधारणधर्मादिमात्रेण संशयापादनं संशयसमः । यथा यदि धूमवत्त्वादग्निमत्त्वनिश्चयस्तर्हि ह्रदमहानससाधारणेन द्रव्यत्वेन तत्संशयः किं न स्यादिति । तत्र निर्णायकाभावसहकृतस्यैव समानधर्मादेः संशयकारणत्वादत्र निर्णायकसद्भावादसंशय इति वाच्यम् । निर्णायकं न संशयप्रतिबन्धकमिति वदतः स्वन्यायविरोध इति ।

(५९) ॥२०॥ (२-१५) प्रकरणसमः । प्रत्यनुमानेन प्रत्यवस्थानं प्रकरणसम इत्येके । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदिति । अत्र प्रत्यनुमानस्याङ्गसाकल्याभिमाने सदुत्तरमेव । अन्यथा साधर्म्यसमाद्यन्तर्भावः । तस्मादङ्गीकृतानधिकबलेन बाधचोदनं प्रकरणसम इत्युदयनः । एतदप्ययुक्तम् । यथा प्रतिदृष्टान्तसमादावन्यतरचोदनेनैकजातित्वं तथा साधर्म्यसमादिनाऽप्येकजातित्वसम्भवेन पृथक्करणानुपपत्तिः । तदुद्धारस्तु तद्वदेव ।

(६०) ॥२०॥ (२-१६) अहेतुसमः । हेतोः साध्यापेक्षया पूर्वापरसहभावनिरासेनाहेतुत्वचोदनमहेतुसमः । यथा न तावत्सर्वसाधनं साध्यपूर्वम् साध्याभावेन तन्निरूप्य

साधनत्वायोगात् । नापि साधनं पश्चाद्भावि । साधनाभावे साध्यायोगात् । नापि द्वयोर्यौगपद्यम् । अविशेषेण साध्यसाधनभावायोगादिति । अत्र कृतौ पूर्वभाविनः साधनत्वम् । साधनशक्तेः परानपेक्ष्यत्वात् तद्व्यवहारस्य बुद्धिस्थेनैव साध्येनोपपत्तेः । ज्ञप्तौ तु यथायथं पक्षत्रयमपि । ज्ञातत्वाज्ञातत्वाभ्यां विशेष इत्युत्तरं वाच्यम् । तदनङ्गीकारे तु स्वन्यायविरोध इति ।

(६१) ॥२०॥ (२-१७) अर्थापत्तिसमः । अर्थापत्त्याभासेन प्रत्यवस्थानमर्थापत्तिसमः। यथा पर्वतोऽग्निमानित्युक्तेऽर्थादापद्यतेऽन्यदनग्निमदित्यादि । तथा च साध्यविकलो दृष्टान्त इति । अत्रानुपपद्यमानदर्शनादुपपादके बुद्धिरर्थापत्तिः । न चात्रानुपपद्यमानं किञ्चिदस्ति । अतो नायं प्रसङ्ग इति वाच्यम् । उक्तविपरीताक्षेपमात्रमर्थापत्तिरित्यङ्गीकारे तु स्वन्यायविरोध इति । उपपत्तिसमवद्बीजाभावान्नेदं जात्युत्तरम् ।

(६२) ॥२०॥ (२-१८) अविशेषसमः । साधनप्रतिबन्द्या तदितरधर्मेण तद्वतां सर्वपदार्थानामविशेषापादनमविशेषसमः । यथा यदि धूमवत्त्वात्पर्वतमहानसयोरग्निमत्त्व-विशेषः । तदा सर्वभावानां सत्त्वादनित्यत्वाविशेषप्रसङ्ग इति । अत्र व्याप्त्यादिसदसद्भावाभ्यां विशेषान्न प्रतिबन्दीग्रहणमित्युत्तरं वाच्यम् । तदनङ्गीकारेण प्रवृत्तस्य स्वन्यायविरोध इति ।

(६३) ॥२०॥ (२-१९) उपपत्तिसमः । उभयहेतूपपत्त्या प्रत्यवस्थानमुपपत्तिसम इत्येके। यथा यदि शब्दस्यानित्यत्वोपपादकं कृतकत्वमस्तीत्यनित्यत्वमिष्यते तर्हि नित्यत्वोपपादकमस्पर्शत्वमस्तीति नित्यत्वमपि किं नेष्यत इति । एतदसत् । साधर्म्य-समाद्यभेदात् । तस्मान्मत्पक्षेऽपि किमपि साधनं भविष्यतीति सामान्यतः प्रत्यवस्थान-मुपपत्तिसम इत्युदयनः । इदमप्यसत् । केवलाया एवमुक्तेर्निर्बीजत्वात् । प्रमाणोपपादने तूपपादकस्य साधुत्वे सदुत्तरत्वात् । असाधुत्वे तस्यैवोद्भाव्यत्वेनाजातित्वात् ।

(६४) ॥२०॥ (२-२०) उपलब्धिसमः । निर्दिष्टहेत्वभावेऽपि साध्योपलब्ध्या हेतोर-प्रयोजकत्वाभिधानमुपलब्धिसम इत्येके । यथा क्वचिद्धूमवत्वाभावेऽप्यग्निमत्वोपलब्धेरप्रयोजकं धूमवत्त्वमिति । उत्थानबीजाभावान्नेदं जात्युत्तरम् । किन्तु हान्याद्याभास एव । तस्माद्वादि वाक्यस्यावधारणे तात्पर्यमारोप्यावधारणं विकल्पदूषणमुपलब्धिसम इत्युदयनः । यथा पर्वतोऽग्निमानित्यक्ते किं पर्वत एवाग्निमानुत पर्वतोऽग्निमानेवेति । नाद्यः । महानसादे-

रप्यग्निमत्त्वात् । न द्वितीयः । कदाचिदनग्निमत्त्वादित्यादि । इदमप्यसत् । तात्पर्यान्तरारोपेण सामान्यछलत्वात् । विकल्पेनोत्थानान्नेति चेन्न । अवधारणस्यैव विकल्पेनावधारणतात्पर्यारोपापरिहारात् । व्यवच्छेदवाक्यार्थरुचीनामवधारणं स्थितमेवेति चेन्न । तेषामप्यतव्द्यावृत्त्यङ्गीकारेणैवंविधावधारणस्यानिष्टत्वात् ।

(६५) ॥२०॥ (२-२१) अनुपलब्धिसमः । उपलब्ध्यादिविषयिधर्माणां स्वात्मनि वृत्त्यवृत्त्या तत्त्वव्याघातापादनमनुपलब्धिसमः । यथोपलब्धिः स्वात्मनि वर्तते चेदुपलब्धत्वाद् घटादिवदनुपलब्धिः । न वर्तते चेत्तथाऽपि तद्वदेवेत्यादि । अत्र विषयापेक्षयोपलब्धित्वस्य स्वात्मनि वृत्त्यवृत्तिभ्यां न निवृत्तिरिति वक्तव्यम् । तदनङ्गीकारे स्वन्यायविरोधः स्वक्रियाविरोधो वेति ।

(६६) ॥२०॥ (२-२२) नित्यसमः । विशेषणधर्मस्य तदतद्रूपताविकल्पेन धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमः । यथा शब्दोऽनित्य इत्युक्तेऽनित्यत्वं नित्यमनित्यं वा । आद्ये धर्मिणो नित्यत्वापातः । द्वितीये तन्नाशे पुनः शब्दस्य नित्यत्वापत्तिरित्यादि । अत्र स्वपक्षे निर्वाहान्तरविवक्षया परपक्षे दौर्घट्यापादने तात्पर्यं चेत्सदुत्तरमेव । विशिष्टस्वरूपनिराकरणं चेत्तदादौ निर्वाहो वाच्यः । तदनभ्युपगमेन प्रवृत्तस्य स्वन्यायस्वक्रियाविरोधाविति ।

(६७) ॥२०॥ (२-२३) अनित्यसमः । वादिसाधनप्रतिबन्द्या धर्मान्तरेण तद्वतां साध्यधर्मवत्त्वापादनमनित्यसमः । यथा यदि कृतकत्वाच्छब्दोऽनित्यः स्यात्तर्हि सत्त्वात्सर्वमनित्यं स्यादिति । इयमप्यविशेषसमलक्षणेनैव सङ्गृहीतत्वान्न पृथग्वाच्यैव ।

(६८) ॥२०॥ (२-२४) कार्यसमः । हेतोः सन्दिग्धासिद्ध्या प्रत्यवस्थानं कार्यसम इति केचित् । यथा शब्दो नित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वमुत्पाद्यत्वेन व्यङ्ग्यत्वेन वेति सन्दिह्यत इति । इदमप्यन्यथासिद्ध्युद्भावनत्वात्सदुत्तरमेव । तस्मात्पक्षादीनामन्यतमस्यासिद्धिमुद्भाव्य तत्साधकत्वेन स्वयमुत्प्रेक्षितस्य दूषणेन वादिसाधनभङ्गः कार्यसम इत्युदयनः । यथा शब्दो नित्यः कार्यत्वादित्युक्ते कार्यत्वमसिद्धम् । तत्साधकं च प्रयत्नानन्तरीयकत्वं वाच्यम् । तच्चान्यथासिद्धमिति । इदमप्यनभिप्रेततात्पर्यारोपाच्छलमेवेति ।

(६९) ॥२०॥ (३) हान्याद्याभासः । प्रतिज्ञाहान्याद्यप्राप्तावपि भ्रान्त्यादिना तदुद्भावनं हान्याद्याभासः । स प्रमाणविरोध एव । हान्याद्याभासस्य प्राश्निकादिभिः प्रमितत्वात् ।

(७०) ।।२०।। (४) अप्राप्तकाले ग्रहणम् । उद्भावनकालमप्राप्यातिक्रम्य वा निग्रहस्थानोद्भावनमप्राप्तकाले ग्रहणम् । तदसङ्गतमेवेति ।

(७१) ।।२१।। अपसिद्धान्तः । अपसिद्धान्तस्तु स्ववचनविरोध एव । यथा प्राभाकरस्येश्वराभ्युपगमः ।

**हेत्वाभासाः**

(७२) ।।२२।। हेत्वाभासः । पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाव्द्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति हेतोः पञ्च रूपाणि । तत्रान्वयव्यतिरेकिणः पञ्चापि विवक्षितानि । इतरयोस्तु चत्वारि । केवलान्वयिनो विपक्षाभावेन ततो व्यावृत्त्यभावात् । केवलव्यतिरेकिणः सपक्षाभावेन तत्र सत्त्वानुपपत्तेः । तत्र विवक्षितरूपेषु कतिपयसहिताः कतिपयरहिता हेत्वाभासाः । ते चासिद्धविरुद्धानेकान्तिकानध्यवसितकालात्ययापदिष्टसत्प्रतिपक्षप्रकरणसमाः । तत्र व्याप्तस्य पक्षधर्मत्वप्रमितिः सिद्धिः । तदभावोऽसिद्धिः । तद्वानसिद्धः । स चतुर्विधः । व्याप्यत्वासिद्ध आश्रयासिद्धः पक्षधर्मत्वासिद्ध एतत्प्रमित्यसिद्धश्चेति । तत्र व्याप्यत्वासिद्धो द्विविधः । साध्यसम्बन्धरहितः सोपाधिकसम्बन्धश्चेति । आद्यो यथा । सर्वं क्षणिकं सत्त्वादिति । अयमुभयसम्बन्धाभावादव्याप्तावन्तर्भूतः । द्वितीयो यथा । वैधी हिंसाऽधर्मसाधनम् हिंसात्वाद्ब्रह्महिंसावदिति । हिंसात्वपापसाधनयोः सम्बन्धे निषिद्धत्वस्योपाधेः सत्त्वात् ।

(७३) ।।२२।। साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । निषिद्धत्वं च साध्यमधर्मसाधनत्वं व्याप्नोति । यत्राधर्मसाधनत्वं तत्र निषिद्धत्वमिति नियमात् । न व्याप्नोति च साधनत्वाभिप्रेतं हिंसात्वम् । पक्षे हिंसात्वसद्भावेऽपि निषिद्धत्वस्याभावात् । अयं तु विप्रतिपत्तेः प्रागव्याप्त्युन्नायकः । वैधहिंसायाः साधनाव्यापकत्वान्निवर्तमानं निषिद्धत्वं साध्यव्यापकत्वान्निवर्तयद्धिंसात्वस्य साध्याभावसम्बन्धमापादयतीति । विप्रतिपत्त्युत्तरकालस्तु प्रतिपक्षोन्नायको भवति । साधनाव्यापकत्वात्पक्षाव्द्यावर्तमान उपाधिः साध्यव्यापकत्वात्तद्व्यावर्तयति । ततश्चोपाध्यभावः साध्याभावसाधने हेतुर्भवति । वैधहिंसाऽधर्मसाधनं न भवति । अनिषिद्धत्वात् । भोजनवदिति । तथा च सोपाधिकस्याव्याप्तौ प्रतिज्ञायाः समबलविरोधे चान्तर्भावः ।

(७४) ।।२२।। आश्रयासिद्धोऽपि द्विविधः । असदाश्रयः सिद्धसाधनश्चेति । आद्यो यथा । शशविषाणं तीक्ष्णम् विषाणत्वादिति । प्रमाणविरोधाद्यसङ्कीर्णोदाहरणाभावादयं

हेत्वाभास एव न भवति । द्वितीयो यथा । ईश्वरवादिनं प्रति क्षित्यादिकं सकर्तृकं कार्यत्वादिति । अयमसङ्गतावन्तर्भवति । अनाकाङ्क्षितसाधनाय प्रवृत्तत्वात् ।

(७५) ।।२२।। पक्षधर्मत्वासिद्धोऽनेकविधः । यथा शब्दो नित्यश्चाक्षुषत्वादित्यादि । तत्र व्यधिकरणासिद्धो न दूषणमित्युक्तमेव । व्यर्थविशेषणासिद्धो व्यर्थविशेष्यासिद्धश्चाधिक्येऽन्तर्भवतः । भूरियं शशविषाणोल्लिखिता भूत्वादित्यप्रसिद्धविशेषणासिद्धिस्तु दोषान्तरासङ्कीर्णोदाहरणाभावान्न हेत्वाभासः । इतरः पक्षधर्मत्वासिद्धोऽसिद्धावन्तर्भवति । एतत्प्रमित्यसिद्धो यथा । धूमबाष्पाविवेके धूमवत्त्वादिति । अस्याप्यसिद्धिरेव । पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति । अयमपि साध्यसम्बन्धाभावे सति तदभावसम्बन्धित्वादव्याप्तः ।

(७६) ।।२२।। पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः । यथा शब्दो नित्यः प्रमेयत्वादिति । अयमपि साध्यतदभावसम्बन्धित्वादव्याप्त एव । साध्यसाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः । स त्रिविधः । तत्र सपक्षविपक्षरहितो यथा । सर्वमनित्यं सत्त्वादिति । उभयवान्यथा । भूर्नित्या गन्धवत्त्वादिति । सपक्षवान्विपक्षरहितो यथा । शब्दोऽभिधेयः शब्दत्वादिति । अयं व्याप्यत्वासिद्धत्वान्न पृथग्घेत्वाभास इत्येके । अन्ये तु सपक्षविपक्षरहितो व्याप्यत्वासिद्धः । सति सपक्षे पक्षमात्रवृत्तिः सपक्षवान्विपक्षरहितश्च द्वावनैकान्तिकेऽन्तर्भवत इत्याहुः । तथा हि । सव्यभिचारोऽनैकान्तिकः । व्यभिचारोऽन्वयतो व्यतिरेकतश्च । तत्रान्वयस्य भूमिः पक्षः सपक्षश्च । तदतिरेकेण विपक्षेऽपि वर्तमानः साधारणानेकान्तिकः । व्यतिरेकस्य भूमिर्विपक्षः सपक्षैकदेशोऽपि । तत्र सर्वस्मिन्नपि सपक्षेऽवर्तमानोऽसाधारणानैकान्तिक इति । सर्वथाऽव्याप्तावन्तर्भवति । उभयसम्बन्धाभावात् । व्यतिरेकव्याप्तिसम्भवादयं न हेत्वाभास इत्येके । अपरे तु सत्यपि सपक्षे तत्रावर्तमानस्य किं व्याप्तिरेव नास्त्युत केवलव्यतिरेकिवदस्तीति सन्देहावस्कन्दनाद्धेत्वाभासत्वमित्याहुः ।

(७७) ।।२२।। प्रमाणबाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः । यथा सर्वं तेजोऽनुष्णं द्रव्यत्वादिति । अत्र धर्मिग्राहकेण साध्यप्रतियोगिग्राहकेण चोपजीव्येन प्रत्यक्षेण पक्षो बाधितः । चक्षू रूपग्राहकं न भवति । इन्द्रियत्वादिति धर्मिग्राहकानुमानेन बाधितः । ब्राह्मणेन सुरा पेया । द्रवद्द्रव्यत्वादित्यागमबाधितः । अयं प्रतिज्ञायाः प्रबलप्रमाणविरोध एव । समबलप्रमाणविरुद्धः सत्प्रतिपक्षः । यथा वायुः प्रत्यक्षः प्रत्यक्ष-

स्पर्शवत्त्वादिति । वायुर्न प्रत्यक्षः रूपरहितद्रव्यत्वादित्यनेन प्रतिरुद्धत्वात् । अयं प्रतिज्ञायाः समबलप्रमाणविरोध एव ।

(७८) ॥२२॥ स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः । यथा विमतं मिथ्या दृश्यत्वादिति । सत्यत्वेऽप्यस्य वक्तुं शक्यत्वात् । अयं त्वसम्भवीति केचिदाहुः । तदसत्। सत्प्रतिपक्षवदभिमानतः सम्भवात् । अयमपि प्रतिज्ञायाः समबलविरोध एवेति । पक्षाभासहेत्वाभासान्तर्भूतत्वान्न पृथग्वाच्या इत्याहुः । तदसत् । प्रतिज्ञामात्रेणैव स्फुरणात्। साधने स्वक्रियाविरोधस्वन्यायविरोधर्हेत्वाभासानन्तर्भावाच्च । स्वक्रियाविरोधो यथा । अहं मूक इति । स्वन्यायविरोधो यथा । प्रमेयं प्रमाणानपेक्षमिति ।

(७९) ॥२२॥ एवमुदाहरणाभासानपि हेत्वाभासेऽन्तर्भावयन्तस्तेषां न पृथग्वाच्यतामाहुः । तथा हि । उदाहरणलक्षणरहिता उदाहरणवदवभासमाना उदाहरणाभासाः । तत्र साधर्म्योदाहरणे साध्यविकलो यथा । मनोऽनित्यं मूर्तत्वात् । यन्मूर्तं तदनित्यम् । यथा परमाणुरिति । साधनविकलो यथा । कर्मेति । उभयविकलो यथा । यथाऽऽकाश इति । आश्रयहीनो यथा । यथा शशविषाणमिति । अव्याप्त्यभिधानं यथा । यथा घटवदिति । विपरीतव्याप्त्यभिधानं यथा । यदनित्यं तन्मूर्तम् । यथा घट इति । वैधर्म्योदाहरणे साध्याव्यावृत्तो यथा । यदनित्यं न भवति तन्मूर्तं न भवति । यथा कर्मेति। साधनाव्यावृत्तो यथा । यथा परमाणुरिति । उथयाव्यावृत्तो यथा । यथा घट इति । आश्रयहीनः पूर्ववत् । अव्याप्त्यभिधानं यथा । यथाऽऽकाश इति । विपरीतव्याप्त्यभिधानं यथा । यन्मूर्तं न भवति तदनित्यं न भवति । यथाऽऽकाश इति । अत्र वैधर्म्योदाहरणस्यानुपयुक्तत्वात्तदाभासकथनमनुपयुक्तम् । अव्याप्त्यभिधानं तु न दोषो न्यूनं वा । विपरीतव्याप्त्यभिधानमप्यसङ्गतम् । आश्रयहीनत्वं चाश्रयासिद्धवददूषणम् । अन्यतरवैकल्येनैव दृष्टान्तस्य दुष्टत्वादुभयवैकल्यं न पृथग्गणनीयम् । तस्मात्सध्यवैकल्यं साधनवैकल्यं च द्वयमेव दृष्टान्तदूषणम् । तत्र साध्यवैकल्ये दृष्टान्तो विपक्षो भवति । तत्र वर्तमानं साधनमनैकान्तिकं विरुद्धं वा भवति । साधनवैकल्ये व्याप्यत्वासिद्धिरिति । दृष्टान्तदोषो हेत्वाभासेऽन्तर्भवतीति चेन्न । दृष्टान्तोक्त्यनन्तरं प्रतिभासात् । सपक्षान्तरे वर्तमानस्य साधनस्य दृष्टान्तीकृते सपक्षेऽवृत्तौ हेत्वाभासत्वानुपपत्तेश्च । तत्राप्यनुपदर्शितव्याप्तिकत्वेन व्याप्यत्वासिद्ध इति चेन्न । तथाऽप्यर्थदोषाभावादिति ॥

इति श्रीमज्जयतीर्थपूज्यचरणविरचितप्रमाणपद्धतौ अनुमानपरिच्छेदः समाप्तः ॥ २ ॥

# ॥ आगमपरिच्छेदः ॥

**आगमलक्षणम्**

(१) निर्दोषः शब्दः आगमः । निरभिधेयत्वेनान्वयाभावेन वाऽबोधकत्वं, विपरीतबोधकत्वं, ज्ञातज्ञापकत्वं, अप्रयोजनत्वं, अनभिमतप्रयोजनत्वं, अशक्यसाधनप्रतिपादनं, लघूपाये सति गुरुपायोपदेशनमित्यादिदोषरहितः शब्दः आगमः । निर्दोषं वाक्यमिति वा ।

**पदलक्षणम्, वाक्यलक्षणम्**

(२) विभक्त्यन्ता वर्णाः पदम् । आकाङ्क्षासन्निधियोग्यतावतां पदानां समूहो वाक्यम् । आकाङ्क्षा जिज्ञासा । सा चेतनधर्मः । तद्विषयत्वादर्थाः साकाङ्क्षाः । तत्प्रतिपादकत्वात्पदान्यपि । सन्निधिरविलम्बेनोच्चरितत्वं पदधर्म एव । प्रतीतान्वयस्य प्रमाणविरोधाभावो योग्यता पदार्थधर्मः । तद्वाचकत्वात्पदान्यपि योग्यतावन्तीत्युच्यन्ते । तत्र पदत्वेन निरभिधेयत्वस्य, आकाङ्क्षासन्निधिभ्यामन्वयाभावस्य, योग्यतया विपरीतबोधकत्वस्य च निरासे सत्यशेषदोषनिरासार्थं निर्दोषग्रहणम् ।

(३) पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितं वाच्यवाचकभावसम्बन्धग्रहणसंस्कारानुगृहीतमन्त्यवर्णसन्निकृष्टं श्रोत्रमनेकेष्वपि वर्णेष्वेकां पदबुद्धिं जनयति । तथा पूर्वपूर्वपदानुभवजनितसंस्कारसहकृतमन्त्यपदविषयं श्रोत्रमनेकेषु पदेष्वेकां वाक्यबुद्धिमाकाङ्क्षाद्यनुसारेण जनयति । तेन वर्णानां पदानां च सहानवस्थितप्रतीतीनामपि समुदायो युज्यते ।

**व्यक्तय एव पदवाच्याः**

(४) आगमोऽपि सम्यक् श्रुतः समयस्मरणानुगृहीतः शाब्दन्यायानुसन्धानसहित एव स्वार्थस्य बोधको न तु सत्तामात्रेण । जातिरेव वाच्या पदानां व्यक्तयस्तु लक्ष्या इति भाट्टाः । जातिविशिष्टा व्यक्तयो वाच्या इति वैशेषिकाः । क्वचिज्जातिः क्वचिद्व्यक्तिरिति वैयाकरणाः । क्वचिज्जातिः क्वचिद्व्यक्तिः क्वचिदाकृतिरीति नैयायिकाः । अन्यापोह इति बौद्धाः । व्यक्तय एव वाच्याः समयप्रतिपत्तौ तु सादृश्यमुपधानमित्याचार्याः ।

**योग्यतरान्विताभिधानवादः**

(५) ननु समयो नाम पदानां पदार्थानां च वाच्यवाचकभावसम्बन्धः । स च सम्बन्धिष्वज्ञातेषु ज्ञातुमशक्य इति पदार्थज्ञानस्य प्रागेव सिद्धत्वात्किमागमस्य प्रयोजनम् ।

उच्यते । यथा ज्ञातयोरपि धर्मधर्मिणोः संसर्गोऽनुमानेन बोध्यते । तथा ज्ञातानामेव पदार्थानामन्वयविशेषस्यागमो बोधकः । पदानां पदार्थमात्रविषयत्वेनान्वयबोधकं न किञ्चिदस्तीति चेत् । अत्र वर्णपदाभिव्यक्तोऽखण्डः स्फोटाख्यः शब्दोऽन्वयबोधक इति वैयाकरणा ब्रुवते । वर्णमालेत्यपरे । वाक्यान्त्यो वर्ण इत्यन्ये । पदानां सान्निध्यमिति केचित् । पदैरभिहिताः पदार्था एवाकाङ्क्षादिशालिन इति भाट्टाः । सर्वेषां पक्षाणामप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च पदान्येवान्वितस्वार्थाभिधायिनीति प्रेक्षावन्तः । तत्र प्रत्येकमपि पदान्यन्वयविशेषाभिधानसमर्थानीति प्राभाकराः । प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान्स्वार्थानभिदधति । तथाऽनुभवादित्याचार्याः ।

## अपौरुषेयागमस्वरूपम्

(६) आगमो द्विविधः । अपौरुषेयः पौरुषेयश्चेति । तत्रापौरुषेयो वेदः पौरुषेयोऽन्यः । वर्णाः सर्वत्र कूटस्थनित्याः । सर्वगताश्च । पदान्यपि नियमान्येव । तेषां पदार्थसम्बन्धोऽपि स्वाभाविक एव । तथाऽपि वाक्ये पदानामानुपूर्वीविशेषस्य स्वतन्त्रपुरुषपूर्वकत्वभावाभावाभ्यामयं भेदः ।

(७) आगमोऽनुमान एवान्तर्भवतीति वैशेषिकादयः । तदसत् । व्याप्त्याद्यननुसन्धान एव वाक्यार्थप्रतीतेरनुभवात् । अपौरुषेयः पृथक् प्रमाणम् । पौरुषेयस्त्वनुमानमिति प्राभाकराः । तदप्यसत् । उभयत्र सामग्रीसाम्येऽपि विशेषकल्पकाभावात् । तदेतानि त्रीण्येव प्रमाणानि ।

## अर्थापत्त्यादीनामन्तर्भावप्रकारः

(८) एतेष्वेवार्थापत्त्यादीनामन्तर्भावः । तथा हि । अनुपपद्यमानार्थदर्शनात्तदुपपादके बुद्धिरर्थापत्तिः । यथा जीवंश्चैत्रो गृहे नास्तीति ज्ञाने सति बहिर्भावज्ञानम् । अत्र यद्यप्येकैकस्य बहिर्भावलिङ्गत्वं नोपपद्यते । व्यभिचारात् । तत्राऽपि चैत्रो बहिरस्ति । जीवनवत्त्वे सति गृहेऽसत्त्वात् । यो जीवन्यत्र नास्ति स ततोऽन्यत्रास्ति । यथाऽहमिति मिलितयोर्जीवनगृहाभावयोर्लिङ्गत्वमुपपद्यत एव ।

(९) विरुद्धयोर्विशेषणविशेष्यभावानुपपत्तिरिति चेन्न । सामान्यविशेषयोरविरोधस्य स्वस्मिन्नेव दृष्टत्वात् । आत्यन्तिकविरोधे त्वर्थापत्तिरपि न प्रवर्तते । किन्तु विप्रतिपत्त्या सन्देह एव भवतीति ।

(१०) सादृश्यज्ञानसाधनमुपमानम् । तत्र तेनायं सदृशः सदृशाविमावित्यादि वा ज्ञानं प्रत्यक्षजम् । गोगवयौ सदृशाविति वाक्यजं त्वागम एव । गृह्यमाणे स्मर्यमाणसादृश्यं दृष्ट्वा स्मर्यमाणे यद्गृह्यमाणसादृश्यं प्रत्येति तदनुमानमेव । नन्वनुभूयमानगतत्वेन प्रतीयमानं सादृश्यं करणम् । स्मर्यमाणगतं प्रमेयम् । तत्कथमनयोर्व्यधिकरणयोर्लिङ्ग- लिङ्गिभाव इति चेन्न । स गौरेतद्गवयसदृशः । अस्य गवयस्य तद्गोसदृशत्वात् । यो यत्सदृशः स तत्सदृशः । यथा यमो यमान्तरेणेति व्याप्तिसम्भवेन व्यधिकरणस्यादोषत्वात् । एतद्गवयगतसादृश्यप्रति-योगित्वस्य वा लिङ्गत्वेन सामानाधिकरण्याच्चेति ।

(११) अभावज्ञानकरणमभावप्रमाणम् । तत्रेदानीं कौरवाद्यभावो भारताद्यागमादव-गम्यते। देवदत्तस्य चक्षुराद्यभावो रूपाद्यदर्शनलिङ्गगम्यः । सुखाद्यभावप्रमितिस्तु साक्षि-प्रत्यक्षेणैव । पुरोवृत्तिघटाद्यभावप्रमितिस्तु झटिति जायमाना प्रत्यक्षफलमेव । न त्वनुपलब्धिमात्रजन्या । अपरोक्षज्ञानत्वात् । अनुपलब्धिस्त्ववर्जनीयसन्निधिरेव । यत्र त्वन्धकारे हस्तप्रसारणादिरूपपरामर्शेन घटाभावं प्रत्येति न तदाऽनुपलब्धिः करणम् । किन्तु लिङ्गत्वेनैव । अत्र घटो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादिति । एवं प्रातर्गजाद्यभावज्ञानमुपलब्धिलिङ्गजन्यम् । अभावस्येन्द्रियसन्निकर्षानुपपत्तिरिति चेन्न । भाववदभावस्यापीन्द्रियसन्निकर्षे बाधकाभावात् ।

बहुलज्ञानेऽल्पज्ञानं सम्भवः । यथा शतमस्तीति ज्ञाने पञ्चाशज्ज्ञानम् । तदप्यनुमान-मेव। देवदत्तः पञ्चाशद्वान् । शतवत्त्वात् । यथाऽहमिति प्रयोगसम्भवात् । प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः परिशेषः । यथा देवदत्तयज्ञदत्तावेताविति ज्ञाने सत्येकस्मिन्नायं यज्ञदत्त इति प्रतिषेधे देवदत्तबुद्धिः । इयमनुमानजन्या । अयं देवदत्तः । देवदत्तयज्ञदत्त-योरन्यतरत्वे सत्ययज्ञदत्तत्वात् । व्यतिरेकेण यज्ञदत्तवदिति प्रयोगोपपत्तेः । उपक्रमादीन्य-प्यनुमानान्येव । अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम् । यथाऽत्र वटे वैश्रवणोऽस्तीति वाक्यं तदागम एव । एवमन्यान्यपि प्रमाणान्युक्तेष्वेवान्तर्भाव्यानि ।

**प्रामाण्यविचारः**

(१२) नन्वेतेषां प्रमाणानां प्रामाण्यमप्रमाणानामप्रामाण्यं च केनोत्पद्यते केन वा ज्ञायत इति चेत् । उच्यते । तत्र ज्ञानानामुभयं स्वत एवेति साङ्ख्या मन्यन्ते । ज्ञानजनकातिरिक्तजनकानपेक्षत्वमुत्पत्तौ स्वतस्त्वम् । ज्ञानज्ञापकातिरिक्तज्ञापकानपेक्षत्वं

ज्ञप्तौ स्वतस्त्वम् । उभयं परत एवेति नैयायिकादयः । ज्ञानजनकातिरिक्त-कारणजन्यत्वमुत्पत्तौ परतस्त्वम् । ज्ञानज्ञापकातिरिक्तप्रमाणापेक्षत्वं ज्ञप्तौ परतस्त्वम् । तत्र ज्ञानमिन्द्रियादिजन्यं प्रामाण्यं पुनरिन्द्रियादिगुणजन्यम् । तथाऽप्रामाण्यं तद्दोषजन्यम् । एवं ज्ञानं मानसप्रत्यक्षवेद्यम् । तत्र प्रामाण्यमप्रामाण्यं च संवादविसंवादलिङ्गगम्यमिति । प्रामाण्यं परतोऽप्रामाण्यं स्वत इति बौद्धाः । प्रामाण्यं स्वतोऽप्रामाण्यं परत इति पक्षमङ्गीकुर्वाणा अपि भाट्टाः प्रामाण्यविशिष्टं ज्ञानं ज्ञातताविशेषेणानुमीयत इति ज्ञप्तौ स्वतस्त्वम् । अप्रमाण्यं तु विसंवादाद्यनुमानान्तरवेद्यमिति परतस्त्वं मन्यन्ते । स्वप्रकाशज्ञानेनैव प्रामाण्यविशिष्टज्ञानं सिद्ध्यति । अप्रमाण्यं तु नास्त्येवेति प्राभाकराः । इन्द्रियादिमात्रेणैव प्रामाण्यविशिष्टं ज्ञानमुत्पद्यते । गुणास्त्वकिञ्चित्कराः । अप्रामाण्यं दोषसहकृतेन्द्रियादिभिरुत्पद्यते । तथा ज्ञानं तत्प्रामाण्यं च साक्षिणैव ज्ञायते । अप्रमाणज्ञानस्वरूपमात्रं साक्षिवेद्यम् । तदप्रामाण्यं त्वनुमेयमित्याचार्याः ।

(१३) करणानां तु ज्ञानजनकत्वशक्तिरेव स्वकारणासादिता प्रामाण्यजनकत्वशक्तिः । अप्रामाण्यजनने त्वन्या शक्तिर्दोषवशादाविर्भवति । ज्ञप्तिस्तु परत एव । इन्द्रियादि-स्वरूपस्य यथायथं स्वप्रमाणवेद्यत्वात् । यथार्थज्ञानसाधनत्वस्यानुमानवेद्यत्वादिति । तदेवम्भूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिकं निश्चित्य विषयेषु विरक्तस्य शमदमादि-सम्पत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवणमनननिदिध्यासनान्यादरनैरन्तर्याभ्यां बहुकालमनुष्ठितवतो भगवत्साक्षात्कारे सत्यत्युद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्ट-निवृत्तिविशिष्टानन्दादिस्वरूपाविर्भावलक्षणा मुक्तिर्भवतीति ॥

**जयतीर्थमुनीन्द्रेण बालबोधाय निर्मिता ।**
**प्रमाणपद्धतिर्भूयात्प्रीत्यै माधवमध्वयोः ॥ १ ॥**

इति श्रीमज्जयतीर्थपूज्यचरणविरचितप्रमाणपद्धतौ आगमपरिच्छेदः समाप्तः ॥ ३ ॥

॥ ग्रन्थश्चायं सम्पूर्णः ॥

# ॥ प्रमाणपद्धतिः ॥

## ॥ (१) अथ प्रत्यक्षपरिच्छेदः ॥

### अष्टटिप्पणी समेता

**श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥**

### मङ्गलश्लोकाः

**प्रणम्य चरणाम्भोजयुगलं कमलापतेः ।**
**प्रमाणपद्धतिं कुर्मो बालानां बोधसिद्धये ॥ १ ॥**

### श्रीजनार्दनविरचिता जयतीर्थविजयनाम्नी टिप्पणी

**प्रमाणजातसंवेद्यमस्पृष्टावद्यसद्गुणम् ॥**
**सद्भ्यो वितीर्णसर्वार्थं सन्नमामि रमापतिम् ॥ १ ॥**
**पूर्णबोधान्गुरूंश्चान्यान्नत्वा तत्करुणाबलात् ॥**
**प्रमाणपद्धतिं गूढां विवृणोमि यथामति ॥ २ ॥**
**स्खलन्नप्यहमेतस्यां गूढायां मानपद्धतौ ॥**
**नैव हास्योऽस्मि महतां गूढत्वादेव पद्धतेः ॥ ३ ॥**

भगवाञ्जयतीर्थमुनिः प्रमाणस्वरूपादिकं निरुरूपयिषुर्ग्रन्थादौ विशिष्टेष्टदेवतानतिपूर्वकं विषय-प्रयोजने निर्दिशंश्चिकीर्षितं प्रतिजानीते ॥ **प्रणम्येति** । भक्त्याद्यङ्गपूर्वकस्यैव नमस्कारस्याभिमत-समाप्त्यादिसाधनत्वम् । तादृशनमस्काराभावादेव क्वचित्कृतेऽपि नमस्कारे समाप्त्यभावः । अतो नमस्कारस्य वैफल्यशङ्का न कार्येति सूचयितुं प्रणम्येत्युक्तम् । कमलापतेर्निराकारत्वशङ्कानिरासाय चरणेत्युक्तम् । ननु लक्षणेन सिद्धस्यैव चरणवन्दनमिति किमस्य नारायणस्य लक्षणमित्यत आह ॥ **कमलापतेरिति** । तथा चातिव्याप्त्याद्यभावात्कमलापतित्वं विष्णुलक्षणमिति भावः । ननु किमस्मिन्प्रमाणमित्याशङ्क्य तज्ज्ञानसाधनप्रमाणनिरूपणार्थमेवायमारम्भ इत्याह ॥ **प्रमाणपद्धतिं कुर्म इति** । प्रमाणानां पद्धतिरिव पद्धतिः प्रमाणसामान्यतद्विशेषलक्षणादिप्रतिपादकग्रन्थ इत्यर्थः । पद्धतिसादृश्यं तु प्रवृत्त्युपयोगित्वेनेति बोध्यम् । प्रमाणपद्धतिरित्यन्वर्थकसंज्ञाकरणेनैव प्रमाण-

स्वरूपमस्य प्रकरणस्य विषय इति सूचितम्। प्रयोजनं निर्दिशति ।। **बोधेति** । प्रमाणानामिति शेषः। जयतीर्थमुनीन्द्रेण बालबोधाय निर्मितेत्यग्रिमश्लोक इव बोधयेति वाच्ये बोधसिद्ध्य इति वदता प्रमाणेति सामान्यतो निर्दिशता चैतत्प्रकरणप्रतिपाद्यानि सर्वाण्यपि प्रमाणानि भगवद्बोधोपयोगित्वेन ज्ञातान्येव पुरुषार्थपर्यवसायीनि । अन्यथा गङ्गावालुकापरिगरणनवदिदं प्रमाणादिविभागकथनं व्यर्थं स्यादिति सूचितम् । मन्त्रसिद्धिरित्यादाविव सिद्धिशब्दस्य साफल्यार्थत्वात् । अत एवान्ते वक्ष्यति । तदेवंभूतैः प्रमाणैरित्यारभ्य भगवत्साक्षात्कारे सतीति । प्रमाणलक्षणावसानेऽप्युक्तं मानलक्षणमित्युक्तं सङ्क्षेपाद्ब्रह्मसिद्ध्य इति । ननु न प्रमाणादिबोधोऽस्य प्रयोजनम् । इष्टानिष्टप्राप्तिपरिहारयोरेव प्रयोजनत्वेन प्रमाणादिबोधस्य तदन्यतरत्वाभावादित्यतोऽप्याह ।। **बोधसिद्ध्य इति** । एतच्छङ्का-परिहाराय कमलापतेरित्येतद्बोधसिद्ध्य इत्यनेनाप्यन्वयितव्यम् । तथा च प्रसादद्वारा मोक्षसाधनीभूत-रमापतिबोधायेत्यर्थः । एवं च प्रमाणादिबोधस्येष्टानिष्टप्राप्तिपरिहारान्यतरात्वाभावेऽपि परम्परया तत्कारणत्वात्प्रयोजनत्वमुपपद्यत इति भावः । अधिकारिणं निर्दिशति ।। बालानामिति । बालशब्दार्थ-स्त्वनुपदमेव स्फुटीभविष्यति ।

## श्रीराघवेन्द्रतीर्थविरचितः प्रमाणपद्धतिभावदीपः

**लक्ष्मीनारायणं नत्वा तथा मध्वादिदेशिकान् ।।**
**प्रमाणपद्धतेर्भावदीपं कुर्यां यथामति ।। १ ।।**

प्रारिप्सितग्रन्थविघ्नविधातादिप्रयोजनकं भगवत्प्रणामरूपं मङ्गलमादौ कुर्वन्नेव चिकीर्षितं प्रतिजानीते ।। **प्रणम्येति** । कमलापतेरित्युक्त्या सकलवाङ्मनसदेवतायाः श्रियोऽपि भगवदुपसर्जनत्वेन प्रणतिरुक्ता भवति । प्रमाणेति भावे करणे च ल्युडन्तम् । प्रमाणानां केवलानुप्रमाणानां पद्धति-रुद्देश्यसामान्यलक्षणविभागविशेषोद्देशविशेषलक्षणतत्परीक्षादिरूपा पद्धतिशब्दिता रीतिर्यस्मिग्रन्थे तं ग्रन्थम् । कुर्म इति परस्मैपदोक्त्या सूचितं प्रयोजनमाह ।। **बालानामिति** । प्रमाणानामुक्त-रूपपद्धतेर्बोधसिद्ध्य इत्यर्थः । नित्यसापेक्षत्वात्समासः । देवदत्तस्य गुरुकुलमिति यथा ।

## श्रीविजयीन्द्रतीर्थविरचिता प्रमाणपद्धतिटिप्पणी

**पद्मापतिपदाम्भोजयुग्ममानम्य मद्गुरून् ।।**
**प्रमाणपद्धतेर्भावं वर्णयामि यथामति ।। १ ।।**

प्रारिप्सितग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं कृतं नमस्काररूपमङ्गलं शिष्यशिक्षायै निबध्नंश्चिकीर्षितं प्रतिजानीते ।। **प्रणम्येति** । अत्र भक्तिश्रद्धातिशयकथनाय प्रशब्दः । प्रणामरूपमङ्गलस्य

इदं न प्रचुरीत गुरोराज्ञां च [illegible]



प्रारब्धाभीष्टकर्मापेक्षया पूर्वकालत्वबोधनाय क्त्वाप्रत्ययः । नम्यचरणाम्भोजयुगलस्य भगवतोऽपि विशिष्टेष्टाधिकृतत्वं नम्यत्वप्रयोजनकं रूपं सूचयितुमाह ।। कमलापतेरिति । प्रस्तुतप्रकरणप्रयोजनमाह ।। **बोधेति** । प्रमाणादितत्त्वज्ञानविरहिणोऽन्यत्र व्युत्पन्नांस्तद्बोधप्रयोजकानाह ।। **बालानामिति** । प्रमाणपद्धतेः क्रियमाणत्वेऽपि प्रमाणपद्धतेरेव प्राधान्याल्लिङ्गसमवायेन प्राणभृत उपधात्विति वाक्यस्थ प्राणभृच्छब्दवत्प्रमाणपद्धतितदन्यपद्धतिसमुदाये प्रमाणपद्धतिशब्दमभिप्रेत्याह ।। **प्रमाणपद्धतिमिति** । ग्रन्थनामत्वे वा लिङ्गसमवाय एव निमित्तमिति द्रष्टव्यम् । प्रमाणपद्धतिमित्यस्मात्पूर्वं वयमित्यध्याहारः । प्रमाणपद्धतिकर्तुरेकत्वेऽप्यस्मदोर्द्वयोश्चेति वयमिति बहुवचनोपपत्तिः । प्रमाणपद्धतेः करिष्यमाणत्वेऽपि "वर्तमानसामीप्ये वर्तमानवद्वेति कुर्म इति लट् प्रयुक्तः" । एतत्प्रकरणरूपक्रियाफलस्य बालबोधस्य कर्तृगामित्वाभावादत्र परस्मैपदप्रयोगः । अनेन प्रमाणादितत्त्वमस्य प्रकरणस्य विषय इति सूचितम् । एवं च विषयादीनां यथायथं सम्बन्धो द्रष्टव्यः ।

## श्रीवेदेशभिक्षुविरचित प्रमाणपद्धति टिप्पणी

**प्रमाणजातैरवबुद्ध्य यस्य सारं पदं भक्तवरा भजन्ति ।।**
**जना निजानन्दपदेच्छवोऽलं तं वासवीसूनुमहं प्रपद्ये ।। १ ।।**
**श्रीमध्वं जयतीर्थमपि च श्रीराघवाङ्घ्र्यम्बुजा-**
**सक्तान्तःकरणान् रघूत्तमयतीनानम्य विद्यागुरून् ।।**
**वेदव्यासयतीश्च पद्धति गताभिप्राय संवर्णनम् ।**
**वेदेशस्तनुते गुरुकृपामालम्ब्यधीशुद्धये ।। २ ।।**

इह खलु सुखमेव मे स्याद्दुःखं मनागपि मा भूदिति निखिलापेक्षितमोक्षस्येश्वरप्रसादमन्तरेणासम्भवात्तस्य च तत्साक्षात्कारमन्तरेणानुदयात्तस्य च वैराग्यादिद्वारा नित्यानित्यवस्तुनिश्चयसाध्यत्वान्नित्यानित्यवस्तुनिश्चयस्य च प्रमाणानि विनाऽनुदयात्तेषां च यथावद्विदितानामेव तद्धेतुत्वोपपत्तेस्तत्स्वरूपं यथावज्ज्ञापयितुकामो जयतीर्थश्रीमच्चरणः प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्यादिप्रयोजनशिष्टाचरपरम्पराप्राप्तेष्टदेवतानतिपूर्वकं श्रोतृशेमुषीमनुकूलयिष्यंश्चिकीर्षितं प्रतिजानीते ।। **प्रणम्येति** । अत्र भक्तिश्रद्धाद्यतिशयद्योतनाय प्रशब्दः । तादृश एव हि नमस्कारो भवत्यभिमतसिद्धेरङ्गम् । ल्यप्प्रत्ययप्रयोगेण च प्रमाणस्वरूपमङ्गलस्य ग्रन्थकरणाङ्गत्वं सूचयति । नम्यत्वप्रयोजकमिष्टत्वं विशिष्टत्वं चाह ।। **कमलापतेरिति** । कमला हि सर्वपुरुषार्थप्रदा ब्रह्माद्युत्तमा च प्रसिद्धा । अतस्तत्पतिः सुतरां तदुभयरूप इति भावः । अनेन सकलवाङ्मनसदेवताऽवश्यं वन्दनीया न पृथक् वन्दनीया रमापि

वन्दिता भवति । कमलापतेर्दक्षिणसव्यपादयोः क्रमेणानन्दज्ञानप्रदत्वात्तदुभयप्रार्थनाय चरणाम्भोजयुगलमित्युक्तम् । यथोक्तम् ।

स्वित्यानन्दमुद्दिष्टो वरिति ज्ञानमुच्यते ।
मुक्तिदानेन तद्दानात्सुवरस्य पदद्वयम् ।
दक्षिणश्चैव सव्यश्चेति ।

- आनन्द
- ज्ञान

प्रमाणादि

चरणाद्युक्त्यैव सावयवत्वसिद्धेर्न तदर्थं युगलग्रहणम् । प्रमाणपद्धतिमिति ग्रन्थसंज्ञा । यथा ग्रामादिकं मार्गेण सुखेन प्राप्तुं शक्यमेवमनेन ग्रन्थेन प्रमाणादिकं सुखेन बोद्धुं शक्यमिति भावेन पद्धतिशब्दप्रयोगः । अत एव वक्ष्यति । सुखेन शक्यते बोद्धुमिति तदर्थमिति च । वर्तमानसामीप्याद्वर्तमानवद्व्यपदेशः । प्रकरणावान्तरप्रयोजनमाह ।। **बालानामिति ।** प्रमाणादिस्वरूपज्ञानरहिता अन्यत्र व्युत्पन्ना बालास्तेषां प्रमाणादिस्वरूपबोधप्राप्तय इत्यर्थः ।

## श्रीसत्यनाथतीर्थविरचितम् अभिनवामृतम्

**नमामि श्रीमदानन्दतीर्थपूजितविग्रहम् ।।**
**रामचन्द्रं निजानन्दसान्द्रमिष्टतमं गुरुम् ।। १ ।।**
**अपारिजातो यः ख्यातो द्वेषदोषविवर्जनात् ।।**
**इष्टदानात्पारिजातं वन्दे सत्यनिधिं मुदे ।। २ ।।**
**प्रमाणपद्धतौ बुद्धिसञ्चारश्रमशान्तये ।।**
**सत्यनाथयतिः सेव्यमारभेऽभिनवामृतम् ।। ३ ।।**

शिष्यशिक्षार्थं स्वग्रन्थस्येष्टदेवतानतिपूर्वकत्वं सूचयंश्चिकीर्षितं प्रतिजानीते ।। **प्रणम्येति ।** चरणावेवाम्भोजे तयोर्युगलं प्रणम्येति सम्बन्धः । अत्र युगलशब्दो द्वयपर्यायोऽप्येकप्रकारतासमानाधिकरणद्वित्ववाचकः । तद्यथा हयवाज्यर्वाश्वादिशब्दाः पर्याया अपि देवगन्धर्वासुरमनुष्यवाहनवाचकाः। तदुक्तम् । हयो भूत्वा देवानवहत् । वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यानिति । चरणौ प्रणम्येत्येव वक्तव्येऽम्भोजग्रहणैमतिकोमलत्वज्ञापनाय । युगलग्रहणं त्वेकप्रकारताद्योतनायेति बोध्यम् ।

## श्रीव्यासपुरी नरसिंहविरचितः आदर्शः

**कमलाहस्तगलितामृतसिक्तकलेवरम् ।।**
**हयग्रीवमहं वन्दे चन्द्रस्थं ज्ञानदं प्रभुम् ।। १ ।।**

श्रीमच्छ्रीशैलसंवासिश्रीनिवासमहं भजे ॥
समस्तदुरितध्वान्तविध्वंसनदिवाकरम् ॥ २ ॥
समस्तमानैः सकलेशितुर्हरेः सर्वोत्तमत्वं प्रकटीचकार ॥
निरस्य दुर्वादिमतं समस्तं तं भारतीनाथ महं प्रपद्ये ॥ ३ ॥
श्रीमदानन्दतीर्थार्यशास्त्रगूढार्थसन्ततिः ॥
प्रदर्शिता येन सम्यक् तं जयेन्द्रमहं भजे ॥ ४ ॥
कण्ठपल्लीवरग्रामवासिनं विदुषां वरम् ॥
रघुनाथार्यनामानं परमं गुरुमाश्रये ॥ ५ ॥
पितृन् श्रीवासुदेवार्यान् विद्यामन्त्रोभयप्रदान् ॥
नमामि यत्प्रसादेन ग्रन्थमेनं करोम्यहम् ॥ ६ ॥
द्वैतद्युमणिकर्तारं दुर्मतध्वान्तभास्करम् ॥
श्रीनाथार्यं नमस्कृत्य तदुक्तार्थं वदाम्यहम् ॥ ७ ॥
अग्रजान् श्रीनिवासार्यान् नत्वा सन्मानपद्धतेः ॥
नरसिंहेन चादर्शः क्रियते बुद्धिशुद्धये ॥ ८ ॥
दोषो यदि दातव्यस्तर्हि विचार्यं समग्रं यत् ॥
आशयबोधनिमित्तो दोषो नो दुःखमावहति ॥ ९ ॥

ग्रन्थादौ मङ्गलमाचरति ॥ **प्रणम्येति** । प्रणम्य कुर्मं इत्युक्त्या ग्रन्थारम्भे मङ्गलमावश्यकमिति सूचितम् । कमलापतिरित्यनेन सकलवाङ्मनसदेवताया जगन्मातुश्च वन्दनं कृतं भवति ।

## श्रीनिवासतीर्थविरचिता वाक्यार्थमञ्जरी

**प्रणम्य जानकीकान्तचरणौ मानपद्धतिम् ।**
**वेदेशमुनिसन्त्यक्तवाक्यार्थो लिख्यते मया ॥ १ ॥**

**चरणाम्भोजयुगलमिति** । चरणावम्भोजे इव तयोर्युग्ममित्यर्थः । अत्र भगवच्चरणयोः पद्मसाम्योक्त्या कोमलत्वादिलाभेन तस्य सुकुमारत्वादिगुणविशिष्टत्वं नम्यत्वप्रयोजकं सूचितम् । ग्रन्थक्रियाफलस्य बालबोधस्य कर्तृगामित्वाभावात्कुर्म इति परस्मैपदप्रयोगः । अधिकार्यादिदर्शयितुं बालानां बोधसिद्धय इत्युक्तम् । प्रमाणपद्धतिमित्युक्त्या प्रमाणस्वरूपबोधेति लभ्यते । तथाच प्रमाणं तत्त्वमत्र विषयः । तज्ज्ञानं प्रयोजनम् । बाला अधिकारिणः । प्रकरणप्रयोजनयोः कार्यकारणभाव इत्यादि यथायोग्यसम्बन्धो द्रष्टव्यः ।

## श्रीविट्ठलभट्टविरचिता प्रमाणपद्धतिटिप्पणी

**पूर्णप्रज्ञाचार्यशुद्धहृत्सरोजाग्रमन्दिरम् ॥**
**इन्दिरार्चितपादाब्जं श्रीनृसिंहमहं भजे ॥ १ ॥**
**प्रणम्य जयतीर्थाख्यान्विठ्ठलाख्यविपश्चिता ॥**
**प्रमाणपद्धतेर्व्याख्या क्रियते बालबोधिनी ॥ २ ॥**

इहखलु सुखमेव मे स्याद्दुःखं मनागपि मा भूदिति निखिलापेक्षितमोक्षस्य भगवत्प्रसादमन्तरेणासम्भवात्तस्य च तस्मिन्नुद्रिक्तभक्तिं विनाऽयोगादुद्रिक्तभक्तेश्च तत्साक्षात्काराधीनत्वात् तत्साक्षात्कारस्य वैराग्यभक्तिश्रवणमननादिसाध्यत्वात् । तेषां च नित्यानित्यत्वभगवन्माहात्म्यश्रवणादीतिकर्तव्यताबोधकप्रमाणसापेक्षत्वात्तद्बोधकानां च श्रुतिस्मृत्यादिप्रमाणानां प्रामाण्यनिश्चये ततो वैराग्यस्य निष्पत्तेरायाससाध्यवैराग्यादिसाधनसम्पादनार्थं निष्कम्पप्रवृत्त्ययोगात्प्रमाणप्राबल्यदौर्बल्यप्रामांण्यावधारणव्यतिरेकेण मननासम्भवाच्चेदमेव प्रमाणानां वैराग्यादावुपयोगात्तेन रूपेण प्रमाण्यावधारणस्य च प्रमाणलक्षणादिवचनसापेक्षत्वात्प्रमाणादिस्वरूपं यथावज्ज्ञापयितुं प्रमाणलक्षणादिकं वक्तुकामः श्रीमज्जयतीर्थवर्यः प्रारिप्सितप्रकरणपरिसमाप्त्यादिप्रयोजनकेष्टदेवताचरणयुगलप्रणतिपूर्वकं श्रोतृशेमुषीमनुकुलयिष्यंश्चिकीर्षितं प्रतिजानीते ॥ **प्रणम्येति** । इह हि कृतदेवतावन्दनानामपि या ग्रन्थापरिसमाप्तिः सा नमस्कारस्य भक्तिश्रद्धातिशयपूर्वकत्वाभावनिबन्धना न तु तस्य तदहेतुत्वात् । भक्तिश्रद्धाद्यविशिष्टस्याव्यभिचारेऽपि तद्विशिष्टस्य व्यभिचारात् । अत एव नमस्कारस्य भक्तिश्रद्धाद्यातिशयपूर्वकत्वलक्षणप्रकर्षं शिष्टाननुग्राहयितुं प्रणम्येत्युक्तम् । या त्वकृतदेवतानतीनामपि नास्तिकानां प्रारिप्सितकर्मसमाप्तिः सा कारणान्तरादपि भविष्यति । न ह्येकजातीयं कार्यमेकजातीयकारणजन्यमिति नियमोऽस्ति । तथात्वे त्वेकसजातीयकार्ये विजातीययोर्व्रीहियवयोर्विकल्पेन हेतुत्वं न स्यात् । न च तत्र कार्यवैजात्यमनङ्गीकार्यमिति वाच्यम् । पुत्रकामेष्टिकारीर्ययोरिव व्रीहियवयोर्विकल्पोच्छेदप्रसङ्गात् । अन्यथा तत्रापि विकल्पप्रसङ्गात् । ननु तथाऽपि व्यतिरेकव्यभिचारान्न तस्य प्रारिप्सितप्रकरणपरिसमाप्तिहेतुतेति चेन्न । एकजातीयशक्तिमत्त्वेन हेतुत्वाङ्गीकारेणाव्यभिचारात् । तदुक्तं कथालक्षणटीकायाम् । इह हि कृतदेवतानतीनामपि या ग्रन्थापरिसमाप्तिः सा भक्तिश्रद्धाद्यतिशयपूर्वकत्वाभावनिमित्ता न तत्पूर्वकप्रणामस्य प्रारिप्सितपरिसमाप्त्यहेतुतां गमयितुं शक्नोति । न ह्येकदेशव्यभिचारेण सामग्री व्यभिचारिणी स्यात् । या त्वकृतदेवतानतीनामपि समीहितफलसिद्धिः सा कारणान्तरादपि भविष्यति । न ह्येकस्यैकमेव

कारणमिति । विद्यारम्भसमये सकलविद्याभिमानिन्या लक्ष्म्या अप्यवश्यवन्दनं कार्यं तद्वन्दनं च भगवत्पारतन्त्र्येणैव कार्यमिति ज्ञापयितुं कमलापतेरित्युक्तम् । प्रमाणपद्धतिं कुर्म इति प्रमाणपद्धतिपदं प्रमाणलक्षणादिप्रतिपादकस्यास्य प्रकरणस्याखण्डसंज्ञा । यद्वा प्रमाणानां पद्धतिः प्रमाणपद्धतिः । पद्धतिपदं तु प्रवृत्तिनिवृत्त्युपयोगित्वस्वरूपमार्गसाधर्म्याल्लक्षणादिप्रतिपादकोक्तिपरम् । लक्षणादिवचनस्य लक्ष्यरूपार्थनिश्चयद्वारा प्रवृत्तिनिवृत्त्युपयोगः सकलवादिसम्प्रतिपन्नः । तथा चोभयथाऽपि प्रमाणपद्धति पदं प्रमाणलक्षणादिप्रतिपादकग्रन्थपरम् । अत एव प्रमाणपद्धतिं कुर्म इति प्रतिज्ञाय यद्यपीत्यादिनोत्तरवाक्येन प्रमाणलक्षणाद्यभिधानस्य वैय्यर्थ्यमाशङ्क्य तत्सार्थक्यकथनमुपपद्यते । तथा च प्रमाणलक्षणप्रतिपादकं प्रकरणं कुर्म इत्यर्थः । नन्वधिकारिविषयप्रयोजनसम्बन्धशून्यत्वादनारम्भणीयमिदं प्रकरणमित्यत आह ॥ **बालानां बोधसिद्ध्य इति ।** बालानामल्पबुद्धीनां बोधः प्रमाणलक्षणादितत्त्वाध्यवसायस्तस्य सिद्ध्य उत्पत्तय इत्यर्थः । बालादिरूपाधिकार्यादिसद्भावादारम्भणीयमेवेदं प्रकरणमिति भावः । अत्र बाला अधिकारिणः प्रमाणलक्षणादिरूपं विषयः । तन्निर्णयः प्रयोजनम् । अधिकारिविषययोर्ज्ञातृज्ञेयभावसम्बन्धः । विषयप्रयोजनयोर्विषयविषयिभावः सम्बन्धः । अधिकारिप्रयोजनयोः स्वस्वामिभावसम्बन्ध इति ज्ञातव्यम् । एतेन शास्त्रेणैव प्रमाणलक्षणादिस्वरूपावधारणसम्भवादनारम्भणीयमिदं प्रकरणमिति चोद्यं निरस्तम् । बालानां शास्त्रेऽनधिकारात् । बालबोधार्थमस्यावश्यमारम्भणीयत्वात् ।

## ग्रन्थारम्भसमर्थनम्

**(२) प्र.प.— यद्यपि भगवत्पादैरेव प्रमाणलक्षणादिकमभिहितम् । तथाऽपि गम्भीरया वाचा विक्षिप्य वर्णितं न मन्दैः शक्यते सुखेन बोद्धुमिति तदर्थमिदं प्रकरणमारभ्यते ।**

(२) **जना.**— नन्विदं प्रकरणमनारम्भणीयम् । प्रयोजनादिशून्यत्वात् । न च प्रमाणादिबोध एवास्य प्रयोजनमिति बोधसिद्ध्य इत्यनेनैव सूचितमिति वाच्यम् । तस्य भगवत्पादप्रणीतप्रमाणलक्षणादिनैव सिद्धेः । न च परोक्तप्रमाणानामन्तर्भावकथनार्थमिदं प्रकरणमिति वाच्यम् । तत्राप्यभावोऽनुमाप्रत्यक्षं चेत्यादिना तत्कथनात् । न च तत्र विस्तरेण कथितस्य प्रमाणादिस्वरूपस्य सङ्क्षेपेण कथनार्थमिति वाच्यम् । तत्रापि तस्य सङ्क्षिप्तत्वात् । अत एवोक्तं प्रमाणलक्षणावसाने मानलक्षणमित्युक्तं सङ्क्षेपादिति । नाप्यस्य विषयोऽस्ति । अज्ञातसन्दिग्धविपर्यस्तानामेव ग्रन्थविषयत्वात् । प्रमाणादिस्वरूपस्य प्रमाणलक्षणादिनैव ज्ञातत्वादसन्दिग्धत्वादविपर्यस्तत्वाच्च । अत एव नाधिकारी । प्रमाणविषयज्ञानेच्छोरेव तदधिकारित्वात् । तत एव न सम्बन्धः । तस्मा-

दनारम्भणीयमिदं प्रकरणमिति स्वयमेवाशङ्क्य निराकरोति ॥ **यद्यपीत्यादिनाऽऽरभ्यत इत्यन्तेन ।** अभिहितमित्यतः प्राक् प्रमाणलक्षणादाविति शेषः । एवकारेण भगवत्पादैरेवाभिहितं किं मयाऽभिधातव्यमस्तीत्यरुचिं सूचयति । यद्वा भगवत्पादैरभिहितमेवेत्येवशब्दसम्बन्धः । गम्भीरया गूढाभिप्रायया । विक्षिप्य व्यवधानं कृत्वा ॥ **मन्दैरिति ।** विशिष्यप्रमाणस्वरूपानभिज्ञैरित्यर्थः । सामान्याकारेणापि प्रमाणस्वरूपज्ञानाभावे प्रमाणस्वरूपप्रतिपादकैतत्प्रकरणे मन्दानां प्रविवक्षाभाव-प्रसङ्गात् । तस्याः सामान्याकारेण विषयज्ञानसाध्यत्वात् । तथा च सामान्याकारेण प्रमाण-स्वरूपाभिज्ञाः प्रमाणलक्षणादिग्रन्थेन प्रमाणस्वरूपं विशिष्य बोद्धुमशक्ता मन्दाः । त एव बाला इति निष्कृष्टोऽर्थः । ननु प्रमाणलक्षणादिना बोद्धुमाशक्तानामत्राधिकारित्वे तेन बोद्धुं शक्ता-नामत्राधिकारो न स्यादिति चेन्मा भूत् । नहि सर्वाधिकारिकः कोऽपि ग्रन्थोऽस्तीति हृदयम् । अत एव श्रीमद्विष्णुतत्त्वनिर्णयटीकायां क्रमात्सज्जनसंविद इत्येतव्द्याख्यानावसरे एकान्तभक्तापेक्षया संवित्पदं ज्ञानपरतया व्याख्याय तदितराधिकार्यपेक्षया संविच्छब्देन तत्साध्यो मोक्षो लक्ष्यत इत्युक्तम् ॥ **तदर्थमिति ।** मन्दानां सुखेन प्रमाणलक्षणादिबोधायेत्यर्थः । यद्वा तेषां प्रमाणलक्षणादीनामर्थ एवार्थोऽभिधेयो यस्येति तदर्थमित्यस्यार्थः । अनेनास्य भगवत्पादोक्तिमूलत्वेनादर्तव्यता दर्शिता । निराकृता च निर्विषयत्वशङ्का । यद्वा स प्रमाणलक्षणादिसुखबोध एवार्थः प्रयोजनं यस्य तत्तदर्थमित्यर्थः । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यभिधानात् । अनेनास्य निष्प्रयोजनत्वशङ्का व्युदस्ता । इदमुक्तं भवति । न तावत्प्रयोजनाभावः । सुखेन प्रमाणादिबोधस्य प्रयोजनत्वात् । प्रमाणलक्षणादिग्रन्थेन च तदसम्भवात् । तदिदमाह न मन्दैः सुखेन शक्यते बोद्धुमितीति । नापि विषयाभावः । अविक्षिप्तत्वेन स्पष्टत्वेन चोपलक्षितस्य प्रमाणस्वरूपस्य विषयत्वात् । प्रमाणलक्षणादावविक्षेपाद्यभावात् । एतदेवाह "गम्भीरयेति विक्षिप्येति च"। तादृशप्रमाण-जिज्ञासुराधिकारी । सम्बन्धस्तु यथायथं प्रतिपाद्यप्रतिपादकभावादिरिति । तदेवं विषयाद्यनुबन्ध-चतुष्टयवत्त्वादारम्भणीयमिदं प्रकरणमिति स्थितम् ।

**राघ.**— स्वग्रन्थकरणस्य वैय्यर्थ्यमाशङ्क्याह ॥ **यद्यपीति ।** गम्भीरयाऽत्यन्तगूढार्थया । विक्षिप्य लक्षणविभागादेः स्थलभेदमाश्रित्य । तदर्थं मन्दानां सुखबोधार्थम् । इदं प्रकरणमनेकवाक्य सन्दर्भरूपमारभ्यते क्रियत इत्यर्थः ।

**विज.**— भगवत्प्रणीतप्रमाणलक्षणादिना प्रमाणादितत्त्वज्ञानसिद्धेरेतत्प्रकरणस्य तदुत्तर-कालीनस्यारम्भे न किञ्चित्प्रयोजनमस्तीत्याशङ्क्य गम्भीरयान्यवाचा सङ्कलय्यात्र प्रमाणादितत्त्व-

प्रतिपादनमनेन क्रियते इत्यक्लेशेन तज्ज्ञानमारम्भप्रयोजनमिति परिहारमाह ।। **यद्यपीत्यादिनेदं प्रकरणमारभ्यत इत्यन्तेन ।**

**वेदे.**— ननु नैयायिकादिभिरेव प्रमाणलक्षणादेरुक्तत्वादयं ग्रन्थो व्यर्थः । न च तदुक्तम-लक्षणादिकमस्मदुक्तमेव लक्षणादिकमिति प्रतिपादनायैतदारभ्यत इति वाच्यम् । तथाऽपि भगवत्पादैरेव प्रमाणलक्षणादिग्रन्थेषु प्रमाणलक्षणादेरुक्तत्वेनास्य वैय्यर्थ्यानिस्तारादित्याशङ्क्य परिहरति ।। **यद्यपीत्यादिना ।** अत्र भगवत्पादा एव प्रमाणलक्षणाद्यभिधानकर्तार इति वाक्यार्थः । तथा च विशेषसङ्गतैवकारेणान्ययोगव्यवच्छेदकेन यद्यपीति भावः । केवलप्रमाणचातुर्विध्यकथनावसरे ईशलक्ष्मीयोग्ययोगिभेदेनेत्यादिवाग्गम्भीरा । प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रिय भेदेनेत्यादि विक्षिप्य वर्णनम् । निर्दोषार्थेन्द्रिय सन्निकर्षः प्रत्यक्षमित्यत्रैवास्य वक्तव्यत्वात् ।। **इदमारभ्यत इति ।** स्पष्टवाचा सङ्कलय्येदमारभ्यत इत्यर्थः ।

**अभि.**— पूर्वाचार्यैरेव प्रमाणलक्षणादेर्निरूपितत्वाद्व्यर्थमिदं प्रकरणमित्याक्षिप्य समाधत्ते ।। यद्यपीति । अत एवकारेण परोक्तलक्षणानामलक्षणत्वमाचष्टे । भगवत्पादैरेव प्रमाणलक्षणा-देरभिहितत्वाद्यद्यपीदं प्रकरणमनारम्भणीयम् । तथाऽपि न सर्वान्प्रत्यपितु सुज्ञान्प्रत्येव । मन्दानां सुखप्रतिपत्त्यर्थमारम्भणीयमिति भावः ।

**आद.**— भगवत्पादकृतप्रमाणलक्षणादिनैव बालानां बोधसिद्धिसम्भवेनानारम्भणीय एवायं ग्रन्थ इत्याशङ्कां निराकरोति ।। **यद्यपीति ।** गम्भीरया बव्हभिप्राययुक्तया विक्षिप्य क्रमं विहाय परोक्तक्रमं विहाय कस्मादाचार्यैः प्रतिपादितमित्याशङ्कापनोदायोक्तं गम्भीरयेति । अयं भावः । प्रमाणानां विभागानन्तरमेव त्रयाणां लक्षणकथनेन प्रामाण्यस्य स्वतस्त्वादिकं प्रमाणत्वेन परपरिगणिता-नामर्थापत्त्यादीनामत्रैवान्तर्भावश्च सूचितो भवति । तेन विभागानन्तरमेवान्येषामपि प्रमाणानां सत्त्वात्कथं त्रित्वमिति शास्त्रान्तरवासनावतामुत्पन्नायाः शङ्काया निवृत्तिः । न केवलमयं ग्रन्थो बाल-बोधार्थः किन्तु महाधिकारिकोऽपि । येषामेतावन्मात्रेण न निर्वाहस्तेषामर्थं स्फुटमन्तर्भावाद्युक्तिः । सङ्क्षेपविस्तराभ्यां बहुवारमुक्त्या फलाधिक्यसिद्धेः । तदुक्तम् ।

सङ्क्षेपविस्तराभ्यां च कथयन्ति मनीषिणः ।
बहुवारस्मृतेश्चैव फलबाहुल्यकारणादिति ।

एवं ब्रह्मतर्केऽदुष्टमिन्द्रियं त्वक्षमित्यादिवाक्ये यः क्रमो लक्षणकथनादौ सोऽप्यनुसृतो भवति । तेन ब्रह्मतर्कानुसारित्वेन समूलत्वात्प्रामाण्यमस्यैवान्येषां तु निर्मूलत्वेनाप्रामाण्यमेवोचितमित्यादि ज्ञापितं

भवतीत्यादि । ननु कथमनेन लक्षणकथानदिना स्वतस्त्वादिकमन्तर्भावश्च सूचितो भवतीति चेदित्थम्। त्रीणि मानानि तेषां लक्षणानि निर्दोषत्वघटितानीति ज्ञातेऽप्रामाण्यस्यार्थाद्दोषमूलत्वं ज्ञास्यते । अन्वयव्यतिरेकयोः स्फुटतरप्रतीतेः । एवं प्रामाण्यस्य गुणाजन्यत्वमपि ज्ञास्यते । दोषाभावेनैव प्रामाण्योपपत्तौ गुणस्यान्यथासिद्धत्वज्ञानाद्दोषाभावमात्रघटितलक्षणकथनेन गुणा-प्रयोज्यत्वलाभात् । एवं व्याप्तिबलेनार्थावगमकत्वरूपलक्षणज्ञाने सत्यर्थापत्त्यादीनां व्याप्त्यैवार्था-वगमकत्वेनान्तर्भावज्ञानसिद्धेः । एवं परैः साक्षिसिद्धस्य प्रातिभासिकत्वेन मिथ्यात्वमेवेत्युक्तम् । तस्याप्यनादित्वान्निर्दोषत्वेन प्रामाण्यमेव तत्सिद्धस्य सत्यत्वमेव भवतीति तदयुक्तमिति ज्ञापितं भवति। एवं प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रियभेदेनेति विभागकरणेन साक्षिणः सर्वज्ञानापेक्षया विलक्षणस्वभाववत्त्वं सूचितम् । वैलक्षण्यं च कदाचिदपि संशयाद्यनात्मकत्वं सुदृढत्वं स्वविषयाणां सर्वेषां सन्निकृष्टानां ग्राहकत्वं स्वप्रकाशत्वं चेत्यादि । तेन प्रामाण्यस्य ज्ञप्तावपि स्वतस्त्वं सूचितं भवति । प्रामाण्यस्य ज्ञानधर्मत्वेन सन्निकृष्टत्वेन च ज्ञानत्वादीनामिव तद्ग्राहकत्वस्यापि ज्ञापि-तत्वात्। न चैवमप्रामाण्यस्यापि स्वतस्त्वापत्तिः । तस्याप्यप्रमाधर्मत्वेनाप्रमावृत्तिज्ञानत्वादीनामिवि तत्रापि संशयानुदयप्रसङ्ग इति वाच्यम् । दोषजन्यत्वनिश्चयरूपसहकारिसामर्थ्येनाप्रामाण्यग्रहण-शक्तेस्तत्काले आविर्भावेऽपि तस्याः स्वाभाविकत्वाभावात् । अधिकं तु तत्प्रस्तावे वक्ष्यामः । एतेनैतदपि निरस्तं भवति । साक्षिणो ज्ञानग्राहकत्वस्वप्रकाशत्वप्रामाण्यग्राहकत्वादिस्वभावत्वा-नङ्गीकारेऽनवस्था वक्तव्या। सा च तदङ्गीकारेऽपि प्रसरति। तथा हि। ज्ञाने प्रामाण्यनिश्चयाभावे ज्ञानत्वादिसाधारणधर्मज्ञानसत्त्वेन विशेषनिर्णायकाभावेन च प्रवृत्त्यर्थं विशेषजिज्ञासाया अपि सत्त्वेन सामग्रीसम्पत्त्या प्रामण्यसन्देहापत्तिः । ज्ञाने प्रामाण्यसंशये विषयेऽपि संशयापत्तिः । तथा च निश्चयाधीनप्रवृत्तिः कुत्रापि न स्यात् । ज्ञानज्ञानाभावे च विषये कथमपि प्रवृत्त्यभावप्रसङ्गः । प्रमाणस्वरूपसत्तामात्रेण प्रवृत्त्याद्यङ्गीकारे प्रमाणोक्तेर्वैय्यर्थ्यापत्तिः । तदर्थं जडज्ञानाङ्गीकारे तस्य स्वग्राहकत्वानुपपत्ति; । स्वोत्पत्तिक्षणे स्वस्यासन्निकृष्टत्वेन तदकारत्वाभावेन द्वितीयक्षणे स्वाकारत्वासम्भवात्। न च जडस्य ज्ञानस्य प्रथमक्षणे स्वानवगाहित्वं द्वितीयक्षणे स्वावगाहित्व-मित्यस्य कुत्राप्यदृष्टत्वात् । न च सन्निकर्षस्य तदवगाहित्वेन प्रयोजकता किन्तु तज्ज्ञानोत्पाद-सामग्र्येव तज्ज्ञानावगाहित्वे प्रयोजिकेति वाच्यम्। चैत्रस्य घटादिज्ञानोत्पादकसामग्र्या मैत्रज्ञानस्यापि तदाकारत्वापत्तेः । न च यादृशज्ञानोत्पत्तिसामग्री या सा तज्ज्ञाननिष्ठतज्ज्ञानावगाहितायामेव प्रयोजिका । नान्यज्ञाननिष्टविषयितायामिति वाच्यम् । तथाऽपि तज्ज्ञाननिष्ठविषयिताविशेषादी-नामसिध्यापत्तेः । तदपि तेनैव ज्ञानेन सिध्यतीति वाच्यम्। करणासन्निकृष्टत्वेन भानानुपपत्तेः ।

सन्निकर्षस्याप्रयोजकत्वे घटादिसन्निकर्षस्याप्रयोजकत्वापत्तेः । घटतद्धर्मसन्निकर्षस्याप्रयोजकत्वाङ्गीकारे घटवृत्त्यसन्निकृष्टधर्माणामपि भानापत्तिः । ज्ञानवृत्तिधर्माणामेव भाने सन्निकर्षो न प्रयोजक इति चेत् तर्हि तज्ज्ञानवृत्तिगुणत्वप्रमेयत्वादीनामपि भानापत्तिः । सन्निकर्षाप्रयोज्यत्वे प्रत्यक्षनिरूपितत्वानुपपत्तिः । उक्तनियमे मानाभावश्च । प्रामाण्ये कदाऽपि संशयानुपपत्तिश्च । प्रामाण्यभाने ज्ञानोत्पत्तिप्रयोजकसामग्रीमात्रस्य प्रयोजकत्वात् । अन्यथा ज्ञाननिष्ठविषयिताविशेषादावपि कदाचित्संशयः स्यात् । किञ्च बव्हर्थविषयकसमूहालम्बनात्मकमेकमेव जातं कालान्तरे तज्ज्ञानस्मृतिर्ममैतज्ज्ञानजातमासीदिति । तत्र विषयविशेषे उपेक्षात्मकत्वेन संस्कारस्यानुत्पादेन तत्स्मृतौ भासमानज्ञानांशे तद्विषयस्य विषयितासम्बन्धेन मानाभावस्यानुभवसिद्धस्यापलापापत्तेः । सन्निकर्षस्य प्रयोजकत्वाङ्गीकारे तु स्मृतेरपि मानसप्रत्यक्षत्वेन तदुत्पत्तौ संस्कारस्यैव सन्निकर्षत्वेनोक्तस्थले तद्विषयावगाहिसंस्काररूपसन्निकर्षाभावेन तद्विषयस्य तन्निष्ठविषयितायाश्च भानाभावः सम्भवति । तस्माज्ज्ञानस्य चक्षुरादिकरणासन्निकृष्टत्वेन तस्य तन्निष्टविषयितायाश्च चाक्षुषादिप्रत्यक्षादौ भानाङ्गीकारोऽयुक्त एव । एवं कर्तुरपि भानाङ्गीकारस्त्वयुक्तः । अतो ज्ञानप्रत्यक्षं चेतनरूपमङ्गीकार्यम् । तथा च चेतनस्य नित्यत्वेन ज्ञानोत्पत्तेः पूर्वमेव सत्त्वेन ज्ञानोत्पत्तिक्षण एव तस्य तद्गतविषयित्वादिधर्माणां च सन्निकर्षसम्भवेन तद्भासकत्वं सम्भवति । न च कारणस्य स्वद्वितीयक्षण एव कार्योत्पादकत्वेन ज्ञानोत्पत्तिक्षणे सन्निकर्षसत्त्वेऽपि तत्क्षणे भानानुपपत्तिरिति वाच्यम् । आलोकसन्निकर्षवत्प्रथमक्षण एव भासकत्वात् यथानुभवं कल्पनीयत्वात् । गुणत्वादीनां च सामान्यतो वा ज्ञानादिविषयितावच्छेदेन साक्षिविषयत्वेऽपि स्वातन्त्र्येणाविषयत्वान्न ज्ञानाद्यंशे भानम् । तस्यास्वप्रकाशत्वे तद्विषयज्ञानान्तराङ्गीकारेऽनवस्थासन्निकर्षानुपपत्तिः । अनङ्गीकारेऽसत्त्वापत्तिः । स्वप्रकाशत्वपक्षे तु विशेषबलेन स्वस्मिन्स्वसन्निकर्षस्य सदा सत्त्वान्नानुपपत्तिः । आत्मनो मानसप्रत्यक्षाङ्गीकारे न केवलमनवस्थामात्रं किन्तु सुषुप्तावात्मनो ज्ञानाभावप्रसङ्गेन तत्सम्बन्धितया सुखादेर्भानानुपपत्तिः । तथा च सुखं सुप्तोऽस्मीति स्मृत्यनुपपत्तिश्च । एवं प्रामाण्यग्रहणस्वभावत्वानङ्गीकारेऽप्यनवस्थेति वक्तव्यम् । एवमङ्गीकारेऽप्यनवस्था दुर्वारैव । तथा हि । साक्षिण इदं ज्ञानं प्रमाणं प्रमाणमिति ज्ञानं प्रमाणमिति व्याकारतावत्तत्तदाकारज्ञानेषु पुनः प्रामाण्यावगाहित्वं स्यात् । यादृशाकारविशिष्टे प्रामाण्यं नावगाहते तत्र प्रामाण्यसन्देहात्तत्तद्विषयी- भूतेषु ज्ञानेष्वपि प्रामाण्यसन्देहक्रमेण प्रथमज्ञानेऽपि प्रामाण्यसन्देहापत्तेः । ननु ज्ञानस्यैकत्वेनोत्पत्तिज्ञप्त्यप्रतिबन्धकत्वेन नानवस्थादोष इति चेत् । सत्यम् । विचारवेलायां तत्तदाकारताभिव्यक्तेरपेक्षितत्वेन तद्व्यक्तिपरम्परयाऽनवस्थाया दोषत्वात् । अन्यथासाक्षिणो ज्ञानप्रामाण्यमात्रग्रहणेन प्रवृत्त्याद्युपपत्तौ स्वप्रामाण्यग्रहणाङ्गीकारस्य

वैफल्यापत्तेः । एवमनन्ताकारताया अनुभवविरुद्धत्वाच्चेति । अत्र ब्रूमः । साक्षी नाम जीवस्वरूपभूतं मनस्तच्चोक्तरीत्या स्वप्रकाशत्वेन स्वनिष्ठविषयितादिप्रकाशत्वेनैव सिद्धम् । अन्यथा ज्ञानप्रत्यक्षासम्भवस्योक्तत्वात् । न च नित्यानुमेयमेव ज्ञानमिति भाट्टाभिमतो युक्तः । ज्ञाततरूपलिङ्गस्य प्रत्यक्षत्वाङ्गीकारेऽपि तादृशप्रत्यक्षस्य ज्ञानाभावेन तस्य हेतुत्वानुपपत्तेः । प्रमाणाभावाज्ज्ञातता नास्तीति वादिनस्तत्र प्रत्यक्षस्यातीन्द्रियत्वेन प्रमाणान्तरस्याभावेन चासिद्धेः प्रसङ्गात् ज्ञानानुमितेरप्यतीन्द्रियत्वेन तादृशलिङ्गाद्यभावेन तज्ज्ञानाभावप्रसङ्गेन तस्यैवासत्त्वापत्त्या तद्विषयीभूतप्रथमज्ञानस्यैवासत्त्वप्रसङ्गात् । वस्तुतस्तत्र प्रमाणसत्त्वमात्रस्य प्रवर्तकत्वाद्यङ्गीकारे लोकानां प्रमाणजिज्ञासाया अभावप्रसङ्गात् । एवं परमतनिरासादेरकर्तव्यत्वापातात् । वस्तुतस्तन्निरासकप्रमाणानां सत्तामात्रेण निराससिध्या तदुक्तेर्विफलत्वापातात् । अनित्यस्य कस्यापि ज्ञानस्य स्वप्रकाशत्वस्य दूषितत्वात् । जीवस्वरूपेन्द्रियेषु तादृशज्ञानसत्त्वे च तत्र तत्राचार्यैरागमस्योदाहृतत्वेन तत्रागमानामपि सत्त्वात् । प्रत्यक्षस्यापि सत्त्वाच्च । तथा हि । सुखाद्युत्पत्तौ सुखमनुभवामीति । तथा चानुभवत्वस्य तदितरोन्द्रियजन्यज्ञानाद्यवृत्तित्वेन निश्चयमात्रवृत्तित्वेन सुदृढप्रमाणमात्रवृत्तित्वेन ज्ञातत्वेन तादृशधर्मस्याप्रामाण्यासमानाधिकरणत्वेन प्रत्युत तव्द्यावर्तकत्वेन तादृशानुभवत्वरूपसाक्षित्वस्य ज्ञानप्रामाण्यनिश्चयरूपे स्वप्रामाण्यनिश्चयरूपे च स्वस्मिन् गृहीतत्वेनाप्रामाण्यशङ्काया एवानुत्पत्त्या तत्र प्रामाण्यप्रकारकत्वाभिव्यक्तेरनपेक्षितत्वेनानवस्थाभावात् । न च स्वप्रामाण्यग्रहणाङ्गीकारो व्यर्थः । स्वाभाव्यादिति चेत् । तर्हि स्ववृत्तिधर्मग्रहणस्वाभाव्यादनन्ताकारताया अप्यनुभवापत्तिरिति वाच्यम् । अनुभवसामान्यं प्रमेत्याकारत्वस्यैव स्वप्रामाण्यग्राहकत्वरूपत्वात् । एतादृशाकारत्वाभावेऽनुभवत्वमात्रभानेऽप्यप्रामाण्यशङ्कानुत्पादे बीजाभावात् । अनुभवसामान्यं प्रमेति ज्ञानसहितस्यैवानुभवत्वज्ञानस्याप्रामाण्यधीप्रतिबन्धकत्वेन तच्छङ्कानुत्पादप्रयोजकत्वात् । व्यक्त्यभावेनानन्ताकारताया अनुभवाभावेऽप्यविरोधात्साक्षिणो व्यक्तस्वगतधर्मग्रहणस्वभावत्वङ्गीकारात् । अत एव सुखाद्याकारतायाः साक्षिधर्मत्वेन तदभिन्नत्वेन सदा सत्त्वेऽप व्यक्त्यभावेन सदाऽनुभवाभावः । एवमत्रापि सति प्रयोजने तत्तदाकारताया अभिव्यक्तिस्तथा व्यवहरति चेति । एवमुत्तरत्रापि तत्र तत्रोक्तेराशयः स्वयमूह्यः । एवमाद्यनन्तभावयुतैराचार्यैर्विक्षिप्य वर्णनादिकं कृतमित्याशयेन गम्भीरयेति वाचो विशेषणं दत्तम् ।

**श्रीनि.—** आचार्यैरेव प्रमाणलक्षणादेरुक्तत्वान्नेदं प्रकरणमारम्भणीयमिति शङ्कानिरासाय बालानामिति यदुक्तं तदेव शङ्काप्रदर्शनपूर्वकं विवृणोति ॥ **यद्यपीत्यादिना ॥ गम्भीरयेति ।** अस्पष्टार्थतयेत्यर्थः ॥ **विक्षिप्येति ।** व्यवधानं कृत्वेत्यर्थः । वर्णितमित्यनन्तरं प्रमाणलक्षणमित्यनु-

वर्तते ।। **तदर्थमिति** । मन्दानामनायासेन प्रमाणलक्षणादिबोधार्थमित्यर्थः । ननु भगवत्पादैरेवेति विशेष्यसङ्गतैवकारेणान्ययोगव्यवच्छेदकेन भगवत्पादान्यस्मिन्प्रमाणलक्षणादिकथनयोगव्यवच्छेद-लाभात्पुनस्तत्करणादिदं प्रकरणमारभ्यत इति प्रतिज्ञा व्याहन्येतेत्यत उक्तं तदर्थमिति । स भगत्पाद-प्रणीतप्रमाणलक्षणादिरेवार्थः प्रतिपाद्यं यस्य तत् । तदर्थे स्वातन्त्र्येण प्रमाणलक्षणादिकथन-मेवान्यत्रैवकारेण व्यावर्तितम् । न तु तदनुसारेण कथनमपीति भावः । तथा च बहुज्ञान्प्रत्यस्य प्रकरणस्यानारम्भणीयत्वेऽप्यल्पज्ञान्प्रत्यारम्भणीयत्वमेवेति भावः ।

**वि.**— ननु तथाऽपि नेदं प्रकरणमारम्भणीयम् । भगवत्पादकृतप्रमाणलक्षणादिप्रकरणेनैव बालानामपि प्रमाणलक्षणादिस्वरूपावधारणसम्भवादित्यभिप्रेत्य शङ्कते ।। **यद्यपीति** । एवेत्यनेन प्रारिप्सितस्यास्य प्रकरणस्य वैय्यर्थं ज्ञापयति । प्रमाणविभागप्राबल्यदौर्बल्यपरोदीरितप्रमाणलक्षणा-लक्षणत्वादिप्रमेयजातमादिशब्दार्थः । परहिरति ।। **तथाऽपीति** । गम्भीरया गूढाभिप्रायेणाविस्पष्टार्थया विक्षिप्य व्यवधानं कृत्वैकत्रोद्देशमन्यत्र लक्षणप्रतिपादनमेकत्र परीक्षां कृत्वेति यावत् वर्णितम् । प्रमाणलक्षणादिकमित्यनुवर्तते । परैरल्पज्ञैः सुखेनानायासेन ज्ञातुं न शक्यत इति हेतोस्तदर्थं बालानां सुखेन बोधाय । यद्वा भगवत्पादकृतप्रमाणलक्षणादिप्रकरणस्यार्थो यस्मिंस्तदर्थं भगवत्पादकृत-प्रमाणलक्षणाद्यर्थप्रतिपादकमिदं प्रकरणमारभ्यत इत्यर्थः । श्रुतिमूलकस्मृतेरिव प्रमाणलक्षणादि-मूलकस्यास्य प्रकरणस्यारम्भणीयत्वं युक्तमिति भावः ।

## लक्षणस्वरूपविवरणम्

**(३) प्र.प.— यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मो लक्षणमित्युच्यते ।**

(३) जना.— ननु भगवत्पादैरेव प्रमाणलक्षणादिकमभिहितमित्युक्तम् । तत्र किं लक्षण-लक्षणमित्याकाङ्क्षायां लक्षणलक्षणमाह ।। **यो धर्म इति** । व्याप्त्या सार्वत्रिकसम्बन्धेन । लक्षणपदस्य यो धर्म इत्यादिपदजातेन समानार्थकतया पौनरुक्त्यमित्याशङ्कायामाह ।। **इत्युच्यत इति** । तथा च यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मो लक्षणशब्दावाच्य इत्यर्थः । अतो न पौनरुक्त्य-मिति भावः । व्याप्त्येतल्लक्ष्ये इत्यनेनान्यत्रेत्यनेन च सम्बध्यते । यो धर्मो लक्ष्ये व्याप्त्या वर्ततेऽन्यत्र च व्याप्त्या न वर्तते स धर्मो लक्षणमित्युच्यत इति । तथा च यावल्लक्ष्यवृत्तित्वे सति यावदलक्ष्यावृत्तित्वं लक्षणस्य लक्षणमिति निष्कृष्टोऽर्थः । व्याप्त्येत्यस्यान्यत्रेत्यनेनाप्यन्वयानङ्गीकारे यो धर्मो लक्ष्ये वर्तत इत्यंशस्य शबलत्वादौ यत्किञ्चिल्लक्ष्यवृत्तित्वमादाय पर्यवसानवदन्यत्र न वर्तत इत्यंशस्यापि

यत्किञ्चिदलक्ष्यावृत्तित्वमादाय पर्यवसानापत्त्या यत्किञ्चिदलक्ष्यशशाद्यवृत्तिविषाणित्वादेर्गोलक्षणत्वस्य वज्रलेपायितत्वापत्तेः । ननु सामान्यनिषेधस्य सामान्याभावप्रत्यायकत्वस्वाभाव्यादन्यत्र न वर्तत इत्यंशस्यान्यत्र कुत्रापि न वर्तत इत्येवार्थ इति चेन्न । एवं सति यल्लक्ष्ये सर्वथा न वर्तत इत्य-सम्भविलक्षणेऽपि यल्लक्ष्ये न वर्तत इति सामान्यनिषेधेन सर्वलक्ष्यवृत्तित्वाभावसम्भवेन सर्वथेति पदवैप्यर्थ्यापत्तेः । यदि च तत्र सर्वथेति पदसमभिव्याहारेण लक्ष्ये न वर्तत इत्यस्य यत्किञ्चि-ल्लक्ष्यवृत्तित्त्वाभावमादाय पर्यवसानापत्त्याऽव्यापकेऽतिव्याप्तिवारणाय सर्वथेति पदं सार्थकं तदा प्रकृतेऽपि व्याप्त्येति पदसन्निधानादन्यत्र न वर्तत इत्यंशस्यापि यत्किञ्चिदलक्ष्यावृत्तित्वामादाय पर्यवसानापत्त्या यत्किञ्चिदलक्ष्यशशाद्यवृत्तिविषाणित्वादेर्गोलक्षणत्ववारणाय व्याप्त्येति पदमन्यत्रे-त्यत्राप्यन्वेतव्यमिति सङ्क्षेपः । ननु यत्रैकमेव लक्ष्यं तत्राव्याप्तिः । अनेकत्वघटितव्याप्तिपदार्थस्य तत्राप्रसिद्धेरिति चेन्न । तस्य सम्भाविताशेषपरत्वात् । अत एव लक्ष्य इत्येकवचनम् । नन्वेवमपि भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपीत्यनुव्याख्यानोदाहृतप्रमाणानुसारेणैकस्य धर्मस्य सर्व-लक्ष्यवृत्तित्वाभावात्कथं लक्षणत्वमिति चेदत्रोक्तं सुधायामेकस्य धर्मस्य सर्वलक्ष्यवृत्तित्वाभावेऽपि तत्सदृशधर्मस्य लक्ष्येषु सर्वत्र सत्त्वाल्लक्षणस्यानुगतिरिति । ततश्चैवं यो धर्म इति वाक्यार्थः । यो यत्सदृशो धर्मो यत्र लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र व्याप्त्या स धर्मस्तस्य लक्षणमिति । एवं चैकस्य सास्नादिमत्त्वस्य सर्वगोवृत्तित्वाभावेऽप्येकसास्नादिमत्त्वसदृशानां तत्तत्सास्नादिमत्त्वानां सर्वत्र गोषु सत्त्वान्नाननुगमः । नन्वेवं विषाणित्वादेरपि पशुधर्मत्वदिरूपेण सास्नादिमत्त्वसदृश-त्वात्तत्र चान्यत्र न वर्तत इति विशेषणाभावाद्गोलक्षणे सास्नादिमत्त्वेऽव्याप्तिरिति चेन्न । स्वा-वच्छेदकरूपेण यत्सदृशो धर्म इति विवक्षितत्वात् । स्वावच्छेदकं लक्षणतावच्छेदकमित्यर्थः । येन रूपेण लक्षणत्वमुच्यते तद्रूपमिति यावत् । स्वत्वाकारेणैव लक्षणस्य प्रवेशान्नात्माश्रयः । विषाणि-त्वादेश्च पशुधर्मत्वादिरूपेण सास्नादिमत्त्वसादृश्येऽपि लक्षणतावच्छेदकसास्नदिमत्त्वरूपेण सदृशत्वभावान्न गोलक्षणे सास्नादिमत्त्वेऽव्याप्तिः । न च सादृश्यस्याप्यननुगतत्वात्तेन लक्षणस्य कथनमननुगम इति वाच्यम् । तस्यानेकवृत्तित्वाभावेऽप्यनेकसम्बन्धित्वेन लक्षणानुगमसम्भवात् । तथा हि । एकगोनिष्ठसास्नादिमत्त्वस्य सर्वाण्यपि सास्नादिमत्त्वानि सदृशानि । एवं च सादृश्यमन्य-सास्नादिमत्त्वेष्वनुयोगित्वसम्बन्धेनैकसास्नादिमत्त्वे प्रतियोगित्वसम्बन्धेन सम्बन्धमित्यनुगतमेवेति । गन्धवत्त्वं पृथिव्यालक्षणमिति वदद्भिर्नैयायिकादिभिरप्यनुगतगन्धत्वादिजातिसद्भावे मानाभावेन सादृश्येनैवानुगमोऽभ्युपेय इति मानाभावश्च सुधादौस्पष्टं प्रतिपादित इति नेहास्माभिर्विस्तर-भयात्तन्यते । प्रकारान्तरमप्याकलयामः । तथा हि । यो यच्छब्दवाच्यो धर्मो यत्र लक्ष्ये सर्वत्र वर्तते न

वर्तते चान्यत्र स धर्मस्तस्य लक्षणम् । सास्नादिमत्त्वस्य सास्नादिमत्त्वशब्दवाच्यत्वं नाम सास्नादिमत्त्वबोधानुकूलस्तेन साकं स्वाभाविकः सम्बन्धः । तादृशसम्बन्धानुयोगित्वं सादृश्यवदनुगतम् । इयानेव विशेषः । सादृश्यमेकस्मिन्सास्नादिमत्त्वे प्रतियोगित्वसम्बन्धेनान्यत्र चानुयोगित्वेनानुगतम् । सास्नामत्त्वशब्दवाच्यत्वं तु सर्वसास्नादिमत्त्वेष्वनुयोगित्वेनैव रूपेण सम्बद्धमिति । एवं चैकगोवृत्तिसास्नादिमत्त्वस्य सर्वगोवृत्तित्वाभावेऽपि सास्नादिमत्त्वशब्दवाच्यस्य यस्य कस्यचित्सास्नादिमत्त्वस्य तत्तद्गोव्यक्तिषु सर्वत्र सत्त्वान्नाननुगमः । नन्वेवं लक्षणज्ञानदशायामेव लक्षणज्ञानफलस्य वाच्यताज्ञानस्य वृत्तत्वात्किं लक्षणज्ञानेनेति चेन्न । निरुक्तलक्षणज्ञानदशायां सास्नादिमत्त्वशब्दवाच्यत्वज्ञानसत्त्वेऽपि लक्षणज्ञानफलीभूतगवादिशब्दवाच्यताज्ञानस्यानुदयेन वैय्यर्थ्यशङ्कानुदयात् । नन्वेवमपि यावद्विशेषातिरिक्तसामान्याभावेन तत्तत्सास्नादिमत्त्वातिरिक्तसास्नादिमत्त्वसामान्याभावात्कथं लक्षणानुगम इति चेत् । किं लक्षणीभूतधर्मस्यानुगमं पृच्छसि तल्लक्षणवाक्यस्य वा । नाद्यः । दत्तोत्तरत्वेन प्रश्नानवकाशात् । सादृश्यानुयोगित्वप्रतियोगित्वाभ्यामनुगमस्योक्तत्वात् । द्वितीये तु प्रतिब्रूमः । लक्षणवाक्यानुगमोऽपि न सकललक्ष्यवृत्त्येकधर्मप्रतिपादकत्वम् । गन्धवती पृथिवीत्यादावभावात् । किन्तु लिलक्षयिषितसर्वव्यक्तिमात्र सङ्ग्राहकत्वम् । अस्ति चेदं सास्नादिमान्गौरिति वाक्ये । न त्वेकशफो गौरित्यत्र । न वा शबलो गौरित्यत्र नापि विषाणवान्गौरित्यत्र । एकस्य धर्मस्य सकललक्ष्यवृत्तित्वमेवानुगम इत्यङ्गीकारेऽनुगतजातिवादिमते भावाभावयोर्लक्षणमुच्छिद्येत । न हि भावमात्रेऽभावमात्रे वा कश्चिदनुगतधर्मोऽस्ति । अन्यथा तस्य जातित्वापत्त्या सत्ताया एव परजातित्वमिति सिद्धान्तभङ्गप्रसङ्गात् । ननु भावाभावमात्रानुगतधर्मयोः सत्त्वेऽपि तयोस्तत्र समवायाभावान्न जातित्वमिति चेन्न । इह घटे घटत्वमिति प्रतीतिवदिहाभावेऽभावत्वमित्यादिप्रतीतेः समवायसाधिकायाः (साम्यात्) सत्त्वात् । ननु समवेतमिति प्रत्यय एव समवाये मानम् । अस्ति च घटे घटत्वं समवेतमिति प्रत्ययो नाभाव इति चेदेवं तर्हि धर्मक्षेत्रे समवेता कुरुक्षेत्रे समवेता युयुत्सवः । मामकाः पाण्डवाश्चैवेति वचनाभिलाप्यसमवेतप्रत्ययेन कुरुपाण्डवयोरपि समवायापत्तिरिति यत्किञ्चिदेतत् । अत्र यो धर्मः स एव लक्षणमित्युक्तेऽसम्भविन्येकशफत्वादावतिव्याप्तिः । तद्वारणाय लक्ष्ये वर्तत इति । तावत्येवोक्तेऽव्यापके शबलत्वादावतिव्याप्तिः । तद्वारणाय व्याप्येति । तावत्येवोक्तेऽतिव्यापके विषाणित्वादावतिव्याप्तिः । तद्वारणाय न वर्तते चान्यत्रेति । एवमपि यत्किञ्चिदन्यत्र शशादावविद्यमाने विषाणित्वादावति व्याप्तिः) तद्वारणाय व्याप्येतिपदम् अन्यत्र च व्याप्त्या न वर्तत इत्यनुकर्षणीयम् ।

**राघ.**— नाम्ना निर्देशमात्रस्योद्देशशब्दार्थत्वात्तस्य चाद्यपद्य एव प्रमाणेत्युक्त्या कृतत्वं मत्वाऽग्रे लक्षणं विवक्षुरादौ लक्षणस्वरूपमाह ॥ **यो धर्म इति ।** लक्ष्ये लक्ष्यतावच्छेदकावच्छिन्ने । व्याप्या

कात्स्न्र्येन । यो धर्मो यत्सदृशो धर्म इत्यर्थः । अन्यत्र लक्ष्यतावच्छेदकानाक्रान्ते । स धर्मो लक्ष्यतावच्छेदकावच्छिन्नेषु सर्वत्रान्योन्यसदृशतया वर्तमाना धर्मास्तेषां लक्ष्याणां लक्षणानीत्यर्थः । लक्ष्ये लक्षणे च सर्वानुगमकसादृश्यसत्वात्तदभिप्रायेणैकवचनम् । विवृतमेतत्तर्कताण्डवे द्वितीयपरिच्छेदे सादृश्योत्पत्तिवादे । पौनरुक्त्यनिरासायोक्तमित्युच्यत इति ।

**विज.––** ॥ **यो धर्म इति ।** लक्ष्येतरावृत्तित्वे सति सकललक्ष्यवृत्तिधर्मो लक्षणम् । लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगीतरवृत्तिवृत्तिसादृश्यानिरूपकत्वेसति लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगियावद्वृत्तिवृत्तिसादृश्यप्रतियोगी धर्मो लक्षणमित्यर्थः । एतेनानुगतधर्मानभ्युपगमे सकललक्ष्यवृत्तेर्धर्मस्यैकस्याभावादसम्भवसम्भवोऽलक्ष्ये लक्ष्ये च वर्तमानस्यानभ्युपगमादतिव्याप्त्यसम्भवात्तद्वारकविशेषणवैयर्थ्यम् । किञ्च गोत्वस्येव गोत्वसमनियतस्य द्रव्यत्वादेरपि गोलक्षणं प्रसज्येत । अपि च द्रव्यत्वस्येव गोत्वस्यापि लक्षणत्वं किं न स्यादित्यादिदूषणं निरस्तम् । यद्यप्यत्रतावत्प्राधान्यात्प्रमाणलक्षणमेव वक्तुमुचितम् । तथाऽपि लक्षणसामान्याज्ञाने प्रमाणलक्षणमिदमिति लक्षणविशेषस्य ज्ञातुमशक्यत्वाद्विशेषलक्षणज्ञानोपयोगितया लक्षणसामान्यलक्षणोक्तिरादाविति बोध्यम् ।

**वेदे.––** प्रमाणादेः स्वोक्तमेव लक्षणं परोक्तं त्वलक्षणमिति ज्ञानस्य लक्षणालक्षणज्ञानाधीनत्वात्तल्लक्षणालक्षणयोर्लक्षणे क्रमेण दर्शयति ॥ **यो धर्म इत्यादिना ।** अत्र यो धर्म इत्यादिना तत्तल्लक्ष्यगतः प्रातिस्विकधर्म एव सामान्याकारेणोच्यते । तस्य लक्ष्ये व्याप्तिस्तत्र तत्र लक्ष्ये च वर्तमानत्वमेव विवक्षितं न त्वेकस्य सर्वलक्ष्यगतत्वमतोऽनुगतधर्मलक्षणाभावात्कथमेतदिति शङ्काऽनवकाशः । यथा गन्धः पृथिव्या लक्षणमित्युक्ते नैकस्य गन्धस्य सर्वपृथिवीगतत्वं प्रतीयते किन्तु तत्तत्पृथिवीगत एव गन्धः सामान्याकारेण तथाऽत्रापीति ध्येयम् । न च तत्र गन्धत्वेन गन्धानामनुगमात्सामान्योक्तिः सम्भवतीति वाच्यम् । गन्धत्वानुगमेन गन्धानामनुगमासम्भवात् । न हि पितुः पाण्डित्येन पुत्रः पण्डितो भवति । अस्माभिरपि लक्षणीभूतधर्मानुगतैकसादृश्यस्य लक्ष्यमाणत्वाच्च । अत्र लक्ष्ये वर्तत इत्यनेनासम्भवस्याव्याप्त्येत्यनेनाव्याप्तेरन्यत्र वर्तत इत्यनेनातिव्याप्तेर्निरासः ।

**अभि.––** ॥ **यो धर्म इति ।** यो धर्मः स्ववृत्तिस्वसदृशवृत्तिभ्यां लक्ष्यव्यापीत्युपचर्यते स्वसदृशवृत्त्याऽन्यत्र वर्तत इति नोच्यते तल्लक्षणमित्यर्थः । यद्यपीदं लक्षणं लक्षणे क्रियावत्त्वे पृथिवीलक्षणे चित्ररूपे चाव्याप्तम् । तस्य यावल्लक्ष्यवृत्तित्वाभावात् । तथाऽपीदानीं लक्षणमात्रस्य लिलक्षयिषि-

तत्वाभावान्न तत्राव्याप्तिर्दोषायेति बोध्यम् । तदुक्तं सुधायाम् । अव्यापकत्वस्य लक्षणदोषतावादस्तु लिलक्षयिषितत्वे द्रष्टव्य इति । अयमत्र विवेकः । लक्षणं द्विविधम् । अलक्ष्याव्यापकं तद्देशवृत्ति चेति । अतिव्याप्त्यसम्भवाविनाव्याप्तिः सर्वथा दोषः किन्त्वसिद्ध्याद्यदेरिव पुरुषद्वारा । तद्यथा वह्निसाधनाय धूमरहितप्रदेशे धूमादिहेतुं प्रयुञ्जानः पुरुष एव दूष्यति । न तु लिङ्गम् । पुरुषसम्बन्धात्तु लिङ्गं दुष्टमित्युपचर्यते । तथा क्रियावत्त्वाद्यव्याप्तं लक्षणं सर्वलक्ष्यवृत्तितया प्रतिपादयन्पुरुषो दूष्यति । तत्सम्बन्धाल्लक्षणं दुष्टमित्युपचर्यते । तस्यैव लक्षणस्यैकदेशवृत्तित्वाभिप्रायेण प्रयोगे पुरुषोऽपि न दूष्यति । लक्षणलक्षणं न यावल्लक्ष्यवृत्तित्वाभिप्रायेण प्रयुक्तमपि तु लक्ष्यविशेषयावत्स्वलक्ष्यगत-लक्षणवृत्तित्वाभिप्रायेणेति । एकैकस्य सास्नादिमत्त्वस्य लक्ष्यव्याप्तित्वाभावादसम्भवः । तथाऽलक्षण-स्यापि शृङ्गित्वस्य गोगतस्यालक्ष्यवृत्तित्वान्न वर्तते चान्यत्रेत्यस्य न तद्यावर्तकमित्याशङ्कापरिहाराय स्ववृत्तिस्वसदृशवृत्तिभ्यां यावल्लक्ष्यवृत्तीत्युपचारविषयत्वमेव यावल्लक्ष्यवृत्तित्वं विवक्षितम् । तथाऽ-न्यगामित्वोपचारविषयाभावत्वमेवान्यत्रावर्तमानत्वं विवक्षितम् । इति स्वाभिप्रायाविष्करणाय इत्युच्यत इत्युक्तम् । अथवाऽव्याप्तस्यास्य लक्षणलक्षणत्वं साधयितुमाह ॥ इत्युच्यत इति । इदमुक्तं भवति । कुतस्त्वयेदं लक्षणं नेत्युच्यते । यावल्लक्ष्यभाविनैव लक्षणेन भवितव्यमिति स्वसमयानुरोधात् । उत लक्षणप्रयोजनस्यानेनाजननात् । नाद्यः । स्वसमयस्याप्रामाणिकत्वात् । न द्वितीयः अस्मदुक्तलक्षणं दृष्ट्वा सास्नादिमत्त्वादिधर्मेषु लक्षणमिति व्यवहारस्य बहुलमुपलम्भादिति ।

**आद.— ॥ यो धर्म इति ॥ व्याप्त्या वर्तत इति ।** सर्वलक्ष्येषु वर्तत इत्यर्थः । नन्वव्याप्तेर्दोषता नास्तीति सुधादावुक्तत्वेन कथमत्र दोषत्वमङ्गीकृत्याव्याप्तधर्मवारणायेदं विशेषणं दत्तम् । न च सर्वस्यापि लिलक्षयिषितत्वेऽव्याप्तेर्दोषताऽस्तीति तत्रैवोक्तमिति चेत् । सत्यम् । तदेवायुक्तम् । अति-प्रसक्तधर्मस्य कुत्रापि लक्ष्यतावच्छेदकत्वादृष्टेः । तथा सति पृथिवीलक्षणे प्रमेयत्वादेरपि लक्ष्यता-वच्छेदकत्वापत्तेः । इष्टापत्तौ सर्वस्यापि लक्ष्यतावच्छेकाक्रान्तत्वेन विनिगमकाभावेन लक्ष्यत्वा-पत्त्याऽलक्ष्यस्यैवाभावापत्तेः । तथा च सर्वस्यापि धर्मस्य सर्वलक्षणत्वापत्तिरिति चेत् । मैवम् । भावानवबोधात् । अयमत्राशयः । लक्षणं न व्यसनितयोच्यते किन्तु श्रोतुः पदविशेषस्य व्यक्तिविशेषेषु व्यवहारप्रयोजकज्ञानसिद्ध्यर्थं किञ्चिद्विशिष्टाभेदज्ञानद्वारा तदतिरिक्तविशिष्ट प्रतियोगिकव्यावृत्तिज्ञानाय च । यथा गोशब्दस्य व्यक्तिविशेषवाचकत्वज्ञानाभाववतस्तज्ज्ञानाय सास्नादिमान्गौरिति लक्षण-मुच्यते । तत्र गोत्वविशिष्टाभिन्नासु सर्वासु व्यक्तिषु तत्पदवाच्यत्वस्य ज्ञानजननाय प्रवृत्तत्वेन तत्र सर्वगोव्यक्तीनामपि पक्षत्वेन तत्र हेतोरावश्यकत्वात् । तत्रैकां गामङ्गुल्या प्रदर्श्येयं गौरित्युपदिश्य लक्षणोक्तौ तद्गोदृष्टान्तेन यत्र यत्र लक्षणं पश्यति तत्र तत्र गोशब्दवाच्यतां जानाति । तत्र

लक्ष्यतावच्छेदकाव्यापकत्वे व्यक्तिविशेषे तत्पदवाच्यत्वज्ञानाभावप्रसङ्गेनोद्देश्यासिद्धि प्रसङ्गात्तत्रेतर-भेदानुमित्यभावप्रसङ्गाच्च तत्राव्याप्तेर्दोषत्वम् । यत्र तु गोष्ठे 'केवलं शबला एव गोव्यक्तयो नान्य-वर्णोपेताः किन्तु महिष्यादयश्च तत्र गोशब्दवाच्यः कश्चिदस्तीति सामान्यतो जानता गौरस्तीत्युक्ते का गौरिति प्रश्ने कृते शबलगौरित्युक्तेऽपि तदीयसंशयनिवृत्तेर्जायमानत्वेनेतर भेदानुमितेस्तासु व्यक्तिषु सम्भवेनोद्देश्यासिद्धेरभावान्न तत्र दोषता । न च तद्देशस्थितगोत्वावच्छिन्नमेव लक्ष्यम् न गोत्व-सामान्यं लक्ष्यतावच्छेदकमिति चेत् । लक्ष्यतावच्छेदकमित्यस्य प्रष्टृसंशयीयविषयतावच्छेदकमित्यर्थ-कत्वेन गोसामान्यमपश्यतो नारिकेलद्वीपवासिनः पुरुषस्यात्र गाः सन्तीति श्रुतवतो गोत्वेनैव सामान्यरूपेण ज्ञानेच्छाया एव युक्तत्वात्तद्देशविशेषस्थितत्वस्य तद्वाक्येनैव ज्ञातत्वेन तत्रेच्छाया असम्भवात् । एवं सभायामपि धूमवान्वन्हेरिति प्रयुक्ते प्रतिवादिना हेतुर्दुष्ट इत्युक्ते कुतो दुष्ट इति प्रश्ने व्यभिचरितत्वादित्युक्तावपि न निग्रहः । तद्धेतोरेव दुष्टत्वस्याकाङ्क्षितत्वेन व्यभिचरितत्वादेस्ता-दृशाकाङ्क्षापूरकत्वात् । दुष्टसामान्यस्य लक्ष्यत्वे तु प्रत्येकमेकं द्वयं त्रयं वा वक्तव्यं न तु यत्र स्थले यावन्तो दोषास्तावदन्यतममिति । तथा सति येन रूपेण लक्षणत्वं तेनैव रूपेण हेतुत्वापत्त्येतर-व्यावृत्त्यनुमितौ व्यवहारविषयत्वसाधने वाऽन्यतमत्वादित्येव हेतुः स्यात् । अन्यतमत्वस्य व्यभिचारि-त्वादिघटितत्वेन स्वसमानाधिकरणव्याप्यतावच्छेदक धर्मान्तरघटितत्वेन व्याप्यत्वासिद्ध्यापत्त्या तथा प्रयोक्तुर्निग्रहापत्तेः । किन्तु पञ्चैव हेतवो वक्तव्यास्ते च स्वस्वाश्रयेष्वितरभेदानुमितिं जनयन्ति । एवं च सर्वेषु लक्ष्यव्यक्तिषु व्यावृत्तिधीरिच्छाविषयीभूता सिद्ध्यतीति नोद्देश्यासिद्धिः । पञ्चसु हेतुषु ज्ञातेषु वस्तुतो दुष्टां यां यां व्यक्तिं पश्यति तत्रान्यतमं हेतुं पश्यति । ततो व्याप्तिस्मृत्या तत्र व्यक्तौ तच्छब्द-वाच्यत्वं वेतरभेदं वाऽनुमिनोतीति । यत्तु लक्ष्यतावच्छेदकावच्छेदेनेतरभेदानुमितिर्लक्षणोक्तेः प्रयोजनं न तु लक्ष्यतावच्छेदकाश्रयीभूतव्यक्तिष्वितरभेदानुमितिः सा च लक्षणस्याव्याप्तत्वे भागासिद्ध्या तादृशानुमितिर्न जायत इति नाव्याप्तधर्मस्य लक्षणत्वं सम्भवतीति । तन्न । सर्वस्यापि पदार्थस्य तत्कालेषूपस्थितसर्वपदार्थव्यावृत्तत्वेनैव प्रतीतत्वेन लक्ष्यतावच्छेदकविशिष्टे तदानीमुपस्थिततत्तद्व्यावृत्तेः सिद्धत्वेन तादृशानुमितेः फलत्वासम्भवात् । न च न प्रतीयत एव व्यावृत्तिरिति युक्तम् । तथा सति लक्षणस्यातिव्याप्त्यादिदोषशून्यत्वज्ञानासम्भवेन लक्षणत्वज्ञानासम्भवात् । तदभावे व्याप्तिज्ञानाद्य-सम्भवेनानुमिति जननासम्भवात् । लक्ष्यलक्षणयोरपि भेदज्ञानाभावापातात् । तद्भेदज्ञानमात्राङ्गीकारे किमपराद्धं भेदान्तरज्ञानेन । प्रथमप्रतीतौ भेदज्ञानाभावे प्रतियोगिज्ञानादिघटितसामग्र्या एव दुर्मिलत्वापत्त्या भेदप्रतीतेरेवाभावप्रसङ्गात् । प्रपञ्चितं चैतत्तत्त्वनिर्णयादौ भगवत्पादैरेव । न च घटादीनां प्रथमप्रतीतौ भेदभानाङ्गीकारे तत्प्रतीतेर्नास्तीत्याकारत्वापत्तिः । तथा च भावाभाव-

व्यवस्थैव न सम्भवतीति वाच्यम् । प्रथमप्रतीतेर्नास्तीत्याकारकत्वाभावेऽपि घट एवेत्यवधारणात्मकत्वेन दोषाभावात् । अत एव भावगतस्य भेदस्य भावात्मकत्वमेव । एवं गोत्वाभाववतो गोपदवाच्यत्वमस्ति न वेति कस्यापि न संशयः किन्तु गोत्वमेव यादृशव्यक्तिष्विति । तथा च गोत्वविशिष्टं गोपदवाच्यमिति सर्वेषां ज्ञानसत्त्वान्न लक्ष्यतावच्छेदकविशिष्टे तत्पदवाच्यत्वज्ञानमपि फलं किन्तु लक्ष्यतावच्छेदकीभूत धर्माश्रयव्यक्तिषु तत्पदवाच्यत्वज्ञानमेव फलम् । लक्षणज्ञानेन लक्ष्यव्यक्तिषु लक्ष्यतावच्छेदकज्ञानम् । ततस्तत्पदवाच्यत्वज्ञानं लक्षणाभाववत्त्वेन तदानीमुपस्थिता या या तदितरत्वप्रकारकानुमितिर्जायते तत्तदेव फलमिति मन्तव्यम् । यत्त्ववच्छेदकावच्छेदेनानुमितौ भागासिद्धिज्ञानस्य प्रतिबन्धकता तत्कारणीभूतपरामर्शे वेति तत्रानुमितिरेव न जायत इति । तदपि न । पक्षतावच्छेदकाश्रयीभूतसर्वव्यक्तीनां विशेष्यतया भाने हि सानुमितिरवच्छेदकावच्छेदेनानुमितिरित्युच्यते । यथा सर्वपर्वतो वह्निमानित्याकारा सा चैकेन परामर्शेनासम्भवेऽपि तादृशपरामर्शद्वयेन सम्भवत्येव । हेतुद्वयस्योक्तौ तत्रैकहेतोः केषुचित्पर्वतादिरूपपक्षेषु तदन्यहेतोस्तदन्यपर्वतेषु भानसम्भवेन सर्वपर्वतेषु वह्निभानसम्भवात् । यत्तु साध्ये तत्सम्बन्धे वा पक्षतावच्छेदकव्यापकत्वं भासतेऽवच्छेदकावच्छेदेनानुमितौ सर्वव्यक्तीनां भाने सामग्रीविरहात्सर्वव्यक्तयो न भासन्ते । सैव सर्वपर्वतत्वसामानाधिकरण्येन वह्न्यभावबुद्धिं प्रति विरोधिनी । सर्वव्यक्तिनिष्ठविषयताशालिनिश्चयत्वेन प्रतिबन्धकताकल्पने गौरवात् । पक्षतावच्छेदकव्यापकत्वनिष्ठविषयता निरूपितसाध्यविषयताशालिनिश्चयत्वेन प्रतिबन्धकताकल्पने लाघवात् । तादृशानुमितौ हेतौ पक्षतावच्छेदकव्यापकत्वावगाहिपरामिर्श एव कारणम् । तदभावे तादृशानुमितिर्न सम्भवतीति हेतुद्वयोपन्यासेऽप्युक्तानुमित्यनुत्पत्त्या तादृशपरामर्शप्रतिबन्धकत्वेन भागासिद्धेर्दोषत्वमेव तादृशहेतुद्वयोपन्यासकर्तुर्निग्रहश्चेति । तदपि न । उक्तपरामर्शस्य साध्ये पक्षतावच्छेदकव्यापकत्वावगाह्यनुमतिं प्रति काणत्वस्यैव निर्मूलत्वात् । हेतौ पक्षतावच्छेदकव्यापकत्वज्ञानस्य साध्ये पक्षतावच्छेकव्यापकत्वज्ञानं प्रति कारणतायां मानाभावात् । तथा सति धूमो पर्वतत्वव्यापक इति ज्ञानाद्वन्हिः पर्वतत्वव्यापक इति निश्चयापत्तेः । न च न केवलहेतौ व्यापकत्वज्ञानं साध्ये तव्द्यापकत्वधियं प्रति हेतुः किन्तु तत्साध्यव्याप्यत्वेन गृहीते हेतौ तव्द्यापकत्वज्ञानं तद्धेतुव्यापकसाध्यव्याप्यत्वस्याभावे तद्धेतुव्याप्यत्वस्याप्यसम्भवादिति वाच्यम् । तर्हि यत्स्वव्यापकव्यापकं तत्स्वव्यापकमिति वा यद्यद्व्याप्यव्याप्यं तत्तव्द्याप्यमिति व्याप्तिज्ञानसत्त्व एव स्वव्यापकीभूतहेतुव्यापकत्वज्ञानात्पक्षतावच्छेदकव्यापकत्वज्ञानं साध्ये भवेत् । न तूक्तव्याप्तिज्ञानशून्यकाले । अन्यथा वन्हिं विना धूमो न सम्भवतीत्येतावता धूमो वन्हिव्याप्य इति ज्ञानाभावकाले धूमवानिति ज्ञानमात्राद्वन्ह्यनुमित्यापत्तेः । तत्रोक्तपरामर्शे पर्वतत्वव्यापकत्वस्य वन्हिव्याप्यत्वविशिष्टे

धूमे भानेन कथञ्चित्पक्षतावच्छेदकव्यापकव्याकत्वस्य साध्ये भानसम्भवेऽप्युक्तसामान्यव्याप्तिज्ञानाभावेन तावन्मात्रेण साध्ये पक्षतावच्छेदकव्यापकत्वभानासम्भवात् । न च तादृशपरामर्शोत्तरानुमित्या पक्षतावच्छेदकसामानाधिकरण्येन साध्यसंशयनिवृत्त्याद्यन्यथाऽनुपपत्त्या तादृशपरामर्शस्य तादृशानुमतिं प्रति स्वातन्त्र्येण कारणता स्वीक्रियत इति वाच्यम् । अस्मदुक्तरीत्या सर्वेषु पक्षेषु साध्यस्य भानेन कस्यामपि व्यक्तौ साध्यसंशयासम्भवेन तादृशसंशयादिनिवृत्त्यादेः प्रयोजनतासम्भवात् । न च सामग्र्यभावः । तव्द्याप्यहेतोरेव सर्वव्यक्तिषु परामर्शे भासमानत्वे तस्यैव सामग्रीत्वात्। न च परामर्श एव सर्वव्यक्तीनां भाने कारणाभावः । परार्थानुमितौ परोक्त्या भानसम्भवात् । स्वार्थानुमितौ जिज्ञासानुसारेण यथायथं साक्ष्यादिनोपनीतस्य भानसम्भवात् । तदभावे तादृशानुमितिरपि नोदेत्येव । भवत्पक्षेऽपि सर्वपक्षव्यक्तीनां भानाभावे हेतौ तव्द्यापकत्वग्रहानुपपत्तिः । यत्र पक्षतावच्छेदकं तत्र हेतुरिति व्याप्तिग्रहाभावात् । अधिकं तु व्याप्तिग्रहोपायकथनावसरे व्यक्तीभविष्यति । यत्तु सर्वव्यक्त्यवगाहित्वेन प्रतिबन्धकताकल्पने गौरवमिति । तद्युक्तम् । व्यापकत्वानवगाहिनः सर्वः पर्वतो वन्हिमानिति ज्ञानस्य प्रतिबन्धकत्वं सर्वानुभवसिद्धमिति तथा प्रतिबन्धकतायाः सर्वेषामप्यावश्यकत्वात् । एवं चाव्याप्तधर्मस्यापि लक्षणपदवाच्यत्वं जिज्ञासानुरेणैकस्य द्वयस्य वा वक्तव्यमस्त्येव । तथाऽपि ग्रन्थे लक्षणत्वेन वक्तव्यश्च व्यापक एव धर्मः सर्वजिज्ञासानिवर्तकत्वात्स्वोक्तलक्षणज्ञानेन सर्वेषामपि जिज्ञेसानिवृत्तिर्भवत्विति ग्रन्थकर्तॄणामिच्छासत्त्वात् । लक्ष्यतावच्छेदकव्यापकस्यैकस्य धर्मस्यालाभे हि धर्मद्वयं वक्तव्यम् । अन्यथा तादृशधर्मज्ञानाभावानुमापकं भवतीत्याशयेन तद्विशेषणंदत्तमित्यविरोधः ।

ननु सिद्धान्तेऽनुगतधर्माभावात्कथमेकस्य धर्मस्य यावल्लक्ष्यवृत्तित्वं घटते । न च परमते कथं गन्धादीनामननुगतानां लक्षणत्वमिति वाच्यम् । तन्मते गन्धत्वरूपजातेरनुगतत्वेन तेन रूपेण लक्षणत्वसम्भवादिति चेन्न । मन्मतेऽपि सादृश्यस्यानुगतत्वेन तेनरूपेण लक्षणत्वसम्भवात् । तथा हि । यावल्लक्ष्यवृत्तिधर्मप्रतियोगिकसादृश्यवत्त्वस्यैव यावल्लक्ष्यवृत्तित्वपदार्थत्वात् । सास्नादिमत्त्वे चैकगवि वृत्तावपि निखिलगोवृत्तिसास्नादिमत्त्वप्रतियोगिकसादृश्यस्य सत्त्वात् । न च शबलत्वस्यापि गोलक्षणत्वापत्तिः । शबलत्वे निखिलगोवृत्तिरूपसाजात्यस्य सत्त्वादिति वाच्यम् । यद्धर्मविशिष्टस्य लक्षणत्वमभिलषितं तद्धर्मव्यङ्ग्यसाजात्यस्यैव विवक्षितत्वात् । शुक्लगवांदिगतस्य कस्यापि धर्मस्य शबलत्वव्यङ्ग्यसादृश्यप्रतियोगित्वाभावेन तेन रूपेण लक्षणत्वासम्भवात् । अलक्ष्यवृत्तित्वेन निमित्तेन रूपत्वेन रूपेणापि लक्षणत्वं न सम्भवति । न च गोवृत्तिरूपाणामलक्ष्यावृत्तित्वमपि सम्भवतीति वाच्यम् । अलक्ष्यावृत्तीत्यस्यालक्ष्यवृत्तिधर्मसाजात्याभावस्य विवक्षितत्वात् । महिष्यादिवृत्तिरूपसाजात्यस्य रूपत्वादिव्यङ्ग्यस्य सत्त्वाद्रूपत्वेन रूपेण लक्षणत्वासम्भवात् । न चालक्ष्यगतधर्म-

प्रतियोगिकलक्षणतावच्छेदकीभूतधर्माभिव्यङ्ग्यसादृश्याप्रसिद्ध्या लक्षणाप्रसिद्धिरिति वाच्यम् । अप्रामाणिकप्रतियोगिकाभावाङ्गीकारेण प्रतियोग्यप्रसिद्धेरदोषत्वात् । नृशृङ्गित्वस्यापि गोलक्षणत्वापत्तिः । अलक्षीभूतघटादिगतधर्मसजातीयत्वाभावादिति वाच्यम् । यावन्त्यलक्ष्याणि तत्तद्गतधर्मसजातीयत्वाभावस्य लक्ष्यतावच्छेदकविशिष्टप्रतियोगिकभेदसमानाधिकरणधर्मसजातीयत्वसामान्याभावस्य वा विवक्षितत्वेनादोषत्वात् । अथ यत्रैकमेव लक्ष्यं तत्र लक्ष्ये यावत्त्वाप्रसिद्धिः । एवं यत्रैक एव दण्डो घटचतुष्टयेऽस्ति तत्र तावतां घटानां तद्दण्डस्य तद्दण्डत्वेन लक्षणत्वस्य सत्त्वेन तत्राव्याप्तिश्च । तत्र लक्षणतावच्छेदकीभूतस्य तद्दण्डत्वस्यैकमात्रवृत्तित्वेन सादृश्यानभिव्यञ्जकत्वेन लक्षणतावच्छेदकधर्माभिव्यङ्ग्यसादृश्यप्रसिद्धिः । यद्यपि दण्डत्वादयः सर्वेऽपि धर्मा एकमात्रवृत्तयस्तथाऽपि वक्ष्यमाणरीत्या सामान्यरूपत्वमपि तेषु वर्तत इति तेषु सादृश्याभिव्यञ्जकत्वं सम्भवति न तु तव्द्यक्तित्वेषु । किञ्च स्वाश्रयस्यापि यावल्लक्ष्यान्तर्गतत्वेन तद्वृत्तिधर्मप्रतियोगिकलक्षणतावच्छेदकधर्माभिव्यङ्ग्यसाश्यस्य स्वस्मिन्नसम्भवश्च । सादृश्यस्य भेदव्याप्तत्वेन स्वस्मिन्स्वसादृशस्यासम्भवात् । न च स्वाश्रयातिरिक्तानि यावन्ति लक्ष्याणि तद्गतधर्मसजातीयत्वविवक्षणान्न दोष इति वाच्यम् । एकस्य दण्डादेर्धर्मस्य चतुःपञ्चघटादेर्लक्षणत्वं तत्र स्वाश्रयातिरिक्तलक्ष्याप्रसिद्धेः। न चाभेदेऽपिसादृश्यमङ्गीक्रियते । एकमात्रवृत्तेरपि सादृश्यव्यञ्जकत्वं चेति नोक्तस्थलेषु दोष इति वाच्यम् । मानाभावेनाभेदसादृश्याङ्गीकारायोगात् । न च तत्र प्रत्यक्षं घटान्तरे घटसादृश्यवत्स्वस्मिन्स्वसादृश्यस्याप्रतीतेः । अत एव तार्किकैरपि सादृश्यलक्षणे भेदो निवेशितः । अन्यथा तद्गतधर्मवत्त्वमेव तत्सदृशत्वमिति ब्रूयुः । नाप्यनुमानागमौ । स्वस्मिन्स्वसादृश्यमपि वर्तत इति प्रतिपादकयोस्तयोरदृष्टेः । स्वोक्तपरिष्कारमात्रनिर्वाहायाप्रामाणिकस्याङ्गीकारानुपपत्तेः । सादृश्यस्य भेदव्याप्तत्वमिति टीकाग्रन्थेषु सत्त्वात्तद्विरोधश्च । न च पररीत्यैव तदुक्तिरिति वाच्यम् । स्वमते तदङ्गीकारे ज्ञापकाभावात् । प्रत्युत स्वमते शक्तिग्रहप्रतिपादनवेलायामिदं गौरित्युपदेशवाक्यस्थेदंपदस्यायमतेत्सदृशश्चेत्यर्थकत्वमेवोक्तम् । यदि स्वस्मिन्नपि स्वसादृश्यं तर्हि स्वस्मिन्स्वप्रतियोगिकसादृश्यसत्त्वेन स्वसदृशार्थकत्वमात्रे स्वसदृशानां स्वस्य च सङ्ग्रहसम्भवेनोभयार्थकत्वकथानानुपपत्तेः। एवं तर्मताण्डवे त्रिविक्रमपाददृष्टान्तेन सम्बन्धद्वयेनानुगतत्वोक्तिरप्ययुक्ता स्यात् । एकेन प्रतियोगिता सम्बन्धेनैवानुगतत्वसम्भवत् । गगनं गगनाकारमित्यादेर्लक्षणया तत्सदृशमन्यन्नास्तीत्यर्थः । तथैवैतद्वाक्यादर्थप्रतीतेः । आग्रहेऽपि सादृश्यस्य भेदव्याप्तत्वपक्षेऽनिर्वाहश्चेति चेत् । अत्रोच्यते । लक्ष्ये व्याप्त्या वर्तमानत्वं च लक्ष्यतावच्छेदकव्यापकत्वम् । तच्च लक्ष्यतावच्छेदकवन्निष्ठाभावाप्रतियोगित्वमेव । इत्थं च यादृशधर्मविशिष्टं यादृशधर्मवन्निष्ठाभावाप्रतियोगित्वे सत्यलक्ष्यावृत्तितद्धर्म-

विशिष्टं लक्षणमिति निष्कर्षः । भवति च सास्नादिमत्त्वत्वविशिष्टं गोत्वविशिष्टस्य लक्षणम् । गवि सास्नादिमत्त्वं नास्तीत्यप्रतीत्या सास्नादिमत्त्वत्वविशिष्टस्य गोनिष्ठाभावाप्रतियोगित्वात् । न च प्रतिव्यक्ति सास्नादिमत्त्वस्य भिन्नत्वेन चालनीयन्यायेन सर्वेषां सास्नादिमत्त्वव्यक्तिगोनिष्ठाभाव-प्रतियोगित्वमस्त्येव । यावल्लक्ष्यवृत्तित्वस्याभावे विशेषणेऽप्युभयाभावविशिष्टाभावादिकमादाय तत्प्रति-योगित्वं दुर्वारमिति वाच्यम् । विशिष्टस्यातिरिक्ततामते तत्तद्गवितत्तत्सास्नाव्यक्त्यभावादेः सत्त्वेऽपि सास्नादिमत्त्वत्वविशिष्टस्य तदप्रतियोगित्वत्तादृशविशिष्टस्यैव लक्षणत्वेनाङ्गीकृतत्वात् । केवलपुरुषवति भूतले दण्डी नास्तीति प्रतीतिसत्त्वेन केवलविशेष्यमात्रे विशिष्टाभावप्रतियोगित्वाभाववत् विशेष्ये विशेषणे च विशिष्टगतनाशप्रतियोगित्वाभाववच्च विशिष्टाभिन्नतत्तत्सास्नादिमत्त्वव्यक्तिषु पूर्वक्षणा-वच्छिन्नसास्नादिमत्त्वत्वविशिष्टेषु समुदाये च विद्यमानस्यापि गोत्वसमानाधिकरणाभावप्रतियोगित्वस्य तत्तदतिरिक्ते सास्नादिमत्त्वत्वविशिष्टेऽङ्गीकारे मानाभावेन तादृशप्रतियोगित्वभावात् । न च तत्तव्द्यतिरिक्तायां विशिष्टव्यक्तौ मानाभावः । तत्तत्सास्नादिमत्त्वानवगाहिनः सास्नादिमत्त्वमित्या-कारायाः प्रतीतेरेव मानत्वात् । अन्यथा पुरुषाद्यतिरिक्तदण्डिरूपविशिष्टस्याप्यसिद्ध्यापातात् । न च तत्राभेदोऽप्यङ्गीकृत इति वाच्यम् । प्रकृतेऽपि तस्याङ्गीकारात् । न च विशिष्टगतस्य विशेष्या-वृत्तित्वेऽपि विशेष्यगतस्य विशिष्टवृत्तित्वमावश्यकमेवेति वाच्यम् । विशेष्यगतस्य नाशाप्रतियोगित्वस्य प्रागभावप्रतियोगित्वस्य विशिष्टेऽभावात् । यत्र विशिष्टस्य शुद्धेन भेदाभेदो नास्ति तत्र विशेष्यशक्त्यैव परस्परधर्मा नाश्रयत्वदेर्निर्वाहः प्रतीत्यनुसारेण व्यवस्थायाः अङ्गीकृतत्वेन नातिप्रसङ्गोपि । ननु सास्नादिमत्त्वस्य तत्तद्व्यक्तिघटितत्वेन भिन्नभिन्नत्वेनैकस्यांगवि गव्यन्तरवृत्ति सास्नादिमत्त्वरूपव्यक्ति-घटितसास्नानादिमत्त्वत्वविशिष्टाभावोऽस्त्येवेति वाच्यम् । विशिष्टानां भिन्नभिन्नत्वेऽपि प्राति-स्विकत्वेऽपि विशिष्टप्रतियोगिकाभावस्यैकतादृशविशिष्टाधिकरणेऽङ्गीकाराद्गवितादृशविशिष्टं नास्तीत्य-प्रतीतेः । यथा मतान्तरे तत्तत्सास्नाव्यक्त्यभावस्य गवि सत्त्वेऽपि सास्नादिमत्त्व सामान्या-भावस्यासत्वम् । इयांस्तु विशेषः तन्मते सास्नानादिमत्त्वत्वस्यानुगतधर्मस्य तदभावप्रतियोगिता-वच्छेदकत्वम् । मन्मते तु तादृशावच्छेदकत्वादौ प्रमाणाभावेनाननुगतत्वेऽप्यनुगतत्वेन पराभिमतो यो धर्मस्तद्विशिष्टस्यैव प्रतियोगित्वमिति । अवच्छेदकत्वादेरप्रमाणिकत्वं त्वस्मदाचार्यकृतद्वैतद्युमणौ स्पष्टम् । यद्यपि गवि तत्तव्द्यक्तिघटितगतसास्नादिमत्त्वं नास्तीतिधीरस्ति । तथाऽपि तादृशप्रतीति-सिद्धाभावप्रतियोगित्वं तव्द्यक्तिघटितसास्नादिमत्त्वाविशिष्ट एव न तु शुद्धसास्नादिमत्त्वविशिष्टे । तथा सति शुद्धे प्रतियोगित्वावगाहिनो गवि सास्नादिमत्त्वं नास्तीति प्रतीत्यापत्तेः । अवच्छेदकत्वादिकत्व-मिति न तदङ्गीकारेणोक्तापत्तिवारणसम्भवः । यद्यपि सास्नादिमत्त्वत्वमपि तत्तत्सास्नादि-

मत्त्वव्यक्तिनिष्ठं भिन्नभिन्नम् । तथाऽपि तद्विशिष्टस्य न सास्नादिमत्त्वरूपयत्किञ्चिव्द्यक्तिमन्निष्ठाभावप्रतियोगित्वमिति सामान्यधर्म इत्युच्यते । तथा च गोनिष्ठाभावाप्रतियोगित्वादलक्ष्यावृत्तित्वाच्च लक्षणसमन्वयः सास्नादि मत्त्वे । न च शृङ्गित्वेऽतिव्याप्तिः । शृङ्गित्वत्त्वविशिष्टस्य गोनिष्ठाभावाप्रतियोगित्वात् । गोवृत्तिशृङ्गित्वानामलक्ष्यावृत्तित्वाच्चेति वाच्यम् । अलक्ष्यीभूतमहिष्यादिवृत्तिशृङ्गित्वसजातीयत्वेन तदन्यत्वाभावान्न दोष इति वाच्यम् । यत्रैक एव धर्मो दीर्घदण्डादिर्लक्ष्यालक्ष्योभयवृत्तिस्तस्य लक्षणत्वापत्तेः स्वस्मिन्स्वजात्यभावेन तदन्यत्वसत्त्वात् । लक्षणावच्छेदकस्यैकमात्रवृत्तित्वेन सादृश्यानभिव्यञ्जकत्वाच्च । यद्धर्मविशिष्टसामान्यमलक्ष्यावृत्तितत्वमित्यर्थकत्वमलक्ष्यावृत्तित्यस्यार्थ इत्यपि न साधु । एकस्यैव दण्डादिव्यक्तेर्यत्र लक्षणता तत्र सामान्याप्रसिद्धेः । न च दण्डत्वानां तत्तद्दण्डवृत्तीनां नानात्वेन नैकस्यापि दण्डत्वस्य नानापदार्थवृत्तित्वं किन्त्वेकमात्रवृत्तित्वम् । तथाऽपि सादृश्याभिव्यञ्जकत्वं दृष्टमिति चेत् । वैषम्यात् । नैकस्यापि दण्डत्वस्य स्वानधिकरणीभूतदण्डवन्निष्ठाभावे प्रतियोगितया भासमाने वस्तुनि प्रकारतया भानमस्ति । दण्डवति दण्डो नास्तीत्यप्रतीतेः । यद्यपि पूर्वक्षणवृत्तित्वविशिष्टस्य दण्डत्वस्यास्ति भानं तथाऽपि तच्छुद्धदण्डस्वाद्भिन्नमेव । शुद्धदण्डत्वं तु नैव भासते । अतो दण्डत्वं त्वनुगतमित्युच्यते सामान्यधर्म इति च । इदमेवानुगतत्वं नाम । यद्धर्माश्रयज्ञाने सति विजातीयसादृश्यप्रतीतिस्तेन तत्सादृश्यप्रतियोगिनां सर्वेषामुपस्थितिः । इदं चानुभवसिद्धम् । सादृश्यप्रतीत्यादिकं घटत्वाद्यनुगतत्वेन पराभिमतधर्मप्रतीतौ । अन्यथा सामान्यप्रत्यासत्त्या सर्वघटानां प्रत्यक्षत्वाङ्गीकारो युक्तः स्यात् । न तव्द्यक्तित्वादिधर्माणां सादृश्यप्रत्यक्षसाधनत्वमस्ति । अतस्तदेकदेशमात्रवृत्तीत्युच्यते । न ह्येकदण्डवति भूतले दण्डो नास्तीति प्रतीतिरस्ति । अतो दण्डत्वादीनामनुगतत्वमङ्गीकार्यम् ।

एवं च तादृशाभावस्य सर्वेषां प्रतियोगितावच्छेदकीभूतदण्डत्वाश्रयाणां प्रतियोगित्वात्तादृशैकदण्डवति तदभावो नास्तीति न प्रतीयत इति वक्तुं शक्यते । अन्यथा तण्डत्वानां भिन्नत्वेन तादृशप्रतीतौ यद्दण्डत्वं प्रतीयते तस्यैव प्रतियोगितावच्छेदत्वापत्त्या तदाश्रयस्यैव प्रतियोगित्वेन तदन्यदण्डस्याप्रतियोगित्वेन तद्वति तादृशप्रतीतेरापत्तेः । न च सर्वे दण्डा अभावे प्रकारतया प्रतीयन्त इति युक्तम् । दण्डो नास्तीत्येकवचनार्थकत्वस्यान्वयानुपपत्तेः । न च दण्डत्वे एकत्वस्यान्वयः । तदाश्रयत्वस्य सर्वदण्डेष्वभावेन तादृशप्रतीतेर्भ्रमत्वापत्तेः । मन्मते तु दण्डस्यैकत्वेन न प्रतीतेर्भ्रमत्वम् । सर्वदण्डव्यक्तीनामभाने प्रतियोगितावच्छेदकभूतधर्माश्रयत्वात्प्रतियोगित्वं युज्यते । न च दण्ड इत्येकवचनं समुदायाश्रयमिति वाच्यम् । तथा सत्येकत्वस्य समुदायत्वेऽन्वयप्राप्त्या तादृशसमुदायत्वविशिष्टस्यैव प्रतियोगित्वापत्तेः । नीलघटो नास्तीतिप्रतीतिसिद्धाभावस्य नीलघटस्यैव

प्रतियोगित्ववत् । तथा चैकदण्डवति भूतले दण्डद्वय प्रतितिवद्दण्डो नास्तीति प्रतीत्यापत्तेः । अभावांशे अभासमानत्वेऽपि प्रतियोगित्वं प्रतियोग्यंशे । अभासमानत्वेऽपि प्रतियोगितावच्छेदकत्व-मित्यङ्गीकारे सर्वस्यापि सर्वाभावप्रतियोगित्वप्रसङ्ग इति सर्वव्यवस्थोच्छेदप्रसङ्ग इति चेन्मैवम् । दण्डो नास्तीति प्रतीतावभावांशे दण्डो दण्डे दण्डत्वं प्रतीयते न तु तत्र दण्डत्वेऽवच्छेदकत्वम् । अननु-भवात् । किन्तु तादृशाभावप्रतीतिर्दण्डेऽस्तीति धियं विरुणद्धि । न तद्दण्डो नास्त्युभयं नास्ति तत्क्षणविशेषवृत्तित्वविशिष्टो दण्डो नास्तीति धीस्तादृशधियं प्रतिबध्नातीत्येतावन्मात्रमनुभवसिद्धम् । तत्रावच्छेदकत्वतत्पर्याप्तितदवच्छेदकत्वानां सर्वथाऽप्रतीयमानानामङ्गीकारं कृत्वैकस्य धर्मस्य नाना-व्यक्त्यवृत्तित्वं नानाव्यक्तिषु भासमानदण्डत्वादिधर्माणामेकत्वं वा सर्वथा कदाऽप्यप्रतीयमानमङ्गीकृत्य व्यवस्थाङ्गीकारे महागौरवात् तदपेक्षयाऽस्मद्रीतेरेव लघुत्वात् । तथा हि । दण्डो नास्तीति प्रतीता-वभावांशे दण्डत्वविशिष्टस्य प्रतीतेस्तादृशविशिष्यस्यैव प्रतियोगित्वं न तद्दण्डत्वविशिष्टदण्डत्वा-विशिष्टस्य तस्याभावांशतादृशविशिष्टस्याभासमानत्वात् । न च भवत्पक्षे दण्डत्वतद्दण्डत्वयोरैक्यमेव भेदे मानाभाव इति वाच्यम् । प्रतीतेरेव मानत्वात् । न हि दण्डस्तद्दण्ड इति प्रतीत्योरवैलक्षण्यं कश्चिदुपैति । प्रतीतिवैलक्षण्यं विषयवैलक्षण्यं विना न निर्वहति । अन्यथा घटपटयोरपि वैलक्षण्या-सिद्धिप्रसङ्गात् । प्रतीतेर्वैलक्षण्येऽपि विषययोरैक्यमेवेति वक्तुं शक्यत्वात् । न च प्रतीतिः स्वविषये सर्वतो वैलक्षण्यमवगाहते । अन्यथा प्रतीतीनामवैलक्षण्यापत्तेरिति चेत् । समं प्रकृतेऽपि । अधिकं त्वाकरे व्यक्तमिति नेह प्रपञ्चते ।

न चोक्तरित्याऽभावे भासमानस्यैकस्यैव दण्डस्य प्रतियोगित्वं स्यान्नसर्वदण्डानामिति वाच्यम् । दण्डो नास्तीतिप्रतीतेरनन्तत्वेनैकस्यां प्रतीतावेकस्य तदन्यप्रतीतावन्यस्येति सर्वेषां दण्डानां भान-सम्भवात् । नह्यभावप्रतीतौ तत्प्रतियोगिनां सर्वेषां भानमिति नियमोऽस्ति । तव मतेऽपि दण्डत्वे-नोपस्थितैकदण्डावगाहिनो दण्डो नास्तीति प्रतीतेः सम्भवात् । किञ्चाभावांशे भासमानप्रतियोग्यंशे यो धर्मो भासते तद्धर्मज्ञानेन विजातीयसादृश्यज्ञानं भवति । तादृशसादृश्यप्रतियोगिनां सर्वेषां प्रतियोगित्वम् । यथा भवन्मते प्रतियोगितावच्छेदकाश्रयाणां सर्वेषां प्रतियोगित्वं तथा प्रतियोगिता-वच्छेदकत्वेनाभिमतधर्माभिव्यङ्ग्यं यादृशं विजातीयसादृश्यं तदभिव्यञ्जका ये धर्मास्तद्विशिष्ट-सामान्यस्य प्रतियोगित्वमित्यङ्गीकारसम्भवात् । विशिष्टानां परस्परं विजातीयसादृश्यवत्त्वाच्च । सादृश्यस्य तद्भिन्नत्वे सति तद्गतधर्मवत्त्वरूपत्वाददतिरिक्तसादृश्याङ्गीकारे मानाभाव इति वाच्यम् । धर्माणामनुगतत्वस्य खण्डितत्वेन तद्गतधर्मवत्त्वस्यान्यत्रासम्भवात् । सादृश्यस्य प्रत्यक्षसिद्धत्वाच्च । न च दण्डत्वादेः सादृश्यव्यञ्जकत्वे मानाभावः । एकदण्डज्ञाने दण्डान्तरे तत्सादृश्यस्य कदाऽप्य-

संशयात् । दण्डत्वस्य सकलदण्डज्ञानजनकत्वस्य त्वन्मतसिद्धस्यासम्भवश्च । दण्डत्वस्यानुगतत्वेऽपि प्रथमतस्तज्ज्ञानाभावात् । वस्तुतोऽनुगतत्वस्यैव प्रयोजकत्वे तद्धटे अभासमानस्यापि सर्वघट-प्रत्यक्षोत्पादकत्वप्रसङ्गः । निष्प्रतियोगिकत्वेन प्रत्यसत्तित्वानुपपत्तिश्च । सप्रतियोगित्वाङ्गीकारे तस्यैव सादृश्यात्वाङ्गीकारसम्भवः । प्रतियोगितासम्बन्धेन सर्वघटसम्बन्धित्वेन सामान्यरूपत्वेन सर्वघट-वृत्तित्वाङ्गीकारे प्रयोजनाभावात् । अत एव तर्कताण्डवे सम्बन्धद्वयेनानुगतत्वमुक्तं सादृश्यस्य । एवं तद्दण्डत्वादिज्ञानेऽपि सादृश्यविशेषस्यास्फूर्तेः । तस्य विशेषधर्मत्वं दण्डत्वादेः सामान्यरूपत्वं दण्डत्वतद्दण्डत्वादेः स्वाश्रयीभूततद्दण्डाभिन्नत्वेनैक्यसत्त्वेऽपि विशेषबलादेकस्यैवोभयरूपत्वं युक्तम् । तदुक्तम् । अतो विशेषसामान्यरूपं सर्वमपीष्यत इति । इत्थं च गोवृत्तिशृङ्गित्वस्य लक्षणत्वापत्ति-र्दुर्वारेति चेन्न । अलक्ष्यवृत्तिसजातीयान्यत्वालक्ष्यावृत्तित्वोभयवत्त्वनिवेशे दोषात् । न चाप्रसिद्धिः प्रतियोग्यप्रसिद्धेरदूषणत्वात् । यद्वा । स्वविशिष्टनिष्ठभेदाप्रतियोगिलक्ष्यातावच्छेदकविशिष्टकं यद्धर्म-विशिष्टं भवति तद्धर्मविशिष्टत्वमित्यर्थकत्वेन दोषाभावात् । लक्ष्यतावच्छेदकीभूतगोत्वविशिष्टस्य शृङ्गीत्ववन्महिष्यादिनिष्ठभेदप्रतियोगित्वेनाप्रतियोगित्वाभावात् । केचित्तु । यद्धर्माविशिष्टप्रतियोगिका-भावाधिकरणं यत्किञ्चिदलक्ष्यव्यक्तिर्भवति तद्धर्मविशिष्टभिन्नत्वमित्यर्थः । तथा च शृङ्गित्वत्वानां तत्तच्छृङ्गित्वनिष्ठानां भिन्नत्वेऽपि तद्विशिष्टाभावो न महिष्यादावस्ति । तादृशप्रतीतिसिद्धाभावस्य सर्वेषां तादृश विशिष्टाभावानां प्रतियोगित्वेन प्रतियोगिभूततादृशैकविशिष्टवति तादृशाभावासम्भवात् । तथा च तादृशाभावानधिकरणीभूतमहिष्यादिरूपालक्ष्यव्यक्तित्वेन तदन्यत्वाभावान्न लक्षणत्वपत्तिः । अलक्ष्यत्वं च लक्ष्यतावच्छेदकधर्मविशिष्टप्रतियोगिकभेदवत्त्वम् । गवि गव्यन्तरप्रतियोगिकभेदसत्वेऽपि तस्मिन्भेदे गोत्वविशिष्टप्रतियोगिकत्वं नास्ति । गौर्नेत्यप्रतीतेः न लक्षणस्याप्यलक्ष्यवृत्तित्वम् । ननु लक्ष्ये इतरभेदज्ञानाभावकाले लक्ष्यतावच्छेदकविशिष्टप्रतियोगिकभेदोऽप्यन्यत्र ज्ञातुमशक्य इति कथमे-तल्लक्षणज्ञानं सम्भवति । तत्सत्त्वे वैय्यर्थ्यं लक्षणस्यैवेति चेन्न । श्रोतुर्ज्ञानाभावेऽपि वक्तुर्ज्ञानसत्त्वेन तदुक्त्या श्रोतुरपि ज्ञानसम्भवात् । लक्ष्यतावच्छेदकत्वं च लक्ष्यबुद्धावितरव्यावर्तकतया भासमानत्वं जिज्ञासाविषतावच्छेदकत्वम् । अवच्छेदकत्वं च तदंशे भासमानमेवेत्यादिकमूह्यं सूरिभि-रित्यास्तां विस्तरः ।

प्रामाणिकप्रतियोगिकाभावानङ्गीकारे तु लक्ष्यनिष्ठभेदाप्रतियोगि यादृशविशिष्टवत्तादृशत्वे सति यादृशविशिष्टत्वप्रतियोगिकरणं यत्किञ्चिदलक्ष्यं भवति तादृशविशिष्टभेदकूटवत्त्वं लक्षणम् । अन्यत्सर्वं पूर्ववद्बोध्यम् । यद्वा । साक्षात्तद्विरूद्धत्वरूपं प्रतियोगित्वं निवेशनीयम् । प्रतियोग्यारोपे यत्प्रधानं तेनैव साकमभावस्य विरोध इत्यप्रमाणिकप्रतियोगिकात्यन्ताभावनियमवादिमतेऽङ्गीकृतत्वेनोक्तप्रतियोगित्वस्य

प्रामाणकिऽपि सत्त्वात् । एवमेवोत्तरत्र लक्षणानि परिष्कर्तव्यानि । यद्धर्मादिलिङ्गकेतरभेदानुमिति-विषयत्वेन वा यत्किञ्चिच्छब्दवाच्यत्वानुमितिविषयत्वेन वेच्छाविषयीभूतं यद्धर्मविशिष्टं लक्ष्यं तद्धर्मो लक्ष्यतावच्छेदक इत्युच्यते।

**श्रीनि.— ॥ यो धर्म इति ॥ यज्जातीयो धर्म इत्यर्थः ।** लक्ष्यालक्ष्यजातीये । एतेन भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपीत्यनुव्याख्यानोदाहृतश्रुत्या सिद्धान्ते धर्माणां प्रतिव्यक्ति-भेदाङ्गीकारात्कथं सास्नादिमत्त्वस्यसकललक्ष्यवृत्तित्करूपलक्ष्यव्याप्यत्वम् । शृङ्गित्वस्याप्यन्यत्र भावात्कथं लक्ष्यादन्यत्र न वर्तत इत्यनेन तव्यावृत्तिरित्यादिदूषणं परास्तम् । न हि धूमस्य वन्हि-व्याप्तिर्नामैकस्य धूमस्य सकलवन्ह्यधिकरणवृत्तित्वं किन्तु धूमजातीयस्य वन्हिजातीयाधिकरणे सर्वत्र वृत्तिरेव । तथाऽत्रापि सास्नादिमत्त्वजातीयसकलगोवृत्तित्वमेव तद्व्याप्यत्वम् । श्रङ्गित्वजातीयं लक्ष्यादन्यत्राप्यस्तीत्यतिव्याप्तम । एकजातीयत्वं च परस्परैकजात्याश्रयत्वम् । अस्माकं तु सदृश-जात्याश्रयत्वमिति । नन्वथाऽपि लक्ष्ये वृत्तित्वमेवास्तु किं तव्याप्त्या । न चाव्यापकस्य शबलत्वादेर्गो-लक्षणत्वव्यावृत्तये तदुपादानमिति वाच्यम् । सुधायां लिङ्गतया हि लक्षणमुपयुज्यते । न च व्यापकता लिङ्गत्वोपयोगिनी व्याप्यत्वेनैव तदुपपत्तेः । अन्यथा धूमादीनामलिङ्गतापातादित्यादिनाऽव्यापकस्यापि लक्षणत्वसमर्थनेन तव्यावर्तनानुपपत्तिरिति चेत् । अस्त्यत्र विशेषः । यदा गोविशेषस्य लिलक्षयि-षितत्वम् तदा शबलत्वमपि गोलक्षणं भवत्येव । गोविशेष एव व्यावृत्त्यादेर्बुभुत्सितत्वेन तस्यापि स्वाश्रये व्यावृत्त्यदिधीहेतुत्वात् । यदा तु गोमात्रस्य लिलक्षयिषितत्वम् तदा त्वलक्षणमेव । गोमात्रे व्यावृत्त्यादेर्बुभुत्सितत्वेनासार्वत्रिकस्य तस्य तदहेतुत्वात् । तत्राद्यपक्षानुसारेण सुधाप्रवृत्तिः । द्वितीय-पक्षानुसारेणैतद्ग्रन्थप्रवृत्तिः । अत एव सुधायामव्याप्तेर्लक्षणदोषतावादस्तु सर्वस्यापि लिलक्षयिषितत्वे द्रष्टव्य इत्युक्तम् । नन्वेवं सति प्रथमपक्षे इदं लक्षणं शबलत्वेऽव्याप्तमिति चेन्न । लक्ष्यव्याप्त-लक्षणस्यैवेदानीं लिलक्षयिषितत्वेन तस्यालक्ष्यत्वात् । तर्ह्यस्य विशेषलक्षणत्वेन लक्षणसामान्यलक्षणं वक्तव्यमिति चेत् । सत्यम् । उक्तमेव सुधायां लक्षणं लक्ष्यलक्षणस्यासाधारणधर्म इति । ननु लक्षण-लक्षणं स्वस्मिन्नस्ति वा न वा । आद्ये आत्माश्रयः । द्वितीयेऽव्याप्तिरिति चेन्न । प्रतिलक्ष्यं लक्षण-भेदाङ्गीकारेणात्माश्रयप्रसक्तेरभावात् । अस्यैव यत्तद्वृत्तित्वे हि स स्यात् । न चैवम् । एतत्सदृशस्यान्यस्यैवैतद्वृत्तित्वात् ।

**वि.—** प्रमाणपद्धतिं कुर्म इत्यनेन प्रमाणलक्षणपरोदीरितप्रमाणलक्षणालक्षणत्वाद्यभिधानं प्रतिज्ञातम् । तत्र किं लक्षणमलक्षणं च किमिति जिज्ञासायां तदुभयं क्रमेण निरूपयति ॥ **यो धर्म**

**इत्यादिना ।** लक्ष्ये व्याप्त्या वर्तते लक्ष्ये सार्वत्रिकसम्बन्धेन वर्तते । सर्वस्मिल्लक्ष्ये वर्तत इति यावत् । ननु भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपीत्यनुव्याख्यानोदाहृतश्रुत्या धर्मिणामिव धर्माणामपि परस्परं भिन्नत्वात्सास्नादिमत्त्वादेर्धर्मस्य तत्तव्द्यक्तिमात्रवृत्तित्वेन सकलवृत्तित्वाभावादनुपपन्नमिदं लक्षणमिति चेन्न । यो धर्मो यज्जातीयो धर्मो लक्ष्ये लक्ष्यजातीये सर्वस्मिन्नस्तीत्यर्थस्य विवक्षितत्वात् । साजात्यं चैकसादृश्यसम्बन्धिधर्माश्रियत्वमेव । न त्वेकजात्याश्रयत्वम् । तथा चानुगतधर्मवादे गन्धव्यक्तिनां स्वरूपसम्बन्धात्मकस्य तदाधारत्वस्य चाननुगतत्वेऽपि सकलगन्धव्यक्तीनामेकजात्यश्रयत्वमात्रेण गन्धवत्त्वस्य पृथिवीलक्षणस्य सकललक्ष्यवृत्तित्ववत्सास्नादीनां स्वरूपसम्बन्धात्मकस्य तदाधारस्यचाननुगतत्वेऽपि सकलसास्नादिधर्मवृत्तिसास्नात्वादिजातीनामेकत्वात्सास्नादिमत्त्वस्य गोलक्षणस्य सकललक्ष्यवृत्तित्ववच्चाननुगतधर्मवादेऽपि सास्नादीनां सास्नात्वादीनां च भेदेऽपि सकलसास्नादीनां सकलसास्नात्वादीनां च कस्यचिद्धर्मत्वेनेतरेषां प्रतियोगित्वेनैकसादृश्यसम्बन्धित्वात्सकलसास्नासम्बन्धवद्दृश्यस्यैकत्वेन वा सकलसास्नात्वसम्बन्धिसादृश्यस्यैकत्वेन वा सास्नावत्त्वस्य सकललक्ष्यवृत्तित्वसम्भवाद्धर्मान्तरेऽप्येवमुपपादनसम्भवात्सास्नादिमत्त्वस्य सकललक्ष्यवृत्तित्वं युक्तम् । न हि सास्नादीनां स्वाश्रितधर्मैक्येनानुगमो वक्तव्यो न तु स्वसम्बन्धिधर्मैक्येनेत्यत्र राजाज्ञाऽस्ति । प्रत्युत स्वसम्बन्धविशेषरूपस्वाश्रितत्वापेक्षया स्वसम्बन्धस्य लघुरूपत्वेन स्वसम्बन्धिधर्मैक्येन वाऽनुगतिकथनं न्याप्यमिति । तदुक्तं सुधायाम् । सादृश्यव्यावृत्तत्वेऽपि प्रतियोगिनिरूप्यत्वेनानुगतफलसाधनत्वानुभवादिति । सादृश्यस्य व्यावृत्तत्वेऽपि प्रत्याश्रयं भिन्नत्वेऽपि प्रतियोगिनिरूप्यत्वेन प्रतियोगिपदमधिकरणस्याप्युपलक्षणम् । प्रतियोग्यधिकरणसम्बन्धित्वेनानुगतफलस्य सर्वोपसंहारेण शक्तिव्याप्तिकार्यकारणभावादिग्रहरूपस्य स्वनिरूपकसास्नादीनामनुगतरूपस्य फलस्य कार्यस्यासाधकत्वानुभावत्प्रयोजकत्वानुभवादित्यर्थः । ननु यद्येकसादृश्यसम्बन्धो वैकसादृश्यसम्बन्धिधर्माश्रियत्वं वा साजात्यमभिप्रेतम् । तर्हि द्रव्यत्वादिना सास्नादिसदृशशृङ्गादेर्महिष्यादावलक्ष्येऽपि सत्त्वान्न वर्तते चान्यत्रेत्यस्य सास्नादिमत्त्वादावभावादसम्भवीदं लक्षणमिति चेन्न । अनुगतधर्मवादेऽप्यस्य चोद्यस्य साम्यात् । द्रव्यत्वादिना सास्नादिसमजातीयशृङ्गादेरलक्ष्ये सत्त्वात् । यदि शृङ्गादिव्यावृत्तेन सास्नात्वादिरूपजातिविशेषेणात्र साजात्यमभिप्रेतमिति नोक्तदोषः तर्ह्यस्मिन्मतेऽपि तथाऽस्तु । शृङ्गादिव्यावृत्तं सकलसास्नादिसम्बन्धि यदन्तरङ्गं सादृश्यं तन्निरूपकत्वं वा सादृश्यविशेषनिरूपकधर्माश्रियत्वं वा साजात्यमित्यत्राभिप्रेतमित्यस्माभिरङ्गीकारात् । तस्माद्यथानुगतधर्मवादे गन्धानामननुगतत्वेऽपि तेषामेकगन्धत्वसम्बन्धेनानुगमः । यथा च सास्नानां तत्तद्गोमात्रवृत्तित्वेऽप्येकसास्नात्वसम्बन्धेनानुगमस्तथाऽ-

ननुगतधर्मवादेऽपि सकलसास्नादीनामेकसादृश्यनिरूपकत्वेन वैकसादृश्यनिरूपकसास्नादिधर्माश्रयत्वेन वा सकललक्ष्यानुगमः साधूक्तः ।। यो धर्मो लक्ष्ये व्याप्त्या वर्तत इति । वर्तत इत्येतदप्रामाणिकशशशृङ्गत्वादेर्लक्षणत्वनिरासः । एकशफत्वादावतिव्याप्तिवारणाय लक्ष्य इत्युक्तम् । शबलत्वादेर्गोलक्षणत्वनिरासायोक्तं व्याप्त्येति । शृङ्गित्वादिव्यावृत्त्यर्थमुक्तं न वर्तते चान्यत्रेति ।

**(४) प्र.प.— यथा गोः सास्नादिमत्त्वम् । तद्धि गोषु सर्वत्रास्ति नास्ति चागोषु । अन्यथाभूतं त्वलक्षणम् ।**

**जना.**— लक्षणं शृङ्गग्राहकतयोदाहृत्य दर्शयति ।। **यथेति** ।। **सास्नादिमत्त्वमिति** । गलकम्बलादिमत्त्वमित्यर्थः । आदिशब्देन लाङ्गूलककुत्खुरविषाणादीनां ग्रहणम् । यथा गोः सास्नादिमत्त्वं लक्षणं स्पष्टं भवति तथोच्यत इति शेषः । तदेव दर्शयति ।। **तद्धीति** । नन्वत्र लक्षणलक्ष्यादिशब्दास्समभिव्याहृतगवादितत्तल्लक्ष्यादिपराः । न तु यत्किञ्चिल्लक्ष्यादिमात्रपराः । अन्यथा गोलक्षणस्य सास्नादीमत्त्वस्य प्रमाणलक्षणकथनदशायां लक्ष्ये चक्षुरादावभावेनालक्षणत्वापत्तेः । एवं च सास्नादिमत्त्वस्य गोलक्षणत्वं नाम गवेतरावृत्तित्वे सति सकलगोवृत्तित्वम् । एवं च यथार्थत्वस्य प्रमाणलक्षणत्वं नाम प्रमाणेतरावृत्तित्वे सति सर्वप्रमाणवृत्तित्वम् । एवमेव लक्ष्येतरावृत्तित्त्वे सति सकललक्ष्यवृत्तित्वस्य लक्षणलक्षणत्वं नाम यावदलक्षणावृत्तित्त्वे सति सर्वलक्षणवृत्तित्वमिति पर्यवसितम् । तत्र किं नामालक्षणमिति जिमासायामाह ।। **अन्यथाभूतमिति** । पूर्वोक्तलक्षणलक्षणरहितमित्यर्थः । लक्षणलक्षणराहित्यं चासम्भविनि लक्ष्यवृत्तित्वरूपविशेषणाभावात् । अव्यापके सर्वलक्ष्यवृत्तिस्वरूपविशेषणाभावात् अतिव्यापकेऽलक्ष्यावृत्तित्वरूपविशेषणाभावात् । यथा पुरुषमात्रसत्त्वेऽपि दण्डाभावेन दण्डविशिष्टपुरुषाभाव इति द्रष्टव्यम् । तुशब्दो विशेषार्थः ।

**राघ.**— ।। **यथेति** । यथा स्पष्टं भवति तथैतदुदाहरणनिष्ठतया प्रदर्श्यत इत्यर्थः । एवमग्रेऽपि । सास्नादिमत्त्वं लक्षणमित्यनुषङ्गः ।। **तद्धीति** । हिर्हेतौक । यस्मादेवं तस्मादेतल्लक्षणमिति प्रसिद्धौ वा । लक्ष्ये वर्तत इति व्याप्त्येत्यन्यत्र न वर्तत इति विशेषणत्रयस्यासम्भव्यव्यापकातिव्यापकरूपालक्षणत्रयं व्यावर्त्यमिति भावेन तत्त्रयस्वरूपं सामान्योक्तिविभागविशेषोद्देशपूर्वकमाह ।। **अन्यथाभूतं त्विति** । लक्ष्ये व्याप्त्येत्याद्युक्तादन्यथा प्रकारान्तरेण । सर्वथाऽवर्तमानत्वं कात्स्न्र्येनावर्तमानत्वम् । अन्यत्र वर्तमानत्वं च भूतं प्राप्तम् । भूप्राप्तावित्युक्तेः तदल अलक्षणमित्यर्थः ।

**विज.**— सामान्यं विना विशेषापर्यवसानाल्लक्षणसामान्यलक्षणं क्वचिद्विशेषे योजयति ।। **यथेति** ।। तद्धीति । यद्यपि सास्नात्वं नैकं तथाऽपि सास्नात्वनिष्ठसादृश्यप्रतियोगिधर्मवत्तया वा

सास्नानिष्ठसादृश्यप्रतियोगित्वेन वा सास्नानामनुगममभिप्रेत्य तथोक्तमिति ध्येयम् ॥ **अन्यथाभूतं त्विति ।** लक्ष्येतरावृत्तित्वविशिष्टसकललक्ष्यवृत्तित्वाभाववान्धर्मो अलक्षणम् । लक्ष्यतावच्छेदकाभि-व्यङ्ग्यसादृश्यप्रतियोगीतरवृत्तिवृत्तिसादृश्यानेकरूपकत्वविशिष्टलक्ष्यतावच्छेकाभिव्यङ्ग्यसादृश्यप्रति-योगियावद्वृत्तिवृत्तिसादृश्यप्रतियोगित्वाभाववान्धर्मोऽलक्षणमिति यावत् । एतेन परोद्भाव्यप्रतियोग्य-प्रसिद्धिर्यथाश्रुते स्यादित्यादिदूषणं परास्तम् । विशेषणाद्यभावप्रयुक्तो विशिष्टाभावः सर्वत्रा-लक्षणेऽनुगत इति ।

**वेदे.**— उक्तलक्षणं शृङ्गिग्राहकतया दर्शयति ॥ **यथेति ।** तत्रोक्तं लक्षणमुपपादयति ॥ तद्धीति । अत्रापि नैकं सास्नादिमत्त्वं सर्वगोवृत्ति किन्तु प्रातिस्विकमेव । तच्च सामान्यरूपेण तत्र तत्र गवि वर्तत इत्यर्थः । न च सास्नादिमत्त्वस्य प्रातिस्विकस्य तत्तव्द्यक्तिरूपस्य कथं सामान्यरूपत्वमिति वाच्यम् । प्रातिस्विकस्यापि तस्य विशेषबलेन सामान्यरूपतोपपत्तेः । उक्तं हि भगवत्पादैः ।

अतो विशेषसामान्यरूपं सर्वमपीष्यते ।
व्यावृत्तं यच्च सामान्यं तदेव स्यद्विशेषत ॥ इति ।

अन्यथा परमतेऽपि समान्यादिकं सदिति सामान्येनोक्तिर्न स्यात् । तत्रापि सत्त्वस्य प्राति-स्विकतया तत्तत्स्वरूपत्वाङ्गीकारादिति द्रष्टव्यम् । एवं च प्रातिस्विकस्यापि सास्नादिमत्त्वस्य गोलक्षणत्वे तत्समनियतद्रव्यत्वादेरपि गोलक्षणत्वं स्यात् । सास्नादिमत्त्वस्य च द्रव्यत्वसमनियतस्य द्रव्यलक्षणत्वं स्यादिति कस्यचिद्दूषणमलग्नकं वेदितव्यम् । यदि हि सास्नादिमत्त्वादिकं प्रातिस्विक-रूपेण लक्षणं स्यादित्युक्तदोषशङ्कावकाशः । न चैवम् । किन्तु प्रातिस्विकमपि तदुक्तरीत्या सामान्यरूपेणैव लक्षणम् । न च द्रव्यत्वसास्नादिमत्त्वयोः सामान्येन परस्परं समनियमोऽस्तीति ॥ **अन्यथाभूतमिति ।** लक्ष्ये व्याप्त्या वर्तमानत्वविशिष्टान्यत्रावर्तमानत्वाभाववान्धर्म इत्यर्थः । तेन विशिष्टाभावः सर्वत्रालक्षणेऽनुगत इति नाननुगमशङ्केति ध्येयम् ।

**अभि.**— किं लक्षणं कथं तदुक्तलक्षणोपेतमिति पृच्छति ॥ **यथेति ।** आद्यस्योत्तरमाह ॥ **गोः सास्नादिमत्त्वमिति ।** अनेनोदाहरणप्रदर्शनस्य सास्नादिमत्त्वमित्यनेनैव पूर्णत्वाद्गोरिति व्यर्थमिति परास्तम् । अनेनैवासिद्धबोधनाय सिद्धस्यैव दृष्टान्तीकर्तव्यत्वात्सास्नादिमत्त्वलक्षणभावस्याद्याप्य-सिद्धत्वाद्यथा गोःसास्नादिमत्त्वमिति दृष्टान्तीकरणमयुक्तमिति परास्तम् । यथेत्यनेन कस्य किं लक्षणमिति प्रश्ने कृते तदुत्तरतया गोःसास्नादिमत्त्वमित्यस्य प्रवृत्तिरित्यङ्गीकारात् । द्वितीय-

प्रश्नस्योत्तरमाह ॥ **तद्धीति ।** अस्तीत्यनन्तरमित्युपचर्यत इति शेषः । तत्सास्नादिमत्त्वं गोषु सर्वत्र सर्वेषु गोष्वस्तीति सम्बन्धः । एतेन सास्नादिमत्त्वस्य गोप्रदेशवृत्तित्वेन सर्वावयवृत्तित्वाभावाद्गोषु सर्वत्रास्तीत्यनुपपन्नमिति परास्तम् ॥ **अन्यथाभूतमिति ।** उक्तविशेषणद्वयमध्ये यदेकेनापि विशेषणेन हीनं तदलक्षणमित्यर्थः । त्रिविधमित्यतःपरमसम्भव्यव्यापाकमतिव्यापकं चेति ग्राह्यम् ।

**श्रीनि.**— ॥ **तद्धीति ।** तज्जातीयमित्यर्थः ॥ **गोषु सर्वत्रेति ।** सर्वगोपिण्डेष्वित्यर्थः ।

**वि.**— ॥ **अन्यथाभूतं त्विति ।** लक्ष्येतरावृत्तित्वे सति लक्ष्ये व्याप्त्या वर्तमानत्वरूपलक्षण-रहितमित्यर्थः । एतदभावश्च लक्षणे एकशफत्वादौ लक्ष्यवृत्तित्वाद्यभावप्रयुक्त इत्यनुसन्धेयम् । तुशब्दस्यालक्षणं त्वित्यन्वयः ।

(५) **प्र.प.— तत्त्रिविधम् । असम्भवि यल्लक्ष्ये सर्वथा न वर्तते । यथा गोरेकशफत्वम् । अव्यापकं यल्लक्ष्यैकदेशे वर्तमानमपि तदेकदेशान्तरे न वर्तते । यथा गोः शबलत्वम् । अतिव्यापकं यल्लक्ष्यादन्यत्रापि वर्तते । यथा विषाणित्वम् । सजातीयविजातीयव्यावृत्ततया लक्ष्यावधारणं लक्षणज्ञानस्य प्रयोजनम् । अस्मिन्ग्रामे देवदत्तगृहमिति वार्तां श्रुतवतो हि तद्ग्रामस्थेषु सर्वेष्वपि गृहेषु देवदत्तबुद्धिः प्रसक्ता । ततो यत्रपताका तद्देवदत्तगृहमिति तल्लक्षणज्ञाने सतीदमेव नान्यदित्यवधारणं जायते । शब्दव्यवहारो वा लक्षणज्ञानस्य प्रयोजनम् । सास्नादिमान्गौरिति लक्षणज्ञाने सति यं यं सास्नादिमन्तं पिण्डं पश्यति तं तं गोशब्दवाच्यं प्रत्येति । यावदन्यतो व्यावर्तनीयं यावति चैकः शब्दो व्युत्पादनीयस्तदुच्यते लक्ष्यमिति ।**

**जना.**— तमेव विशेषं वक्तुं तद्विभागमाह ॥ **तत्त्रिविधमिति ।** लक्षणत्वज्ञान प्रतिबन्धकता-तारतम्येनोद्दिशति ॥ **असम्भवीत्यादिना ॥ यल्लक्ष्य इति ।** अत्र तदिति शेषः ॥ सर्वथेति । सर्वत्रेत्यर्थः । इदमव्यापके शबलत्वादावतिव्याप्तिवारणाय ॥ **लक्ष्यैकदेशे वर्तमानमपीति ।** इदमसम्भ-विवारणाय । अतिव्यापकविषाणित्वादिवारणाय तदेकदेशान्तरे न वर्तत इति ॥ **यल्लक्ष्यादन्यत्रापीति ।** अपिशब्दाल्लक्ष्येऽपीत्यर्थः । इदं गोलक्षणे सास्नादिमत्त्वादावतिव्याप्तिवारणाय । असम्भव्येक-शफत्वादिवारणायापीति । ननु लक्षणज्ञानस्य किं प्रयोजनम् । न च लक्ष्यरूपवस्तुसिद्धिरेव प्रयोजन-मिति वाच्यम् । प्रकृते हि लक्ष्यं प्रमाणम् । तच्च द्विविधम् । प्रमितिलक्षणं फलं तत्साधनं चेति । तत्र न कस्यापि सिद्धये प्रमाणलक्षणं निरूपणीयम् । तथा हि । नीलो घटोऽस्तीत्यादिव्यवहारो व्यवह्रियमाणप्रमितिपूर्वकः । अबाधितप्रेक्षावद्व्यवहारत्वात् । सम्मतवदित्यनुमानेन प्रमितिलक्षण-प्रमाणस्य तथा रूपादिप्रमितिः सकरणिका क्रियाजन्यत्वात् । छिदिक्रियावदित्यनुमानेन साधनस्य च

सिद्धिसम्भवादित्यत आह ।। **सजातीयेति ।** तथा च प्रमितत्वसाधनत्वादिरूपेण प्रमाणसिद्धेरनुमानेन सम्भवेऽपि सजातीयविजातीयव्यावृत्तत्वेन रूपेण प्रमाणसिद्धिर्न सम्भवतीति तदर्थं प्रमाणलक्षण-निरूपणं सार्थकमिति भावः । अत्र सजातीयत्वं लक्ष्यतावच्छेदकसाक्षाद्व्यापकधर्मेण विजातीयत्वं च तादृशधर्मराहित्येनेति बोध्यम् । तेन प्रमेयत्वेन रूपेण सर्वस्यापि सजातीयतया विजातीयाप्रसिद्धिरिति शङ्का निरस्ता । लक्ष्यातावच्छेदकसाक्षाद्व्यापकत्वं नाम लक्ष्यतावच्छेदकव्यापकाव्यापकत्वे सति लक्ष्यतावच्छेदकव्यापकत्वम् । लक्ष्यतावच्छेदकव्यापकधर्माणां मध्ये यन्न्यूनदेशवृत्ति तेन रूपेण साजात्यमिति यावत् । तथा हि । गोलक्षणकथनदशायां लक्ष्यतावच्छेदकं गोत्वम् । तद्व्यापकाः द्रव्यत्वप्रमेयत्वादयस्तदव्यापकत्वे सति यद्गोत्वस्य व्यापकं पशुत्वं तद्वन्तो महिषादयो गोसजातीयाः । तद्रहिता घटादयस्तद्विजातीया इति ।। **देवदत्तगृहबुद्धिरिति ।** इदं वा देवदत्तगृहमदो वा देवदत्त-गृहमिति सन्देहरूपा बुद्धिः प्रसक्तेत्यर्थः । तल्लक्षणज्ञाने सतीत्यतः प्रागाप्तवाक्यादिति शेषः । सम्मतं चैतन्नैयायिकानामपि ।



सर्वव्याख्याविकल्पानां द्वयमिष्टं प्रयोजनम् ।
पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वेति ।। वदताम् ।



विषयव्याप्त्यर्थं प्रयोजनान्तरमाह ।। **शब्देति ।** अत्र शब्दव्यवहारपदं शब्दो व्यवह्रियतेऽनेनेति इति भावव्युत्पत्त्याऽभिलपनलक्षणव्यवहारपरम् । प्रत्येतीत्यनन्तरं व्यवहरति चेति शेषः । ननु यो धर्मो लक्ष्ये वर्तत इत्यादिना लक्षणं लक्ष्यघटितम् । लक्ष्यं च लक्षयितुं योग्यमिति व्युत्पत्त्या लक्षणघटित-मित्यन्योन्याश्रय इत्यतो लक्षणाघटिततयैव लक्ष्यस्वरूपमाह ।। **यावदिति ।** विषयव्याप्त्यर्थं लक्षणान्तरमाह ।। **यावति चेति ।** लक्ष्यं लक्ष्यमिति पुनरुक्तिपरिहाराय ।। तदुच्यते लक्ष्यमितीति । तथा च यावदन्यतो व्यावर्तनीयं यावति चैकः शब्दो व्युत्पानदीयस्तल्लक्ष्यशब्दवाच्यमित्यर्थः । अतो न पौनरुक्त्यमिति भावः । एवं चान्यतो व्यावर्तनीयत्वं वैकशब्दव्यवहारविशेष्यत्वं वा लक्ष्यस्य लक्षणमित्युक्तं भवति ।

**राघ.**— तदसम्भवीति तच्छब्दाध्याहारेण यलक्ष्य इति यच्छब्दान्वयः । एवमग्रेऽपि ।। **एकशफत्वमिति । गोरिति ।** अलक्षणमित्यनुषङ्गोऽत्रोत्तरत्र च । एकशफत्वादिव्यावृत्त्यर्थं लक्ष्ये वर्तत इत्यादि विशेषणत्रयमुपात्तमित्यदोषः । लक्षणज्ञानफलमाह ।। **सजातीयेति ।** व्यावृत्ततयाभिन्न-तयेत्यर्थः । लक्ष्यतावच्छेदकसाक्षाद्व्यापकधर्मेण साजात्यवैजात्ये ज्ञेये । यथा गोः पशुत्वेन । तद्व्युत्पाद्य दर्शयति ।। **अस्मिन्ग्राम इति ।** गृहत्वेन विजातीयपाषाणादिव्यावृत्तिबुद्धेः सिद्धत्वात्तत्सजातीय

व्यावृत्त्यवधारण प्रकार एव दर्शितः ॥ **शब्दव्यवहारो वेति ।** व्यवह्रियतेऽनेनेति व्यवहारः शक्तिज्ञानम् । शब्दस्य वाच्यवाचकभावसम्बन्धरूपशक्तिज्ञानरूपा व्युत्पत्तिरित्यर्थः । व्युत्पत्तेरप्यभिलपनरूपव्यवहारः फलमिति वक्तुं व्यवहारपदेन शक्तिज्ञानकीर्तनं कृतम् । अत एवाग्रे गोशब्दवाच्यं प्रत्येतीत्येव विवरणम् । पूर्वं लक्ष्ये व्याप्त्येति लक्ष्यं प्रसक्तम् । तत्स्वरूपं द्वेधा निर्धारयति । **यावदिति ।** व्यावर्तनीयं तदुच्यते लक्ष्यमित्यत्राप्याकृष्यते । यावति चैकः शब्दो व्युत्पादनीयो वाचकत्वेन बोधनीयस्तदुच्यते लक्ष्यमित्यर्थः ।

**विज.––** सङ्गमयति ॥ **असम्भवीत्यादिना ।** लक्षणप्रयोजनमाह ॥ **सजातीयेति ।** किञ्चिद्धर्मनिष्ठसादृश्यप्रतियोगिमत्सजातीयं किञ्चिद्धर्मनिष्ठवैदृश्यप्रतियोगिमद्विजातीयमित्यर्थः । तस्यैव ज्ञानस्य प्रयोजनान्तरमाह ॥ **शब्दव्यवहारो वेति ।** शब्दो व्यवह्रियतेऽनेनेति वाच्यवाचकभावपरिच्छेद इत्यर्थः ॥ **लक्षणप्रयोजनमिति ।** ज्ञानलक्षणप्रयोजनमित्यर्थः । तज्ज्ञानप्रयोजनमिति वा । वाच्यवाचकभावज्ञानहेतुतां लक्षणज्ञानस्योपपादयति ॥ **सास्नादिमान्गौरिति ॥ यावदिति ।** लक्षणज्ञानव्यतिरेकप्रयुक्तव्यतिरेक प्रतियोगिज्ञानविषयव्यावृत्त्यधिकरणतावच्छेदकावच्छिन्नमित्यर्थः ॥ **यावति चेति ।** लक्षणज्ञानसाध्यशब्दवाच्यत्वज्ञानविषयतावच्छेदकावच्छिन्नमित्यर्थः ॥ **शब्दानुगममात्रमिति ।** लक्ष्यलक्षणयोस्तत्प्रवेशनिर्बन्धान्योन्याश्रयादिनेति बोध्यम् । तत्र प्रमाणतदितरसमुदायपदोपयुक्ते निरूपित इति शेषः ।

**वेदे.––** तद्विभागमाह ॥ **तत्त्रिविधमिति ।** इदं तु पररीत्यैव । सुधायामव्यापकस्यापि लक्षणत्वेन समर्थितत्वात् । यद्वा । लक्षणसामाज्ञानं विना तद्विशेषज्ञानासम्भवाल्लक्षणसामान्यलक्षणमुक्त्वा तद्गतविशेषणत्रयसार्थक्यायालक्षणस्वरूपं सप्रभेदमाह ॥ **अन्यथेति ।** अलक्षणं त्वित्यन्वयः । उक्तिलाघवायोद्दिश्य लक्षणमाह ॥ **असम्भवीत्यादिना ।** अव्याप्तेऽतिप्रसङ्गवारणाय सर्वथेत्युक्तम् । असम्भविव्यावृत्त्यै लक्ष्यैकदेशे वर्तमानमपीत्युक्तम् । अतिव्याप्तिव्यवच्छेदाय देशान्तरे न वर्तत इत्युक्तम् ॥ **लक्ष्यादन्यत्रापीति ।** लक्ष्येवर्तमानत्वसमुच्चयार्थोऽपिशब्दः । तेनासम्भविनिरासः । अव्याप्तनिरासाय लक्ष्यादन्यत्रेत्युक्तम् । तस्य च लक्ष्यैकवृत्तिः सङ्कुचितेति भावः । तथा चैवं विधालक्षणत्रयनिरासाय लक्षणलक्षणे विशेषणत्रयोपादानमिति भावः । अत्र कश्चिदनुगतधर्माभ्युपगमे नैकस्य धर्मस्य सर्वलक्ष्यवृत्तित्वाभावरूपाव्याप्त्यसम्भवादेकस्य धर्मस्य लक्ष्येऽन्ये च वर्तमानत्वरूपातिव्याप्त्यसम्भवाच्च तद्वारकं विशेषणवैय्यर्थ्यं लक्षणलक्षणमित्याह । तत्तुच्छम् । अव्याप्त्यतिव्याप्तिलक्षणयोरेकस्य धर्मस्येत्यस्याविवक्षितत्वात् । प्रातिस्विकमपि शबलत्वं सामान्याकारेण तत्र तत्र

सर्वत्र लक्ष्येऽवर्तमानमित्यतिव्याप्तम् । एवं प्रातिस्विकमपि विषाणित्वं सामान्याकारेणालक्ष्येऽपि गतमित्यतिव्याप्तमित्यत्रोच्यते । एवं च तदीयवैय्यर्थ्यचोदनं व्यधिकरणमेवेति । अन्ये तु । अनुगत-धर्मानङ्गीकारेऽपि लक्षणजातीयस्य लक्ष्यजातीयेऽवृत्तिरव्याप्तिस्तस्यालक्ष्येऽपि वृत्तिरतिव्याप्तिरिति विवक्षितत्वान्नानुपपत्तिरित्याहुः । लक्षणज्ञानप्रयोजनमाह ॥ **सजातीयेति** । सदृशजात्याश्रयत्व-तदनाश्रयत्वरूपे अत्र साजात्यवैजात्ये विवक्षिते इति न कश्चित्क्षुद्रोपद्रवः । नन्वत्र साजात्यं प्रमाण-त्वेनोत रूपान्तरेण । नाद्यः । लक्ष्यस्यापि व्यावृत्त्यत्वापत्तेः । न द्वितीयः । विजातीयपदोपादान-वैय्यर्थ्यापत्तेः । अस्ति हि प्रमेयत्वादिना सर्वसाजात्यमिति चेन्न । पौरुषेयवचसां पुरुषविवक्षाधीनत्वेन नियन्तुमशक्यत्वात् । लक्ष्यातिरिक्तं हि सजातीयविजातीयतया द्वैराश्येन विवक्षिते यथा यथार्थज्ञान-तत्साधनस्य प्रमाणस्य ज्ञानं तत्साधनं च सजातीयम् । यत्तु न ज्ञानं नापि साधनं तद्विजातीयम् । एवमन्यत्रापि विवेक्तव्यमिति । एतदेवोदाहरणमुखेन दर्शयति ॥ **अस्मिन्निति** । प्रयोजनान्तरमाह ॥ **शब्दव्यवहार इति** । शक्तिग्रह इत्यर्थः । तदेव दर्शयति ॥ **सास्नादिमानिति** । सास्नादिमान्गौरिति लक्षणवाक्यं हि यः सास्नादिमान्स गोशब्दवाच्य इति व्याप्तिज्ञापनाय वक्त्रा प्रयुज्यते । श्रोतुः सार्वत्रिकव्युत्पत्तिकामत्वात् । उपदेशानन्त्यादेरानन्त्यादिना कर्तुमशक्यत्वात् । ज्ञातव्याप्तिश्च यं यं सास्नादिमन्तं पिण्डं पश्यति तं तं गोशब्दवाच्यमनुमिनोतीति भावः । लक्ष्यानिरूपणे तद्घटित-लक्षणादिज्ञानं न सम्भवतीति लक्ष्यं लक्ष्यति ॥ **यावदिति** । यावदित्यादि जात्येकवचनम् । एवं यावन्तीत्यादि द्रष्टव्यम् । लक्षणज्ञानस्योक्तप्रयोजनानुसारेणेदं लक्षणद्वयम् ।

**अभि.**— ननु मन्दानां सुखेन प्रमाणलक्षणज्ञानायेदमारभ्यत इत्युक्तम् । लक्षणज्ञानस्य व्यर्थत्वादित्यत आह ॥ **सजातीयेति ॥ सर्वेष्वपि गृहेष्विति** । नन्विदमत्रायुक्तं वर्तते । किमत्रायुक्तं वर्तते । सर्वेष्वपि गृहेषु देवदत्तगृहबुद्धिः प्रसक्तेत्ययुक्तं वर्तते । तथा हि । प्राक् सजातीय विजातीयव्यावृत्ततया लक्ष्यावधारणं लक्षणज्ञानस्य प्रयोजनमित्युक्तम् । अतो देवदत्तगृह एव सजातीयविजातीययोरेव लक्ष्यव्यावृत्ततयाऽवधारणं लक्षणज्ञानस्य फलमित्यापातात् । अत एवेदमेव नान्यदित्यवधारणं जायत इत्यप्ययुक्तम् । सजातीयविजातीय व्यावृत्ततया लक्ष्यावधारणत्वाभावात् । न हीदं सजातीयविजातीयव्यावृत्ततया लक्ष्यावधारणमपि तु लक्ष्यव्यावृत्ततया सजातीयविजातीय-योरवधारणमिति स्यादयं दोषः । यदीदं वाक्यं प्रागुक्तप्रयोजनव्युत्पादनपरमिति ब्रूमः । न चैवम् । किं नाम सजातीयविजातीय व्यावृत्ततया लक्ष्यावधारणमिव लक्ष्यव्यावृत्ततया सजातीयविजातीय-योरवधारणमपि लक्षणज्ञानप्रयोजनमिति प्रयोजनान्तरप्रदर्शनपरमिति ब्रूमः । अन्यथा यथा गोः सास्नादिमत्त्वमित्युक्तिवद्यथाऽस्मिन्ग्रामे देवदत्तगृहमित्यवक्ष्यत् । यद्यपीदमेव देवदत्तगृहमिति

ज्ञानमलक्ष्यस्येव लक्ष्यस्याप्यवधारणम् । तथाऽपि न लक्ष्यस्य सज्जातीयविजायव्यावृत्ततयाऽवधारणमपि त्वलक्ष्यस्यैव लक्ष्यव्यावृत्ततयाऽवधारणम् । ननु सर्वेषु गृहेषु देवदत्तबुद्धिः प्रसक्तेति किं सर्वेषु गृहेषु देवदत्तगृहत्वप्रकारकभ्रम उच्यत उत संशयः । नाद्यः । मूले लक्षणफलस्यावधारणत्वोक्त्या प्राक्तनस्य संशयत्वस्य लाभात् । अस्मिन्ग्रामे एकमेव देवदत्तगृहमिति जानतः सर्वगृहेषु देवदत्तत्वप्रकारकभ्रमायोगाच्च । न द्वितीयः । एकस्मिन्धर्मिणि विरुद्धनानाकोटिकज्ञानस्य संशयत्वेनानेकधर्मिकैककोटिकज्ञानस्य संशयत्वायोगादिति चेत् । स्यादयं दोषो यद्येकप्रकार एव संशयः स्यात् । न चैवम् । किं नामैकधर्मिकोऽनेककोटिकः । तथाऽनेकधर्मिक एककोटिकस्तथाऽनेकधर्मिकानेककोटिकस्तथैकधर्मिक एककोटिकश्चेत्येवमनेकप्रकारः । तत्र किमयं स्थाणुः पुरुषो वेत्याद्यः । किमयं ब्राह्मण उत स ब्राह्मण इति द्वितीयः ।

कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणमित्यत्रोक्तस्तृतीयः ।

प्रादेशमात्रपरिमितश्चन्द्रमा इत्यादिश्चतुर्थः । न चैकाकारनियतत्वान्नायं संशय इति वाच्यम् । एकाकारनियतत्वेऽप्यस्यानवधारणत्वेन संशयत्वस्यावश्यं वक्तव्यत्वात् । तदुक्तम् । द्विविधं ज्ञानम् । एकाकारनियतं दोलायमानम् । तत्र द्वितीयं सन्देहसंज्ञां लभते । आद्यमपि द्विविधम् । किञ्चित् स्वार्थस्य निश्चायकम् । यथाऽयं स्तम्भोऽयं भवत्येवेति । किञ्चित्स्वार्थमुल्लिखदपि न तस्य निश्चायकम् । यथा सवितृसुषिरविषयमिति । एकाकारविषयतया जायमानमप्यनिश्चाययदेव बाधितप्रायं जायत इति च । इयांस्तु विशेषः । पूर्वोक्तास्त्रयः संशया अयथार्थरूपा एव । अयं तु संशयोऽनभ्यासदशापन्ने जलादिमतीदं जलमित्यादिरूपः प्रमा तिक्तो गुड इत्यादिस्त्वयथार्थः । अयं चैककोटिकत्वान्निश्चयसंज्ञां वादविशेषो जल्पसंज्ञामिव लभते । अत एव तिक्तो गुड इत्यादिज्ञानमयथार्थत्वे सति निश्चयसंज्ञत्वादाहार्यारोप इति व्यवहरन्ति । अवश्यं च तिक्तो गुड माहार्यसंशय एव इत्यभ्युपगन्तव्यम् । इत्यादिज्ञान कदाऽप्यनास्वादितरसस्य ज्वरितस्य जायमानात् । अवधारणरूपात् तिक्तो गुड इत्यादिज्ञानादनवधारणत्वरूपस्य वैलक्षण्यस्यानुभवसिद्धत्वात् । एवं पीतः शङ्ख इत्यादिसर्वमपि विशेषदर्शनप्रतिबद्धं ज्ञानमाहार्यसंशय एवानिश्चयसंज्ञासद्भावादाहार्यविभ्रम इति च गीयते । अयं च सन्देहो निश्चयवदेव द्विकोटिकसंशयविरोधी । अस्मिंश्च संशये प्रामाण्यसन्देह आहितो द्विकोटिकसंशयो भवतीति द्रष्टव्यम् । स्तम्भोऽयं भवत्येवेत्यादिरूपेण ज्ञानेष्वर्थस्य निश्चितत्वेन प्रामाण्यसंशयस्य कथमप्ययोगादिति । उक्तं च तत्त्वविवेके नरसिंहाश्रमेण । यद्यपि प्रथमं

निर्विशेषब्रह्मसाक्षात्कारः शब्दनिष्पन्नस्तथाऽपि सोऽनवधारण एव । अग्रे संशयादिदर्शनादिति । तस्माद्यत्सज्ज्ञानं यत्संशयनिवृत्त्यनुकूलस्वरूप विशेषविशेषवत्तानिश्चय इतीतरत्र तथेत्येककोटिकमपि किञ्चित्पुरुषदोषानवधारणं किञ्चित्तर्कादिकारणमहिम्ना तदनतिरिक्तविषयमपि निश्चय इत्यनवद्यमिति च। गूढाभिसन्धिः प्रयोजनान्तरमाह ।। **शब्दव्यवहारो वेति ।** ननु शब्दव्यवहारस्य सङ्केतग्रह-साध्यत्वाल्लक्षणज्ञान साध्यत्वकथनमनुपपन्नमित्यतः स्वाभिसन्धिमुद्धाटयति ।। **सास्नादिमान् गौरितीति ।** वाच्यवाचकज्ञानसम्बन्धमेव लक्षणप्रयोजनं तत्साध्यत्वाद्व्यवहारस्य लक्षणज्ञान-प्रयोजनत्वमुपचारेणोक्तमिति भावः । एतेन लक्षणज्ञानस्य व्यवहारः प्रयोजनमिति प्रतिज्ञाय गोशब्द-वाच्यं प्रत्येतीति ज्ञानफलकत्वकथनमनुपपन्नमिति परास्तम् । लक्ष्यस्य लक्षणद्वयमाह ।। **यावदन्यत इति ।** यावदन्यतो व्यावर्तनीयं तल्लक्ष्यमित्येकम् । यावति चैकः शब्दो व्युत्पादनीयस्तदुच्यते लक्ष्यमित्यपरम् । आद्यलक्षणे सजातीयविजातीययोरपि लक्ष्यव्यावर्तनीयत्वेनातिव्याप्तिवारणाय साक्षादिति विशेषणं बोध्यम् ।

**आद.—** ननु लक्षणोक्तेर्नेतरभेदानुमितिः फलम् । लक्ष्येतरत्वस्यान्यत्र ज्ञानकाले लक्ष्येऽपि तदितरत्वं समानसामग्रीकज्ञानत्वेन ज्ञातमेवेति सिद्धसाधनत्वमेव लक्षणोक्तेरित्यत आह ।। **सजातीयविजातीयेति ।** इदं देवदत्तगृहमेव नान्यदिति योजना । वस्तुतो देवदत्तगृहादन्यन्नेत्यर्थः । तेन लक्ष्ये लक्ष्येतरज्ञानमेव प्रदर्शितं भवतीति ज्ञातव्यम् । न चालक्ष्येषु देवदत्तीयत्वाभावबुद्धिः कथमिति चेत् । लक्षणस्य लक्ष्यतावच्छेदकीभूतधर्मव्यापकत्वग्रहदशायां व्यापकाभावरूपहेतुज्ञानेन न चेत्कारणान्तरेण तदुभयाभावेन जायत एवेति गृहाण । अयं भावः । लक्षणज्ञानेन लक्ष्येतरभिन्नं लक्ष्यमित्याकारानुमितिर्नोच्यते । येन सिद्धसाधनता स्यात् । किन्तु लक्ष्यभिन्नानि कानिचित् सजातीयानि कानिचिद्विजातीयानि । तत्र येन रूपेण सजातीयत्वेन गृहीतानि यानि तत्प्रतियोगिकत्वेन भेदोऽनुमीयते । तत्तत्प्रतियोगिकस्य भेदस्य पूर्वमज्ञातत्वाल्लक्षणोक्तेः सफलत्वम् । सजातीयत्वे गृहीतेषु गृहेषु गृहत्वरूपसाधारणधर्मज्ञानस्य सत्त्वान्निर्णायकाभावे संशयस्यैव युक्तत्वात् । लक्षणज्ञाने सत्यन्यतरकोटिनिर्णायकसत्त्वादिदं देवदत्तगृहं न वेति संशयनिवृत्तेर्जायमानत्वात् । तर्हि विजातीय-भेदस्य पूर्वं ज्ञातत्वादंशे सिद्धसाधनत्वमिति वाच्यम् । सिद्धसाधनतायाः स्वातन्त्र्येणादोषत्वात् । किन्त्वसङ्गतित्वेन । यथा पर्वतमहानसौ वन्हिमन्तावित्यनुमानेंऽशतः सिद्धसाधनतादोषः । तत्र महानसे वह्निजिज्ञासाया अभावेन तन्निवर्तकमहानस पदोच्चारणस्यासङ्गतत्वात्तज्ज्ञानद्वारा दोषत्वं न तु स्वातन्त्र्येणानुमिति प्रतिबन्धकत्वम् । तथा च विजातीयज्ञातपदार्थव्यावृत्तिबुद्ध्यर्थं न पृथक् प्रयत्नः क्रियते । किं सजातीयव्यावृत्तिज्ञानार्थं लक्षणे उक्ते तत्र तदानीं यद्यद्भेदव्याप्यत्वं प्रतीयते ते ते भेदाः

सामग्रीबलात्प्रतीयन्तेऽतो न दोषः । सजातीयत्वं विजातीयत्वं च कालभेदात्प्रतिपत्तृभेदादेकस्यैव सम्भवति । तथा चैकेन विजातीयत्वेन ज्ञातपदार्थप्रतियोगिकभेदज्ञानस्य तं प्रति फलत्वाभावेऽपि येन पुरुषेण तदेव वस्तु सजातीयत्वेन गृहीतं तं पुरुषं प्रति तद्भेदज्ञानमपि प्रयोजनं भवतीति ज्ञापनायोभयोपादानम् । तथा ज्ञातपदार्थव्यावृत्ततयेति व्याख्यातव्यम् ।

**श्रीनि.—** ॥ **यदिति** । यज्जातीयमित्यर्थः । एवमग्रेऽपि ॥ **सर्वथेति** । क्वापीत्यर्थः । अत्र यदिति श्रवणात्तदित्यावर्तनीयम् । एवमग्रेऽपि ॥ **सजातीयविजातीयव्यावृत्ततयेति** । उपलक्षणमेतत् । सजातीयविजातीयनिष्ठव्यावृत्तिप्रतियोगितयेत्यपि द्रष्टव्यम् । तथा चालक्ष्यनिष्ठव्यावृत्तिप्रतियोगित्वेन लक्ष्यावधारणम् । अलक्ष्यप्रतियोगिकव्यावृत्तिमत्तयाऽत्र लक्ष्यावधारणमिति प्रयोजनद्वयमुक्तं भवति । तत्राद्यस्यास्ति गौर्नामार्थ इति विदितमतो यत्र तत्र गवि घटादौ अश्वादौ च गोबुद्धौ प्रसक्तायां गोस्वरूपावधारणमुखेनेतरव्यवच्छेदं कुर्वत्सास्नादिमानेन गौर्न तद्विरही घटादिर्वेति वाक्यं प्रयुज्यत इति सुधोक्तोदाहारणे सत्येवोदाहरणान्तरमाह ॥ **अस्मिन्निति** ॥ **देवदत्तगृहबुद्धिरिति** । देवदत्तगृहत्वं किमेतन्निष्ठमुत तन्निष्ठमिति संशयो ज्ञात इत्यर्थः । अभिधेयत्वं शब्दवति न वेति संशयस्याभिधेयत्व-संशयवदस्यापि संशयस्य देवदत्तगृहसंशयत्वमक्षतमिति भावः । उपलक्षणमेतत् । सास्नादिमान्गौरिति विदितलक्ष्यलक्षणसम्बन्धो हि यं सास्नादिमन्तं पिण्डं पश्यति तं गौरेवायं नांश्वादिर्नापि घटादिरिति प्रतिपद्यत इति सुधोक्तं द्वितीयस्याप्युदाहरणं द्रष्टव्यम् । ॥ **अन्यतो व्यावर्तनीयमिति** । साक्षादिति शेषः । अतो लक्ष्यस्वरूपावधारणद्वारा तद्व्यावर्तनीयालक्ष्ये नातिव्याप्तिः ।

**वि.—** एतच्चालक्षणत्वं परोक्तलक्षणानामसम्भावित्वादिप्रकारत्रयेण ज्ञातव्यमित्याशयेनालक्षण-विभागाह ॥ **तत्त्रिविधमिति** । तदलक्षणं प्रकारत्रयोपेतमित्यर्थः । तानि क्रमेणोद्दिश्य तेषां लक्षणानि कथयति ॥ **असम्भवीत्यादिना** । असम्भवित्वस्य लक्ष्यमात्रे लक्षणसत्त्वविरोधित्वादसम्भविनः प्रथममुद्देशो यल्लक्ष्ये सर्वथा न वर्तत इति लक्षणोक्तिः । यच्छब्दश्रवणात्तदिति पूरणीयम् । असम्भवीत्यनुवर्तते । यल्लक्ष्ये सर्वथा क्वापि न वर्तते । वृत्तिरहितं सम्बन्धशून्यमिति यावत् । तद-सम्भवीत्यर्थः । एतेन प्रामाणिकस्यात्यन्ताभावप्रतियोगित्वात् प्रामाणिकैकशफत्वादसम्भविन्यस्या-भावाल्लक्ष्य इत्युक्तम् । द्वितीयमुद्दिशति ॥ **अव्यापकमिति** । लक्ष्यलक्षणसत्त्वविरोधित्वाद-व्यापकत्वस्यासम्भव्यनन्तरमव्यापकस्योद्देशः । लक्ष्यैकदेशे वर्तमानमपि तथैकदेशान्तरे न वर्तत इति लक्षणोक्तिः । अत्रापि यच्छब्दश्रवणात्तदिति संयोज्यम् । विशेषणसमुच्चयार्थोऽपि शब्दः । अव्यापक-मित्यनुवर्तनीयम् ।यद्यज्जातीयं लक्ष्यैकदेशे वर्तमानत्वे सति तस्य लक्ष्यस्यान्यस्मिन्देशे वृत्तिरहितम् ।

अनुगतधर्मवाद इवाननुगतधर्मवादेऽपि सास्नादिसजातीयस्य सकललक्षणव्यक्तिषु सम्भवात् । असम्भवीत्येकशफत्वादावति व्याप्तिपरिहारार्थम् । द्रव्यत्वादावतिव्यापकेऽतिव्याप्तिवारणाय तदेकदेशे न वर्तत इत्युक्तम् । तृतीयमुद्दिशति ॥ **अतिव्यापकमिति ।** यल्लक्ष्यादन्यत्रापि वर्तत इति तल्लक्षणोक्तिः । अत्रापि यच्छब्दश्रवणात्तदिति पूरणीयम् । अतिव्यापकमित्यनुवर्तते । विशेषसमुच्चयार्थोऽपि शब्दः । यज्जातीयं लक्ष्यवृत्तित्वे सति लक्ष्यादन्यत्रालक्ष्येऽपि वर्तते तदतिव्यापकमित्यर्थः । एतेनाननुगतधर्मवादे विषाणित्वादेरतिव्यापकस्य लक्ष्यालक्ष्योभयवृत्तित्वाभावादसम्भवीदं लक्षणमिति शङ्का निरस्ता । अनुगतधर्मवाद इवाननुगतधर्मवादेऽपि विषाणादिजातीयस्य लक्षणलक्ष्योभयवृत्तित्वादव्यापकत्त्वे गोत्वादिव्यावृत्त्यर्थं लक्षणादन्यत्रेत्युक्तम् । असम्भविन्येकशफत्वादावतिव्याप्तिपरिहाराय लक्ष्यवृत्तित्वे सतीत्युक्तम् । ननु प्रमाणपद्धतिं कुर्म इत्यनेन प्रमाणलक्षणाभिधानं प्रतिज्ञातम् । लक्षणोक्त्या च लक्ष्यज्ञानं सम्भवति । तच्च न स्वतः प्रयोजनम् । सुखदुःखाभावेतरत्वात् । तथा च लक्षणोक्तेरेव निष्प्रयोजनत्वात्प्रमाणलक्षणोक्तिरपि निष्फलेत्याशङ्कमानं प्रति लक्षणोक्तेः सफलत्वं च ज्ञापयितुं लक्षणज्ञानफलमाह ॥ **सजातीयविजातीयव्यावृत्ततयेति ।** देवदत्तगृहादिरूपलक्ष्यावधारणस्यार्थ-निश्चयत्वेन प्रवृत्त्यादिहेतुतया सफलत्वात्प्रमाणरूपलक्ष्यावधारणस्य तु तदेवं भूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिकं निश्चित्य विषयेषु विरक्तस्य शमादिसम्पत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवणमनननिदिध्यासनान्यादरनैरन्तर्याभ्यां बहुकालमनुष्ठितवतो भगवत्साक्षात्कारे सत्युद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्ट निवृत्तिविशिष्टानन्दादि स्वरूपाविर्भावलक्षणा मुक्तिर्भवतीति प्रकरणान्ते वक्ष्यमाणरीत्या मुक्त्युपयोगित्वाल्लक्षणज्ञानस्य फलत्वमिति भावः । ननु लक्ष्यतावच्छेदकधर्मेण वा तत्समनियतधर्मेण वा लक्ष्यसाजात्यमलक्ष्ये क्वापि नास्ति । लक्ष्यतावच्छेदकाधिकवृत्तिधर्मेण तत्साजात्यमलक्ष्ये सर्वत्रास्ति । प्रमेयत्वादिना लक्ष्यसाजात्यस्यालक्ष्ये सर्वत्र सत्त्वात् । तथा चालक्ष्यस्य सर्वस्यापि लक्ष्यतावच्छेदकाधिकवृत्तिधर्मवत्तया लक्ष्यसजातीयत्वमेव न तु तद्विजातीयत्व-मिति चेन्न । लक्ष्यतावच्छेदकाधिकवृत्तिधर्मेषु यन्न्यूनवृत्ति तत्समान धर्मवल्लक्ष्यसजातीयं तद्रहितं विजातीयमित्यत्र विवक्षितत्वेनालक्ष्यत्वे लक्ष्यविजातीयस्याप्युपपत्तेः । ननु प्रमितितत्साधनान्यतरत्व रूपलक्ष्यावच्छेदकाधिकवृत्तिधर्मेषु न्यूनवृत्तिना ज्ञानतत्साधनान्यतरत्वेन सजातीयात्प्रमाणाभासात्तद्र-हिताद्घटादेर्विजातीय तद्व्यावृत्ततया भिन्नतया लक्ष्यावधारणं लक्षणज्ञानफलमिति वक्तव्यम् । तच्चायुक्तम् । अनुप्रमाणस्य साक्षिणः केवलप्रमाणस्य स्वरूपज्ञानस्य चालक्ष्यमात्रभिन्नतया प्रमाण-लक्षणज्ञानेन लक्ष्यप्रमातृभिन्नतया प्रमाणरूपलक्ष्यावधारणायोगादिति चेन्न । व्यावृत्तपदस्य भेदप्रति-निधिविशेषवत्परत्वस्यात्र स्वीकारात् । भेदनिमित्तकशब्दानां भेदकार्यकारिविशेषनिमित्तकस्यापि सत्वात् । तदुक्तमनुव्याख्याने ।

भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम् ।
ब्रूयुर्हरेर्जीवजडैरपि भेदं तु मुख्यतः ।
ब्रह्मतर्कवचोऽप्येवमिति ।

उक्तं च सुधायाम् । विशेषो भेदकार्यं व्यवहारादिकं निर्वहतीति । पूर्वमेवोक्तं विशेषनिष्ठमागमं चाह। भेदशब्दा इति । भेदशब्दा इति । भेदनिमित्ता अन्यादिशब्दा भेदशब्दाः । हरौ विशेषं ब्रूयुरित्यस्यापवादमाह । हरेरिति । एवमन्यत्र भिन्नतामित्यस्यापि क्वचिदपवादो द्रष्टव्यः । ब्रह्मतर्कवचोऽप्येवमावेदयतीत्यपेरर्थ इति । तथा च यथा खलु विद्यमानस्य ज्ञापको नैव कारकः । उपाधिर्दृष्टपूर्वो हि खेऽपि देशान्तरस्य सः । ज्ञापको विद्यमानस्येति । तत्त्वप्रकाशिकाव्याख्यानावसरे । यदाऽऽकाशभेदो नास्तीति सिद्धान्तः । अन्तरशब्दो विशेषवचनः । ततस्तत्प्राग्विद्यमानस्य देशविशेषस्य ज्ञापक एव । स उपाधिरित्यङ्गीक्रियते । न तु भेदस्य कारक इति । नायं दृष्टान्त इत्यनेनाकाशे प्रदेशो नास्तीति स्वमतेऽन्तरशब्दस्य भेदकार्यकारिविशेषार्थकत्वमुक्त्वा घटमठाद्याकारभेदाभ्युपगमस्तदाऽपि घटमठाद्युपाधिः प्राग्विद्यमानस्यैव देशभेदस्य ज्ञापक एव न तु भेदस्य कारक इत्यनेन तद्देशेऽस्तीत्यभ्युपगवादेऽन्तरशब्दस्य भेदार्थकत्वं चाभिहितम् । एवमपि व्यावृत्तपदं भेदवत्परम् । भेदप्रतिनिधिविशेषवत्परं चेत्यभ्युपेयम् । लक्ष्यालक्ष्ययोः प्रायेण भेदस्य सत्त्वात्तत्र भेदकार्यनिर्वाहायात्र व्यावृत्तपदस्य भेदवत्परत्वस्य क्वचिद्भेदाभावेन तत्र भेदज्ञानस्य लक्षणज्ञानफलत्वायोगात्तत्र तत्र प्रमितभेदकार्यनिर्वाहाय भेदप्रतिनिधिविशेषवत्त्वपरत्वस्य चावश्यकत्वात् । तथा च सजातीयविजातीयाभ्यामलक्ष्याभ्यां भेदकार्यविशेषयोरन्यतरवत्तया लक्ष्यावधारणं लक्षणज्ञानफलमित्यर्थाङ्गीकाराद्भेदवत्तया लक्ष्यावधारणस्योक्तस्थलेऽसम्भवेऽपि भेदकार्यकारिविशेषवत्तया लक्ष्यावधारणसम्भवान्नोक्ताशङ्कावकाश इति बोध्यम् । केचित्तु । अपर्यायशब्दान्तरद्विवचनबहुवचन प्रयोगान्यतरापरिशेषाधाराधेयभाव ज्ञातत्वाज्ञातत्वादि रूपव्यवस्था नियामकवत्तया लक्ष्यावधारणं लक्षणज्ञानफलमित्यस्यार्थः । तन्नियामकस्य प्रायेण भेदः क्वचिद्भेदप्रतिनिधिविशेषश्च भवतीति नोक्तचोद्यावकाश इत्याहुः । एतेन लक्ष्यभिन्नस्य कथं न लक्ष्यत्वं कथं च तद्विजातीयत्वं चेति चोद्यमपास्तम् । ज्ञातत्वाज्ञातत्वादिद्विवचन बहुवचनप्रयोगाधाराधेय भावलक्ष्यत्वादि रूपव्यवस्थायां भेदस्येव भेदप्रतिनिधिविशेषस्यापि तन्त्रत्वात् । अत एव खलु न्यायमते घटपटयोर्विकल्पकविषयत्वेऽपितद्भिन्नस्य विशेषणविशेष्यभावस्याधाराधेयत्वभावस्य भेदप्रतियोगिकभेदस्य प्रतियोगिकत्वादेश्च तदविषयत्वं घटरूपयोर्घट इति शब्दजन्यज्ञानविषयत्वेऽपि तदभिन्नस्य विशेषणविशेष्यभावस्याधाराधेयभावस्य, च तत्संसर्गस्य तदविषयत्वम् । घटपटयोर्घटरूपयोश्च स्वावृत्तित्वेऽपि

तदभिन्नस्य विशेषणत्वविशेष्यत्वाधाराधेयत्व प्रतियोगित्वविषयभेदप्रतियोगित्वविषयभेदप्रतियोगिक-भेदादेस्तद् वृत्तित्वम् । निर्विकल्पकस्य घटत्वमात्रं विषयः । विशिष्टज्ञानस्य तु घटत्वविशेषण-योर्द्विवचनप्रयोगः । नीलोत्पलयोरभेद इति द्विवचनप्रयोगः । रूपघटाविति शब्दजन्यज्ञानस्य रूप-घटावेव विषयौ न तु तयोर्विशेषत्वाधारत्वाधेयत्व प्रतियोगित्वादयो विषयाः । रूपवान्घट इत्यादि-ज्ञानस्य तु रूपादिविशेषणत्वविशेष्यत्वाधारत्वादयो विषया इत्यभेदेऽपि बहुवचनप्रयोगः । गुण-गुणिनोः क्रियातद्वतोर्जातिव्यक्त्योश्चाधाराधेयत्व विशेषणत्व विशेष्यत्वभेदप्रतियोगिकभेदविषयत्व-प्रतियोगित्वादयो धर्माः सन्तीति बहुवचनप्रयोगः । रूपलक्षणस्य चक्षुर्ग्राह्यत्वे सति गुणत्वा-देस्तदभिन्नाधारत्वाधेयत्वादावसत्त्वं घटस्य प्रत्यक्षत्वेऽपि तदभिन्नस्यातीन्द्रियगुरुत्वसंसर्गस्याधार-त्वस्यातीन्द्रियत्वम् । स्पर्शस्य स्पर्शवत्त्वेऽपि तदभिन्नस्य वायुनिरूपितस्याधेयस्य त्वतीन्द्रियत्व-मस्पर्शनं चेत्यादिरूपा व्यवस्थोपपद्यते । गुणगुणिनोः क्रियातद्वतोर्जातिव्यक्त्योश्चाधारत्वविशेषत्वा-विशेष्यत्वप्रतियोगिभेदप्रतियोगिकभेदादयो धर्मा न सन्त्येवेति तावत्सम्भवति । तयोर्विशेषणविशेष्य-भावाभ्युपगमो निर्विकल्पकसमूहालम्बनात्मकरूपघटाविति शब्दजन्यज्ञाने च स्वरूपवान्घट इत्यादि-विशिष्टज्ञानस्य विषयकृतविशेषाभावप्रसङ्गाच्च । गुणगुण्यादेर्विषयत्वाभावे च रूपी घट इत्यादिज्ञानस्य निर्विषयतापाताच्च । गुणगुण्यादेः स्वप्रतियोगित्वरहितत्वे तदभावस्य निष्प्रतियोगिकत्वप्रसङ्गाच्च । गुणगुणिभेदप्रतियोगिकभेदस्य गुणगुण्यवृत्तित्वे गुणगुणिभेदस्य गुणगुणिरूपत्वगुणगुण्यावृत्ति-त्वयोरापाताच्च । नाप्याधारत्वादयो धर्माः स्वाश्रयभिन्नाः । समवायाभावपक्षे गुणगुणिनोः क्रिया-तद्वतोर्जातिव्यक्त्योश्च सम्बन्धिभिन्नसम्बन्धाभावेनाधाराधेयभावादेतत्सम्बन्धस्य स्वाश्रयभिन्नत्वा-सम्भवात् । समवायसद्भावपक्षेऽपि तयोः समवायातिरिक्तसम्बन्धाभावाधाराधेयभावादे-स्तत्सम्बन्धस्यासम्बन्धिभिन्नत्वायोगाच्च । पक्षद्वयेऽपि गुणगुण्यादेराधारत्वाधेयत्वविशेषणत्व-विशेष्यत्वप्रतियोगित्वप्रतियोगिकभेदादेः स्वाश्रयभिन्नत्वेऽनवस्थापाताच्च । न च भिन्नानन्तबीजाङ्कुर-परम्परावद्भिन्नानन्ताधारत्वाधेयत्वप्रतियोगित्वभेदादिपरम्परा प्रामाणिकी । घटरूपयोर्भिन्नानन्ता-धारत्वादिपरम्पराया अनुपलब्धेरप्रामाणिकत्वात् । अन्यथा युतसिद्धयोर्दण्डदेवदत्तयोरयुतसिद्धयो-र्गुणगुणिनोः क्रियातद्वतोर्जातिव्यक्त्योश्च भिन्नानान्तसम्बन्धपरम्परया भेदधर्मिकभेदप्रतियोगिक-भेदपरम्परयाऽऽद्यन्ताभावधर्मिकात्यन्ताभावप्रतियोगिकात्यन्ताभावपरम्परायाः प्रागभावप्रतियोगिक-निवृत्तिः । निवृत्तिप्रतियोगिकप्रागभावपरम्परायाश्चाभ्युपगमप्रसङ्गात् । तस्मात्सन्त्येव गुणगुण्यादौ प्रतियोगित्वाधारत्वाधेयत्वादयो धर्माः स्वाश्रयभिन्नाश्चेति सर्वैरपि वादिभिरवश्यमभ्युपेयम् । न च रूपलक्षणं रूपाभिन्ने प्रतियोगित्वादावस्तीति रूपलक्षणज्ञानफलस्य रूपमिति व्यवहारस्य रूप इव

तद्गतप्रतियोगित्वादावप्यापातात् । न चेष्टापत्तिः । रूपगतरूपत्वगुणत्वादाविव तद्गते प्रतियोगित्वाधारत्वाधेयत्वादौ रूपमिति व्यवहारस्य कस्याप्यभावात् । न हि प्रतियोगित्वादिकं रूपमिति कश्चिद्व्यवहरति । अन्यथा रूपे प्रतियोगित्वमस्तीति बहुत्वमस्तीति व्यवहारयोरप्रसङ्गात् । न च स्पर्शगतं वायुनिरूपिताधेयत्वं स्पर्शवत्प्रत्यक्षं स्पर्शनं चेति प्रत्यक्षाप्रत्यक्षनिरूप्यसंस्पर्शस्य वायुस्पर्शयोराधाराधेयभावस्याप्रत्यक्षस्पर्शनत्वयोरयोगात् । नापि घटाद्यभिन्नमपि प्रतियोगित्वादिकं तावन्मात्रशब्दोक्तनिर्विशेषाभिन्नम् । पदवाच्यव्यक्तेर्भूतलवृत्तित्वेन प्रतियोगित्वाधाराधेयत्वादेरपि भूतलवृत्तित्वापातात् । त्वप्रत्ययवैय्यर्थ्याच्च । प्रतियोगित्वाधारत्वाधेयत्वविशेषणत्वविशेष्यत्वविषयत्वघटादिपदानां पर्यायतापाताच्च । घटपदार्थव्यक्तेर्घटव्यक्त्यवृत्तित्ववत्तदभिन्नप्रतियोगित्वादेस्तत्रावृत्तिसङ्गाच्च । घटापदार्थव्यक्तेर्निर्विकल्पकसमूहालम्बनविषयत्ववत्तदभिन्नविशेषणविशेष्यभावादेस्तद्विषयत्वापत्तेरित्याद्यतिप्रसङ्गाच्च । किन्तु तन्मात्रस्वरूपयोर्निर्विशेषाभेदस्तद्रहितं सविशेषाभिन्नमित्येव सर्वैरभ्युपेयम् । प्रतियोगित्वादेः । स्वाश्रयभेदाभावेन भेदप्रतिनिधिना विशेषणोक्तव्यवस्थाया निर्वाह्यत्वात् । तथा च घटो भिन्नमप्यपर्यायपदाभिधेयं प्रतियोगित्वादिकं सविशेषाभिन्नमेव । ननु घटपदार्थव्यक्तिमात्रमित्येवार्थः सर्वैरपि वादिभिः शिरसा धारणीयः । तथोक्तं मायावादखण्डनटीकायाम् । यतो रूपं घटाभिन्नमपि तद्विषयतयाऽङ्गिक्रियते न तु तन्मात्रमिति । तद्विशेषतया घटाभिन्नं विशेषः स्वरूपविशेषस्तस्य भावस्तत्ता तया घटाभिन्नस्वरूपविशेषतया सविशेषाभिन्नघटधर्मतयेति यावत् । यद्वा घटाद्विशेषो यस्य तत्तथा तस्य भावस्तत्ता तया सविशेषतयेति यावत् । घटाभिन्नमित्यनुवर्तते । सविशेषतया घटाभिन्नमङ्गीक्रियत इत्यर्थः । ननु तन्मात्रं घटपदाभिधेयं घटस्वरूपं यत्तदेव तत्तन्निर्विशेषाभिन्नो नेत्यर्थः । अतो रूपपदं यावद्द्रव्यभाविरूपपरमिति ज्ञातव्यम् । उक्तं च तत्त्वसङ्ख्यानटीकायाम् । स्वरूपेण भावाभावौ विधिनिषेधात्मानौ रूपान्तरेण विधिनिषेधरूपौ तत्र प्रथमजायां संविदि स्वरूपमवभासते । द्वितीयादिप्रतीतौ रूपान्तरमिति स्वरूपेण निर्विशेषं यद्धि धर्मिरूपं तेनेत्यर्थः । रूपान्तरेण निर्विशेषाभेदरहितं वा सविशेषाभिन्नं वा यद्धर्मरूपं तद्रूपान्तरं तेनेत्यर्थः । उक्तं च तत्त्वप्रकाशिकाटीकायाम् । न निर्विशेषवस्तुमात्रं भेदः । तथा सति वस्तुमात्रस्य परेणाङ्गीकृतत्वाद्विवादानुपपत्तेः किं नामान्योन्याभाव एव । स च रूपादिमद्वस्तु नाऽभिन्न इत्येव स्वरूपं भेद इत्यस्यार्थ इति । तस्माद्यथावदस्यार्थोपस्थापकतया रूढेरुत्सर्गतस्तन्त्रत्वं रूढ्यभावे तु तत्प्रतिनिधेरमुख्यवृत्तेस्तन्त्रत्वमेवमुक्तव्यवस्थायामुत्सर्गभेदस्य प्रयोजकत्वम् । भेदाभावे भेदप्रयोज्योक्तव्यवस्थायां च सत्यां भेदप्रतिनिधेः कस्यचिदाधाराधेयभांवज्ञातत्वाज्ञातत्वादिरूपप्रयोज्यसमानाधिकरणस्य प्रयोजकत्वं सर्वैर्वादिभिरभ्युपेयम् । प्रयोजकव्यतिरेकेण प्रयोज्यासम्भवात् । स एवास्माभिर्विशेषशब्देन कथ्यते । तदुक्तम् ।

भेदहीने त्वपर्यायशब्दान्तरनियामकः ।
विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषत इति ।

तथा च भूतलवृत्तिघटाभिन्नमपि प्रतियोगित्वाधेयत्वादिकं भूतलावृत्तीतिवत्प्रत्यक्षं स्पर्शाभिन्नमपि वायुनिरूपिताधेयत्वमप्रत्यक्षमस्पर्शनं चेतिवच्च प्रमाणभिन्नमपि प्रमात्वादिकं विशेषबलादलक्ष्यं लक्ष्यविजातीयं च भविष्यतीति न काऽप्यनुपपत्तिरिति । अलक्ष्यव्यावृत्तितया लक्ष्यावधारणं कथं लक्षणफलमिति जिज्ञासायामाह ।। **अस्मिन्ग्रामे देवदत्तगृहमिति** । गृहमित्यनन्तरमस्तीति शेषः । सर्वेष्वपि गृहेषु देवदत्तगृहबुद्धिः प्रसक्ता । तद्देवदत्तगृहमिदं न देवदत्तगृहमिति सन्देहरूपा बुद्धिः प्राप्तेत्यर्थः ।। **ततो यत्र पताकेति** । ततस्तदुक्तसन्देहानन्तरं यत्र यस्मिन्गृह इत्यर्थः । तद्ग्रामस्थगृहेष्वित्यनुवर्तते । तद्देवदत्तगृहमस्तीत्यत्रेतिशब्दो लक्षणाकारप्रदर्शकः । यद्वा । इतिशब्दानन्तरं वाक्यादपि पूरणीयम् । लक्षणज्ञाने सति तस्य देवदत्तस्य गृहस्यैतद्ग्रामस्थगृहवर्तिपताकारूपलक्षणज्ञाने जात इत्यर्थः ।। **इदमेवेति** । देवदत्तगृहमित्यनुवर्तते । लक्षणज्ञानस्य प्रयोजनान्तरमाह ।। **शब्दव्यवहारो वेति** । शब्दो व्यवह्रियतेऽनेनेति व्युत्पत्त्या शब्दवाच्यत्वज्ञानमित्यर्थः । वाच्यत्वज्ञानस्य लक्षणज्ञानफलत्वमुपपादयति ।। **सास्नादिमान्गौरिति** । यं यं सास्नादिमन्तं पिण्डं पश्यति यावन्तमर्थं सास्नादिमत्त्वरूपलक्षणविशिष्टं प्रत्येति । तं तं तावन्तं सर्वं गोशब्दवाच्यं जानातीत्यर्थः । ननु यस्य लक्षणमुच्यते तल्लक्ष्यमिति लक्ष्यज्ञानं लक्षणज्ञानाधीनम् । लक्षणस्यापि लक्ष्यघटितत्वेन लक्षणज्ञानं लक्ष्यज्ञानाधीनमित्यन्योन्याश्रय इत्यत आह ।। **यावदन्यतो व्यावर्तनीयमिति** । तदुच्यते लक्ष्यमिति वक्ष्यमाणमत्रापि सम्बध्यते । यावद्यज्जातीयं सर्वमन्यतस्तज्जातिरहितात् तज्जातीयाच्च व्यावर्तनीयम् । अपर्यायादिशब्दवाच्यत्वादिनियामकवत्तया ज्ञातव्यं तल्लक्ष्यामित्यर्थः । प्रकारान्तरेण लक्ष्यरूपं कथयति ।। **यावतीति** । यज्जातीये सर्वस्मिन्नित्यर्थव्युत्पादनीयो वाचकत्वेन ज्ञापनीय इत्यर्थः ।

## प्रमाणसामान्यलक्षणम्

**(६) प्र.प.— तत्रादौ तावत्प्रमाणसामान्यलक्षणमुच्यते । यथार्थं प्रमाणम् । प्रमाणमिति लक्ष्यनिर्देशः । यथार्थमिति लक्षणोक्तिः । एवमुत्तरत्रापि ज्ञातव्यम् । अत्र यथाशब्दोऽनतिक्रमे वर्तते । अर्थशब्दश्चार्यत इति व्युत्पत्त्या ज्ञेयवाची । ज्ञेयमनतिक्रम्य वर्तमानं यथावस्थितमेव ज्ञेयं यद्विषयीकरोति नान्यथा तत्प्रमाणमित्यर्थः ।**

**जना.**— शिष्टबुद्धिसौकर्यायोत्तरत्र वक्ष्यमाणमादौ दर्शयति ।। **तत्रेति** । प्रमाणलक्षणविभागादीनां मध्य इत्यर्थः । प्रथममवच्छेदेकैक्येनैक्यमापन्नस्यैवानन्तरं विभज्योद्देष्टव्यत्वात्सामान्य लक्षण-

कथनान्तरमेव तद्विभाग इति वक्तुमादौ सामान्येति चोक्तम् । क्रमेण विशेषलक्षणादिकमभिधीयत इति वक्तुं तावदित्युक्तम् । अधुना तदर्थमिदमारभ्यत इति प्रतिज्ञानुसारेणाचार्योक्तमेव प्रमाणलक्षणामाह ।। **यथार्थमिति ।** यथाशब्दस्य योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यरूपार्थचतुष्टयत्त्वात्तेषां मध्ये वीप्सायाः शब्दधर्मत्वेन प्रकृतेऽयोगाद्योग्यताया विवक्षितत्वेऽतीन्द्रियप्रमायामव्याप्तेरुल्लेखयोग्यविषयत्वस्य भ्रमसाधारण्यात्सादृश्यं तु न वक्ष्यमाणाद्यथाशब्दार्थानतिक्रमात्पर्यवसानगत्या भिद्यत इति मन्वानः स्वाभिमतं यथाशब्दार्थमाह ।। **अत्रेति ।** अत्रेत्युक्त्या न सर्वत्रेत्यर्थः । अत्र यथार्थं प्रमाणमिति प्रमाणलक्षणोदीरितवाक्ये । एतेन यथार्थज्ञानजनका यथार्था युक्तयः स्मृता इत्यनुव्याख्यानेऽपि यदि यथाशब्दस्यानतिक्रमार्थकत्वं तदा यथाऽसादृश्य इति सूत्रेणाव्ययीभावसमासे सत्यव्ययीभावश्चेति सूत्रेणाव्ययत्वे सति यथार्थं युक्तय इति भवितव्यमिति निरस्तम् । तत्र यथाशब्दस्य सादृश्यार्थमादाय बहुव्रीहिसमासे साधुत्वसम्भवाज्ज्ञानार्थयोश्च मन्दारमञ्जरीरीत्या सत्त्वमेव सादृश्यं तथा च यथार्थां युक्तय इत्यत्र यथा सदृशाः सन्तोऽर्था यासां ता इति बहुव्रीहिः । अत एवोक्तं सुधायाम् । अव्ययीभावस्य क्लीबाव्ययत्वं छन्दःकल्पत्वेनानादृत्य यथार्था इत्युक्तं कथञ्चिद्बहुव्रीहितामाश्रित्येति । न चानुव्याख्याने यथाशब्दस्य सादृश्यार्थकत्वे यथाशब्दोऽनतिक्रमे वर्तत इत्यस्य सुधया साकं विरोधः स्यादिति वाच्यम् । अबाधितार्थविषयीकारित्वरूपसुधोक्तलक्षणस्य यथावस्थितज्ञेयविषयीकारित्वरूपानातिक्रमघटितलक्षण एव पर्यवसानात्फलत ऐक्येन विरोधानवकाशात् । अत एवोक्तं मन्दारमञ्जर्याम् । यथाशब्दोऽनतिक्रमे वर्तत इति टीकाकारवचनं तु फलितप्रदर्शनपरतया व्याख्यातव्यमिति । एतावत्या कुसृष्ट्या किं सादृश्यार्थकत्वस्वीकारेणेति चेत् । यथार्था युक्तयः स्मृता इत्यादिप्रयोगनिर्वाहार्थमिति सङ्क्षेपः । अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यभिधानादर्थशब्दस्य नानार्थत्वात्तेषां मध्येऽभिधेयादिवाचित्वे प्रत्यक्षादिज्ञानेऽव्याप्तिप्रसङ्गाद्विषयापरपर्यायवस्तुवाचित्वे सकर्मकक्रियामात्रेऽतिव्याप्तेः । कोऽत्रार्थशब्देन विवक्षित इति जिज्ञासायामाह ।। **अर्थशब्दश्चेति ।** ननु कथमर्थशब्दस्य ज्ञेयवाचित्वम् । तत्र रूढेरभावादित्यत आह ।। **अर्यत इतीति ।** ऋगताविति धातोः कर्मण्यौणादिके थप्रत्यये कृते सार्वधातुकार्धधातुकयोरिति गुणे च कृते ऋवर्णस्थानीयत्वेन ऋकारस्थान आदिश्यमानस्याकारस्य गुणस्योरण्रपर इति रपरत्वे च सति अर्थ सति रूपसिद्धिः । ऋधातोर्गत्यर्थत्वेन ज्ञानार्थदर्थशब्दो ज्ञेयवाचीति भावः । यथार्थशब्दस्याव्ययीभावसमासे विग्रहं दर्शयति ।। **ज्ञेयमिति ।** अव्ययीभावसमासे आदिपदस्योपरि निपातेनार्थशब्दस्योपरि निपातः । अत्र कुम्भस्य समीपे उपकुम्भमितिवत् । ज्ञेयमनतिक्रम्येत्येतावानेव यथार्थशब्दार्थः । तथा सति यथार्थं प्रमाणमिति वाक्यस्य ज्ञेयमनतिक्रम्य प्रमाणमित्यर्थप्रतीत्याऽन्वयापर्यवसानेन तत्पूर्त्यमध्याहृत्याह ।।

**वर्तमानमिति ।** नन्वत्रानतिक्रमः किं यथा प्रातर्गार्हपत्याहवनीययोर्जुहुयादित्यत्र होमद्वयस्य समानकालत्ववत्प्रमाणज्ञेययोः समानकालत्वमाहोस्वित् यथा कौशाम्बिदेवदत्तो व्याघ्रसूकरावपश्यदीत्यत्रेव समानदेशत्वम् । नाद्यः । अतीतानागतगोचरयथार्थज्ञानेऽव्याप्तेः । न द्वितीयः । विषयसमानदेशत्वस्यान्तरसुखादिज्ञाने सत्त्वेऽपि बाह्यघटादिज्ञानेऽभावेनाव्याप्तेरित्याशङ्कापरिहाराय वाक्यतात्पर्यार्थमाह ॥ **यथावस्थितमेवेति ।** शुक्तौ रजतारोपस्यापि धर्म्यंशे यथावस्थितज्ञेयविषयीकारित्वात्प्रामाण्यापत्तावाह ॥ **नान्यथेति ।** अयं भावः । शुक्तौ रजतारोपस्य धर्म्यंशे यथावस्थितज्ञेयविषयीकारित्वात्प्रामाण्यं स्यादिति वदन् प्रष्टव्यो जायते । किं विशेष्यभूतशुक्त्यंशे प्रामाण्यं स्यादित्युत विशेषणीभूतरजतत्वांश इति । आद्य इष्टापत्तिः । यत्तु यदंशे यथावस्थितज्ञेयविषयीकारि तत्तदंशे प्रमाणमिति विवक्षितत्वात् । न द्वितीयः । तस्य रजतत्वांशे यथावस्थितज्ञेयविषयीकारित्वाभावेन प्रामाण्यापादनानवकाशादिति ॥ **इत्यर्थं इति ।** इति तात्पर्यविषयीभूतार्थ इत्यर्थः । नन्वत्र ज्ञेयविषयीकारित्वं नाम येन केनचिद्यज्ज्ञेयं तद्विषयीकारित्वं वाऽहोस्वित्स्वसम्पादिता या ज्ञेयता तदुपलक्षितविषयीकारित्वं वा । नाद्यः । गम्यविषयीकारिगतावतिव्याप्तेः । तस्या अप्ययं ग्राम इति ज्ञानेन ज्ञेयस्य ग्रामस्य विषयीकरणात् । न द्वितीयः । अनुप्रमाणे चक्षुरादावव्याप्तेः । यथार्थज्ञानस्य ज्ञेयत्वघटकत्वेनोपाधितया ज्ञेयतासम्पादकत्वेऽपि चक्षुरादेस्तदभावादिति चेन्न । द्वितीयपक्षस्यैव विवक्षितत्वात् ।

**राघ.**— एवमुपयुक्तमुक्त्वा प्रमाणसामान्यलक्षणोक्तिं प्रतिजानीते ॥ **तत्रेति ।** तत्र लक्ष्यलक्षणादिस्वरूपे ज्ञाते सतीति वा । आद्यपद्येनैवोद्देशे सतीति वा । सामान्यलक्षणविभागविशेषोद्देशादिषु मध्य इति वा । आदौ हेतुगर्भमिदम् । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यं चेति यथाशब्दार्थचतुष्टयेऽत्र विवक्षितार्थमाह ॥ **अत्रेति ।** अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यनेकार्थकशब्दार्थेष्वत्र विवक्षितमर्थमाह ॥ **अर्थशब्दश्चेति ।** कर्मव्युत्पत्त्येत्यर्थः । व्युत्पत्तिरवयवशोऽर्थकथनम् । ऋगताविति धातोः कर्मण्यौणादिकेथप्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे कृतेऽर्थ इति निष्पत्तेः । गत्यर्थस्य ज्ञानार्थत्वात् । ज्ञानोपलक्षितवस्तुवाचीत्यर्थः । पदार्थमुक्त्वा वाक्यार्थमाह ॥ **ज्ञेयमिति ।** ज्ञानोपलक्षितमित्यर्थः । तेन ग्रामं गच्छतीत्यादौ ग्रामस्यापि वस्तुतो ज्ञेयत्वात्तदनतिक्रान्तायां क्रियायां नातिव्याप्तिः । तत्र ग्रामस्य क्रियोपलक्षितत्वेन क्रियोपलक्षितग्रामविषयकत्वेन ज्ञानोपलक्षितग्रामानतिक्रमाभावात् । फलितमाह ॥ **यथावस्थितमिति ।** येन प्रकारेणावस्थितमेव ज्ञानपरिचायितं वस्तु यद्विषयीकरोतीत्यर्थः । तत्प्रमाणमित्यर्थ इत्यत्र प्रमाणमित्युच्यत इति शेषोक्त्या व्यवहारसाधकत्वं बोध्यम् । तेन न पुनरुक्ततादोषः । अत्रानातिक्रमणरूपे यथापदार्थेऽनतीत्यंशार्थो यथावस्थितमेवेति । अर्थपदार्थो ज्ञेयमिति । क्रमणपदार्थो विषयीकरोतीति ज्ञेयम् ।

**विज.—** आदाविति प्राधान्यमाह । शिष्यबुद्धिसमाधानार्थमाह ॥ **प्रमाणेति** । सामान्यस्याज्ञाने विशेषजिज्ञासानुदयाद्वक्ष्यमाणविशेषलक्षणसङ्गतिमाह ॥ **सामान्येति** ॥ **यथार्थमिति** । लक्ष्यलक्षणयोर्लक्ष्यत्वलक्षणत्वभ्रान्तिं वारयितुमाह ॥ **प्रमाणमिति** । लक्ष्यनिर्देश इति । उक्तन्यायमतिदिशति ॥ **एवमिति** । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु यथाशब्दार्थेष्वभिप्रेतमर्थमाह ॥ **अत्रेति** । अत्र लक्षणे । ननु घटाद्यर्थमतिक्रम्यात्मन्यन्तः करणे वा ज्ञानादेर्वर्तमानादव्ययीभावार्थपदार्थानतिवृत्तेरसम्भव इत्याशङ्क्याह ॥ **अर्थशब्दश्चेत्यादिना प्रमाणमित्यर्थ इत्यन्तेन** । तथा च विषयीकारे पदार्थानतिविलक्षणान्नासम्भव इत्यर्थः । एवं च येन सम्बन्धेन यद्यत्रास्ति तेन सम्बन्धेन तत्र तद्विषयिकारि प्रमाणमिति द्रष्टव्यम् । एतेन ज्ञेयविषयीकारित्वं यदि विषयविषयिभावः सम्बन्धस्तदेच्छायामतिव्याप्तिः । यदि च ज्ञेयविषयकज्ञानत्वं तदेन्द्रियादावनुप्रमाणेऽव्याप्तिः । यदि च ज्ञानजनकत्वागर्भं तदार्थेऽतिव्याप्तिः । तत्साधनत्वगर्भत्वे ज्ञानेऽव्याप्तिः । न च ज्ञानतत्साधानान्यत्वं विवक्षितमिति साम्प्रतम् । तदन्यान्यत्वस्य तदन्यभेदात्मकस्यैतल्लक्षणसाध्यत्वेनासिद्धेरिति परास्तम् । ज्ञेयेन सह ज्ञानतद्विषयत्वतत्साधनान्यानिरूपितसविषयत्वव्यवहारप्रयोजकसम्बन्धवत्प्रमाणमिति तल्लक्षणार्थस्य विवक्षितत्वात् । एवं च पुरोवर्तिनि घटत्वज्ञाने घटादौ चक्षुरादिप्रमाणं घटादौ प्रत्यक्षं प्रमाणमित्यादौ सप्तम्यर्थरूपविषयत्वानुभवेन पूर्वोक्तसम्बन्धस्य केवलानुप्रमाणयोः सत्त्वात् । घटे घटः प्रमाणमित्यनुभवाभवादिच्छाविषयत्वस्यान्यनिरूपितत्वान्न किञ्चिद्दूषणमिति मन्तव्यम् ।

**वेदे.—** ॥ **तत्रेति** । वक्तव्यत्वेन बुद्धिस्थानामुद्देशलक्षणपरीक्षणां मध्य इत्यर्थः । तत्रोपयुक्ते । निरूपित इति शेष इत्यप्याहुः । उद्देशस्य प्रमाणमित्यनेनैव लाभात्सामान्यलक्षणोक्तिं विना विभागावसराभावात्तावत्र न प्रकृताविति ध्येयम् । यथार्थज्ञानं केवलमित्यादौ विशेषलक्षणाभिधानमिह तु सामान्यलक्षणामिधानमतो न पुनरुक्तिरिति भावेन सामान्येत्युक्तम् । विशेषलक्षणस्याप्युत्तरत्राभिधानस्य भावेन तावदित्युक्तम् । मन्दानां लक्ष्यलक्षणवैपरीत्यभ्रममवारणाय तद्विवेकमाह ॥ **प्रमाणमिति** । योग्यता वीप्सा पदार्थानतिक्रमः सादृश्यं चेति यथाशब्दार्थः । तत्र तावन्न सादृश्यमत्र यथाशब्दार्थत्वेन विवक्षितम् । यथाऽसादृश्य इत्यव्ययीभावविधाने सादृश्यान्यत्वेन विशेषणात् । समासान्तरस्य चासामर्थ्यादिना प्रतिहतत्वात् । अर्थात्यन्तसादृश्यस्य ज्ञानादावसम्भवात् । यत्किञ्चित्सादृश्यस्य चातिव्यापकत्वाच्च । योग्यतावीप्सार्थत्वे तु वाक्यशेषाभावेनार्थयोग्यतां विनाऽर्थानां वा प्रामाण्यापत्तिरतोऽत्र यथाशब्दः पदार्थानतिक्रमवाची विवक्षित इत्याह ॥ **अत्रेति** । लक्षणवाक्य इत्यर्थः । नन्वर्थशब्दोऽभिधेयधनवस्तुप्रयोजननिवृत्तिषु वर्तते । तथाऽभिधानम् । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरकोशे । तत्र न तावदभिधेयार्थः सम्भवति । अव्याप्तिप्रसङ्गात् । अभिधेया-

नतिक्रमस्य शब्दमात्रवृत्तेर्धनाधनातिक्रमस्यापि तत्तज्ज्ञानमात्रवृत्तित्वात् । अतो विषयापरपर्याय-वस्तुवाचक एव विवक्षितो वाच्यः । न तत्सम्भवति । गमनादावतिव्याप्तेः । न हि गमनं गम्य-मतिक्रम्य वर्तते । नापि च्छिदा छेद्यमित्यत आह ।। **अर्थशब्दश्चेति ।** तत्र रूढ्यभावादाह ।। **अर्यत इति ।** अर्तेरौणादिकस्यथप्रत्ययस्य सिद्धत्वत् । गत्यर्थानां ज्ञानार्थत्वादिदिति भावः । एवं पदार्थमुक्त्वा वाक्यार्थमाह ।। **ज्ञेयमिति ।** नन्वेवमपि न गमनादावतिव्याप्तिपरिहारः । गमनादीनामपि ज्ञेयम-नतिक्रम्य वर्तमानत्वात् । न हि तद्विषयो ग्रामादिः सर्वथा न-ज्ञेय इति वक्तुं शक्यते । पित्रादिवज्ज्ञेय-शब्दस्य सम्बन्धिशब्दत्वेन स्वज्ञेयमनतिक्रम्य वर्तमानं यत्तत्प्रमाणमित्यर्थात् । स्वमेयत्वं च स्वोपाधिक ज्ञेयत्वोपेतत्वं भवति च घटादिर्ज्ञानतत्करणाभ्यामुपाधिनिमित्ताभ्यां ज्ञेयः । तथा च न गमनादावति-व्याप्तिः । न हि गमनेनोपाधिना गमनेन वा निमित्तेन ग्रामो ज्ञेयः किन्तु गम्य एवेति कथमव्याप्तिः । न च स्वशब्दस्य प्रमाणपरत्वेनात्माश्रयः । ज्ञानतत्करणाभ्यामुपाधिनिमित्ताभ्यां यज्ज्ञेयं तदनक्रिम्य वर्तमानं प्रमाणमित्यर्थात् । स्वगुणग्राहकमिन्द्रियं श्रोत्रमित्यत्र यथेति । ननु ज्ञेयमनतिक्रम्य वर्तमानत्वं ज्ञानस्य तत्करणस्य वा कथम् । तस्यान्तःकरणादिवृत्तित्वेन तदतिक्रम्यैव वर्तमानत्वात् । न च यथावस्थितज्ञेयविषयीकारित्वं तद्वदाक्षतमिति वाच्यम् । तथा सति विभ्रमेऽतिव्याप्तिप्रसङ्गात् । तस्यापि यथावस्थितेदमंशविषयत्वादित्यत आह ।। **यथावस्थितमेवेति ।** विभ्रमस्तु यथावस्थितमपि विषयीकरोति । अविद्यमानरजताद्युल्लेखादतो नातिव्याप्तिरिति भावः ।

**अभि.—** प्रमाणसामान्यलक्षणमुच्यत इति प्रतिज्ञातत्वाद्यथार्थं प्रमाणमिति सर्वमपि लक्षणमिति भ्रमं वारयितुमाह ।। **प्रमाणमिति लक्ष्यनिर्देश इति ।** एतेन बोधार्थं लक्ष्यलक्षणविभागश्चे-ल्लक्षणलक्षणादावेव वक्तव्यः । तद्विहायात्र कथनमयुक्तमिति परास्तम् । ननु यथाशब्दस्य त्रयोऽर्थाः । योग्यता वीप्सा सादृश्यं चेति । तत्र न तावत्सादृश्यार्थत्वं सम्भवति । यथाऽसादृश्य इत्यसादृश्य-विहिताव्ययीभावसमासानुपपत्तिप्रसङ्गात् । नापि प्रथमद्वितीयौ । क्रमेणार्थस्य योग्यतायामर्थस्य वीप्सायां चातिव्याप्तिप्रसङ्गादित्यत आह ।। **यथाशब्द इति ।** यथाशब्दस्य न त्रय एवार्थाः किन्तु पदार्थानतिवृत्तिरपि । तदुक्तं सुधायाम् । योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं च यथाशब्दार्था इति । पदार्थमुक्त्वा वाक्यार्थमाह ।। ज्ञेयमतिक्रम्येति । नन्विदं लक्षणं विभ्रमेऽतिव्याप्तम् । विभ्रमस्य ज्ञेयतातिरिक्तविषयत्वाभावेन ज्ञेयमनतिक्रम्य वर्तमानत्वादित्यतः स्वाभिसन्धिमुद्धाटयति ।। **यथा-वस्थितमेवेति ।** ज्ञानस्य ज्ञेयानतिक्रमो नाम ज्ञेयभिन्नविषयत्वाभावः । येन भ्रमेऽतिव्याप्तिः स्यात् । किन्नाम यद्देशकालयोर्यद्वस्तु यथा वर्तते तथैव तद्विषयीकारित्वमनतिक्रमो विवक्षित इति भावः । एतेन यथाशब्दस्यानतिक्रमवाचिनः प्रमाणधर्मप्रतिपादकत्वेनार्थविशेषणार्थत्वाभावाद्यथावस्थितमेवेत्याशय-वर्णनमपदार्थत्वादवाक्यार्थत्वादयुक्तमिति परास्तम् । यथाशब्दमहिम्नैवास्यार्थस्य लाभात् ।

**आद.— ॥ तत्रादाविति ।** विभागादितः पूर्वकाल इत्यर्थः । सामान्यधर्मज्ञानानन्तरमेव विशेषधर्मावच्छिन्ने जिज्ञासोदयात् । प्रतिज्ञावाक्येनादौ सामान्यलक्षणस्यैव जिज्ञासितत्वात्तदेवादौ वक्तव्यमित्याशयः । लक्षणोक्तिप्रतिज्ञानन्तरं प्रवृत्तमिदं वाक्यं लक्षणपरमेवेति मन्दां शङ्कां निवर्तयति ॥ **प्रमाणमिति लक्ष्यनिर्देश इति ।** प्रमाणपदतात्पर्यविषयत्वं लक्ष्यतावच्छेदकम् । प्रमाणत्वरूपसामान्यधर्मे जातिरूपे मानाभावात् । वक्ष्यमाणलक्षणस्य प्रमाणपदार्थत्वात् । अत एव भ्रमेपीदमंशे प्रमाणमिति व्यवहारः । एतत्तत्त्वं व्यक्तीभवत्युपरिष्टात् । **लक्षणकथनमिति ।** प्रमाणपदशक्यतावच्छेदककथनमित्यर्थः । ननु यथाशब्दस्य सादृश्यार्थकत्वं न सम्भवति । यथाऽसादृश्य इति सादृश्यार्थकयथाशब्दस्याव्ययीभावसमासनिषेधात् । समासविधेरनित्यत्वमङ्गीकृत्य समासाङ्गीकारेऽप्यर्थानुपपत्तेः । तथा हि । अर्थसादृशं प्रमाणमित्युक्तं स्यात् । ज्ञानस्य गुणत्वादर्थस्य द्रव्यादिरूपत्वात्सादृश्यायोगात् । येन केनापि रूपेण साजात्यस्य भ्रमेऽपि सत्त्वात् । न च सत्तायाः साजात्यं विवक्षणीयम् । भ्रमविषयस्यासत्त्वात्स्वविषयसाजात्यादतिव्याप्तेः । न चाधिष्ठानातिरिक्तविषयसजातीयत्वं यदाकारं यद्विज्ञानं तत्सजातीयत्वं वा विवक्षितमिति रजताकारे विभ्रमे रजतसजातीयत्वाभावान्न दोष इति वाच्यम् । शशविषाणमसदिति प्रमायामव्याप्तेः । तत्र स्वविषयीभूतशशविषाणादिसजातीयत्वाभावादित्यत आह ॥ **यथाशब्दोऽनतिक्रमे वर्तत इति ।** अतिक्रमो नामान्यसम्बन्धित्वम् । ज्ञानस्यार्थानतिक्रमो नामार्थान्यासम्बन्धित्वमर्थान्याविषयकत्वे सत्यर्थविषयकत्वं पर्यवसितम् । अर्थानुरूपसम्बन्धशून्यत्वस्य महतां पूजाया अकरणे तेषामतिक्रमः कृत इति सार्वजनीनव्यवहारात् । यो यादृशस्तत्स्वरूपानुसारेण स्थित्याभावस्यातिक्रमशब्दार्थत्वं ज्ञेयम् । एवं महतां समक्षं नीचस्यापि तत्साम्येन पूजायाः करणेऽपि तेषामतिक्रमः कृत इति सार्वजनीनव्यवहारात् । तदन्यसम्बन्धित्वस्यापि तदतिक्रमशब्दार्थत्वम् । एवं च ज्ञानार्थयोरनुरूपः सम्बन्धो विषयविषयिभाव एवेत्युक्तार्थलाभात् । नन्वत्रार्थपदस्य प्रयोजनादिपरत्वे उदासीनार्थावगाहिनोऽप्रामाण्यं स्यात् । अभिधेयार्थकत्वे त्वसत्पदाभिधेयत्वेन ज्ञानसामान्येऽप्यतिव्याप्तिः । किञ्च क्रियासामान्येऽप्यतिव्याप्तिः । गत्यादिक्रियायाः स्वविषयीभूतग्रामादिसम्बन्धित्वे सति तदनधिकरणीभूतस्वोत्तरदेशासम्बन्धित्वात् । स्वपूर्वदेशविषयका गतयो ग्रामप्राप्तिरूपगत्युद्देश्यका एवेति परम्परया ग्रामविषयका एव । अत एव ग्रामोत्तरदेशगमन एवातिक्रान्तो ग्राम इति सर्वलोकव्यवहारः । तासां गतीनां ग्रामविषयकत्वे विवादेऽपि प्राप्तिरूपगतावतिव्याप्तिर्दुर्वारेत्यत आह ॥ **अर्थशब्द इति ।** नन्वसतोऽपि ज्ञेयत्वादुक्तदोषतादवस्थ्यमिति चेन्न । ज्ञेय इत्यस्य ज्ञानोत्पत्तिप्रयोजककरणसन्निकर्षप्रयोज्यविषयताश्रय इत्यर्थः । तथा चासतः करणसन्निकर्षाश्रयत्वाभावान्न तद्विषयके ज्ञानेऽतिव्याप्तिः । एवं न गत्यादावतिव्याप्तिः ।

ज्ञानप्रयोज्यविषयताऽश्रयनिष्ठविषयतानिरूपकत्वमित्यत्र ज्ञेयनिष्ठविषयतापदेन ज्ञानप्रयोज्यैव विलक्षणैवाकाराख्यविषयतानिरूपितैव विषयता प्रतीयते। ज्ञाततायाःखण्डितत्वात्। यथा पितुर्द्रव्यं सुतो गृह्णीयादित्युक्तौ द्रव्यविशेष एव प्रतीयते। सर्वेषां जनकपुंस्त्वाख्यपितृत्वसत्त्वेन सर्वपितृ-सम्बन्धिद्रव्यम्। तथा धूमवत्त्वपदाद्धूमवद्धर्मत्वेन धूम एव प्रतीयते न तु तद्वृत्तिधर्मान्तरं शब्द-स्वाभाव्यात्। एवं प्रकृतेऽपि ज्ञेयनिष्ठविषयतेत्युक्तौ ज्ञानप्रयोज्यविषयताभानात्तन्निरूपकत्वं स्वज्ञानातिरिक्तक्रियायामभावाद्दोषाभावात्। एतादृशसन्निकर्षाश्रयश्च यथावस्थितार्थ एव भवतीत्या-शयेनाह ॥ **यथावस्थितमेवेति**। केचित्तु। सर्वस्यापि शब्दस्य स्ववाच्येषु मध्ये यन्मुख्यं प्रथम-तस्तदुपस्थापकत्वं स्वभावः। अत एव न भ्रान्ते ज्ञानिपदप्रयोगः। ज्ञानिपदादपरोक्षज्ञानिन एवोत्सर्गतः प्रतीतेः। एवं च ज्ञानगतायाः करणसन्निकृष्टार्थप्रकाशनशक्तिरूपाया विषयिताया औत्सर्गिकत्वाद्दोषप्रयोज्याया अन्यशक्तेरागन्तुकत्वात्स्वाभाविकागन्तुकयोः स्वाभाविकाया एव मुख्यत्वाद्दोषाप्रयोज्यविषयितानिरूपितविषयाश्रयएव प्रथमं प्रतीयते। तादृशश्च यथावस्थित एव भवतीत्यतो न दोष इत्याशयेनाह यतावस्थितमेवेतीत्याहुः। नन्वेवमपि शशविषाणमसदिति प्रतीताव-व्याप्तिः। यथावस्थितार्थविषयकत्वमित्यस्य येन धर्मेण विशिष्टो यस्तादृशविशिष्टविषयकत्वे सति तदन्यविशिष्टाविषयकत्वमित्यर्थकत्वेन प्रकृते विषाणो शशीयत्वस्य भानेन विषाणस्य तादृशत्वतादृश-विशिष्टनिष्टविधिरूपविषयतानिरूपकत्वे सति विशिष्टत्वाभावेनोक्तविशिष्टान्यत्वात्। न च तादृश-प्रतीतावखण्डसत एव भानं न विषाणादौ शशीयत्वं प्रतीयत इति वाच्यम्। अनुभवविरोधात्। तादृशाखण्डव्यक्तेः पूर्वबुध्यनारूढत्वेन तत्र शक्तिग्रहासम्भवेन शशविषाणपदात्तस्योपस्थितेरयोगात्। विषाणं न शशीयमिति बाधग्रहदशायामपि तादृशसद्विशेषे सत्त्वासत्त्वावगाहिबोधप्रसङ्गाच्चेति चेत्। मैवम्। तदन्यविशिष्टाविषयत्वमित्यस्य तदन्यविशिष्टनिष्ठ विधिरूपविषयतानिरूपकान्यत्वमित्यर्थकत्वेन दोषाभावात्। शशीयत्वविशिष्टविषाणनिष्ठाविषयताया विधिरूपत्वाभावात् तस्या विषयताया अनुवाद-रूपत्वात्। असत्त्वविषयतैव विधिरूपाविधिरूपत्वमनुवादरूपत्वं च प्रकारतात्वादिवद्विषयतागतोऽनु-भवसिद्धो जातिविशेषः। सा प्रतीतिः शशीयत्वांशे न मानम्। नापि भ्रमः किन्त्वसत्त्वांश एव। तथा च तद्वन्निष्ठा या तद्धर्मनिष्ठविधिरूपविषयता तन्निरूपकत्वे सति तदवृत्तिधर्मनिष्ठविधिरूपविषयता-निरूपिततन्निष्ठविषयतानिरूपकान्यत्वमिति निष्कर्षः। केचित्तु यथावस्थितेत्यस्य दोषाप्रयोज्यता-विषयतावत्त्वे सति दोषप्रयोज्यविषयताशून्यत्वमित्यर्थः। लक्षणवाक्यादुक्तरीत्योक्तार्थस्यैव प्रतीतेः। वस्तुतो यथावस्थितार्थविषयताया एव दोषाप्रयोज्यत्वाबाहुलिकाभिप्रायेण स्फुटप्रतिपत्त्यर्थं तथोक्तिः। इत्थं च शशविषाणमसदित्यादिवाक्याधीने शाब्दे न दोषप्रयोज्यविषयिताऽस्ति। योग्यताभ्रमादेरेव

दोषत्वेन तदभावात् । पूर्वं तत्सत्त्वे सत्त्वप्रकारकस्यैवोत्पत्तेरसत्त्वप्रकारकत्वानुपपत्तेः । सतोऽसत्त्वविषयताया असतः सत्त्वविषयताया एव दोषप्रयोज्यत्वात् । अत एवोक्तं भगवत्पादैस्तत्त्वनिर्णये । सतोऽसत्त्वप्रतीतेरसतः सत्त्वप्रतीतेरेव भ्रान्तित्वादिति । परन्तु दोषाघटिताकाङ्क्षादिघटितसामग्रीजन्येति तत्राव्याप्तेरभावात् । दोषाप्रयोज्यविषयतावत्त्वमित्येवोक्ताविदं रजतमिति भ्रमेऽतिव्याप्तिः । तत्रेदंविषयताया दोषाप्रयोज्यत्वात् । अतो दोषाप्रयोज्यविषयताशून्यत्वमित्युक्तम् । तावन्मात्रोक्तौ घटादावतिव्याप्तिरतः पूर्वदलम् । इदं च सर्वांशे यथार्थ्यनिर्वचनम् । दोषाप्रयोज्यविषयताश्रयत्वं सामान्यतः प्रमाणत्वं बोध्यमित्याहुः ।

**श्रीनि.**— अर्यते ज्ञायते । व्युत्पत्त्याऽवयवार्थप्रतिपत्त्या । गत्यर्थकादृधातोरुषिकुषिगार्तिभ्यनितिथन्प्रत्यये सर्वधातुकार्धधातुकयोरिति रकारस्याकारगुणे उरण्रपर इति रपरत्वे चार्थेति रूपसिद्धिरिति भावः । नन्वतिक्रम्य वर्तमानत्वमसम्भवि । ज्ञानादिरूपप्रमाणस्य घटादिज्ञेयमतिक्रम्यान्तःकरणवृत्तित्वात् । न च ज्ञेयविषयीकारित्वं विवक्षितमिति वाच्यम् । अनुप्रमाणाव्याप्तेः । ज्ञेयविषयीकारित्वस्य ज्ञानमात्रधर्मत्वात् । न च ज्ञेयविषयीकारिज्ञानकारणत्वेन परम्परया ज्ञेयविषयीकारित्वमनुप्रमाणेष्वस्तीति न तेष्वव्याप्तिरिति वाच्यम् । तथात्वे ज्ञानकारणयोः प्रमातृप्रमेययोरतिव्याप्तिप्रसङ्गात् । न च ज्ञानसाधनत्वमेव परम्परया ज्ञेयविषयीकारित्वं विवक्षितमतो ज्ञानकरणमात्रयोः प्रमातृप्रमेययोर्नातिव्याप्तिरिति वाच्यम् । तथाऽपि साक्षाज्ज्ञेयविषयीकारिणोः संशयविपर्ययोस्तत्साधनतया परम्परया विषयीकारिदुष्टेन्द्रियादौ चातिव्याप्तेः । न च यथावस्थितज्ञेयविषयीकारित्वं विवक्षितमिति वाच्यम् । संशयादेरपि धर्म्यंशे तथात्वेनातिव्याप्तेरपरिहारादित्यत आह ॥ **यथावस्थितमेवेत्यादिना साधनानां निरास इत्यन्तेन ।** एवकारव्यावर्त्यमाह ॥ **नान्यथेति ।** व्यधिकरणधर्मं प्रकारतया न विषयीकरोतीत्यर्थः । अत्र निर्दोषत्वं विशेषणीयम् । तेन यादृच्छिकसंवादिज्ञापकयोरव्याप्तिः । विषयीकरोतीत्यर्थः ।

**वि.**— उत्तरत्रापि प्रमाणकथनोपयोग्यर्थ एव कथ्यत इति शङ्कावारणाय प्रमाणलक्षणाभिधानं प्रतिजानीते ॥ **तत्रेति ।** तस्मिन्नुक्तरीत्या प्रमाणलक्षणाभिधाने सफले सतीत्यर्थः । यद्वा तत्र प्रमाणपद्धतिं कुर्म इत्येव वक्तव्यतयोपस्थितेषु प्रमेयेष्वित्यर्थः । अथवा तत्र प्रमाणसामान्यविशेषलक्षणोक्तेरवसराभावादिति हृदयम् । तावदुद्देशानन्तरमित्यर्थः । यद्वा यावत्तावच्च साकल्य इत्यभिधानात्तावत्सकलं पूर्णमित्यर्थः । उद्देशपरीक्षसहितं प्रमाणसामान्यलक्षणमुच्यत इति भावः । प्रमाणपद्धतिमित्यनेनैवोद्देशकृतत्वाल्लक्षणमाह ॥ **यथार्थमिति ।** लक्ष्यलक्षणोक्त्या मन्दानां वैपरीत्य-

शङ्कावारणायाह ॥ **प्रमाणमितीति ।** निर्देश उक्तिरित्यर्थः । उक्तन्यायमत्राप्यतिदिशति ॥ **एवमुत्तरत्रापि ज्ञातव्यमिति ।** उत्तरत्रापि वक्ष्यमाणलक्षणवाक्येष्वप्येवं ज्ञातव्यम् । असाधारणधर्मोक्तिरन्या च लक्षणोक्तिरित्यवगन्तव्यमित्यर्थः । योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति यथाशब्दार्थास्तेषु विवक्षितमर्थमाह ॥ **अत्र यथाशब्द इति ।** अत्र प्रमाणलक्षणवाक्य इत्यर्थः । अनतिक्रमे वर्ततेऽनतिक्रमरूपार्थे प्रतिपादकतया वर्तते । अनतिक्रमरूपमर्थं प्रतिपादयतीति यावत् । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यभिधानात् । अर्थशब्दस्याभिधेयाद्यन्यतमपरत्वभ्रमवारणाय योगेनाभिप्रेतमर्थमाह ॥ **अर्थशब्दश्चेति ।** अर्थशब्दस्त्वित्यर्थः । अत्र चौणादिकस्य थप्रत्ययस्य प्रसिद्धत्वाद्गत्यर्थानां च ज्ञानार्थतयार्थत इति व्युत्पत्त्या ज्ञेयवाचित्वमिति बोध्यम् । पदार्थमुक्त्वा विग्रहमाह ॥ **ज्ञेयमिति ।** ननु ज्ञेयमनतिक्रम्य वर्तमानं प्रमाणमित्युक्तम् । प्रमितेस्तत्करणस्य प्रमाणस्य ज्ञेयो घटादिकमतिक्रम्य परित्यज्यान्यत्र सत्त्वादित्यत आह ॥ **यथावस्थितमेव ज्ञेयमिति ।** ज्ञेयं घटादिकमतिक्रम्यान्यथावर्तमानं विषयीकारि प्रकारान्तरेण विषयीकारीति यावत् । ज्ञेयमनतिक्रम्य ज्ञेयं प्रकारान्तरेण विना यद्देशकालयोर्ज्ञेयं यादृशं तथैवेति यावत् । वर्तमानं विषयीकारीति विग्रहवाक्ये विवक्षितत्वाद्यथार्थमेव ज्ञेयं यद्विषयीकरोति तत्प्रमाणमित्येतद्यथार्थं प्रमाणमित्यस्यार्थः । एवेत्यस्य विवरणं नान्यथेति ।

**(७) प्र.प.— ज्ञेयविषयीकारित्वं च साक्षाद्वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा विवक्षितमिति नानुप्रमाणेष्वव्याप्तिः । ज्ञेयविषयीकारित्वेनैव प्रमातृप्रमेययोर्व्यवच्छेदः । तयोः साक्षाज्ज्ञेयविषयीकारित्वाभिवात् । साक्षाज्ज्ञेयविषयीकारिकारणत्वेऽपि तत्साधनत्वाभावाच्च ।**

**जना.—** कथं तर्ह्यनुप्रमाणेष्वव्याप्तिपरिहार इत्यत आह ॥ **ज्ञेयविषयीकारित्वं चेति ।** चशब्दो वाक्यालङ्कारे । स्वसम्पादितज्ञेयतोपलक्षितविषयकत्वमित्यर्थः ॥ **साक्षादिति ।** उपाधितयेत्यर्थः ॥ **साक्षाज्ज्ञेयविषयीकारिसाधनत्वेनेति ।** ज्ञानजननद्वारा ज्ञेयतासम्पादकत्वेनेत्यर्थः । प्रमात्रादिव्यावृत्त्यर्थं साधनग्रहणम् । इमे च साक्षात्पारम्पर्ये न ज्ञेयविषयीकरणविषये । सुधायामनुप्रमाणानामपि साक्षाज्ज्ञेयविषयीकारित्वस्य सुदृढं प्रतिपादितत्वात् । किन्तु ज्ञेयतासम्पादन एव । एवं चानुप्रमाणस्य ज्ञानवत्स्वविषये घटादौ साक्षाज्ज्ञेयतासम्पादकत्वाभावेऽपि ज्ञानजननद्वारा तत्सम्पादकत्वान्नाव्याप्तिरिति भावः । उक्तं हि सुधायाम् । केवलं विषयस्य ज्ञेयतां ज्ञानमुपाधितया करणानि तु तज्जनकतया सम्पादयन्तीत्येतावन्तं विशेषमाश्रित्य केवलानुप्रमाणभेदः समर्थित इति । यथावस्थितज्ञेयविषयीकारित्वस्योभयत्रापि साम्यादिति च । अत्र यद्यपि बहु वक्तव्यमस्ति तथाऽपि विस्तरभयादुपरम्यते । ननु यथावस्थितज्ञेयविषयीकारि प्रमाणमिति । निष्कृष्टे प्रमाणलक्षणे यथावस्थितत्वमेव प्रमाणलक्षणमस्तु । किं ज्ञेयविषयीकारित्वेनेत्याशङ्क्य तद्व्यावर्त्यमाह ॥ **ज्ञेयविषयीकारित्वे-**

**नैवेति** । गम्यविषयीकारिगत्यादावतिव्याप्तिवारकेणैवेत्यर्थः । अत्र ज्ञेयविषयीकारित्वं नामास्मदुक्त-रीत्या स्वसम्पादिता या ज्ञेयता तदुपलक्षितविषयकत्वम् । तेन गत्यादौ नातिव्याप्तिः । गत्यादिना गतिविषये ग्रामादौ गम्यतायाः सम्पादनेऽपि ज्ञेयताया असम्पादनेन स्वसम्पादिताया ज्ञेयताया एव तत्राप्रसिद्धेः । उपलक्षितग्रहणेनातीतादिगोचरयथार्थज्ञाने नाव्याप्तिः । तत्र ज्ञेयताविशिष्टविषयकत्वा-भावेऽपि तदुपलक्षितविषयकत्वस्य सत्त्वात् । तन्निरासमुपपादयति ॥ **तयोरिति** । ननु प्रमातृप्रमेय-योर्ज्ञानवत्साक्षाज्ज्ञेयविषयीकारित्वाभावेऽपि चक्षुरादिवत्साक्षाज्ज्ञेयविषयीकारिसाधनत्वेनास्त्वित्यत आह ॥ **साक्षादिति** । कारणत्वेऽपीति प्रमेयांशे कारणताभ्युपगमवादः । प्रमेयस्यातीतानागतादि-रूपत्वेन ज्ञानपूर्वकालेऽभावेन कारणत्वं नास्तीति भावः । अभ्युपगमवादमेवं सूचयति कारणत्वेऽ-पीत्यपिशब्देन ॥ **तत्साधनत्वाभावादिति** ॥ यज्जातीयानन्तरमित्यादिना वक्ष्यमाणसाधनत्वा-भावादित्यर्थः ।

**राघ.— ॥ साक्षाद्वेत्यादि** । नन्वेवमपि साधनत्वं न ज्ञाने । साक्षाज्ज्ञेयविषयत्वं च करणेषु नेत्यन्यतरविवक्षायामन्यतरत्राव्याप्तिः । उभयविवक्षायामपि ज्ञानकरणाननुगमेन पुनः स एव दोष इति चेन्मैवम् । ज्ञानं यथा साक्षादन्यव्यवधानेनार्थविषयकं तथा तत्साधनानीन्द्रियलिङ्गशब्दरूपानु-प्रमाणान्यप्यन्याव्यवधानेन साक्षादेवार्थविषयकाणि । न हि तानि किमप्यविषयीकृत्य ज्ञानं जनयितु-मीशते । यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति विषयत्वनिर्वचनात् । सन्निकर्ष-शब्देन प्रत्यासत्तेरभिमतत्वात् । इन्द्रियाणामर्थैः संयोग इव लिङ्गशब्दयोरपि लिङ्गिवाक्यार्थाभ्यां व्याप्तिशक्तिरूपप्रत्यासत्त्या लिङ्गिवाक्यार्थधीजनकत्वेन करणानि यत्सम्बध्य ज्ञानं जनयन्ति तस्यैव ज्ञानविषयस्य करणानि प्रत्यपि विषयत्वात् । एवं चार्थविषयीकारित्वं ज्ञानरूपकेवलप्रमाणे साधने इन्द्रियलिङ्गशब्देषु चैकरूपमेव । परन्त्वर्थे यज्ज्ञेयत्वं तज्ज्ञानोपाधिकम् । न करणोपाधिकम् । अतो ज्ञेयविषयीकारित्यत्र ज्ञेयत्वांशेऽनन्यापेक्षत्वान्यापेक्षत्वरूपभेदमात्रेण साक्षात्त्वतत्साधनत्वव्यवहार इति न कश्चिद्दोषः । तदुक्तं सुधायाम् । ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरमित्येतदनुव्याख्या-व्याख्यानावसरे यथावस्थितार्थविषयत्वस्योभयत्र साम्यात् । ज्ञानविषय एव हि करणानां विषयः । न हि किमप्यविषयीकुर्वन्त्येतानि तज्ज्ञानं जनयन्ति । नाप्यन्यविषयाणि । अतिप्रसङ्गात् । केवलं विषयस्य ज्ञेयता ज्ञानोपाधितया । करणानि तु तज्जनकतया सम्पादयन्तीत्येतावन्तं विशेषमाश्रित्य केवलानु-प्रमाणभेदः समर्थितः । यदि चैतावताऽप्यव्याप्तिदोषस्तदा सर्वत्रापि यत्किञ्चिद्वैलक्षण्यस्यापि वक्तुं शक्यत्वादतिप्रसङ्गः स्यादिति । समग्रप्रमाणलक्षणस्याव्याप्तिं निरस्याधुना लक्षणगतपदद्वयस्यापि कृत्यं विवक्षुरेकस्य तावदाह ॥ **ज्ञेयविषयीकारित्वेनैवेति** । यथावस्थितत्वामात्रस्य तयोः

सत्त्वादतिव्याप्तावनेनैव विशेषणेन तद्व्यावृत्तिरित्यर्थः । कथमित्यतो ज्ञेयविषयकत्वस्य द्वेधाभिमतत्वात्तद्द्वयमपि तत्र नेत्याह ॥ **तयोरिति ॥ साक्षादिति ।** ज्ञानाव्यवधानेनेत्यर्थः । तयोर्निर्विषयकत्वादिति भावः । नन्वेवं विषयीकारित्वेनैव तयोर्व्युदासे किं ज्ञेयेत्युक्त्येति चेत् । सत्यम् । तत्तु गमनादिक्रियास्वनतिव्याप्त्यर्थम् । अत्र तु स्वभावानुवादमात्रामिति ज्ञेयम् ॥ **तत्साधनत्वाभावादिति ।** अतिशयितकारणस्यैवात्र साधनत्वेन विवक्षतत्वादिति भावः । कारणत्वेऽपीत्यभ्युपगमवादः । प्रमातुः करणत्वेऽपि प्रमेयस्य तदभावात् । विषयस्य क्वापि जनकतासम्मतेरिति तत्त्वोद्योतटीकोक्तेः । उक्तं हि तर्कताण्डवे च । प्रत्यक्षप्रमास्वनुगतगुणभङ्गे चक्षुरादिवत्कारणत्वेन धर्मिग्राहकप्रमाणासिद्धोऽर्थः सन्निकर्षेणान्यथासिद्धत्वान्न प्रमाहेतुरिति ।

**विज.**— तदेवाह ॥ **साक्षादिति ।** प्रमातुः प्रमेयत्वोपपादनेऽपि प्रमेयव्यवच्छेद इत्युक्ते कथञ्चिदसम्भवशङ्का स्यादतः प्रमात्रिति पृथगुक्तिः तयोर्लक्षणप्रसक्तिमाह ॥ **तयोरिति ।**

**वेदे.**— ननु ज्ञेयविषयीकारित्वं ज्ञानधर्मः । तथा चेन्द्रियाद्यनुप्रमाणेष्वव्याप्तिरित्यत आह ॥ **ज्ञेयविषयीकारित्वं चेति ।** करणेष्वपि सम्यग्ज्ञानसाधनतया परम्परया ज्ञेयविषयीकारित्वमस्त्येव । न हि साक्षादेव ज्ञेयविषयीकारित्वं लक्षणे विवक्षितम् । येनोक्तदोषः स्यात् । अपि तूभयसाधारणं ज्ञेयविषयीकारित्वमात्रमिति भावः । इदं च पररीत्यैवोक्तम् । स्वमते तु ज्ञान इव करणेष्वपि साक्षादेव ज्ञेयविषयीकारित्वमस्तीति नोक्ताव्याप्तिरिति द्रष्टव्यम् । उक्तं हि सुधायाम् । ज्ञानविषय एव करणानां विषयः । न हि किमप्यविषयीकुर्वन्त्येतानि ज्ञानं जनयन्ति । नाप्यन्यविषयाणीत्यादि । अन्ये तु । ज्ञेयविषयीकारित्वं साक्षाद्वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेनैवेत्यत्र प्रत्येकं लक्षणत्वेऽव्याप्तेर्मिलितस्य तत्त्वेऽसम्भव इत्याशङ्क्य साधनाश्रययोरन्यतरत्वे सतीत्यादिवत्साक्षाज्ज्ञेय विषयीकारितत्साधनान्यतरत्वस्य विवक्षितत्वाददोष इत्याहुः । तच्चिन्त्यम् । अन्यतरत्वस्यान्यान्यपर्यवसन्नत्वेनेतरभेदसाधने साध्याविशेषप्रसङ्गात् । अन्यथाऽव्याप्तितावदस्थ्यादिति । एतेन ज्ञेयविषयीकारित्वस्येच्छायामतिव्याप्तिः । ज्ञानपददाने चानुप्रमाणेन्द्रियादिष्वव्याप्तिरिति कस्यचिद्दूषणमपास्तम् । न हीच्छायां स्वोपाधिकज्ञेयत्वोपेतविषयीकारित्वमस्ति । येनातिव्याप्तिशङ्कावकाशः । ज्ञेयविषयीकारीति विशेष्यस्य व्यावर्त्यमाह ॥ **ज्ञेयेति ।** प्रमातृप्रमेययोः किं ज्ञानवत्साक्षाज्ज्ञेयविषयीकारित्वमुत करणवज्ज्ञानसाधनतया परम्परया । नाद्य इत्याह ॥ **तयोरिति ।** लक्षणप्रसक्तिं दर्शयन्द्वितीयं दूषयति ॥ **साक्षादिति ॥**

**अभि.**— ननु ज्ञेयविषयीकारित्वं ज्ञान एव मुख्यं करणेष्वौपचारिकम् । न चोपचारेण लक्षणवत्ता भवति । उपचारत्वव्याघातात् । तथा चानुप्रमाणेष्वव्याप्तिरित्यत आह ॥

**ज्ञेयविषयीकारित्वं चेति** । नात्र मुख्यमेव ज्ञेयविषयीकारित्वं लक्षणत्वेन विवक्षितम् । किन्नाम साक्षान्मुख्यं वाऽस्तु साक्षाज्ज्ञेयविषयीकारिसाधनत्वेनौपचारिकं वाऽस्त्विति विवक्षितमिति नानुप्रमाणेष्वव्याप्तिरित्यर्थः । ननु ज्ञेयविषयीकारित्वस्य करणेष्वमुख्यताभिधानं सुधाविरुद्धम् । तथा हि । न चैवमव्याप्तिर्लक्षणस्येति वाच्यम् । ज्ञानमेव यथार्थं करणानि तज्जनकतया तथोपचर्यन्त इत्यङ्गीकारे हि सा स्यात् । न चैवम् । यथावस्थितार्थविषयत्वस्योभयत्रापि साम्यात् । ज्ञानविषय एव हि करणानां विषयः । न हि किमप्यविषयीकुर्वन्ति करणानि ज्ञानं जनयन्ति । नाप्यन्यविषयाणीति सुधोक्तिरिति चेन्न । भावानवबोधात् । न हि ज्ञेयविषयीकारित्वमुपचरितं नेति सुधाशयः । गमनस्य गम्यविषयकत्वमिवेन्द्रियादेरैन्द्रियिकादिविषयत्वेन ज्ञेयविषयीकारित्वाभावात् । किं नाम ज्ञेयविषयी-कारित्वान्तर्गतं विषयीकारित्वमुपचरितं नेत्याशयः । अत एव हि न हि किमप्यविषयीकुर्वन्ति करणानि ज्ञानं जनयन्तीत्येवोक्तम् । अन्यथा ज्ञेयमविषयीकुर्वन्ति करणानि ज्ञानं जनयन्तीत्यवक्ष्यत् । नन्वित्थं सुधाशयवर्णनमयुक्तम् । न चैवमव्याप्तिर्लक्षणस्येति प्राक्शङ्किताव्याप्त्यपरिहारप्रसङ्गादिति चेत् । स्यादयं दोषः । यदि ज्ञेयविषयीकारिभावत्वाप्रयुक्तामव्याप्तिमशङ्क्य सुधाकृता परिहारोऽयमभिहित इति स्यात् । न चैवम् । किं नाम युक्त्यादिकरणानि तु विषयस्य ज्ञेयतायामुपाधिभूतं ज्ञानं जनयन्तीत्युक्ते इन्द्रियाणां ज्ञानजनकत्वमेव विषयीकारित्वमिति मन्यमानस्य चोद्यम् । न चैवम् । अव्याप्तिर्लक्षणस्येत्यादिनाऽऽशङ्क्य परिहारोऽयमभिहित इति । ननु ज्ञेयविषयीकारित्वान्तर्गतं विषयी-कारित्वममुख्यं नेत्युक्तम् । अनुप्रमाणलिङ्गज्ञानेन वाक्यज्ञानेन चानुभवाभावेन लिङ्गवाक्यार्थविषय-कत्वस्यानानुभाविकत्वात् । अन्यथा लिङ्गवाक्यार्थयोरिव लिङ्गिवाक्यार्थयोरपि केवलप्रमाणापत्त्याऽनु-प्रमाणं न स्यादिति चेत् । उच्यते । द्विविधं विषयीकारित्वम् । गमनासाधारणमनुमेयमाद्यम् । द्वितीयं तूल्लेखित्वलक्षणं ज्ञानेच्छादिसाधारणं प्रत्यक्षसिद्धम् । तदेव केवलत्वप्रयोजकम् । यज्ज्ञानं यमर्थ-मुल्लिखति तत्तस्मिन्नर्थे केवलम् । एवं च लिङ्गवाक्यज्ञाने लिङ्गवाक्ये उल्लिखत इति तत्र केवले । गमनं ग्राममिव लिङ्गवाक्यज्ञाने लिङ्गवाक्यार्थौ विषयीकुरुत इति तत्रानुप्रामाणम् । यद्यपि लिङ्गज्ञानं वाक्य-ज्ञानं वा नानुप्रमाणम् । तत्प्रामाण्यवादस्त्वङ्गीकारवाद इति वन्ह्यादिविषयता नोपपादनीया । तथाऽप्यनुप्रमाणावान्तरव्यापारयोर्लिङ्गज्ञानवाक्यज्ञानयोरनुप्रमाणस्येव साध्यादिविषयताऽस्तीति वस्तुस्थितिमनुरुद्ध्य वन्ह्यादिविषयत्वमुपपादितम् । अत्र ज्ञेयविषयीकारित्वमिति वस्तुतो यज्ज्ञेयं तद्विषयीकारित्वमिति न विवक्षितम् । किन्तु यद्विषयीकरणं वस्तुनो ज्ञानसम्बन्धितायां साक्षाद्वा ज्ञानं साधनत्वेन परम्परया वा निमित्तं भवति तद्वत्त्वं विवक्षितम् । ज्ञानविषयीकरणं तु साक्षान्निमित्तम् । करणविषयीकरणं तु ज्ञानोत्पत्तिद्वारेति विवेकः । ततश्च नास्य लक्षणस्य गमनेऽतिव्याप्तिः ।

तद्विषयीकरणस्य वस्तुनो गतिसम्बन्धितानिमित्तत्त्वेऽपि साक्षात्परम्परया वा ज्ञानसम्बन्धितानिमित्तत्वाभावात् । इममेवाभिप्रायं मनसि निधायानुव्याख्याने ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरम् । सुधायां च । ज्ञानमेव हि विषयस्य ज्ञेयतायां साक्षादुपाधिर्भवति । अतस्तद्विषयस्य ज्ञेयत्वं मुख्यमिति ज्ञानस्यैव मुख्यतो याथार्थ्यम् । युक्त्यादिकरणानि तु विषयस्य ज्ञेयतायामुपाधिभूतं ज्ञानं जनयन्तीति तद्विषयस्य ज्ञेयत्वममुख्यम् । तत एव तेषां याथार्थ्यमप्यमुख्यमितीत्युक्तम् । ज्ञानविषयीकरणव्यापारस्यार्थनिष्ठज्ञेयतां प्रति निमित्तत्त्वात्तद्विषयस्य ज्ञेयता मुख्येत्युच्यते । करणविषयीकरणस्य तु ज्ञेयतानिमित्तत्वस्योपकारित्वात्तद्विषये विद्यमानाऽपि ज्ञेयताऽमुख्येत्युपचर्यत इत्येव सुधाऽनुव्याख्यानयोरभिप्रायः । अन्यथा ज्ञानविषयस्य करणविषयस्य चैकत्वात्तत्र ज्ञेयत्वं मुख्यं वा स्यादमुख्यं वा स्यात् । तद्यथा देवदत्तायाः पुत्रो देवदत्तस्य पुत्रः । तत्र विद्वत्त्वं देवदत्तप्रयुक्तमिति कृत्वा न हि भवति देवदत्तपुत्रे विद्वत्त्वं मुख्यं देवदत्तायाः पुत्रत्वममुख्यमिति । ज्ञानविषयीकरणव्यापारस्यार्थनिष्ठज्ञानसम्बन्धितानिमित्तत्वे ज्ञेयत्वमिति व्यवहारे ज्ञानस्योपाधित्वमवर्जनीयमिति कृत्वा सुधायां स्वोपाधिकस्वनिमित्तक ज्ञेयविषयीकारित्वं प्रमाणमिति विवक्षित्वा गमनेऽतिव्याप्तिः परिहृता। न च मुख्यामुख्यभेदेन द्विविधं याथार्थ्यं लक्षणत्वेन विवक्षितमिति परस्पराव्याप्तिरिति वाच्यम् । परस्पराव्याप्तेरदोषत्वात् । तदुक्तं सुधायाम् । वस्तुतस्त्वेकमिवानेकमपि स्वस्वाश्रये व्यावर्त्यादिकं कुर्वतो भवत्येव लक्षणम् । अत एव कणादः क्रियावद्गुणवत्समवायिकारणमिति क्रियावत्त्वमपि द्रव्यलक्षणत्वेनाहेति । ननु नेदं प्रमाणलक्षणम् । लक्षणप्रयोजनस्य लक्ष्यस्यालक्ष्याद्व्यावृत्तिबोधस्य वा लक्ष्यस्य लक्ष्याद्व्यावृत्तिबोधस्य वाऽनेनाजननादित्यत आह ॥ **ज्ञेयविषयीकारित्वेनैवेति** । अर्थमनतिक्रम्य विषयीकारित्वेनैवेत्यर्थः । अत्रैवकारेणानेनैव लक्षणेन व्यावृत्तिः सिध्यति । न तु तदर्थं लक्षणान्तरं प्रणेयमित्याचष्टे । अस्ति तावत्प्रमाणं नाम तत्त्वमिति वार्तां शृण्वतः प्रमाणेष्विव प्रमातृप्रमेययोरपि प्रामाण्यबुद्धिः प्रयुक्ता भवति । ततो यद्यथावस्थितज्ञेयविषयीकारि तत्प्रमाणमिति तल्लक्षणज्ञाने सतीदमेव प्रमाणं न प्रमातृप्रमेये इत्यवधारणात्मकं ज्ञानं जायत इति लक्षणप्रयोजनस्यानेनैव जननाद्भवत्येवेदं लक्षणमिति भावः । एतेन प्रमातृप्रमेयाभ्यां व्यवच्छेद इति वक्तव्यं न तु प्रमातृप्रमेययोरिति परास्तम् । अस्य वाक्यस्यालक्ष्यस्य लक्ष्याद्व्यावृत्तिरूपप्रयोजनप्रदर्शनपरत्वेन लक्ष्यस्यालक्ष्याद्व्यावृत्तिप्रयोजनप्रदर्शनपरत्वाभावात् । एतेनैवांशस्यातिव्याप्तिप्रसङ्गे तत्परिहाराय विशेषणान्तरमुपादेयम् । प्रकृते च ज्ञेयविषयीकारित्वस्यैव समग्रलक्षणत्वेनातिव्याप्तिप्रसङ्गाभावात्तत्परिहाराभिधानमयुक्तमिति परास्तम् । ननु लक्षणं लक्ष्ये विद्यमानत्वेन लक्ष्यमलक्ष्याद्व्यावर्तयितुं न त्वलक्ष्यं लक्ष्याद्व्यावर्तयितुं शक्नोति । तत्राविद्यमानत्वादित्यत आह ॥ **तयोरिति** । प्रमातृ-

प्रमेययोर्ज्ञेयविषयीकारित्वस्य तत्साधनत्वस्य चाभावात्प्रमातृप्रमेययोर्व्यवच्छेद इति पूर्वेण सम्बन्धः । ज्ञेयविषयीकारिकारणत्वेऽपीत्युक्तिस्तु प्रमातृप्रमेययोः साधनत्वाभावोऽसिद्धः साधनत्वस्यानुभवसिद्धत्वादिति शङ्कापरिहाराय । यदनुभूयते तज्ज्ञेयविषयीकारिकारणत्वमेव न तु साधनत्वमतो नासिद्धिरिति ज्ञापनार्था । इदमुक्तं भवति । स्यादयं दोषः । यदि लक्षणं लक्ष्यमलक्ष्यादिवालक्ष्यं लक्ष्यत्वमुख्येनैव व्यावर्तयतीति ब्रूमः । न चैवम् । किं नाम व्यावृत्तिमुखेन । ततश्च लक्षणयोर्व्यतिरेकसद्भावादलक्ष्यस्य लक्ष्याद्व्यावर्तकत्वमुपपन्नमेवेति । अत्र लक्षणाभावयोर्न प्रत्येकव्यावृत्तिबुद्धिहेतुत्वम् । किन्तु समुचितयोरिति द्योतनाय साधनत्वाभावाच्चेति च शब्दः । न तु साधनद्वयसमुच्चये च शब्द इति बोध्यम् । एतेन ज्ञेयविषयीकारित्वेनैव प्रमातृप्रमेययोर्व्यवच्छेद इति वाक्येन किं लक्षणस्य प्रमातृप्रमेययोरतिव्याप्तिः परिह्रियत उत लक्ष्यस्यालक्ष्याद्व्यावृत्तिरभिधीयते । नाद्यः । ज्ञेयविषयीकारित्वस्य लक्षणस्यैव तत्राप्राप्तत्वेनैवातिव्याप्तिपरिहाराभिधानायोगात् । उत्तरवाक्यवैय्यर्थ्याच्च । लक्षणस्याभावोपपादनयोत्तरवाक्यमिति चेन्न । साध्यवैशिष्ट्यापातात् । यावद्विशेषाभावेन सामान्याभावस्य साध्यत्वान्न साध्यावैशिष्ट्यमिति चेन्न । यावद्विशेषाभावेनैवातिव्याप्तेः परिहृतत्वेन सामान्याभावसाधनवैय्यर्थ्यात् । विशेषाभावयोर्मिलितयोर्हेतुत्वेन साधनत्वाभावाच्चेति समुच्चायकचशब्दवैय्यर्थ्याच्च । न द्वितीयः । लक्ष्यस्येतरभेदसाधनाय तत्रैव लक्षणस्य व्युत्पादनीयत्वेन प्रमातृप्रमेययोस्तद भावाभिधायकोत्तरवाक्यद्वयवैय्यर्थ्यप्रसङ्गादिति निरस्तम् । अस्य ग्रन्थस्य लक्ष्यव्यावर्तकतया लक्ष्यावधारणरूपप्रयोजनव्युत्पादनपरत्वस्योक्तत्वात् ।

**आद.—** नन्विदं लक्षणमिन्द्रियेष्वव्याप्तम् । तत्रार्थविषयकत्वाभावात् । न च चक्षुषोऽयं विषय इत्यादिसार्वलौकिकव्यवहारात्सविषयकत्वमेवेति वाच्यम् । तद्व्यवहारस्य गौणत्वात् । अतीन्द्रियत्वेन चक्षुरादीनां तद्धर्मत्वेन सविषयकत्वेन प्रत्यक्षायोगेन तादृशलिङ्गाद्यभावेनानुमित्यादेरयोगेनागमादेरदृष्टेः प्रमाणाभावेन सविषयकत्वाभावस्य सिद्धत्वादित्यत आह ॥ **ज्ञेयविषयीकारित्वं चेति ।** साक्षाज्ज्ञानावगाहिप्रत्यक्षेण साक्षाज्ज्ञेयविषयीकारित्वेन लिङ्गेनेत्यर्थः । ननु ज्ञानसाधनत्वेन लिङ्गेन सविषयकत्वानुमाने लिङ्गस्य तत्साधनस्य वाऽनुमितिविषयविषयकत्वापत्त्या सविषयकत्वस्य केवलान्वयित्वापत्तिः । ज्ञानसाधनत्वस्याप्रयोजकत्वाच्च ज्ञानकर्तृत्वेन प्रमातुस्तत्कर्मत्वेन प्रमेयस्य च सविषयकत्वापत्तेश्च । ज्ञानसाधनत्वेन हेतुना सर्वेषु ज्ञानकरणेषु सविषयकत्वसिद्ध्यापत्तिश्च । न हि ज्ञानसाधन एव सविषयकत्वमङ्गीकार्यं न कर्त्रादावित्यत्र राज्ञामाज्ञाऽस्ति । न च यथार्थज्ञानतत्साधनान्यतरत्वं लक्षणत्वेन विवक्षितम् । अतो नेन्द्रियेष्वतिव्याप्तिरिति वाच्यम् । तथा सति लक्षणोक्तेर्वैयर्थ्यापत्तेः । अन्यतरत्वस्यान्यान्यरूपत्वेन लक्ष्येतरत्वज्ञानस्यान्यस्मिन् लक्ष्ये तदितरत्व-

ज्ञानस्य च लक्षणज्ञानसाध्यस्य लक्षणज्ञानात्पूर्वमावश्यकत्वात् । न चैवं सति लक्षणोक्तिमात्रस्य वैय्यर्थ्यापत्तिः । लक्षणे लक्षणत्वज्ञानाभावे व्यभिचारित्वेनेतर भेदानुमापकत्वाभावप्रसङ्गेन लक्षणत्वस्यावश्यं ज्ञातव्यतया तस्य चालक्ष्यघटितमूर्तिकत्वेन लक्ष्यभेदज्ञानस्येतरत्रावश्यकत्वात् । लक्ष्येऽपीतरभेदज्ञानस्यावश्यकत्वादिति वाच्यम् । सर्वस्यापि पदार्थस्य स्वेतराणि सामान्यतस्तत्प्रतियोगिकभेदवत्त्वेन ज्ञानस्यानुभाविकत्वेन लक्ष्यतावच्छदकविशिष्टस्य सामान्यतः स्वेतरभिन्नत्वेन धर्मान्तरविशिष्टाद्भिन्नत्वेन च ज्ञानेऽपि व्यक्तिविशेषे लक्षणज्ञानेन लक्ष्यतावच्छेदकविशिष्टवाचकपदवाच्यत्वस्य लक्ष्यतावच्छेदके तद्धर्मविशिष्टप्रतियोगिकभेदस्य पूर्वमज्ञायमानस्य ज्ञायमानत्वेन तत्सार्थक्यसम्भवात् । न चैवमस्ति प्रकृते । यथार्थज्ञानतत्साधनानि यावन्ति तत्तद्भेदस्येतरस्मिंस्तादृशमेद विशिष्टानि यावन्ति तत्तद्भेदस्य लक्ष्ये सामान्यतो ज्ञातत्वेऽपि व्यक्तिविशेष एवोक्तभेदस्यैव व्यक्तिविशेषे लक्षणज्ञानरूपत्वात् । न च प्रमाणपदवाच्यत्वविशिष्टे इतरधर्मविशिष्टप्रतियोगिकभेदज्ञानमेव फलमिति वाच्यम् । लक्ष्यतावच्छेदकविशिष्टे लक्षणज्ञानस्यैव तद्विशिष्टे इतरभेदानुमिति रूपत्वात् । यथार्थज्ञानतत्साधनेष्वनुगतलक्षणोक्त्ययोगश्च । प्रमाणपदस्याक्षादिवन्नानार्थकत्वेनोभयबोधकत्वेऽपि नानाशक्त्यैव बोधकेनान्यतरत्वस्य प्रमाणपदप्रवृत्तिनिमित्तत्वे मानाभावश्च । यद्रूपविशिष्टत्वज्ञानेन प्रमाणपदं प्रयुङ्क्ते तद्रूपस्यैवेदानीं निर्वचनीयत्वम् । अत एवोत्तरत्र ल्युटोऽधिकरणेऽप्यनुशासन सिद्धत्वात्प्रमातुरपि लक्ष्यत्वमाशङ्क्य लौकिकव्यवहारगोचरत्वाभावेनालक्ष्यमुपपाद्यैकया शक्त्या ज्ञानतत्साधनोभयबोधकत्वस्याप्यभावेनानुगतलक्षणोक्त्यनुपपत्तिमाशङ्क्य धात्वर्थागमस्योभयत्रापि साम्यादिति समाधानमुक्तम् । तत्र याथार्थ्यरूपधात्वर्थस्योभयत्र प्रमापदप्रयोक्तृभिरनुसन्धीयमानत्वरूपानुगमस्य सत्त्वादित्यर्थः । याथार्थ्यज्ञानेनैव तत्पदप्रयोगात्तस्यैव प्रवृत्तिनिमित्तत्वमिति याथार्थ्यस्य सामान्यरूपत्वं युक्तमित्याशयः । यद्यपि प्रपूर्वकमाङ्माने इति धातुव्याख्यानाद्धातोर्ज्ञानत्व घटितार्थत्वं तथाऽपि तद्धटकस्यापि याथार्थ्यस्य धातुबोध्यत्वरूपधात्वर्थमभिप्रेत्य धात्वर्थेत्युक्तम् । यद्वा । धातूनामनेकार्थत्वाल्लोकप्रयोगानुसारेण याथार्थ्यमात्रवाचकत्वमप्यस्तीत्याशयः । केचित्तु । मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यत इति वचनान्मर्यादारूपधात्वर्थस्येत्यर्थः । अतिक्रमाभावस्यैव मर्यादारूपत्वेन प्रकृतेऽर्थातिक्रमाभावरूपमर्यादा याथार्थ्यरूपैव भवतीति तस्य धात्वर्थत्वमित्याहुः । एवं चोक्तान्यतरत्वस्य लक्षणत्वे तद्विरोधो विभागानुपपत्तिश्च अन्यतरत्वेनानुगमस्य पुनर्विभागस्य च निष्प्रयोजनत्वात् । तथा सत्युक्तरीत्या चतुर्विधस्यापि वक्तुं शक्यत्वादिति साक्षाज्ज्ञेयविषयीकारित्वेन तत्साधनत्वेन वेत्युपपादनासङ्गतिश्च । उक्तरीत्या तदाश्रयत्वेन वेत्यपि वक्तुं शक्यत्वाच्च तृतीयाया अन्वयाच्च याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयो-

रित्यनुव्याख्याने याथार्थ्यस्यैवोक्तत्वाच्च । सुधायामिन्द्रियापेक्षयैव शब्दे याथार्थ्यं मुख्यं न ज्ञानवदित्युपपादितत्वाच्च नान्यतरत्वस्य लक्षणत्वेनाभिमतत्वं युक्तमिति । अत्रोच्यते । ज्ञानकरणेष्वपि सविषयकत्वमङ्गीक्रियते । अर्थप्रकाशनशक्तेरेव विषयितारूपत्वात् । तदतिरिक्तविषयिताऽङ्गीकारे मानाभावात् । अर्थप्रकाशकत्वं च तद्विषयव्यवहारादिप्रयोजकशक्तिमत्त्वम् । इत्थं च दोषाप्रयोज्यार्थविषयकव्यवहारादि प्रयोजकशक्तिमत्त्वं पर्यवसितम् । प्रयोजिकाचात्र साक्षात्परम्परासाधारणी । इत्थं च ज्ञाने साक्षाद्व्यवहारादिजनिका शक्तिः करणेषु ज्ञाने तादृशशक्तिसम्पादनद्वारा तादृशीति । अत एव सुधायां ज्ञानजननानुकूलशक्त्यैव तद्याथार्थ्यजनकत्वम् । स्वतस्त्वमित्यनेन ज्ञाननिष्ठतद्वति तत्प्रकारत्वरूपप्रामाण्यस्य करणजन्यत्वमुक्तं वेदितव्यम् । तथा चोभयत्रापि दोषाप्रयोज्यार्थविषयकत्वमक्षतम् । न च ज्ञाननिष्ठायां विषयितारूपायां शक्तौ करणगतशक्तिप्रयोज्यत्वे मानाभावः । अर्थविशेषविषयकत्वविशिष्टज्ञानोत्पत्तिप्रयोजकशक्तौ विशेषणीभूतार्थविषयकत्वप्रयोजकत्वस्याक्षतत्वात् । न च चाक्षुषत्वावच्छिन्नं प्रति चक्षुस्त्वेन कारणताऽङ्गीक्रियते । न त्वर्थविशेषविशिष्टत्वावच्छिन्नं प्रतीति वाच्यम् । तथा सत्यर्थविशेषविषयकत्वस्याकस्मिकत्वापत्तेः । घटादिरूपविषयविशेषविषयकप्रत्यक्षेच्छया प्रवृत्त्यनुपपत्तेश्च । न च चाक्षुषत्वरूपसामान्यधर्मावच्छिन्नविषयकेच्छयैव प्रवृत्तिः । तस्य सिद्धत्वेनेच्छाविषयत्वायोगात् । न च संशयाधीना प्रवृत्तिः । अनुभवविरोधात् । स्वसन्निकृष्टार्थविशेषविषयकप्रत्यक्षत्वावच्छिन्नप्रयोजकशक्तिमत्त्वनिश्चयेनैव सन्निकर्षार्थी चक्षुःप्रवृत्तेरनुभूयमानत्वात् । न च स निश्चयो भ्रमः । सार्वजनीनप्रतीतेर्विना बाधं भ्रमत्वकल्पनाया अनुचितत्वाथत् । चक्षुषा तादृशप्रतीतेर्जननेन विजातीयसंवादस्य सत्त्वाच्च । न च चाक्षुषं प्रत्येव चक्षुषो हेतुता विषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन विषयस्य हेतुता क्लृप्ता । तथा च तत्तद्विषयविशेषविषयितया विशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति तत्तद्विषयो हेतुरिति न तत्तदर्थविषयकत्वस्याकस्मिकत्वापत्तिः । तत्तद्विषयसत्तानिश्चयाय प्रवृत्तिश्च युज्यत इति वाच्यम् । विषयस्य सन्निकर्षोत्पादनेनैव कृतार्थतयाऽन्यथासिद्धत्वेन प्रत्यक्षत्वावच्छिन्नं प्रति करणत्वायोगात् । तत्त्वोद्योतटीकायां विषयस्य कारणत्वसम्प्रतिपत्तेरित्युक्तत्वात् । स्मृत्यादिरूपे मानसप्रत्यक्षे तत्तारूपविषस्य नष्टत्वेऽपि संस्काररूपसन्निकर्षेणैव भानस्यानुभवसिद्धत्वाच्च । चाक्षुषप्रत्यभिज्ञायां तत्ताया भानाच्च । न चालौकिकप्रत्यक्षत्वावच्छिन्नं प्रति विषयस्य हेतुत्वाङ्गीकारान्न दोष इति वाच्यम् । अन्यत्र क्लृप्तनियतपूर्ववृत्तिसन्निकर्षादिनैव कार्यसम्भवे तत्सहभूतत्वेनान्यथासिद्धत्वात् । संशये भ्रमे च भासमानपुरुषरजतादिविषयाभावेऽपि तद्रूपप्रत्यक्षस्य जायमानत्वाद्व्यभिचारश्च । न च संशयादौ भासमानपुरुषरजतादौ लौकिकविषयितैव नास्तीति वक्तुं शक्यते । रजतं पश्यामीत्यनुभवव्याकोपात् ।

न च चक्षुषस्तत्सन्निकर्षस्य सत्त्वाद्भवत्पक्षेऽपि शुक्त्यादिप्रत्यक्षापत्ती रजतादिप्रत्यक्षानुपपत्तिश्च समैवेति वाच्यम् । मन्मते चक्षुरादेः स्वसन्निकृष्टार्थविषयकत्वविशिष्टप्रत्यक्षादिजननानुकूलशक्तिमत्त्वेऽपि दोषविशेषेण तादृशशक्तेः प्रतिबन्धान्न तदर्थाकारकप्रत्यक्षोत्पत्तिः । विपरीतशक्तेराहितत्वाद्रजताद्याकारकप्रत्यक्षोत्पत्तिश्च । वेत्रबीजादौ भर्जनादिरूपसहकारिणां सहजशक्तिविघकटत्वस्य विपरीतशक्त्याधायकत्वस्य च दर्शनादित्यङ्गीकारेण दोषाभावात् । न च दोषस्यापि तादृशप्रत्यक्षं प्रति कारणत्वमङ्गीक्रियत इति वाच्यम् । अनन्तदोषाणामननुगतानां कारणत्वकल्पनापेक्षया करणेष्वेव तादृशशक्त्यङ्गीकारस्य लघुत्वात् । न च दोषाणां सहजप्रतिबन्धकत्वविपरीतशक्त्याधायकत्वाङ्गीकाराद्भवन्मतेऽपि गौरवमिति वाच्यम् । त्वन्मतेऽपि तद्दोषाणां तत्तत्प्रतीतिविशेषं प्रति कारणाताया अङ्गीकर्तव्यत्वात् । अन्यथा दोषस्थले भ्रमस्यानुत्पत्तिप्रसङ्गात् । एवं शुक्त्यादिविषयघटिततत्सान्निकर्षादिघटितसामग्रीसत्त्वाच्छुक्त्याद्याकारकप्रत्यक्षापत्तिवारणाय तत्तद्दोषाभावानामपि तत्तदाकारकप्रत्यक्षादौ कारणत्वमङ्गीकार्यम् । तथा च तत्तद्दोषघटितसमुदाये तदभावघटितसमुदाये चाननुगते तत्तत्प्रयोजकत्वस्याधिकस्याङ्गीकारात्त्वन्मते गौरवम् । मन्मते तु न दोषाभावघटिते दोषघटिते वा समुदायेन तत्तत्प्रत्यक्षप्रयोजकत्वम् । तयोरकारणत्वेन सामग्रीकोट्यघटकत्वात् । यद्यपि मन्मते सर्वेषां धर्माणां प्रातिस्विकत्वाङ्गीकारेण नैकं सर्वत्र कारणं कारणतावच्छेदकं वा सम्भवति । तथाऽप्येकजातीयत्वरूपानुगमः सम्भवत्येव । एकजातीयं प्रति विजातीयानां कारणत्वे सर्वेषां कार्याणामेकेनैव सादृश्येनोपस्थितत्वेन तत्कारणानामुपस्थापकसादृश्याभावेनैकबुद्ध्युपारोहासम्भवेनैकदा तादृशकार्यकारणभावग्रहो न सम्भवतीति पुनः प्रयत्नान्तरापेक्षाऽस्तीति गौरवमिति तादृशानुगमोऽवश्यक एवेति भवत्पक्षे शुक्त्याकारकप्रत्यक्षे शुक्तित्वेन कारणतेत्यनुगमो न सम्भवतीति । किञ्चालोकस्याञ्जनादेश्च चक्षुरादिगतशक्तिव्यञ्जकत्वात्तादृशशक्तिसिद्धिः । न चालोकस्य पृथक्कारणत्वम् । तदभावेऽप्यञ्जनादिनाऽन्धकारस्थितपदार्थप्रत्यक्षसिद्धेर्व्यभिचारात् । तस्यापि कारणत्वमङ्गीकृत्याव्यवहितोत्तरत्वादिनिवेशेन व्यभिचारपरिहारादिकं तु गौरवपराहतम् । वस्तुतस्त्वालोकस्य कारणत्वेऽपि चक्षुर्गतशक्तिव्यञ्जकत्वमङ्गीकार्यमेव । तमसा चक्षुर्गतशक्तेः कुण्ठीभूतत्वेन तदभावसम्पादकत्वस्यावश्यकत्वात् । अन्यथाऽल्पालोके सत्यपि केषाञ्चिद्वर्णादिप्रत्यक्षं केषाञ्चिन्नेति विशेषस्यानुभवसिद्धस्याभावप्रसङ्गात् । करणे शक्त्यङ्गीकारे तु शक्तौ तारतम्यसत्त्वादुत्कृष्टशक्तिमच्चक्षुषाऽल्पालोकेऽपि प्रत्यक्षं भवति । शक्तेरेकजातीयत्वेऽप्युत्कृष्टशक्तेरेवाल्पालोके व्यक्त्यङ्गीकारात् । व्यक्तिश्च कुण्ठीमावापादकत्वमिति । एवं न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा । दिव्यं ददामि ते चक्षुरित्यादिना दिव्यशब्देन शक्तिविशेषत्वबोधकेन चक्षुष्येव शक्तेः कथनाच्च । एकेनैव चक्षुषोद्भूत-

रूपादिमत्पिशाचादिशरीरस्य दर्शनतदभावयोरनुभवसिद्धत्वेनेन्द्रियेष्वेव तादृशशक्तेस्तत्कुण्ठीभावस्य च पिशाचशक्तिनिबन्धनस्यावश्यकत्वाच्च । अनुमानागमयोस्त्वर्थविषयकत्वप्रत्ययहेतुत्वं तु सर्वसम्मतमेव । यत्तु तत्रापि तत्तलिङ्गाव्यवहितोत्तरत्वं तत्तच्छब्दव्यवहितोत्तरत्वावच्छिन्नमेव कार्यं न तु विषयविशेषावच्छिन्नमपीति । तत्तुच्छम् । कारणतायाः शक्तिरूपत्वेनोदासीनपदार्थजननानुकूलशक्त्यङ्गीकारे गौरवात् । अर्थविशेषबोधोद्देशेन वाक्यविशेषोच्चारणाभावप्रसङ्गाच्च । एवं कारणगतायाः शक्तेर्ज्ञानगतार्थप्रकाशनशक्तिप्रयोजकत्वादर्थप्रकाशनप्रयोजकत्वमिति सविषयकत्वमावश्यकं कर्तुश्चात्मनो न सविषयकत्वम् । करणप्रेरणद्वारा करणगतशक्तिव्यञ्जन एवोपक्षीणत्वात् । अत एवात्मना प्रेरितं चक्षुः सत्यपि विषये दोषविशेषेणाहितशक्त्यन्तरं सत् न कर्तुरिच्छाविषयीभूतं ज्ञानं जनयति । प्रमेयस्य ज्ञानजनकत्वस्यैवाभावान्न शङ्काविषयत्वमपि । मतान्तरे प्रत्यक्षं प्रति विषयस्य जनकत्वाङ्गीकारात्तद्रीतिमवलम्ब्य प्रमेयस्य जनकत्वेऽपीत्युक्तम् । अत एव चक्षुष उद्भूतरूपादयो विषया न गुरुत्वादय इत्यादयः सार्वजनीनाः प्रयोगास्तत्तदर्थविषयकत्वविशिष्टज्ञानजननाकूलशक्तितदभावबोधाभिप्रायका न गौणाः । शब्दे त्वेतद्वाक्ये आकाङ्क्षादिविशेषविशिष्टैतत्पदसत्त्वात्तज्जन्यज्ञाने तदर्थस्य प्रकारतेति सार्वजनीनस्फुटप्रतीतेः सत्त्वाच्छब्दबोधीयविषयताप्रयोजकशक्तिमत्त्वं स्फुटम् । एतदभिप्रायेणैवानुव्याख्याने तन्मुख्यं ज्ञानशब्दयोरिति याथार्थ्यरूपार्थविषयकत्वस्य शब्दनिष्ठस्येन्द्रियादिनिष्ठशक्त्येपक्षया मुख्यत्वमुक्तमित्यादि बोद्धव्यं सुधीभिरित्यलं विस्तरेण । न चैवमपि यादृच्छिकसंवादिनि लिङ्गे वाक्ये चातिव्याप्तिः । तत्र ज्ञानस्य यथार्थत्वेन तत्करणेष्वपि याथार्थ्यसत्त्वादिति वाच्यम् । तत्र ज्ञानस्य यथार्थत्वेऽपि करणगततज्जननानुकूलशक्तेर्दोषप्रयुक्तत्वेनाययार्थत्वात् । न च लिङ्गज्ञानस्य व्याप्त्यंशे पक्षधर्मत्वांशे वा भ्रमत्वस्यावश्यकत्वेन तन्निष्ठायाः शक्तेः कथञ्चिद्दोषप्रयुक्तत्वसम्भवेऽपि वाक्यनिष्ठायास्तदसम्भवः । न च तत्राकाङ्क्षाज्ञानं योग्यताज्ञानं तात्पर्यज्ञानं वा भ्रमः । तद्वाक्यस्य संवादित्वेन योग्यताज्ञानस्य भ्रमत्वासम्भवात् । आकाङ्क्षादेश्च सत्त्वाद्विप्रलम्भस्य वाक्योत्पत्तिप्रयोजकत्वेऽपि शाब्दबोधोत्पत्तौ तस्याप्रयोजकत्वादिति वाच्यम् । आकाङ्क्षादिमत्पदकदम्बस्यैव वाक्यत्वेनाकाङ्क्षाया विप्रलम्भमूलत्वेन तादृशाकाङ्क्षाया एव दोषत्वात् । तत्प्रयोज्यशाब्दबोधजननानुकूलशक्तेरपि दोषप्रयोज्यत्वात् । तर्हि तज्ज्ञाने तदाकारत्वानुपपत्तिस्तादृशाकारसमर्पकस्यान्यस्याभावादिति वाच्यम् । अस्यैव वाक्यस्य तदाकरकज्ञानोत्पत्तौ प्रयोजकत्वेऽपि तज्ज्ञाननिष्ठप्रामाण्याप्रयोजकत्वात् । न च नदीतीरवृत्तित्वविशिष्टफलनिष्ठविषयतानिरूपकत्वस्यैव प्रामाण्यपदार्थत्वेन तादृशफलनिष्ठविषयताप्रयोजकत्वमङ्गीकृत्य प्रामाण्याप्रयोजकत्ववचनं रिक्तमेवेति वाच्यम् । तज्ज्ञानीयफलनिष्ठविषयताप्रयोजकत्वेऽपि तादृशविषयताया नदीतीरवृत्तित्वविशिष्टफलवृत्तित्वेऽप्रयोजकमित्यर्थकत्वात् । न च

तर्हि तस्याकस्मिकत्वापत्तिः । ईश्वरेच्छाया एव प्रयोजकत्वात् । कुत एतदिति चेत् । विप्रलम्भ-मूलकवाक्यसामान्यस्य कुत्रापि प्रमात्वप्रयोजकत्वस्यादृष्टत्वात् । प्रत्युत यत्र यत्प्रतिपद्यते तदभाव-वत्तन्निष्ठत्वस्यैव तादृशविषयतायां सत्त्वम् । अत एव नाहं तमर्थमज्ञासिषं तूष्णीमवदं यदृच्छया तत्प्रमाणमभूदिति वदति । तादृशप्रमात्वे निर्दोषवाक्यत्वावच्छिन्नमेव प्रयोजकं द्रव्यत्वानुमापकत्वा-द्गुणवत्त्वस्य द्रव्यत्वप्रयोजकत्वम् । यथा निर्दोषवाक्यत्वावच्छिन्नजन्यत्वज्ञानानन्तरं तज्ज्ञानीय-विशेष्यतायां तद्वन्निष्ठत्वे संशयो न भवति किन्तु निश्चय एवेति । तादृशवाक्यत्वावच्छिन्न एव प्रमात्वप्रयोजिका शक्तिर्न यादृच्छिकसंवादवाक्ये लिङ्गे चेति नातिव्याप्तिरिति सर्वमकलङ्कम् । केचित्तु । तद्वाक्योत्पत्तिप्रयोजकस्य वक्तृनिष्ठज्ञानस्य भ्रमत्वेन दोषरूपत्वम् । तस्य चाकाङ्क्षादिसम्पादनद्वारा समानाकारबोधौपयिकशक्तिसम्पादकत्वात्तद्वाक्यनिष्ठशक्तेर्दोषप्रयोज्यत्वम् । श्रोत्रसमवेतबोधसमाना-कारत्वेऽपि वक्तृसमवेतज्ञानस्य भ्रमत्वं चासदर्थविषयकत्वात् । श्रोत्रज्ञानविषयीभूतविद्यमानार्थस्तु न वक्तृज्ञानविषयः । सन्निकर्षादितज्ज्ञानसामग्र्यभावात् । नाहं तमर्थं जानामि किन्तु तूष्णीमवदमिति तस्यैवानुभवाच्चेति वदन्ति । दोषाप्रयोजनययथावस्थितार्थविषयकत्वं वा लक्षणम् । प्रायो यथा-वस्थितार्थविषयकत्वं दोषाप्रयोज्यमेव भवतीति ज्ञापनाय यथावस्थितेत्यादिविशेषणमिति दोषप्रयोज्य-विषयितावत्त्वमित्येव लक्षणमिति वाऽस्त्विति सुधायामुक्तम् । ननु तादृशानुपूर्वीसामान्यरूपेण प्रमात्वप्रयोजकशक्तिमत्यपि मवतीति तत्रातिव्याप्तिरिति वाच्यम् । तादृशवाक्यत्वेन रूपेण तदभाववन्निष्ठविधिरूपविषयिता प्रयोजिकाऽपि भवतीति तदन्यनिष्ठविषयतानिरूपकान्यत्वाभावा-दतिव्याप्त्यभावात् ।

**श्रीनि.—** ॥ **ज्ञेयविषयीकारित्वेनैवेति ।** असम्भवपरिहारायाविवक्षितेनैवेत्येवकारार्थः ॥ **तयोः साक्षाज्ज्ञेयविषयीकारिकारणत्वेऽपीति ।**

**वि.—** ननु साक्षाज्ज्ञेयविषयीकारित्वादस्तु केवलप्रमाणस्य ज्ञेयविषयीकारित्वम् । तत्साधन-स्यानुप्रमाणस्य तन्नास्त्येव ज्ञेयविषयीकारित्वम् । तत्र तद्विषयकत्वव्यवहारस्तज्ज्ञेयविषयीकारि-साधनत्वादौपचारिक एव । अतः प्रमाणलक्षणस्यानुप्रमाणेषु प्रत्यक्षानुमानागमेष्वव्याप्तिरित्यत आह ॥ **ज्ञेयविषयीकारित्वं चेति ।** चस्त्वर्थः । साक्षादित्यनन्तरं ज्ञेयविषयीकारित्वेनेति शेषः । निषिद्धत्वेन पापसाधनमित्यदादाविवात्रापि प्रयोजके तृतीया । तथा च ज्ञेयविषयीकारित्वं तु साक्षाज्ज्ञेय-विषयीकारित्वेन वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा प्रयोजकत्वेन विवक्षितमित्युपगतमिति हेतोर्नानुप्रमाणेष्वव्याप्तिरित्यर्थः । ज्ञेयविषयीकारितायां न केवलं साक्षज्ज्ञेयविषयीकारित्वं तन्त्रं किन्तु

साक्षाज्ज्ञेयविषयीकारिसाधनत्वमपि । तत्राद्यस्यानुप्रमाणेष्वसत्त्वेपि द्वितीयस्य सत्त्वाज्ज्ञेयविषयीकारित्वं सामान्यं केवलप्रमाण इवानुप्रमाणेष्वप्यस्तीति नाव्याप्तिरिति भावः । ननु ज्ञेयविषयीकारित्वे साक्षाज्ज्ञेयविषयीकारिसाधनत्वमपि न तन्त्रम् । ज्ञानकारणस्य ज्ञेयविषयतायां मानाभावादिति चेन्न । अनुपदमेवात्र प्रमाणस्य वक्ष्यमाणत्वात् । ननु तार्किकैर्ज्ञानात्मादेर्ज्ञानकारणस्यापि व्यापारानुबन्धितया ज्ञेयत्वानुपगमाज्ज्ञेयविषयीकारिज्ञानकरणत्वस्येव तत्कारणत्वस्यापि तन्त्रत्वसम्भवाच्च यथावस्थितज्ञेयविषयीकारित्वं प्रमातृप्रमेययोरप्यस्तीत्यपि स्यादित्यत आह ॥ **ज्ञेयविषयीकारित्वेनैवेति ।** अव्याप्तिपरिहारायाभ्युपगतं ज्ञेयविषयीकारित्वेनैवेत्यर्थः । साक्षाज्ज्ञेयविषयीकारित्वं तत्साधनत्वं च द्वयमेव ज्ञेयविषयतायां तन्त्रमित्यभिप्रेत्य तदभावाज्ज्ञेयविषयीकारित्वाभावमुपपदायति ॥ **तयोरिति ।** न चास्तु साक्षाज्ज्ञेयविषयीकारिकारणत्वेऽपि ज्ञेयविषयीकारित्वम् । अन्यथा तत्साधनत्वेऽपि तन्न स्यादिति वाच्यम् । ज्ञानकारणस्य ज्ञेयविषयतायां मानाभावात् । न हि ज्ञानकारणमात्मादिकं घटादिविषयकमित्यत्र किञ्चिन्मानमस्ति । न च ज्ञानसाधारणकारणत्वापेक्षया लाघवाज्ज्ञानकारणत्वमेवास्तु तत्र तन्त्रमिति वाच्यम् । प्रमातरि प्रमेये च सविषयकत्वव्यवहारप्रसङ्गात् । न ह्यात्मा घटादिर्वा घटादिकं विषयीकरोतीति कश्चिद्व्यवहरति । अन्यथा प्रमाणपदवाच्यतायां लाघवात्प्रमितिकारणत्वं तन्त्रमित्यापातात् । ततोऽपि लाघवान्नियतपूर्ववृत्तित्वं पूर्ववृत्तित्वमात्रं वा ज्ञेयविषयतायां तन्त्रमित्यापाताच्च । ज्ञानकारणस्य तु सविषयत्वे त्विदानीं मम मनो धर्ममेव गोचरयति । नाधर्मं मम चक्षुर्लक्ष्यमेव विषयीकरोति । न तद्व्यतिरिक्तमित्यादिव्यवहारस्यात्रार्थे प्रत्यक्षं प्रमाणमत्रार्थेऽनुमानं प्रमाणमत्रार्थे आगमः प्रमाणम् । रूपादयश्चक्षुरादिविषयाः । अबाधितविषयमनुमानं बाधितविषयो हेतुरित्यादि शास्त्रीयव्यवहारस्य शास्त्रस्य सविषयतयोपपादकाथातो ब्रह्मजिज्ञासेत्याद्यागमस्य कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यत इत्याद्यगमस्य च मानत्वात् । इन्द्रियार्थानित्यस्येन्द्रियविषयानित्येवार्थः । इन्द्रियपदस्य लक्षणाप्रसङ्गात्। कर्मेन्द्रियाणां ज्ञानजनकत्वाभावाच्च । किञ्च चक्षुरादीन्द्रियाणि स्वविषयसन्निकृष्टानि साक्षात्कारं जनयन्ति । उत स्वाविषयसन्निकृष्टानि साक्षात्कारं जनयन्ति । न द्वितीयः । चक्षुरादिना गन्धादिसाक्षात्कारोदयप्रसङ्गात् । आद्ये सिद्धं ज्ञानकारणानां सविषयत्वमिति दिक् । एतेन ज्ञानसाधनेषु सविषयत्वव्यवहारो मुख्य इत्यपास्तम् । बाधकाभावात् । प्रत्युत चक्षुरादीनां निर्विषयत्वे गन्धादिसाक्षात्कारजनकत्वरूपबाधकस्य सत्त्वाच्च । ज्ञानसाधनत्वाप्रतिसन्धानेऽपि कर्मेन्द्रियादौ सविषयत्वबुद्धेश्च । अन्यथा चक्षुरादीनि ज्ञानकारणान्येव सविषयाणि तज्जन्यत्वात् । ज्ञाने सविषयत्वव्यापारो मुख्य इत्यापाताच्च । ननु ज्ञानकारणेष्वपि ज्ञेयविषयत्वव्यवहारस्य मुख्यत्वे साधनेष्वपि

ज्ञेयविषयत्वव्यवहारस्य मुख्यत्वे साधनेष्वपि ज्ञेयविषयीकारित्वं मुख्यमित्यापन्नम् । तथा च ज्ञेयविषयीकारित्वं ज्ञाने मुख्यमनुप्रमाणेष्वमुख्यमिति सिद्धान्तविरोध इति चेन्न । ज्ञानतत्साधनयोर्ज्ञेयविषयीकारित्वसाम्येऽपि केनचिद्विशेषेण मुख्यत्वामुख्यत्वाङ्गीकारसम्भवेनाविरोधात् । तदुक्तं सुधायाम् । न चैवमव्याप्तिर्लक्षणस्येति वाच्यम् । ज्ञानमेव यथार्थं करणानि तु तज्जनकतया तथोपचर्यन्त इत्यङ्गीकारे हि स्यात् । न चैवम् । यथावस्थितज्ञेयविषयीकारित्वस्योभयत्र साम्यात् । ज्ञानविषय एव हि करणानां विषयः । न हि किमप्यविषयीकुर्वन्त्येतानि तज्ज्ञानं जनयन्ति । अतिप्रसङ्गात् । केवलविषयस्य ज्ञेयतां ज्ञानमुपाधितया करणानि तज्जनकतया सम्पादयन्तीत्येतावन्तं विशेषमाश्रित्य केवलानुप्रमाणाभेदः समर्थित इति । न च तयोः करणत्वेऽपीत्यस्य विषयस्य क्वापि जनकतेति तत्त्वोद्योतटीकोक्तिविरोधः । अत्र प्रमेयस्य कारणत्वोक्तिः प्रमेयविशेषस्यान्तःकरणादेः कारणत्वाभिप्रायेण वा प्रमेयस्य प्रयोजकत्वाभिप्रायेण वा परोक्तानुवादरूपेण वा प्रवृत्ता तद्वाक्यं तु कारणत्वनिषेधाभिप्रायेण प्रवृत्तमित्यविरोधः । इति ।

## प्रमास्वरूपम्, संशयस्वरूपम्

प्र. प.— **प्रमावान्प्रमाता । प्रमाविषयः प्रमेयम् । यथार्थज्ञानं प्रमा । यथार्थग्रहणेन संशयविपर्ययतत्साधनानां निरासः । अनवधारणं ज्ञानं संशयः । अनवधारणग्रहणं सम्यग्ज्ञानविपर्ययव्युदासार्थम् । घटादिनिवृत्त्यर्थं ज्ञानमिति ।**

**जना.**— ॥ **प्रमावानिति** । प्रमाता स्वामीत्यर्थः । तेनान्तःकरणस्याप्युपादानोपादेयभावसम्बन्धेनान्तःकरणवृत्तिरूपप्रमावत्त्वात्प्रमातृत्वापत्तिरिति निरस्तम् ॥ **प्रमाविषय इति** । प्रमयाऽस्तीति गृह्यमाण इत्यर्थः । तेन भ्रमेणास्तीति गृह्यमाणे शुक्तिरूप्यादौ तथा बाधकप्रत्ययेन नास्तीति गृह्यमाणे तत्रैव पुनर्नातिव्याप्तिरिति ज्ञेयम् । प्रमाणलक्षणगतयथावस्थितपदकृत्यमाह ॥ **यथार्थग्रहणेनेति** । यथाशब्दस्य योऽर्थो यथावस्थितत्वं तद्ग्रहणेनेत्यर्थः । यथावस्थितग्रहणेनेत्येव वाच्ये यथार्थग्रहणेनेत्युक्तिराचार्योक्तप्रमाणलक्षणगतयथाशब्दार्थग्रहणेनैव संशयादिनिरासो न तदर्थमस्माभिः पदान्तरं दत्तमिति सूचयितुम् ॥ **अनवधारणेति** । नन्वनवधारणज्ञानत्वं संशयत्वम् । अवधारणत्वं च संशयभिन्नज्ञानत्वमित्यन्योन्याश्रय इति चेन्न । अवधारणत्वं च निष्कम्पप्रवृत्तिजननयोग्यज्ञानत्वमिति निर्वचनेनान्योन्याश्रयानवकाशात् । ननु प्रवृत्तेर्निष्कम्पत्वं निःसंशयत्वमेवेति पुनरप्यन्योन्याश्रय इति चेन्न । प्रवृत्तेर्निष्कम्पत्वं नाम ज्ञाने स्पष्टत्ववत्प्रवृत्तिगतो जातिविशेष एवेति न कश्चित्क्षुद्रोपद्रवः ।

**राघ.**— व्यावर्त्यतया प्रसक्तं प्रमातृप्रमेयस्वरूपमाह ॥ **प्रमावानिति ।** प्रमाया मनोधर्मत्वेऽपि तत्स्वामित्वाद्धनी गोमानित्यादिवत्प्रमावानित्युक्तिर्युक्ता ॥ **प्रमाविषय इति ।** विषयत्वं प्राङ्निरुक्तम् । प्रसक्तप्रमास्वरूपत्वं चाह ॥ **यथार्थेति ।** यथावस्थितार्थविषयीकारि ज्ञानं प्रमेत्यर्थः । अर्थशब्दो वस्तुपर्यायः । आद्यविशेषणेन संशयविपर्यययोर्नातिव्याप्तिः । द्वितीयेन तु चक्षुरादीन्द्रियरूपानुप्रमाणेषु नातिव्याप्तिः । स्मृतिस्तु लक्ष्यैवेति स्पष्टत्वाद्वा केवलप्रमाणलक्षणे वक्ष्यमाणत्वाद्वाऽत्र नोक्तम् । एवं प्रमाणलक्षणे ज्ञेयविषयीकारित्वव्यावर्त्यं तत्प्रसक्तानुप्रसक्तं चोक्त्वाऽधुना यथावस्थितेति पदकृत्यमाह ॥ **यथार्थेति ।** यथापदस्य योऽर्थो ज्ञेयानतिक्रमणरूपं यथावस्थितवस्तुविषयीकारित्वं तद्ग्रहणेनेत्यर्थः। ज्ञेयविषयीकारित्वस्य साक्षाद्वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा द्वेधाऽभिमतत्वादाद्यस्य संशय-विपर्यययोरन्त्यस्य तत्साधनयोरतिव्याप्तौ यथावस्थितेति ज्ञेयविशेषणेन तन्निरास इत्यर्थः । प्रसक्त संशयादेः स्वरूपं प्रपञ्चेनाह ॥ **अनवधारणेत्यादिनेत्याचार्य इत्यन्तेन ।** विप्रतिपत्तिरपि साधारणी-त्यन्तं संशयतत्साधनचिन्ताप्रकरणमिति ज्ञेयम् । संशयं लक्षयति ॥ **अनवधारणेति ।** अवधारणं निश्चयः । तद्भिन्नमनवधारणम् । निश्चयत्वानधिकरणज्ञानमिति यावत् । पदकृत्यं स्वयमेवाह ॥ **अनवधारणेति ॥**

**विज.**— प्रमातृशब्दार्थस्य प्रमाजननानुकूलयत्नवत्त्वस्य यथाश्रुतस्य सर्वत्र प्रमातर्यसम्भवादाह ॥ **प्रमावानिति ।** प्रमेयशब्दाभिधेयमाह ॥ **प्रमाविषय इति ।** प्रमां लक्षयति ॥ **यथार्थेति ।** सन्मात्र-विषयकज्ञानमित्यर्थः । यद्वा येन सम्बन्धेन यद्यत्रास्ति तेन तत्र तद्विषयकारि ज्ञानमित्यर्थः । प्रमाण-सामान्यलक्षणगतयथार्थ पदव्यावर्त्यमाह ॥ **यथार्थेति ।** लक्षणद्वयेऽपि यथासम्भवं व्यावर्त्यमाह ॥ **यथार्थेति ॥ अनवधारणेति ।** ननु किमिदमनवधारणत्वम् । न तावत्प्रकारायोगव्यवच्छेदाविषय-कत्वम् । पुरुषोऽयमिति निश्चयेऽतिव्याप्तेः । असम्भवाच्च । संशये प्रकारायोगव्यवच्छेदात्मिकायाः कोटेरेव विषयत्वात् । नाप्यवधारणानिश्चयः । न तद्भिन्नत्वं निश्चयत्वस्य संशयान्यज्ञानत्वेनान्योन्या-श्रयात् । न चैकमात्रकोटिकं ज्ञानमवधारणम् । तथा द्विकोटिकं ज्ञानं संशय इति वाच्यम् । द्रव्यं घटश्चेति समुच्चयेऽतिव्याप्तेः । विरोधित्वमपि कोटौ विशेषणमिति चेन्न । यद्ययंनिर्वह्निः स्यात्तदा निर्धूमः स्यादित्यादौ तर्केऽतिव्याप्तेः । तत्रैकस्मिन्पर्वतादौ व्याप्यारोपान्निर्धूमत्वस्य चक्षुरादिना धूमवत्त्वस्य विषयत्वादिति । मैवम् । एकस्मिन्धर्मिण्येकजातिसामग्र्य विषयकारिप्रमाविरोध्युभय-कोटिज्ञानं संशय इति तदर्थात् । तर्के तु व्याप्यारोपप्रमाणाभ्यामुभयकोटिज्ञानात् । यद्वा एकस्मिन् धर्मिणि साधारणधर्मोपस्थितभासमानविरोधोभय कोटिकज्ञानं संशयः । एतदेव हृदि निधाय वक्ष्यति ॥ **वयन्तु ब्रूम इति ।** संशयत्वं जातिरेव । न च चाक्षुषत्वादिना सङ्करः । सर्वत्र मानसस्यैव संशयस्य

स्वीकारात् । न च चक्षुषा सन्देहेऽनुव्यवसायविरोधः । चक्षुषोऽपि प्रयोजकत्वेन तथाऽनुव्यवसायात् । अस्ति च धर्म्युपनयद्वारा मानसेऽपि संशये चक्षुरुपयोग इत्याहुः । तन्न । एवं हि विषयत्वमपि जातिः स्यात् । चक्षुषा रजतं पश्यामीत्यनुव्यवसायस्य त्वद्रीत्यैवोपपाद्यत्वात् । यदि च शाब्दोऽपि विपर्ययोऽस्तीति शाब्दत्वादिना जातिसङ्करान्नैवं तदा शाब्दोऽपि संशयोऽस्तीति जातिसङ्करान्नैवमिति प्रकृतेऽपि समानमिति दिक् ॥ **सम्यग्ज्ञानेति** । सम्यङ्निश्चयेत्यर्थः ।

**वेदे.**— प्रमातृप्रमेययोर्व्यवच्छेद इत्युक्तम् । तत्र कः प्रमाता किं प्रमेयमित्यत आह ॥ **प्रमावानिति** । यद्यपि प्रमाताऽपि प्रमेयो भवति । तथाऽपि विशेषविवक्षयेदमुदितम् । प्रमातृप्रमेय लक्षणान्तर्गतप्रमाणलक्षणमाह ॥ **यथार्थेति** । संशयविपर्ययनिरासाय यथार्थेति । करणव्यावृत्त्यर्थं ज्ञानमिति । अत्र यज्ज्ञानं यदंशे यथावस्थितार्थविषयीकारि तज्ज्ञानं तदंशे प्रमेति विवक्षितमतो न कश्चित्क्षुद्रोपद्रव इति ध्येयम् । एवं ज्ञेयविषयीकारिपदव्यावर्त्यमुक्त्वेदानीं यथाशब्दार्थभूतयथा-वस्थितेत्यस्य व्यावर्त्यमाह ॥ **यथार्थेति** । यथाशब्दस्य योऽर्थस्तद्ग्रहणेनेत्यर्थः । ज्ञेयविषयीकारित्वं च साक्षात्संशयविपर्ययरूपज्ञाने तत्साधनत्वेन तत्करणेष्वपि वर्तत इत्यतिव्याप्तिस्तन्निरासाय यथा-शब्दार्थग्रहणमित्यर्थः । केचित्त्वनन्तरोक्तप्रमाणलक्षणान्तर्गतयथार्थपदकृत्यमाह यथार्थग्रहणेनेत्याहुः । तच्चिन्त्यम् । तथात्वे तत्साधनानामित्यस्यासम्मतत्वापत्तेरिति । ननु संशयविपर्ययतत्साधनानामेवाज्ञाने तत्रातिव्याप्तिज्ञानमपि न सम्भवतीत्यतः संशयलक्षणं तावदाह ॥ **अनवधारणमिति** । क्रमेण पदद्वयव्यावर्त्यमाह ॥ **अनवधारणेति** । अवधारणत्वं यद्यपि नैककोटिव्यवच्छेदविषयत्वे सत्य-परकोटिविषयत्वं वक्तुं शक्यम् । तद्भिन्नत्वस्यायं घट इत्यादावपि सत्त्वेनातिव्याप्त्यापत्तेः । नापि निश्चयत्वम् । संशयभिन्नज्ञानस्यैव निश्चयरूपत्वेनान्योन्याश्रयत्वप्रसङ्गात् । तथाऽप्येकाकारावगाहि-ज्ञानत्वं विवक्षितम् । तथा च तद्भिन्नमनेकाकारावगाहिज्ञानत्वं संशयत्वमिति पर्यवस्यति । नन्विदमप्ययुक्तम् । स्थाणुपुरुषविति समूहालम्बनेऽतिव्याप्तेः । एकस्मिन्धर्मिणीति विवक्षायामपि वृक्षः शिंशुपा चेति निश्चयेऽतिव्याप्तेः । विरुद्धानेकाकारविवक्षायां चेदं रजतमिति भ्रमेऽतिव्याप्तेरिति चेन्न । एकस्मिन्धर्मिणि भासमानविरुद्धानेकाकारावगाहि ज्ञानत्वस्य विवक्षितत्वात् । अत्र विरोधे भासमानत्वस्य विवक्षितत्वान्नोक्तदोष इति ध्येयम् । अत्र कश्चित् । एवमपि तर्केऽतिव्याप्तिः । तत्राप्येकस्मिन्पर्वते व्याप्यारोपान्निर्धूमत्वस्य चक्षुरादिना धूमवत्त्वस्य च विषयत्वादित्याह । तत्तुच्छम् । न हि व्याप्यारोपजनिते निर्धूमत्वारोपे धूमवत्त्वं विषयः । येनातिव्याप्तिशङ्कावकाशः । किन्तु तत्र चाक्षुषं धूमवत्त्वज्ञानमन्यदेवेति ।

**अभि.— यथार्थज्ञानमिति ।** यथार्थग्रहणं किमर्थम् । ज्ञानं प्रमेत्येव किं नोच्यते । न च संशयविपर्ययोरतिव्याप्तिवारणार्थं तदिति वाच्यम् । संशयविपर्यययोरलक्ष्यत्वाभावेन तत्रातिव्याप्त्यभिधानायोगात् । तथा हि । इदं रजतमिति तावदेकं ज्ञानं धर्म्यंशे प्रमारूपम् । प्रकारांशे त्वप्रमारूपमित्यङ्गीकार्यम् । अन्यथाऽपसिद्धान्तः स्यात् । न च तस्यैकज्ञानस्य प्रमारूपत्वमङ्गीकृत्य तद्भिन्नत्वरूपमलक्ष्यत्वं वक्तुं शक्यम् । तादात्म्यस्यान्योन्याभावविरुद्धत्वात् । न च भेदाभेदावङ्गीकर्तुं शक्यौ । अपसिद्धान्तात् । लक्ष्यादत्यन्तभेदस्यैवातिव्याप्तिप्रयोजकत्वेन भिन्नमात्रे लक्षणस्य व्यावर्तनीयत्वाच्चाभेदेनातिव्याप्तिमाशङ्क्य लक्षणपरिहारेऽभेदेनाव्याप्तिप्राप्त्या लक्षणस्य तत्र वक्तव्यत्वापाताच्चेति चेत् । उच्यते । नेदं सामान्यलक्षणमपि तु यद्यस्य यथार्थज्ञानं तत्तत्प्रमेति विशेषलक्षणम् । ततश्च ज्ञानं प्रमेत्युक्ते यद्यस्य ज्ञानं तत्तस्य प्रमेति वाक्यार्थः स्यात् । तच्च लक्षणमिदं रजतमित्यादिभ्रमेऽतिव्याप्तम् । रजतत्वावगाहिज्ञानादत्यन्तभिन्नत्वात् । तच्च तत्रातिव्याप्तिपरिहारार्थं यथार्थं पदं सार्थकमिति । नन्वनुप्रमाणेष्वव्याप्तिपरिहाराय यथा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन प्राप्तमौपचारिकं ज्ञेयविषयीकारित्वं लक्षणत्वेन विवक्षितमित्युच्यते । तथा संशयविपर्ययतत्साधनेष्वव्याप्तिवारणाय प्रयतितव्यमित्यत आह ।। **यथार्थग्रहणेनेति ।** यथार्थं प्रमाणमिति लक्षणकथनेनैवायथार्थानां संशयविपर्ययतत्साधनानामलक्ष्यत्वस्य ज्ञापितत्वेनाव्याप्तिप्रसङ्गाभावान्न तदर्थं प्रयतितव्यमिति भावः । एतेन यथार्थग्रहणेनेति वाक्येन यथार्थं प्रमाणमिति लक्षणे पदकृत्यमभिधीयते । उत यथावस्थितमेव ज्ञेयं यद्विषयीकरोतीति विवरणवाक्ये । नाद्यः । यथार्थातिरिक्तपदाभावेन तावन्मात्रोक्तिप्रयुक्तातिव्याप्तेरप्रसक्तत्वे यथार्थपदेन तत्परिहाराभिधानायोगात् । नापि द्वितीयः । तस्मिन्वाक्ये यथार्थपदाभावात् । न च यथाशब्दस्यार्थो यथार्थ इति व्युत्पत्त्या यथार्थग्रहणेत्यनेन यथावस्थितग्रहणेनेत्युच्यत इति वाच्यम् । अर्थविशेषणस्य यथावस्थित्वस्य यथाशब्दार्थत्वाभावात् । यथाशब्दोऽनतिक्रमे वर्तत इति स्वयमेवाभिधानात् । यथावस्थितग्रहणेनेत्यनुक्त्वा यथार्थग्रहणेनेति वक्रोक्तौ कारणाभावाच्चेति परास्तम् ।। **घटादिनिवृत्त्यर्थमिति ।** घटादौ लक्षणस्य निवृत्त्यर्थं ज्ञानपदमित्यर्थः । नन्वनवधारणं संशय इत्युक्ते न घटादौ लक्षणं प्राप्नोति । अनवधारणमित्युक्त्यैवावधारणभिन्नज्ञानत्वेन सदृशमित्यर्थलाभात् । तदुक्तं महाभाष्ये । नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । नञा युक्तं इवयुक्तं च तदन्यस्मिंस्तत्सदृशकार्यं विज्ञायते । तद्यथा । अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति । नासौ लोष्ठमानीय कृती भवतीति चेत् । उच्यते । ज्ञानमात्रस्य धर्म्यंशेऽवधारणत्वेनानवधारणत्व- ज्ञानत्वयोः समनियतत्वात् । अवधारणभिन्नस्य ज्ञानभिन्नत्वेन ज्ञानत्वेन सादृश्यायोगात् । अन्येनैव रूपेण सादृश्यं ग्राह्यमिति घटादावतिव्याप्तिरवर्जनीया । ततश्च ज्ञानमुपादेयम् । न

चावधारणभिन्नस्य ज्ञानत्वासम्भवः । ज्ञानमित्यनेनेदं सामान्यलक्षणम् । किन्तु यद्यदवधारणभिन्नत्वे सति यस्य ज्ञानं तत्तस्य संशय इति विशेषलक्षणमिति सूचनात् । ततश्च स्थाणुर्वापुरुषो वेत्येतज्ज्ञानं धर्म्यंशावधारणमपि प्रकारावधारणभिन्नत्वे सति तज्ज्ञानत्वात्संशयो भवति । केचित्तु । असम्भव-परिहारायावधारणशब्दस्य भावप्रधानत्वमङ्गीकृत्य न विद्यतेऽवधारणं यस्येति विगृह्यानवधारण-शब्दस्यावधारणत्वानधिकरणत्वमर्थमाहुः । तन्न । एवमप्यसम्भवानिस्तारात् । ज्ञानस्य निरंशत्वेन प्रदेशवृत्तित्वरूपव्याप्यवृत्तित्वायोगात् । कथं तर्हि प्रमात्वाप्रमात्वयोरेकदेशवृत्तित्वं न कथञ्चिदु-भयोरपि। एकस्मिन्देवदत्ते पुत्रत्वपितृत्वयोरिव व्याप्यवृत्तित्वाङ्गीकारात् । न चैवमारोप्येऽपि प्रमात्वं धर्मिण्यप्रमात्वं स्यादिति वाच्यम् । देवदत्तपितृत्वपुत्रत्वयोरिव व्यवस्थोपपत्तेः । अत एव सर्वमपीदं रजतमित्यादिज्ञानं धर्म्यंशे प्रमा प्रकारांशेत्वप्रमेत्याशयेन सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति प्राचां प्रवादः । अन्यथा घटादिज्ञानरूपप्रकारांशे विपर्ययत्वाभावात्सर्वं प्रकारे विपर्यय इत्युक्तं स्यादिति ।

**आद.—** प्रमां लक्षयति ॥ **यथार्थेति** । तत्साधनवारणाय ज्ञानेति । प्रमाणसामान्यलक्षणे यथार्थपदनिवेशे प्रयोजनमाह ॥ **यथार्थग्रहणेनेति** । ज्ञेयविषयीकारित्वोक्तौ संशयविपर्यययोः साक्षाज्ज्ञेयविषयीकारित्वेन तत्साधनेषु तत्साधनत्वेन निमित्तेन ज्ञेयविषयीकारित्वसत्त्वादतिव्याप्ति-रित्यर्थः । केचित्तु । प्रमाणलक्षणस्य यथार्थपदस्यैवेदं प्रयोजनाभिधानम् । न च तर्हि संशयविपर्यय-योर्ज्ञानत्वेनातिव्याप्तिसम्भवेऽपि तत्साधानेषु कथमतिव्याप्तिर्लिङ्गज्ञानादेस्तत्साधनस्य प्रमात्वे लक्ष्यत्वेनाव्यावृत्तत्वात् । अप्रमात्वे विपर्ययपदेनैव गृहीतत्वात् । इन्द्रियादेश्चज्ञानत्वेनातिव्याप्ति-प्रसक्तेरेवाभावादिति वाच्यम् । संशयकारणीभूततर्काभासादेः साधनपदेन गृहीतत्वात् । तर्कस्य चापत्तित्वेनातिव्याप्तिप्रसक्तेः सम्भवात् । निर्वक्ष्यमाणविपर्ययत्वस्यापत्तिरूपे ज्ञानेऽभावेन विपर्ययपदेन तस्यागृहीतत्वादित्याहुः । संशयं लक्षयति ॥ **अनवधारणमिति** । अवधारणभिन्नत्वे सति ज्ञानत्व-मित्यर्थः । निश्चयभिन्नत्वे सति ज्ञानत्वं संशय इत्यर्थः । न च निश्चयत्वस्य संशयान्यरूपत्वेना-न्योन्याश्रयः स्यादिति वाच्यम् । सत्त्वासत्त्वान्यतरविषयतानिरूपकत्वस्यैव निश्चयरूपत्वेना-न्योन्याश्रयाभावात् । संशयेऽपि सत्त्वविषयताऽस्तीति न शङ्कनीयम् । यादृशविषयताशालिज्ञाने जाते इदं सदिति व्यवहरति निःशङ्कं प्रवर्तते च तादृशविजातीयविषयताया विषयानौपाधिकायाः सत्त्व-विषयतापदार्थत्वात् । एवमसत्त्वविषयताया अपि विजातीयत्वं यादृशविषयताशालिज्ञाने सतीद-मसदिति व्यवहरति निःशङ्कं निवर्तते वा तादृशविषयताया असत्त्वविषयतापदार्थत्वत् इति बोध्यम् । न हि संशयोत्तरमयं स्थाणुः पुरुष इति वा व्यवहरति तदर्थी निःशङ्कं प्रवर्तते वा नायं स्थाणुरिति

व्यवहरति निवर्तते वा । अतस्तादृश्या विषयानौपाधिकाया विजातीयायाः सत्त्वविषयताया असत्व-विषयतायाश्च न संशयसाधारण्यम् । आहार्ये चासत्त्वविषयता नियमेनास्तीति तस्याप्युक्तनिश्चयत्वं युज्यते एव । अत एव तादृशविषयताव्यावृत्ता संशयविषयता कोटितेत्युच्यते । यद्यपि विजातीय-विषयतानिरूपकत्वं संशयत्वं तदन्यत्वं निश्चयत्वमित्यपि वक्तुं शक्यते तथाऽपि संशयीया विषयता नैकजातीया सम्भावनाया अपि संशयत्वेन तद्विषयताया इतरसंशयव्यावृत्तत्वात् । किंसञ्ज्ञकोऽयं वृक्ष इत्यादिबहुकोटिकस्थले तु विजातीया नैकविधा । अन्यतरत्वेनान्यतमत्वेन वाऽनुगमस्तु न सम्भवतीति पूर्वमेवावेदितमतो निश्चयान्यत्वेनानुगमः कृतः । स च नियमेनानेकाकारो भवति । अत एव तत्त्वोद्योतटीकायां न च भेदे विकल्पो युज्यत इति वाक्यव्याख्यानावसरे संशयस्य प्रश्नहेतुत्व-स्फुटीकरणायैकस्मिन्धर्मिणि विरुद्धानेकाकारं ज्ञानं विकल्प इत्युक्त्वा संशय इति यावदिति पर्यवसानं कृतम् । अन्यथा तस्यैव संशयपदार्थत्वेन यावदिति पर्यवसानकारणानुपपत्तेः । प्राचीनास्त्वे-कस्मिन्धर्मिणि विरुद्धत्वेन भासमाननानाधर्मावगाहि ज्ञानं संशय इत्यर्थ इति व्याचक्षते । तत्पक्षेऽ-वधारणमित्यस्यैकाकारमित्यर्थः । तद्भिन्नत्वमित्युक्तावर्थादनेकाकारत्वं लभ्यते । यथाश्रुतस्य पदकृत्य-कथनपरं घटादिनिवृत्त्यर्थं ज्ञानमिति वाक्यं बोध्यम् । वन्हिमान् हृदस्तद्विरुद्धवन्ह्यभाव-वानित्याहार्य-ज्ञानवारणाय तदन्यत्वं निवेशनीयम् ।

**श्रीनि.**— तन्वत्र प्रमेयपदस्य घटादेर्ज्ञानकरणत्वकथनमयुक्तम् । ज्ञानं प्रत्यर्थस्य क्वापि जनकता-सम्मतेरिति तत्त्वद्योतटीकायां विषयस्य ज्ञानकारणत्वनिराकरणात् । न चात्र प्रमेयपदेन सर्वजगत्कारणकालादिरेव विवक्षितस्तत्प्रमाविषय इति वाच्यम् । तत्तत्प्रमाकरणवाचकसाधनपदेन तत्तत्प्रमाकर्तृकर्मकारकयोरेव व्यावर्तनीयत्वात् । अत एव प्रमाणलक्षणटीकायां हेतुरित्युच्यमाने प्रमातृप्रमेययोरपि प्रसङ्गात्तत्साधनग्रहणम् । सतोरपि कर्तृकर्मणोर्यदभावात्कार्याभावो यदनन्तरं चासति प्रतिबन्धे भवत्येव कार्यं तदुच्यते साधनमिति साधनलक्षणे तत्प्रमाकर्मैव प्रविष्टम् । एतदेवाभिप्रेत्य तत्रैव प्रमातुः प्रमेयत्वेऽपि विवक्षावशात्पृथगुक्तिरित्युक्तम् । प्रकृतप्रमाविषयविवक्षावशादित्यर्थः । अतः कथमेतदिति चेत् । सत्यम् । तथाऽपि पररीत्याऽत्र विषयस्य कारणत्वोक्तिरित्यदोषः । यद्वा मानमातृप्रमेयाणां तदुच्छित्तिर्न हि क्वचिदित्यनुव्याख्याने मानादिभेदेन त्रिविधमेव विश्वमिति सुधायां च प्रमाणप्रमातृप्रमेयरूपविश्वयोर्व्यावृत्त्यादित्यत्र प्रमेयपदेन प्रमाणप्रमातृभिन्नप्रमाणकारणीभूत-विश्वग्रहणं प्रमाणलक्षणटीकावाक्यमपि सामान्यविषयं व्याख्येयमिति न दोषः ॥ **यथार्थग्रहणेनेति ।** यथाशब्दस्य यस्तात्पर्यार्थो यथावस्थितमात्रविषयीकारित्वं तन्मध्ये यथावस्थितमात्रेतिग्रहणेनेत्यर्थः । अत एव प्रमाणलक्षणटीकायां यथार्थं यथावस्थितार्थविषयीकारीत्युक्तम् । अर्थविषयीकारित्वस्य

संशयविपर्ययसाधारणस्य तद्विशेषणोपादानमित्युक्तम् ॥ **प्रमावानितीति** । प्रमास्वामीत्यर्थः ॥ **अवधारणज्ञानमिति** । ननु नञस्त्रयोऽर्थाः सन्ति । पर्युदासाख्यान्योन्याभावः प्रसज्यप्रतिषेधरूप-संसर्गाभावो वध्यघातुकभावादिरूपो विरोधश्चेति । आद्यो यथा । अनश्व इत्यादि । द्वितीयो यथा । नास्त्यत्र घट इत्यादि । तृतीयो यथा । असुर इत्यादि । तेष्वत्राद्यार्थो नाभ्युपगन्तुमुचितः । तथात्वे नावधारणमित्यनेनैवावधारणभिन्नज्ञानत्वेनावधारणसादृशमित्यर्थलाभेनासदृशे घटादावतिव्याप्त्यभावेन व्यावर्तकज्ञानपदवैय्यर्थ्यापत्तेः । यथाऽऽहुः । नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः । नञा युक्तमिवेन च युक्तं यत् तस्मिंस्तत्सदृशे कार्यं विज्ञायते । तद्यथा । अब्राह्मणमानयेत्युक्ते ब्राह्मण-सदृशं पुरुषमानयति नासौ लोष्ठमानीय कृती भवति । नापि द्वितीयः । प्रसज्यप्रतिषेधोऽत्र क्रियया सह यत्र नञिति वचनेन प्रसज्यप्रतिषेधार्थकस्य नञःक्रियासापेक्षत्वेनासमर्थेऽवधारणमत्र नास्तीति वाक्यरूपत्वापत्त्याऽनवधारणमिति समासानुपपत्तेः । समर्थः पदविधिरिति सामर्थ्ये सत्येव समास-विधानात् । क्रियासापेक्षस्य च नञः प्रतियोगिसमर्पकावधारणपदेन सामर्थ्याभावात् । सापेक्षम-समर्थमिति स्मरणात् । अवधारणाभावस्य सम्यङ्निश्चयादिसाधारणत्वेनातिव्याप्तेश्च । नापि तृतीयः । घटादेरवधारणाविरोधित्वेनानवधारणत्वस्य तत्राप्रसक्त्या तद्व्यावर्तकज्ञानपदवैय्यर्थ्यापत्तेः । तस्मा-त्कथमेतदिति चेत् । अत्रोच्यते । अस्तु तावदाद्योऽर्थः । न चोक्तदोषोऽर्थः । ज्ञानत्वेनैवावधारण-सादृश्यं वक्तव्यमित्यत्र नियामकाभावात् । ननु नञन्वितपदार्थगतसामान्यधर्मेण सादृश्यं वक्तव्यम् । अन्यथाऽतिप्रसङ्गात् । न चात्र ज्ञानत्वातिरिक्तः सामान्यधर्मोऽस्तीति तेनैव सादृश्यं वाच्यमिति चेत् । अत्रैवं प्रष्टव्यम् । किं सामान्यधर्मसादृश्यमात्रं प्रयोजकमुत विशेषधर्मसादृश्यमपि । नाद्यः । तथात्वेऽ-नश्व इत्यनेन रासभस्येव गवादिप्रतिपत्तिप्रसङ्गात् । अस्ति हि तत्र पशुत्वेन सामान्यधर्मेण सादृश्यम् । न द्वितीयः । प्रकृतेऽवधारणसंशययोर्ज्ञानत्वादिसाधारणधर्मसादृश्यं विना विशेषधर्मेण सादृश्या-भावात् । तस्माद्विवक्षानुसारेण सादृश्यं वाच्यम् । तदत्राप्यस्ति । ज्ञानार्थयोरबाधितत्वरूपसामान्य-धर्मेण सादृश्यम् । सम्मतं चैतज्ज्ञानार्थसादृश्यं यथार्था प्रतीतिरित्यादिप्रयोगं कुर्वतां सर्वेषाम् । तथा हि । नात्र यथाशब्दः सादृश्यभिन्नार्थः । यथाऽसादृश्य इत्यसादृश्यार्थैरव्ययीभावविधानेनाव्ययीभावे चोपकुम्भमित्यादिवन्नपुंसकनिर्देशापत्तेः । अतः सादृश्यार्थत्वमेव वाच्यम् । न चोदाहृतसूत्रेण सादृश्यार्थत्वे समासनिषेधात् यथा हरिस्तथा हर इत्यादिवदसमास एव स्यादिति वाच्यम् । समासान्तरनिषेधेऽपि यथा सदृशोऽर्थो यस्याः सेति बहुव्रीहिसमासोपपत्तेः । उक्तं हि सुधायाम् । कथञ्चिद्बहुव्रीहितामाश्रित्य वेति । न चाबाधितत्वमपहाय ज्ञानार्थयोः सादृश्यान्तरमस्ति प्रामाण्योप-युक्तम् । अतोऽन्योन्याभावार्थत्वेनानुपपत्तिः । अथवा संसर्गाभावाश्रयत्वमस्तु । अवधारणशब्दो

भावप्रधानः । तथा चोक्तरीत्या तत्पुरुषासम्भवेऽप्यघटं भूतलमित्यत्रैव न विद्यतेऽवधारणमवधारणत्वं यस्य तदनवधारणमिति बहुव्रीहिसमासे न किञ्चिद्बाधकम् । न च संशयस्यापि धर्म्यंशेऽवधारणत्वेन तत्रावधारणभिन्नत्वं वाऽवधारणत्वानधिकरणत्वं वा नास्तीत्यसम्भव इति वाच्यम् । प्रकारावधारण-ज्ञानत्वस्याभिमतत्वात् । अवधारणत्वं च निश्चयत्वं तच्च व्यवस्थितकोटिकत्वमतो नात्र कश्चित्क्षुद्रोप-द्रव इति सङ्क्षेपः ।

**वि.—** व्यवच्छेद्यज्ञानं विना तद्व्यवच्छेदस्य ज्ञातुमशक्यत्वेन प्रमातृप्रमेययोर्लक्षणमाह ॥ **प्रमावान् प्रमाता प्रमाविषयः प्रमेयमिति ।** प्रमावान् प्रमातेत्यर्थः । प्रमाज्ञानाभावे तद्घटितप्रमातृप्रमेयलक्षण-ज्ञानायोगात् प्रमालक्षणमाह ॥ **यथार्थज्ञानं प्रमेति ।** यथावस्थितवस्तुविषयीकारिज्ञानमित्यर्थः । यथार्थेति संशयविपर्ययोर्व्युदासः । ज्ञानमिति प्रत्यक्षादोर्निरासः । ननु प्रमाविषयः प्रमेयमित्यत्र शुक्तिरूप्यव्यवच्छेदाय प्रमाशरीरप्रविष्टयथाशब्दस्योपादानमिति वक्तव्यम् । न च तत्सम्भवति । यथाशब्दस्योपादानेऽपि तद्व्यवच्छेदायोगात् । शुक्तिरूप्यमसदिति प्रमितिविषयत्वस्य तत्र सत्त्वादिति चेन्न । स्वासत्त्वानुल्लेखिप्रमितिविषयः प्रमेयमिति विवक्षितत्वात् । असत्त्वं च न प्रमेयत्वानधिकरणत्वं येनान्योन्याश्रयः स्यात् । किन्तु कालत्रयवर्तिनिषेधप्रतियोगित्वमिति प्रमाणलक्षणवाक्ये यथावस्थित-पदकृत्यमाह ॥ **यथार्थग्रहणेनेति ।** यथाशब्दार्थस्य यथावस्थितत्वस्य ग्रहणेनेत्यर्थः। व्यवर्त्यज्ञानं विना व्यावृत्तज्ञानासम्भवाद्यथाशब्दार्थव्यावर्त्यस्य संशयस्य तावल्लक्षणमाह ॥ **अनवधारणज्ञानमिति ।** अनवधारणमवधारणभिन्नं निश्चयभिन्नं ज्ञानं संशय इत्यर्थः। निश्चयत्वं च सकम्पत्वं च प्रवृत्तिगतो जातिविशेष इति न कश्चित्क्षुद्रोपद्रव इति बोध्यम् । विशेषणकृत्यमाह ॥ **अनवधारणज्ञानमित्यादिना ।**

**(९) प्र.प.— तस्य निर्णायकाभावसहकृताः साधारणधर्मासाधारणधर्मविप्रतिपत्त्युप-लब्ध्यनुपलब्धयः पञ्च कारणानीति केचिदाहुः । तद्यथा । स्थाणुपुरुषयोः साधारणमूर्ध्वतालक्षणं धर्मं पुरोवर्तिन्युपलभ्य स्थाणुपुरुषौ स्मृत्वा विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिकं पुरुषत्वनिश्चाकं शिरःपाण्यादिकं चानुपलभमानस्य डोलायमानं संशयज्ञानमुत्पद्यते किमयं स्थाणुर्वा पुरुषो वेति । शब्दे चाकाशविशेषगुणत्वमसाधारणधर्ममुपलभमानस्य निर्णायकमजानतः संशयो भवति किं शब्दो नित्योऽनित्यो वेति । इन्द्रियेषु वैशेषिकसाङ्ख्ययोर्भौतिकत्वाभौतिकत्वविप्रतिपत्तिं पश्यतो निश्चायकमजानतः सन्देहो भवति किमिन्द्रियाणि भौतिकान्युताभौतिकानीति । कूप-खननानन्तरं जलोपलब्धौ सत्यां निश्चायकाभावे संशयो जायते किं प्राक् सदेवोदकं कूपखनन-नेनाभिव्यक्तमुपलभ्यते उतासत्तेनोत्पन्नमिति । अस्मिन्वटे पिशाचोऽस्तीति वार्तां श्रुतवतो वटसमीपं गतस्य तत्र पिशाचानुपलब्धौ सत्यां निर्णायकाभावे संशयो भवति । किं विद्यमान एव**

**पिशाचोऽन्तर्धानशक्त्या नोपलभ्यते किंवाऽविद्यमान एवेति । उपलब्ध्यनुपलब्ध्योः साधारणधर्म एवान्तर्भावात्त्रीण्येव कारणनीत्यपरे । उपलब्धिर्हि सतामेव घटादीनां प्रदीपारोपणेन दृष्टा । असतां च कुलालादिव्यापारान्तरमिति । तथाऽनुपलब्धिः सतामीश्वरादीनामसतां च शशविषाणादीनां दृष्टेति ।**

**जना.—** ननु साधारणधर्मस्य संशयहेतुत्वे पुरुषत्वव्याप्यकरादिमत्त्वनिश्चयकालेऽपि पुरोवर्तिनि पुरुषत्वसंशयापत्तिः । तदानीमपि स्थाणुपुरुषसाधारणोर्ध्वतादर्शनस्याक्षुण्णत्वादित्यत आह ॥ **निर्णायकाभावेति** ॥ **विशेषजिज्ञासायामिति** । एककोटिनिर्णायकजिज्ञासायां सत्यामित्यर्थः । असाधारणधर्मस्य संशयहेतुत्वं दर्शयति ॥ **शब्दे चेति** । आकाशविशेषगुणत्वं नामाकाशेतरावृत्तित्वे सत्यकाशवृत्तिधर्मत्वम् । विप्रतिपत्तिर्विरुद्धार्थप्रतिपादकवाक्यद्वयम् ॥ **उतासदिति** । प्रागिति शेषः ॥ **पिशाचानुपलब्धाविति** । पिशाचप्रत्यक्षाभाव इत्यर्थः । इत्थं पञ्चसंशयकारणानि निरूप्य तत्रा-साधारणदीनां चतुर्णां साधारणधर्मेऽन्तर्भावं वक्तुमुपलब्ध्योस्तावत्साधारणधर्म एवान्तर्भावं नैयायिकै-र्वाचयति ॥ **उपलब्धीति** । एतेनार्थान्नैयायिकमतमपि दर्शितं भवति ॥ **अपर इति** । नैयायिका इत्यर्थः।

**राघ.—** इदानीं तत्साधनमाह ॥ **तस्येति** । संशयस्येत्यर्थः । केचिच्चिरन्तनतार्किका भूषण-कारादयः। तद्वक्ष्यमाणमुदाहरणं यथा स्पष्टं तथोच्यत इत्यर्थः ॥ **विशेषजिज्ञासायामिति** । अन्यतर-निर्धारणेच्छायामित्यर्थः । आद्यं संशयकारणमुदाहरणेन प्रदर्श्य द्वितीयमपि तथा दर्शयति ॥ **शब्दे चेति** । तृतीयमपि हेतुं व्यनक्ति ॥ **इन्द्रियेष्विति** । चतुर्थं व्यनक्ति ॥ **कूपेति** ॥ **तेनेति** । कूप-खननेनेत्यर्थः । पञ्चमं हेतुं व्यनक्ति ॥ **अस्मिन्निति** । अपरे नवीननैयायिकाः । तदन्तर्भावं व्यनक्ति ॥ **उपलब्धिर्हीति** । व्यापारानन्तरमित्यतःपरमुपलब्धिर्दृष्टेत्यनुषङ्गः । दृष्टेत्यत्रानुपलब्धिरित्यनुषङ्गः । इतिपदस्येति सदसत्साधारण्यमुपलब्ध्यनुपलब्ध्योर्वदन्तोऽपरे त्रीण्येव कारणानीत्याहुरिति पूर्वेणान्वयः ।

**विज.—** संशयवन्निरस्यं संशयसाधनमादौ कस्यचिन्मतमुपन्यस्यति ॥ **तस्येति** । तथा च तत्कारणजन्यसंशयत्वेन संशयः पञ्चविध इति भावः ॥ **विशेषजिज्ञासायामिति** । अन्यतरकोटि-जिज्ञासायामित्यर्थः । इदं च क्वाचित्कमभिप्रेत्यैकत्रक्लृप्तसामग्रीद्वयसमाजात्संशयोत्पत्तेरप्रत्यूहत्वादिति ॥ **निर्णायकाभावसहकृता इति** । अन्यतरनिर्णायकाभावसहकृता इत्यर्थः । उभयव्याप्यदर्शनस्य तदानीमनिश्चायकत्वादिति भावः ॥ **डोलायमानमिति** । अव्यवस्थितकोटिकमित्यर्थः । यद्वेदमित्थ-मेवेत्यभिलापाजनकमित्यर्थः ॥ **किमयमिति** । असाधारणधर्महेतुकं संशयमुदाहरति ॥ **शब्दे चेति** । ध्वनेरनित्यत्वानिश्चयदशायां वायुधर्मत्वं वाऽभिप्रेत्येदं द्रष्टव्यम् ॥ **अभिव्यक्तमिति** । अपगत-

भावप्रधानः । तथा चोक्तरीत्या तत्पुरुषासम्भवेऽप्यघटं भूतलमित्यत्रैव न विद्यतेऽवधारणमवधारणत्वं यस्य तदनवधारणमिति बहुव्रीहिसमासे न किञ्चिद्बाधकम् । न च संशयस्यापि धर्म्यंशेऽवधारणत्वेन तत्रावधारणभिन्नत्वं वाऽवधारणत्वानधिकरणत्वं वा नास्तीत्यसम्भव इति वाच्यम् । प्रकारावधारण-ज्ञानत्वस्याभिमतत्वात् । अवधारणत्वं च निश्चयत्वं तच्च व्यवस्थितकोटिकत्वमतो नात्र कश्चित्क्षुद्रोप-द्रव इति सङ्क्षेपः ।

**वि.**— व्यवच्छेद्यज्ञानं विना तद्व्यवच्छेदस्य ज्ञातुमशक्यत्वेन प्रमातृप्रमेययोर्लक्षणमाह ॥ **प्रमावान् प्रमाता प्रमाविषयः प्रमेयमिति ।** प्रमावान् प्रमातेत्यर्थः । प्रमाज्ञानाभावे तद्घटितप्रमातृप्रमेयलक्षण-ज्ञानायोगात् प्रमालक्षणमाह ॥ **यथार्थज्ञानं प्रमेति ।** यथावस्थितवस्तुविषयीकारिज्ञानमित्यर्थः । यथार्थेति संशयविपर्यययोर्व्युदासः । ज्ञानमिति प्रत्यक्षादोर्निरासः । ननु प्रमाविषयः प्रमेयमित्यत्र शुक्तिरूप्यव्यवच्छेदाय प्रमाशरीरप्रविष्टयथाशब्दस्योपादानमिति वक्तव्यम् । न च तत्सम्भवति । यथाशब्दर्थोपादानेऽपि तद्व्यवच्छेदायोगात् । शुक्तिरूप्यमसदिति प्रमितिविषयत्वस्य तत्र सत्त्वादिति चेन्न । स्वासत्त्वानुल्लेखिप्रमितिविषयः प्रमेयमिति विवक्षितत्वात् । असत्त्वं च न प्रमेयत्वानधिकरणत्वं येनान्योन्याश्रयः स्यात् । किन्तु कालत्रयवर्तिनिषेधप्रतियोगित्वमिति प्रमाणलक्षणवाक्ये यथावस्थित-पदकृत्यमाह ॥ **यथार्थग्रहणेनेति ।** यथाशब्दार्थस्य यथावस्थितत्वस्य ग्रहणेनेत्यर्थः। व्यवर्त्यज्ञानं विना व्यावृत्तज्ञानासम्भवाद्यथाशब्दार्थव्यावर्त्यस्य संशयस्य तावल्लक्षणमाह ॥ **अनवधारणज्ञानमिति ।** अनवधारणमवधारणभिन्नं निश्चयभिन्नं ज्ञानं संशय इत्यर्थः। निश्चयत्वं च सकम्पत्वं च प्रवृत्तिगतो जातिविशेष इति न कश्चित्क्षुद्रोपद्रव इति बोध्यम् । विशेषणकृत्यमाह ॥ **अनवधारणज्ञानमित्यादिना ।**

**(९) प्र.प.— तस्य निर्णायकाभावसहकृताः साधारणधर्मासाधारणधर्मविप्रतिपत्त्युप-लब्ध्यनुपलब्धयः पञ्च कारणानीति केचिदाहुः । तद्यथा । स्थाणुपुरुषयोः साधारणमूर्ध्वतालक्षणं धर्मं पुरोवर्तिन्युपलभ्य स्थाणुपुरुषौ स्मृत्वा विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिकं पुरुषत्वनिश्चाकं शिरःपाण्यादिकं चानुपलभमानस्य डोलायमानं संशयज्ञानमुत्पद्यते किमयं स्थाणुर्वा पुरुषो वेति । शब्दे चाकाशविशेषगुणत्वमसाधारणधर्ममुपलभमानस्य निर्णायकमजानतः संशयो भवति किं शब्दो नित्योऽनित्यो वेति । इन्द्रियेषु वैशेषिकसाङ्ख्ययोर्भौतिकत्वाभौतिकत्वविप्रतिपत्तिं पश्यतो निश्चायकमजानतः सन्देहो भवति किमिन्द्रियाणि भौतिकान्युताभौतिकानीति । कूप-खननानन्तरं जलोपलब्धौ सत्यां निश्चायकाभावे संशयो जायते किं प्राक् सदेवोदकं कूपखनन-नेनाभिव्यक्तमुपलभ्यते उतासत्तेनोत्पन्नमिति । अस्मिन्वटे पिशाचोऽस्तीति वार्तां श्रुतवतो वटसमीपं गतस्य तत्र पिशाचानुपलब्धौ सत्यां निर्णायकाभावे संशयो भवति । किं विद्यमान एव**

एकसम्बन्धिज्ञानं अपरसम्बन्धिस्मारकं



**पिशाचोऽन्तर्धानशक्त्या नोपलभ्यते किंवाऽविद्यमान एवेति । उपलब्ध्यनुपलब्ध्योः साधारणधर्म एवान्तर्भावात्त्रीण्येव कारणनीत्यपरे । उपलब्धिर्हि सतामेव घटादीनां प्रदीपारोपणेन दृष्टा । असतां च कुलालादिव्यापारान्तरमिति । तथाऽनुपलब्धिः सतामीश्वरादीनामसतां च शशविषाणादीनां दृष्टेति ।**

**जना.**— ननु साधारणधर्मस्य संशयहेतुत्वे पुरुषत्वव्याप्यकरादिमत्त्वनिश्चयकालेऽपि पुरोवर्तिनि पुरुषत्वसंशयापत्तिः । तदानीमपि स्थाणुपुरुषसाधारणोर्ध्वतादर्शनस्याक्षुण्णत्वादित्यत आह ॥ **निर्णायकाभावेति** ॥ **विशेषजिज्ञासायामिति** । एककोटिनिर्णायकजिज्ञासायां सत्यामित्यर्थः । असाधारणधर्मस्य संशयहेतुत्वं दर्शयति ॥ **शब्दे चेति** । आकाशविशेषगुणत्वं नामाकाशेतरावृत्तित्वे सत्यकाशवृत्तिधर्मत्वम् । विप्रतिपत्तिर्विरुद्धार्थप्रतिपादकवाक्यद्वयम् ॥ **उतासदिति** । प्रागिति शेषः ॥ **पिशाचानुपलब्धाविति** । पिशाचप्रत्यक्षाभाव इत्यर्थः । इत्थं पञ्चसंशयकारणानि निरूप्य तत्रा-साधारणदीनां चतुर्णां साधारणधर्मेऽन्तर्भावं वक्तुमुपलब्ध्योस्तावत्साधारणधर्म एवान्तर्भावं नैयायिकै-र्वाचयति ॥ **उपलब्धीति** । एतेनार्थान्नैयायिकमतमपि दर्शितं भवति ॥ **अपर इति** । नैयायिका इत्यर्थः।

**राघ.**— इदानीं तत्साधनमाह ॥ **तस्येति** । संशयस्येत्यर्थः । केचिच्चिरन्तनतार्किका भूषण-कारादयः। तद्वक्ष्यमाणमुदाहरणं यथा स्पष्टं तथोच्यत इत्यर्थः ॥ **विशेषजिज्ञासायामिति** । अन्यतर-निर्धारणेच्छायामित्यर्थः । आद्यं संशयकारणमुदाहरणेन प्रदर्श्य द्वितीयमपि तथा दर्शयति ॥ **शब्दे चेति**। तृतीयमपि हेतुं व्यनक्ति ॥ **इन्द्रियेष्विति** । चतुर्थं व्यनक्ति ॥ **कूपेति** ॥ **तेनेति** । कूप-खननेनेत्यर्थः । पञ्चमं हेतुं व्यनक्ति ॥ **अस्मिन्निति** । अपरे नवीननैयायिकाः । तदन्तर्भावं व्यनक्ति ॥ **उपलब्धिर्हीति** । व्यापारानन्तरमित्यतःपरमुपलब्धिर्दृष्टेत्यनुषङ्गः । दृष्टेत्यत्रानुपलब्धिरित्यनुषङ्गः । इतिपदस्येति सदसत्साधारण्यमुपलब्ध्यनुपलब्ध्योर्वदन्तोऽपरे त्रीण्येव कारणानीत्याहुरिति पूर्वेणान्वयः ।

**विज.**— संशयवन्निरस्यं संशयसाधनमादौ कस्यचिन्मतमुपन्यस्यति ॥ **तस्येति** । तथा च तत्कारणजन्यसंशयत्वेन संशयः पञ्चविध इति भावः ॥ **विशेषजिज्ञासायामिति** । अन्यतरकोटि-जिज्ञासायामित्यर्थः । इदं च क्वाचित्कमभिप्रेत्यैकत्रक्लृप्तसामग्रीद्वयसमाजात्संशयोत्पत्तेरप्रत्यूहत्वादिति ॥ **निर्णायकाभावसहकृता इति** । अन्यतरनिर्णायकाभावसहकृता इत्यर्थः । उभयव्याप्यदर्शनस्य तदानीमनिश्चायकत्वादिति भावः ॥ **डोलायमानमिति** । अव्यवस्थितकोटिकमित्यर्थः । यद्वेदमित्थ-मेवेत्यभिलापाजनकमित्यर्थः ॥ **किमयमिति** । असाधारणधर्महेतुकं संशयमुदाहरति ॥ **शब्दे चेति** । ध्वनेरनित्यत्वानिश्चयदशायां वायुधर्मत्वं वाऽभिप्रेत्येदं द्रष्टव्यम् ॥ **अभिव्यक्तमिति** । अपगत-

प्रतिबन्धकमित्यर्थः । तदेतत्परद्वारा दूषयति ॥ **उपलब्ध्यनुपलब्ध्योरीति** । अन्तर्भावमेवाह ॥ **उपलब्धिरिति** । तथाऽपि त्रिविध एव संशय इति भावः ।

**वेदे.**— इदानीं संशयसाधनप्रदर्शनाय नैयायिकैकदेशिनां मतमाह ॥ **तस्येति** । पुरुषत्वादिनिश्चायकशिरःपाण्यादिदर्शने साधारणधर्मदर्शनादिमात्रेण न संशय इत्युक्तम् ॥ **निर्णायकाभावेति** । अन्यतरनिर्णायकाभावेत्यर्थः । तत्र साधारणधर्मज्ञानस्य संशयहेतुत्वमुपपादयति ॥ **स्थाणुपुरुषयोरिति** । विशेषजिज्ञासायामन्यतरकोटिजिज्ञासायामित्यर्थः । इदं च क्वाचित्काभिप्रायम् । जिज्ञासाभावेऽपि संशयोदयस्यानुभवसिद्धत्वादिति ध्येयम् ॥ **डोलायमानमिति** । अव्यवस्थितकोटिकमित्यर्थः। असाधारणधर्मज्ञानस्य संशयहेतुत्वमुपपदायति ॥ **शब्दे चेति** । विप्रतिपत्तेः संशयकारणत्वमुपपादयति ॥ **इन्द्रियेष्विति** । उपलब्धेस्तदुपपादयति ॥ **कूपेति** । अनुपलब्धेरपि तदाह ॥ अस्मिन्निति । न्यायैकदेशिनमुदयनमुखेन दर्शयति ॥ **उपलब्धीति** । उपलब्धेः सदसत्साधारण्यमुपपादयति ॥ उपलब्धिर्हीति । अनुपलब्धेरपि सदसत्साधारण्यमुपपादयति ॥ **तथाऽनुपलब्धिरपीति** ।

**अभि.**— ॥ **तस्येति** । तदेकदेशस्य डोलायमानसंशयस्येत्यर्थः । अत एव डोलायमानसंशयज्ञानमुत्पद्यत इति वक्ष्यते ॥ **इन्द्रियेष्विति** । विप्रतिपत्तिवाक्याभ्यामेककोटिसंशयद्वयानन्तरं डोलायमान संशयो भवतीत्यर्थः ॥ **कूपखननानन्तरमिति** । नन्विदं संशयव्युत्पादनमयुक्तम् । तद्बीजानभिधानात् । न च जलोपलब्धिः संशयबीजमित्युक्तमिति वाच्यम् । तस्य धर्म्युपलब्धित्वेन तद्भिन्नस्यैव संशयस्य वक्तव्यत्वात् । अन्यथा संशयमात्रे धर्म्युपलब्धेः सत्त्वेन सर्वोऽपि संशय उपलब्धिजन्य एव स्यात् । किञ्च किमयं संशयो जलधर्मिकः सत्त्वासत्त्वकोटिक आहोस्विदभिव्यक्त्युत्पत्तिकोटिकः । नाद्यः किमिदं कूपखननात्प्राक् सद्वासद्वेत्येतावतैव पूर्णत्वात्कूपखननेनाभिव्यक्तमुपलभ्यते । तेनोत्पन्नमित्यंशवैय्यर्थ्यापातात् । न द्वितीयः । प्राक् सदेवेत्यस्यासदित्यस्योपलभ्यत इत्यस्य च वैय्यर्थ्यापातात् । किञ्चोपलब्धिर्हि सतामेव घटादीनामित्युत्तरग्रन्थपर्यालोचनया सत्त्वासत्त्वयोरेव कोटित्वलाभेन तद्विरोध इति चेत् । न ब्रूमो वयं जलोपलब्धिमात्रं सन्देहबीजमिति । येनोक्तदोषः स्यात् । किन्नाम कूपखननप्रयुक्ततया ज्ञातसंशयबीजमिति । धर्मिज्ञानं तु न ज्ञातकारणम् । किन्तु स्वरूपसदेव । ततश्च न सर्वसंशयस्योपलब्धिजन्यत्वप्रसङ्गः । यदत्रोक्तं संशयः किंकोटिक इति । प्राक् सत्त्वासत्त्वकोटिक इति ब्रूमः । न च कूपखननेनाभिव्यक्तमुपलभ्यते तेनोक्तमित्यंशे वैय्यर्थ्यमिति वाच्यम् । न कूपखननान्तरभावितयैव ज्ञातोपलब्धिः संशयहेतुः । अपि तु प्राक् सत्त्वेऽभिव्यक्ततयाऽसत्त्वे उत्पन्नतयेत्युभयोपपन्नतया ज्ञातेति ज्ञापनार्थत्वात् । एतेन संशयबीजानां ज्ञातकारणत्वादुपलब्धेर्ज्ञात-

कारणत्वेन संशयबीजत्वायोग इति परास्तम् । उपलब्धेरपि ज्ञातकारणत्वाङ्गीकारात् ॥ **अस्मिन्वटे पिशाच इति ।** पिशाचानुपलब्धावित्यत:परं सत्त्वासत्त्वाभ्यामुपपन्नतया ज्ञातायामिति शेषः ॥ **किं विद्यमान एव पिशाच इति ।** अत्रापि पिशाचो विद्यमानोऽविद्यमानो वेति संशयः । अन्तर्धानशक्त्येत्यादिकं तु न स्वरूपेण ज्ञातानुबपलब्धिः सन्देहहेतुः अपि तु सत्त्वेऽप्यन्तर्धानशक्त्या वाऽसत्त्वेन वोपपन्ना भवतीति ज्ञाता संशयहेतुरिति ज्ञापनार्थमिति बोध्यम् । एतेन धर्मिज्ञानस्य संशयहेतुत्वादनुपलब्धिः संशयहेतुरित्युक्तमिति परास्तम् । शब्दे धर्म्युपलब्धिमङ्गीकृत्य चाक्षुषाऽनुपलब्धेः संशयहेतुत्वाङ्गीकारात्प्रामाण्यसंशयाहितसंशयस्य बहुलमुपलम्भेन संशयस्य संशयबीजते तथोपलब्ध्यनुपलब्धेश्च पृथक् संशयहेतुत्वे सत्यपि त्रीण्येव कारणानीत्यवधारयन्तं धिक्कर्तुमसाधारणधर्मविप्रतिपत्त्योर्गूढाभिसन्धिश्छत्रिन्यायेनान्तर्भावः स्यादित्यत आह ॥ **वयं तु ब्रूम इति ।**

**आद.—** ॥ **तस्येति ।** संशयकोटिवृत्तिधर्मसजातीयत्वं साधारणत्वं तज्ज्ञानं च न साधारणधर्मत्वेन रूपेण किन्तु येन धर्मेण संशयकोटिवृत्तिधर्मसजातीयो यो धर्मस्तद्धर्मविशिष्टत्वेनापेक्षितम् । अत एव कोटिस्मृतेः संशयकारणता । अन्यथा साधारणधर्मज्ञानस्यैव कोटिस्मरणरूपत्वेन कोटिस्मरणान्तरस्यानपेक्षितत्वेन साधारणधर्मदर्शनानन्तरं कोटिस्मरणोक्तेरसत्यापत्तेः । ननूर्ध्वतादिविशिष्टधर्मज्ञानस्य कोटिस्मारकत्वं कथमिति चेत् । सम्बन्धिज्ञानस्य सम्बन्ध्यन्तरस्मारकत्वेनोर्ध्वताविशिष्टज्ञाने तत्सजातीयोर्ध्वताविशिष्टस्थाणुपुरुषयोः संस्कारोद्बोधेन स्मृतिर्जायते । स्थाणुत्वपुरुषत्वयोरूर्ध्वत्वाधिकरणवृत्तित्वेनानुभूतत्वेन तत्संस्कारवशादूर्ध्वत्वज्ञाने सति तदधिकरणे स्थाणुत्वपुरुषत्वयोः प्रसक्तिर्भवतीति । **विशेषजिज्ञासायामिति ।** उदासीनपदार्थविषयकसंशयस्य मध्ये मार्गं सहस्रशः साधारणधर्मदर्शनेऽप्यनुदयादिति भावः । यदि पुनः सर्वत्र संशयपूर्वं विशेषजिज्ञासा नानुभूयत इति विशेषजिज्ञासाया न संशयहेतुत्वमित्याग्रहस्तदा जिज्ञासायाः प्रायिकत्वात्तदुपपादनमिति द्रष्टव्यम् । सामान्यधर्मप्रकारकज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वेनोर्ध्वतादिरूपसाधारणधर्मज्ञानस्यैवेच्छासामग्रीत्वेन विशेषजिज्ञासा सति प्रयोजने सार्वत्रिक्येव । न च संशयजनकदोषस्येच्छाप्रतिबन्धकत्वं कल्प्यत इति न शङ्क्यम् । जिज्ञासाभावसिध्युत्तरकालिकत्वेनोक्तप्रतिबन्धकतया इतरेतराश्रयाद्विचारस्थले जिज्ञासयैव संशयस्यानुभूयमानत्वेन तद्विरोधाच्च । सत्यपि जिज्ञासाऽन्यथासिद्धेत्यपि न शङ्क्यम् । जिज्ञासयैव निर्णयार्थं प्रवृत्तौ निर्णायिकालाभे संशयजनकत्वस्यानुभवसिद्धत्वात् । अन्यथा मध्येमार्गं दृष्टपदार्थे साधारणधर्मदर्शननिर्णायिकाभावयोः सत्त्वे संशयधाराया आपत्तेः । न च कोटिस्मृतिस्तत्र नास्तीति वाच्यम् । तयोरेवापादनात् । उद्बोधकाभावान्न कोटिस्मृतिसम्भवेऽप्यस्या अप्युद्बोधकत्वाक्षतेः । वस्तुतस्तु कोटिस्मृत्यादिकारणकलापसत्त्वेऽपि निर्णायकाभावकाल एव

संशयः। निर्णयार्थं प्रवृत्तावपि तदलाभे एव संशयः । मध्ये मार्गं साधारणधर्मवत्पदार्थज्ञानेऽपि कोटिस्मृतिसत्त्वेऽपि स्वत एव निर्णायकाभावसत्त्वेऽपि संशयस्याननुभूयमानत्वात् । तन्निर्णयार्थं प्रवृत्तिश्च तत्रेच्छाभावेन युज्यते । तादृशप्रवृत्तिसम्पादकतया निर्णयेच्छायाः संशयकारणत्वं क्वचित्कारणान्तरेण संशयाङ्गीकारेऽप्युक्तरीत्योक्तस्थले जिज्ञासाया हेतुत्वं दुर्वारम् । क्वचित्संशयजननानुकूलशक्तेरवधृतत्वेन तत्सजातीयत्वाच्च जिज्ञासाया हेतुत्वमिति मन्तव्यम् ।

**श्रीनि.—— ॥ साधारणधर्मेति ।** अनेककोटिसमूहचरितधर्मेत्यर्थः । ज्ञानोपलक्षणमेतत् । केचित्तु भूषणकरादयः ॥ **तद्यथेति ।** तेषां संशयकारणत्वं यथेत्यर्थः ॥ **डोलायमानमिति ।** यथाऽऽन्दोलिका न नियतदेशसम्बन्धिनी तथाऽनियतकोटिकमित्यर्थः ॥ **संशयज्ञानमिति ।** संशयरूपज्ञानमित्यर्थः ॥ **अभिव्यक्तमिति ।** अपगतावरणमित्यर्थः ॥ **असदेवेति ।** प्रागित्यनुवर्तते ॥ **व्यापारानन्तरमिति ।** उपलब्धिर्दृष्टेत्यनुवर्तते ॥ **प्रदीपारोपेणेति ।** प्रदीपोत्पादनेनेत्यर्थः ।

**वि.——** मतान्तर इव नास्माकं मते संशयोऽनेकविध इति ज्ञापयितुं कारणभेदात्संशयभेदं वदतां मतमनुवदति ॥ **तस्येति ।** तस्य संशयस्य निर्णायकाभावसहकृताः संशयकोटिनिर्णयहेतुप्रमाणाभावसहकृता इत्यर्थः । सावधारणधर्मादिपदेन तद्विषयज्ञानमुपलक्ष्यते ॥ **तद्यथेति ।** तत्पश्चानां संशयकारणत्वमित्यर्थः । क्रमेण तद्दर्शयति ॥ **स्थाणुपुरुषयोः साधारणमित्यादिना ।** विशेषजिज्ञासाया-मूर्ध्वताव्याप्ययोः स्थाणुपुरुषत्वयोः कोट्योः जिज्ञासायामित्यर्थः । शिरःपाण्यादिकं चेत्यनन्तरं पुरोवर्तिनीत्येतदनुवर्तनीयम् । डोलायमानमिदमादावेत्याकारम् । संशयज्ञानं संशयरूपं ज्ञानं जन्यत इत्यर्थः ॥ **निर्णायकमजानत इति ।** नित्यत्वानित्यत्वव्याप्यमजानत इत्यर्थः । निश्चायकाभावे जले प्राक् सत्त्वासत्त्वयोर्निर्णायकहेतुप्रमाणाभाव इत्यर्थः । कूपखननेनाभिव्यक्तं भग्नावरणमित्यर्थः । उतासत्प्रागसदित्यर्थः । पिशाचानुपलब्धौ सत्यामेतदनन्तरं पिशाचसत्त्वात्त्वयोरिति शेषः । निश्चायकाभावे निर्णयहेतुप्रमाणाभाव इत्यर्थः । उपपत्तिपूर्वकं मतान्तरमाह ॥ **उपलब्धनुपलब्ध्योरिति ।** तयोः साधारणधर्मत्वमुपपादयति ॥ **उपलब्धेर्हीत्यादिना ।** सतामेव प्राक् सतामेवेत्यर्थः । र्दीपारोपणेन दीपोत्पादनेनेत्यर्थः । असतां च प्रागसतां चेत्यर्थः । पटादीनामुपलब्धितर्दृष्टेत्यनुवर्तते । सतामीश्वरादीनां दृष्टेति वक्ष्यमाणमत्रापि सम्बध्यते । दृष्टेतीत्यत्रेतिशब्दः परमतानुवादसमाप्तौ वर्तते ।

(१०) प्र.प.—— **वयन्तु ब्रूमः । असाधारणधर्मविप्रतिप्रत्त्योरपि साधारणधर्म एवान्तर्भावः । असाधारणो हि धर्मो न स्वरूपेण संशयहेतुः । विशेषस्मरणकारणत्वाभावात् । किन्तु व्यावृत्तिमुखेनैव । तथा च नित्यव्यावृत्तत्वमनित्यस्यानित्यव्यावृत्तत्वं च नित्यस्य धर्म इति साधारण एव ।**

**जना.—** वयन्त्विति तुशब्दार्थभूतवैलक्षण्यं दर्शयति ॥ **असाधारणेति ।** असाधारणधर्मं साधारणधर्मेऽन्तर्भावयितुं येन रूपेण ज्ञातो धर्म उभयकोट्युपस्थापकस्तद्रूपमुभयकोट्युपस्थापकमिति मनसि निधाय साधारणधर्मताप्रयोजनकमुभयकोट्युपस्थापकतावच्छेदकमसाधारणधर्मेऽपि परिशेष-मुखेन द्रढयति ॥ **असाधारणो हीति ।** असाधारणो धर्म आकाशविशेषगुणत्वादिः । स्वरूपेण स्वस्य रूपं स्वरूपमिति व्युत्पत्त्या स्वधर्मेण विशेष्यभूतगुणत्वादिना ज्ञातो न संशयहेतुरित्यर्थः । कुत इत्यत आह ॥ **विशेषेति ।** कोटिस्मरणकारणत्वाभावादित्यर्थः । असाधारणधर्मस्य पृथक् संशयहेतुत्वं वदताऽपि न येन केनचिद्रूपेण तज्ज्ञानस्य हेतुत्वं वक्तुं शक्यम् । शब्द आकाशगुण इति ज्ञाने सत्यपि कोटिद्वयस्मरणानुत्पत्त्या संशयानुत्पादात् । अतः कोटिद्वयस्मृतिद्वारेणैवासाधारणधर्मः संशयहेतुरीति भावः । ननु धर्मत्वादिना ज्ञातेऽ साधारणधर्मो न कोटिस्वमारकश्चेत्तर्हि केन रूपेण ज्ञातः सन्न-साधारणधर्मः कोटीः स्मारयित्वा संशयहेतुरिति पृच्छति ॥ **किन्त्विति ।** उत्तरमाह ॥ **व्यावृत्ति-मुखेनेति ।** उभयकोटिमव्द्यावृत्तत्वरूपेण ज्ञातोऽसाधारणधर्मः कोटीः स्मारयन्संशयहेतुरिति शेषः । एवं च सत्युभयकोट्युपस्थापकतावच्छेदकनित्यव्यावृत्तत्वविशिष्टस्याप्याकाशगुणत्वस्य साधारणत्वं सिद्धमित्युपपादयति ॥ **तथा चेति ।** व्यावृत्तिमुखेन ज्ञातस्यैव धर्मस्य कोटिस्मारकत्वे सिद्धे सतीत्यर्थः । धर्म इति सप्तम्यन्तं पदम् । नित्यस्य धर्मे गगनपरिमाणादावनित्यघटादिव्यावृत्तत्वेन रूपेणासाधारणस्य साधारणत्वमित्यर्थः । इदमुक्तं भवति । साधारणधर्मत्वं नामोभयकोट्युप-स्थापकतावच्छेदकरूपावच्छिन्नधर्मत्वम् । उभयकोट्युपस्थापकतावच्छेदकत्वं नाम येन रूपेण ज्ञातस्योभयकोटिस्मारकत्वं तत्त्वम् । तादृशं च रूपमूर्ध्वतादावुभयकोटिसहचरितत्वम् । तद्रूपेण ज्ञातस्यैवोर्ध्वतादेरुभयकोटिस्मारकत्वात् । आकाशगुणत्वादौ तूभयकोटिमव्द्यावृत्तत्वमिति ।

**राघ.—** प्रतिज्ञातन्तर्भावं व्यनक्ति ॥ **असाधारणो हीति ।** कुतो न हेतुरित्यत आह ॥ **विशेषस्मरणेति ।** नित्यत्वानित्यत्वरूपकोटिस्वमरणेत्यर्थः । आकाशविशेषगुणत्वेन रूपेण ज्ञातस्य तादृशकोटिद्वयोपस्थाने बीजाभावादिति भावः । ततः किमित्यत आह ॥ **तथा चेति ।** अनित्यत्व-स्येत्यनन्तरं धर्म इत्यनुषज्यते । सप्तम्यन्तं धर्मपदं नित्यव्यावृत्तत्वं तत्राविद्यमानत्वम् । अनित्यस्य धर्मे घटरूपादौ । अनित्यव्यावृत्तत्वं च नित्यधर्मे गगनपरिमाणादौ वर्तत इति नित्यानित्यवस्तुधर्मेषु साधारणयोरनित्यव्यावृत्तत्वनित्यव्यावृत्तत्वयोराकाशगुणत्वे वर्तमानात्तादृशसाधारणधर्मद्वयोपेतोऽय-माकाशविशेषगुणत्वधर्मः स्वाधिकरणे शब्दे नित्योऽनित्यो वेति सन्देहमादधातीति सोऽपि साधारण एव । तादृशधर्मविशिष्टः सन्नेव संशयाधायको न स्वत इति स्वयमपि तथैव भवति ।

**विज.**— नन्वत्र विभिन्नकारणव्यक्तिजन्यत्वाद्विभिन्नकारणतावच्छेदकाद्वा । नाद्यः । कारण-व्यक्तेरनन्तत्वेन संशयानन्तविधत्वापत्तेः । नान्त्यः । कारणतावच्छेदकभेदस्याभावात् । सर्वेषां साधारणधर्मत्वेनैव हेतुत्वादित्याह ॥ **वयं तु ब्रूम इति ॥ न स्वरूपेणेति ।** असाधारणधर्मत्वेनाज्ञात इत्यर्थः ॥ **विशेषेति ।** अज्ञातस्य कोटिस्मृतिरूपव्यापारजनकत्वादित्यर्थः । किमतो यद्येवमत आह ॥ **तथा चेति ।** ननु कोटिद्वयसहचरितधर्मो धर्मिणि ज्ञायमानः सांशयिकः साधारणः । ऊर्ध्वत्ववत् । अयं तु धर्मोऽसाधारणः । तत्कथमनयोरैक्यम् । न हि साधारणधर्मज्ञानत्वेन हेतुता । धर्मिभिन्ननिष्ठतया ज्ञानमानस्य तत्त्वापत्तेः । अपि तु साधारणधर्मत्वेन साधारणज्ञानं वा तद्धेतुः । यस्तु प्रकृते नास्त्येव । किञ्च किमिदं नित्यव्यावृत्तत्वम् । नित्यनिष्ठात्यन्ताभावप्रतियोगित्वं वा नित्यवृत्त्यन्योन्याभाव-प्रतियोगितावच्छेदकत्वं वा नित्यभिन्नत्वं वा । नाद्यौ । तयोरनित्यधर्मत्वाभावादन्यत्वस्य नित्य-वृत्तित्वात् । नान्त्यः । नित्यभिन्नत्वस्य साधारणत्वेऽपि किमायातम् । आकाशविशेषगुणत्वे न हि स धर्मो नास्तीति ब्रूमः । किन्त्वाकाशगुणत्वं न साधारणमिति । मैवम् । यावन्निनिष्ठात्यन्ताभावप्रतियोगि-धर्मवत्त्वस्यानेन विवक्षितत्वात् । एतस्य च घटशब्दसाधारणत्वात् । शब्दस्याकाशविशेषगुणत्वस्य च यावन्नित्यनिष्ठात्यन्ताभावप्रतियोगित्वात् । तद्वत्त्वाच्च । **घटशब्दयोरिति ।** एवमुत्तरत्रापि द्रष्टव्यम् ।

**वेदे.**— उदयनमतमपि दूषयितुं सिद्धान्तमतमाह ॥ **वयं तु ब्रूम इति ।** न प्रतिज्ञामात्रेणार्थ-सिद्धिरित्यतस्तावदसाधारणधर्मस्य साधारणधर्म एवान्तर्भावमुपपादयति ॥ **असाधारणधर्मो हीति ।** स्वरूपेण ज्ञात इति शेषः । आकाशविशेषगुणत्वाद्यसाधारणधर्मो हि नाज्ञात एव संशयहेतुः । अति-प्रसङ्गात् । किन्तु ज्ञात एव । तज्ज्ञानं च न स्वरूपेणाकाशविशेषगुणत्वादिनेत्यर्थः । कुतो नेत्यत आह ॥ **विशेषेति ।** असाधारणधर्मादिज्ञानस्य संशयहेतुत्वं कोटिस्मरणादिद्वारैव वाच्यम् । प्रकारान्तरेणोपयोगादर्शनात् । असाधारणधर्मस्य स्वरूपेण ज्ञानं च न कोटिद्वयस्मरणजनकम् । न हि शब्दनिष्ठाकाशगुणत्वज्ञाने नित्यानित्यत्वकोट्युपस्थितिर्भवतीति भावः । असाधारणधर्मः स्वरूपेण संशयहेतुर्न चेत्कथं संशयहेतुरिति पृच्छति ॥ **किन्त्विति ।** उत्तरमाह ॥ **व्यावृत्तीति ।** नित्यानित्य-व्यावृत्तत्वेन ज्ञात इत्यर्थः । आकाशविशेषगुणत्वं नित्यव्यावृत्तमानित्यव्यावृत्तमिति ज्ञाने हि शब्दस्य नित्यव्यावृत्तधर्मवत्त्वस्य नित्यत्वसहचरितत्वेनाकाशादौ च दर्शनात् । ततश्च व्यावृत्तिमुखेन ज्ञातस्य विशेषस्मरणकारणत्वमस्तीति संशयहेतुत्वमुपपन्नमिति भावः । अस्त्वेवं व्यावृत्तिमुखेन ज्ञान एवा-साधारणधर्मः संशयहेतुस्तथाऽपि तस्य साधारणधर्म एव कथमन्तर्भाव इत्यत आह ॥ **तथा चेति ।** नित्यव्यावृत्तत्वं च नित्यावृत्तित्वमनित्यव्यावृत्तत्वमनित्यावृत्तित्वमुक्तरीत्या नित्यव्यावृत्तत्वं नित्यस्याकाशादेर्धर्मे वर्तते । एवं च नित्यव्यावृत्तधर्मवत्त्वमनित्ये घटादौ संशयधर्मिणि शब्दे च

साधारणम्। अनित्यव्यावृत्तधर्मवत्त्वमुक्तरीत्या च नित्ये गगनादौ शब्दे च साधारणम् । प्रसिद्धकोट्यधिकरणपुरोवृत्तिसाधारणस्यैव साधारणशब्दार्थत्वादिति भावः ।

**अभि.**— ननु असाधारणधर्मस्य साधारणधर्मेऽन्तर्भाव इति व्याहतमित्यतः स्वाभिसन्धिमुद्घाटयति ॥ **असाधारणधर्मेति** । असाधारणधर्मस्वरूपे विचार्यमाणे च डोलायमानसंशयहेतुरेव भवतीति भावः । एतेनासाधारणधर्मस्यैकधर्मिकैकोटिकसंशयहेतुत्वान्न संशयहेतुरित्युक्तमित्यपि परास्तम् । तमेव विचारं दर्शयति ॥ **विशेषेति** । कथं तर्हि संशयहेतुत्वव्यवहार इति पृच्छति ॥ **किन्त्विति** । संशयहेतूपस्थापकत्वेन संशयहेतुत्वमुपचर्यत इति भावेनाह ॥ **व्यावृत्तिमुखेनेति** । व्यावृत्तिर्वैलक्षण्यम् । इदमुक्तं भवति । वस्तुतो नासाधारणधर्मः संशयहेतुः । विशेषस्मृत्यहेतुत्वात् । किन्तु संशयहेतुर्नित्यानित्यवैलक्षण्योपस्थापकत्वात्संशयहेतुरित्युपचर्यते । आकाशविशेषगुणत्वादेव हि शब्दो नित्यविलक्षणोऽनित्यविलक्षणश्च । ततश्च नित्यानित्यवैलक्षण्ये एव संशयहेतू । यद्यपि नित्यव्यावृत्तत्वानित्यव्यावृत्तत्वे नित्यानित्याविरोधिनी । तथाऽप्यन्यतरप्राबल्यनिर्णयात्सत्प्रतिपक्षहेतू इव सन्देहजनके भवतः । नन्वेवं व्यावृत्तेरेवासाधारणधर्मस्य संशयहेतुत्वमवर्जनीयमित्य आह ॥ **तथा चेति** । असाधारणधर्मस्य विशेषस्मरणकारणत्वायोगेन संशयकारणत्वे निरस्ते सति व्यावृत्तिरूपो धर्मो नित्यव्यावृत्तत्वमनित्यस्यानित्यव्यावृत्तत्वं नित्यस्य धर्म इत्येव साधारणः सन्नेव संशयहेतुः । न त्वसाधारणत्वेनेत्यर्थः । एतेनासाधारणधर्मस्याकाशविशेषगुणत्वस्य संशयहेतुत्वात्तस्यैव नित्यानित्यत्वरूपसहचारे वक्तव्ये नित्यव्यावृत्तत्वानित्यव्यावृत्तत्वयोस्तत्कथनमयुक्तमिति परास्तम् ।

**आद.**— **असाधारणधर्मविप्रतिपत्त्योरिति** । साधारणधर्मस्य ज्ञानं यथा संस्कारोद्बोधकतया कोटिस्मृतिहेतुर्न तथाऽसाधारणधर्मज्ञानं संशयहेतुः किन्त्वसाधारणधर्मत्वेनैव ज्ञातं संशयहेतुकोटिस्मृतिजनकं भवति । तथा हि । तदितरावृत्तित्वे सति तद्वृत्तित्वस्यैवासाधारणरूपत्वेनाकाशविशेषगुणत्वरूपासाधारणधर्मे शब्देतरावृत्तित्वे ज्ञाते शब्देतरेषां नित्यानित्यानां सत्त्वेन पश्चान्नित्यावृत्तित्वमनित्यावृत्तित्वं च ज्ञायते आकाशविशेषगुणत्वे ज्ञायते । तथा चासाधारणधर्मत्वज्ञानानन्तरं नित्यावृत्तित्वेनानित्यावृत्तित्वेनाकाशगुणत्वरूपधर्मो ज्ञायते । येन रूपेण संशयकोटिसामानाधिकरण्यं ज्ञातं तेनैव रूपेण तत्सजातीयत्वज्ञानस्य कोटिस्माररकत्वान्नित्यत्वने निश्चितावृत्तित्वविशिष्टस्यैवानित्यत्वसामानाधिकरण्येन ज्ञातत्वात्तेन रूपेण ज्ञातं सत् कोटिस्मारकं भवति । एवमनित्यावृत्तित्वेन ज्ञातं सत् कोटिस्मारकं भवतीति तथा ज्ञानात्संशयः । नन्वेवं सति घटाघटकोटिकसंशयस्यापत्तिः । उक्तरीत्या घटतदभाववद्व्यावर्त्यत्वज्ञानसम्भवात् । न च तत्कोटिविषयकजिज्ञासाभावादभावः ।

तादृशजिज्ञासायाः साधारणधर्मसाध्यत्वेन तस्या अप्यापत्तेरिति वाच्यम् । इच्छाया इष्टत्वेष्टसाधनत्वान्यतरज्ञानसाध्यत्वेन कोटिनिर्णये तज्ज्ञानाभावेन तत्रेच्छाया असम्भवात् । घटाघटकोटिनिर्णये इष्टत्वनिर्णयदशायां तादृशजिज्ञासाया अपि सत्त्वात्तादृशसंशयस्येष्टत्वमेव । न च कोटिस्मृतेरेव संशयोपपत्तौ साधारणधर्मज्ञानस्य कारणत्वाङ्गीकारो निर्युक्तिक इति चेत् । मैवम् । साधारणधर्मज्ञानजन्यकोटिस्मरणस्यैव संशयकारणत्वेन तदर्थं साधारणधर्मज्ञानोपपादनस्य तत्कारणतायाश्च युक्तत्वात् । किं तत्र मानमिति चेत् । शृणु । संशयकोटिसमानाधिकरणसजातीयत्वस्यैव साधारणधर्मरूपत्वेन तादृशधर्मस्य सम्बन्धिज्ञानविधया कोटिस्मारकत्वेन स्वनिष्ठसामनाधिकरण्यरूपसम्बन्धप्रतियोगित्वेनैव कोटिस्मारकत्वेन तादृशस्मृतेरेव तादृशसाधारणधर्माधिकरणे कोटिप्रसञ्जकत्वादिति । एवं विप्रतिपत्तिवाक्याज्जायमानबोधस्यैव कोटिज्ञानरूपत्वेऽपि न तस्य संशयहेतुता । तादृशज्ञानस्य निश्चयरूपत्वेन संशयहेतुत्वायोगात् । किन्तु तादृशबोधे प्रामाण्यसन्देहे तद्विषयीभूतभौतिकत्वादेः संशयस्यानुभवसिद्धत्वात् । अत एव न संशयरूपः शाब्दबोधः । प्रत्येकं वाक्यश्रवणेन शाब्दबोधस्य जातत्वेन पश्चाज्जायमाने संशये वाक्यजन्यत्वकल्पने मानाभावात्संशये तात्पर्याभावाच्च । वाक्यघटकीभूतनिखिलपदात्पदार्थोपस्थित्यैक एव संशयः स्वीक्रियते खण्डवाक्यार्थबोधो न स्वीक्रियत इति तु न युक्तम् । पदार्थोपस्थित्यादेः कारणताया निराकरिष्यमाणत्वात् । अन्विताभिधानसामर्थ्यात्तत्पदश्रवणे शाब्दबोधस्यावश्यकत्वाच्च वाक्यद्वयस्यैककर्तृकत्वाभावाच्च । न च विप्रतिपत्तिजनज्यशाब्दबोधे प्रामाण्यसन्देह एव संशयहेतुरस्तु कृतं साधारणधर्मदर्शनतज्जन्यकोटिस्मृत्यादिनेति वाच्यम् । अन्यत्र क्लृप्तस्य साधारणधर्मदर्शनादेरेव कार्यसम्भवे संशयस्य पृथक् हेतुताकल्पने मानाभावेन गौरवादिति प्रामाण्यसन्देहस्य निश्चितप्रामाण्यकोटिनिश्चयरूपसंशयप्रतिबन्धकाभावमात्रसम्पादकत्वेन कथनात् ॥ **नित्यव्यावृत्तत्वमिति** । नित्यत्वेन निश्चितावृत्तिधर्मत्त्वमित्यर्थः ॥ **अनित्यव्यावृत्तत्वमिति** । अनित्यत्वेन निश्चितावृत्तिधर्मत्वमित्यर्थः । यथाश्रुते अकाशगुणत्वादिरूपे नित्यानित्यवृत्तित्वाभावादसङ्गतेः । केचित्तु । नित्यभिन्नत्वं नित्यव्यावृत्तत्वम् । अनित्यभिन्नत्वमनित्यव्यावृत्तमित्यर्थः लक्षणस्य लक्ष्येतरभेदानुमापकत्वेनाकाशविशेषगुणत्वरूपं लक्षणं शब्दे तदितरव्यावृत्तिं ज्ञापयति । असाधारणधर्मस्यैव लक्षणत्वात् । व्यावृत्तिश्च साधारणधर्म इति वदन्ति ।

**श्रीनि.— स्वरूपेणेति** । स्वीयेनाकाशविशेषगुणत्वादिनेत्यर्थः ॥ **व्यावृत्तिमुखेनेति व्यावृत्तिपुरस्कारेणेत्यर्थः** । धर्म इति सप्तम्यन्तम् ।

**वि.—** तन्मतं दूषयितुमुपक्रमते ॥ **वयं तु ब्रूम इति ॥ असाधारणधर्मविप्रतिपत्त्योः साधारण एवान्तर्भाव इति** । न केवलमुपलब्ध्यनुपलब्ध्योः साधारणधर्मेऽन्तर्भावः किन्त्वसाधारणधर्मविप्रति-

पत्त्योश्चेत्यपरेर्थः । असाधारणधर्मस्य तत्रान्तर्भावमुपपादयति ।। **असाधारणो हि धर्म इति ।** स्वरूपेणेत्यनन्तरं ज्ञात इति शेषः । असाधारणो धर्म आकाशगुणत्वं हि यस्मात्स्वरूपेण स्वेन स्वकीयेन रूपेणाकारेण ज्ञातोऽसाधारणधर्मत्वेन ज्ञात इति यावत् । असाधारणधर्मस्याकाश-विशेषगुणत्वस्य संशयहेतुताया नासाधरणधर्मत्वं तन्त्रमिति भावः । तेन रूपेण कुतो न हेतुरिति हेत्वाकाङ्क्षायामाह ।। **विशेषेति ।** विशेषयोर्धर्मविशेषयोर्नित्यत्वानित्यत्वयोः संशयकोट्योः स्मरणस्य हेतुत्वादित्यर्थः । यथाऽसाधारणो धर्म ऊर्ध्वत्वं पुरोवर्तिनि ज्ञातुं स्थाणुत्वपुरुषत्वरूपकोटि-स्मृतिद्वारैवायं स्थाणुर्वा पुरुषो वेति संशयहेतुर्भवति । यथा च साधारणधर्मः प्रमेयत्वं पुरोवर्तिनि ज्ञातः सन्नित्यत्वानित्यत्वरूपकोटिस्मृतिद्वारैव शब्दो नित्योऽनित्यो वेति संशयहेतुर्भवति । तथा साधारणधर्म आकाशविशेषगुणत्वं संशयधर्मिणि ज्ञातः सन्नित्यत्वानित्यत्वरूपकोटिस्मृतिद्वारैव शब्दो नित्योऽनित्यावेति संशयहेतुर्भवति । तथा साधारणधर्म आकाशविशेषगुणत्वं संशयधर्मिणि ज्ञातः सन्नित्यत्वानित्यत्वरूपकोटिस्मृतिद्वारैव शब्दो नित्योऽनित्यो वेति संशयहेतुर्भवतीत्येव वाच्यम् । न चासाधारणधर्मत्वेन ज्ञातमाकाशगुणत्वं नित्यत्वानित्यत्वरूपकोटिद्वयोपस्थापकं भवति । आकाश-विशेषगुणत्वं शब्दमात्रवृत्तीति ज्ञानेऽपि नित्यत्वानित्यत्वयोः स्मरणात् । अन्यथा तेन स्थाणुत्व-पुरुषत्वयोरपि स्मरणात् । तथा चाकाशविशेषगुणत्वस्यासाधारणधर्मत्वं न कोटिद्वयोपस्थापकता-वच्छेदकरूपमतो न तेन रूपेण संशयहेतुरिति हृदयम् । तर्हि केन रूपेण संशयहेतुरिति पृच्छति ।। **किन्त्विति ।** उत्तरमाह ।। **व्यावृत्तिमुखेनैवेति ।** नित्यानित्याभ्यामिति शेषः । नित्यानित्याभ्यां व्यावृत्तिमुखेनैव व्यावृत्तिपुरस्कारेणैव । नित्यानित्यावृत्तित्वपुरस्कारेणैवेति यावत् । अस्यासाधारणो धर्मः संशयहेतुरित्यनुवृत्तेनान्वयः । इदमुक्तं भवति । यत्रासाधारणधर्मस्योर्ध्वत्वस्य कोटिद्वयोप-स्थापकतावच्छेदकं स्थाणुपुरुषवृत्तित्वम् । स्थाणुपुरुषत्वेनोपलब्धस्य तस्य शब्दे धर्मिण्युपलब्धे सति स्थाणुत्वपुरुषत्वयोः स्मरणात् । तथा च तेनैव रूपेण तस्य संशयहेतुत्वम् । यथा च साधारणा-नैकान्तिकस्य प्रमेयत्वस्य सपक्षविपक्षवृत्तित्वं कोटिद्वयोपस्थापकतारूपावच्छेदकरूपं सपक्षविपक्ष-वृत्तित्वेनोपलब्धस्य तस्य शब्दे धर्मिण्युपलब्धे नित्यत्वानित्यत्वयोः स्मरणात् । तथा च नित्यरूप-सपक्षवृत्तित्वेनैव तस्य संशयहेतुत्वम् । तथा साधारणधर्मस्याकाशविशेषगुणत्वस्य नित्यव्यावृत्तत्व-मनित्यव्यावृत्तत्वमुभयं कोटिद्वयोपस्थापकतावच्छेदकरूपं नित्यव्यावृत्तत्वेन ज्ञातस्य तस्य धर्मिणि शब्द उपलब्धो नित्यत्वानित्यत्वयोः स्मरणात् । नित्यव्यावृत्तत्वेन हि तस्मिन्ज्ञाते सति तस्यानित्य-वृत्तित्वं वाच्यम् । नित्यानित्यत्वकोट्युपस्थितिर्भवति । अनित्यावृत्तित्वेन तस्मिन्ज्ञाते तर्हि तस्य नित्यवृत्तित्वमभ्युपेयमिति नित्यत्वकोट्युपस्थितिर्भवति । अत एव कोटिद्वयोपस्थापकतावच्छेदकरू-

पत्वमप्युक्तमनैकान्तिकत्वं लक्षणं लक्ष्ये उपपादयता रुचिदत्तेन साधारणानैकान्तिकप्रमेयत्वादौ सपक्षविपक्षवृत्तित्वं कोटिद्वयोपस्थापकतावच्छेदकरूपमित्युक्तम् । तथा चाकाशविशेषगुणत्वस्या-साधारणधर्मस्य कोटिद्वयोपस्थापकतायां नित्यानित्यावृत्तित्वं तन्त्रमित्याकाशविशेषगुणत्वरूपोऽ-साधारणधर्मस्तेन रूपेणैव संशयहेतुरिति । उक्तं चैतद्वरदराजीयटीकायाम् । अनेकधर्मसंश्रयमुदाहरति ।। **द्वितीयस्त्विति ।** नित्यव्यावृत्तसावयवत्वादिधर्मविशिष्टं घटादिकमनित्यं दृष्टम् । अनित्यव्यावृत्त-परममहत्त्वादिविशिष्टं गगनादिकं नित्यं दृष्टम् । गन्धस्तूभयव्यावृत्तत्वेनानुसन्धीयमानस्तदुभय-स्मृतिद्वारा संशयहेतुर्भवतीत्यर्थ इति । एतेन नित्यानित्यव्यावृत्ततयाऽऽकाशविशेषगुणत्वस्य ज्ञानं संशयधर्मिणि शब्द एव वाच्यमिति धर्मज्ञान एव नित्यत्वानित्यत्वयोः स्मरणात्तत्स्मृतिरनपेक्षितैवेति कथमसाधारणधर्मजन्यकोटिस्मृतेरेव संशयहेतुत्वेन साधारणधर्मज्ञानजन्मकोटिस्मरणस्य संशय-हेतुत्वाच्च । अन्यथा दैवात्स्थाणुत्वपुरुषत्वस्मृतिमत एव यदि पुरोवर्तिन्यूर्ध्वत्वज्ञानं वृत्तं तथा स्थाणुत्व पुरुषत्वकोटिस्मृतेः सिद्धत्वात् । साधारणधर्मज्ञानस्यापि कोटिस्मृतिद्वारा संशयहेतुत्वाभावप्रसङ्गात् । साधारणधर्मस्योर्ध्वत्वस्य पुरोवर्तिन्यनुपलम्भेऽपि स्थाणुपुरुषवृत्तित्वेन तस्यानुपलम्भे स्थाणुत्व-पुरुषत्वयोः स्मरणात् । तेन रूपेणानुसन्धीयमानस्यैतस्य कोटिद्वयोपस्थापकत्वं वाच्यमिति तस्यापि कोटिस्मृतिद्वारा संशयहेतुत्वविलोपापाताच्च । यदि कदाचित्स्थाणुपुरुषवृत्तित्वेनोपलब्धस्योर्ध्वत्वस्य पुरोवर्तिन्युपलब्धिमात्रं कोटिद्वयोपस्थापकमेवेति मन्यसे तर्हि साधारणधर्मस्यापि कदाचिन्नित्यानित्या-व्यावृत्तितयोपलब्धस्य संशयधर्मिण्युपलब्धिमात्रं कोटिद्वयोपस्थापकमित्यङ्गीकुरु । अविशेषादिति । नन्वस्तु कोटिद्वयस्थापकतावच्छेदकेनेतरसाधारण्येन नित्यानित्यव्यावृत्तत्वेनैव रूपेणाकाशविशेष-गुणत्वरूपासाधारणधर्मस्य संशयहेतुत्वम् । तथाऽपि प्रकृते किमायातमित्यत आह ।। **तथा चेति ।** असाधारणो धर्म इत्यनुवर्तते । धर्म इत्येतदनित्यश्चेत्यनेनापि सम्बध्यते । अस्तीति शेषः । नित्य-व्यावृत्तत्वं नित्येऽवर्तमानत्वमनित्यस्य घटादेर्धर्मे घटत्वादावस्ति । अनित्यव्यावृत्तत्वेऽनित्येऽवर्तमानं नित्यस्यात्मादेर्धर्मे आत्मत्वादावस्ति । इति हेतोराकाशविशेषगुणत्वरूपासाधारणधर्मः साधारण एव धर्मिनित्यानित्यात्मघटादिवृत्तिरेव न तु नित्यत्वानित्यत्वसहचरित इत्यर्थः । इदमुक्तं भवति । पुरोवर्तिनिष्ठस्य दीर्घपरिमाणरूपो घटत्वस्य पुरोवर्तिमात्रनिष्ठत्वेन धर्मिव्यतिरिक्तस्थाणुपुरुषावृत्ति-त्वेऽपि तज्जातीयस्योर्ध्वत्वात्तस्य तत्र सत्त्वादूर्ध्वत्वस्य साधारणधर्मत्ववदसाधारणधर्मस्याकाश-विशेषगुणत्वस्य शब्दमात्रवृत्तित्वेऽपि नित्यव्यावृत्तत्वेन तज्जातीयस्य घटत्वादेरनित्यत्वात् । अनित्य-व्यावृत्तत्वेन तज्जातीयस्यात्मत्वादेर्नित्यवृत्तित्वात्साधारणत्वमेव । अन्यथा संशयस्य धर्मिनिष्ठोर्ध्वत्वस्य तन्मात्रवृत्तितया धर्मातिरिक्तस्थाणुपुरुषावृत्तित्वेन साधारणधर्मत्वाभावप्रसङ्गात् । आकाशविशेष-

गुणत्वेन तज्जातीयरो धर्मो न नित्यानित्यवृत्तिरिति चेत् । किं तर्हि तेन रूपेण साधारणत्वरहितस्यापि तस्य नित्यानित्यव्यात्तत्वेन रूपेण साधारणत्वानपायात् । अन्यथा पुरोवर्तिनिष्ठोर्ध्वत्वस्य संशय-धर्म्यतिरिक्तस्थाणुपुरुषावृत्तितया साधारणधर्मत्वाभावाप्रसङ्गात् । तस्मात्पुरोवर्तिनिष्ठोर्ध्वत्वस्य तद्धर्म-पुरस्कारेण स्वसमानधर्मस्य स्थाणुत्वपुरुषत्वकोट्युपस्थापकत्वं तेन रूपेण साधारणधर्मत्वमभ्युपेयम् । तथां च पुरोवर्तिनिष्ठोर्ध्वत्वस्योर्ध्वतात्वेन स्वसमानधर्मस्य स्थाणुपुरुषवृत्तित्वेन स्थाणुत्वपुरुषत्व-रूपकोटिद्वयोपस्थापकत्वादूर्ध्वतात्वेनास्य यथा साधारणधर्मत्वं तथाऽऽकाशविशेषगुणत्वस्य नित्य-व्यावृत्तत्वेन स्वसमानर्धस्य घटादेरनित्यवृत्तित्वादनित्यत्वरूपकोट्युपस्थापकता अनित्यव्यावृत्तत्वेन स्वसमानधर्मस्यात्मत्वोदेर्नित्यवृत्तित्वान्नित्यत्वकोट्युपस्थापकता चास्तीत्याकाशविशेषगुणरूत्वरूपा-साधारणधर्मस्य नित्यानित्यव्यावृत्तत्वेन स्वसमानधर्ममभ्युपेयमेवेति । केचित्तु । नित्यव्यावृत्तत्वेन नित्यस्य घटपरिमाणादेर्धर्मोऽनित्यव्यावृत्तत्वेन नित्यस्यात्मपरिमाणादेर्धर्म इति हेतोराकाशविशेष-गुणत्वरूपोऽसाधारणधर्मः साधारणधर्म एव । धर्मिनित्यत्वानित्यत्वाधिकरणवृत्तिरेवेत्यर्थः । यद्यप्याकाशगुणत्वं न नित्यानित्यव्यावृत्तम् । तथाऽपि दीर्घपरिमाणरूपस्य पुरोनिष्ठोर्ध्वत्वस्य स्थाणुपुरुषावृत्तित्वेप्यूर्ध्वतात्वेन तत्समानधर्मस्य स्थाणुपुरुषवृत्तित्वात्साधारणत्ववदसाधारण-धर्मस्याप्याकाशविशेषगुणत्वस्य नित्यानित्यव्यावृत्तत्वेन स्वसमानधर्मस्य नित्यानित्यवृत्तित्वात् साधारणधर्म एवेति हृदयमित्याहुः ।

(११) प्र.प.— **न चैकेनैव साधारणधर्मेण भाव्यमिति नियमोऽस्ति । तथातथाप्रतिपन्नत्वं तस्य तस्य धर्म इति विप्रतिपत्तिरपि साधारणीति । विपरीतनिश्चयो विपर्ययः । विपरीतेति सम्यङ्निश्चयव्युदासः । निश्चय इति संशयज्ञानस्य । स च प्रत्यक्षानुमानगमाभासेभ्यो जायते । यथा शुक्तिकायामिदं रजतमित्यादि ।**

**जना.—** नन्वस्मन्मते विशिष्टस्यातिरिक्तत्वेन नित्यव्यावृत्तत्वविशिष्टमाकाशगुणत्वमेकमनित्य-व्यावृत्तत्वविशिष्टाकाशगुणत्वमन्यदिति कथं द्वयोः साधारणधर्मत्वमित्यत आह ॥ **न चेति ।** नैयायिकैरप्येकस्मिन्पुरुषे दण्डकुण्डलवत्त्वज्ञानानन्तरं दण्डकुण्डलयोश्चैत्रमैत्रमात्रधर्मत्वं प्राङ्निश्चित-वतः पुरुषस्य मैत्रव्यावृत्तदण्डवत्त्वादयं चैत्रो वाऽऽहोस्विच्चैत्रव्यावृत्तकुण्डलवत्त्वादयं मैत्रो वेति जायमानसंशयस्य साधारणधर्मजन्यत्वाभ्युपगमादिति भावः ॥ **तथातथेति ।** भौतिकत्वेनाभौतिकत्वे-नेत्यर्थः तस्य तस्य भौतिकस्याभौतिकस्येत्यर्थः । अत्रापि धर्म इति सप्तम्यन्तं पदम् ॥ **विप्रति-पत्तिरिति ।** विरुद्धार्थप्रतिपादकवाक्यद्वयविषयत्वमित्यर्थः ॥ **विपरीतेति ।** विशेष्येऽविद्यमान-धर्मप्रकारकनिश्चय इत्यर्थः ।

**राघ.—** ननु सत्यं द्वौ धर्मौ साधारणौ । तथाप्येको नित्यानित्यवस्तुधर्मसाधारणो नास्तीत्यत आह ।। **न चेति ।** परैरप्येकस्मिन्नेव मनसि क्रियावत्त्वस्पर्शरहितत्वाभ्यां मूर्तत्वामूर्तत्वसन्देहाभ्युपगमादिति भावः ।। **तथातथेति ।** भौतिकत्वेनाभौतिकत्वेन विप्रतिपत्तिविषत्वं तस्य तस्य भौतिकस्याभौतिकस्य । यथा क्रियावत्त्वं मूर्तमात्रस्य धर्मः स्पर्शराहित्यममूर्तमात्रस्य धर्म इति द्वाभ्यां साधारणधर्माभ्यां मनः किं मूर्तममूर्तमिति सन्देह उत्पद्यत इत्युच्यते । तथा भौतिकमात्राभौतिकमात्रसाधारणाभ्यां तथा तता प्रतिपन्नत्वाभ्यामिन्द्रियेषु तथा तथा तत्सन्देह इति साऽपि साधारणीत्यर्थः । प्राग्व्यावर्त्यतया प्रसक्तयोः क्रमप्राप्तविपर्ययतत्साधनयोः स्वरूपमाह ।। **विपरीतेति ।** वस्तु यथाऽस्ति ततो विपरीतविषयकनिश्चय इत्यर्थः ।। **स चेति ।** विपरीतनिश्चयः । आभासपदं प्रत्येकमन्वेति । प्रत्यक्षाभासानुमानाभासेति ।। **इत्यादीति ।** धूलीपटले धूमभ्रमाद्वन्हिमानयं देश इत्यस्य नदीतीरे पञ्च फलानि सन्तातिं विप्रलम्भकादिवाक्यजन्यस्य च सङ्ग्रहः ।

**विज.—** नन्वत्र कोटिद्वयसमानाधिकरण एक एव धर्मः सांशयिकः । प्रकृते त्वेककोटिसमानाधिकरणं धर्मद्वयं सांशयिकमिति वैषम्यमत आह ।। **न चैकेनैवेति ।** कोटिसहचरितवद्धर्मिज्ञानत्वेनैव हेतुता । न तूभयकोटिसहचरितधर्मवद्धर्मिज्ञानत्वेन गौरवात् । न चैवमेकधर्ज्ञानादपि संशयापत्तिः । द्वितीयकोटिस्मृतेरभावात् । अन्यथोभयकोटिसहचरितधर्मज्ञानमपि न हेतुः स्यात् । विशेषदर्शनदशायां संशयाजनकत्वात् । विशेषादर्शनमपि तद्धेतुरिति तदा प्रकृतेऽपि दीयतां दृष्टिरिति भावः । यद्यप्याकाशविशेषगुणत्वस्यानेन रूपेणोभयकोटिसहचाराप्रत्ययदशायामुभयव्यावृत्तत्वज्ञानकालेऽपि संशयसम्भवान्नैतदुचितमिव । तथाऽपि संशयत्वावच्छेदेन साधारणधर्मज्ञानस्य लाघवेन हेतुत्वे सिद्धे तत्रापि तत्कल्पनादक्लृप्तस्य हेतुत्वकल्पनायां गौरवादिति बोध्यम् । विप्रतिपत्तेः साधारणधर्मत्वमाह ।। **तथेति ।** तथा तथा प्रतिपन्नत्वं भौतिकत्वाभौतिकत्वविप्रत्तिविषयत्वं तस्य तस्य भौतिकस्याभौतिकस्येत्यर्थः । एवमन्यत्राप्यूह्यम् । ननु विप्रतिपत्तिविषयत्वमज्ञात्वाऽपि विप्रतिपत्तिवाक्यस्थपदैः कोट्युपस्थितौ सत्यां संशयसम्भवात्कथमेवम् । न हि साधारणो धर्म एव तत्र नास्तीति ब्रूमः । अपि तु तदा तस्यापरामर्श इति । किञ्च विप्रतिपत्तिविषयत्वं साक्षान्नास्तीति व्यापारानुबन्धितया तद्वाच्यम् । न तत्सम्भवाति । विप्रतिपत्तिवाक्ययोः परस्परप्रतिबन्धेन सत्प्रतिपक्षवज्ज्ञानाजनकत्वादिति । मैवम् । भौतिकत्वाभौतिकत्वविशिष्टज्ञानाभिप्रायकपदोपस्थाप्यत्वस्य तदभिप्रायकपदसमभिव्याहृतपदोपस्थाप्यस्य वा विप्रतिपत्त्युद्देश्यत्वस्य विप्रतिपत्तिविषयत्वोक्त्यभिधानात् । एतत्प्रतिसन्धानस्य पूर्वोक्तयुक्त्या कल्पनौचित्यात् । अन्यथा कारणान्तरकल्पनापत्तिरिति सर्वमवदातम् । निरस्यज्ञानं विना निरासज्ञानं न सम्भवतीति निरस्यं विपर्ययं लक्षयति ।। **विपरीतेति ।** संशयान्यतदभाववद्विशेष्यकतत्प्रकारकज्ञानमित्यर्थः । निरस्यं विपर्ययसाधनं दर्शयति ।। **स चेति ।**

**वेदे.**— ननूर्ध्वतालक्षणसाधारणधर्मस्यैकस्यैव कोटिस्मरणद्वारा संशयहेतुत्वं दृष्टम् । इह तु नित्यधर्मव्यावृत्तधर्मवत्त्वमनित्यव्यावृत्तधर्मवत्त्वं चेति धर्मद्वयं साधारणमुक्तम् । तत्कथं तस्य संशयहेतुत्वमित्यत आह ।। **न चेति** । एकस्येव धर्मद्वयस्यापि संशयहेतुत्वे बाधकाभावादिति भावः । न चोर्ध्वतादेः पुरोवृत्तिनिष्ठस्य कोटिद्वयसहचरितत्वमेव साधारण्यं दृष्टम् । इह तु शब्दनिष्ठयोर्नित्यव्यावृत्तधर्मत्त्वानित्यव्यावृत्तधर्मवत्त्वयोः प्रत्येकं नित्यत्वानित्यत्वरूपैकैककोटिसहचरितत्वेऽपि न तदुभयसहचरितत्वम् । अतः कथमेतयोः साधारण्यमिति । पुरोवृत्तिनिष्ठस्य धर्मस्य कोटिसहचरितत्वमेव साधारण्यम् । लाघवात् । तावत एव कोटिस्मरणोपयोगित्वाच्च । न तु कोटिद्वयसहचरित्वम् । गौरवात् । कोटिस्मरणानुपयोगीत्वाच्च । ऊर्ध्वतादौ कोटिद्वयसाधारण्यमार्थिकमेव । अत एव तत्त्वप्रकाशिकायां धर्मद्वयस्यापि तत्र तत्राधिकरणेषु संशयबीजत्वमुक्तमित्यवधेयम् । इदानीं विप्रतिपत्तेरपि साधारणधर्म एवान्तर्भावमुपपादयति ।। **तथेति** । तथा प्रतिपन्नत्वं भौतिकत्वेन प्रतिपन्नत्वं तस्य भौतिकस्य घटादेर्धर्मः । स च साधारणः । धर्मिभूतेष्विन्द्रियेष्वपि सत्त्वात् । एवं तथाप्रतिपन्नत्वमभौतिकत्वेन प्रतिपन्नत्वं तस्याभौतिकस्यात्मादेर्धर्मः । सोऽपीन्द्रियसाधारण इत्यर्थः । साधारणधर्मैक्यनियमश्च पूर्वमेव त्याजित इति भावः ।। **विप्रतिपत्तिरपीति** । विरुद्धार्थकवाक्यद्वयजन्यप्रतीतिद्वयमित्यर्थः । साधारणी साधारणधर्मत्वेन संशयजनिका न पृथक् कारणमित्यर्थः । यदि च विप्रतिपत्तिपदेन विरुद्धार्थकं वाक्यद्वयं विवक्षितम् तदा साधारणीत्यस्य वक्ष्यमाणरीत्या साधारणधर्मजन्यसंशयजननानुकूलेति व्याख्यानं द्रष्टव्यम् । अयमिहाभिप्रायः । विप्रतिपत्तिरूपं वाक्यद्वयं न साक्षात्संशयजनकं येन पृथक् कारणं स्यात् । प्रत्येकं वाक्यद्वयस्य निश्चयजनकत्वात् । न ह्येकैकवाक्यं व्युत्पन्नस्य स्वार्थनिश्चयमजनयदनुभूयते । स्वार्थनिश्चयजननानन्तरं तत्संशयमपि जनयतीत्यङ्गीकारे विरम्य व्यापारप्रसङ्गः । नापि परम्परया । अन्यथासिद्धेर्वक्ष्यमाणत्वात् । तस्मात्तत्र तटस्थाभ्यां वाक्याभ्यां तावदिन्द्रियाणि भौतिकत्वादिना प्रतीयन्ते । अनयोश्च प्रतीत्योर्द्वयोरपि प्रामाण्यमप्रमाण्यं वा न सम्भवति । परस्परविरुद्धेन वस्तुविकल्पप्रसङ्गात् । वस्तुनो निःस्वभावत्वप्रसङ्गाच्च । उभयत्राप्यनिश्चये वाऽन्यतरप्रामाण्यनिश्चयोऽनुपपन्नः । अतः किमत्र भौतिकत्वप्रतीतिः प्रमाणमुताभौतिकत्वप्रतीतिरिति प्रतीतिद्वयप्रामाण्ये सन्दिहानोऽर्थोऽपि भौतिकत्वादौ सन्देहवान्भवतीति वक्तव्यम् । एवं च भौतिकत्वादिप्रतीतिलक्षणसाधारणधर्मे दर्शनजन्य एवायं भौतिकत्वादिसंशय इत्यायातम् । इन्द्रियेषु भौतिकत्वादिना प्रतिपन्नत्वज्ञानेन जायमानत्वात् । प्रतिपन्नत्वस्य च प्रतीतावेव पर्यवसानात् । भौतिकत्वादिप्रतीत्योश्चोक्तरीत्या साधारण्यात् । न च प्रामाण्यसंशयस्यैवात्र जनकत्वं न प्रतीतिलक्षणसाधारणधर्मदर्शनस्येति वाच्यम् । प्रामाण्यसंशयस्योत्तेजकत्वेनोक्तसाधारणधर्मदर्शनजन्या

शङ्काप्रामाण्यशून्यार्थनिश्चयरूपप्रतिबन्धकाभावसम्पादकत्वेनान्यथासिद्धतया तत्राजनकत्वस्य त्वयाऽपि वाच्यत्वात् । अन्यथा प्रामाण्यसंशयस्यान्यज्ञानान्तर्भावेन पृथक् संशयकारणत्वेन परिगणनप्रसङ्गः । विप्रतिपत्तिरूपवाक्यद्वयं तु प्रामाण्यसंशयधर्मिरूपभौतिकत्वादिप्रतीतिजननायैव केवलमुपयुज्यत इति सुतरामन्यथासिद्धम् । न भौतिकत्वादिसंशयकारणत्वशङ्कामप्यधिरोहतीति । एतेन तदपि निरस्तम् । यत्केनचिदुक्तं तथातथाप्रतिपन्नत्वमज्ञात्वाऽपि विप्रतिपत्तिवाक्यस्थपदैः कोट्युपस्थितौ सत्यां मानस-संशयसम्भवात्कथमेतत् । न हि साधारणो धर्म एवात्र नास्तीति ब्रूमः । येन तदुपन्यासः सार्थकः किन्तु तदा तस्यापरामर्श एवेतीति । प्रतिपन्नत्वं हि प्रतीतिपर्यवसन्नम् । प्रतीतेश्चाज्ञाने तद्धर्मिक-प्रामाण्ये संशयानुपपत्तौ तदाहितभौतिकत्वादिसंशयस्याप्यसम्भवात् । न चायं स्वारसिक एव मानस-संशयो न प्रामाण्यसंशयाहितः येन प्रतीतज्ञानमावश्यकमिति वाच्यम् । प्रत्येकं वाक्यद्वयस्य निश्चय-जनकत्वेन तन्निश्चितेऽर्थे स्वारसिकसंशयाभावात् । न च तत्र वाक्ययोः परस्परप्रतिबन्धेन निश्चय-जनकत्वमेव नास्तीति वाच्यम् । अनुभवविरोधात् । अन्यथा कथायां वादिप्रतिवादिप्रतिज्ञावाक्ययोरपि परस्परप्रतिबन्धेन प्राश्निकान्प्रत्यबोधकत्वापत्त्या तेषां तदीयगुणहेतुगुणदोषावधारकत्वं न स्यात् । अतो वाक्यद्वयप्रतीतेऽर्थे जायमानः संशयः प्रामाण्यसंशयाहित एव वक्तव्यः । तत्र च धर्मज्ञानस्या-कारणत्वेन प्रतीतिज्ञानमप्यावश्यकमेवेति । केचित्तु प्रतिपन्नत्वपदेन प्रतिपन्नस्य भावो वाक्यमेव ग्राह्यम् । तदेव साधारणधर्मतया विवक्षितम् । तज्ज्ञानं चावश्यकमेवेत्याहुः । एवं सकारणकं संशयं निरूप्येदानीं विपर्ययं निरूपयति ॥ **विपरीतेति** । विपरीतत्वं च पुरोवर्तिनि सर्वथाऽविद्यमान-प्रकारकत्वमिति द्रष्टव्यम् । क्रमेण विशेषणद्वयकृत्यमाह ॥ **विपरीतेत्यादिना** । इदानीं विपर्यय-साधनमाह ॥ **स चेति** । त्रयमप्युदाहरति ॥ **यथेति** । आदिपदेन धूमभ्रमाद्वन्ह्यभाववति वन्ह्यनुमितिः प्रतारकवाक्यजन्यज्ञानं च ग्राह्यम् ।

**अभि.**— ननूर्ध्वत्ववदेकस्यैव कोटिद्वयसाहचर्याभावात्कथं साधारणत्वमित्यत आह ॥ **न चैकेनैवेति** । एतेन साधारणधर्मत्वेनाभितस्याकाशगुणत्वस्य द्वित्वाभावात्साधारणधर्मस्यैकत्व-नियमखण्डनं प्रकृतावनुपक्तमिति परास्तम् ॥ **तथातथाप्रतिपन्नत्वमिति** । साधारणीत्यतःपरं स्यादिति शेषः । यद्युपलब्ध्यनुपलब्ध्योरन्तर्भावस्य वक्तुं शक्यत्वात्पार्थक्यं नोच्यते तर्हि विप्रतिपत्तिरपि पृथङ् न वक्तव्या । विप्रतिपत्तेरन्तर्भावस्य वक्तुं शक्यत्वादिति भावः । एतेन विप्रतिपत्तेरसाधारणीति किं लौकिकप्रतीतिरुत स्वसमयानुरोधेनोच्यते । नाद्यः । तदभावात् । न हि लौकिका इन्द्रियेषु भौतिकत्वाभौतिकत्वप्रतिपादकद्वयेन जातमपि कोट्युपस्थितिमपहाय तथाप्रतिपन्नत्वमपहाय तथा-प्रतिपन्नत्वमनुसन्धाय तेन कोटिद्वयं स्मृत्वा संशयितारो भवन्ति हि । न द्वितीयः । स्वसमयस्या-

प्रामाणिकत्वादिति परास्तम् । अस्माभिरपि परधिकरणार्थमेवान्तर्भावस्यापादितत्वेन तदन्तर्भावस्यासम्मतत्वात् । इदमत्र तत्त्वम् । असाधारणधर्म एव संशयहेतुर्न । विशेषस्मरणकारणत्वाभावात् । उपलब्ध्यनुपलब्धिविप्रत्तिपत्तयस्तु विशेषोपस्थितिकारणत्वाद्भवन्त्येव संशयकारणहेतव इति । एवमन्येऽपि यथासम्भवं संशयहेतवो द्रष्टव्याः । अवश्यं चैतदेवं विज्ञेयम् । एतेषां संशयहेतुत्वस्य व्यावहारिकत्वात् । तत्त्वप्रकाशिकायां समयपादे प्रत्यधिकरणं वादिविप्रतिपत्तिः सन्देहबीजमिति स्वयमेवाभिधानाच्च । न च तत्परीत्योक्तमिति वाच्यम् । बहुवारमभिहितस्य परीतित्वं सकृदभिमतस्य युक्तिबाधितस्य सिद्धान्तत्वमित्यङ्गीकारायोगात् ।

**आद.—** ॥ **विपरीतनिश्चय इति ।** नन्वीश्वरप्रमायामतिव्याप्तिः । तस्याः सद्रजतमिति ज्ञानवांश्चैत्र इत्याकारकत्वात् । ज्ञानांशे रजतस्य तस्मिंश्च सत्तायाश्च भानात् । सद्रजतमिति व्यवहारप्रयोजकत्वेन सत्त्वविषयतायास्तत्र सत्त्वात् । न च साक्षादसत्त्ववति सत्त्वविषयतानिरूपकत्वं सत्त्वविषयनिरूपितासन्निकृष्टमुख्यविशेष्यतानिरूपकत्वमिति यावत् । तथा चेश्वरज्ञाने मुख्यनिशेष्ये चैत्रे साक्षात्सत्त्वाभानेनातिव्याप्तिरिति वाच्यम् । तथाऽपि सद्रजतमिति वाक्याभासजन्येऽभ्रान्तपुरुषीयज्ञानेऽतिव्याप्तेः । न चाभ्रान्तस्य तादृशज्ञानं न जायत इति वाच्यम् । अनुभवव्याकोपात् । योग्यताज्ञानस्य शाब्दबोधकारणतायां मानाभावेन तदभावेऽपि शाब्दबोधोपपत्तेः । अयोग्यताज्ञानं प्रतिबन्धकमित्यपि न ज्ञानसामान्येऽप्रतिबन्धकत्वात् । अन्यथा प्रतिवादिवाक्याज्ज्ञानानुत्पत्तिप्रसङ्गेन तन्निराकरणाय प्रवृत्त्यनुपपत्तेः । न च तत्र वाक्यलिङ्गकानुमितिरिति वाच्यम् । अयोग्यताग्रहदशायामनुमितेरप्यनुपपत्तेः । वाक्यादर्थं प्रत्येमि शृणोमीत्यनुभवविरोधाच्च । अन्यथा सर्वत्राप्युक्तरीत्या सर्वत्राप्युक्तरीत्या ज्ञानानुमिति संभवेन शाब्दबोधस्यैव विलोपप्रसङ्गात् । स्वमिस्मन्नेव तादृशवाक्यप्रयोक्तृत्वस्य व्यभिचारित्वादनुमित्यनुपपत्तेश्च । न चास्त्येव वादिवाक्याधीनं वा तत्समानाकारं वा ज्ञानम् । तथाऽप्याहार्यत्वाद् भ्रम एवेति लक्ष्यमेवेति वाच्यम् । तस्य भ्रमत्वे मानाभावात् । किं लोक प्रतीतिर्मानं स्वसिद्धान्तो वा । नाद्यः । तादृशपुरुषे लोकानां भ्रमत्वव्यवहाराभावात् । प्रत्युतायं न भ्रान्तः किन्तु भ्रान्तोक्तार्थमनुवदत्येवेति च वदन्ति । न द्वितीयः । त्वत्समयस्य निर्मूलत्वात् । अत एव तदभाववति तत्प्रकारकं भ्रम इत्यपि निरस्तम् । उक्तातिव्याप्तेरेवेति चेत् । मैवम् । दोषप्रयोज्यतदभाववति तन्निष्ठनिषयताकनिरूपकत्वस्यैव भ्रमत्वेन दोषाभावात् । तथा हि । सत्त्वविषयतयैव द्विविधा विधिरूपाऽनुवादरूपा चेति । तत्राद्या तद्विषयकेच्छादिरूपप्रवृत्तिजननस्वभावा । द्वितीया तु तद्वाचकपदोल्लेखादिप्रयोजकाऽपि नेच्छादिजनने शक्ता । विधिरूपत्वमनुवादरूपत्वं च विषयतानिष्ठो धर्मविशेषः । तत्र विधिरूपैव विषयतादोषप्रयोज्या । तात्पर्याज्ञानादिदोषघटितसामग्रीप्रयोज्यत्वात् ।

द्वितीया तु तात्पर्यधीप्रयोज्याऽपि तात्पर्यधीबोद्धृसमवेता न भ्रमरूपेति दोषप्रयोज्या । एवं विधिरूपविषयतानिरूपकमेव ज्ञानं बाधग्रहप्रतिबध्यम् । नानुवादरूपविषयाश्रयं ज्ञानमिति बाधकालेऽपि वादिवाक्यादुत्पद्यते । तादृशज्ञानं क्वचिदाहार्यं क्वचिदापत्तिरूपमित्यनेकविधं न भ्रमरूपं नापि प्रमारूपमिति । अथवा तदभाववति तन्निष्ठविधिरूपविषयतानिरूपकत्वं भ्रमत्वम् । ईश्वरज्ञानादिनिष्ठा विषयता न विधिरूपा किन्त्वनुवादरूपैव । तदुक्तं तत्त्वनिवेकटीकायाम् भ्रान्तोऽयं शुक्तिकाशकलं कलधौततयाऽऽकलयतीत्यनुवादरूपैव न विधिरूपेत्यतो न दोषः ।

**श्रीनि.—** ॥ **एकेनैवेति ।** एकजातीयेनैवेत्यर्थः ।

**वि.—** ननूर्ध्वतात्वेन संशयधर्मिगतोर्ध्वताजातीयस्य स्थाणुत्वपुरुषत्वरूपकोटिद्वयसहचरितत्ववन्नित्यव्यावृत्तत्वेनाकाशविशेषगुणत्वजातीयस्य नित्यत्वानित्यत्वरूपकोटिद्वयासहचरितत्वादनित्यव्यावृत्तत्वेन तत्सजातीयस्यापि कोटिद्वयासहचरितत्वादाकाशविशेषगुणत्वस्य कथं साधारणधर्मत्वमित्यत आह ॥ **न चैकेनैवेति ।** एकेनैवैकजातीयेनैव साधारणकोटिद्वयसहचरितेन धर्मेण भाव्यं भवितव्यमिति नियमो राजाज्ञारूपो नास्तीत्यर्थः । अयमभिसन्धिः । धर्मिनिष्ठधर्मसमानधर्मस्य कोटिसहचरितत्वमात्रेणापि धर्मिनिष्ठधर्मस्य साधारणत्वसम्भवात्तत्समानधर्मस्य कोटिद्वयसहचरितत्वमनपेक्षितमेव । गौरवात् । अन्यथा प्रत्येकं देवदत्तयज्ञदत्तनिष्ठतपोबललब्धदण्डकुण्डलसमानाकारदण्डकुण्डलरूपधर्मद्वयस्यपुरोवर्तिन्युपलम्भे सत्ययं देवदत्तो वा यज्ञदत्तो वेति सन्देहस्य च साधारणधर्मजन्यत्वाभावापातात् । तथा च धर्मिनिष्ठसमानधर्मस्यैकजातीयस्यैव कोटिद्वयसामानाधिकरण्यं नापेक्षितमिति । विप्रतिपत्तेः साधारणधर्मत्वमुपपादयति ॥ **तथेति ।** तथा प्रतिपन्नत्वं तस्य भौतिकस्य धर्मस्तथा । प्रतिपन्नत्वमभौतिकत्वेन प्रतिपन्नत्वं तस्याभौतिकस्य धर्मः । यद्वा तस्य धर्मिणो भैतिकत्वाभौतिकत्वयोरधिकरणस्य धर्म इति हेतोर्विप्रतिपत्तिर्विरुद्धार्थकवचनद्वय्यपि साधारणी धर्मिभौतिकाभौतिकवृत्तिरित्यर्थः । असाधारणधर्मविप्रतिपत्त्योः साधारणधर्मान्तरकथनसमाप्तिपर इति शब्दः । इदानीं पदार्थग्रहणव्यावर्त्यस्य विपर्ययस्य लक्षणमाह ॥ **विपरीतनिश्चय इति ।** विपरीतो वैपरीत्येनार्थविपरीतकारी । अयथार्थ इति यावत् । निश्चयः सकम्पप्रवृत्त्यहेतुज्ञानमित्यर्थः ॥ **संशय ज्ञानस्येति ।** संशयरूपज्ञानत्येत्यर्थः । व्युदास इत्यनुवर्तते । संशयविपर्ययस्य साधनव्यावृत्त्यर्थं यथार्थग्रहणम् । कृतकानि तत्सधनानीति । जिज्ञासायामाह ॥ **स चेति ।** स विपर्ययश्चशब्दोक्तः संशयश्च द्वयं प्रत्यक्षाभासानुमानाभासशब्दाभासेभ्यो जायत इत्यर्थः । एतेनार्थापत्त्याभासादिकं पृथग्विपर्ययसाधनं प्रत्यक्षाभास एवेति मतं कुमतमिति सूचयति । अर्थापत्त्याद्याभासादेरनुमाना-

भासरूपत्वात्प्रत्यक्षाभासवत्साधारणानैकान्तिकादेरप्यनुमानाद्याभासस्य संशयसाधनत्वात्तद्युक्त-मित्यवगन्तव्यम् । यद्वा संशयः साधारणधर्मजन्य इत्युक्तम् । विपर्ययस्तु केन जायत इति जिज्ञासायामाह ॥ **स चेति** । विपर्ययस्त्वित्यर्थः । विपर्ययस्य प्रत्यक्षाभासादिजन्यत्वमुदाहरणमुखेन दर्शयति ॥ **यथा शुक्तिकायामिदं रजतमित्यादीति** । प्रत्यक्षानुमानागमाभासेभ्यो जायत इत्यनुवर्तते । इतीत्यनन्तरं विपर्यय इति पूरणीयम् ॥ **शुक्तिकायामिदं रजतमिति** । साक्षात्काररूपो विपर्यय इत्यर्थः । अनुमितिरूपविपर्ययादिरादिशब्दार्थः । ननु प्राभाकरादयो ज्ञानमयथार्थं नास्त्येवेति वर्णयन्ति । तत्कथं संशयविपर्ययतत्साधानव्यावृत्त्यर्थं ग्रहणमित्याशङ्कमानं प्रतितन्मतं दूषयितुमनुवदति ॥ **आहुरिति शेषः** ।

## प्राभाकरादिमत निरासः

**(१२) प्र.प.— अयथार्थज्ञानमेव नास्तीति प्राभाकरादयः । तन्न । अनुभवसिद्धत्वात् । एतावन्तं कालमहं शुक्तिकामेव रजतत्वेन प्रतिपन्नोऽस्मीत्युत्तरकाले परामर्शाच्च । प्रतीतं च रजतं देशान्तरे सदेवेति वैशेषिकादयः । ज्ञानस्वरूपमेवेति विज्ञानवादिनः । तत्रैव तात्कालिकमुत्पन्नं सदिति भास्करः । न सन्नासन्नसदसत् किन्त्वनिर्वचनीयमेवेति मायावादिनः । असदेव रजतं प्रत्यभादित्युत्तरकालीनानुभवाच्छुक्तिरेवात्यन्तासद्रजतात्मना प्रतिभातीत्याचार्याः । अनध्यवसायः स्वप्नश्चायथार्थज्ञानान्तरमस्तीति वैशेषिकाः ।**

**जना.—** ॥ **अयथार्थज्ञानमेवेति** । कुतस्तद्व्यावृत्त्यर्थं यथार्थग्रहणमित्येवकारार्थः ॥ **अनुभवेति** । असदेव रजतं प्रत्यभादित्यनुभवसिद्धत्वादित्यर्थः । अथवा ममायथार्थमेव रजतभानमुत्पन्नमिति साक्षिरूपानुभवसिद्धत्वादित्यर्थः । अथ स्फुटतरानल्पदोषतया मतभेदानां स्वरूपकथनमेव निराकरणमिति मन्वानो भ्रमविषये वादिनां मतभेदानाह ॥ **प्रतीतमित्यादिना** ॥ **अनिर्वचनीय-मेवेति** । सदसद्विलक्षणमेवेत्यर्थः ॥ **असदेवेति** । शुक्तिरेव भातीत्याचार्या इति प्रथममन्वयः । ननु भ्रमस्य शुक्तिविषयकत्वे कथमयथार्थत्वम् । विद्यमानविषयकत्वादित्यत आह ॥ **अत्यन्तासद्रज-तात्मनेति** । नन्वेवं नैयायिकमतान्न विशेष आचार्यमतस्य । तैरपि शुक्तावविद्यमानदेशान्तरीय-रजतात्मतया शुक्तेर्भानाङ्गीकारादित्यत आह ॥ **अत्यन्तेति** । कुत्रापि कदाऽप्यविद्यमानेत्यर्थः । ननु भ्रमस्य कथमत्यन्तासद्रजततादात्म्यविषयकत्वम् । असता साकं चक्षुरादेः सन्निकर्षाभवादित्यत आह ॥ **प्रत्यभादित्यनुभवादिति** । तथा चानुभवबलेनात्यन्तासतोऽपि रजततादात्म्यस्य दोषरूपसन्निकर्षेण भ्रम उल्लेख्यत्वलक्षणं विषयत्वं कल्प्यत इति भावः । असदेवेत्येवकारेण न देशान्तरे सन्नापि

ज्ञानस्वरूपं नापि तात्कालिकमुत्पन्नमितीतरमतनिरासः सूचितो भवति ॥ **ज्ञानान्तरमिति** । तथा च यथार्थग्रहणेन संशयविपर्ययानध्यवसायस्वप्नतत्साधनानां निरास इति वक्तव्यमिति वैशेषिकादीनामाशय इति भावः ।

**राघ.—** ॥ **अनुभवसिद्धत्वादिति** । अयथार्थज्ञानस्येत्यनुषङ्गः । प्राणभृन्मात्रस्येदं रजतं जानामीति साक्ष्यनुभवसिद्धत्वादित्यर्थः । अनुभवविवादिनं प्रत्याह ॥ **एतावन्तमिति** । शुक्तिरेवेदं न रजतमथापि तां शुक्तिकामेव रजतत्वेन प्रतिपन्नो ज्ञातवानस्मीति भ्रमोत्तरकाले शुक्तिविषयक-परामर्शस्य दर्शनाच्चेत्यर्थः । एवं विपरीतपदव्यावर्त्यं भ्रमं समर्थ्य तद्विषये विवादं चोपन्यस्यति ॥ **प्रतीतमित्यादिना** । सर्वपक्षाणामनुभवविरोधेन निराकुर्वन्ननुभवसिद्धत्वेन स्वमतमाह ॥ **असदेवेति** । विस्तरस्तु सुधायां अभिनवान्यथाख्यातिवादे न्यायामृते च । ननु यथार्थग्रहणेन संशयविपर्यय-तत्साधनानां निरास इत्युक्तम् । व्यावर्त्यान्तरस्यापि सत्त्वादित्याशङ्क्य किञ्चिद्व्यावर्त्यतया प्रसक्तं संशयादावन्तर्भवति । किञ्चिल्लक्ष्यमेव न व्यावर्त्यमिति भावेन तदनुवादपूर्वकमुक्तान्तर्भावमाह ॥ **अनध्यवसाय इत्यादिना वक्ष्याम इत्यन्तेन** ।

**विज.—** ॥ **अयथार्थमिति** । तथा च ज्ञानतत्साधनयोरयथार्थयोर्व्यावर्त्ययोश्च भावादर्थवत्प्रमाण-मित्येव प्रमाणलक्षणमस्त्विति भावः ॥ **शुक्तिकामेवेति** । न च शुक्तिकायां रजतत्वप्रकारकज्ञान-विषयत्वासंसर्गाग्रहात्मैवायमप्यनुभव इति वाच्यम् । संसर्गे विषयत्वे बाधकाभावादिति भावः । स्वमतं निर्धारयितुमादौ निर्धारणप्रतियोगिनो दर्शयति ॥ **प्रतीतं चेत्यादिना** ॥ **वैशेषिकादय इति** । क्लृप्तरजतविषयकत्वेनैवोपपत्तावक्लृप्तविषयकत्वे मानाभावादिति भावः ॥ **विज्ञानवादिन इति** । भेदविषयविभावानुपपत्तेरिति भावः ॥ **भास्कर इति** । ज्ञानत्वस्य प्रमात्वव्याप्तत्वादिति भावः ॥ **न सन्नासदिति** । बाधापरोक्षत्वाभ्यामिति भावः । युक्तिपुरःसरं निर्धारयति ॥ **असदेव रजतमिति** । मतान्तरे त्वेतादृशानुभावानुपपत्तेः । न च तद्देशकालासत्त्वमेवासत्त्वं गोचरयत्यनुभव इति वाच्यम् । सकलदेशकालासत्त्वे बाधकं विना विशेषासत्त्वगोचरत्वे मानाभावात् । न चात्यन्तासतो भानसामग्रीविरह एव बाधकः सन्निकर्षादिस्तादृशस्याभावादिति वाच्यम् । दोषसहितस्यैवेन्द्रियस्य तज्ज्ञानसामग्रीत्वात् । सन्निकर्षस्यापि निषयतानियामकत्वेनोपयोगादिति भावः ।

**वेदे.—** ॥ **अयथार्थमिति** । तत्साधनं दूरतोपास्तमित्यर्थः । तथा च तदुभयव्यावृत्त्यर्थं प्रमाण-लक्षणे यथाशब्दार्थग्रहणमयुक्तमिति भावः । प्राभाकर इत्यनेनायथार्थज्ञानसद्भावे मानाभावादिदं रजतमित्यादिकं तु नैकं विशिष्टिज्ञानं किन्तु ग्रहणस्मरणात्मकं ज्ञानद्वयमेव । तयोश्च स्वरूपतो

विषयतश्च भेदाग्रहादेव सामानाधिकरण्येन व्यवहारादिकम् । स एव च नेदं रजतमिति भेद्रगहणे बाध्यत इत्यादि तदीयमुपपादनं प्रसिद्धमेवेति सूचयति । प्रमाणाभावोऽसिद्ध इत्याह ॥ **अनुभव-सिद्धत्वादिति** । यथा सत्यरजतस्थले इदं रजतमिति विशिष्टविषयमेव ज्ञानं साक्षिसिद्धम् । तथा शक्तिकायामपीदं रजतमिति ज्ञानं च विशिष्टविषये साक्षिणा प्रतीयमानं कुतो नाङ्गीकार्यम् । न हि ततोऽस्य वैलक्षण्यमण्वपि प्रतीयते । प्रतीतौ वाऽस्मत्प्रतीत्यनुपपत्तेः । न चाविशिष्टविषयं ज्ञानद्वय-मेवैकज्ञानत्वेन विशिष्टविषयकत्वेन च प्रतीयत इति वाच्यम् । तथा सति विशिष्टज्ञानमात्रासिद्धि-प्रसङ्गात् । अस्यैवायथार्थज्ञानस्य स्वीकारापत्तेश्च । न चेदमपि न विशिष्टज्ञानमपि तु ज्ञानद्वयेन भेदाग्रहमात्रमिति वाच्यम् । बाधकाभावात् । अन्यथा सर्वत्रानाश्वासप्रसङ्ग इति भावः । प्रमाणान्तर-माह ॥ **एतावन्तमिति** । न चायं बाधोत्तरकालीनपरामर्शः । शुक्तिविशेष्यकरजतत्वप्रकारकानुभवाभावे युक्तः । अत एव तत्परामर्शानुपपत्तेरेव विपर्यये प्रमाणमिति भावः । अयथार्थज्ञानमङ्गीकुर्वाणा अपि न स्वाभिमतं सर्वमङ्गीकुर्वन्तीति स्वाभिमतं निर्धारयितुं वैशेषिकादिमतमुपन्यस्यति ॥ **प्रतीतमिति** । सर्वथाऽसत्त्वे प्रतीत्यनुपपत्तेस्तत्रैव सत्त्वे वा बाधानुपपत्तेरिति भावः ॥ **ज्ञानस्वरूपमेवेति** । सर्वथाऽसत्त्वे प्रतीत्यनुपपत्तेर्देशान्तरे सत्त्वे प्रमाणाभावात्पुरत एव सत्त्वे भ्रान्त्यनुपपत्तेः परिशेषा-द्विज्ञानमेव तदिति वक्तव्यम् । न चैवं भ्रान्तित्वानुपपत्तिः । आन्तरस्य बाह्यतावभासो भ्रम इत्यङ्गीकारादिति भावः ॥ **तत्रैवेति** । असत्त्वे प्रतीत्यनुपपत्तेरुक्तं सदिति । अत्र प्रतीतस्य देशान्तरे सत्त्वे प्रमाणाभावादाह ॥ **तत्रैवेति** । अनुत्पन्नत्वे पूर्वमेवोत्पन्नत्वे वा भ्रान्त्यनुपपत्तिरित्यत उक्तं तात्कालिकमुत्पन्नमिति । नश्यतीत्यपि ग्राह्यम् । तेन बाधोऽप्युपपद्यत एवेति भावः ॥ **न सदिति** । सत्त्वे बाधानुपपत्तिरसत्त्वे ख्यात्यनुपपत्तिः सदसत्त्वे विरोध इति भावः । अनिर्वचनीयं सद-सद्विलक्षणमित्यर्थः । सिद्धान्ते प्रमाणोक्त्यैव तद्विरोधेनोपन्यस्तानि मतानि निराकृतानीति मन्यमानः स्वाभिमतमयथार्थं ज्ञानं दर्शयितुं सप्रमाणकं भगवत्पादसिद्धान्तमाह ॥ **असदेवेदमिति** । तदुक्त-माचार्यैः । असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादिति । **अन्तन्ता-सद्रजतात्मनेति** । इदं च यत्राधिष्ठनासन्निहितमारोप्यं तदभिप्रायेण । तत्रारोप्यतत्तादात्म्योरुभयोरपि बाध्यत्वेनासत्त्वात् । यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत् । तन्मात्रस्यैव बाधात् । आरोप्यं तु सदेव । बाधोत्तरकालमप्यनुवर्तमानत्वात् । यथा दूरस्थयोश्चूतपनसयोरयं चूत इति भ्रम इति द्रष्टव्यम् । एतेनोपन्यस्तान्यपि मतानि निराकृतानि । तथा हि । न तावदाद्यं मतमुपपन्नम् । असदेवेदं रजतं प्रत्यभादित्यनुभवविरोधात् । न चान्यत्र सत्त्वेऽप्यत्रासत्त्वमङ्गीक्रियत इति प्रतीत्युपपत्तिः । देशान्तरे सत एवात्र प्रतीतौ मानाभावात् । न तावत्तत्र भ्रान्तिरेव प्रमाणम् । अत्रैव सत्त्वावेद-

कत्वाच्च। नापि बाधः । इह रजतनिषेधकस्य तस्यान्यत्र तत्सत्त्वासत्त्वयोरौदासीन्यात् । सर्वत्रासत्त्वे कथं प्रतीतिरिति चेत् । अन्यत्र सत्त्वेऽपि कथम् । न ह्यन्यत्र सत्त्वमत्र प्रतीतेरुपकारि । इन्द्रियार्थ-सन्निकर्षार्थं वा तदास्थेयं संस्कारसिद्ध्यर्थं वा । नाद्यः । विप्रकृष्टेन सन्निकर्षाभावात् । पुरोवृत्ति-सन्निकर्षमात्रेणैव भ्रान्त्युत्पत्त्यङ्गीकारात् । न द्वितीयः । संस्कारो हि रजततानुभवमाक्षिपेदनुभवस्तु यथार्थो रजतसत्ताम् । अत्र प्रतीतस्यैवान्यत्र सत्ता तु कुतः कल्प्या । किञ्चासतः प्रतिभासासम्भवे तादात्म्यमपि न भासेत । तस्य त्वयाऽप्यसत्त्वाङ्गीकारादिति । नापि द्वितीयः । आन्तरमेवेदं रजतं बाह्यतया प्रत्यभादिति प्रतीत्यापत्त्याऽसत्त्वावेदकोक्तप्रत्ययविरोधात् । नापि तृतीयः । तत्रापि रजतं विनष्टमिति बाधाकारप्रसङ्गेनोक्तासत्त्वप्रत्ययविरोधात् । नापि चतुर्थः । उक्तानुभवविरोधात् । अत्र सत्तानिषेध एव भासते । नासत्त्वमिति चेत् । तदतिरिक्तस्यासत्त्वस्याभावात् । अनिर्वचनीयवादे तदतिरिक्तमेव तदिति चेत् । अन्योन्याश्रयात् । अनिर्वचनीयमेव तदिति बाधाकारप्रसक्तेश्च । मिथ्यैव रजतं प्रत्यभादित्यनेन नानिर्वाच्यतासिद्धिः । मिथ्याशब्दस्यासत्त्ववाचकत्वेनाप्युपपत्त्याऽनिर्वचनीय-वाचकत्वे प्रमाणाभावात् । न च रजतस्यासत्त्वे सन्निकर्षाभावेनापरोक्षज्ञानानुपपत्तिः । पुरोवृत्ति-सन्निकृष्टमेवेन्द्रियं दोषलक्षणसहकारिमहिम्नाऽसद्रजतापरोक्षज्ञानमपि जनयतीत्यभ्युपगमात् । विस्तरस्तु सुधायां द्रष्टव्य इति ।। **वैशेषिका इति ।** तथा चेदपि ज्ञानद्वयं यथाशब्दग्रहणव्यावर्त्यत्वेन पूर्वं कुतो न प्रदर्शितमिति भावः ।

**अभि.—** अयथार्थज्ञानाभावात्तल्लक्षणादिनिरूपणमनुपपन्नमिति मन्यमानमतं दूषयितुमनुवदति ।। **अयथार्थज्ञानमेवेति ।** इदं रजतमिति द्वे ज्ञाने ग्रहणस्मरणात्मके । स्मरणं तु दोषवशात्प्रमुषिततत्ताकं तद्विषयबाधाभावात् । द्वे अपि विज्ञाने यथार्थे इति स्वरूपतो विषयतश्च भेदाग्रहाद्रजतार्थिनः शुक्तिकायां प्रवृत्तिः । अत एव प्रवृत्तिविंसवाद इति भावः ।। **अनुभवसिद्धत्वादिति ।** इदं रजतमिति ज्ञानप्रमाण्यस्य साक्ष्यनुभवसिद्धत्वादित्यर्थः । न च तदविज्ञानं ग्रहणस्मरणात्मकमिति वक्तुं युक्तम् । साक्षिणो निर्दोषत्वेन तत्तांशप्रमोषायोगात् । इदं रजतमिति ज्ञानस्य शुक्त्यन्यविशेष्यकत्वेऽनुभव-विरोधमाह ।। **एतावन्तं कालमिति ।** अस्य ज्ञानस्य बाधोत्तरकालीनत्वेन दोषाभावादत्रापि ज्ञानद्वयमङ्गीकृत्य न विवेकाग्रहो वक्तुं शक्यत इति भावः । विपर्ययमङ्गीकुर्वाणा अप्यनुपपन्नभाषिणो वैशेषिकादय इति भावेनाह ।। **प्रतीतं चेति ।। ज्ञानस्वरूपमेवेति ।** आन्तरस्य बाह्यतया भासमानो भ्रम इति विज्ञानवादिनो मन्यन्ते । ततस्तेऽप्यनुपपन्नभाषिण इति भावः । परमतप्रतिक्षेपपूर्वकं मायावाद्युक्तसिद्धान्तं दूषयितुमनुवदति ।। **न सदिति ।** तार्किकोक्तरीत्याऽऽरोप्यमाणं न देशान्तरे सत् । नाप्यसत्ख्यातिवाद्युक्तरीत्याऽत्यन्तासत् । नापि स्याद्वाद्युक्तरीया सदसत् । तदुक्तम् ।

भङ्ग्यन्तरख्यात्युपलक्षणमेतत् । स्याद्वाद्युक्तं सर्वमप्ययुक्तं किमिति पृच्छति ।। **किन्त्विति ।** उत्तरमाह ।। **अनिर्वचनीयमेवेति ।** सत्स्यादित्येकः प्रकारः । असत्स्यादिति द्वितीयः । सदसत्स्यादिति तृतीयः। सदसद्विलक्षणं स्यादिति चतुर्थः । सत्त्वे सति सद्विलक्षणं स्यादिति पञ्चमः । असत्त्वे सत्यसत्त्व-विलक्षणं स्यादिति षष्ठः । सदसत्त्वे सति सदसद्विलक्षणं स्यादिति सप्तमः प्रकारः स्यादिति वाद्युक्तभङ्गीषु चतुर्थप्रकार एव युक्त इति मायावादिनो वदन्तीत्यर्थः । एतेनानिर्वचनीयमित्यनेनैव पूर्णत्वान्नासत इत्यादिकं व्यर्थमिति परास्तम् । उदाहृतमतानामनुभवविरोधं सूचयन्नाह स्वमतम् ।। **असदेवेति ।** ननु नानुभवबलेनारोप्यस्यात्यान्तासत्त्वं वक्तुं शक्यम् । अनुभवस्यात्रासत्त्वावगाहित्वेना-त्यन्तासत्त्वेनावगाहित्वात् । अपि च चाकचक्येन सादृश्यं शुक्तौ रजतारोपहेतुः । तच्च सत एव सम्भवतीति सदेवारोप्यं नासत् । सादृश्यायोगात् । अन्यथा विनिगमनाविरहेण शुक्तौ खर्परारोपोऽपि स्यादिति चेत् । अत्र वक्तव्यम् । किमेवमसतः प्रतीत्ययोगादसदेव रजतं प्रत्यभादित्यनुभवस्य सङ्कोचः कल्प्यते । अथासत आरोपासम्भवात् । नाद्यः । असदारोप्यं नेति निषेधानुपपत्तेः । न ह्यसन्न जानाति तस्य चारोप्यं निषेधतीति । मा हि भूद्देवदत्तमजानतोऽपि तत्र श्यामत्व-निषेधधीप्रसङ्गः । द्वितीये वक्तव्यम् । एवं लक्षणकं शशविषाणमिति प्रतारकं वाक्यं भावयतो भूप्रदेशकाष्ठविशेषं दृष्ट्वेदं शशविषाणमिति जायमाने विभ्रमे किं सदारोप्यमुतासदारोप्यम् । आद्यं वदन् श्लाघनीयप्रज्ञः । द्वितीये कथमसदारोपो न सम्भवतीति । यदत्रोक्तं सादृश्यायोगान्न-सदारोप्यमिति । तन्न । चाकचक्यारोप्यनिष्ठत्वाभावेऽपि चाकचक्येन यच्छुक्तिगतं सादृश्यं तत्प्रतियोगित्वस्य सत्यरजत इवासत्यपि सम्भवात्प्रतियोगित्वस्य धर्मिसत्तानिरपेक्षत्वादिदमेव हि सादृश्यप्रतियोगित्वं यत्तेनायं सदृश इति ज्ञानजनकीभूतज्ञानोल्लिख्यमानशब्दविषयत्वं तादृशज्ञानं रजतमिति ज्ञानं तेनोल्लिख्यमानः शब्दो रजतमिति शब्दस्तद्विषयत्वमुभयत्रापि समम् । खर्परस्य तु न तद्विषयत्वमिति न शुक्तौ तस्यारोपः । एवं रजतं रजतान्तरेण सदृशमिति ज्ञानजनकीभूतज्ञानो-ल्लिख्यमानशब्दविषयत्वस्य सद्भावात्प्रधाननिष्ठसादृश्यप्रतियोगित्वमप्यारोपस्योह्यम् । नन्वसन्न चेदारोप्यं किं प्रधानेन किमधिष्ठानप्रधानयोः सादृश्येन वा कृत्यमिति चेत् । उच्यते । असत् प्रतियोगिकमसदधिष्ठानस्य सादृश्यं तावदपेक्षितम् । अन्यथाऽतिप्रसङ्गात् । असतो रजतेनेदं सदृशमिति ज्ञानजनकीभूतरजतमिति ज्ञातोल्लिख्यमानशब्दविषयरूपं प्रतियोगित्वमधिष्ठानसदृश-प्रधानमन्तरा न सम्भवतीति प्रधानसादृश्ययोरुपयोग इति । उपलक्षणमेतत् । आरोप्यं क्वचित्सदित्यपि द्रष्टव्यम् । अत एव सुधायाम् । यत्रारोप्याधिष्ठानसन्निहितं तत्र तत्तादात्म्यमसत् । यथा दूरस्थयो-श्चूतपनसयोरेक एवायं चूत इति बाधोत्तरकालमपि स्वरूपद्रव्यानुवृत्तेः । यत्र पुनरसन्निहितमारोप्यं तत्र

तादात्म्यं चोभयमप्यसत् ॥ **उक्तन्यायेनेति** । क्वचिदारोप्यमपि सदित्युक्तम् । उत्तरकालीनानुभवादिति। यद्यप्यत्र कालाठ्ठञिति ठञ्विधानादावुत्तरकालिकेति भवितव्यम्। तथाऽपि सूत्रकारेणापि लोकप्रसिद्धसमानकालीनेत्यादिप्रयोगसिद्धये तद्धित इति बहुवचनेनानुक्तोऽपि प्रत्यय ऊह्यत इति ज्ञापनादुत्तरकालीनेत्युक्तम्।

**आद.—** ॥ **अयथार्थेति**। इदमिति प्रत्यक्षं रजतमिति स्मरणं द्वयोर्दोषवशात्स्वरूपतो विषयतश्च भेदाग्रहात्प्रवर्तकत्वमिति भावः ॥ **अनुभवेति** । अभेदावगाह्यनुभवसिद्धत्वादित्यर्थः । अनुभवस्याभेदांशे भ्रमत्वं दुर्वारमिति भावः ॥ **परामर्शाच्चेति** । स्मृतेरित्यर्थः । अभेदावगाह्यनुभवाभावे स्मृतेरसम्भवादिति भावः । स्मृतेरप्यंशद्वयस्यैक्यावगाहित्वेन चशब्दः ॥ **असदेवेति** । अन्यमतेष्वनुभवविरोध इति भावः ।

**श्रीनि.—** ॥ **न सन्नासदिति**। अत्रानिर्वचनीयमित्येतावति वक्तव्ये यन्न सदित्याद्युक्तं तत्सच्चेन्न बाध्येतासच्चेन्न प्रतीयेन सदसत्त्वं विरुद्धमतः परिशेषात्सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वमङ्गीकार्यमित्यनिर्वचनीयत्वे प्रमाणसूचनाय । अनुवादेनैव विज्ञास्यत इति सत्त्वादिपक्षे दूषणं नोक्तमिति द्रष्टव्यम्।

**वि.—** भास्करादय आदिशब्दार्थः । एवेत्यनेनायथार्थज्ञानरूपसंशयविपर्ययतत्सन्धानव्याव्यावृत्त्यर्थं यथार्थग्रहणमयुक्तमिति सूचयति ॥ **तन्नेति** । तदयथार्थज्ञानं नास्तीति मतं न सम्भवतीत्यर्थः । तत्र हेत्वाकाङ्क्षायामाह ॥ **अनुभवसिद्धत्वादिति** । शुक्तिकायां रजताभेदज्ञानस्येति शेषः । इदं रजतात्मना जानामीत्यनुभवसिद्धत्वादित्यर्थः । अन्यथा क्वचिदपि रजताभेदज्ञानं न सिध्येदिति भावः । **उत्तरकाले परामर्शाच्चेति** । नेदं रजतं किन्तु शुक्तिरेव मम त्विदन्त्वेन प्रतीतं यद्रजतं तन्नास्त्येवेति बाधानन्तरमेतावन्तं कालमेतवत्पर्यन्तमहं शुक्तिमेव रजतात्मना ज्ञातवानस्मीत्ययथार्थज्ञानस्यानुसंन्धान इत्यर्थः । अयथार्थज्ञानप्रसङ्गाच्छुक्तिकायामिदं रजतमिति विशिष्टज्ञानविषये रजते वादिविप्रतिपत्तिमाहे ॥ **प्रतीतं चेति**। शुक्तिकायामिदं रजतमिति भ्रान्तिविषयोऽपीत्यर्थः । आहुरिति शेषः । एवं वक्ष्यमाणपक्षचतुष्टये दोषो न सन्देहः । वैशेषिकादय इत्यत्र नैय्यायिकादिरादिशब्दार्थः । वैशेषिकादिपक्षचतुष्टयमप्रामाणिकमिति ज्ञापयितुमाचार्यपक्षं सप्रमाणमाह ॥ **असदेवेति** । इदं पदार्थात्मना प्रतीतस्य रजतस्यासदेवाविद्यमान एव न तु विद्यमानमिति कालत्रयासत्त्वगोचराद्बाधोत्तरकालीनानुभवादित्यर्थः । अत्यन्तासद्रजतात्मना कालत्रयासद्रजतात्मनेत्यर्थः । विद्यमानत्वरहितं रजतं किञ्चित्सर्वदा वा सदित्यस्य व्याहतत्वात् । भ्रमप्रतीतं रजतं कालत्रयेऽसदिति भावः ।

एतेनायमनुमवोत्तरासत्त्वगोचर इति नैयायिकानां जल्पनमपास्तम् । ममात्रेदमिति यद्रजतं प्रतीतं तदेवेति सत्त्वसामान्यविरोध्याभासत्वस्येव प्रतिभासात् । अन्यथा प्रमितेऽपि रजते सन्मात्रे इदमिति प्रतीतं रजतमसदेवेति प्रतीत्यापातात् । कदाचित्कुत्रचिद्वा सत्त्वस्य तत्र सत्त्वाद्भ्रान्तिप्रतीती रजतस्य बाधकवशात् । अत्र सत्त्वे सिद्धे तस्यान्यत्र सत्त्वे मानाभावादत्यन्तसत्त्वस्यैवाभ्युपेयत्वाच्च । न हि क्वाप्यसद्रजतं सदिति सम्भवति । व्याहतेः । ननु सत्यरजतवन्ह्याद्यनुभवपूर्वको रजतवन्ह्यादिभ्रम इत्यवश्यमभ्युपेयम् । अन्यथा नारिकेलद्वीपवासिनो गुञ्जापुञ्जे वन्हिभ्रमापातात् । तथा चोपस्थित-वन्हिपरित्यागे कारणाभावात्तस्यैव लाघवाद्भ्रान्तिविषयत्वं कल्पनीयमिति चेन्न । प्रमास्थल इव भ्रमस्थलेऽप्येतद्रजतं न पूर्वदृष्टमित्यनुभवात्तद्विरोधेन लाधवप्रवृत्त्ययोगात् । अन्यथा महानसादौ वन्ह्युपस्थितिमन्तरेण पर्वते वन्ह्यनुमित्यनुदयात् । उपस्थितवन्हिपरित्यागे कारणाभावाल्लाघवेनोप-स्थितवन्हेरेवानुमितिविषयत्वेन तदतिरिक्तवन्हिरित्यापातात् । यदि महानसीयो वन्हिः पर्वते नास्तीति प्रत्ययोपस्थितवन्हिपरित्यागे कारणत्वं मन्यसे । तर्ह्यपर्वतीयो वन्हिः पर्वते नास्तीति प्रतीतेरयं पर्वतः स्वेतवृत्तिवन्हिमानेवेति प्रतीतेश्चोपस्थितवन्हिपरित्यागे कारणत्वात् । अयं पर्वतोऽग्निमानिति भ्रम-रूपानुमितेरत्यन्तासद्वन्हिविषयत्वम् । आपणे दृष्टं सद्रजतं तन्मद्ध्वस्त एवास्तीति नास्तीति प्रत्ययस्यै-तदन्यदेशीयं यद्रजतं तदत्र नास्तीति प्रत्ययस्य नेदं देशान्तरस्थरजतमिति प्रत्ययस्य चोपस्थित-रजतपरित्यागे कारणत्वादि रजतमिति भ्रान्तेरत्यन्तासद्रजतविषयत्वमङ्गीकुरु । भ्रान्तिविषयं कृते देशेऽविद्यमानस्य भ्रान्तिविषयरजतस्यान्यदेशीयत्वस्याप्यभावेनात्यन्तासत्त्वस्य न्यायप्राप्तत्वात् । न चापणे यद्दृष्टं रजतं तस्यात्र विशेषाभावाद्गृहेऽपि रजतत्वेऽपि रजतत्वेन सामान्यरूपेण तस्यैवात्रास्तु भानमिति वाच्यम् । तथा सति महानसीयवन्हिव्यक्तेर्महानसीयवन्हित्वेनानुमित्यविषयत्वेऽपि वन्हित्वेन सामान्यरूपेणानुमितिविषपातात् । तद्विशेषाभावस्य विशेषेण तद्व्यक्तिसत्त्वविरोधित्वतत्सामान्येनापि तद्व्यक्तिसत्त्वविरोधित्वात्तद्विशेषाभावग्रहेऽपि तस्या एव व्यक्तेः सामान्येनापि रूपेण तत्र भाना-योगाच्च । अन्यथा ध्वंसप्रागभावयोर्विशेषाभावत्वेन स्वकाले सामान्येन रूपेण स्वप्रतियोगिसत्त्वा-विरोधितया घटत्वं प्रागभावकाले तत्प्रतियोगिघटव्यक्तेर्घटत्वेन रूपेण सत्त्वप्रसङ्गात् । गन्धप्रागभावा-वच्छिन्नो घटो गन्धवान्पृथिवीत्वादित्यनुमानाद्गन्धवानित्यनुमित्यापाताच्च । विशेषाभावज्ञानस्य सामान्येन रूपेण स्वप्रतियोगिज्ञानाविरोधित्वात् । प्रथमक्षणविशिष्टो घटो निर्गुण इति ज्ञाने सत्यपि समवायिदेशे गुणसामान्याभावाभावेन तदज्ञानस्य गुणविशेषाभावाज्ज्ञानतया प्रथमक्षणे घटो घटत्वेन गुणवानिति प्रतीत्यापाताच्च । तस्माद्यस्य यत्र विशेषाभावाग्रहस्तस्य सामान्येनापि रूपेण तत्र ज्ञानायोगान्नेदं देशान्तरस्थरजतमिति भेदज्ञानदशायां रजतत्वेन वा तद्रजताभेदज्ञानायोगादगत्य-

दमत्यन्तासद्रजतात्मना भातीत्येवावश्यमभ्युपेयमिति । एतेनैव तत्र तात्कलिकमुत्पन्नपरमार्थत्वादनिर्वचनीयं वा रजतमस्तीति निरस्तम् । असदेव रजतं प्रत्यभादित्यनुभवादिदं रजतमिति प्रतीतं रजतमसदेवेति प्रतीतिकाले तत्सत्त्वेऽपि मानाभावात् । इदं रजतमस्तीति प्रतीतेरेव स्वविषयसद्भावे मानमिति चेन्न । बाधकप्रतीतेरेव स्वविषयसद्भावे मानत्वात् । अन्यथा बाह्यागमजन्यप्रतीतेः सर्वं रजतं सर्वदा सत्यज्ञानानन्दादिरूपमित्यादिप्रतीतेश्च स्वविषयसद्भावे प्रमाणत्वापातात् । स्वविषयसत्तावेदकत्वाविशेषात् । न हि बाधिताऽप्यपरोक्षप्रतीतेरेव सविषयीकृतार्थसत्त्वे मानं न तु परोक्षप्रतीतिरित्यत्र राजाज्ञाऽस्ति । वैपरीत्यस्यापि सुवचत्वात् । परमते निर्गुणवाक्यबाधितायाः सगुणवाक्यजन्यपरोक्षप्रतीतेः स्वविषयत्वे समानतापाताच्च । सत्त्वासत्त्वयोर्विरोधानङ्गीकारे तदा तद्विरोधाभावस्यैव तत्सहसाधकत्वाच्च । न च गोत्वविरोध्यश्वत्वरहिते गजे गोत्वं नास्तीति व्यभिचार इति वाच्यम् । गोत्वविरोध्यत्वाभावेऽपि तद्विरोधिगजजीवत्वस्य तदभावस्य च तत्र सत्त्वेनाव्यभिचारात् । एतेन भावाभावयोर्भिन्नसत्ताकयोर्विरोधात्त्रैकालिकनिषिद्धप्रतियोगिनोऽध्यस्तरूपस्य सत्त्वासत्त्वे उपपन्ने इत्यनिर्वचनीयस्यापीति वादिनां जल्पनमित्यपास्तम् । सत्ताभेदे मानाभावात् । अध्यस्तस्य कालत्रये सत्त्वप्रसङ्गाच्च । कालत्रयवर्तिनिषेधप्रतियोगित्वरूपस्य कालत्रयासत्त्वस्य तत्सत्त्वाविरोधिभावात् । प्रागभावध्वंसयोरपि स्वकाले स्वप्रतियोग्यध्यस्तरूप्यस्वरूपाविरोधित्वापाताच्च तयोः स्वप्रतियोग्यारोपितरूप्यस्य भिन्नसत्ताकत्वात् । अन्यथा स्वरूपस्य केवलान्वयित्वापाताच्च । तत्स्वरूपविरोध्यभावे तत्र तत्स्वरूपस्य केवलस्यापि दुर्वारत्वात् । बाह्यागमादिवेद्यार्थस्य सर्वस्य सत्त्वापाताच्च । तत्रापि भिन्नसत्ताकत्वेन विरोधस्य सुवचत्वात् । न च बाधोत्तरकालं मिथ्यैव रूप्यमभादित्यनुभवादध्यस्तरूप्यस्य मिथ्यात्वेन कथमत्यन्तासत्त्वमिति वाच्यम् । त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वमेवात्यन्ताभासत्वमिति चोद्यानवकाशादिति । ननु यथार्थग्रहणेन संशयविपर्यययोर्द्वयोरेव व्यावृत्तिकथनादन्यदयथार्थं ज्ञानं नास्तीति प्राप्तम् । तदयुक्तम् । वैशेषिकैरनध्यवसायस्य स्वप्नस्य चायथार्थज्ञानान्तरस्याङ्गीकारादित्याशङ्कमानं प्रति तन्मतमप्रामाणिकमिति ज्ञापयितुं दूषयितुमनुवदति ॥ **अनध्यवसायः स्वप्नश्चेति** । आहुरिति शेषः । ज्ञानान्तरं संशयविपर्ययाभ्यामन्यदित्यर्थः ।

## अनध्यवसायस्य ऊहस्य च संशय एव अन्तर्भावः

**(१३) प्र.प.— किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायः । स तु कोटीनामतिबाहुल्यादनिर्दिष्टकोटिकः संशय एव । वटादिव्यावृत्तिं पश्यतोऽपि पनसे यत्किञ्चित् संज्ञकोऽयं वृक्ष**

**इत्युत्पद्यते तज्ज्ञानमेव न भवति । किन्तु संज्ञाविषयं जिज्ञासामात्रम् । स्वप्नेऽपि गजादिदर्शनं चेद्यथार्थमेव । मानसवासनाजन्यत्वाद्गजादीनाम् । तेषु यद्बाह्यत्वज्ञानं स विपर्यय एव । बाह्यालीप्रदेशे पुरुषेणानेन भवितव्यमित्यूहापरनामकं सम्भावनाज्ञानमप्यन्यतरकोटिप्रापकप्राचुर्य-निमित्तोऽन्यतरकोटिप्रधानः संशय एव ।**

**जना.**— किंसंज्ञकोऽयं वृक्ष इति योऽयमन्तःकरणवृत्तिविशेषो जायते स किं किंशुकादि-व्यावृत्तिमपश्यतः पुरुषस्योत पश्यत इति विकल्प्याद्यं दूषयति ॥ **स त्विति ।** कुतोऽनिर्दिष्टकोटिकत्वं संशयस्य किं कोटीनामनिर्वचनीयत्वान्नेत्याह ॥ **अतिबाहुल्यादिति ।** एवं च संयविपर्ययतत्साधना-नामित्यत्र संशयपदेनैव तादृशानध्यवसायस्यापि गृहीतत्वान्न पृथग्गणनमनध्यवसायस्य कार्यमिति भावः । द्वितीयं निराह ॥ **वटादिति ॥ जिज्ञासामात्रामिति ।** ननु स्वप्नाख्यमयथार्थज्ञानान्तरमस्ति । तथा च तस्यापि निरास इति कुतो नोक्तः । तथा हि स्वाप्नगजादयः किमान्तरा बाह्या वा । पक्षद्वयेऽपि जन्या अजन्या वा । नाद्यः । बाह्यत्वानुभवविरोधात् । आन्तरकारणाभावाच्च । सुप्तस्य शरीरविदारणप्रसङ्गाच्च । नाप्यान्तरत्वे सत्यजन्या इति द्वितीयः । स्वाप्नात्प्रागूर्ध्वं चोपलम्भापत्तेः । नापि बाह्यत्वे सति जन्या इत्याद्यः । बहिरुपादानानुपलम्भात् । नापि बाह्यत्वे सत्यजन्या इति द्वितीयः । त्वन्मतेऽविद्यातिरिक्ताजन्यभावस्य नित्यत्वनियमेन स्वप्नात्प्रागूर्ध्वं च बहिस्तदुपलम्भापत्तेः। अतोऽनिर्वचनीयगजादिविषयकत्वादयथार्थः स्वप्नः । वैशेषिकरीत्याऽयथार्थस्मृतिरूपो वेति । अनूदितमर्थं किं गजादिस्वरूपविषयेऽयथार्थमुत बाह्यत्वादिविषय इति विकल्प्याद्यं निराचष्टे ॥ **स्वप्न इति ।** स्वप्नकाल इत्यर्थः । न च पूर्वोक्तविकल्पग्रासः । आन्तरत्वे सति जन्या इति कल्पस्वीकारात् । एतत्पक्षे उक्तमुपादानाभावलक्षणं दोषमुद्धरति ॥ **मानसेति ।** तथा च मानसवासनैव गजाद्युपादानकारणमिति भावः । न चातीन्द्रियमानसवासनोपादानकत्वाद्गजादीनामतीन्द्रियत्वा-पत्तिरिति वाच्यम् । स्वप्नायाथार्थ्यवादिवैशेषिकं प्रति द्व्यणुकोपादानकत्र्यणुकवत्प्रत्यक्षत्वोपपत्ते-रित्युत्तरसम्भवात् । एतस्मिन्नेव पक्ष उक्तं बाह्यात्वानुभवविरोधं द्वितीयं दोषं परिहरति ॥ **तेष्विति ।** ननु भगवत्पादैर्भ्रान्तिर्जाग्रत्त्वमेव हि जाग्रत्त्वमिति हि भ्रमो जाग्रत्त्वमेव तेषां मिथ्येत्यादिनाऽनु-व्याख्यानभागवततात्पर्यादौ स्वाप्नयाथार्थ्यप्रकरणे जाग्रत्त्वांश एव स्वप्नस्य भ्रमत्वकथनात्किं तदुल्लङ्घ्य बाह्यत्वग्रहणेनेति चेत् । उच्यते । जाग्रत्त्वग्रहणमुपलक्षणमिति सुधायां व्याख्यातत्वादित्येकमुत्तरम् । कृत्यान्तरमपि बाह्यत्वग्रहणस्याकलयामः । स्वाप्नायाथार्थ्यवादिनो हि वैशेषिकाः प्रकृताः । यदवोच-दिति वैशेषिका इति तेषां मतेऽन्तरिन्द्रियं मन इति घण्ठाघोषः । एवं चान्तरमानसवासनोपादानकेषु गजादिषु बाह्यत्वमवगाहमानः स्वप्नोऽयथार्थ एवेति स्फुटीकरणार्थं बाह्यत्वग्रहणमिति ॥ **ऊहापरनामकं सम्भावनाज्ञानमिति ।** अनेनोहस्य सम्भावनायाश्च ज्ञानान्तरत्वं निरस्तं ज्ञातव्यम् ।

**राघ.—** बाह्यालीप्रदेशे बाह्यवीथीप्रदेश इत्यर्थः ।

**विज.—** वैशेषिकानामेवानध्यवसायलक्षणमाह ॥ **किंसंज्ञक इति ।** ननु वैशेषिकोक्त-स्वप्नानध्यवसायरूपं ज्ञानद्वयमस्त्येव । तत्कुतस्तदपि यथार्थपदव्यावृत्तत्वेन न प्रदर्शितमित्यत आह ॥ **स तु कोटीनामिति ।** तथा च संशयत्वेन तस्यापि व्यावर्त्यकुक्षिनिक्षेपोऽस्तीति भावः । ननु व्यावर्तकधर्माग्रहः संशये कारणम् । तथा च यदा व्यावर्तकधर्मग्रहे सति किंसंज्ञको वृक्ष इत्याकारक-मुत्पद्यते । तत्कथं संशयेऽन्तर्भवेत् । संशयोत्पादकस्य तदानीमभावादित्यत आह ॥ **तज्ज्ञानमेव न भवतीति ।** विशिष्टज्ञानत्वावच्छिन्नं प्रत्येव व्यावर्तकधर्माग्रहत्वेन हेतुत्वादिति भावः । किं तदित्यत आह ॥ **जिज्ञासामात्रमिति ।** किंशब्दजन्योपस्थितिप्रकारीभूतधर्मवानयमितीच्छामात्रमित्यर्थः । ननु तथाऽपि स्वप्नोऽतिरिच्यत इत्यत आह ॥ **स्वप्नेऽपीति ।** स्वप्नावस्थायामित्यर्थः ॥ **यथार्थमेवेति ।** तथा च तस्य ज्ञानान्तरत्वेऽपि यथार्थत्वेन सङ्ग्राह्यत्वादेव न व्यावृत्त्यकोटिनिक्षेप इति भावः । ननु गजादेस्तदा तत्राभावाद्विषयमव्याप्तं याथार्थ्यं कुतः स्वप्न इत्यत आह ॥ **मानसवासनेति ।** ननु गजादिषु यद्वीथीस्थात्वज्ञानं तद्भिन्नमेव । न च तदपि यथार्थमेव । वासनाजन्यगजस्य वीथिस्थत्वा-भावात् । न च वासनयैव वीथिस्थत्वमपि गजे जायत इति वाच्यम् । पूर्वावगतवीथ्याः पूर्वोत्पन्नत्वेन तद्वीथिस्थत्वस्य तत्काले वासनाया अप्यनुत्पत्तेरत आह ॥ **स विपर्यय एवेति ।** इदं रजतमित्यादि-वदसद्विषय एवेत्यर्थः । तथा च विपर्ययत्वेन तस्योपादानान्न न्यूनत्वमिति भावः । ननु सम्भावनारूपं ज्ञानान्तरमस्ति तत्कुतो न व्यावर्तितमित्यत आह ॥ **सम्भावनाज्ञानमपीति ।** संशयभिन्नस्य तस्याभावान्न संशयभिन्नत्वेन तस्योपादानमिति भावः ।

**वेदे.—** तत्रानध्यवसायस्यसंशयान्तर्भावं वक्तुमज्ञातस्वरूपस्यान्तर्भावयितुमशक्यत्वात्तत्स्वरूप-मनुवदति ॥ **किंसंज्ञक इति ।** का संज्ञा यस्य सः किंसंज्ञकः । इत्याकारं ज्ञानमिति शेषः । तस्यान्तर्भावमाह ॥ **स इति ।** वृक्षत्वादिसाधारणधर्मदर्शने वटादिसंज्ञकत्वादिकोटिस्मृतौ निर्णायका-दर्शने विशेषजिज्ञासायां च जायमानमिदं ज्ञानं संशयरूपमेव । तथा संशयग्रहणेनैव तस्यापि गृहीतत्वान्न पृथग्व्यावर्त्यत्वेन प्रदर्शनीयमिति भावः । तर्हि स्थाणुपुरुषादिसंशयवत्कोटिनिर्देशः स्यादित्यत उक्तं कोटीनामिति । संशयोऽपि द्विविधः । निर्दिष्टकोटिकोऽनिर्दिष्टकोटिकश्चेति । तत्रानध्यवसितरूपं ज्ञानमनिर्दिष्टकोटिसंशयरूपमिति भावः । ननु वस्तुगत्या पनसे वटादिव्यावृत्ति-निश्चयेऽपि किंसंज्ञकोऽयमुत्पद्यते । स न तावत्संशयः । इतरकोटिव्यावृत्तिनिश्चयात् । भेदाग्रहस्य च संशयहेतुत्वात् । अतः स एवास्माकमनध्यवसाय इत्यत आह ॥ वटादीति । मानमेव न सम्भवति ।

कुतोऽनध्यवसाय इत्येवार्थः । तर्हि किं तदिति पृच्छति ॥ **किन्त्विति** । उत्तरमाह ॥ **संज्ञाविषयमिति** । संज्ञाविशेषविषयमित्यर्थः । वटादिव्यावृत्तिदर्शनानन्तरमयं वृक्षः किंसंज्ञक इति सामान्यनिश्चयस्य विशेषजिज्ञासाजनकत्वस्य सत्त्वादिति भावः । स्वप्नेऽपि गजतुरगादिज्ञानस्य प्रमाणत्वेन सङ्ग्राह्यतया न व्यावर्त्यत्वमित्याशयेनाह ॥ **स्वप्नेऽपीति** । स्वप्नावस्थायामपीत्यर्थः । ननु कथं यथार्थत्वं स्वाप्नगजादीनां सत्यत्वानुपपत्तेः । सत्यत्वे तेषां नित्यत्वमनित्यत्वं वा वक्तव्यम् । न च तत्सम्भवति । उभयपक्षेऽपि पूर्वोत्तरकाले दर्शनप्रसङ्गात् । न च दृश्यतेऽतस्तेऽसत्या एव । तथा च तद्दर्शनमयथार्थमेवाङ्गीकार्यम् । न च प्रतीतकाल एव सृष्टिनिरोधावतो न दोष इति वाच्यम् । उपादानाद्यभावेन सृष्टेरयोगात् । प्रागुत्तरकालं मृत्पिण्डकपालादिदर्शनप्रसङ्गाच्चेत्यत आह ॥ **मानसेति** । मानसवासनेत्युपादानकीर्तनम् । वासनायाश्चाप्रत्यक्षत्वेनोपादानाद्यदर्शनमुपपन्नमिति भावः । न चैवं वासनोपादानकगजादीनामप्रत्यक्षतापत्तिः । अतीन्द्रियद्व्यणुकोपादानकस्यापि त्र्यणुकस्य प्रत्यक्षत्ववदुपपत्तेः । स्वाप्नस्वशिरश्छेदादीनामस्मिन् जन्मन्यननुभूतत्वेन वासनाऽसम्भवादुपादानाभावेनासत्त्वापत्तिरित्यत उक्तं मानसेति । मनसोऽनादित्वेन पूर्वजन्मानुभूतं तद्वासनाया मनोगताया अत्रोपादानत्वसम्भवान्नासत्त्वमिति भावः । वासनाया आत्मधर्मत्वं वदन्तोऽपि निरस्ता इति द्रष्टव्यम् । वासनाया जडत्वेन संस्कारत्वेन वा वेगादिवदनौचित्यात् । अत्रोपादानकीर्तनमुपलक्षणम् । ईश्वरः कर्ताऽदृष्टादिकं निमित्तमिति च द्रष्टव्यम् । प्रमाणन्तु सर्वत्र सन्ध्ये सृष्टिराह हीत्यादिनोक्तं द्रष्टव्यम् । नन्वेवं गजादिस्वरूपमात्रज्ञानस्य बाधाभावेन यथार्थत्वेऽपि तेषु गजादिषु यद्वहिष्ठत्वज्ञानं तदयथार्थमेवाङ्गीकार्यम् । स्वाप्न एवायं मया दृष्टो गजादिर्न बाह्य इति बाधदर्शनात् । न च बाह्यताया अपि वासनादिकं कारणं सम्भवतीति सत्यत्वोपपत्त्या तज्ज्ञानमपि यथार्थमेव भविष्यतीति वाच्यम् । न ह्युपादानादिसम्भवमात्रेण सत्यत्वमाचक्ष्महे । किन्तु बाधाभावेन सामग्र्यभावेन सत्त्वं ब्रुवाणं प्रति तदसिद्धिरावेदिता । न चैवं प्रकृते बाह्यताया उक्तरीत्या बाध्यत्वात् । तथा च स्वाप्नं बाह्यताज्ञानमयथार्थमुक्तातिरिक्तव्यावृत्त्यन्तर्भविष्यतीत्यत आह ॥ **तेष्विति** । तथा च विपर्ययग्रहणेन गृहीतत्वात्तस्यापि न पृथग्व्यावर्त्यत्वमिति भावः । इदमुपलक्षणम् । कदाचिद्भवान्तरेऽप्यप्रतिपन्नशशत्वविषाणित्वसामानाधिकरण्यज्ञानमपि विपर्यय इति ग्राह्यम् । तस्याप्युपादानाभावेनासत्त्वात् । न च तत्रापि शब्दाभासादिना भ्रान्त्या संस्कारोत्पत्तिः । सर्वत्रासति शाब्दभ्रमनिमये मानाभावात् । नापि सर्वथाप्रतिपन्नं स्वप्ने न पश्यतीति नियन्तुं शक्यते । तत्रापि विभागतः शशत्वादि प्रतीतमिति चेत् । तथाऽपि परस्परसामानाधिकरण्यस्य स्वप्ने प्रतीयमानस्य पूर्वं कदाऽप्यप्रतीतेः । बाह्ये बाध्यत्वाच्च तस्य । उक्तं च भगवत्पादैः ।

कदाचिद्दर्शनायोग्यं यत्तत्रापि विभागतः ।
दृष्टं समानाधिकरणं दृश्यतेऽत्र स च भ्रम इति ।

नन्वथापि सम्भावनारूपमयथार्थमानान्तरमस्तीति शङ्कानिरासायोहापरनामकमित्युक्तम् । अनध्यवसायसमुच्चयार्थमपिशब्दः । सम्भावनाज्ञानमपि संशय एवेत्यन्वयः । संशयत्वेन प्रसिद्धसंशयवदुभयकोट्योः साम्येनोल्लेखः स्यादित्यत उक्तमन्यतरकोटिप्रधान इति । तथा चानिर्दिष्टकोटिकोऽपि संशयो द्वेधा । समानानेककोटिकोऽन्यतरकोटिप्रधानश्चेति । तत्र सम्भावनारूपं ज्ञानमन्यतरकोटिप्रधानसंशयरूपमेवेत्यर्थः । अन्यतरकोटिप्राधान्ये निमित्तमुक्तमन्यतरकोटिप्रापकेति ।

**अभि.—** अनध्यवसायशब्दो ज्ञाने जिज्ञासायां च वर्तते । तत्राद्यस्य संशयेऽन्तर्भावः । द्वितीयं तु ज्ञानमेव न भवतीति वक्तुमनध्यवसायाकारमाह ।। **किंसंज्ञक इति ।** तत्राद्यस्य संशयानन्तर्भावहेतोः सर्वथा निर्दिष्टकोटिकत्वस्यासिद्धिरेव विशिष्यनिर्दिष्टकोटिकत्वस्यत्वन्यथासिद्धिरिति भावेनानन्तर्भावमाह ।। **स तु कोटीनामिति ।। अनिर्दिष्टकोटिक इति ।** विशिष्यानिर्दिष्टकोटिक इत्यर्थः । एतेन कोटिनां बाहुल्येऽनिर्देशोऽनुपपन्नः । अनिर्देशे चाकोटिकत्वप्राप्त्या कोटिनां बाहुल्याभिधानमयुक्तमिति परास्तम् । त्रिविधः स्वप्नः । अयथार्थज्ञानात्मकः केवलज्ञानात्मकः केवलार्थात्मकश्चेति । तत्राद्यः सर्वानुभवसिद्धः । द्वितीयस्त्वर्जुनादीनां स चागमेन सिद्धः । ननु न ज्ञानं स्वप्नो बाह्यार्थविषयत्वादिति चेत् । निरिन्द्रियप्रदेशावस्थितमनोजन्यत्वेन प्रकारान्तरानिरूपणात् । इदमेव हि ज्ञानस्य स्वप्नत्वम् । यन्निरिन्द्रिप्रदेशावस्थितमनोजन्यत्वं प्रकारान्तरानिरूपणात् । तदर्थस्तु कैलासादिर्न स्वप्नः । बाह्यत्वेन वासनोपादानकत्वाभावात् । इदमेव ह्यर्थस्य स्वप्नत्वं यद्वासनाविशिष्टोपादनकत्वम् । न चात्र तदस्ति । उक्तं च बृहदारण्यके । प्राणेन रक्षन्नवरं कुलायं बहिः कुलायादमृतश्चरित्वेति । उक्तं च बृहद्भाष्ये ।

अंशेन जीवमादाय क्वचिद्देशो बहिर्न नयत् ।
स्वप्नेषु फाल्गुनं यद्वत्कृष्णकैलासमानयदिति ।

तात्पर्यनिर्णये चोक्तम् । जयद्रथस्यैव वधं निशायां स्वप्ने नयन्तं गिरिशान्तकं हरिरिति । तृतीयस्तु परमेश्वरादीनाम् । तथा हि । स्वाप्नपदार्थस्रष्टा परमात्मा तावत्स्वप्नपदार्थान्पश्यति । योगिनोऽपि योगप्रभावात्पश्यन्तीत्यविवादम् । अन्यथा सार्वज्ञभङ्गप्रसङ्गात् । तथा च तेषां ज्ञानं न स्वप्नः । निरिन्द्रियप्रदेशावस्थितमनोजन्यत्वात् । अर्थस्तु स्वप्न एव । वासनाविशेषोपादानकत्वादिति । तत्र ज्ञानात्मकस्य कस्यचित्स्वप्नस्य प्रमायां कस्यचिद्भ्रमेऽन्तर्भाव इत्यभिप्रेत्य प्रमाऽन्तर्भावं तावदाह ।।

**स्वप्नेऽपीति ।** चेच्छब्दो यदर्थे । यद्गजादिदर्शनं तद्यथार्थमेव । तेषु यद्बाह्यत्वज्ञानमिति । ननु गजादीनामिव वासनामयस्य बाह्यत्वस्य तत्रोत्पत्तिसम्भवेन बाह्यत्वज्ञानं विपर्यय इत्युक्तमिति चेत् । उच्यते । न वयमुपादानसम्भवमात्रेण स्वप्नार्थस्य सत्यतामाचक्ष्महे । किन्तु बाधाभावेन । तथा च बाधसद्भावेन बाह्यत्वस्यासत्त्वात्तज्ज्ञानं भ्रमः ।

**आद.**— ॥ **वटादिव्यावृत्तिमिति ।** स्वपरिचितयावन्नामवाच्यत्वाभावनिश्चयवत इत्यर्थः । संशयकोटीनां बुद्ध्यनारूढत्वात्साधारणधर्माभावात् संशयस्य तदानीमसम्भवादिति भावः ॥ **तज्ज्ञान-मेवेति ।** तद्वाक्याभिलाप्यम् ॥ **जिज्ञासेति ।** वस्तुत्वात्सामान्यतो वाच्यत्वे ज्ञाते सामान्यधर्म-प्रकारकज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वाज्जिज्ञासा जायत इति भावः ।

**श्रीनि.**— ॥ **अनिर्दिष्टेति ।** विशेष्यानुक्तेरित्यर्थः । **मानसवासनेति ।** मनोविकारसंस्कारेत्यर्थः ॥ **बाह्यालीति ।** बाह्यवीथिकाप्रदेश इत्यर्थः ॥ **अन्यतरकोटिप्रापकेति ।** अन्यतरकोटिज्ञापक-बाहुल्यकारक इत्यर्थः ॥ **अन्यतरकोटिप्रधान इति ।** उत्कटैककोटिक इत्यर्थः ।

**वि.**— अनध्यवसायस्यायथार्थज्ञानान्तरत्वनिषेधाय तत्स्वरूपं निरूपयति ॥ **किंसंज्ञकोऽयं वृक्ष इतीति ।** ज्ञानमिति शेषः । तस्यायथार्थज्ञानान्तरत्वं प्रतिषेधति ॥ **स त्विति ।** स्वप्नादस्य विशेष-ज्ञापनाय तुशब्दः । अनिर्दिष्टकोटिकोऽसाधारणशब्देनानुक्तिकोटिकः संशय एव न तु ततोऽतिरिक्ता-यथार्थज्ञानान्तरमित्यर्थः । वाचकशब्दानुक्तबहुकोटिकानवधाणज्ञानत्वादस्येति भावः । ननु घटादि-व्यावृत्तिं पश्यतस्तत्संशयानुदयात्तस्य च किंसंज्ञकोऽयं वृक्ष इति जायमाना वृत्तिः कथं संशयः स्यादित्यत आह ॥ **वटादिव्यावृत्तिं पश्यतोऽपीति ।** किंसंज्ञकोऽयं वृक्ष इत्याकारं वृत्तिरूपं यदुत्पद्यते तज्ज्ञानमेव न भवति । यथार्थज्ञानान्तरं सुतरां न भवतीत्यर्थः । तर्हि तत्किमिति पृच्छति ॥ **किन्त्विति ।** उत्तरमाह ॥ **संज्ञाविषयं जिज्ञासामात्रमिति ।** वाचकशब्दविषया जिज्ञासैव न ततोऽतिरिक्तं ज्ञानमित्यर्थः । अयथार्थज्ञानान्तरं स्वप्न इति वदता परेणायथार्थज्ञानान्तरमेवोक्तम् । किं स्वप्ने प्रतीयमानगजादेर्दर्शनमुत तेषु यद्बाह्यत्वज्ञानं तदिति विकल्पं मनसि निधायाद्यपक्षमपाकरोति ॥ **स्वप्नेऽपीति ।** चेच्छब्दो यद्यर्थे । अनध्यवसायवदयथार्थज्ञानान्तरत्वेनोक्ते स्वप्नेऽपि स्वप्नरूपज्ञानेऽपि गजादिदर्शनं चेद्यदि गजतुरगवनितादिपदार्थदर्शनं तर्हि यथार्थमेव नायथार्थम् । अपदार्थज्ञानान्तरं सुतरां न भवतीत्यर्थः । बाधकाभावादिति शेषः । इदमत्राकूतम् । अयथार्थज्ञानान्तरं स्वप्नं वदन् प्रष्टव्यः। अयं गज इति स्वप्नः किमगजे गजता चात्मोल्लेखीत्ययथार्थः । किंवा गजे गजत्व-संसर्गोल्लेखीत्ययथार्थः । यद्वा गज एवासन्निकृष्टे सन्निकृष्टत्वोल्लेखीत्ययथार्थः । पक्षद्वयेऽपि

शुक्त्यादाविदं रजतमिति ज्ञानान्तरमिदमिति दृष्टमिदं रजतं नास्त्येव किन्त्विदम्पदार्थः शुक्तिरेवास्तीतिवदयं गज इति स्वप्नदृष्टो गजो नास्त्येव किन्त्विदम्पदार्थोऽत्र एवास्तीति बाधकः स्यात् । न चैवं कस्यापि बाधोऽस्ति । न च निरधिष्ठानः कश्चिद्भ्रमोऽपि । अनुभवविरोधात् । तथा च बाधकाभावादयं गज इति स्वप्नो न भ्रमः । अन्यथा जागरेऽप्ययं गज इति प्रत्ययः सर्वोऽपि भ्रम इत्यापातात् । तृतीयेऽपि नायं पर्वतः सन्निकृष्टः किं नाम विप्रकृष्ट एवेति बाधकान्नायं गजः सन्निकृष्टः किं नाम दूरस्थ एवेति बाधो भवेत् । न च तथा कस्यचिद्बाधो भवति । तेन यत्र राजमन्दिरादौ गजः स्वप्ने प्रतीयते तत्रैव राजमन्दिरादौ नास्त्येव गज इति बाधोऽनुभूयत इति निरस्तम् । अधिष्ठानविषयकस्यात्र गजो नास्तीति प्रत्ययस्यात्रास्त्ययं गज इति स्वप्नबाधकाभावात् । राजमन्दिरमेवास्त्वधिष्ठानमितिवन्न स्वप्न एव गजभिन्नतया गजत्वरहितत्वेन च प्रतीयमानस्य राजमन्दिरादेर्गजतादात्म्यागजत्वसंसार्गाद्योपाधिमत्त्वायोगात् । एतेन गजसंसर्गस्तत्राध्यस्तो न गज इत्यपि निरस्तम् । तावता स्वप्नदृष्टराजादिपदार्थानामारोपितत्वासिद्धेः । किञ्च जागरे दूरस्थस्यैव गजस्य निकट एवायं गजोऽस्तीति भ्रमः स्यान्नास्त्ययं गजः किन्तु दूरेऽस्तीति बाधः स्यात् । न चैवमस्ति कस्यचिद्बाधः । वस्तुतस्तु स्वप्नावस्थायां चक्षुरादिबाह्येन्द्रियाणामुपरतत्वेनास्त्ययं गज इति स्वप्नस्य चाक्षुषत्वाद्यसम्भवाद्रूपादिमत्यर्थे साक्षिणः स्वातन्त्र्याभावेनास्य साक्षिरूपात्वासम्भवात् । लिङ्गशब्दानुसन्धानव्यतिरेकेणापि जायमानस्यास्त्ययं गज इति स्वप्नस्य लैङ्गित्वाद्यसम्भवाच्च मानसत्वमेवाभ्युपेयम् । यथा च मनसो बहिरस्वातन्त्र्यात्प्रमाणान्तरप्रवृत्त्यभावेऽपि मनसा जायमानस्यात्रायं गज इति स्वप्नस्य बाह्यराजमन्दिरगजाद्यर्थगोचरत्वस्यैवाभावात् । विप्रकृष्टस्यैव बाह्यराजमन्दिरादिना मनसः सन्निकर्षभावेनाधिष्ठानेन्द्रियसन्निकर्षव्यतिरेकेण भ्रमासम्भवाच्च । न ह्यराजमन्दिरादेरधिष्ठानत्वम् । न वा बाह्यराजमन्दिरादौ स्वप्नदृष्टगजाद्यभावाज्ज्ञानस्य बाधत्वमिति यत्किञ्चिदेतत् । एतेनात्रैव स्वाप्नगजाद्यारोपाधिष्ठानमिति मायावादिनां जल्पनमप्यपास्तम् । स्वप्नस्य गजतादात्म्यगजत्वसंसर्गारोपत्वे वा गजसंसर्गारोपत्वे वा गजसम्बन्धारोपत्वे वा स्वप्ने इह गज इति वा मयि गज इति वाऽऽत्मनः प्रतीत्यापातात् । प्रत्युत नाहं गजो मयि वा नास्ति गज इत्येव प्रतीतेश्च । न हि गजादिभिन्नतया गजाद्यनाधारतया च प्रतीयमान आत्मा गजतुरगादितादात्म्यारोपाधिष्ठानं वा गजत्वसंसर्गारोपाधिष्ठानं वा गजतुरगादिसंसर्गारोपाधिष्ठानं चेति सम्भवति । अतिप्रसङ्गात् । तस्माद्बाधकशून्यत्वात्स्वप्ने गजादिदर्शनं यथार्थमेवेति दर्शनं चानुभवो विवक्षितः । तेन स्वप्नः स्मृतिरूप एवेति मतं निरस्तं वेदितव्यम् । तदुक्तं सुधायाम् । दर्शनं चानुभावो विवक्षितः । एतेन स्मरणमेवैतदिति मतं निरस्तं भवति । स्मरणं खल्वस्य तच्चिन्हस्य तदित्युल्लेखस्य सद्भावाद्वा कल्प्यते । असन्निहित-

गोचरत्वाद्वासंस्कारप्रभवत्वाद्वा । नाद्यः । इदमित्युल्लेखेन तदभावात् । अत एव स्मृतिविपर्यासोऽयमिति चेन्न । स्मृतित्वस्यैवासिद्धेः । न द्वितीयः । विषयसान्निध्यस्योपपादितत्वात् । न तृतीयः। पदार्थजन्मनि संस्कारस्यापक्षीणत्वेनासिद्धेः । तस्माद्यथा मनोरथध्याने वा संस्कारयोनीनर्थान्मनसाऽनुभवत्येवं स्वप्नेपीति किमनुपपन्नम् । इयांस्तु विशेषः । मनोरथाद्यैः प्रयत्नपूर्विका पदार्थसृष्टिः स्वप्ने पुनरीश्वरेच्छाधीनैवेति । ननु स्वप्ने गजादिदर्शनामिति यदुक्तं तद्युक्तम् । तद्विषयाणां करितुरगादीनामसत्त्वात् । तथा हि । न तावदिमेऽनादिनित्याः । स्वप्नावस्थातः प्रागूर्ध्वं चोपलम्भप्रसङ्गात् । न हि चक्षुरादियोग्याः करितुरगवनितादयो विद्यमाना अप्युपलब्धिसाधनेषु चक्षुरदिष्वनुपरतेषु नोपलभ्यन्ते । उपलभ्यन्ते चोपरतेषु तेष्विति सम्भवति । न चान्यत्र गता अन्यैरप्यनुपलम्भान्मध्यमपरिमाणाश्चैते दृश्यन्ते । न च तथाविधमनादिनित्यं किमपि दृष्टम् । नाप्युत्पत्तिनाशवन्तः । तथात्वे प्रागूर्ध्वमुपलम्भप्रसङ्गात् । न च तेषां विद्युदादिवत्तदैवात्पत्तिर्नाशश्चेति। इत्थम्भावे प्रमाणाभावात् । स्वप्नदृष्टघटादेस्तदैवोत्पत्तिनाशवत्त्वे प्राङ्मृदादीनामूर्ध्वं कपालादीनां चोपलम्भापत्तेश्च । तस्मात्स्वप्नप्रतीतकरितुरगराजमन्दिरघटादीनामनादित्वाद्यसम्भवेनासत्यत्वात्तद्दर्शनमयथार्थमित्यत आह ॥ **मानसवासनाजन्यत्वाद्गजादीनामिति ।** स्वप्नदृष्टानामिति शेषः । स्वप्नदृष्टकरितुरगादीनां मनोविकारसंस्कारोत्पादकत्वादित्यर्थः । आरोपितमत्यन्तासदित्युक्तत्वादारोपितस्योत्पत्त्ययोगादुत्पत्तिमतां स्वप्नपदार्थानां सत्यत्वमेवेति न तज्ज्ञानमयथार्थमिति भावः । यद्यपि जन्यत्वमेवानारोपितत्वसाधनायालं तथाऽपि जन्यत्वे उपादानत्वं वाच्यम् । तच्च स्वाप्नकरितुरगघटादीनां नास्तीति चोद्यपरिहारायोपादानोक्तिः । स्वाप्नघटादीनामुत्पत्तिविनाशवत्त्वे स्वप्नावस्थातः प्रागूर्ध्वं च तदुपादानस्य कपालादेरुपलम्भप्रसङ्ग इति शङ्कावारणाय त्र्यणुकोपादानस्य द्व्यणुकस्येवास्य दर्शनं युक्तमिति ज्ञापयितुमतीन्द्रियसंस्कारस्योपादनत्वकीर्तनम् । गुणत्वात्संस्कारस्योपादानमिति । न चासौ हेतुरसिद्धः । न तत्र रथा न रथयोगाः पन्थानो भवन्ति । अथ रथान्रथयोगान्पथश्च सृजते । य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्ममाण इत्यादिश्रुतिभिः सन्ध्ये सृष्टिराह हीत्यादिसूत्रेण च

मनोगतांश्च संस्कारान्स्वेच्छया परमेश्वरः ।
प्रदर्शयति जीवाय स स्वप्न इति गीयत ॥

इति स्मृत्या चोक्तश्रुतिसूत्रस्मृत्यनुसारीत्युक्त्या च तत्सिद्धेः । अत एव स्वाप्नकरितुरगवनितादीनां प्रागूर्ध्वमुपलम्भप्रसङ्ग इति चोद्यं निरस्तम् । उदाहृतश्रुतिभिस्तदनुसारियुक्त्या च विद्युदादि-

वत्तात्कालिकत्वाभ्युपगमात् । एतेनासन्निकृष्टकरितुरगवनितादीनामनुभवः कथं मनसा स्याद्यथार्थश्च कथं भवेदित्यपि चोद्यं निरस्तम् । स्वप्नोऽनुभव इत्यङ्गीकृत्यापि वा स करितुरगवनिताराजमन्दिरगोचर एवेति मते उक्तदोषषसद्भावेऽपि संस्कारोपादानकगजादिस्वप्नपदार्थानामन्तःपदार्थत्वेन मनः-सन्निकृष्टत्वसम्भवादत एव विषयसन्निकृष्टमनःप्रभवत्वात्स्वप्नस्य प्रमितत्वोपपत्तेश्च । तदुक्तं सुधायाम् । अपरे तु भवत्येवायमनुभवः किन्तु जागरानुभूतस्मर्तव्यार्थ एवेति मन्यन्ते । तदप्यसत् । तथा हि । किमनुभवो यथार्थोऽयथार्थो वा । नाद्यः । बाह्यार्थानां देशकालविप्रकृष्टत्वेन तदनुपपत्तेः । द्वितीये वक्तव्यम् । किमगजे गजत्वोल्लाखीत्ययथार्थः । किंवा गज एवासन्निकृष्टे सन्निकृष्टत्वो-ल्लेखीत्ययथार्थः । आद्ये नायं गजः किन्तु गवय एवेति बाधोदयः स्यात् । द्वितीये नायं सन्निकृष्टः किं नाम विप्रकृष्ट इति बाधो भवेत् । न चैतदस्ति । तस्मात्संस्कारप्रभवसन्निकृष्टसत्यार्थप्रमिति-रेवायमिति । द्वितीयपक्षं निराकरोति ॥ **तेषु यद्बाह्यत्वज्ञानमिति** । तेषु मानसवासनोपादानकेषु करितुरगराजमन्दिरघटपटादिषु यद्बाह्यत्वज्ञानं तर्हि देशस्थत्वस्य बाह्योपादाननिमित्तत्वादेश्च ज्ञानं यत्स विपर्यय एव न तदतिरिक्तायथार्थज्ञानमित्यर्थः । शैत्यं हि यत्सा प्रकृतिर्जलस्येतिवत्स इति पुल्लिङ्गा-निर्देशो युक्तः । एतेन स्वप्ने गजादिदर्शनं चेद्भागवतादावविद्यमानो ह्यवभाति हि द्वयोर्ध्यातुर्धिया-स्वप्नमनोरथो यथेत्यादेर्वचनस्य का गतिरिति चोद्यं निरस्तम् । तस्य स्वाप्नगजादिषु यद्बाह्यत्वज्ञानं तद्विषयत्वात् । बाह्यत्वस्यापि संस्कारोऽस्त्येवेति सोपादानत्वसम्भवात्कथं प्रतीतिर्भ्रान्तिरित्युच्यते । अन्यथा करितुतगाद्यर्थप्रतीतिरपि भ्रान्तिः स्यात् । अविशेषादिति चेन्मैवम् । न हि वयं कारण-सामग्रीसम्पादनसम्भवमात्रेणार्थानां सत्यतां ब्रूमः । किं नाम बाधकाभावेनैवेति ब्रूमः । अयं गजोऽयं घट इत्यादिस्वप्नानुभूतगजद्यर्थानां बाधकाभावश्चोपपादित एव । किं नाम सामग्र्यभावेनार्थानामसत्त्वं ब्रुवाणं प्रति तु मानसवासनाजन्यत्वादित्यनेन तदसिद्धिरावेदिता । तदुक्तं सुधायाम् । न हि वयं कारणसम्पादनसम्भवमात्रेणार्थानां सत्यतामातिष्ठामहे । किं नाम बाधाभावेनैव वक्ष्यामः । सामग्र्य-भावेनासत्यं ब्रुवाणं प्रति तु तदसिद्धिरावेदितेति । अस्ति च स्वप्नदृष्टगजाद्यर्थानां बाह्यत्वप्रतीतेर्बाधः । स्वप्नोत्थितस्य स्वप्ने हि मया दृष्टो राजमन्दिरगजतुरगवनितादिप्रपञ्चो बहिर्देशस्थो न भवत्येव । स्वप्ने ममेयं माताऽयं पिता ममायमश्व इति मात्राद्यात्मनाऽनुभूता ये पदार्थास्ते न मम मात्रादयो भवन्ति । स्वप्ने तन्त्वादिजन्यतया कुविन्दादिजन्यतया घटादयोऽर्था दृष्टास्ते तन्त्वादिजन्या न भवन्त्येवेति बाधोदयात् । तस्मादयं गज एव न स्वप्न इत्यादिस्वप्नस्य नायं गजः किन्त्वश्व एवेत्यादिस्वप्नदृष्टस्य गजतुरगाद्यर्थस्य सत्त्वसिद्धेः । प्रमितिजन्यत्वे निर्वाहाय संस्कारोपादानकेऽन्तस्थे गजतुरगराज-मन्दिरादौ प्रतीतिबाह्यत्वस्य बाधितत्वात्तस्य संस्कारोपादानकत्वं नाङ्गीकार्यमिति तत्प्रतीतिविपर्यय

एवेत्यनुसन्धेयम् । सम्भावनारूपमयथार्थज्ञानान्तरमस्तीत्याशङ्क्य तस्यापि संशयेऽन्तर्भावमाह ॥ **बाह्यालीप्रदेश इति** । बाह्यवीथीप्रदेश इत्यर्थः । ऊहा नामायथार्थज्ञानान्तरमिति संशयवारणायाह ॥ **ऊहापरनामकमिति** । अन्यतरप्रापकप्राचुर्यनिमित्तोऽन्यतरकोटिज्ञापकबाहुल्यज्ञानकारणक इत्यर्थः । अन्यतरकोटिप्रधानोऽन्यतरकोट्युक्त इत्यर्थः ।

**(१४) प्र.प.— तर्कोऽनुमानमेवेति वक्ष्यामः । स्मृतावतिव्यापकं प्रमाणलक्षणमिति चेन्न । तस्या अपि प्रमाणत्वेन लोकवेदयोः संव्यवहारात् ।**

## मीमांसकमतनिरासः

**अनुभूतिः प्रमाणम् । स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिरति प्राभाकराणां लक्षणम् । संशयविपर्ययव्यापकत्वात् स्मृतौ वेदादिषु च यथार्थज्ञानसाधनेष्वव्यापकत्वाच्चायुक्तम् । ज्ञातता-प्राकट्यापरपर्यायवाच्यस्य प्रमेयाश्रितस्य प्रकाशविशेषस्य साधनं क्रियाज्ञानं प्रमाणमिति भाट्टानां लक्षणमप्ययुक्तम् । ज्ञानव्यतिरिक्तायां ज्ञाततायां प्रमाणाभावेनासम्भावित्वात् । अतीतादि-विषयज्ञानानामाश्रयाभावेन तज्जनकत्वायोगाच्च । वेदादिष्वव्याप्तेश्च । अनधिगततथाभूतार्थज्ञानं प्रमाणमिति तेषामेव लक्षणान्तरमप्ययुक्तम् । स्मृतौ वेदादिषु चाव्याप्तेः ।**

**जना.—** ॥ **तस्या अपीति** । गेहे पूर्वं घटोऽभूदित्यत्र किं प्रमाणमिति प्रश्ने मम स्मृतिरेव प्रमाणमिति लोके स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयमिति वेदे च प्रमाणत्वेन संव्यवहारात्स्मृतिर्न व्यावर्तनीयेत्यर्थः । न सर्वलोकसिद्धस्य लक्षणेन निवर्तनमिति नैयायिकैरप्युक्तेरिति भावः ॥ **संशय-विपर्ययव्यापकत्वादिति** । संशयविपर्यययोरतिव्यापकत्वादित्यर्थः । यद्यपि प्राभाकरमते संशय-विपर्यययोर्ग्रहणस्मरणात्मकज्ञानद्वयात्मकत्वेन विशिष्टज्ञानात्मकत्वाभावादतिव्याप्तिकथनमसङ्गतम् । तथाऽप्ययथार्थं ज्ञानमेव नास्तीति प्राभाकरादयः । तन्न । अनुभवसिद्धत्वादित्यादिपूर्वग्रन्थे संशय-विपर्ययरूपविशिष्टज्ञानस्य समर्थितत्वादिदमतिव्याप्तिकथनमिति द्रष्टव्यम् ॥ **स्मृतौ वेदादिषु चेति** । स्मृतिज्ञानप्रामाण्यं तस्या अपि प्रमाणत्वेनेति पूर्वग्रन्थे समर्थितत्वादिति भावः । स्मृतौ स्मृति-व्यतिरिक्तत्वाभावेन वेदादिषु ज्ञानत्वरूपविशेष्यस्याभावेनेत्यर्थः ॥ **ज्ञाततेति** । यथार्थज्ञाने दीपादि-प्रकाशसाधनत्वाभावेनासम्भववारणाय विशेषपदम् । ननु भट्टमते ज्ञातता प्रकाशविशेष इति पर्यायः । तथा च ज्ञाततासाधनमिति वा प्रकाशविशेषसाधनमिति वा लक्षणेनालम् । किमितरपदैरिति चेदुच्यते । ननु ज्ञाततासाधनत्वं प्रमाणलक्षणमित्युक्तं तदयुक्तम् । ज्ञाततायामेव प्रमाणाभावादित्या-शङ्क्य प्रत्यक्षं प्रमाणयति ॥ **ज्ञातताप्राकट्येति** । तथा च ज्ञातो घटः प्रकटो घट इति प्रत्यक्षं

ज्ञाततायां मानमित्यर्थः । किञ्च ज्ञानं स्वकर्माणि किञ्चित्करोति क्रियात्वाद्गमनक्रियावदित्यनुमानमपि तत्र मानमिति मनसि निधाय तत्र साध्यमाह ॥ **प्रमेयाश्रितस्येति** । हेतु दर्शयति ॥ **क्रियेति** । ज्ञाततायां न प्रत्यक्षं प्रमाणमिति दूषयति ॥ **ज्ञाततायामिति** । तर्हि ज्ञातो घट इत्यादिव्यवहारस्य का गतिरित्यत आह ॥ **ज्ञानव्यतिरिक्तायामिति** । तथा च ज्ञातो घट इत्यादिव्यवहारस्य ज्ञानविषयो घट इत्येवार्थो न ज्ञाततावििशिष्ट इतीति भावः । तर्ह्यनुमानं मानं भवत्वित्याशङ्क्यांशतो बाधेन दूषयति ॥ **अतीतादीति ॥ आश्रयाभावेनेति** । ज्ञातताया इति शेषः । अतीतादिविषयज्ञानानां तज्जनकत्वा-योगाच्चेत्यन्वयः । असति धर्मिणि धर्मजननायोगादिति भावः ॥ **तथाभूतेति** । ज्ञानं यथाऽवगाहते तथा स्थितेत्यर्थः ॥ **स्मृतौ वेदादिषु चेति** । स्मृतावनधिगतत्वांशाभावेन वेदादौ च ज्ञानत्वा-भावेनेत्यर्थः ।

**राघ.**— व्याप्यारोपेण व्यापकारोपस्तर्कः । कुतो न व्यावर्त्य इत्यत आह ॥ **तर्क इति** । वक्ष्या-मोऽनुमानपरिच्छेद इति भावः । विशिष्टस्यापि प्रमाणलक्षणस्यातिव्याप्तिमाशङ्क्य निराह ॥ **स्मृताविति** । लोकवेदयोर्ब्रह्मतर्कादिस्मृतौ । तथा स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयमित्यादिवेदे चेत्यर्थः । इदानीं परोक्तप्रमाणलक्षणान्यनूद्य निराह ॥ **अनुभूतिरिति** । लक्षणमयुक्तमित्यन्वयः । क्वचिज्ज्ञाततासाधनमिति क्वचित्प्राकट्यसाधनमित्यादिव्यवहारादनेकलक्षणत्वभ्रमनिरासायोक्तं ज्ञातता-प्राकट्यापरपर्यायवाच्यस्येति । ज्ञाततेति प्राकट्येत्यपराभ्यां पर्यायेण क्रमेण वाच्यस्येत्यर्थः । भ्रम-विषयगतज्ञाततव्यावृत्तये प्रकाशविशेषस्येति विशेषग्रहणम् । क्रियाज्ञानम् । ज्ञा अवबोधन इति शुद्ध-धात्वर्थः । क्रिया तदात्मकं ज्ञानमित्यर्थः । प्रकाशविशेषसाधनमित्युक्त्या ज्ञानपदं करणसाधनमिति भ्रमनिरासाय क्रियेति विशेषणम् ॥ **ज्ञानव्यतिरिक्तेति** । ज्ञानविषयत्वव्यतिरिक्तेत्यर्थः । ज्ञातो घट इत्यादिव्यवहारस्य ज्ञानविषयत्वेनैवोपपत्तेरिति भावः । तद्रीत्याऽप्यव्याप्तिदोष इति भावेनाह ॥ **अतीतादीति ॥ तज्जनकत्वेति** । ज्ञाततजनकत्वायोगच्चेत्यर्थः । तत्र हेतुराश्रयाभावेनेति । प्रमेया-श्रितस्येति त्वयोक्तेरिति भावः । अतीतादिज्ञानेष्विति शेषः । अव्याप्तेश्चेति वक्ष्यमाणेनान्वयः । वेदादिषु चेत्यत्रापि चशब्दान्वयः । आदिपदेन चक्षुरादिग्रहः । तत्र क्रियाज्ञानत्वाभावादिति भावः ॥ **अनधिगतेति** । अज्ञातयथावस्थितार्थविषयकं ज्ञानमित्यर्थः । ज्ञातार्थज्ञाने संशयादौ चानतिव्याप्तये क्रमादनधिगतेति तथाभूतर्थेति च विशेषणद्वयम् ॥ **स्मृतावित्यादि** । स्मृतेरधिगतार्थविषयकत्वात् । वेदादिषु ज्ञानत्वाभावादिति भावः ।

**विज.**— ॥ **तर्कोऽनुमानमेवेति** । तथा च यथार्थत्वे सङ्ग्राह्यमेव । अयथार्थत्वे भ्रमानुमिति-वद्विषयत्वेन सङ्ग्रह एवेति भावः । स्मृतावित्युपलक्षणम् । स्मृतिसाधने चेत्यपि द्रष्टव्यम् । एवमग्रेऽपि ॥

तस्या अपीति । सङ्ग्राह्यत्वान्नातिव्याप्तिरित्यर्थः । यद्यपि परैस्तत्र व्यवहारो नास्तीत्येवोच्यते । तथाऽपि यथार्थानुभवत्वापेक्षया यथार्थज्ञानस्य प्रमापदप्रवृत्तिनिमित्तत्वे लाघवेन परवचनस्य निरुपपत्तिकत्वादिति भावः । परमतखण्डनं विना न स्वमतसिद्धिरिति तत्खण्डयितुमुपक्रमते । प्राभाकराणामित्य-तदग्रे-तनेनायुक्तमित्यनेन सम्बध्यते । न च प्राभाकरेण तयोरनभ्युपगमान्नातिव्याप्तिः । अनुभवेन प्रवृत्त्य-न्यथाऽनुपपत्त्या चानीयमानयोरनभ्युपगममात्रेणापलपितुमशक्यत्वादिति भावः । यद्वैतदस्वरसादाह ॥ **स्मृताविति ।** तस्यानुपदमेव प्रमाणत्वव्यवस्थापनादिति भावः । यद्वैतदस्वरसादेवाह ॥ **वेदादिष्विति ।** वेदे प्रमाणपदस्य नियमतः प्रयोगाद्वेदस्य प्रधानत्वमपेक्ष्येदं द्रष्टव्यम् । न च प्रमाणपदं प्रमातत्साधन-योर्भिन्नप्रवृत्तिनिमित्तकमेवेति वाच्यम् । एकप्रवृत्तिनिमित्तकत्वे सम्भवति भिन्नप्रवृत्तिनिमित्तकत्व-कल्पनायां गौरवादिति भावः ॥ **प्रकाशविशेषस्येति ।** स्वविषयकविशेषस्येत्यर्थः । क्रियेत्यस्यैव व्याख्यानं ज्ञानमिति । अत्र ज्ञाततासाधनं ज्ञानप्रमाणमित्येव लक्षणम् । इतस्तु तत्परिचायकतयोक्त-मित्यवधेयम् । अत एव तावदेव निष्कृत्य दूषयति ॥ **ज्ञानव्यतिरिक्तायामिति ।** न च ज्ञानस्य घटीयत्वानुपपत्तिरेव घटनिष्ठज्ञातताजनकत्वे मानम् । स्वभावादेव ज्ञानस्य घटीयत्वात् । अन्यथा ज्ञानस्य नियमतो घटनिष्ठज्ञातताजनकत्वमित्यपि न स्यान्नियामकाभावादिति भावः । एतदस्वरसादाह ॥ **अतीतादीति ।** ननु ज्ञातताजननयोग्यत्वमर्थः । तथा चातीतविषयकज्ञानस्याश्रयरूपसहकारि-विरहादजनकत्वेऽपि योग्यत्वसत्त्वादित्यत आह ॥ **वेदादिष्विति ॥ तथाभूतेति ।** ज्ञानप्रकारी-भूतधर्मवदित्यर्थः । तेषामेव भाट्टानामेव ॥ **स्मृताविति ।** यथा चैतत्तथोपपादितमधस्तात् । इदमुप-लक्षणम् । धारावाहिकज्ञाने चेत्यपि द्रष्टव्यम् । यथार्थज्ञानेति तस्यापि प्रमाणपदप्रयोगविषयत्वेन लक्ष्यत्वादिति भावः ।

**वेदे.**— नन्वथापि तर्करूपमयथार्थज्ञानान्तमस्ति व्यावर्त्यमित्यत आह ॥ **तर्क इति ।** तथा च तल्लक्ष्यमेव न व्यावर्त्यमिति भावः । एवमयथार्थज्ञानान्तराभावात्संशयविपर्ययतत्साधनान्येव यथा शब्दार्थग्रहणेन व्यावर्त्यानीत्युक्तम् । इदानीं विशिष्टस्यापि लक्षणस्यातिव्याप्तिमाशङ्क्य निराकरोति ॥ **स्मृताविति ।** सर्वपरीक्षकैरपि स्मृतेरप्रामाण्याङ्गीकारादिति भावः ॥ **लोकवेदयोरिति ।** तस्मिन्नर्थे मत्स्मृतिरेव प्रमाणमिति व्यवहारात् ।

स्मृतिः प्रत्यक्षमैतिह्यमनुमानचतुष्टयम् ।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिरिति

च वेदे व्यवहारात् । तथा चैतद्विरुद्धवादिनो न परीक्षका इति भावः । एवं प्रमाणसामान्यलक्षणं निरूप्य स्वोक्तलक्षणदृढीकरणाय वाद्यन्तरोक्तलक्षणानि निराकुर्वंस्तावत्प्राभाकराणां सामान्यलक्षणं

दूषयितुमनुवदति ॥ **अनुभूतिमिति** । ननु ज्ञानं प्रमाणमित्यनुक्त्वाऽनुभूतिग्रहणं किमर्थमित्यतः स्मृतावतिव्याप्तिपरिहारार्थमिति भावेनानुभूतिस्वरूपमाह ॥ **स्मृतिव्यतिरिक्तमिति** । स्मृतिनिरासाय स्मृतिव्यतिरिक्तमिति । घटादिनिरासाय ज्ञानमिति । लक्षणमयुक्तमित्यन्वयः ॥ **संशयेति** । अयथार्थ-ज्ञानस्य तं प्रति साधितत्वादिति भावः । स्मृतावित्यादिलोके स्मृतिः प्रत्यक्षमैतिह्यमित्यादिवेदे च स्मृतेर्वेदादिकरणप्रामाण्यस्य सिद्धतया तदलक्ष्यत्वस्य वक्तुमशक्यत्वादिति भावः । अनुप्रमाणत्रये वेदस्यैव मुख्यत्वविवक्षया वेदस्य स्वशब्देनोपादानम् । भाट्टानां लक्षणमनूद्य दूषयति ॥ **ज्ञाततेति** । अत्र प्रकाशविशेषस्य साधनं प्रमाणमित्येव लक्षणवाक्यम् । भ्रमेऽतिव्याप्तिपरिहाराय विशेषस्येति । ज्ञाते पुनर्ज्ञातताऽनुदयेन न स्मृतौ प्रसङ्गः । अन्यत्तदुपयुक्तं कथितम् । यदि प्रकाशविशेषो ज्ञानं तदा ज्ञानस्य ज्ञानं साधनमित्यापन्नमित्यत उक्तं ज्ञाततेति । तदीयग्रन्थेषु प्राकट्यसाधनं ज्ञानं प्रमाणमिति व्याहतमतोऽसदनुवादोऽयमिति शङ्कनिरासाय प्राकट्येत्युक्तम् । ज्ञाततेत्यस्यापीदमेव वा प्रयोजनम् । प्रकाशविशेषसद्भावे प्रमाणाभावादसम्भवीदं लक्षणमित्याशङ्कायां तत्र प्रमाणसूचनाय प्रमेयाश्रितस्येति क्रियेति ज्ञानमिति चोक्तम् । क्रियारूपं ज्ञानमित्यर्थः । ज्ञानस्यापि धात्वर्थक्रियारूपत्वात् । अनेन ज्ञानं स्वकर्मणि किञ्चिज्जनयति क्रियात्वाच्छिदिक्रियावदिति परोक्तानुमानं सूचितं भवति । प्रमेया-श्रितस्येत्यनेन ज्ञातो घट इत्यादिप्रत्यक्षमपि तत्र प्रमाणं सूचयति । तत्र तावत्तदभिप्रेतं प्रत्यक्षमन्यथा-सिद्धमिति न तत्र प्रमाणमित्याह ॥ **ज्ञानव्यतिरिक्तायामिति** । तथा च ज्ञातो घट इत्यत्र ज्ञात्राश्रितं ज्ञानमेव कर्मप्रधान्यविवक्षया प्रमेयाश्रितत्वेन प्रतीयते न त्वतिरिक्ता ज्ञातता । अन्यथेष्टो घट इति प्रतीत्येष्टताऽपीच्छातिरिक्ता प्रमेयाश्रिता स्वीकार्या स्यादिति भावः । अनुमानमपि दूषयति ॥ **अतीतादिति** । तथा चातीतानागतज्ञानानां ज्ञातताऽजनकत्वेन स्वकर्मणि किञ्चित्कारित्वाभावे क्रियात्वं न स्यात् । यदि तत्र व्यवहारादिजनकत्वमात्रेण क्रियात्वं तर्हि वर्तमानज्ञानानामपि तथात्वमस्त्विति व्यभिचारोऽन्यथासिद्धिर्वेति भावः । एतेन ज्ञानविषयतानियामकत्वेनैव ज्ञातताऽङ्गी-कार्येति तदीयं साधकान्तरमप्यपास्तम् । अतीतादौ ज्ञातताभावेन ज्ञानविषयत्वाभावापातात् । तत्र करणसन्निकर्षेण विषयतानियमेऽन्यत्रापि तथाऽस्त्विति किं ज्ञाततयेति । विस्तरस्तु सुधायां द्रष्टव्यः । अनेन ज्ञाततास्वीकारेऽप्यतीतादिज्ञानेष्वव्याप्तिरप्युक्ता द्रष्टव्या । तत्राश्रयाभावेन ज्ञाततोत्पत्तेस्तेनाप्य-स्वीकारात् । करणेष्वव्याप्तिमाह ॥ **वेदादिष्विति** । आदिपदेन स्मृतेरपि सङ्ग्रहः ॥ **अनधिगतेति** । स्मृतिव्यवच्छेदायानधिगतेति । भ्रमनिरासाय तथाभूतेति । ज्ञानमिति च प्रमेयव्युदासार्थम् । स्मृतावित्युपलक्षणम् । धारावाहिकज्ञाने चेत्यपि द्रष्टव्यम् ।

**अभि.**— यद्यपि भगवत्पादैरेवेत्यनेन सूचितं तथाऽपि परोक्तानामलक्षणत्वं व्यक्तीकर्तुमनुवदति ॥ **अनुभूतिरिति** ॥ **ज्ञाततप्राकट्येति** । प्रकाशविशेषस्य साधनं क्रियाज्ञानमित्येव लक्षणवाक्यम् ।

ज्ञातताप्राकट्यापरपर्यायवाच्यस्य प्रमेयाश्रितस्येत्यन्तं प्रकाशविषयेत्यस्य व्याख्यानम् । तत्रापि ज्ञातताप्राकट्यापरपर्यायवाच्यस्यैतज्ज्ञातताया अध्यक्षप्रमाणमिति सूचनार्थः । तदुक्तम् । ज्ञातो घटः प्रकटो घट इति साक्ष्यध्यक्षमीक्ष्यत इति । क्रियेति पदं ज्ञानं स्वकर्मणि किञ्चित्करोति क्रियात्वाच्छिदिक्रियावदित्यनुमानसूचनाय । उक्तं च । ज्ञानं स्वकर्मणि किञ्चित्करोति क्रियात्वाद्गमनवदित्यनुमानेन सिद्धिरिति । क्रियात्वमिह सकर्मकत्वं विवक्षितमतो नासिद्धिः । नाप्यकर्मकक्रियायां व्यभिचारः । अयथार्थज्ञानविषयनिष्ठायास्तु प्रकाशत्वेऽपि प्रकाशविशेषगुणत्वाभावान्न तत्साधनेऽतिव्याप्तिः । परोक्तं प्रत्यक्षं तावन्निराकरोति ॥ **ज्ञानव्यतिरिक्तायामिति ।** ज्ञातो घट इति प्रतीतौ ज्ञानमेवार्थविशेषणतया भासते । ततश्च प्रत्यक्षेण ज्ञाततासिद्धेरभावाल्लक्षणस्यासम्भव इत्यर्थः । माभूत्प्रत्यक्षेण ज्ञाततासिद्धिः । तथाऽपि प्रागुक्तानुमानेन तत्सिद्धिः स्यादित्यत आह ॥ **अतीतादिविषयज्ञानानामिति ।** बाधितविषयमनुमानमिति भावः ।

आद.— ॥ **तस्या अपीति ।** अयमाशयः । प्रमाणलक्षणं न व्यसनितयोच्यते । किन्तु निखिलापेक्षितमोक्षस्येश्वरापरोक्षज्ञानसाध्यत्वात्साक्षात्कारस्य तत्परोक्षज्ञानसाध्यत्वात्तस्य सर्वोत्तमत्वजगत्कारणत्वादिप्रकारकस्य जगत्सिद्धिसापेक्षत्वात्तज्ज्ञानस्य प्रमाणधीनत्वात्प्रमाणानां च यथावद्विदितानामेव प्रमेयसिद्ध्युपयुक्ततेति प्रमाणानां निरूपणं कर्तव्यम् । एवं च प्रमेयसाधकानि यावन्ति तावतां लक्षणं वक्तव्यम् । तथा च स्मृतेरप्यर्थसाधकत्वाल्लक्ष्यत्वमेवार्थसाधकत्वं चात्रार्थे स्मृतिः प्रमाणमिति व्यवहारात्स्मृतिः । तत्साधारणमेव लक्षणं वक्तव्यं न तु तद्व्यावृत्तम् । न च प्रमाणमित्यस्यानुमानरूपप्रमाणमित्यर्थ इति वाच्यम् । अनुभवे लिङ्गत्वेऽप्यर्थे लिङ्गत्वायोगात्साक्षादर्थविषयकत्वे सम्भवति अनुभवद्वाराऽर्थसाधकत्वाङ्गीकारायोगात् । सत्त्वेन साक्षादर्थविषयकत्वं सदिति व्यवहारप्रयोजकत्वमर्थविशेषविषयकेच्छादिजनकत्वं च स्मृतावनुभवसिद्धम् । अर्थसाधकत्वं च तत्र सत्त्वावगाहित्वं तद्विषयताया विधिरूपत्वमेव तत्सत्त्वेऽपि न प्रमाणं तर्ह्यनुभवस्यापि प्रमाणत्वाभावप्रसङ्ग इति तस्मात्स्मृतिः प्रमाणमेवेति ॥ **संशयेति ।** प्राभाकरमते संशयाद्यभावेऽपि तं प्रति साध्यत्वात्तत्रातिव्याप्तिरिति भावः ॥ **वेदादिषु च यथार्थज्ञानसाधनोष्विति ।** उक्तरीत्या प्रमेयसाधकानां सर्वेषां प्रमाणपदवाच्यानां लक्ष्यत्वमेवेति भावः ।

**क्रियाज्ञानमिति ।** क्रियारूपज्ञानमित्यर्थः । ज्ञातताया अपि ज्ञानपदवाच्यत्वात्तद्वारणाय क्रियारूपमित्युक्तम् । यद्वा करणसाधनल्युडन्तज्ञानपदवाच्यत्वं तत्साधनेष्वस्तीति तद्वारणाय क्रियारूपमित्युक्तम् ॥ **अनधिगतेति ।** अज्ञातेत्यर्थः ॥ **तथाभूतेति ।** यथावस्थितेत्यर्थः । स्मृतिवारणाया-

नधिगतेति । स्मृतिविषयस्य नियमेनानुभूतत्वात्तद्वारणं बोध्यम् । विपर्ययवारणाय तथाभूतेति । संशयवारणाय ज्ञानेति । निश्चय इत्यर्थः । न त्विच्छादिवारणाय ज्ञानपदम् । इच्छादिविषयस्याधिगतत्वनियमात् । सर्वथाऽज्ञाते इच्छादेरयोगात् । अथवाऽनधिगतेत्यस्य स्वसमानविषयकत्वपूर्ववृत्तिज्ञानाविषयीभूतयथार्थविषयकज्ञानमित्यर्थः । अन्यथा सामान्याकारेण सर्वस्यापि प्रमेयस्य सर्वैः पुरुषैर्ज्ञातत्वेनोक्तलक्षणाप्रसिध्द्यापत्तेः । इत्थं च सामान्यधर्मप्रकारकज्ञानजन्यविशेषविषयकजिज्ञासायामतिव्याप्तिवारणाय ज्ञानपदम् ॥ **स्मृताविति ।** अनुभूतार्थविषयकत्वादिति भावः । याज्ञवल्क्यादिकृतस्मृताविति । वाऽर्थः । अननुभूततत्तावगाहित्वेन धारावाहिकज्ञानप्रमाण्योपपत्तिरित्यनुशयेनाह ॥ **वेदादिष्विति ।**

**श्रीनि.––** ॥ **वक्ष्याम इति ।** अनुमानप्रकरणे दूषणानुमानमपि द्वेधा दुष्टप्रमितिसाधनं तर्कश्चेति वक्ष्याम इत्यर्थः ॥ **संव्यवहारादि ।** सम्यग्व्यवहारादीत्यर्थः ॥ **स्मृतिव्यतिरिक्तेति ।** स्मृतित्वानधिकरणेत्यर्थः ॥ **प्राभाकाराणां लक्षणमिति ।** अयुक्तमिति वक्ष्यमाणेनेत्यर्थः ।

**वि.––** ॥ **ननु तर्कस्याप्रमाणत्वात्तद्व्यावृत्तिरपि वक्तव्या ।** तथाऽपि कुतो नोक्त इत्यत आह ॥ **तर्कोऽनुमानमेवेति ॥ वक्ष्याम इति ।** पुनर्द्विविधं साधनानुमानं दूषणानुमानं चेत्यनुमानविभागप्रस्तावे वक्ष्याम इत्यर्थः । असत्तर्कव्यावृत्तेः संशयविपर्ययतत्साधनव्यावृत्तिकथनपरत्वेनैवोक्तत्वात्सत्तर्कस्यानुमानतयाऽवश्यत्वात्तद्व्यावृत्तिर्न वाच्येति भावः । प्रमाणलक्षणस्यातिव्याप्तिमाशङ्कते ॥ **स्मृताविति ॥ अतिव्यापकमिति ।** अतिव्याप्तमित्यर्थः । यदि स्मृतियाथार्थ्ये वादिविप्रतिपत्तेस्तत्र याथार्थ्यमनिश्चितमिति कथमतिव्याप्तिस्तथाऽपि तद्याथार्थ्यस्य वक्ष्यमाणत्वात्तत्रातिव्याप्तिर्दुर्वारेति बोध्यम् । स्मृतेरपि लक्षितत्वात्तत्र लक्षणसत्त्वं न दोष इति भावेन परिहरति ॥ **नेति ।** तस्या अपि केवलमनुभूतेः किन्तु स्मृतेरप्यतीतकालसम्बन्धादौ प्रमाणत्वेन लोके व्यवहारात् ।

स्मृतिःप्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिरिति

वेदे च प्रमाणत्वेन व्यवहारादित्यर्थः । न चात्र स्मृतिपदं मन्वादिस्मृतिपरम् । आगमोपलक्षकैतिह्यपदेनैव तत्सङ्ग्रहात् । अन्यथा श्रुतिपुराणमीमांसादेः पृथग्ग्रहणप्रसङ्गात् । स्मृतिपदस्य श्रुतिमूलत्वेन स्मृतिशब्दार्थभूतमन्वादिस्मृतिपरत्वे मुख्यार्थत्यागप्रसङ्गाच्च । ननु तथाऽपि गत्यादावतिव्यापकं प्रमाणलक्षणम् । गत्यर्थविषयीकारित्वमेव नेति वाच्यम् । सकर्मकक्रियामात्रे तस्य सद्भावात् ।

अन्यथा ज्ञानरूपक्रियाया अपि तन्न स्यात्। न च तद्व्यावृत्त्यर्थमेवार्थशब्दो ज्ञेयवाच्युक्तमिति वाच्यम्। तथाऽप्यतिव्याप्त्यनिस्तारात्। गत्यादिविषयस्य ग्रामादेरपि ज्ञेयत्वात्। अन्यथा तदत्यन्ताभावाप्रसङ्गादिति चेन्न। ज्ञेयशब्दस्य ज्ञेयपरत्वेन गत्यादौ लक्षणाभावात्। तथा हि। सम्बन्धिकशब्दत्वात्पितुर्धनं पुत्रो गृण्हीयादित्यादौ पितृशब्दस्य स्वपितर्येव पर्यवसानम्। अन्यथा बहुविप्लवप्रसङ्गात्। तथा ज्ञेयशब्दोऽपि ससम्बन्धिकशब्दत्वात्स्वज्ञेये पर्यवस्यति। तथा च यथावस्थितं ज्ञेयविषयीकारि प्रमाणमित्युक्तं भवतीति न गत्यादावतिव्याप्तिः। गमनसाधनाभ्यां ग्रामस्य गम्यत्ववज्ज्ञेयत्वाभावत् स्वज्ञेयविषयीकारित्वस्य तत्राभावादिति स्वोक्तप्रमाणस्थिरीकरणाय परोक्तप्रमाणलक्षणान्यनूद्य दूषयति ॥ **अनुभूतिः प्रमाणमित्यादिना यथार्थज्ञानेष्वव्यापकत्वाच्चेत्यन्तेन।** अनुभूतिशब्दार्थमाह ॥ **स्मृतिव्यतिरिक्तमिति।** स्मृतित्वरहिता स्मृतित्वावच्छिन्नभिन्ना वा। संविदनुभूतिरिति प्राभाकरोक्तं लक्षणं प्रमाणलक्षणमयुक्तमसमीचीनमित्यर्थः। संशयविपर्ययव्यापकत्वात्। संशयविपर्ययोर्व्याप्नोति सम्बध्नातीति संशयविपर्ययव्यापकं तस्य भावस्तत्त्वम्। तस्मात्संशयविपर्ययवृत्तित्वादिति यावत्। यद्यपि प्राभाकरमतेऽयथार्थ इति ज्ञानाभावात्तत्रनातिव्याप्तिस्तथाऽप्ययथार्थज्ञानस्य साधितत्वात्तत्रातिव्याप्तिर्युक्तेति बोध्यम्। यथार्थज्ञानजनकेषु यथार्थज्ञानसाधनेषु वेदादिष्वित्यन्वयः। एतच्च विशेषणं तेषां प्रामाण्योपपादनाय लक्षणसत्त्वाभावोपपादनाय चेति ज्ञातव्यम्। आदिपदेन प्रत्यक्षानुमानागमवाक्यान्युच्यन्ते ॥ **ज्ञाततप्राकट्यापरपर्यायवाच्यस्येति।** ज्ञातता ज्ञातताशब्दः प्राकट्यमित्यपरः पर्याय एकप्रवृत्तिनिमित्तकः शब्दस्ताभ्यां वाच्यस्येत्यर्थः। अत्र प्रकाशविशेषस्य साधनं प्रमाणमित्येव लक्षणवाक्यं प्रकाशविशेषश्च क इति जिज्ञासायां तन्निरासार्थमुक्तं विशेषणद्वयं क्रियाज्ञानं धात्वर्थभूतक्रियारूपं ज्ञानमित्यर्थः। एतच्च लक्ष्यस्वरूपनिरूपणपरं प्रमाणमिति भट्टोक्तम्। भट्टानां लक्षणमपि प्रमाणलक्षणं चायुक्तमित्यर्थः। अतिरिक्तत्वमुपपादयति ॥ **ज्ञानव्यतिरिक्तायामिति।** क्रियारूपज्ञानव्यतिरिक्तायां प्रमेयाश्रितज्ञानरूपज्ञाततायामित्यर्थः। इष्टो घटो द्विष्टो घटः कृतो घट इति प्रत्ययस्येच्छाद्वेषकृतिविषटयत्वविषयकतया क्रियारूपज्ञानव्यतिरिक्तायां घटाश्रितेच्छापेक्षतायां क्रियारूप रूपद्वेषव्यतिरिक्तायां प्रमेयाश्रितरूपकृततायां च प्रामाण्याभावाज्ज्ञातो घट इति प्रत्ययस्यापि क्रियारूप ज्ञानविषयत्वविषयकतया क्रियारूपज्ञानव्यतिरिक्तायां प्रमेयाश्रितज्ञानरूपायां ज्ञाततायां प्रमाणत्वाभावेन प्रमेयाश्रितज्ञानसाधनत्वं प्रमाणलक्षणमसम्भवीति भावः। अस्तु वा ज्ञातता नेदं लक्षणं युक्तमित्याह ॥ **अतीतादिविषयज्ञानानामिति।** अतीतानागतविषयकज्ञानानामाश्रयाभावेन ज्ञाततारूपप्रकाशाधारस्याभावेन तत्र ज्ञाततारूपप्रकाशजनकत्वासम्भवादित्यर्थः। लक्षणाभावात्तेष्वव्याप्तिरिति भावः। वेदादिष्वित्यादिपदेन प्रत्यक्षानुमानपौरुषेयागमा गृह्यन्ते। तेषां क्रियारूपज्ञान-

साधनत्वेऽपि विषयाश्रितज्ञाततारूपज्ञानसाधनत्वादव्याप्तिरिति भावः ।। **अनधिगततथाभूतार्थज्ञानमिति** । अज्ञातयथावस्थितस्य ज्ञानं प्रमाणमिति भट्टोक्तमित्यर्थः । तेषामेव भट्टानामेव लक्षणान्तरं प्रमाणलक्षणान्तरं चेत्यर्थः ।। **स्मृतौ वेदादिषु चाव्याप्तेरिति** । आदिपदेन प्रत्यक्षानुमानवाक्यानि गृह्यन्ते । ननु स्मृतेरननुभूतत्वविषयकत्वस्यापि सत्त्वात्तत्राव्याप्तिर्नास्तीति चेत् । तर्ह्यनधिगतपदवैय्यर्थ्यात् । तत्सार्थक्यार्थं स्मृतेरधिगतार्थमात्रविषयत्वङ्गीकारवादे तु तत्राव्याप्तेरेवैतत्प्रामाण्यस्योपपादितत्वं न लक्ष्यत्वादित्यनुसन्धेयम् ।

**(१९) प्र.प.— सम्यगनुभवसाधनं प्रमाणमिति नैयायिकादयः । तदप्यसत् । यथार्थज्ञानेऽव्याप्तेः । प्रमाव्याप्तं प्रमाणमित्युदयनः । तदपि सर्वस्यापि प्रमेयस्येश्वरप्रमाव्याप्तत्वेनातिव्यापकत्वादयुक्तम् । साधनाश्रययोरन्यतरत्वे सति प्रमाव्याप्तत्वं विवक्षितमिति चेन्न । आश्रयग्रहणवैय्यर्थ्यात् । ईश्वरस्यापि प्रामाण्यसिध्यर्थं तदिति चेन्न । कर्तरि प्रमाणशब्दस्याननुशासनात् । यथार्थज्ञानेष्वव्याप्तेश्च । तस्माद्याथार्थ्यमेव प्रमाणलक्षणं युक्तम् ।**

**जना.—** ।। **यथार्थज्ञानेऽव्याप्तेरिति** । तस्यापि घटादिसद्भावे प्रमाणत्वेन संव्यवहारेण लक्ष्यत्वावश्यंभावादिति भावः ।। **साधनाश्रययोरिति** । साधनाश्रययोरित्यतः प्राक् प्रमेति शेषः । तथा च प्रमासाधनाश्रययोरन्यतरत्वे सति प्रमाव्याप्तत्वं प्रमाणलक्षणमिति पर्यवसन्नम् । एवं च घटादेः प्रमेयस्य प्रमासाधनप्रमाश्रययोरन्यतरत्वाभावान्नातिव्याप्तिरिति भावः । ननु नाश्रयग्रहणं व्यर्थम् । आश्रयपदपरित्यागे हि प्रमासाधनत्वे सति प्रमाव्याप्तत्वं लक्षणं स्यात् । तच्चेश्वरे नास्ति । तस्य प्रमासाधनत्वाभावात् । तथा चेश्वरेऽव्याप्तिवारणायाश्रयग्रहणं सार्थकमेवेति शङ्कते ।। **ईश्वरस्यापीति** ।। **कर्तरीति** । प्रमाणशब्दस्य ल्युडन्तत्वाल्युटश्च कर्तर्यनभिधानादिति भावः । ननु तर्हि कर्तरि ल्युटोऽननुशासानदित्येव कुतो नोक्तमिति चेन्न । शङ्कान्तरपरिहारार्थत्वात् । तथा हि । कृत्यल्युटो बहुलमित्यत्र विशिष्य कर्तरि ल्युटोऽननुशासनेऽपि बहुलग्रहणात्कर्तर्यपि स्यात् । तथा च कथं कर्तरि ल्युटोननुशासनमिति चेत्तथाऽप्यत्रार्थे ज्ञानं प्रमाणमितिवत्प्रमातरि प्रमाणशब्दव्यवहाराभावात्तदसङ्ग्रह इति । यथाऽऽहुः । सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैरिति । अत एव वक्ष्यति । तथाऽपि प्रमाणशब्दस्याधिकरणे प्रयोगाभावात्तदसङ्ग्रह इति । अत्र नूतननैयायिका न वयमीश्वरस्य कर्तृत्वेन प्रामाण्यमाचक्ष्महे येन कर्तरि प्रमाणशब्दस्याननुशासनं दोषः स्यात्किन्तु प्रमाश्रयत्वेनैव । यथाऽऽह वरदराजः ।

नित्यानित्यतया द्वेधा प्रमा नित्यप्रमाश्रयः ।
प्रमाणमितरस्यास्तु करणस्य प्रमाणता ।

एवं च नित्यप्रमाश्रयत्वादीश्वरस्य प्रतितन्त्रसिद्धान्तसिद्धं प्रामाण्यं लक्षितं भवति । तदुक्तम् । तत्प्रामाण्यमात्मप्रामाण्यादिति । तन्मे प्रमाणं शिव इति च । अत्र प्रमाणसाधकतमं प्रमाणमित्यादीनि न्यायविदां लक्षणवचनानि लौकिकप्रमामात्रपराणि । अत एव हि प्रमातुरेवेश्वरस्य प्रमाविनाभावेन प्रामाण्यमुपपादयन्त आहुः ।

मितिः सम्यक् परिच्छित्तिस्तद्वात्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मत ।। इति ।

ईश्वरे कर्तरि विहिततृच्प्रत्ययान्तप्रमातृशब्दस्तु कर्तृत्वाभावेऽपि रूपग्राहकं चक्षुरिति विहित-ण्वुल्प्रत्ययवत्साधुत्वमात्रार्थो वा । क्रियानुकूलव्यापारवत्त्वसाधर्म्येण करणे कर्तृत्वोपचाराद्वा युज्यते । अत एव प्रमाणं हेतुमर्यादा शास्त्रेयत्ता प्रमातृष्वित्यभिधानमप्यनुकूलम् । एवं चेश्वरेऽव्याप्ति-वारणायाश्रयग्रहणं सार्थकमिति । तत्तुच्छम् । एवं ह्यनीश्वरात्मनामपि प्रामाण्यप्रसङ्गः । तेषामपि प्रमाश्रयत्वात् । तेषां प्रमाश्रयत्वेऽपि तदविनाभावाभावान्न प्रामाण्यमिति न वाच्यम् । तेषामपीश्वर-प्रमाव्याप्तत्वात् । अथ स्वजन्यस्वाश्रयान्यतरा या प्रमा तद्व्याप्तत्वं विवक्षितम् । अस्ति चेदं चक्षुरादौ न त्वनीश्वरात्मनि । तद्व्यापिकाया ईश्वरप्रमायाः स्वजन्यस्वाश्रयान्यतरत्वाभावादिति चेत् । हन्तैवं तथा सति चक्षुरादावव्याप्तिप्रसङ्गः । न हि यदा यदा चक्षुस्तदा तदा स्वजन्यप्रमा । दोषसमवधाने इतरकारणासमवधाने च सत्यपि चक्षुरादौ तदभावात् । अथ यदा यदा निर्दोषमितरकारणसमवहितं चक्षुरादिकं तदा तादृशप्रमेत्यस्तीति चेत्तर्हि यदा तादृशचक्षुरादिमाञ्जीवस्तदा तादृशप्रमेति व्याप्तेस्तत्रापि सत्त्वेनातिव्याप्तिर्दुर्वारा । तस्मादाश्रयग्रहणं व्यर्थमेव । एवं च प्रमाव्याप्त्या प्रमाणत्वे प्रमातुरपि तद्भवेत् । जीवेषु तदभावश्चेन्नेत्रादावपि नो भवेत् । विशिष्टस्य प्रमाव्याप्तौ जीवे सा केन वारिता । तस्मान्नोदयनं मानलक्षणं नोदयं व्रजेत् । किञ्चान्यतरत्वविशेषणेन साधनाश्रययोः सङ्ग्रहे एवमेव ध्वंसाद्यन्यतमत्वमेवाभावलक्षणम् । रूपाद्यन्यतमत्वमेव गुणलक्षणमिति सुवचत्वेन गुरुभूत-लक्षणान्तरप्रणयनानुपपत्तिर्नैयायिकानाम् । अभिधानमपीश्वरप्रामाण्ये नानुकूलम् । न ह्यत्र प्रमाण-शब्दव्यवहारविषयमात्रस्य लक्षणं प्रस्तुतम् । तथात्वे मर्यादादेरपि लक्षणीयत्वप्रसङ्गात् । किन्तु तथात्वे सति वस्तुसाधकस्य । तथात्वं चैतत्सद्भावे किं प्रमाणमिति प्रश्ने मदीयं घटसद्भावे प्रमाणं मम चक्षुर्घटं विषयीकरोतीत्यादिव्यवहाराद्भावकरणयोरेव । अत्रार्थे विप्राः प्रमाणमित्यादिकं तु तज्ज्ञान-विषयम् । अन्यथा ज्ञानरहितानामपि तेषां तत्रार्थे प्रमाणत्वव्यवहारप्रसङ्गादित्येत्सर्वं मनसि निधायोपसंहरति ।। **तस्मादिति** । लक्षणान्तराणामनुपपन्नत्वादित्यर्थः ।

**राघ.**— ॥ **तदप्यसदिति** । अलक्षणमित्यर्थः ॥ **प्रमाव्याप्तमिति** । प्रमया व्याप्तं प्रमाव्याप्तम् । यथाश्रुते दोषमाह ॥ **तदपीति** । ईश्वरप्रमाया अनादिनित्यत्वाद्यदा घटादिप्रमेयं तदेश्वरप्रमेति व्याप्तेरिति भावः ॥ **साधनेति** । प्रमासाधनप्रमाश्रययोरन्यतरत्वे सति प्रमाव्याप्तत्वमित्यर्थः । तथा च नोक्तदोषः । प्रमेयस्य तदुभयान्यतरत्वाभावादिति ज्ञेयम् । आश्रयपदेन प्रमावान्प्रमास्वामी तत्कर्थाऽभिप्रेत उताधिकरणमात्रम् । आद्ये आह ॥ **कर्तरीति** । तत्पक्षे हि प्रमातीति प्रमाणमिति प्रपूर्वात् माङ्मान इति धातोः कर्तरि ल्युट्प्रत्यये प्रमाणमिति रूपमिति वाच्यम् । न चैवं कर्तरि ल्युटो विधानमस्ति । ल्युटो करणाधिकरणयोश्च विधानात् । नान्त्यः । निरसिष्यमाणत्वादिति भावः । दोषान्तरं चाह ॥ **यथार्थज्ञानेष्विति** ।

**विज.**— ॥ **प्रमाव्याप्तमिति** । नियतप्रमासम्बन्धवदित्यर्थः । अत्र नियतप्रमासम्बन्धवत्त्वं न जन्यजनकभावसम्बन्धेन । ईश्वरासङ्ग्रहात् । नाप्याश्रयत्वेन । साधनासङ्ग्रहात् । किन्तु यथाकथञ्चित् सम्बन्धेन वाच्यम् । तथा सति विषयविषयिभावस्य प्रमासम्बन्धस्य सर्वत्र सत्त्वादतिव्याप्तिरित्यत आह ॥ **तदपीति** ॥ **साधनाश्रययोरन्यतरत्वे सतीति** । साधनाश्रयत्वान्यतरसम्बन्धेन प्रमाव्याप्तत्वमित्यर्थः ॥ **आश्रयस्येति** । प्रमासाधनत्वमेव लक्षणमस्त्वित्यर्थः ॥ **ईश्वरस्यापीति** । अन्यथेश्वरस्य प्रमायां साधनत्वाभावेन प्रमाणत्वं न स्यादिति भावः । ननु केनोच्यत ईश्वरः कर्तेत्यपि त्वाश्रय इति । तत्र ल्युटोऽनुशासनमस्त्येवेत्यत आह ॥ **यथार्थज्ञानेष्विति** ।

**वेदे.**— ॥ **सम्यगिति** । सम्यगिति संशयादिनिरासाय । अनुभव इति कुठारादेर्निरासाय । ज्ञानमात्रग्रहणे स्मृतौ प्रसङ्गादनुभवग्रहणम् । साधनग्रहणं फलव्यवच्छेदाय प्रमातृप्रमेयव्यवच्छेदार्थं च । न्यायैकदेशिमते ईश्वरस्याप्रमाणत्वात्तत्प्रामाण्यवादिमतेऽप्येतस्य लौकिकप्रमाणमात्रलक्षणत्वान्नेश्वरेऽव्याप्तिरिति द्रष्टव्यम् ॥ **यथार्थेति** । न च न ज्ञानं प्रमाणं किन्तु तत्फलमतो नाव्याप्तिरिति वाच्यम् । करणवज्ज्ञानस्यापि ल्युडन्तप्रमाणशब्दवाच्यतया लक्ष्यताऽवश्यसम्भावस्य वक्ष्यमाणत्वात् । प्रामाण्यस्य परतस्त्वेऽनवस्थाप्रसङ्गेन स्वप्रकाशज्ञानग्राह्यत्वावश्यम्भावेन ज्ञानप्रामाण्यस्यावश्यकत्वाच्चेति भावः ॥ **प्रमाव्याप्तमिति** । इदं च लौकिकप्रमाणेश्वरसाधारणम् । अत्र यद्यपीश्वरे प्रमासाधने चक्षुरादौ च न प्रमया दैशिकी व्याप्तिः सम्भवति । तथाऽपि यदेश्वरस्तदा प्रमेति यदा सन्निकृष्टेन्द्रियस्तदा प्रमेति च कालिकी विवक्षितेति ध्येयम् ॥ **सर्वस्यापीति** । भ्रमादिदशायां व्यभिचारेणस्मत्प्रमाव्याप्तत्वाभावादाह ॥ **ईश्वरप्रमेति** । यदा सर्वं प्रमेयं तदेश्वरप्रमेति व्याप्तेरप्रतिहतत्वादिति भावः । इदमुपलक्षणम् । सुखादिप्रमेयेऽस्मदादिप्रमाव्याप्तत्वेनाति- व्याप्तिर्द्रष्टव्या ॥ **साधनाश्रययोरिति** । एवं

च प्रमेयस्य साधनत्वमाश्रयत्वं वा नेति नातिव्याप्तिरित्यर्थः ॥ **कर्तरीति ।** प्रमाणशब्दस्य ल्युडन्तत्वात् । ल्युटश्च करणाधिकरणभावेष्वनुशासनेऽपि कर्तर्यननुशासनादित्यर्थः । ईश्वरस्य कर्तृत्वेऽपि प्रमां प्रत्यधिकरणत्वमस्त्येवातः प्रमाणशब्दवाच्यत्वमुपपद्यत इति चोद्यमुत्तरत्र स्वयमेव परिहरिष्यति । परोक्तप्रमाणसामान्यलक्षणनिराकरणस्य प्रकृतोपयोगं दर्शयन्नुपसंहरति ॥ **तस्मादिति ।**

**अभि.——** ॥ **प्रमाव्याप्तमिति ।** यस्य नियमेन प्रमासम्बन्धस्तत्प्रमाणं यावच्छक्तिकविसंवादिलिङ्गविभ्रमादि च प्रमाकरणमपि न प्रमाणं प्रमाव्याप्तत्वाभावादिति भावः । दूषयति ॥ **तदपीति ।** यद्यत्प्रमाव्याप्तं तत्तस्मिन्नर्थे प्रमाणम् । न चेश्वरप्रमाविषयो घटादिरीश्वरप्रमाविषये स्तम्भादौ प्रमाणमित्यलक्ष्यत्वादव्याप्तिरिति भावः । एतेन वन्हिव्याप्तो वन्हाविवेश्वरप्रमाव्याप्तो घटादिरीश्वरप्रमायां प्रमाणमेवेति लक्ष्यत्वान्नातिव्याप्तिरिति परास्तम् । घटादेरीश्वरप्रमां प्रति प्रामाण्येऽपि तद्विषये प्रामाण्याभावेनालक्ष्यत्वात् । न ह्येकत्र प्रमाणमन्यत्रापि प्रमाणं भवति । मा हि भूच्छब्दानित्यत्वे प्रमाणं कृतकत्वं तन्नित्यत्वे प्रमाणम् ॥ **आश्रयग्रहणवैय्यर्थ्यादिति ।** साधनत्वविवक्षयैव प्रमेयेऽतिव्याप्तिपरिहारस्य सुशकत्वादाश्रयग्रहणं व्यर्थमित्यर्थः । एतेन प्रमेयेऽतिव्याप्तिवारणाय तस्योपात्तत्वेन वैय्यर्थ्यशङ्काऽनुदय इति परास्तम् ॥ **ईश्वरस्यापीति ।** प्रामाण्यसिध्यर्थमीश्वरः प्रमाणमिति व्यवहारसिद्ध्यर्थं तद्विशेषणमित्यर्थः । एतेन लक्षणगतविशेषणानामतिव्याप्त्यादिदोषनिवारणद्वारा व्यावृत्तिबुद्धिशब्दव्यवहारप्रयोजकत्वेन लक्ष्यतावच्छेदकसिद्ध्यप्रयोजकत्वात्प्रमाण्यसिद्ध्यर्थं तदित्ययुक्तमिति परास्तम् ॥ **कर्तरीति ।** अर्थव्यवस्थापकनिष्ठावृत्त्योरन्यतरवृत्त्या ज्ञानतत्साधनयोरिव कर्तरि प्रमाणशब्दस्याननुशासनेन कर्तरि लक्ष्यत्वाभावान्न तत्सङ्ग्रहाय विशेषणं देयमिति भावः । एतेन प्रमाणशब्दस्य सेतुविधारणं पुंसां यत्प्रमाणं च केशव इति भागवते कर्तरि प्रयोगात्

प्रमाणहेतुर्मर्यादाशास्त्रेयत्ताप्रमातृषु ।
सम्यग्वक्तरि वाऽर्थः स्यात्प्रयाणे मरणे गताविति

यादववचनाच्च कर्तरि प्रमाणशब्दस्यानुशासनादित्युक्तमिति परास्तम् । सैन्धवादिवन्नानार्थकस्य प्रमाणशब्दस्य वृत्त्यन्तरेण कर्तर्यनुशासनेऽप्यर्थव्यवस्थापकभावकारणनिष्ठवृत्त्योरन्यतरनिष्ठवृत्त्योरन्यतर वृत्त्याऽननुशासनात् ।

**आद.—— यथार्थेति ।** उक्तरीत्या साधकत्वेन निमित्तेन प्रमाणपदावाच्यानां सर्वेषामेव लक्ष्यत्वस्योचिततयाऽनुप्रमाणमात्रस्य लक्षणकथनेऽसङ्गतिरिति भावः । अत्रार्थे किं प्रमाणमित्याकारका-

काङ्क्षाया वेदादिरूपप्रमाकरणकथनेन निवृत्तिवत्प्रत्यक्षज्ञानादिरूपप्रमाणकथनेनापि निवृत्त्या प्रमाणपदमेकया शक्त्या प्रमातत्करणयोरेकवृत्त्या बोधकमिति तत्पदप्रवृत्तिनिमित्तस्योभयसाधारणस्यैवेदानीं निर्वाच्यतया प्रमाकरणत्वस्य तादृशत्वं न सम्भवति । प्रमायामवृत्तित्वादिति भावः । करणेऽपि ल्युटो विधानात्तदन्तप्रमाणपदार्थस्यैव लक्षणमुक्तमिति नासङ्गतिरिति वाच्यम् । प्रमाणपदस्य करणार्थकल्युडन्तत्वज्ञानवतां पूर्वमेव ज्ञातत्वेन तदुक्तेर्वैय्यर्थ्यापत्तेः । प्रमेयसिद्ध्युपयुक्तस्य प्रमाणपदार्थस्यैव सर्वेषामज्ञातस्य याथार्थ्यरूपस्याकाङ्क्षाविषयत्वेन तदुक्तेरेव सङ्गतत्वाच्च । न हि ज्ञाने ज्ञानत्वं तत्करणेषु करणत्वं वा पूर्वमज्ञातमर्थसिद्ध्युपयुक्तं येन तत्राकाङ्क्षा लोकानां स्यात् । किन्तु याथार्थ्यमेव तादृशमिति ज्ञाने वा याथार्थ्यज्ञानानन्तरं तत्करणत्वमन्वयव्यतिरेकाभ्यामन्यत्रेव स्वत एव ज्ञायत इति तत्राकाङ्क्षैव नोदेति येन तदुक्तिः सङ्गता स्यात् । किन्तु याथार्थ्यविशिष्टजननानुकूला शक्तिरेवार्थसिद्ध्युपयोगिनी पूर्वमज्ञाता चेति सैवाकाङ्क्षिता भवतीत्युभयसाधारणं याथार्थ्यमेव ग्रन्थकृद्भिर्वक्तव्यम् । न तु स्वसङ्केतमात्रज्ञाप्यकलक्षणोक्तिर्युक्तेति । अत एव याथार्थ्यस्य प्रमाणपदार्थतावच्छेदकत्वप्रदर्शनाय यथार्थपदस्य योगवृत्त्या यथावस्थितार्थमात्रविषयकत्वार्थकत्वं प्रदर्शितमिति ध्येयम् । प्रमाणपदादुक्तार्थबोधप्रकारश्च पूर्वमेव प्रदर्शितः ॥ **प्रमाव्याप्तमिति ।** कालिकी व्याप्तिर्बोध्या । स्वाधिकरणलक्षणाव्यवहितोत्तरक्षणत्वव्यापककार्याधिकरणकत्वमिति यावत् । जीवेष्वतिव्याप्तिवारणाय कार्याधिकरणतायां स्वाव्यावहितक्षणोत्तरक्षणत्वव्यापकत्वनिवेशः । न च सामग्र्यभावकालीनचक्षुःष्वव्याप्तिः । तदुत्तरक्षणे प्रमाया असत्त्वादिति वाच्यम् । सन्निकर्षविशिष्टनिर्दुष्टचक्षुष एव प्रमाणत्वात् । केवलचक्षुषोऽलक्ष्यत्वात् । हेत्वाभाससामान्यक्षणे वन्ह्यभावविशिष्टह्रदादेर्लक्ष्यत्वेऽपि शुद्धह्रदादेरलक्ष्यत्ववदत्राप्युपपत्तेः ॥ **साधनाश्रययोरन्यतरत्वेनेति ।** स्वाधिकरणक्षणाव्यवहितोत्तरक्षणत्वव्यापकस्वजन्यस्ववृत्तित्वान्यतरवत्प्रमाधिकरणत्वकत्वमित्यर्थः । जीवजन्यप्रमायाः कस्या अपि जीवाधिकरणक्षणत्वव्यापकत्वाभावान्न जीवादेः स्वपदार्थतेति नातिव्याप्तिरिति भावः ।

**श्रीनि.—** ॥ **प्रमाव्याप्तमिति ।** नियतप्रमासम्बन्धिवदित्यर्थः । यदा सन्निकृष्टेन्द्रियं तदा प्रमेति कालिकनियमोऽत्र ग्राह्यः ।

**वि.—** ॥ **सम्यगनुभवसाधनमिति ।** वैशेषिकादिरादिशब्दार्थः । यथार्थानुभवे यथार्थस्मरणे वा व्याप्तेरित्यर्थः । यद्यपि कारणप्रामाण्यवादिनां तेषामेतस्यालक्ष्यत्वान्न तत्राव्याप्तिस्तथाऽपि ल्युडन्तप्रमाणशब्दस्य कारण इव भावेऽप्यनुशासनादनुभव एवात्र मानं संविदेव हि भगवतीति वस्तूपगमेन शरीरमिति व्यवहाराच्च । तस्यापि लक्ष्यत्वेनाव्याप्तिरेवोति बोध्यम् । सम्यगनुभवसाधनं प्रमाण-

मित्युक्तस्य प्रमाणलक्षणस्येश्वरेऽभावात् । तत्सङ्ग्रहार्थमुदयनेनोक्तं प्रमाणलक्षणमनूद्य दूषयति ॥ **प्रमाव्याप्तं प्रमाणमित्युदयनस्तदपीत्यादिना ।** तदपीत्यस्य वक्ष्यमाणेनान्वयः । यद्यपि सर्वस्यपि प्रमेयस्येश्वरप्रमया न दैशिकी व्याप्तिरभिप्रेता । इन्द्रियार्थसन्निकर्षविशेषे प्रमाणेऽभावात् । किन्तु यदेन्द्रियार्थसन्निकर्षविशेषस्तदा प्रमेति कालिकी व्याप्तिर्विवक्षितेति वाच्यम् । उत्तरक्षणे प्रमोत्पत्तेः कालतो व्याप्तिस्तत्रासत्त्वात्स चास्तीश्वरप्रमायाः सर्वस्मिन्प्रमेयेऽपीत्यतिव्याप्तिरिति बोध्यम् । साधनाश्रयोरन्यतरत्वमपि विवक्षितमतो न तत्रातिव्याप्तिरित्याशयेन शङ्कते ॥ **साधनाश्रययोरन्यतरत्वे सतीति ।** प्रमासाधनाश्रययोरन्यतरत्वे सतीत्यर्थः ॥ **आश्रयग्रहणवैय्यर्थ्यादिति ।** प्रमाश्रय-पदोपादानवैय्यर्थ्यादित्यर्थः ॥ **कर्तरि प्रमाणशब्दस्येति ।** भावकरणयोरिव कर्तरि ल्युटो विधायक-सूत्राभावात् । सूत्रेण ल्युडन्तप्रमाणशब्दस्य प्रमाकर्तर्यविधानादित्यर्थः । प्रमाणशब्दस्य प्रमाकर्तर्यपि प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृष्वित्यनुशासनरूपोक्तिरस्ति । तदाऽपि करणव्युत्पत्तिपुरस्कारेण प्रमाशब्दस्य प्रमाणकरण इव प्रमाकर्तरि कर्तृव्यत्पत्तिपुरस्कारेणानुशासनं नास्त्येव । अमरोक्ति-बलात्प्रमाणशब्दवाच्यतामात्रेण प्रमातुरीश्वरस्यापि प्रामाण्याङ्गीकारे तु प्रमाणशब्दवाच्यस्यानीश्वरात्म हेतुमर्यादादेरपि प्रामाण्याभ्युपगमप्रसङ्गः । अविशेषादिति बोध्यम् । प्रमाणसामान्यलक्षणाभिधान-मुपसंहरति ॥ **तस्मादिति ।** परोक्तलक्षणानामतिव्याप्त्यादिदुष्टत्वात् स्वोक्तलक्षणस्य तद्रहितत्वा-च्चेत्यर्थः । याथार्थ्यमेव यथावस्थितज्ञेयविषयीकारित्वमेव प्रमाणस्य लक्षणं युक्तम् । लक्ष्यलक्षणोपेतं समीचीनं वा नान्यदित्यर्थः ।

## प्रमाणस्य द्वैविध्यम्

(१६) प्र.प.— **द्विविधं प्रमाणं केवलमनुप्रमाणं चेति । तत्र यथार्थज्ञानं केवलप्रमाणम् । यथार्थमिति संशयादिव्युदासः । ज्ञानमिति प्रत्यक्षस्य । लिङ्गज्ञानं वाक्यज्ञानं च लिङ्गिनि वाक्यार्थे चानुप्रमाणमपि लिङ्गे वाक्ये च केवलप्रमाणमिति नातिव्याप्तिः । इदं च साक्षाज्ज्ञेयविषयी-कारित्वात्केवलमित्युच्यते ।**

**जना.**— नन्वनुप्रमाणत्वेनाभिमतयोर्लिङ्गज्ञानवाक्यज्ञानयोरपि केवलत्वापत्तिः । तयोरपि यथार्थ-ज्ञानत्वरूपतल्लक्षणलक्षितत्वादित्यत आह ॥ **लिङ्गेति ।** अयं भावः । लिङ्गवाक्यज्ञानयोः केवलत्व-मनुप्रमाणत्वं चाभ्युपगम्यते । न चैकस्योभयरूपत्वविरोधः । विषयभेदेनोभयोपपत्तेरिति । यथार्थ-ज्ञानस्य केवलपदवाच्यत्वे निमित्तमाह ॥ **इदं चेति ।** चशब्दो वाक्यालङ्कारे ॥ **साक्षादिति ।** अनन्य-द्वारोपाधितया विषयस्य ज्ञाततासम्पादकत्वादिति भावः । न तु प्रतीत एवार्थः । उक्तं हि सुधायाम् ।

केवलं विषयस्य ज्ञाततां ज्ञानमुपाधितया करणानि तु तज्जनकतया सम्पादयन्तीत्येतावन्तं विशेषमाश्रित्य केवलानुप्रमाणभेदः समर्थित इति । यथावस्थितार्थविषयत्वस्योभयत्र साम्यादिति च ।

**राघ.**— अवसरप्राप्तं विभागमाह ॥ **द्विविधमिति** । यथार्थज्ञानं यथावस्थितार्थविषयकं ज्ञानमित्यर्थः । संशयादीत्यादिपदेन विपर्ययतदुभयज्ञानयोर्लिङ्गाभासज्ञानवाक्याभासज्ञानयोर्ग्रहः । प्रत्यक्षस्य सन्निकर्षस्य वा सन्निकृष्टेन्द्रियजातस्य वेत्यर्थः । व्युदास इत्यनुषङ्गः । प्रत्यक्षस्येत्युपलक्षणम् । इच्छाद्वेषप्रयत्नचलनक्रियाणामित्यपि ध्येयम् । यदि तु यथावस्थितज्ञानोपाधिकवस्तुविषविषयीकारि ज्ञानमित्येवार्थस्तदा तु नोपलक्षणम् । प्रत्यक्षस्येत्येव साधु । तस्य ज्ञानसाधनतया ज्ञेयविषयीकारित्वमिति ध्येयम् । नन्विदं लक्षणमनुमानागमयोरनुप्रमाणयोरतिव्याप्तमित्यतो विषयभेदेन लक्ष्यत्वान्न दोष इत्याह ॥ **लिङ्गज्ञानमिति** । ननु लिङ्गज्ञानादिकं स्वकार्यलिङ्गव्यवहारादिजननेऽनन्यापेक्षत्वाद्यथा केवलमित्युच्यते तथा स्वकार्यलिङ्गिज्ञानादिजननेऽप्यनन्यापेक्षत्वाल्लिङ्गाद्यंशेऽपि केवलप्रमाणतापत्तिरित्यत आह ॥ **इदं चेति** । यथार्थज्ञानमित्यर्थः । नोक्तरूपकैवल्यमात्राभिमतं किन्तु साक्षाज्ज्ञेयविषयीकारित्वम् । ननूक्तं करणानामपि साक्षाद्वस्तुविषयत्वमस्तीति चेत् । सत्यम् । साक्षाज्ज्ञेयविषयीकारित्वं नाम स्वविषये ज्ञेयत्वावधाने स्वात्मान्यानपेक्षत्वम् । तच्च पटादिप्रमितेरेवास्ति न करणानाम् । लिङ्गज्ञानादेर्लिङ्ग्यादौ ज्ञेयत्वावधाने स्वात्मान्यानुमित्यादिसापेक्षत्वात् । अतो न लिङ्ग्याद्यंशे लिङ्गज्ञानादेः केवलतापत्तिरिति । लक्षणे तु साक्षादित्यविवक्षितमिति ज्ञानपदमर्थवदिति भावः ।

**विज.**— ॥ **केवलमिति** । साक्षाज्ज्ञेयविषयकं यथार्थमित्यर्थः ॥ **अनुप्रमाणमिति** । यथार्थत्वे सति परम्पराज्ञेयविषयकमित्यर्थः । नन्वनुमाने शाब्दे च यथार्थज्ञानसाधने इदं लक्षणमतिव्यापकमत आह ॥ **लिङ्गज्ञानं चेति** । तथा च ज्ञानमानकरणतापक्षे ज्ञानपदेनैव वारणम् । लिङ्गादिज्ञानकारणतापक्षे तस्य द्विविधप्रमाणरूपत्वात्सङ्ग्राह्यत्वमेवेत्यर्थः । ननु किमिति तत्केवलमत आह ॥ **इदं चेति** ॥ **तदिति** । केवलप्रमाणमित्यर्थः ।

**वेदे.**— तद्विभागमाह ॥ **द्विविधमिति** । प्रमाणानामानन्त्येऽपि साक्षात्पारम्पर्येण यथार्थे तारतम्यज्ञापनार्थोऽयं विभागः । तदेव दर्शयन्द्वे विधे दर्शयति ॥ **केवलमिति** । प्रधानाभिप्रायेण प्रथममुद्दिष्टं केवलं लक्षयति ॥ **तत्रेति** ॥ **ज्ञानमिति** ॥ **प्रत्यक्षस्येति** । यद्यप्यनुप्रमाणमात्रं व्यावर्तनीयम् । यथार्थं केवलमित्युक्तेऽनुप्रमाणमात्रेऽतिव्याप्तिप्रसक्तेः । तथाऽपि लिङ्गज्ञानवाक्यज्ञानयोरनुमानागमरूपयोर्ज्ञानात्मकत्वेन व्यावर्त्यमित्यनुपदमेव वक्ष्यामः । अत एव प्रमाणलक्षणटीकायां

ज्ञानमित्यनुप्रमाणव्युदास इति स्पष्टमुक्तम् । नन्वथाऽपि लिङ्गज्ञानवाक्यज्ञानयोरनुमानागमलक्षणानुप्रमाणयोरतिव्याप्तिस्तयोरपि यथार्थज्ञानत्वादित्यत आह ।। **लिङ्गज्ञानमिति ।** अयमाशयः । यथार्थत्वे सति ज्ञानत्वमित्येव न लक्षणम् । येन लिङ्गज्ञानादावतिव्याप्तिः स्यात्किन्तु यद्विषयापेक्षया यथार्थत्वमुपपादनीयम् साक्षात्तद्विषयकज्ञानत्वमेव लक्षणत्वेन विवक्षितम् । एवं च लिङ्गज्ञानवाक्यज्ञानयोर्लिङ्गिवाक्यार्थापेक्षया याथार्थ्यविवक्षायां साक्षात्तद्विषयकज्ञानत्वावश्यम्भावाल्लिङ्गिवाक्यरूपविषयापेक्षया याथार्थ्योपपादने तु साक्षात्तद्विषयकज्ञानज्ञानत्वभागस्यापि तत्र सत्त्वेन लक्ष्यत्वान्न कुत्राप्यतिव्याप्तिरिति । केचित्तु तयोरपि लक्ष्यत्वान्नातिव्याप्तिरिति भाव इत्याहुः । तच्चिन्त्यम् । लिङ्गवाक्यरूपविषये तयोर्लक्ष्यत्वेन तदपेक्षयाऽतिव्याप्त्यभावेऽपि लिङ्गिवाक्यार्थापेक्षयाऽपि तयोः केवलत्वापत्तेरपरिहारादिति । ननु यथार्थज्ञानस्य केवलमिति संज्ञा कुत इत्यत आह ।। **इदं चेति ।** यद्यपि संज्ञानिरुक्त्यैव लक्षणं सिध्यति । तथाऽपि शृङ्गिग्रहाकतया तज्ज्ञापनार्थं यथार्थमानं केवलमित्युक्तम् ।

**अभि.––** ।। **यथार्थमिति ।** यथार्थमिति विशेषणात्संशयादेः केवलनिरास इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । अस्ति तावत्केवलं नाम प्रमाणमिति वार्ता श्रुतवतः संशयादौ प्रत्यक्षे च केवलबुद्धिः प्रसक्ता । ततो यथार्थज्ञानं केवलमिति तल्लक्षणज्ञाने यथार्थमिति विशेषणेन संशयादेः केवलत्वबुद्धिनिरासः । ज्ञानमिति विशेषणेन तु प्रत्यक्षस्य केवलबुद्धिनिरास इति विवेकः । एतेन यथार्थमिति संशयादवतिव्यप्तिनिरास इति वक्तव्यं न तु संशयादिव्युदास इति परास्तम् । अस्य लक्षणस्य लिङ्गज्ञाने चातिव्याप्तिरित्यत आह ।। **लिङ्गज्ञानमिति ।** यद्यपि लिङ्गवाक्य एवनुप्रमाणे । तथाऽप्यवान्तरप्राधान्यविवक्षयाऽनुप्रमाणत्वमङ्गीकृत्यैवमुक्तम् । अत एव न निर्दोषोपपत्तिरनुमानमित्युत्तरग्रन्थविरोधः । ननु लिङ्गज्ञानं वाक्यज्ञानं लिङ्गे वाक्ये च केवलप्रमाणमिति नातिव्याप्तिरित्ययुक्तम् । लिङ्गे वाक्ये च केवलत्वेऽपि लिङ्ग्यादावकेवलत्वेन प्राप्त्याऽतिव्याप्तेः । लक्षणातिव्याप्त्युत्पादनेनैव परिहर्तव्यत्वात् । न ह्युपपत्तिरनुमनमित्यनुमानलक्षणस्य शब्दो नित्यः कृतकत्वादित्यत्राप्यतिव्याप्तौ उद्भावितायां कृतकत्वस्य नित्यत्वं प्रत्याभासत्वेऽप्यनित्यत्वं प्रत्यनुमानत्वान्नातिव्याप्तिरिति परिहरति । किन्तु निर्दोषपदेनैव चेत् । उच्यते । अस्य वा लिङ्गज्ञानवाक्यज्ञानयोर्विषयविशेषमादाय लक्ष्यत्वाभावे विषयविशेषं प्रति लक्ष्यत्वान्नातिव्याप्तिरिति नाभिप्रायः येनोक्तदोषः स्यात् । किं नाम नेदं सामान्यं लक्षणमपि तु यद्यस्य यथार्थज्ञानं तत्र तत्र केवलमिति तत्र तत्केवलानामेकयोक्त्या लक्षणनिरूपणम् । ततश्च वन्हिकेवललक्षणरूपधूमज्ञाने वाक्यार्थज्ञानलक्षणं वाक्यज्ञाने न वर्तत इत्याशयः । लिङ्गवाक्ये च केवलप्रमाणमित्युक्तिस्तु लिङ्गवाक्यप्रयुक्तमेव यथार्थज्ञानत्वं न तु लिङ्गवाक्यार्थप्रयुक्तमिति ज्ञापनार्था । ततश्चैवं योजना । यद्यपि लिङ्गज्ञानं वाक्यज्ञानं लिङ्गिनि वाक्यार्थे च न प्रमाणमित्यलक्षणम् ।

तथाऽपि न लिङ्गवाक्यं वाक्यार्थयोः केवलयथार्थज्ञानमिति यावत् । अपि तु लिङ्गे वाक्ये च लिङ्गवाक्ययोरेव केवलं यथार्थज्ञानम् । ततश्च लक्षणाभावान्नातिव्याप्तिरिति । एतल्लक्षणज्ञाने प्रयोजनमाह ॥ **साक्षाज्ज्ञेयविषयीकारित्वादिति** । इदं च ज्ञानं साक्षाज्ज्ञेयविषयीकारित्वाद्यथार्थज्ञानत्वात्केवलमिति व्यवह्रियत इत्यर्थः । यथार्थज्ञानं केवलमिति लक्षणज्ञाने च यद्यथाज्ञानं जानाति तत्तत्केवलशब्दवाच्यं प्रत्येतीति भावः ।

**आद.—** ॥ **संशयादिव्युदास इति** । यथार्थपदस्योक्तरीत्या दोषप्रयोज्यविषयताशून्यत्वार्थकत्वदिति भावः ॥ **साक्षादिति** । इतराप्रयोज्यत्वविषयितावत्त्वादित्यर्थः ।

**वि.—** प्रमाणविभगमाह ॥ **द्विविधं प्रमाणमिति** । प्रमाणानामानन्त्येऽपि साक्षात्पारम्पर्येण याथार्थ्यज्ञापनार्थोऽयं त्रिभागः । द्विविधे प्राधान्याप्रधान्यानुसारेणोद्दिशयति ॥ **केवलमनुप्रमाणं चेति** । केवलप्रमाणमित्यर्थः । प्रथमोद्दिष्टं लक्षयति ॥ **तत्रेति** । तयोर्यथावस्थितज्ञेयविषयीकारिज्ञानं केवलप्रमाणमित्यर्थः । विशेषणकृत्यमाह ॥ **यथार्थेति** । विपर्यय आदिशब्दार्थः ॥ **प्रत्यक्षस्येति** । व्युदास इत्यनुवर्तते । केवलप्रमणलक्षणस्यानुप्रमाणे लिङ्गज्ञाने वाक्यज्ञाने चातिव्याप्तिमाशङ्क्यापाकरोति ॥ **लिङ्गज्ञानं वाक्यज्ञानं चेति** । लिङ्गमनुमेयमित्यर्थः । इति हेतेरतिव्याप्तेर्दोषो नास्तीत्यर्थः । लक्ष्यत्वात्तत्र लक्षणसत्त्वं न दोष इति भावः । ननु लक्ष्यवदलक्ष्यत्वस्यापि सत्त्वात्कथं तत्र लक्षणसत्त्वं न दोषः । न च तत्र लिङ्गांशे वाक्यांशे केवल प्रमाणलक्षणस्य सत्त्वेऽपि लिङ्गयंशे वाक्यार्थांशे तन्नास्तीति वाच्यम् । यथावस्थितज्ञेयविषयीकारित्वे सति ज्ञानत्वस्य तल्लक्षणस्योभयत्र साम्यात् । अत एवानुप्रमाणगतविशेषणव्यावृत्तिकथनावसरे यथार्थज्ञानमित्येवोक्ते प्रत्यक्षेऽव्याप्तिश्चे युक्तमिति चेन्न । साक्षाज्ज्ञेयविषयीकारित्वस्यात्र लक्षणतया विवक्षितत्वात् । अत एवेदं साक्षाज्ज्ञेयविषयीकारित्वात्केवलमित्युच्यत इति वक्ष्यति । न हि तत्पदप्रवृत्तिनिमित्तं लक्षणं नेति सम्भवति । तदसाधारणधर्मस्यैव तत्पदप्रवृत्तिनिमित्तत्वात् । न चैवं ज्ञानपदवैय्यर्थ्यप्रसङ्गः । तस्यैव साक्षादित्यर्थपरत्वेनावैय्यर्थ्यात् । अमुख्यप्रयोगे किं निमित्तमिति चेत् । शृङ्गिग्राहकया केवलप्रमाणज्ञानमिति ब्रूमः । तदुक्तं प्रमाणलक्षणटीकायाम् । संज्ञानिरुक्त्यैव लक्षणे सिद्धे शृङ्गिग्राहकया तज्ज्ञापनार्थं पृणग्लक्षणारम्भ इति । यथार्थज्ञानतत्साधनयोर्याथार्थ्याविशेषाद्यथार्थज्ञानं केवलमित्युक्तौ किं निमित्तमिति जिज्ञासायामाह ॥ **इदं चेति** । इदं केवलप्रमाणमित्युच्यत इत्यर्थः । यद्यपि ज्ञेयविषयीकारित्वमुभयत्र समानं तथाऽपि ज्ञानमुपाधितया ज्ञेयताशरीरप्रविष्टत्वेन ज्ञेयतासम्पादकं ज्ञानसाधनं तु ज्ञेयताशरीरप्रविष्टज्ञानसम्पादकतया ज्ञेयतासम्पादकमिति विशेषणं ज्ञानं साक्षाज्ज्ञेयविषयीकारितत्साधनमिति बोध्यम् ।

# केवलज्ञानस्य चातुर्विध्यम्

(१७) प्र.प.— **तच्च चतुर्विधम् । ईश्वरज्ञानं लक्ष्मीज्ञानं योगिज्ञानमयोगिज्ञानं चेति । तत्र सर्वार्थविषयकमीश्वरज्ञानम् । नियमेन यथार्थम् । तत्स्वरूपमनादिनित्यम् । स्वतन्त्रम् । निरतिशय-स्पष्टं च । ईश्वरे त्वसार्वत्रिकमन्यत्रानालोचनेऽपि सर्वविषयं लक्ष्मीज्ञानम् । तदपि नियमेन यथार्थम् । तत्स्वरूपमनादि नित्यं च । ईश्वरैकाधीनम् । तदपेक्षया स्पष्टत्वे न्यूनम् । स्पष्टत्वं चापरोक्षत्ववज्ज्ञानगत एव विशेषो न विषयोपाधिकः ।**

**जना.**— ॥ **निरतिशयस्पष्टं चेति** । अत्र स्पष्टशब्दो भावप्रधानः । स्वनिष्ठस्पष्टतानिरूपित-स्पष्टतारहितमित्यर्थः ॥ **ईश्वरे त्वसार्वत्रिकमिति** । अत्र ज्ञानं लक्ष्मीज्ञानमित्युक्तेऽस्मदादि-ज्ञानेऽति-व्याप्तिप्रसङ्गः । अतः सर्वविषयमिति । सर्वविषयं लक्ष्मीज्ञानमित्युक्ते आलोचनदशापन्नऋजुज्ञाने गतम् । अतोऽनालोचन इति । अनालोचने सर्वविषयं लक्ष्मीज्ञानमित्युक्ते ईशे लक्ष्मीज्ञानस्यानालोचने सर्वविषयकत्वाभावादसम्भवः । तद्वारणायेश्वरेऽसार्वत्रिकमिति व्युत्क्रमेण व्यावर्त्यानि । क्रमेण व्यावर्त्यानि तु सुगमानि । लक्ष्मीज्ञानस्य लक्षणान्तरमाह ॥ **ईश्वरेति** । अत्र ज्ञानमिति शेषः । अतो न लक्ष्म्यामतिव्याप्तिः । ईश्वरलक्ष्म्युभयाधीनऋजुज्ञानेऽतिव्याप्तिवारणायैकेति ॥ **तदपेक्षयेति** । ईश्वरज्ञाना-पेक्षयेत्यर्थः । ननु स्पष्टत्वं यदि रेखोपरेखादिततत्पदार्थनिष्ठयावद्धर्मविषयीकारित्वं तदा तदीश-लक्ष्मीज्ञानयोरुभयोरपि समम् । अन्यत्रानालोचनेऽपि सर्वविषयमिति स्वोक्तेः । तत्कथं तदपेक्षया स्पष्टत्वे न्यूनत्वमित्याशङ्क्य विवक्षितं स्पष्टत्वशब्दार्थमाह ॥ **स्पष्टत्वं चेति** । ज्ञानगत एवेत्युक्ते न विषयगत इति प्रतीयते । तथा च प्रकृतासङ्गतिरित्याशङ्क्यैवकारेण व्यावर्त्यं दर्शयति ॥ **न विषयेति** । न रेखोपरेखादियावद्धर्मविषयकत्वरूपमित्यर्थः ।

**राघ.**— ॥ **तदिति** । यथार्थज्ञानमित्यर्थः । तारतम्यक्रमेण निर्दिशति ॥ **ईशेति** । निर्देशक्रमेण तेषां स्वरूपमह ॥ **तत्रेति** । चतुर्षु मध्ये तत्स्वरूपमीशेन सविशेषाभिन्नमित्यर्थः । अत एवानादिनित्यं स्वतन्त्रं चानन्याधीनमित्यर्थः ॥ **निरतिशयस्पष्टमिति** । एतस्मादतिशयितं स्पष्टं नास्तीदमेव सर्वातिशयितस्पष्टमित्यर्थः । ईश इति विषयसप्तमी ॥ **अन्यत्रेति** । ईशादिति सम्बध्यते । आलोचनं मनःप्रणिधानविशेषः । तदभावेऽपीत्यर्थः । सर्वविषयमित्येवोक्तावसम्भवः । अत ईशेऽसार्वत्रिक-मिति । व्याहतिनिरासायेशादन्यत्रेति । ब्रह्मज्ञानव्यावृत्त्यर्थमनालोचनेऽपीति ।

**विज.**— प्रथमोद्दिष्टत्वादीश्वरज्ञानं लक्षयति ॥ **तत्र सर्वार्थविषयमिति** । सर्वधर्मिनिष्ठया-वद्धर्मप्रकारकमित्यर्थः ॥ **नियमेनेति** । सर्वप्रकारावच्छेदेनेत्यर्थः ॥ **स्वतन्त्रमिति** । स्वाधिकविषयक-

ज्ञानासहकारिकमित्यर्थः । यद्वा स्वान्यूनविषयकज्ञानासहकारिकज्ञानमित्यर्थः । यद्वेच्छाद्यतिरिक्तत्वे सतीश्वरातिरिक्तत्वे सति स्वाश्रयाधिकासहकारिकमित्यर्थः ॥ **निरतिशयस्पष्टं चेति ।** सर्वोत्कृष्टत्वाश्रय इत्यर्थः । अत्र तु सर्वार्थविषयत्वं स्वातन्त्र्यं निरतिशयस्पष्टत्वं च प्रत्येकमेकमेव लक्षणम् । साहित्य-वैय्यर्थ्यात् । इतरत्तु स्वरूपनिर्वचनमित्यवधेयम् । लक्ष्मीज्ञानं लक्षयति ॥ **ईश्वरे त्विति ।** अनालोचनेऽपि प्रणिधानं विनाऽपीत्यर्थः ॥ **सर्वविषयमिति ।** प्रणिधानं विनेश्वरातिरिक्तसकलधर्मि-निष्ठयावद्धर्मप्रकारकमित्यर्थः ॥ **ईश्वरैकाधीनमिति ।** स्वाश्रयाधिकेश्वरैकसहकारिकमित्यर्थः ॥ **तदपेक्षयेति ।** ईश्वरज्ञाननिष्ठस्पष्टत्वमात्रावधिकापकर्षाश्रयस्पष्टत्ववदित्यर्थः । अत्रापि पूर्ववत्प्रत्येकमेव लक्षणमित्यवधेयम् । ननु स्पष्टत्वमशेषविशेषविषयकत्वम् । तच्च सर्वार्थविषयमित्यनेन गतार्थमित्यत आह ॥ **स्पष्टत्वं चेति ।**

**वेदे.—** इदानीं तद्विभागमाह ॥ **तच्चेति ।** अयमपि महावैलक्षण्यज्ञापनार्थो विभागः । प्राधान्यक्रमेणोद्दिशति ॥ **ईश्वरज्ञानमिति ।** तत्रेश्वरज्ञानं लक्षयति ॥ **सर्वार्थेति ।** स्वपरगताखिल-विशेषविषयमित्यर्थः । लक्ष्मीज्ञानादेरीशादन्यत्रैव सर्वविषयकत्वं नेश्वरेऽपीति भावः । नन्वस्मदादि-ज्ञानं कदाचिदयथार्थं मनोवृत्तिरूपं जन्यमनित्यमस्वतन्त्रं सातिशयं स्पष्टं च दृश्यते । ईश्वरज्ञानमपि किं तादृशं नेति भावेन तत्स्वरूपमाह ॥ **नियमेनेत्यादिना ।** यद्वा स्वतन्त्रं निरतिशयस्पष्टं चेति लक्षणान्तरमितरत्स्वरूपकथनम् । स्वतन्त्रमित्यत्र ज्ञानपदं संयोज्यते तेनेश्वरेऽतिव्याप्तिः । लक्ष्म्यादि-ज्ञाननिरासाय निरतिशयेति । लक्ष्मीज्ञानं लक्षयति ॥ **ईश्वरे त्विति ।** ईश्वरज्ञाननिवृत्त्यर्थमीश्वरे त्वसार्वत्रिकमित्युक्तम् । अन्यत्र सर्वविषयमित्यस्मदादिज्ञाननिरासः । व्याघातपरिहारार्थमन्येत्रेत्युक्तम् । ईशादिति शेषः । ऋजुज्ञानेऽतिव्याप्तिपरिहारायानालोचनेऽपीत्युक्तम् । तस्यालोचने सर्वविषयकत्वं वक्ष्यति । अत्र सर्वदेत्यपि ग्राह्यम् । अतो मुक्त्यवस्थापन्ने ऋजुज्ञानेऽनालोचनेऽप्यन्यत्र सर्वविषये नातिव्याप्तिरिति ध्येयम् । तदपीत्यादि पूर्ववत् । यद्वा लक्षणान्तरमाह ॥ **ईश्वरेति ।** अत्रेशाधीन-मितीशज्ञाननिरासः । एकेति ब्रह्मादिज्ञाननिरसः । लक्ष्मीव्यावृत्त्यै ज्ञानपदं संयोज्यम् । न च लक्ष्मी-ज्ञानं लक्ष्म्यधीनमपि भवतीत्यसम्भवः । ईशैकाधीने ईशज्ञानेऽतिव्याप्तिश्चेति वाच्यम् । अत्राधीनत्वस्य भेदगर्भस्यैव विवक्षितत्वात् । लक्षणान्तरमाह ॥ **तदपेक्षयेति ।** अत्र तन्मात्रापेक्षयेति विवक्षितत्वान्न ब्रह्मादिज्ञानेऽतिव्याप्तिः । यद्वेशलक्ष्मीज्ञानयोरीश्वरादन्यत्र सर्वविषयकत्वमुक्तम् । तत्र तयोः साम्यमेव किं नेत्याह ॥ **तदपेक्षयेति ।** जगद्विषय इति शेषः । नन्वेवं लक्ष्मीज्ञानं जगद्विषये ईशज्ञानापेक्षयाऽ-स्पष्टमित्युक्ते लक्ष्मीज्ञानं जगति किञ्चित्पदार्थाविषयकारीति प्राप्तम् । ज्ञाने स्पष्टत्वस्य विषयोपाधि-कत्वात् । तथा चान्यत्र सर्वविषयकमित्युक्तव्याधात इत्यत आह ॥ **स्पष्टत्वं चेति ।** अपरोक्षेऽपि विषये शब्दादीना परोक्षज्ञानोदयेन नापरोक्षत्वं विषयोपाधिकमिति भावः ।

**अभि.—** ईश्वरज्ञानस्य लक्षणमाह ॥ **सर्वार्थविषयमिति ।** घटेन्द्रियसन्निकर्षादिनाऽभिव्यक्तिरीश्वरज्ञानमचिन्त्यशक्तत्वात्पटादिसर्वविषयमिति नाव्याप्तिरिति द्रष्टव्यम् । ईश्वरज्ञानं सर्वमपि केवलप्रमाणमिति भावेनाह ॥ **नियमेन यथार्थमिति ।** यद्यदीश्वरज्ञानं तत्सर्वं यथार्थमित्यर्थः । अचिन्त्यशक्तित्वोपपादकमाह ॥ **तत्स्वरूपमिति ।** सादिविनाशिनो ज्ञानस्येश्वरस्वरूपत्वं युज्यत इत्यत आह ॥ **अनादित्वमिति ।** अनादिनित्यत्वेऽपि तत्स्वरूपत्वं न युज्यते । परतन्त्रत्वादित्यत आह ॥ **स्वतन्त्रमति ।** एवं सातिशयस्पष्टस्य नेश्वरस्वरूपत्वं युज्यत इत्यत आह ॥ **निरतियस्पष्टं चेति ॥ ईश्वरे सार्वत्रिकमिति ।** यद्यपि नित्यमुक्तत्वान्महालक्ष्म्या आलोच्यसंज्ञकं तपो नास्ति । तथाऽप्यन्यत्सर्वविषयमित्यर्थः । ईश्वरेऽसार्वत्रिकमनालोचने सर्वविषयं लक्ष्मीज्ञानमित्युक्तं भवति । ईश्वरज्ञानं व्यावर्तयितुमीशेऽसार्वत्रिकमिति विशेषितम् । ऋजुज्ञानं व्यावर्तयितुमनालोचन इति पदम् । अस्मदादि ज्ञानं व्यावर्तयितुं सर्वविषयमिति । लक्ष्मीज्ञानस्याप्यचिन्त्यशक्तित्वमुपपादयितुं पूर्ववद्विशेषणान्याह ॥ **तदित्यादिना ।** नन्वीश्वरज्ञानलक्ष्मीज्ञानयोरन्यत्र सर्वविषयकत्वाविशेषाल्लक्ष्मीज्ञानं तदपेक्षया स्पष्टत्वे न्यूनमित्ययुक्तमित्यत आह ॥ **स्पष्टत्वं चेति ।**

**श्रीनि.—** ॥ **सर्वार्थविषयकमिति ।** स्वस्वातिरिक्ताशेषधर्मिगताशेषधर्मप्रकारकमित्यर्थः । अत्रेदं बोध्यम् । ईश्वरस्यानन्तरूपवज्ज्ञानान्यप्यनन्तानि सन्ति । मय्यनन्तगुणेऽनन्तगुणतोऽनन्त इत्यत्रानन्त गुण इति गुणानामपि प्रत्येकमानन्त्याभिधानात् । तत्र व्याप्तरूपं यथा सर्ववस्तुगतं तथा ज्ञानमप्यशेषपदार्थविषयकम् । यथा चैकैकवस्तुमात्रगता निरूपान्तराणि सन्ति । तथैकैकमात्रविषयकज्ञानान्तराणि । यथा चैकगतरूपाणां वस्त्वन्तरगतत्वस्य शक्त्यात्मना सर्वेऽपि न व्यक्त्यात्मना सत्त्वम् । तथा चैकविषयज्ञानानां वस्त्वन्तरविषयकत्वस्य शक्त्यात्मना सत्त्वेऽपि न व्यक्त्यात्मना सत्त्वम् । यथा च व्याप्तरूपाणामानन्त्यं तथा सर्वविषयकज्ञानमपि । एवमेकैकविषयाणामपि । एतेनेश्वरस्य सर्वपदार्थविषयं समूहालम्बनरूपज्ञानमेवास्ति नैकैकमात्रविषयकमिति न्यूनतेति परास्तम् । उक्तरीत्योभयोरपि सत्त्वात् । यद्वा यज्ज्ञानं सर्वार्थविषयं तदेकैकमात्रविषयकमपि भवति । ज्ञानेऽनन्तविशेषाणां सत्त्वात् । उक्तं च सुधायाम् । अनन्ते गुण इति प्रत्येकमनवधिकत्वमनन्तावान्तरविशेषवत्त्वं चोच्यत इति । अनुभूयते चास्मदादिसमूहालम्बनज्ञानेऽप्येकैकविषयत्वादिविशेषा इति ॥ **असार्वत्रिकमिति ।** सर्वधर्माप्रकारकमित्यर्थः ॥ **अनालोचन इति ।** मनःप्रणिधानं विनेत्यर्थः ॥ **सर्वविषयगमिति ।** सर्वधर्मप्रकारकमित्यर्थः ।

**वि.—** केवलप्रमाणविभागमाह ॥ **तच्चतुर्विधमिति ।** महावैलक्षण्यज्ञापनार्थोऽयं विभागः । चतस्रो विधाः क्रमेणोद्दिशति । **ईश्वरज्ञानमिति ।** प्रथमोद्दिष्टमीश्वरज्ञानं लक्षयति ॥ **तत्र सर्वार्थ-**

**विषयकमिति ।** ज्ञानमिति शेषः । तत्र तेषु चतुर्विधेषु सर्वे ये परमार्थास्तद्विषयीकारिज्ञानमीश्वर ज्ञानमित्यर्थः । ईश्वरप्रत्यक्षेऽनुप्रमाणेऽतिव्याप्तिवारणाय ज्ञानपदम् । तत्त्वविवेकटीकायां परमार्थो दोषार्थज्ञमेव सार्वज्ञमित्यङ्गीकाराच्छुक्तिरूपाद्यपरमार्थाविषयकत्वेनासम्भविनिराकरणाय परमार्थपदम् । अस्मदादिज्ञानव्यवच्छेदाय सर्वेति विशेषणम् । न च सर्वं सामान्यतो यस्मात्सर्वैरप्यनुभूयत इति भगवत्पादोक्तेः सर्वेषामपि सामान्यतः सर्वार्थज्ञानसद्भावात्तस्मिन्नस्मदादिज्ञानेऽतिव्यातिरिति वाच्यम् । अशेषैर्विशेषैः सर्वार्थविषयकत्वस्य विवक्षितत्वात् । अत एव खलु प्रमाणलक्षणे पूर्वं स्वपर गताशेषमित्युक्तम् । अस्मदादिज्ञानं यथार्थमयथार्थं च दृश्यत इतीश्वरज्ञानमप्ययथार्थं किञ्चिदस्तीति प्रतीतिः स्यात् । तद्वारणायाह ॥ **नियमेन यथार्थमिति ।** ईश्वरज्ञानमित्यनुवर्तते । नियमोऽयथार्थत्व-रूपपक्षान्तरव्यवच्छेदस्तेन यथार्थं यथार्थमेवेत्यर्थः । रामानुजादिमत इवेश्वरधर्मत्वात् तद्व्यतिरिक्तमिति भ्रमवारणायाह ॥ **तत्स्वरूपमिति ।** तस्येश्वरस्य स्वरूपमेवेत्यर्थः । भेदाभावेऽपि विशेषबलाद्धर्म-धर्मिभावो युक्त इति बोध्यम् । नन्वीश्वरज्ञानस्य देवदत्तोऽपचदिति तत्तदैक्षतेति भवनमुच्यते । तत एव तद्विनाशीति कथं तस्येश्वरभेदराहित्यमित्यत आह ॥ **अनादिनित्यमिति ।** उत्पत्तिविनाशरहित-मित्यर्थः । देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः । अवरुद्धावबोधात्मेति भागवतोक्त्यादि-भिरागमेश्वरज्ञानस्य वृद्धिह्रासोत्पत्त्यादिराहित्यकथनाद्भूत्वाभवनविषयं तद्वाक्यमिति नेश्वरज्ञानस्य भूत्वा भावितरूपं कार्यत्वमित्यनुसन्धेयम् । अनादिनित्यत्वेऽप्यकाशादिवत्परतन्त्रमिति न मन्तव्यमित्याह ॥ **स्वतन्त्रमिति ।** स्वसत्तादावन्यानपेक्षमित्यर्थः । इतरज्ञानवन्नेश्वरज्ञानं सातिशयस्पष्टमित्याह ॥ **निरतिशयस्पष्टं चेति ।** स्पष्टत्वं च ज्ञानगतो ज्ञानविशेष इति स्वयमेव स्पष्टीकरिष्यति । लक्ष्मीज्ञानं लक्षयति ॥ **ईश्वरे सार्वत्रिकमिति ।** सर्वविषयमित्यनन्तरं ज्ञानमिति शेषः । ईश्वरे विषयेऽसार्वत्रिकं सर्वाविषयकमन्यत्रेश्वरादन्यत्र विषयेऽनालोचनेऽप्यालोचनाभावेऽपि सर्वविषयकं ज्ञानं लक्ष्मीज्ञान-मित्यर्थः । लक्ष्मीप्रत्यक्षेऽतिव्याप्तिपरहिराय ज्ञानपदम् । ईश्वरज्ञानेऽतिव्याप्तिनिरासार्थमीश्वरेऽ-सार्वत्रिकमिति विशेषणम् । ईश्वरादन्यत्रेति विशेषणमसम्भविपरिहारार्थम् ! ऋजुज्ञानेऽतिव्याप्ति-परिहारायानालोचनेऽपीत्युक्तम् । यद्यप्यतिशब्दव्यतिरेकेणापि तद्व्यावृत्तिर्भविष्यति । तथाऽपि ऋजु-ज्ञानेऽनालोचन एव सर्वविषयमिदं त्वालोचनाभावेऽपि सर्वविषयमिति स्पष्टम् । तद्व्यावृत्तिज्ञानपार्थं तदुपपादनमिति शुक्तिरूप्यादावसति भेदः । सन्नेवेति सिद्धान्तश्चेत्सर्वपदं परमार्थपरम् । अन्यथा शुक्तिरूप्याद्यविषयत्वेनासम्भवापातात् । यदि च भेदस्य धर्मिस्वरूपत्वादसति भेदः स्वसन्नेति दृष्टान्तः तदेश्वरादन्यत्रेश्वराद्भेदवतीत्यनेनैवासम्भवपरिहारात्सर्वपदं यथाश्रुतमेव । ऋजुलक्षणवाक्येऽ-प्येवमनुसन्धेयम् । लक्ष्मीज्ञानस्येश्वरविषये ईश्वरज्ञानतो वैलक्षण्यवद्याथर्थ्यनियमादित ईश्वरा-

द्वैलक्षण्यमस्तीति न ज्ञेयमित्याह ॥ **नियमेन यथार्थं तत्स्वरूपमनादिनित्यं चेति** । लक्ष्मीज्ञानमित्यनुवर्तते । याथार्थ्यनियमादिसाम्यवत्स्वातन्त्र्यादिसाम्यमप्यस्तीति शङ्का स्यात्तां वारयितुमाह ॥ **ईश्वरैकाधीनं तदपेक्षया स्पष्टत्वे न्यूनमिति** । सत्यपि पारतन्त्र्यादौ नास्मदादिज्ञानवदनेकाधीनं नाप्यनेकज्ञानापेक्षया स्पष्टत्वे न्यूनमिति ज्ञापयितुमेकेति तदपक्षयेति चोक्तम् । तदपेक्षयेश्वरज्ञानापेक्षयैवेत्यर्थः । नन्वीश्वरज्ञानापेक्षया लक्ष्मीज्ञानस्य न स्पष्टत्वे न्यूनता । ज्ञानस्य स्पष्टत्वं नाम सम्यगर्थविषयीकारित्वम् । तस्येश्वरादन्यत्र लक्ष्मीज्ञानेऽपि सत्त्वादित्यत आह ॥ **स्पष्टत्वं चेति** । स्पष्टत्वं त्वपरोक्षत्ववज्ज्ञानगत एव विशेषः । ज्ञानगतो जातिविशष एव न तु विषयोपाधिकः सम्वगर्थविषयीकारित्वरूपो विषयघटितो ज्ञानधर्मो नेत्यर्थः ।

## योगिज्ञानप्रभेदाः

(१८) प्र.प.— **योगप्रभावलब्धातिशयं योगिज्ञानम् । तत्त्रिविधम् । ऋजुयोगिज्ञानं तात्त्विकयोगिज्ञानमतात्त्विकयोगिज्ञानं चेति । ऋजवो नाम ब्रह्मत्वयोग्या जीवाः । ईश्वरादन्यत्रालोचने सर्वविषयं तज्ज्ञानम् । ईश्वरे त्वसार्वत्रिकमेव । तद्द्विविधम् । स्वरूपं मनोवृत्तिरूपं चेति । तत्र स्वरूपमनादिनित्यम् । योगप्रभावादामुक्तेर्व्यक्त्यतिशयोपेतम् । मुक्तावेकप्रकारम् । वृत्तिज्ञानं तु प्रवाहतोऽनादि । योगानुगृहीतप्रत्यक्षादिजन्यम् । मुक्तौ तु नास्त्येव । द्वयमपि नियमेन यथार्थम् । ईश्वरे त्वन्यजीवेभ्योऽधिकविषयम् । तदतिरिक्तास्तत्त्वाभिमानिनो देवास्तात्त्विकाः । अनादित्वे सतीश्वरादन्यत्रालोचनेऽप्यसर्वविषयं तज्ज्ञानम् । तदपि स्वरूपं बाह्यं चेति द्विविधम् । तस्यानादित्वं पूर्ववत् । स्वरूपं ययार्थमेव । बाह्यं कदाचिदयथार्थमपि । तद्व्यतिरिक्ता देवादयो योगिनोऽतात्त्विकाः । सादित्वे सतीश्वरादन्यत्राल्पाज्ञानयुक्तं तज्ज्ञानम् । तदपि पूर्ववद्द्विविधम् । तत्र स्वरूपस्य सादित्वं व्यक्त्यपेक्षया । अन्यस्य प्रवाहोत्पत्त्यपेक्षया । याथार्थ्यानियमादि पूर्ववत् ।**

**जना.—** ॥ **योगप्रभावेति** । योगो नाम मनसः प्रणिधानं तत्सामर्थ्यलब्धोऽतिशय उत्पत्तिर्व्यक्तिर्वा यस्य तदिति यथासम्भवं द्रष्टव्यम् । ऋजुयोगिज्ञानलक्षणमाह ॥ **ईश्वरादिति** । ज्ञानमृजुयोगिज्ञानमित्युक्तेऽयोगिज्ञानेऽतिव्याप्तिः । अतः सर्वविषयमिति । तावत्येवोक्तेऽनालोचनदशापन्नऋजुज्ञानेऽतिव्याप्तिर्लक्ष्मीज्ञानेऽतिव्याप्तिश्च । अत आलोचन इति । आलोचने सत्यपि ऋजुयोगिज्ञानस्येशे सर्वविषयत्वाभावादसम्भववारणायेश्वरादन्यत्रेत्युक्तम् । ऋजूनां स्वरूपज्ञाने योगिज्ञानसामान्यलक्षणमुपपादयति ॥ **योगप्रभावादिति** । आमुक्तेरिति पदद्वयम् । आङ्मर्यादाऽभिविध्योरित्यव्ययीभावस्य वैकल्पिकत्वादत्र चाङो मर्यादार्थकत्वात् । व्यक्तिर्नामाधिकविषयत्वम् ।

तदीयवृत्तिज्ञाने योगिज्ञानसामान्यलक्षणमुपपादयति ।। **योगानुगृहीतेति ।** ननु मुक्तौ ऋजुज्ञानस्यैक-प्रकारत्वेन योगप्रभावलब्धातिशयत्वाभावादव्याप्तिरिति चेन्न । योगप्रभावलब्धातिशययोग्यज्ञानत्वस्य विवक्षितत्वात् । योग्यतायाश्च मुक्तावपि सत्त्वेन नाव्याप्तिः । यदा कदाचित्फलदानमात्रेणैव योग्यतायाः साफल्यान्न नैष्फल्यशङ्काऽपि । तात्त्विकयोगिज्ञानलक्षणमाह ।। **अनादित्वे सतीति ।** अत्र ज्ञानमित्येवोक्ते ईश्वरज्ञानेऽतिव्याप्तिः । अतोऽसर्वविषयमिति । असर्वविषयं ज्ञानमित्येवोक्ते लक्ष्मी-ज्ञानेऽतिव्याप्तिः । तज्ज्ञानस्येशादन्यत्राप्यनालोचनदशायामसर्वविषयत्वात् । अत उक्तमनादित्वे सतीति । अतात्त्विकयोगिज्ञानस्य सादित्वस्य वक्ष्यमाणत्वान्नातिव्याप्तिः ।। **तस्यानादित्वं पूर्ववदिति ।** ऋजुयोगिज्ञानवत्स्वरूपज्ञानमनादिनित्यम् । वृत्तिज्ञानं तु प्रवाहतोऽनादीत्यर्थः ।। **तद्व्यतिरिक्ता इति ।** तात्त्विकरुद्रादिव्यतिरिक्ता इत्यर्थः ।। **सादित्वे सतीति ।** ज्ञानत्वमतात्त्विकयोगिज्ञानलक्षण-मित्युक्ते ईशज्ञानेऽतिव्याप्तिः । अतोऽज्ञानयुक्तमिति । तावत्येवोक्तेऽयोगिज्ञानेऽतिव्याप्तिः । अतोऽल्पेति । तस्येशादन्यत्राज्ञानप्रचुरत्वान्न तत्रातिव्याप्तिः । तावत्येवोक्ते ईश्वरविषये लक्ष्यभूत-ज्ञानस्याज्ञानप्रचुरत्वादसम्भवः । अत ईश्वरादन्यत्रेति । तावत्येवाक्ते तात्त्विकयोगिज्ञानेऽतिव्याप्तिः । अतः सादित्वे सतीति ।। **तदपीति ।** तात्त्विकयोगिज्ञानवदतात्त्विकयोगिज्ञानमपि स्वरूपबाह्यभेदेन द्विविधमित्यर्थः । नन्वतात्त्विकयोगिनामपि स्वरूपस्यानादित्वात्तदात्मकस्य स्वरूपज्ञानस्याप्य-नादित्वेन कथं सादित्वे सतीत्यादिलक्षणमित्यत आह ।। **तत्रेति ।** स्वरूपबाह्यज्ञानयोर्मध्य इत्यर्तः ।। **व्यक्त्यपेक्षयेति ।** अनादिकालमारभ्य शक्त्यात्मना सत्त्वेऽपि योगप्रभावादिना मध्य एव सम्यक् सम्पादितव्यक्त्यपेक्षयेत्यर्थः । तथा च स्वरूपज्ञानस्य सादित्वाभावेऽपि व्यक्तिविशिष्टस्य तदस्तीति न तात्त्विकयोगिस्वरूपज्ञाने तल्लक्षणाव्याप्तिरिति भावः । अतात्त्विकयोगिनां मनोवृत्तिरूपज्ञान सादित्व-मुपपादयति ।। **अन्यस्येति ।। प्रवाहतेति ।।** अतात्त्विकयोगिनां मनोवृत्तिपरम्परायाः सर्वथा पूर्वमविद्यमानाया एव योगप्रभावादिना मध्ये एवोत्पादादिति भावः ।। **याथार्थ्यनियमादि पूर्ववदिति ।** स्वरूपं यथार्थमेव । बाह्यं कदाचिदयथार्थमपीति पूर्ववदिति भावः । अत्र वादिराजतीर्था आशङ्क्य समादधते । तथा हि । ननु तात्त्विकयोगिनामपि मनोवृत्तिरूपं ज्ञानमुत्पन्नविनष्टमेवेति तत्रानादि-त्वाभावादव्याप्तिः । मनोवृत्तेरप्यनादित्वाङ्गीकारेऽतात्त्विकयोगिनां मनोवृत्तावतिव्याप्तिः । अतात्त्विक-योगिनामपि स्वरूपभूतं ज्ञानं स्वरूपस्यानादित्वदनाद्येवेति तत्राप्यतिव्याप्तिः । स्वरूपज्ञानस्याप्य-नादित्वाभावे तात्त्विकयोगिनां स्वरूपज्ञानेऽव्याप्तिरिति चेत् । सत्यम् । तथाऽपि विवक्षाभेदेन परिहारसम्भवान्न दोषः । तथा हि । उत्पन्नविनष्टत्वेन स्वरूपानादित्वरहितस्यपि तात्त्विकयोगिनां मनोवृत्तिरूपज्ञानस्य प्रवाहतोऽनादित्वाङ्गीकारान्नाव्याप्तिः । प्रवाहपदेनात्र प्रवाह इव प्रवाह इति

गौण्या वृत्त्या प्रवाहसदृशी स्वयोग्ययावत्पदार्थविषयकज्ञानपरम्परैवोच्यते । न यत्किञ्चिज्ज्ञानपरम्परा । एवं चातात्त्विकयोगिनां मनोऽनादितोऽपि किञ्चित्किञ्चिज्ज्ञानात्येवेति तज्ज्ञानप्रवाहस्यानादित्वं स्यादिति शङ्का निरस्ता । ततश्चानादित्वं नामेदम्पूर्वताभावः । अनादिकालमारभ्य वर्तमानत्वमिति यावत् । न त्वतात्त्विकयोगिनामिव सर्वथा पूर्वमविद्यमानाया योगप्रभावादिना मध्य एवोत्पत्तिः । इयांस्तु विशेषः । ऋजुयोगिनां ज्ञानपरम्परा प्रलयेऽप्यविच्छिन्ना गङ्गाप्रवाहसदृशश्च । तात्त्विकयोगिनां तु प्रलये विच्छिन्नाऽपि पूर्वपूर्वसृष्टावनादिकालमारभ्य वर्तत एवेति जगत्प्रवाहवदनादिभूता । अतोऽस्या मध्ये मध्ये विच्छिन्ननदीप्रवाहवत्प्रवाहानादित्वं द्रष्टव्यम् । एवं सत्येतत्सृष्टिकालीनपरम्परैव पूर्वसृष्टौ नास्तीति चेत् । माऽस्तु । का नो हानिः । न हि वयं स्वरूपानादित्वं वदामः । प्रवाहानादित्वं तु पुरतः पुरतो गतप्रवाहसदृशप्रवाहादिना पूर्वं विद्यमानत्वे सत्येवालम् । एवं चेदृश-प्रवाहतोऽनादित्वस्यात्रापि सम्भवान्नाव्याप्तिः । अत एवातात्त्विकयोगिनां ज्ञानपरम्परायां नातिव्याप्तिः। सर्वथा पूर्वमविद्यमानायां मध्य एवोत्पन्नायां तस्यामीदृशानादित्वस्याप्यभावात् । स्वरूपज्ञाने तु तात्त्विकयोगिनां स्वरूपज्ञानव्यक्तेरप्यनादिकालादारभ्य वर्तमानत्वेनेदम्पूर्वताभावादनादित्वम् । अतात्त्विकयोगिनां स्वरूपज्ञानं त्वनादिकालमारभ्य शक्त्यात्मना व्यक्तिमदपि योगप्रभावादिना मध्य एव सम्यक् सम्पादितव्यक्तिमत् । न तु तद्व्यक्तिरपि तात्त्विकयोगिनामिवानादिकालमारभ्य व्यक्त्यात्मनैव वर्तमाना । दहनरूपतया विद्यमानाया एव दाहकत्वशक्तेः कालादृष्टकाष्ठादिसमवधाने सति फलोपहितत्वाख्यव्यक्तिरूपावस्थाविशेषवत्साक्षिस्वरूपयाऽनादिकालमारभ्य शक्तिरूपेण विद्य-मानायाः स्वयोग्यसकलपदार्थविषयीकरणयोग्यस्वरूपसद्व्यक्तेर्भगवत्प्रसादादिसहकारिसमवधाने सति फलोपहितत्वाख्यव्यक्तिरूपावस्थाविशेषो मध्य एव भवति । एवं च विवक्षितानादित्वस्यातात्त्विक-योगिस्वरूपज्ञानेऽप्यभावान्न तत्रातिव्याप्तिः । तात्त्विकयोगिस्वरूपज्ञाने विवक्षितानादित्वसद्भावान्ना-व्याप्तिश्च । अत एव तत्र स्वरूपस्य सादित्वं व्यक्त्यपेक्षया । अन्यस्य तु प्रवाहोत्पत्त्यपेक्षयेत्याहुः । अनादितो नित्यं च व्यक्तः । प्रत्यक्षैकस्वभावोऽपि ऋजुयोगिनां साक्ष्यपरोक्षज्ञानात्प्रागीषत्काचावृत्तं चक्षुरिवाविद्यावरणवशादस्पष्टमेव स्वानन्दादिकमीक्षते । न स्पष्टमनुभवति बाह्यं दुःखं चानुभवति । अपरोक्षज्ञानदशायामपि छायास्थवर्णरेखादिवदीश्वरेच्छोपोद्बलिता दग्धपटोपमा विद्यासंस्कारादीषत् स्पष्टमेवानुभवति । न तु मुक्तिसमानयोगक्षेमतया । दुःखस्पृष्टत्वाद्बाह्यं दुःखं चानुभवति । मुक्तौ तु छायायां यावद्रेखोपरेखाविशिष्टतया प्राग्दृष्टवर्णानामेवातपे स्पष्टं विशेषेणानुभववदविद्यालेशस्याप्य-भावादीश्वरपरमानुग्रहाच्च स्पष्टमनुभवति । मुक्तेरात्यन्तिकदुःखनिवृत्तिरूपत्वाद्दुःखं न कदाऽप्यनु-भवति । अतो न मुक्तेर्वैय्यर्थ्यम् । तात्त्विकयोगिनां तु साक्षी मुक्तेः प्रागनादिकालमारभ्य कदाचित्

कदाचिद्व्यक्तमनुभवन्नपि तस्यानादित्वं पूर्ववदिति वदताऽनित्यत्वनियमाभावस्यापि सूचितत्वेनेषद्-विद्यापिधानवशान्मध्ये मध्ये नानुभवति च । बाह्यं दुःखं तु ऋजुभ्योऽधिकमनुभवति । मुक्तौ तु सदा सुस्पष्टं चानुभवति । अतो नानादित्वप्रसङ्गो न वा मुक्तेर्वैय्यर्थ्यम् । एतदेवाभिप्रेत्योक्त-मामुक्तेर्व्यक्त्यतिशयोपेतमिति व्यक्तौ स्पष्टतारूपातिशयोपेतमित्यर्थः ।

अतात्त्विकयोगिप्रभृतीनां तु व्यक्तेः सादित्वादत एव यावद्व्यक्तीनामपि युगपद्भाव्यत्वनियमा-भावाच्चापरोक्षज्ञानदशायामपि सुप्ताविव नानवच्छिन्नस्वरूपानन्दानुभवनियमः । मध्ये मध्ये विच्छेद-सम्भवाच्च न सदा तदनुभवनियमः । दुःखं तु तात्त्विकयोगिभ्योऽप्यधिकमनुभवति । किन्तु मुक्तावेव सर्वदा सकलतदनुभवः । दुःखस्य त्वननुभव एवेति सुतरां मुक्तेरवैय्यर्थ्यम् । लिङ्गभङ्गाद-विद्याकामकर्मादिदोषोच्छेदादपि सर्वेषां मुक्तेरवैय्यर्थ्यमिति द्रष्टव्यम् । तस्मादुक्तं युक्तमिति ।

**रा.**— ॥ **योगेति** । समाधिपरिपाको योगः । समाधिपरिपाकवन्तो योगिन इति तत्त्वनिर्णय-टीकोक्तेः । तत्सामर्थ्यलब्धोत्कर्षमित्यर्थः । ऋजुयोगीति कर्मधारयः । एवमग्रेऽपि ॥ **तात्त्विकेति** । महदहङ्कारादितत्त्वानामभिमानिनस्तात्त्विकाः । ब्रह्मत्वयोग्या ऋजवो नाम देवाः पृथग्गणा इति भारततात्पर्यनिर्णयोक्तेराह ॥ **ऋजवो नामेति** । असम्भवनिरासायेश्वरादन्यत्रेति । लक्ष्मीज्ञानेऽनति-व्याप्तये आलोचन इति । तज्ज्ञानं ऋजुयोगिज्ञानम् । असार्वत्रिकमेवेत्येवकारेणालोचनेऽपीति वा विवादाभावं वा सूचयति ॥ **मनोवृत्तीति** । मनःपरिणामरूपम् ॥ **आ मुक्तेरिति** । आकडारादित्या-दाविव भिन्नं पदम् । व्यक्त्यतिशयो नामाधिकाधिकभगवद्गुणकर्मादिविषयकत्वम् । एकप्रकारं वृद्धिक्षयापेतम् ॥ **प्रत्यक्षादीति** । अनुमानागमावादिपदार्थः ॥ **नास्त्येवेति** । मनस एवाभावादिति भावः ॥ **द्वयमपीति** । ऋजुयोगिनां ज्ञानद्वयमित्यर्थः ॥ **तदतिरिक्ता इति** । लक्ष्मीऋजुयोगि-व्यातिरिक्ताः । तेषामपि तत्त्वाभिमानित्वात्तद्व्यतिरिक्ता इत्युक्तिः । असुरव्यावृत्तये देवा इति । तज्ज्ञानं लक्षयति ॥ **अनादित्व इति** । तज्ज्ञानं तात्त्विकयोगिज्ञानम् । ऋजुमज्ञानव्यावृत्तये ईशादन्यत्रेति । अयोगिज्ञानव्यावृत्तयेऽनादित्वे सतीति ॥ **बाह्यं चेति** । मनोवृत्तिरूपं चेत्यर्थः ॥ **पूर्ववदिति** । ऋजुयोगिज्ञानवत्स्वरूपज्ञानं स्वरूपतोऽनादि । वृत्तिज्ञानं तु प्रवाहत इति ज्ञेयमित्यर्थः । तद्व्यतिरिक्ता ऋजुतात्त्विकव्यतिरिक्ता देवष्यार्दय इत्यर्थः । ऋजुतात्त्विकव्यावृत्तये एतद्विशेषणम् । अयोगिव्यावृत्तये योगिन इति विशेषणम् ॥ **अल्पाज्ञानयुक्तमिति** । तज्ज्ञानमिति शेषः । ज्ञानं यावद्विषयीकरोति ततो न्यून विषयकज्ञानयुक्तमित्यर्थः । ऋजुतात्त्विकज्ञानव्यावृत्तये सत्यन्तम् । अयोगिज्ञानव्यावृत्तयेऽल्पा-ज्ञानयुक्तमिति । असम्भवनिवृत्तये ईशादन्यत्रेति ॥ पूर्ववदिति । स्वरूपं बाह्यं चेति द्विविधमित्यर्थः ।

स्वरूपज्ञाने सादित्वं घटयति ।। **तत्रेति** । तयोर्मध्य इत्यर्थः । व्यक्तिरर्थविषयीकरणं तस्यानादितः सर्वजीवसाधारण्येन स्वयोग्यात्ममनस्तद्धर्मादिविषयीकरणसत्त्वेऽप्ययोग्यविषये योगप्रभावाधीना व्यक्तिः कदाचिदस्तीति भावः । अन्यस्य बाह्यस्य । एतेन ऋजुतात्त्विकवृत्तिज्ञानवैलक्षण्यं दर्शितम् ।। **पूर्ववदिति** । स्वरूपज्ञानं यथार्थमेव वृत्तिज्ञानं तु कदाचिदयथार्थमपीति ध्येयमित्यर्थः । आदिपदेनायथार्थग्रहः ।

**विज.**— योगिज्ञानं लक्षयति ।। **योगेति** । अतिबहुविषयकत्वलक्षणः ।। **ऋजुज्ञानमिति** । ब्रह्मत्वभवनयोग्यज्ञानमित्यर्थः ।। **तात्त्विकेति** । ब्रह्मत्वयोग्यतात्त्विकमित्यर्थः ।। **अतात्त्विकेति** । तत्त्वाभिमानियोगिज्ञानमित्यर्थः । इतरयोगिज्ञानापेक्षया ऋजुयोगिज्ञाने प्रकर्षमाह ।। **ईश्वरादन्यत्रेति** । गुणगुणिनोरभेदादाह ।। **ईश्वरे त्विति** ।। **तदिति** । ऋजुज्ञानमित्यर्थः ।। **स्वरूपमिति** । स्वाभिन्नमित्यर्थः ।। **योगेति** । योगप्रभावान्मुक्तिपर्यन्तं व्यक्त्यतिशयोऽहरहरधिकाधिकविषयत्वं तदुपेतमित्यर्थः ।। **एकप्रकारमिति** । न्यूनाधिकविषयत्वरहित इत्यर्थः ।। **प्रवाहतोऽनादीति** । सजातीयध्वंसव्याप्यप्रागभवप्रतियोगित्यर्थः ।। **योगेति** । इदमपि योगप्रभावादामुक्तेः प्रवाहतोऽतिशयोपेतमित्यवधेयम् ।। **तत्प्रत्यक्षादिजन्यमिति** । न च प्रमाणान्तरजन्यमपि तस्य ज्ञानमस्ति । योगाख्यसन्निकर्षस्य सर्वदा सत्त्वेन प्रत्यक्षस्यैवोत्पत्तेः समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वात् । न च सिषाधयिषया तथेति वाच्यम् । व्यवहारादेः प्रत्यक्षत एवोत्पन्नत्वेन सिद्धिविशेषेच्छायां मानाभावात् । तदिच्छाया न्यायनियन्त्रितत्वादिति वाच्यम् । तदज्ञानस्य परोक्षत्वापरोक्षत्वादिना प्रमाणसिद्धतया तज्ज्ञानमात्रे योगस्य सहकारित्वमिति भावः ।। **मुक्ताविति** । अदृष्टाद्यभावादिति भावः । तात्त्विकज्ञानं लक्षयितुमादौ तात्त्विकाँल्लक्षयति ।। **तद्व्यतिरिक्ता इति** । ब्रह्मणोऽपि तत्त्वाभिमानित्वादेतदुक्तम् । अतात्त्विकज्ञानं व्यवच्छेत्तुमाह ।। **अनादित्वे सतीति** । यद्यपि व्यक्त्या प्रवाहेन वोभयरूपमप्यतात्त्विकज्ञानमप्यनादि । तथाऽपि योगानुग्रहांशेऽनादित्वं द्रष्टव्यम् । एतस्यानादियोगित्वादतात्त्विकस्य सादियोगित्वादिति भावः ।। **पूर्ववदिति** । स्वरूपस्य व्यक्त्या मनोवृत्तिरूपस्य बाह्यस्य प्रवाहेनेत्यर्थः । पूर्वोक्तयोगिद्वयातिरिक्तायोगिनोऽतात्त्विकाः । के त इत्यपेक्षायामुक्तं देवादय इति । आदिपदाद्गन्धर्वादिपरिग्रहः ।। **ईश्वरादिति** । ईश्वरे त्वज्ञानप्रचुरमेवेत्यर्थः ।। **द्विविधमिति** । स्वरूपं बाह्यं चेत्यर्थः ।। **सादित्वमिति** । सैव स्वरूपव्यक्तिः। कदाचिद्योगानुग्रहवती कदाचिन्नेत्यर्थः ।। **अन्यस्येति** । बाह्यप्रवाहे किञ्चिद्योगाननुग्रहोत्पन्नं किञ्चित्तदनुग्रहोत्पन्नमित्यर्थः ।। **याथार्थ्येति** । स्वरूपं यथार्थमेव । बाह्यं कदाचिदयथार्थमपीत्यर्थः ।

**वेदे.**— योगिज्ञानसामान्यलक्षणमाह ।। **योगेति** । अतिशयो बहुविषयत्वलक्षणः । अत्रैतादृशातिशययोग्यत्वमेव लक्षणं विवक्षितमतः कदाचिदबहुविषयकतदीयज्ञाने नाव्याप्तिरिति ध्येयम् । तद्विभज्योद्दिशति ।। **तत्त्रिविधमित्यादिना** । के ते ऋजव इत्यत आह ।। **ऋजव इति** । ब्रह्मत्वयोग्या ब्रह्मपदयोग्याः । तेन ब्रह्माण्या अपि सङ्ग्रहः । बाह्यं कदाचिदयथार्थमपीति वक्ष्यमाणत्वेन तात्त्विकेष्वन्तर्भावायोगात् । तज्ज्ञानं लक्षयति ।। **ईश्वरादिति** । असम्भनिरासायेशादन्यत्रेत्युक्तम् । अनालोचन इतीशलक्ष्मीज्ञाननिरासः । सर्वग्रहणमस्मदादिज्ञानव्युदासार्थम् । सर्वविषयं सर्वविषयत्वयोग्यत्वमित्यर्थः । तेनानालोचनादशायां तज्ज्ञाने नाव्याप्तिः । तस्याप्यालोचनलक्षणसहकारिसम्भवेन सर्वविषयकत्वसम्भवेन तत्र तद्योग्यतायाः सत्त्वात् । एतेन मुक्त्यवस्थापन्नर्जुज्ञानेऽनालोचनेऽपि सर्वविषयेऽव्याप्तिरिति निरस्तम् । तस्यापि पूर्वमनालोचने सर्वविषयकत्वेन तत्रापि तद्योग्यताया अक्षतेः । नन्वीश्वरादन्यत्रेवेश्वरेऽपि यद्यलोचने सर्वविषयं तर्हि व्यर्थमीश्वरदन्यत्र ग्रहणमित्यत आह ।। **ईश्वरे त्विति** । अस्यानादिनित्यत्वे विशेषं वक्तुं तद्विभागमाह ।। **तद् द्विविधमिति** । यत् स्वरूपज्ञानमनादिनित्यं न तर्हि तद्योगिनां योगजं हि योगिज्ञानमित्यत आह ।। **योगेति** । मुक्तावपि व्यक्त्यतिशयोपेतत्वे परिमितं न स्यादित्यत आह ।। **आ मुक्तेरिति** । आङ् मर्यादायाम् । अभिवृद्धनदीपूरवत्पुनर्ह्रासो भवति किं नेत्यत आह ।। **मुक्ताविति** । प्रवाहत इत्युक्त्या स्वरूपोत्पत्तिरनुज्ञायते । तत्केनेत्यत आह ।। **योगेति** । आदिपदेनानुमानागमपरिग्रहः । अनेनैतदपि निरस्तम् । यत्केनचिदुक्तमृजूनां ज्ञानं प्रात्यक्षिकमेव न परोक्षमिति । आदिपदेनानुमानागमजन्यत्वस्य स्पष्टं प्रतीयमानत्वेनाकरविरुद्धत्वात् । स्वरूपज्ञानवदिदमपि प्रवाहतः किं नेत्यत आह ।। **मुक्तौ त्विति** । तात्त्विकादिज्ञानवदिदमृजुयोगिज्ञानं किं कदाचिदयथार्थमपि भवति नेत्याह ।। **ईश्वरेऽपीति** । तात्त्विकज्ञानं लक्षयितुं तावत्तेषां लक्षणमाह ।। **तद्व्यतिरिक्ता इति** । ऋजुव्यावृत्त्यर्थमेतत् । असुरव्यावृत्त्यर्थं देवा इति । अतात्त्विकव्यावृत्त्यर्थं तत्त्वाभिमानिन इति । तज्ज्ञानं लक्षयति ।। **अनादित्वे सतीति** । अनादित्वेनातात्त्विकयोगिज्ञाननिरासः ।। **ईश्वरादन्यत्रेति** । ईश्वरविषये आलोचनेऽप्यसर्वविषयलक्ष्मीज्ञानादिनिरासः । ऋजुज्ञाननिरासायालोचनेऽपीति ।। **पूर्ववदिति** । स्वरूपस्य व्यक्त्यपेक्षया मनोवृत्तिरूपस्य प्रवाहेनेत्यर्थः । ऋजुतात्त्विकव्यतिरिक्ता योगिनोऽतात्त्विका इत्येव लक्षणम् । के ते इत्यत उक्तं देवादय इति । आदिपदेन ऋषिगन्धर्वादिग्रहणम् । तज्ज्ञानं लक्षयति ।। **सादित्वे सतीति** । तात्त्विकज्ञानव्यावृत्त्यर्थं सत्यन्तम् । ईशादन्यत्रेत्यसम्भवनिरासार्थमल्पज्ञानयुक्तमित्ययेगिज्ञाननिरासः ।। **व्यक्त्यपेक्षयेति** । अनादितोऽनभिव्यक्तमेव स्वरूपं वैदिकेश्वरादिविषये कदाचिदभिव्यज्यत इत्यर्थः ।। **प्रवाहतोत्पत्तीति** । वैदिकेश्वरादिविषये वृत्तिप्रवाहोऽनादिकालेऽनुत्पन्नःकदाचिदुत्पद्यत इत्यर्थः । एवं

च ऋजुतात्त्विकस्वरूपज्ञानेऽपि व्यक्तेः साम्याद्वृत्तिज्ञानसादित्वस्य चात्रैव तत्रापि विद्यमानत्वेन कथं तात्त्विकातात्त्विकयोगिज्ञानयोरनादित्वसादित्वकथनमिति चोद्यानवकाशः । वैदिकेश्वरविषये तात्त्विकस्वरूपव्यक्तिवृत्तिप्रवाहयोरिदम्प्रथमताभावेनादित्वमतात्त्विकस्वरूपज्ञानव्यक्तिवृत्तिप्रवाहयोरिदम्प्रथमतया कदाचित्कत्वादेवोत्पन्नत्वस्य विवक्षितत्वात् । केचित्तु । योगानुग्रहांशेऽनादित्वसादित्वे विवक्षिते । तथा च सात्त्विकस्वरूपज्ञानवृत्तिप्रवाहयोरनादित एव योगप्रभावलब्धातिशयत्वमतात्त्विकस्वरूपज्ञानवृत्ति प्रवाहयोर्योगप्रभावलब्धातिशयत्वं तु कदाचिज्जायतेऽत इदं वैलक्षण्यं युक्तमित्याहुः ।

**अभि.—** योगिनां ज्ञानमात्रं योगिज्ञानमिति न मन्तव्यम् । अपि तु योगप्रभावलब्धातिशयमेव योगिज्ञानमिति भावेनोक्तं योगप्रभावेति । योगप्रभावलब्धातिशयवत्त्वं योगिज्ञानतुल्यमिति भावः । ऋजुयोगिज्ञानलक्षणमाह ॥ **ईश्वरादन्यत्रेति** । आलोचनलक्षणसहकारिसम्पत्तावीश्वरादन्यत्र घटादौ सर्वविषयं पलपरिमाणादिसर्वधर्मविषयमृजुयोगिज्ञानमित्यर्थः । अस्य लक्षणस्य जगद्विषयज्ञानान्येव लिलक्षयिषितानि न त्वीश्वरज्ञानानि । अतो न तत्राव्याप्तिदोष इति बोध्यम् । नाप्यालोचनासहकृतेनैव । सर्वविषये घटादिज्ञानेऽव्याप्तिस्तस्य योगप्रभावलब्धातिशयत्वादयोगिनो ज्ञानत्वेनालक्ष्यत्वात् । नाप्यालोचनसहकृतस्यापि घटादिज्ञानस्य पटादिविषयकत्वाभावादसम्भवः । घटादिगतसर्वधर्मविषयकत्वस्यैव लक्षणार्थत्वेन पटादिसर्वविषयकत्वस्यालक्षणार्थत्वात् । नापीशलक्ष्मीज्ञानयोरतिव्याप्तिः । तयोः स्वतः सर्वविषयकत्वेन सहकारिबललब्धसर्वविषयकत्वाभावात् । नापि मुक्तज्ञानेष्वव्याप्तिः । तज्ज्ञानस्यापि प्रागनुष्ठितप्रभावलब्धातिशयत्वात् । नन्वीश्वरादन्यत्रेति व्यर्थम् । तज्ज्ञानस्य घटादाविवेश्वरेऽपि सार्वत्रिकत्वात् । न हि यावदीश्वरधर्मज्ञानाभावेन तत्प्रतियोगिको घटादिनिष्ठो भेदो ज्ञातुं शक्यत इत्यत आह ॥ **ईश्वरे त्विति** । ईश्वरज्ञानवत्सार्वत्रिकमेव तज्ज्ञानं तथाऽप्यन्यज्ञानेभ्यो विशिष्यत इत्यर्थः । सामान्यतः प्रतियोगिज्ञानसद्भावेन भेदज्ञानं नानुपपन्नमिति भावः । अयं च न्यायो घटादिधर्मिकजगत्प्रतियोगिकभेदबोधेऽपि द्रष्टव्यः । ब्रह्माणीविज्ञानं चतुर्मुखविज्ञानवद्द्रष्टव्यम् ॥ **वृत्तिज्ञानं प्रवाहतोऽनादीति** । योगस्यनादित्वाद्योगप्रभावलब्धातिशयस्य ज्ञानस्येदम्प्रथमत्वाभाव एवानादित्वं बोध्यम् । एतेन सुप्त्यभावप्रसङ्गोऽपि निरस्तो बोध्यः ॥ **नियमेनेति** । यद्यत्सरूपं बाह्यं वा ऋजुयोगिज्ञानं तत्सर्वमपि यथार्थमित्यर्थः ॥ **अनादित्वे सतीति** । इदमपि लक्षणमनीश्वरविषयज्ञानलिलक्षयिषया प्रवृत्तमिति नेश्वरविषयज्ञानाव्याप्तिरिति बोध्यम् । अतात्त्विकयोगिज्ञानव्यावृत्त्यर्थमनादित्वे सतीति विशेषणम् । तात्त्विकानां ज्ञानेषु लक्ष्यं विवेक्तुं यथार्थायथार्थराश्यात्मकं ज्ञानं विभजति ॥ **तदपीति** । एतेन प्रमाणे विभागकथनावसरेऽयथार्थज्ञाननिरूपणमयुक्तमिति परास्तम् । **बाह्यं कदाचिदिति** । किञ्चिद्बाह्यज्ञानमयथार्थं भवतीत्यर्थः । एतेनैकमेव ज्ञानं कदचिद्यथार्थं

कदाचिदयथार्थमित्यापन्नम् । तच्चायुक्तमिति परास्तम् । अतात्त्विकानामीश्वरविषयकज्ञानलक्षणमह ॥ **सादित्वे सतीति** । सादित्वे सत्यन्यत्रासर्वविषयत्वमित्यर्थः । एतेनाल्पाज्ञानयुक्तत्वस्य तात्त्विकज्ञानेऽभावेन सादित्वे सतीति विशेषणं व्यर्थमिति परास्तम् । यद्यपि तात्त्विकातात्त्विकज्ञानयोः सर्वविषयत्वे तारतम्यमस्ति तद्विवक्षायां सादित्वे सतीति विशेषणं व्यर्थम् । तथाऽपि तद्विवक्षाया अकारणात्सार्थकं विशेषणम् ॥ **अन्यस्य प्रवाहतोत्पत्त्यपेक्षयेति** । योगप्रभावलब्धातिशयविशेषविशिष्टप्रवाहोत्पत्त्यपेक्षयेत्यर्थः ।

**श्रीनि.**— ॥ **योगप्रभावेति** । ध्यानपरिपाकसामर्थ्येत्यर्थः ॥ **ब्रह्मत्वयोग्या इति** । योग्यतायाः स्वरूपत्वादिदानीन्तनचतुर्मुखे मुक्ते इदमस्तीति ज्ञेयम् ॥ **ईश्वरादन्यत्रालोचन इति** । नन्वत्रालोचनपदं न्यायकल्पलतोक्तरीत्या लक्ष्मीज्ञानेऽतिव्याप्तिवारकमिति वाच्यम् । न चैतत्सम्भवति । अनालोचने सर्वविषये लक्ष्मीज्ञानस्यालोचने सर्वविषयत्वस्य कैमुत्यसिद्धत्वात् । सम्मतं चैतद्ग्रन्थकर्तुः । लक्ष्मीज्ञानलक्षणेऽनालोचनेऽपीत्यपिशब्दप्रयोगात् । स चालोचनविषयत्वं समुच्चिनोति । अन्यथा तद्वैय्यर्थ्यात् । न चात्रालोचनाधीनसर्वविषयत्वं विवक्षितम् । लक्ष्मीज्ञानस्य च सर्वविषयकत्वं स्वभाव एव न त्वालोचनाधीनमतो नातिव्याप्तिरिति वाच्यम् । तर्हि लक्ष्मीज्ञाने आलोचने सर्वविषयत्वस्य मृषात्वापत्त्याऽपिशब्दवैय्यर्थ्यानिस्तारात् । न चालोचनसमानकालीनत्वमात्रसमुच्चायकः स इति वाच्यम् । आलोचनस्य सर्वविषयकत्वानुपयेगे तत्समानकालीनतासमुच्चयवैय्यर्थ्यात् । न चालोचन एव सर्वविषयकत्वं विवक्षितं लक्ष्मीज्ञानं त्वनालोचनेऽपि सर्वविषयमिति न तत्रातिव्याप्तिरिति वाच्यम् । मुक्तऋजुज्ञानेऽव्याप्तेः । तस्य रमाज्ञानवदनालोचनेऽपि सर्वविषयत्वात् । अतः कथमेतदिति चेन्न । रमाया आलोचनाभावात् । अज्ञस्यैव ह्यालोचनम् । तपसा चीयते ब्रह्मेत्यादौ । तप आलोचन इति धातोः । अतःकथं रमाया आलोचनाभाव इति चेन्न । तत्तपसो ज्ञानरूपत्वेनालोचनात्मकत्वाभावात् । अत एव तपसा चीयत इत्ययेन प्राप्ताज्ञानशङ्का यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इत्युत्तरवाक्येन निराकृता । यस्य तपो ज्ञानमयं ज्ञानात्मकं न त्वालोचनात्मकम् । कुतः । यः सर्वज्ञ इति । नन्वेवमप्यपिशब्दवैय्यर्थ्यं न परिहृतम् । किञ्च लक्ष्मीज्ञानलक्षणस्य मुक्तऋजुज्ञानेऽतिव्याप्तिः । तत्र सर्वविषयकत्वस्य तत्स्वभाववत्त्वेनालोचनानपेक्षणात् । ऋजुज्ञानलक्षणस्य च तत्राव्याप्तिः । नन्वत्रालोचने सर्वविषयत्वं नामालोचने सर्वविषयत्वात्यन्ताभावाधिकरणत्वम् । मुक्तऋजुज्ञाने तु नैतदस्ति । तत्र संसारदशायामालोचने सर्वविषयकस्येदानीन्तनध्वंसाधिकरणत्वेन तदत्यन्ताभावाधिकरणत्वाभावात् । अतो न तत्रातिव्याप्तिः । ऋजुज्ञाने चालोचने सर्वविषयत्वात्यन्ताभावानधिकरणत्वं विवक्षितम् । तच्चोक्तरीत्या मुक्तऋजुज्ञानेऽप्यस्तीति नाव्याप्तिरिति चेन्न । तथात्वे लक्ष्मीज्ञान-

लक्षणस्यालोचनेऽप्यसर्वविषयकेऽस्मदादिज्ञानेऽतिव्याप्तेः । ज्ञानलक्षणस्य चालोचनाभावदशाया-मेवोत्पन्ननष्टे ऋजुवृत्तिज्ञानेऽव्याप्तेः । न हि तस्य कदाऽप्यालोचने सर्वविषयत्वमस्ति येन तदत्यन्ताभावानधिकरणत्वं स्यात् । तस्माल्लक्ष्मीऋजुज्ञानलक्षणयोर्मुक्तऋजुज्ञानेऽतिव्याप्त्यव्याप्त्योर-परिहार एवेति चेत् । अत्रोच्यते । अनालोचनेऽपीत्यपिशब्दोऽभिव्याप्तौ । ततश्च रमाज्ञानस्य सर्वविषयत्वं प्रत्यनालोचनस्य व्यापकत्वमुक्तं भवति । तेनालोचनसर्वविषयकत्वयोरव्यभिचरितसम्बन्ध उक्तो भवति । न च मुक्तऋजुज्ञाने एतदस्ति । संसारदशायां व्यभिचारात् । ऋजुज्ञाने चालोचने सर्वविषयत्वजातीयत्वं विवक्षितम् । तच्च मुक्तऋजुज्ञाने नालोचनदशोत्पन्नवृत्तिज्ञाने चास्तीति नाव्याप्तिः । सम्मतं चैतत्परेषामपि वनस्थदण्डादेर्घटकारणत्वोपपादनायानन्यथासिद्धनियतपूर्ववृत्ति-जातीयत्वमिति वदतां साजात्यं च ऋजुज्ञानत्वादिसदृशजात्याश्रयत्वेनेति सङ्क्षेपः ॥ **प्रवाहतोऽना-दीति ।** इदं प्रथमताशून्यप्रवाहप्रविष्टमित्यर्थः ।

**वि.—** योगिज्ञानलक्षणमाह ॥ **योगप्रभावेति ।** समाधिपरिपाकवन्तो योगिन इति विष्णुतत्त्व-निर्णयटीकोक्तेः । योगः समाधिपरिपाकस्तस्य प्रभावः सामर्थ्यं तेन लब्धः प्राप्तोऽतिशयोऽयोगि-ज्ञानाधिकविषयीकरण उत्कर्षो यस्य तद्योगिज्ञानमित्यर्थः । योगिप्रत्यक्षेऽतिव्याप्तिपरिहाराय ज्ञान-मित्युक्तम् । ईश्वरलक्ष्मीज्ञानयोरतिव्याप्तिनिरासाय योगप्रभावलब्धेत्युक्तम् । अयोगिज्ञानेऽतिव्याप्ति-वारणाय लब्धातिशयविशेषणम् । योगप्रभावलब्धं ज्ञानमित्येवोक्ते योगिनां स्वरूपज्ञानेऽव्याप्तिः । योगरहितानामपि स्वरूपज्ञानसत्त्वेन तत्प्राप्तेः । योगप्रभावानधीनत्वात् । तद्वारणायातिशयग्रहणं कृतम् । प्रमाणलक्षणटीकायां तत्र योगिनां देशकालवस्तुस्वभावव्यवहितार्थमपि विषयीकरोतीत्यनेन द्विविधेन्द्रियात्मकयोगिप्रत्यक्षस्यायोगिज्ञानादधिकविषयीकारित्वस्योक्तत्वात्समानविषये तज्ज्ञानेऽप्ययोगिज्ञानादधिकविषयीकरणलक्षणातिशयस्य योगाधीनत्वात् । तद्ग्रहणेन तत्राव्याप्ति-र्निरस्ता । योगिज्ञानविभागमाह ॥ **तत्त्रिविधमिति ।** अयमपि विभागो महावैलक्षण्यद्योतनार्थः । तिस्रो विधाः प्राधान्येनोद्दिशति । ऋजूनामिति । ऋजुज्ञानमन्तरेण तज्ज्ञानस्य ज्ञातुमशाक्यत्वात् ऋजुलक्षणमाह ॥ **ऋजवो नामेति ।** ब्रह्मयोग्या विरिञ्चत्वयोग्या इत्यर्थः । अस्मदादिव्यावृत्त्यर्थं ब्रह्मत्वेति विशेषणम् । वाय्वादावव्याप्तिवारणाय योग्या इति विशेषणम् । योग्यताया जीवस्वरूप-त्वाद्ब्रह्मत्वं प्राप्तानामपि योग्यतासद्भावात् न चतुर्मुखेष्वव्याप्तिः । चतुर्मुखः परमात्माभिन्न एवेति मतं कुमतमिति ज्ञापनाय स्वरूपकथनपरं जीवपदम् । ऋजुज्ञानलक्षणमाह ॥ **ईश्वरादन्यत्रेति ।** ऋजुप्रत्यक्षेऽतिव्याप्तिवारणाय ज्ञानपदमध्याहार्यम् । मनःप्रणिधानपूर्वकमनुसन्धानमालोचनम् । तस्मिन्सति सर्वविषयमालोचनाधीनसर्वविषयत्वोपेतं ज्ञानमृजुज्ञानमित्यर्थः । असम्भव-

परिहारार्थमीशादन्यत्रेत्युक्तम् । ईशलक्ष्मीज्ञानयोरितव्याप्ति- वारणायालोचन इत्युक्तम् । सर्वज्ञानमस्मदादिव्यवच्छेदाय । ननु ऋजुज्ञानमनालोचने सर्वविषयं न वा । नाद्यः । लक्ष्मीज्ञानलक्षणस्य तत्रातिव्याप्तिप्रसङ्गात् । तात्त्विकज्ञानलक्षणे आलोचनेऽपीति विशेषणवैय्यर्थ्याच्च । प्रमाणलक्षणटीकायां सादित्वग्रहणमृजुतात्त्विकज्ञानव्यावृत्त्यर्थमित्युक्त्ययोगाच्च । तद्विशेषेणरहितस्यातात्त्विकयोगिज्ञानलक्षणस्य ऋजुज्ञानेऽभावात् । नेतरः । ज्ञानलक्षणस्य तत्रातिव्याप्तिप्रसङ्गात् । न च सर्वविषयत्वयोग्यतैवात्राभिप्रेता न फलोपधानमिति वाच्यम् । योग्यताया आलोचनाधीनत्वेन सम्भवापातादिति चेन्न । द्वितीयपक्षाभ्युपगमात् । न च तत्पक्षोक्तदोषः । आलोचनाधीनं यत्सर्वविषयीकरणं तत् सामर्थ्योपेतं ज्ञानमृजुज्ञानमिति विवक्षितत्वात् । तथाऽऽलोचनरूपसहकार्यभावे योगमात्रसहकृतप्रत्यक्षजन्यस्यायोगिज्ञानादधिकविषयीकारिणो ऋजुज्ञानस्य सर्वविषयीकरणरूपफलोपधानाभावेऽपि तत्सामर्थ्यमस्त्येवेति नाव्याप्तिरिति ज्ञातव्यम् । आलोचनरूपे सहकारिणि सति ऋजुज्ञानस्येश्वरादन्यत्र सर्वविषयं चेत् सहकारिविशेषे सति ऋजुज्ञानस्य साकल्येनेश्वरविषयीकारित्वमपि किमस्तीति जिज्ञासायामाह ॥ **ईश्वरेत्वसार्वत्रिकमेवेति ।** ईश्वरे तु सर्वविषये चासार्वत्रिकमेवासर्वविषयकमेव न तु केनचिद्विशेषेण सर्वविषयीकारीत्यर्थः । ऋजुज्ञानमीश लक्ष्मीज्ञानवत् स्वरूपात्मकमेवेति प्रतीति वारणाय तद्विभागमाह ॥ **द्विविधमिति ।** प्राधान्यक्रमेण द्विधे उद्दिशति ॥ **स्वरूपं मनोवृत्तिरूपं चेति ।** प्रमातृभिन्नमन्तःकरणपरिणामरूपं चेत्यर्थः । तदुभयस्वरूपं कीदृशमिति जिज्ञासायामाद्यस्वरूपं तावदाह ॥ **तत्र स्वरूपमित्यादिना ।** तत्र तयोर्मध्ये स्वरूपं स्वरूपज्ञानमनादि नित्यमुत्पत्तिविनाशरहितमित्यर्थः । स्वरूपज्ञानं यद्यनादि न तर्हि तद्योगज्ञानं योगजं हि योगिज्ञानमित्यत आह ॥ ज्ञानेनावरणभूताविद्यानिवृत्तात्मस्वरूपभूतसुखस्य व्यक्तत्वादिति गीताभाष्यकटीकायां ज्ञानेनाविद्यानिवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखं च बहुतरमिति व्यज्यते न तु सर्वमित्यादि गीताभाष्यकटीकायां च । सुप्तौ भक्तिं विना सुखाद्यभिव्यक्तिदर्शनादिति तत्त्वप्रकाशिकायां च । अव्यक्तत्वात्संसारे न भासते व्यक्तत्वान्मुक्तौ भासत इति चेन्न । अव्यक्तिर्हि प्रतिभासाभावो व्यक्तिः प्रतिभास इति सुधायाम् । आवृताः सन्तो व्यज्यन्ते ज्ञानस्य स्वरूपत्वेनानादित्वेऽप्यविद्यया विषयविषयिभावः प्रतिबध्यत इति च सुधायाम् । स्वरूपज्ञानेन प्रतिभासरूपविषयीकरणे व्यक्तिशब्दायोगादर्थविषयीकरणं व्यक्तिः । तथा च योगसामर्थ्यादयोगिज्ञानादधिकार्थविषयीकरणरूपव्यक्त्युपेतमित्यर्थः । साक्षियोग्यार्थे साक्षिणैव स्वरूपज्ञानस्य व्यक्तिसद्भावाद्योगसम्पत्तिवैकल्यं स्यादिति शङ्कावारणायातिशयग्रहणं कृतम् । योगप्रभावेन व्यक्त्यतिशयलक्षणवृद्धिसद्भावाद्योगिज्ञानत्वं युक्तमिति भावः । योगप्रभावेनायोगिज्ञानापेक्षयाऽपूर्वार्थविषयीकरणरूपो

व्यक्त्यतिशयो जायमानो निरवधिक एवेति न मन्तव्य इत्याह ॥ **आ मुक्तेरिति ।** आङ्मर्यादायां वर्तते । मुक्तिपर्यन्तमेवेत्यर्थः । क्रमेण जायमानाया अधिकयोगसम्पत्तेर्मुक्तिपर्यन्तत्वात्तत्प्रयुक्त-व्यक्त्यतिशयोऽपि तथेति भावः । नन्वेतद्वचनं क्रमेण वर्धमानमिति प्रमाणलक्षणोक्तवचनं च लक्षण-वाक्यविरुद्धम् । सकृदेवालोचनेन सर्वविषयीकारिणो ऋजुज्ञानस्य योगप्रभावेनाधिकार्थविषयी-करणात्मकव्यक्त्यतिशयापरनामकवृद्धेरसम्भवादिति चेन्न । आलोचनेनेश्वरादन्यत्राशेषविषयस्यापि ऋजुज्ञानस्वरूपस्य क्रमेण वर्धमानयोगप्रभावादीश्वरेऽपि विषये व्यक्त्यतिशयरूपवृद्धेः सम्भवाद्वाक्य-द्वयस्य परमात्मनि विषयेऽपि लक्षणवाक्यविरोधाभावात् । ईश्वरातिरिक्ताविषये आलोचनाभावदशायं योगप्रभावक्रमेणैव साक्ष्ययोग्यार्थविषयीकारिणो ऋजुस्वरूपज्ञानस्य कादाचित्कालोचनरूपसहकारि-विशेषसम्पत्त्या सकलजगद्गोचरत्वेऽपि तदाऽपि योगाधिक्यात्प्राचीनाल्पयोगप्रयुक्तव्यक्त्य-पेक्षयाऽधिकाभिव्यक्तेः सम्भवाद्वाक्यद्वयस्येश्वरातिरिक्तविषये लक्षणवाक्यविरोधाभावादिति । नन्वत्राप्यस्तु मुक्तिपर्यन्तवृद्धिः । तथाऽप्यतिवृद्धनदीपूरत्ववत्पुनः किं ह्रासो भवति नेत्याह ॥ **मुक्तावेकप्रमारमिति ।** एकप्रकारमेकविधं वृद्धिह्रासलक्षणप्रकारद्वयोपेतं न भवतीति यावत् । यद्यपि ऋजुस्वरूपज्ञानं संसारदशायामिति मुक्तिदशायामपीश्वरादन्यत्रालोचने सर्वविषयं तदभावे न सर्वविषयमिति नैकविधम् । तथाऽपि योगप्रभावयुक्तव्यक्त्यतिशयरूपवृद्ध्यपेक्षयैकविधत्वप्रतिपादन-परमेतद्वचनमिति न दोषः । यद्वा ऋजुस्वरूपज्ञानस्य मुक्तावेकविधत्वं परमात्मविषय एव नान्यत्र । अत एवानुव्याख्याने ब्रह्मा तु सर्वगं पश्येद् गुणानप्यन्यतोऽधिकमित्यनेन सर्वगमन्यतः सरस्वत्यदे-रधिकं गुणान्पश्येदिति ब्रह्मणो योग्यदर्शनमभिधाय न तु सर्वेषु कालेषु तथा पश्यत्यामुक्ति इत्युत्तरार्धेन संसारे ब्रह्मणोरभेदेन विशेषं चोक्त्वा मुक्तस्तु सर्वदा पश्येत्सर्वगत्वेन चापि त्विति तदुत्तरार्धेन मुक्तो ब्रह्मा तु सर्वगत्वेन चशब्दात्सरस्वत्यादिदृष्टाधिकगुणत्वेन सर्वदा पश्येदिति मुक्तिदशायां भगवद्विषये चतुर्मुखज्ञानस्यैकविधत्वमुक्तम् । यद्यपि

न रमावद्विशेषाणां दर्शनं शक्नुयात्कचित् ।
स्वात्मानमन्यच्च सदा विशेषैरखिलैरपि ।

पश्यत्यज्ञ इति तदुत्तरवाक्ये क्वचित्संसारे मुक्तावपि रमावद्विशेषाणां दर्शनं न शक्नुयादितीश्वरे विषये रमाज्ञानापेक्षया चतुर्मुखज्ञानस्य सर्वदा न्यूनतामभिधाय स्वात्मानं भगवतोऽन्यत्संसारे मुक्तौ चाखिलैरपि विशेषैरज्ञः पश्यतीति जगद्धीति तज्ज्ञानस्यैकविधत्वमुक्तम् । तथाऽप्यस्य वचनस्या-लोचने सत्येव सदा पश्यतीत्येवार्थो वर्णनीय इत्यविरोधः । अन्यथाऽन्यत्रालोचने सर्वविषयमिति

प्रमाणलक्षणवचनविरोधात् । ऋजुज्ञानेऽतिव्याप्तिवारणायालोचनेत्यपि ग्राह्यम् । तस्यालोचनेऽन्यत्र सर्वविषयत्वं वक्ष्यतीति प्रमाणलक्षणटीकावचनविरोधापाताच्च । ईश्वरादन्यत्रालोचने सर्वविषयमृजुज्ञान मित्येतद्ग्रन्थवचनविरोधाप्रसङ्गाच्च । ऋजुज्ञानस्येश्वरादन्यत्रानालोचनेऽपि मुक्तौ सर्वविषयत्वाङ्गीकारे लक्ष्मीज्ञानलक्षणस्य तत्रातिव्याप्तिप्रसङ्गाच्च । मुक्तानां स्वरूपानन्दांशे कादाचित्कविशेषस्य भाष्य-टीकाकारैरुक्तत्वान्मुक्तऋजुज्ञानस्यप्यानन्दांशेकादाचित्कविशेषानङ्गीकारे तदुक्तिविरोधापाताच्च । तदुक्तं श्रीमद्भाष्ये ।

अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।
कदाचित्कविशेषस्तु नैव तेषां विरुद्ध्यत इति ।
प्रवाहतस्तु वृद्धिर्वा ह्रासो नैवास्ति कुत्रचित् ।
नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित् ।
कुत एव तु दुःखं स्यात्सुखमेव सदोदितम् ।
भोगानां तु विशेषे तु वैचित्र्यं लक्ष्यते क्वचिदिति ।

तदुक्तं च तत्त्वप्रकाशिकायाम् । यदि भोगो न वृद्धिहेतुस्तर्हि व्यर्थोऽसौ किमिति तैः क्रियत इत्यत्र लीयतेति परिहारे स्थिते विशेषं चाह ॥ **अवृद्धीति ।** इतरे च स्मृत्यन्तरेण विवृणोति प्रवाहत इतीति । तदुक्तं च गीताभाष्यटीकायाम् । ननु मुक्तः किमर्थं विषयामिच्छेत् । न तावत्सुखार्थं ज्ञानेनावरणभूता विद्यानिवृत्तावात्मस्वरूपसुखस्य व्यक्तत्वात्पृथक्सुखस्यानङ्गीकारात् । नापि दुःखनिवृत्यर्थमविद्या-निवृत्त्यैव तत्सिद्धेरिति । मैवम् । नाविद्यैवात्मस्वरूपस्यावरणं किन्त्वीश्वरेच्छाऽपि । तथा च वक्ष्यति । तथा च ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखं च बहुतरमभिव्यज्यते । न च सर्वज्ञानोत्तरमनुष्ठितं न निवृत्तकर्मणां प्रसङ्गः । परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगज्ञानानभि-व्यङ्ग्यमपि स्वरूपसुखं व्यक्तीकरोतीति । ननु तथाऽपि ऋजुज्ञानस्वरूपस्य कथमीश्वरादन्यत्रालोचने सर्वविषयीकारित्वम् । ईश्वरादन्यस्य स्वरूपानन्दस्य तद्विशेषस्य च तैर्विषयीकर्तुमशक्यत्वात् । तदावरणभूताविद्याया ईश्वरेच्छायाश्च सत्त्वात् । न हि सति प्रतिबन्धके तत्र तस्य स्फुरणं सम्भवति । अन्यथा मुक्तियोग्यजीवजातस्यापि स्वरूपज्ञाने स्वरूपानन्दस्य सर्वदा स्फुरणप्रसङ्गादिति चेन्न । आलोचनस्योत्तेजकतया तदा प्रतिबन्धकत्वाभावात् । सत्यपि स्वरूपेण प्रतिबन्धके ऋजुगणस्य स्वरूपज्ञाने स्वरूपानन्दस्य स्फुरणसम्भवात् । अन्यथा मुक्तियोग्यानां सर्वेषामपि सुप्तौ प्रज्ञात्म-परिष्वङ्गेन स्वरूपानन्दस्यास्फुरणप्रसङ्गात् । तदावरणभूताविद्यायाः सत्त्वात् । न चैवं सति

भगवत्साक्षात्कारस्य बुहतरानन्दस्फुरणफलकत्वज्ञानोत्तरकर्मणश्च ज्ञानानभिव्यङ्ग्यानन्दस्फुरणफलकत्वं च न स्यात् । ऋजुगणस्यालोचनेनैवाशेषानन्दस्य सत्यपि प्रतिबन्धके स्फुरणसम्भवादिति वाच्यम् । मुक्तियोग्यजीवजातस्य सुप्तावशेषदुःखनिवृत्तिविशिष्टायाः स्वरूपसुखाविर्भावरूपमुक्तेः सत्त्वेऽपि सुप्त्यपगमे तस्याभावादनिवृत्त्या तादृशफलस्य ज्ञानैकसाध्यतया तस्य ज्ञानफलत्ववद् ऋजुगणस्यालोचनदशायमशेषस्वरूपानन्दस्य स्फुरणेऽप्यनालोचने तस्याभावादनिवृत्त्यबहुतरस्वरूपसुखस्फुरणस्य ज्ञानैकसाध्यतया तस्य तत्फलत्वोपपत्तेः । अनालोचनेऽप्येकभोगेन ज्ञानानभिव्यङ्ग्यसुखस्फुरणस्य ज्ञानोत्तरमनुष्ठितेन कर्मणा विनाऽयोगात्तस्य तत्फलत्वोपपत्तेश्चेति । वृत्तिज्ञानं कीदृशमिति जिज्ञासायामाह ॥ **वृत्तिज्ञानं त्विति ।** वृत्तिरूपज्ञानं तु प्रवाहतः प्रवाहापेक्षया स्वसमानजातीयपरम्परापेक्षयाऽनीदीत्यर्थः । ननु ऋजुवृत्तेः प्रवाहापेक्षयाऽनादित्वं चेत्तर्हि सर्वाऽपि तद्वृत्तिः स्वपूर्वकाले स्वसमानजातीयवृत्तिपरम्परावतीति वाच्यम् । तत्र साजात्यं किं वृत्तित्वेनोतापरोक्षवृत्तित्वेनाहोस्विद्योगप्रवाहवृत्तित्वेन । नाद्यः । अतात्त्विकयोगयोग्यवृत्त्योरपि प्रवाहतोऽनादितापाताच्च । तद्वृत्त्योरपि स्वपूर्वकाले वृत्तित्वेन स्वसमानजातीयपरम्परावत्त्वात् । सुप्तिप्रलययोस्तद्वृत्तिपरम्परा नास्तीति चेत् । किं तावता तत्पूर्वं तद्वृत्तिपरम्परासद्भात्वात् । न च सर्वस्यापि लक्ष्यस्य स्वाव्यवहितपूर्वकाले स्वजातीयवृत्तिमती प्रलयादौ तद्वृत्तेरभावादिति वाच्यम् । तात्त्विकयोगिवृत्तेरपि प्रवाहतोऽनादित्वाभावापातात् । तद्वृत्तेः प्रलयेऽभावात् । न चेष्टापत्तिः । तस्यानादित्वं पूर्ववदित्यनेन तात्त्विकयोगिज्ञानस्यापि प्रवाहतोऽनादित्वस्य वक्ष्यमाणत्वात् । न च तत्तत एव वाक्यात्तात्त्विकानां प्रलये स्वरूपातिरिक्तज्ञानमस्त्विति वाच्यम् । सुधायाम्

एवं प्रलयकलेऽपि प्रतिभातपरावरः ।
मुख्यवायुर्नित्यसमः शरीरोत्पत्तिकारणाद्

इत्यनुव्याख्यानव्याख्यानावसरे मुख्यवायुर्नित्यसम इत्यनेन भूतप्रकरणेऽपि न भूतविषयमिदं सूत्रं तत्राधिकाशङ्काभावात् । अत एव नावान्तराभिमानिविषयम् । किं नाम तत्परमाभिमानिविषयमिति सूचयति । स्वरूपातिरिक्तस्य प्रतिभाज्ञानस्याप्यनुपप्लवादाकाशदेवतातो विशेषो युक्त इति भाव इत्युक्त्या तात्त्विकानां प्रलये स्वरूपातिरिक्तज्ञानाभ्युपगमासम्भवात् । न द्वितीयः । ऋजुपरोक्षवृत्तेः प्रवाहतोऽनादित्वाभावापातात् । न चेष्टापत्तिरिति सम्भवति । वृत्तिज्ञानं तु प्रवाहतोऽनादित्वाभावापातादित्य आह ॥ **योगानुगृहीतप्रत्यक्षादिजन्यमिति ।** वृत्तिज्ञानमित्यनुवर्तते । एवमुत्तरवाक्येऽनुसन्धेयम् । वृत्तिरूपज्ञानत्वावच्छिन्नयोगोपकृतप्रत्यक्षादिना प्रमाणेन जन्यमित्यर्थः ।

अनुमानागमयोरादिब्देन ग्रहणं कृतम् । नियामकाभावेन योगस्य सकलप्रमाणसहकारित्वमेव न चक्षुरादिसहकारितेत्यापातात् । तथा च सर्वस्यानिवृत्तेर्योगजत्वाद्योगजवृत्तित्वेन स्वजातीयप्रवाहापेक्षया ऋजुवृत्तिज्ञानस्य प्रवाहतोऽनादित्वं युक्तमिति हृदयम् । यद्वा योगस्य कादाचित्कत्वादृजूनां योग-सम्पत्तेः । पूर्वं तद्वृत्तेर्योगानुगृहीतप्रत्यक्षादिप्रमाणजन्यत्वात्कथं च तद्वृत्तेर्योगज्ञानत्वम् । योगिज्ञान-सामान्यलक्षणस्य तत्राभावादित्य आह ॥ **योगानुगृहीतप्रत्यक्षादिजन्यमिति** । योगस्यापि प्रवाहतोऽनादित्वाद्वृत्तिज्ञानत्वावच्छिन्नं योगजमिति नोक्तशङ्काऽवकाश इति भावः । योगाधीनस्व-रूपज्ञानव्यक्तेर्मुक्तावनिवृत्तिवत्तदधीनवृत्तेरप्यमुक्तावनिवृत्तिरेवेति न मन्तव्यमित्याह ॥ **मुक्तौ नास्त्येवेति** । वाय्वादिवृत्तेः प्रलयेऽप्यलोपेऽपि संसारे वृत्तिनाशाद्वृत्तिर्नास्ति । मुक्तौ तु वृत्तिजातीयमात्रविलोपाद्वृत्तिर्नास्त्येवेत्युक्तम् । स्वरूपज्ञानवृत्तिज्ञानयोरनदित्वसादित्वसादित्वा-विनाशित्वविशेषवद्यथार्थं वा यथार्थत्वविशेषोऽस्तीति प्रतीतिवारणायाह ॥ **द्वयमपीति** । स्वरूपज्ञानं बाह्यज्ञानं च यथार्थमेवेत्यर्थः । ऋजुज्ञानस्येऽश्वरादन्यत्र सर्वविषयत्वेन तत्रेतरज्ञानवैलक्षण्येऽपीश्वरे त्वसार्वत्रिकमित्यनेनोक्तस्य सर्वविषयत्वस्येतरज्ञानसाधारण्यादीश्वरे विषये ऋजुज्ञानस्येतरज्ञानाविशेष एवेति न मन्तंव्यमित्याह ॥ **ईश्वरे त्वन्यजीवेभ्योऽधिकविषयमिति** । जीवपदेन तज्ज्ञानमुपलक्ष्यते । नात्र जीवपदं जीवेशयोर्भिदा चैवेत्यत्रेवास्वतन्त्रचेतनपरम् । लक्ष्मीज्ञानतोऽप्यधिक्यप्रसङ्गात् । किन्तु ब्रह्माणि जीवाः सर्वेऽपि परब्रह्मणि मुक्तिगाः । जीवा एव तु दुःखिन इत्यत्रेव दुःखस्पृष्टचेतन-परमेव । एवमृजुव्यतिरिक्तदुःखस्पृष्टचेतनज्ञानेभ्योऽधिकविषयमित्यर्थः । तात्त्विकज्ञानं लक्षयितुं तात्त्विकपदस्य विवक्षितमर्थमाह ॥ **तदतिरिक्ता इति** । ऋजुलक्ष्मीव्यतिरिक्तेऽतिरिक्ता इत्यर्थः । तत्त्वाभिमान्यसुरव्यावृत्त्यर्थं दैवपदम् । लक्ष्मीऋजुव्यावृत्त्यर्थं तद्व्यतिरिक्तम् इत्युक्तम् । अतात्त्विक-योगिप्रविष्टदेवव्यावृत्त्यर्थं तत्त्वाभिमानिन इति विशेषणमपास्तम् । तत्त्वाभिमानिपदेनैवेश्वरनिरासः ॥ **अनादित्वे सतीति** । अतात्त्विकयोग्ययोगिज्ञानव्यावृत्त्यर्थमिदं विशेषणम् । अनादित्वे सत्या-लोचनेऽपीशविषये सर्वविषयं लक्ष्मीज्ञानं भवतीति तद्व्यावृत्त्यर्थमीश्वरादन्यत्रेति विशेषणम् । ऋजुज्ञानव्यवच्छेदायालोचनेऽपीत्युक्तम् । यद्यपि शब्दमन्तरेणापि ऋजुज्ञानव्यावृत्तिः सम्भवति तथाऽपि ऋजुज्ञानमालोचने सर्वविषयमिदमालोचनेऽप्यसर्वविषयमिति स्पष्टम् । तद्वैलक्षण्यज्ञापन-मुखेन तद्व्यवच्छेदार्थं तदुपादानमिति तात्त्विकज्ञानस्यानादित्वे सतीति वृत्तिरूपज्ञानं नास्तीति प्रतीतिः स्यात् तां वारयितुं तद्वैविध्यमाह ॥ **तदपीति** । तात्त्विकज्ञानमपि स्वरूपज्ञानं बाह्यज्ञानं चेति प्रकारद्वयोपेतमित्यर्थः । ननु तर्हि वृत्तिरूपे ज्ञाने लक्षणाभावादव्याप्तिरित्यत आह ॥ **तस्मादनादित्वं पूर्ववदिति** । तस्य द्विविधस्य तात्त्विकज्ञानस्य पूर्ववदृजुज्ञानवत्स्वरूपतः प्रवाहतश्चानादीत्यर्थः ।

प्रवाहतोऽप्यनादित्वं लक्षणे विवक्षितमिति न बाह्यज्ञानेऽव्याप्तिरिति भावः । ननूभयविधानादित्वस्याप्यत्र विवक्षितत्वेऽसम्भवः । स्वरूपतः प्रवाहतश्चानादित्वस्य क्वाप्यभावात् । लक्षणद्वयाभिप्राये तु परस्पराव्याप्तिः । न च स्वरूपप्रवाहयोरन्यतरापेक्षयऽनादित्वमत्राभितमिति नोक्तदोष इति वाच्यम् । अतात्त्विकयोग्ययोगिज्ञानयोरतिव्याप्त्यापातात् । योगवृत्तिप्रवाहापेक्षयाऽनादित्वं तद्वृत्तौ नास्तीति चेन्न । तथाऽप्युक्तदोषानिस्तारात् । स्वरूपापेक्षयाऽनादित्वस्य तत्स्वरूपज्ञाने सत्त्वेन तत्र लक्षणसद्भावात् । व्यक्त्यपेक्षयैवानादित्वं स्वरूपज्ञाने विवक्षितम् । न स्वरूपापेक्षयेति चेत् । तथाऽप्यतात्त्विकयोग्यतायोगिस्वरूपज्ञानयोरतिव्याप्त्यनिस्तारात् । तत्स्वरूपज्ञानयोरात्मस्वरूपाव्याकृताकाशादौ साक्षिविषयेऽनादित एव व्यक्तिसद्भावेन तत्र लक्षणस्य सत्त्वात् । योगप्रभावयुक्तव्याप्त्यपेक्षयैवानादित्वमत्र स्वरूपज्ञानं विवक्षितम् । सा तु स्वरूपमात्रप्रयुक्तेति नोक्तादोष इति चेन्न । प्रमाणलक्षण टीकायामीशादन्यत्रेतीशविषयेऽनादित्वे सत्यालोचनेऽपि हृसितमिति लक्ष्म्यादिज्ञाननिरास इत्यनेनेशादन्यत्रेति विशेषणाल्लक्ष्मीज्ञानव्यावृत्तिकथनायोगात् । विवक्षितानादित्वस्य लक्ष्मीज्ञानेऽसत्त्वेनेशादन्यत्रेति विशेषणरहितस्य लक्षणस्य तत्राभावादिति चेन्न । साक्ष्ययोग्यार्थविषये व्यक्त्यपेक्षयाऽनादित्वं स्वरूपज्ञाने विवक्षितमित्यङ्गीकारात् । तथा च साक्षियोग्यार्थव्यक्तियोग्यार्थव्यक्तियोगप्रभावज वृत्तिप्रवाहयोरन्यतरापेक्षयाऽनादित्वे सत्यालोचनेऽप्यसर्वविषयज्ञानं तात्त्विकयोगिज्ञानमित्युक्तं भवति । अयोगिनां योगस्यैवाभावादतात्त्विकयोगिनां योगस्य सादित्वाद्विवक्षितं लक्षणं तात्त्विकयोगिज्ञानयोर्नास्तीति नातिव्याप्तिः । प्रमाणलक्षणटीकायां तत्र योगिनां देशकालवस्तुस्वभावव्यवहितार्थमपि गोचरतीत्यनेन वाक्येन द्विविधेन्द्रियात्मकस्य योगिप्रत्यक्षस्य स्वायोग्यार्थविषयीकारित्वकथनाद्योगानुगृहीतसाक्ष्यतीव्यङ्ग्यस्य तात्त्विकानां स्वरूपज्ञानस्यापि साक्षिसमानविषयकत्वेन साक्ष्ययोग्यार्थेषु विषयीकरणरूपवद्व्यक्तिसिद्धेस्तस्यानादित्वं पूर्ववदित्यनेन तात्त्विकयोगिवृत्तिप्रवाहापेक्षयाऽनादित्वसिद्धेश्च । अत एव ऋजुगणतात्त्विकानामप्यनादियोगित्वासिध्याऽनादिसिद्धयोगप्रयोगिनामुभयविधज्ञानेऽस्तीति नाव्याप्तिरिति न कोऽपि दोष इति । अनादित्ववद्याथार्थ्यनियमोऽपि पूर्ववदेवेति न मन्तव्यमित्याह ॥ **स्वरूपं यथार्थमेव बाह्यं कदाचिदयथार्थमपीति ।** अयथार्थ ज्ञानमल्पमेवेति ज्ञापनाय कदाचिदित्युक्तम् । एतच्च सरस्वतीव्यतिरिक्ततात्त्विकबाह्यज्ञानपरम् । अन्यथा सरस्वत्या अपि मिथ्याज्ञानित्वप्रसङ्गात् । न चेष्टापत्तिरपि सम्भवति ।

ब्रह्मा निरभिमानित्वाच्छरीर्यशरीरवान् ।
नित्यानन्दोपयोग्यन्यकामस्योक्तितः सदा ।

बहिरर्थविनिर्मुक्तस्तथाऽपि तदनुधारणात् ।
अमूढो मूढ इतिवदुच्यते च सरस्वती ।
रुद्राद्यास्तन्वभीमानाद्बहिरर्थयुजस्तथा ।
सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु ।
अभावात्स्वपरो ह्यस्य मोक्षो ज्ञानस्य भण्यते ।
ब्रह्मात्वंशरूपेषु भारत्या ज्ञानवर्जनम् ।
ब्रह्मगायत्रीभावे तु नांशावतरणं क्वचित् ।
शतजन्मसु पूर्वं तु ज्ञानोदय उदीर्यते ।
आपरोक्ष्येण अंशावतरणेष्वपीति

भागवततात्पर्यपर्यालोचनेन ब्रह्मण इव सरस्वत्या अपि शुद्धभागवतधर्मतद्धर्मवत्त्वमुत्तवाऽन्ये भागवतत्वेऽपि छिन्नधर्मा न धर्माः पृथक् पृथगित्यदिना मिथ्याज्ञानराहित्यसिद्धेः । तात्पर्यनिर्णये निजप्रतिभयाजानन् सर्वास्त्राणि ततोधिकमित्यादिना वाक्यसन्दर्भेण भीमस्य मिथ्याज्ञानराहित्यादि-रूपशुद्धभागवतधर्मवत्तामभिधाय अन्वेनमेव तद्धर्मे कृष्णे सा संस्थेता सदेत्यादिना द्रौपद्या अपि शुद्धभागवतधर्मवत्त्वमुक्त्वाऽन्ये भागवतत्वेऽपि छिन्नधर्माः पृथक् पृथगित्यादिना जन्मजन्मान्तरे ज्ञानादेव जानन्ति यत्सदेत्यन्तेनान्येषां मिथ्याज्ञानित्वादिरूपं छिन्नधर्ममभिधाय

तस्मादेको वायुरेव धर्मो भागवते स्थितः ।
लक्ष्मीः सरस्वती चेति परशुक्लत्रयं स्मृतम्

इत्यनेन लक्ष्मीवाय्वेरिव सरस्वत्या अपि मिथ्याज्ञानराहित्यरूपशुद्धत्वोक्तेश्च । न च परमात्मविषये मिथ्याज्ञानरहितायास्तस्यास्तदन्यत्र मिथ्यज्ञानं सम्भवनामर्हति । अतात्त्विकज्ञानं पक्षयितुमतात्त्विक-योगिलक्षणं तावदाह ॥ **तद्व्यतिरिक्ता इति ।** ऋजुतात्त्विकव्यतिरिक्ता इत्यर्थः । आदिपदेन ऋष्यादे-र्ग्रहणं कृतम् । ऋजुतात्त्विकव्यावृत्त्यर्थं तद्व्यतिरिक्ता इति विशेषणम् । अयोगिव्यावृत्त्यर्थमीश्वर-लक्ष्मीव्यावृत्त्यर्थं च योगिन इति विशेषणम् । देवादय इति स्वरूपकथनपरम् । लक्षणमाह ॥ **सादित्वे सतीति ।** अल्पाज्ञानयुक्तं स्वापेक्षया न्यूनविषयाज्ञानेन सहितं ज्ञानमित्यर्थः । न त्वयोगि-ज्ञानापेक्षयाऽल्पज्ञानमित्यर्थः । ईशादन्यत्रेति विशेषणवैय्यर्थ्यात् । सादित्वे सतीति विशेषणेनैव ऋजुतात्त्विकज्ञानव्यवच्छेदः । अल्पपदं योगिज्ञानव्यावृत्त्यर्थम् । असम्भवपरिहारार्थमीशादन्यत्रेति विशेषणम् । अतात्त्वकज्ञानस्य सादित्वेऽनादिस्वरूपज्ञानं नास्त्येवेत्यन्यथाप्रतीतिः स्यात्तां वारयितु-

माह ॥ **तदपीति** । अतात्विकयोगिज्ञानमपि पूर्ववदृजुतात्विकज्ञानवद्द्विविधम् । स्वरूपज्ञानं बाह्यज्ञानं चेति प्रकारद्वयोपेतमित्यर्थः । ननु तर्हि लक्षणं स्वरूपज्ञानेऽव्याप्तमित्यत आह ॥ **तत्रेति** । तयोर्मध्ये स्वरूपज्ञानस्य शक्त्यपेक्षया सादित्वमित्यर्थः । यद्यपि तत्स्वरूपज्ञानस्य साक्षियोग्ये आत्मादौ विषये साक्ष्यधीना व्यक्तिरनादित एवास्ति । तथाऽपि साक्ष्ययोग्यार्थेषु योगप्रभावाधीना व्यक्तिः कादाचित्कीति व्यक्त्यपेक्षया सादित्वमस्त्येव । तेदव तु लक्षणे विवक्षितमिति नातिव्याप्तिरिति बोध्यम् । ननु तर्हि वृत्तिज्ञानेऽव्याप्तिः । परोत्पत्त्यपेक्षयाऽऽदित्वं ब्रह्मज्ञाने विवक्षितमिति वाच्यम् । ऋजुतात्त्विकवृत्त्योरतिव्याप्त्यापातादित्यत आह ॥ **अन्यस्येति** । स्वरूपज्ञानातिरिक्तस्य बाह्यज्ञानस्येत्यर्थः । सादित्वमित्यनुवर्तते । यद्यप्यत्र तात्त्विकयोगिवृत्तेः स्वपूर्वकाले वृत्तित्वेन स्वजातीयपरम्परासद्भावान्न प्रवाहोत्पत्त्यपेक्षया सादित्वमस्ति । तथाऽपि योगप्रभावजवृत्तिप्रवाहोत्पत्त्यपेक्षया सादित्वमस्त्येव । तदेव तु लक्षणे विवक्षितमिति ऋजुतात्त्विकवृत्त्योर्नाव्याप्तिरिति बोध्यम् । ननु ऋजुतात्त्विकवृत्त्योरिवतात्त्विकानां योगः प्रवाहतोऽनादिरुत सादिः । नाद्यः । ऋजुतात्त्विकयोगिज्ञानस्यैव तात्त्विकयोगिज्ञानस्याप्यनादियोगप्रभावाधीनव्यक्तिप्रवाहयोरनादित्वापत्त्या योगाधीनव्यक्तिप्रवाहान्यतरापेक्षया सादित्वगर्भस्यातात्त्विकयोगिज्ञानलक्षणस्य तत्राभावादसम्भवापातात् । व्यक्तिप्रवाहयोरन्यतरापेक्षयऽनादित्वगर्भस्य तात्त्विकयोगिज्ञानलक्षणस्यातात्त्विकयोगिज्ञानेऽतिव्याप्त्यापातात् । तत्र स्वरूस्य सादित्वं व्यक्त्यपेक्षयाऽन्यस्य तु प्रवाहोत्पत्त्यपेक्षयेत्युक्त्ययोगाच्च । ऋजुतात्त्विकयोगस्येवातत्त्विकयोगस्यापि प्रवाहतोऽनादित्वेनानदिसिद्धयोगप्रवाहलब्धातिशयस्यातात्त्विकयोगिनां ज्ञानस्यापि व्यक्तिप्रवाहयोरन्यतरापेक्षयाऽनादित्वस्यैवाभ्युपेयत्वात् । अविशेषात् । न द्वितीयः । योगसम्पत्तेः पूर्वमतात्त्विकयोगिज्ञाने योगिज्ञानसामान्यलक्षणस्याव्याप्त्यापातादिति चेन्न । अतात्त्विकयोगिनां योगः सादिरित्यभ्युपगमात् । न च तत्पक्षोक्तदोषप्राप्तिः । तद्व्यतिरिक्ता देवादयो योगिनो तात्त्विका इत्यनेन योगविशिष्टानामेवातात्त्विकत्वकथनादृजुतात्त्विकव्यतिरिक्ता ये योगविशिष्टास्तेषामेव तात्त्विकशब्दार्थतया तज्ज्ञानस्यैव लक्ष्यत्वात्तज्ज्ञाने योगिज्ञानलक्षणातात्त्विकयोगिज्ञानलक्षणयोः सत्त्वात् । ब्रह्मत्वरहितऋजुगणस्य ब्रह्मपदवाच्यत्ववद्योगरहितानामतात्त्विकत्वयोग्यजीवानामतात्त्विकशब्दवाच्यतया तज्ज्ञानस्य लक्ष्यत्त्वात्तत्रोक्तलक्षणद्वयासत्त्वस्यादोषत्वाच्च । ननु भवेदेवं यद्यतात्त्विकानां योगः सादिरित्येतद्ग्रन्थकाराभ्युपेतं स्यात्तदेवासिद्धमिति चेन्न । योगप्रभावलब्धातिशयं योगिज्ञानं योगप्रभावादामुक्तेर्व्यक्त्यतिशयोपेतम् । वृत्तिज्ञानं प्रवाहतोऽनादित्वे सतीशादन्यत्रालोचनेऽप्यसर्वविषयं तात्त्विकज्ञानम् । तस्माद्ध्रासादितं पूर्ववत् । सादित्वे सतीशादन्यत्राल्पज्ञानमुक्तम् । तज्ज्ञानं तत्र स्वरूपस्य सादित्वं व्यक्त्यपेक्षयाऽन्यत्र तु प्रवाहतोत्पत्य-

पेक्षयेत्यस्य वाक्यजातस्य योगिज्ञानप्रकरणत्वात् । अनेन ऋजुतात्त्विकयोर्योगजं ज्ञानं प्रवाहतोऽनादिरतात्त्विकानां योगजं ज्ञानं प्रवाहतः सादीति कथनादृजुतात्त्विकयोः प्रवाहतोऽनादिरिति तात्त्विकानां योगप्रवाहः सादीत्यर्थस्य सिद्धेः । योगप्रवाहानादिसादित्वव्यतिरेकेण योगजवृत्त्योः स्वप्रवाहतोऽनादित्वयोरसम्भवात् । ऋजुतात्त्विकज्ञानव्यक्त्यनादित्वात्तात्त्विकस्वरूपज्ञानव्यक्तिसादित्वयोस्तद्योगप्रवाहात्सादित्वव्यतिरेकेणासम्भवाच्च । नन्वस्त्वतात्त्विकानां योगः प्रवाहतः सादिस्तथाऽपि योगप्रवाहाधीनव्यक्तिप्रवाहयोरन्यतरापेक्षया सादित्वं चेल्लक्षणे विवक्षितम् तर्हीशादन्यत्राल्पज्ञानयुक्तमिति विशेषणवैय्यर्थ्यापत्तिः । अयोगिनो योगाभावेन तद्वृत्तेर्योगजवृत्तिप्रवाहयोरन्यतरापेक्षया सादित्वस्याभावात्तेनैव विशेषणेनायोगिज्ञानव्यवच्छेदसिद्धेरिति चेन्न । तथाऽप्यतात्त्विकयोग्ययोगिस्वरूपज्ञानेऽतिव्याप्त्यनिस्तारात् । तत्स्वरूपज्ञाने स्वसम्बन्धियोगप्रभावाधीनव्यक्त्यपेक्षया सादित्वस्य सत्त्वात् । योगप्रभावेन जायमाना व्यक्तिर्योगाभावकाले नास्तीति चेत् । किं तावता यदाकदाचित् स्वसम्बन्धिनी योगाधीना या व्यक्तिस्तदपेक्षया सादित्वस्य तत्रानपायात् । तादृशत्वस्यैव लक्षणे विवक्षितत्वात् । अन्यथा मुक्तिज्ञानकाले योगेन जायमानव्यक्त्यभावेन तदा तत्स्वरूपज्ञाने सादित्वाभावापातात् तस्मात्तात्त्विकयोग्ययोगिस्वरूपज्ञाने यदाकदाचित्स्वसम्बन्धिनी योगप्रभावाधीना या व्यक्तिस्तदपेक्षया सादित्वस्य सत्त्वात् स्वकीयव्यक्तिप्रवाहयोरन्यतरापेक्षया सादित्वे सतीशादन्यत्राज्ञानयुक्तत्वस्य सत्त्वात्तद्व्यवच्छेदायाल्पपरमिति । अतात्त्विकज्ञानस्य तात्त्विकज्ञानतः सादित्वविशेषवद्याथार्थ्यनैय्यत्यादिविशेषोऽप्यस्तीत्यन्यथाप्रतीतिः स्यात्तद्वारणायाह ॥ **याथार्थ्यनियमादि पूर्ववदिति ।** वृत्तिज्ञाने याथार्थ्यनियम आदिब्दार्थः । पूर्ववत्तात्त्विकज्ञानवदित्यर्थः ।

## अयोगिज्ञानप्रभेदाः

सत्यनाथ

(१९) प्र.प.— **तद्व्यतिरिक्ता जीवा अयोगिनः । ईश्वरादन्यत्राज्ञानप्रचुरं तज्ज्ञानम् । तदपि पूर्ववद्द्विविधम् । उत्पत्तिविनाशवच्च । अयोगिनोऽपि त्रिविधाः । मुक्तियोग्या नित्यसंसारिणस्तमोयोग्याश्चेति । तत्र मुक्तियोग्यानां स्वरूपज्ञानं यथार्थमेव । नित्यसंसारिणां तु मिश्रम् । अन्येषामयथार्थमेव । बाह्यं तु त्रयाणामप्युभयविधमिति ।**

**जना.**— ॥ **ईश्वरदन्यत्रेति ।** ज्ञानमयोगिज्ञानमित्युक्ते ईशज्ञानेऽतिव्याप्तिः । अतोऽज्ञानप्रचुरमिति । तावत्येवोक्ते ईश्वरविषयेऽज्ञानप्रचुरेऽतात्त्विकयोगिज्ञानेऽतिव्याप्तिः ॥ **अन्येषामयथार्थमेवेति ।** ननु तमोयोग्यानां स्वरूपज्ञानं केवलप्रमाणं न वा । आद्ये केवलप्रमाणलक्षणस्य तत्राव्याप्तिः । तस्य यथार्थत्वाभावात् । द्वितीये तस्य केवलप्रमाणविशेषरूपायोगिज्ञानविभागे निवेशानुपपत्तिरित्युभयतः

पाशारज्जुरिति चेन्न । द्वितीयपक्षस्यैवाङ्गीकारात् । तर्हि तद्विभागे निवेशानुपपत्तिरिति चेन्न । केवलप्रमाणस्य मुक्तियोग्यस्वरूपज्ञानादेः सजातीयात्तमोयोग्यस्वरूपज्ञानात्केवलप्रमाणलक्षणं व्यावृत्तमिति वक्तुं तद्विभागे निवेशात् । अत एव योगिज्ञानमयोगिज्ञानमिति लक्ष्यतावच्छेदकसाक्षाद्व्यापकधर्मेण योगिज्ञानतादिरूपेणैव विभागः । अन्यथा योगियथार्थज्ञानमयोगियथार्थज्ञानमित्येवाचार्याः किमिति न व्यभजन्निति भाति ।

**राघ.**— तद्व्यतिरिक्ता योगिव्यतिरिक्ता जीवा इत्यर्थः । जीवपदं लक्ष्मीशयोर्व्यावृत्तये घटादिजडव्यावृत्तये वा । तज्ज्ञानमयोगिज्ञानम् । ज्ञानविषयादधिकविषयकाज्ञानयुक्तमित्यर्थः । ईश्वरविषयकाज्ञानायुक्तमित्यर्थः। ईश्वरविषयेऽज्ञानप्रचुरयोगिज्ञानव्यावृत्त्यर्थमीशादन्यत्रेत्युक्तिः ॥ **पूर्ववद्द्विविधमिति** । स्वरूपं बाह्यं चेति द्विविधमित्यर्थः ॥ **उत्पत्तीति** । स्वरूपस्य व्यक्त्यपेक्षया । बाह्यस्य प्रवाहत इति ध्येयम् । अयोगिज्ञाने याथार्थ्यनियमादि विवेक्तुं तद्विभागमाह ॥ **अयोगिनोऽपीति** । न केवलं योगिन इत्यपेरर्थः । चशब्दानन्तरमितिशब्दो ध्येयः ॥ **मिश्रमिति** । स्वरूपज्ञानमित्यनुषङ्गः । एवमग्रेऽपि । अन्येषां तमोयोग्यानाम् । बाह्यं तद्वृत्तिज्ञानमित्यर्थः । इति शब्दः स्वोक्तज्ञानविभागादिसमाप्तौ । केवलप्रमाणोक्तिसमाप्तौ वा ।

**विज.**— अयोगिज्ञानं लक्षयितुमादावयोगिनं लक्षयति ॥ **तद्व्यतिरिक्ता इति** ॥ **जीवा इति** । योगप्रभावलब्धातिशयज्ञानवद्भिन्ना इत्यर्थः । एतच्चेश्वरादावप्यस्तीत्यत उक्तं जीवा इति । ईश्वरेऽज्ञानप्रचुरमतात्त्विकस्यापि ज्ञानमत उक्तमीश्वरादन्यत्रेति । बाह्यमभिप्रेत्याह ॥ **उत्पत्तिविनाशवदिति** ॥ **यथार्थमेवेति** । अत एवैते मुक्तिस्वरूपयोग्याः । आवरणभङ्गे मुक्त्युपधानसम्भवादिति ॥ **संसारिणमिति** । नित्यसंसारिणां स्वरूपज्ञानं यथार्थमयथार्थं च । अत एवैते नित्यसंसारिणः । स्वरूपभ्रमस्य प्रतिबन्धकत्वस्य नित्यत्वादिति ॥ **अन्येषामिति** । तमोयोग्यानां स्वरूपज्ञानमयथार्थमेव । इदं च प्रकारांशमभिप्रेत्य । तदपि च स्वस्वरूपदुःखव्यतिरिक्तविषय एवेति बोध्यम् । स्वरूपदुःखविषयेऽप्ययथार्थत्वे तेषां दुःखात्मकत्वाभावप्रसङ्गात् । सर्वं ज्ञानं धर्मिण्यभ्रान्तमित्यनभ्युपगमाद्वेदमुक्तम् । अत एवतमोयोग्याः क्वचिद्बाह्यविषयथार्थज्ञानस्यापराधपरिपाकवदनौच्छितौ तमःप्रवेशसम्भवादिति ॥ **उभयरूपमिति** । यथार्थमयथार्थं चेत्यर्थः । अत्र याथार्थ्यक्रमेणोत्कर्षसमत्वापकर्षः । अयथार्थ्ये चापकर्षसमत्वोत्कर्षः ॥ **द्रष्टव्या इति** । अत्रायथार्थज्ञानस्य प्रसङ्गान्निरूपणमिति ध्येयम् ।

**वेदे.**— ॥ **तद्व्यतिरिक्ता इति** । योगिव्यतिरिक्ता इत्यर्थः । ईशलक्ष्मीनिरासाय जीवा इत्युक्तम् । योगिनिरासाय तद्व्यतिरिक्ता इत्युक्तम् ॥ **ईश्वरादिति** । योगिज्ञाननिरासायेश्वरादन्यत्रेति ।

अज्ञानप्रचुरमेवेत्यन्तमल्पविषयमित्यर्थः ॥ **उत्पत्तिविनाशवदिति ।** स्वरूपज्ञानस्याभिव्यक्त्यपेक्षयोत्पत्तिविनाशवत्त्वं वृत्तिज्ञानस्य च प्रवाहापेक्षयेति द्रष्टव्यम् । सर्वेष्वयोगिज्ञानेषु याथार्थ्यादिनियमाद्येकप्रकारमिति वक्तुं तावदयोगिविभागमाह ॥ **अयोगिन इति ॥ अन्येषामयथार्थमेवेति ।** प्रकारांश इत्यर्थः । उभयविधं यथार्थमयथार्थं चेत्यर्थः । अत्र यावदयथार्थज्ञानमुक्तं तावत्केवलप्रमाणलक्षणगतयथार्थपदव्यावर्त्यप्रदर्शनाय वेति ज्ञातव्यम् । अतः केवलप्रमाणविभागकथनावसरेऽयथार्थज्ञानप्रदर्शनसङ्गतमिति नाशङ्कनीयम् ।

**अभि.—** ॥ **अज्ञानप्रचुरमिति ।** अल्पविषयकमित्यर्थः । एतेन यस्याज्ञानं बहुतरं तद्विरोधि चाल्पं तदुच्यते अज्ञानप्रचुरमिति । न च ज्ञानस्य ज्ञानमस्तीत्यज्ञानप्रचुरं ज्ञानमित्ययुक्तमिति परास्तम् ॥ **अयोगिनोऽपि त्रिविधा इति ।** अत्रायोगिन उत्तमाधममध्यमाश्चेति त्रिविधाः । मध्यमा अप्युत्तमा मध्यमा अधमाश्चेति त्रिविधाः । एवं चोत्तमान्मध्यमोत्तमोत्तमांश्चैकीकृत्य मुक्तियोग्या इत्युक्तम् । मध्यममध्यमा नित्यसंसारिण इत्युक्ताः । अधमान्मध्यमाधमांश्चैकीकृत्य तमोयोग्य इत्युक्तमिति द्रष्टव्यम् । अवश्यं चैतदेवं विज्ञेयम् ।

त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः ।
तत्र देवामुक्तियोग्या मानुषेषूत्तमास्तथा ।
मध्यमा मानुषा ये तु स्मृतियोग्याः सदैव हि ।
अधमा निरयायैव दानवास्तु तमोलया ॥

इति वचनात् । न हि मध्यमानां त्रैविध्यकथनाभिप्रायाभावे मानुषेषूत्तमास्तथा । अधमा निरयायैवेत्युक्त्योः प्रयोजनमस्ति । तत्र देवा मुक्तियोग्या इत्यनेन सर्वेषां मुक्तियोग्यानां दानवास्तु तमोलया इत्यनेन तत्सर्वेषां तमोयोग्यानां च गृहीतत्वात् । अन्यथा ऋषिगन्धर्वपित्रादिमुक्तियोग्यानां रक्षःपिशाचादितमोयोग्यानां सङ्ग्रहो दुर्वारः स्यात् । किञ्च

स्रक्षे हि चेतनगणान्सुखदुःखमध्य
सम्प्राप्तये तनुभृतां विहृतिं ममैच्छन् ।

मानुषा मिश्रमतयोऽपि चेत्यादिना मानुषाणां मिश्रगतित्वप्राप्तिलक्षणमोक्षः श्रूयते । तथा

शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।
परा पूर्वेषां सख्या वृणक्तिः

इरित्यादिना पुनःपुनः संसारे परावृत्तिश्च श्रूयते। सुधायां तु मनुष्याणां सदा संसार इत्युक्तम्। न चैतद्द्वयं मध्यत्रैविध्यं वि सम्भवति। तदङ्गीकारे तु मिश्रमतिषु ये उत्तमाये चाधमाः तेषां विमिश्रगतिप्राप्तिलक्षणमोक्षः। तत्रायं विशेषः उत्तमानां केषाञ्चित्स्वर्गे निवासः सुखमतिशयितं दुःखमल्पम्। केषाञ्चिद्भूमौ निवासः। सुखादिनियमः पूर्ववत्। तदुक्तम्। भुङ्क्ते स्वर्गफलं नित्यं निरयं नैव गच्छति। विष्णोस्तु मध्यमो भक्तो जातये मध्यमेषु चेति। मानुषेषु मनुष्यलोकेषु मुक्तो भवतीत्यर्थः। अधमानां तु निरये वासो दुःखमतिशयितं सुखमल्पम्। तदुक्तम्। अधमा निरयायैवति। एतदुभयविषयाणि मानुषा मिश्रमतय इत्यादिवाक्यानि। मध्यममध्यममध्यमास्तु स्वर्गनरकभूलोकेषु परिवर्तमानाः। तदुक्तम्। त्रिदिवनिरयभूगोचरान्नित्यबद्धानिति। एतद्विषयाण्येव शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमान इत्यादिवाक्यानि। सुधाऽप्येतद्विषयिणीति वक्तुं शक्यमिति॥ **तत्र मुक्तियोग्यानामिति।** ब्रह्मादिमनुष्योत्तमान्तसन्मुक्तियेग्यानामित्यर्थः। उपलक्षणमेतत्। मिश्रमुक्तियोग्यानां मध्यमोत्तमानां यथार्थज्ञानप्रचुरमिति बोध्यम्॥ **संसारिणां त्विति।** मध्यमाधमानां स्वरूपज्ञानराशिमध्ये कानिचिद्यथार्थानीत्यर्थः॥ **अन्येषामिति।** उपलक्षणमेतत् मध्यमाधमानमयथार्थ ज्ञानप्रचुरमित्यपि बोध्यम्। ननु तमसि पतितानामधमानां स्वरूपज्ञानं दुःखं दुःखत्मनाऽवगाहते न वा। आद्ये यथार्थत्वापत्तिः। नेति पक्षे नित्यनिरयप्राप्तेरपुरुषार्थत्वं न स्यादिति चेत्। दुःखं दुःखात्मनाऽवगाहत इति वदामः। कथं तर्ह्ययथार्थत्वमिति चेत्। इत्थम्। न तावज्ज्ञानं दुःखमित्येव गृण्हाति। किं नामानिर्वचनीयमिदं दुःखमिति। यथार्थमपि तस्य प्राप्तमिति चेत्। अस्तु। न हि किमपि ज्ञानमयथार्थमेवास्ति। किं नाम यद्यदयथार्थं तत्सर्वमपि ज्ञानं भ्रमप्रमारूपमिति॥ **बाह्यं त्विति।** बाह्यज्ञानराशिमध्ये कानिचिदज्ञानानि यथार्थानि कानिचिदयथार्थानीत्यर्थः।

**वि.**— अयोगिज्ञानं लक्षयितुमयोगिस्वरूपं तावदाह॥ **तद्व्यतिरिक्ता जीवा इति।** योगिभिन्ना दुःखस्पृष्टचेतना इत्यर्थः। न चायोगिप्रविष्टानामतात्त्विकयोग्यानां कदाचिद्योगित्वेन कथं योगिभिन्नभिन्नत्वमिति वाच्यम्। ब्रह्मत्वयोग्यऋजुगणस्य ब्रह्मत्वविशिष्टभिन्नत्ववन्मुक्तियोग्यसंसारिण्यमुक्तभिन्नत्ववद्योगविशिष्टाभिन्नत्वस्य तत्र सम्भवात्। जीवा इतीशलक्ष्मीव्युदासः। तद्व्यतिरिक्ता इति त्रिविधयोगानां व्यवच्छेदः। लक्षणमाह॥ **ईश्वरादन्यत्रेति।** विशेषणवैय्यर्थ्यादीशविषये प्रचुराज्ञानयुक्ते लक्ष्मीज्ञानेऽति व्याप्तिवारणायेश्वरादन्यत्रेति विशेषणम्। योगज्ञानव्यवच्छेदाय प्रचुरपदम्। योगिज्ञानादयोगिज्ञानस्येश्वरादन्यत्राधिक ज्ञानयुक्तत्वविशेषवद्द्वैविध्यजन्यत्व विनाशित्वराहित्यरूपविशेषोऽप्यस्तीति प्रतीतिः स्यात्। तद्वारणाय तद्विभागादिकमाह॥ **तदपीति।** अयोगिज्ञानमपि पूर्ववद्योगिज्ञानवत्स्वरूपं बाह्यं चेति द्वयोपेतमत एव जन्यं विनाशि चेत्यर्थः।

तदुत्पत्तिविनाशकथनं दृष्टान्तदार्ष्टान्तिकयोर्बाह्यज्ञानविवक्षयेत्यवगन्तव्यम् । अयोगिज्ञानं योगिज्ञान-वद्द्विविधम् । जन्यत्वविनाशित्वाधिकरणं च यथा भवत्येवमयोगिस्वरूपज्ञानं योगिस्वरूपज्ञानवत्किं यथार्थमेवेति जिज्ञासायामस्त्यत्र विशेष ति वक्तुमुपोद्धात प्रक्रिययाऽयोगिविभागमाह ॥ **अयोगि-नोऽपीति ।** योगिन इवायोगिनश्च त्रिविधा इत्यर्थः । विशेषमाह ॥ **तत्रेत्यादिना ।** मुक्तियोग्या-नामात्मनि स्वातन्त्र्याभिमानत्वस्य देहगेहादौ ममेदमित्यभिमानस्य प्रामाण्यसंशयादेश्च मानसत्वात्तत् स्वरूपज्ञानं यथार्थमेवेति भावः । तदुक्तम् । यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदिति ॥ **नित्य-संसारिणां त्विति ।** स्वरूपज्ञानम्पिनुवर्तते । मिश्रं यथार्थत्वायथार्थत्वाभ्यां युक्तमित्यर्थः । नित्यसंसारिणां स्वातन्त्र्यात्तत्राभिमानादेस्वातन्त्र्यादि ज्ञानस्य च स्वरूपज्ञानात्मकत्वस्वरूपज्ञान-मिश्रमिति भावः ॥ **अन्येषामिति ।** मुक्तियोग्यनित्यसंसारिव्यतिरिक्तजीवानां स्वरूपज्ञानमयथार्थमेव । प्रकारेऽयथार्थमेवेत्यर्थः । तमोयोग्यानां स्वरूपज्ञानेन साक्षिविषयत्वेन वक्ष्यमाणे आत्मादाव-विद्यमानस्य स्वातन्त्र्यादेर्नियमेनोल्लेखात्स्वरूपज्ञानमयथार्थमेवेति भावः । स्वरूपज्ञानवदयोगि-बाह्यज्ञानमप्येवं विधमिति न मन्तव्यमित्याह ॥ **बाह्यं त्विति ।** स्वरूपज्ञानतोऽस्य विशेषद्योतनाय तुशब्दः । त्रयाणामप्ययोगिप्रविष्टमुक्तियोग्यानां नित्यसंसारिणां तमोयोग्यानां बाह्यज्ञानं तूभयविषयं यथार्थत्वायथार्थत्वलक्षणप्रकारद्वयोपेतमित्यर्थः । इति शब्दः केवलप्रमाणनिरूपणसमाप्तौ वर्तते ।

## वैशेषिकमतनिरासः

(२०) प्र.प.— **इन्द्रियजं लिङ्गजं स्मृतिरार्षं चेति चतुर्विधं यथार्थज्ञानमिति वैशेषिकाः । तदसत् । नित्यस्यागमजन्यस्य चासङ्ग्रहात् । स्मृतेरिन्द्रियजत्वेनार्षस्य योगिज्ञानत्वेन च पृथग्ग्रहणायोगाच्च ।**

**जना.—** ॥ **असङ्ग्रहादिति ।** न्यूनाधिकसङ्ख्याव्यवच्छेद एव हि परेषां मते विभागस्य प्रयोजनम् । एवं विभागेऽधिकसङ्ख्यावच्छेदो नास्तीत्याह ॥ **नित्यस्येति ।** न्यूनसङ्ख्याव्यवच्छेदोऽपि नास्तीत्याह ॥ **स्मृतेरित्यादिना ।** तथा चेन्द्रियजं लिङ्गजं योगिज्ञानमित्येव त्रैविध्यमस्त्विति भावः । किञ्चैवं त्रैविध्याङ्गीकारेऽनार्षयोगिज्ञानस्यापि सङ्ग्रहो भविष्यति । तदुक्तचातुर्विध्याङ्गीकारे तु ऋषिव्यतिरिक्तानामिन्द्रादिदेवानां ज्ञानस्यासङ्ग्रह एव भवेदिति वक्तुमार्षस्य चेति चकारः ।

**राघ.—** ॥ **आर्षमिति ।** योगजधर्मप्रत्यासत्तिजमित्यर्थः॥ **आगमजन्यस्य चेति ।** आगमोऽनुमान एवान्तर्भवतीत्येतन्निराकरिष्यत इति भावः ॥ **पृथग्ग्रहणायोगादिति ।** स्मृत्यार्षयोरिति योज्यम् । तयोरपीन्द्रियजमित्युक्त्यैव ग्रहणसम्भवादिति भावः । योगिज्ञानत्वेनेत्युक्त्या स्वकृतविभागस्य न्यूनताऽपि प्रत्युक्ता ॥ **इति केवलप्रमाणनिरूपणम् ॥**

**विज.**— ॥ **आगमस्य चेति** । यद्यप्यागमस्य तन्मते लिङ्गजन्य एवान्तर्भावः । तथाऽप्यागमस्य पृथक्प्रमाणत्वमिति स्वमतदार्ढ्येन तदुक्तम् । एवं स्मृतेरैन्द्रियकत्वे स्वमतदार्ढ्येनैवोक्तमित्यवधेयम् ॥ **योगेनेति** । तस्येन्द्रियजन्यत्व एवान्तर्भावादिति भावः ।

**वेदे.**— एवं स्वयं यथार्थज्ञानचातुर्विध्यमुक्त्वा परोक्तं चातुर्विध्यं दूषयितुमनुवदति ॥ **इन्द्रियजमिति** ॥ **नित्यस्येति** । नित्येश्वरज्ञानस्य त्वयाऽभ्युपगतत्वेनागमजन्यज्ञानस्य च त्वया लिङ्गजन्यत्वाभ्युपगमेऽपि तदयोग्यस्य वक्ष्यमाणत्वे पार्थक्यादत्र तदुभयसङ्ग्रह इति भावः ॥ **स्मृतेरिन्द्रियजन्यत्वेति** । वक्ष्यमाणरीत्येति भावः ॥ **आर्षस्य चेति** । इन्द्रियजन्यत्वेनेति सम्बन्धः । कथमार्षस्योन्द्रियजन्यत्वमित्यत उक्तं योगिज्ञानत्वेति । तथा चार्षस्य योगिज्ञानान्तर्भावसम्भवेन योगिज्ञानस्य चेन्द्रियजन्यज्ञानप्रभेदत्वेन त्वयोक्तत्वात् । इन्द्रियजमित्यनेनैवास्यापि ग्रहे पुनरार्षशब्देन तद्ग्रहणानुपपत्तिरिति भावः । न चार्षस्य तपःप्रभावजन्यस्य न योगप्रभावजन्ययोगिज्ञानत्वम् । येन तस्योक्तरीत्येन्द्रियजन्यज्ञानान्तर्भाव इति वाच्यम् । तयोर्विप्रकृष्टार्थविषयकप्रत्यक्षत्वाविशेषे तपोयोगप्रभावरूपकारणविशेषजन्यत्वेन पृथक्कारणासम्भवात् । अन्यथा चाक्षुषादिज्ञानानामपि तत्तत्सन्निकर्षरूपविशेषकारणजन्यत्वेन प्रत्यक्षबहिर्भावप्रसङ्ग इत्यवधेयम् ।

**अभि.**— ॥ **आर्षं चेतीति** । संज्ञैषा पूर्वाचार्यस्य प्रातिभज्ञानमार्षमिति । तच्च ऋषीणां भवति । कदाचिल्लौकिकानामपि भवति । तदुक्तम् । आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेषु लिङ्गाद्यनपेक्षात् । आत्ममनसोःसंयोगाद्धर्मविशेषात्प्रातिभं ज्ञानं यदुत्पद्यते तदार्षम् । तच्च कदाचिल्लौकिकानामपि भवति । यथा कल्पका वदन्ति । श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीति ॥ **आगमजन्यस्य चेति** । यद्यप्यागमस्यानुमानान्तर्भावादागमजन्यस्प च लिङ्गजमित्यनेनैव सङ्ग्रहं परे मन्यन्ते । तथाऽपि तदयुक्तमिति भावः ॥ **आर्षस्य च योगिज्ञानत्वेनेति** । योगिज्ञानतुल्यत्वेनेत्यर्थः । इदमुक्तं भवति । वैशेषिकास्तावद्योगिज्ञानमिन्द्रियजं मन्यन्ते । इन्द्रियजमपि द्विविधम् । सर्वज्ञीयमसर्वज्ञीयं चासर्वज्ञीयं योगजधर्मलक्षणया प्रत्यासत्त्या तत्तत्पदार्थसार्थज्ञानमिति वचनात् । एवं च योगजधर्मप्रत्यासत्तिसहकृतेन्द्रियजन्यज्ञानस्यैव धर्मविशेषसहकृतमनोजन्यस्य प्रातिभज्ञानस्यापीन्द्रियजन्यत्वेनार्षस्य च पृथग्ग्रहणायोगः । अन्यथा योगिज्ञानस्योपनीतभानादेश्च पृथग्ग्रहणप्रसङ्ग इति ।

**श्रीनि.**— ॥ **आर्षमिति** । ऋषीणां प्रतिभोत्पन्नज्ञानमित्यर्थः ॥ **इन्द्रियेति** । मन इन्द्रियेत्यर्थः । तथा चेन्द्रियजन्यमित्यनेनैव सङ्गृहीतमिति भावः ।

**वि.**— स्वकृतयथार्थज्ञानविभागदृढीकरणाय वैशेषिकोक्तिविभागं दूषयितुमनुवदति ।। **इन्द्रियजमिति** । साक्षात्काररूपमनुमितिरूपं स्मरणमृषिज्ञानं चेत्यर्थः ।। **नित्यस्यागमजस्येति** । ज्ञानस्येति शेषः ।। **स्मृतेरिन्द्रियजत्वेनेति** । मनोरूपेन्द्रियकरणत्वेनार्षस्य योगिज्ञानत्वेन ऋषिज्ञानस्य योगजत्वेनेन्द्रियज्ञानात्पृथगुपादानासम्भवादित्यर्थः । योगस्य प्रत्यक्षकारित्वादृषिज्ञानमिन्द्रियकरण-करणकमिति न तद्व्यतिरिक्तमिति भावः ।

## अनुप्रमाणलक्षणम्

(२१) प्र.प.— **यथार्थज्ञानसाधनमनुप्रमाणम् । यथार्थमित्येवोक्ते केवलेऽति व्याप्तिः । ज्ञानमित्येवोक्ते तत्र संशयादौ च । प्रत्यक्षेऽव्याप्तिश्च । साधनमित्येवोक्ते कुठारादावतिव्याप्तिः । यथार्थज्ञानमित्युक्ते केवलेऽतिव्याप्तिः । प्रत्यक्षेऽव्याप्तिश्च । यथार्थसाधनमित्युक्ते प्रत्यक्ष-साधनेऽतिव्याप्तिः । ज्ञानसाधनमित्युक्ते संशयादिसाधनेऽति व्याप्तिः । यथार्थज्ञानकारणमित्युक्ते प्रमात्रादावतिव्याप्तिरिति सर्वं सार्थकम् । यज्जातीयानन्तरं नियमेन कार्योत्पत्तिस्तदत्र साधनं विवक्षितम् । अतो न यादृच्छिकसंवादिष्वतिव्याप्तिः ।**

**राघ.**— क्रमप्राप्तमनुप्रमाणं लक्षयति ।। **यथार्थेति** । यथावस्थितज्ञेयविषयीकारिज्ञानसाधन-मित्यर्थः । पदानां कृत्यानि स्वयमेवाह ।। **यथार्थमित्यदिना सर्वं सार्थकमित्यन्तेन** । तत्र केवल-संशयादौ विपर्यये चेत्यर्थः । अतिव्याप्तिरित्यनुषङ्गः ।। **प्रत्यक्षसाधन इति** । यथावस्थितज्ञेयविषयीकारि चक्षुरादीन्द्रियं भवतीति तत्साधने तज्जनकेऽतिव्याप्तिरित्यर्थः । प्रमात्रादीत्यादिपदेन प्रमेयग्रहः । तात्पर्यं प्राग्वत् । तावता कुतः प्रमात्रादिव्यावृत्तिरित्यतः साधनपदस्यातिशयितकारणत्वार्थत्वादिति भावेनाह ।। **यज्जातीयेति** । यद्वा यादृच्छिकसंवादादिषु प्रत्यक्षादिषु यथार्थज्ञानसाधनत्वमस्तीति विशिष्टलक्षणस्याप्यतिव्याप्तिमाङ्क्याह ।। **यज्जातीयेति** । तादृशं च विषयसन्निकृष्टनिर्दोषकरण-जातीयमेव । न यादृच्छिक संवादादिजातीयमिति भावः ।

**विज.**— केवलप्रमाणलक्षणानन्तरमनुप्रमाणलक्षणमाह ।। **यथार्थज्ञानसाधनमिति** । अत्र प्रत्येकपदार्थस्य लक्षणभवनाक्षमत्वं क्रमेण दर्शयति ।। **यथार्थमित्यादिना ।। तत्रेति** । केवलभ्रमे वेत्यर्थः । लिङ्गज्ञानादेः करणत्वमभिप्रेत्याह ।। **प्रत्यक्ष इति** । साक्षात्कारिज्ञानसाधने चक्षुरादौ ज्ञानत्वाभावादित्यर्थः । द्वौ द्वावधिकृत्य दोषमाह ।। **यथार्थज्ञानमिति** । प्रत्यक्षसाधन इति चक्षुरादिकरण इत्यर्थः । ननु करणसाधनशब्दयोः पर्यायत्वात्कथं तेनात्मातिव्याप्तिवारणमित्यत आह ।। **यज्जातीयानन्तरमिति** । साधनशब्दस्य सामान्यार्थत्वेऽपि प्रकृते साधनविशेषपरत्वान्नोक्तदोष

इत्यर्थः । अनेन व्यापारविशिष्टस्य कारणत्वमभिप्रैति । निर्व्यापारस्य नियमाभावादिति । यद्यपि सति प्रतिबन्धके तस्यापि न नियमः । तथाऽपि तदभावे सतीत्यपि विशेषणं द्रष्टव्यमिति । यद्व्यापारस्यैव करणत्वमित्यग्रे स्फुटम् । प्रयोजनान्तरमपि समुच्चिनोति ॥ **अत इति ।**

**वेदे.—** अनुप्रमाणलक्षणप्रविष्टपदार्थानां प्रत्येकलक्षणत्वानुपपत्तिं क्रमेण दर्शयति ॥ **यथार्थमित्यादिना ।** द्वयोर्द्वयोर्लक्षणत्वेऽनुपपत्तिमाह ॥ **यथार्थज्ञानमिति ॥ प्रत्यक्षसाधन इति ।** चक्षुराद्यवयवरूप इत्यर्थः । अतिशयितं कारणसाधनमिह विवक्षितम् । तत्र किमतिशयितत्वविवक्षेत्यत आह ॥ **यथार्थज्ञानकारणमिति ॥ यज्जातीयानन्तरमिति ।** नन्वेवमपि ज्ञातज्ञापकवाक्यादिष्वतिव्याप्तिः । तेषामपि नियमेन यथार्थज्ञानसाधनत्वात् । आगमबहिर्भावस्य वक्ष्यमाणत्वेनालक्ष्यत्वाच्चेति चेत् । उच्यते । यादृच्छिकसंवादिलिङ्गविभ्रमातिव्याप्त्यभिप्रायेणैवं विवक्षा कृता । वस्तुतस्तु यथार्थपदमहिम्ना निर्दोषमिति साधनविशेषणमिह लक्ष्यते । तथा च निर्दोषं ज्ञानसाधनमनुप्रमाणमित्येवार्थो विवक्षितः । एवं च न यादृच्छिकसंवादिलिङ्गविभ्रमादिषु न वा ज्ञातज्ञापकवाक्यादिष्वति व्याप्तिः । तेषां लिङ्गविभ्रमत्वज्ञातज्ञापकत्वादिदोषयुक्तत्वात् । अत एव सुधायामनेनैवास्वारस्येन यद्वेत्यादिनाऽयमपि पक्ष उक्तः । प्रमाणसामान्यलक्षणेऽपि निर्दोषत्वविशेषणस्य विवक्षितत्वान्न तस्याप्यत्रातिव्याप्तिरिति भावः ।

**अभि.—** **यथार्थज्ञानसाधनमिति ।** यद्यप्यत्र यथार्थभूतं साधनत्वमखण्डमेकमेव लक्षणं तन्निरूपणाय ज्ञानपदं तद्विशेषणं यथार्थपदम् । ततश्च यथोक्तविशेषणविशेष्यभावे न वैय्यर्थ्यशङ्काऽस्ति । तथाऽपि किमर्थं यथार्थज्ञानसाधनत्वं लक्षणमभिधीयते यथार्थत्वं वा । ज्ञानत्वं वा । साधनत्वं वा । यथार्थज्ञानत्वं वा । ज्ञानसाधनत्वं वा यथार्थज्ञानकारणत्वं वा लक्षणं किं न स्यादिति मन्यमानस्य शङ्कामपाकरोति ॥ **यथार्थमित्येवोक्त इत्यादिना ॥ केवलेऽतिव्याप्तिरिति ।** यद्यपि यथार्थशब्दस्य साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन ज्ञेयविषयीकारित्वमित्यर्थत्वेन केवलेऽतिव्याप्तिः । तथाऽपि यथाज्ञानसाधनत्वं गुरुत्वादित्युक्त्या यथार्थमेव लक्षणं मन्यमानेनैवं विवक्षा कर्तुं शक्यते । प्रतिपत्तिगौरवात्परित्यक्तस्वीकारप्रसङ्गाच्च । किन्तु ज्ञेयविषयीकारित्वमेव यथार्थशब्दवाच्यमिति भावेन केवलेऽतिव्याप्तिरुक्तेति ध्येयम् । प्रत्यक्षेऽव्याप्तिश्चेति । ननु यद्यस्य ज्ञानं तत्तस्यानुप्रमाणमिति वक्तव्यम् । अन्यथाऽतिप्रसङ्गात् । एवं च सत्यसम्भव एवोक्तः । लिङ्गज्ञानादेर्लिङ्गादौ ज्ञानत्वेऽपि लिङ्ग्यादाविव ज्ञानत्वादिति चेत् । सत्यम् । असम्भव एवास्य लक्षणस्य वक्तव्यः । तथाऽपि परेण ज्ञानमित्येवोक्तम् । न तु यत्तच्छब्दौ निवेशितौ । न च युक्तमेव पूर्वपक्षी ब्रवीतीति नियमोऽस्ति । येन

तच्छब्दप्रवेशाभिप्रायं कल्पयाम इति भावेनाव्याप्तिरुक्ता ।। **सर्वं सार्थकमिति ।** अर्थोऽभिधेयरैवस्तु-प्रयोजननिवृत्तिष्विति वचनादर्थशब्दो निवृत्तिवचनः । ततश्च सर्वपरोक्तलक्षणमसार्थकम् । सनिवृत्तकं हेयमित्यर्थः । एतेन प्रागेकैकस्य लक्षणस्यातिव्याप्त्यादिदूषणमेवोक्तम् । न तु कस्यापि किञ्चित्-प्रयोजनमुक्तमिति सर्वं सार्थकमित्ययुक्तमिति परास्तम् ।। **यज्जातीयानन्तरमिति ।** अत्र स्वाभाविकमेव साधनत्वं विवक्षितम् । यादृच्छिकसंवादिनस्तु न प्रमाजनकत्वं स्वभावः । किन्त्वप्रयोजनकत्वमेव । प्रमाजनकत्वं तु दैववशाद्विषयसत्ताप्रयुक्तमिति न तत्रातिव्याप्तिरिति भावः । एतेनायमेतत्संयोग्ये-तत्वादित्येक व्यक्तिकेऽनुमाने जातीयाभावेन लक्षणाभावादव्याप्तिरिति परास्तम् । एतेनैव गन्धवत्त्व-व्याप्यपृथिवीत्ववानयमिति परामर्शे प्रायः प्रमाजनकत्वेऽपि गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादिति प्रयोगवेलायां प्रमाजनकत्वाभावान्नियमाभावेनाव्याप्यत्वादयुक्तमिति परास्तम् । यज्जातीयानन्तरं नियमेन कार्योत्पत्तिरित्यनेन स्वाभाविकजनकत्वव्याप्यदर्शनेन स्वाभाविकस्यैव ज्ञापितत्वात् । पृथिवीत्वपरामर्शस्य प्रयोक्तृदोषेण भ्रमजनकत्वेऽपि प्रमाजनकत्वस्वभावानपायात् ।

**आद.—** ।। **प्रत्यक्ष इति ।** इन्द्रिय इत्यर्थः ।। **प्रत्यक्षसाधन इति ।** इन्द्रियसाधन इत्यर्थः ।। **यज्जातीयानन्तरमिति ।** ननु चक्षुरादावव्याप्तिः । चक्षुर्जातीयानन्तरं नियमेन प्रमाऽनुत्पत्तेः । सत्यपि सन्निकर्षादिविशिष्टे चक्षुष्यालोकाद्यभावकाले प्रमाया अनुत्पत्तेर्येन चक्षुषा भ्रममात्रस्योत्पत्तिस्तस्य नाशस्तादृशचक्षुषा कदाऽपि प्रमाया अनुत्पत्तेश्च । प्रमोत्पादकसकलसामग्रीकाले यज्जातीयानन्तरं नियमेन प्रमोत्पत्तिस्तत्त्वमित्युक्तौ त्वात्मनोऽपि करणत्वापत्तिः । तत्रेष्टापत्तावपि यादृच्छिक संवादि-ष्वतिव्याप्तितादवस्थ्यम् । प्रमोत्पादकसामग्रीकाले तद्वाक्यजातीयकाले तद्वाक्यकाले नियमेन प्रमाया उत्पत्तेरिति चेन्न । अकुण्ठितशक्तिमद्यज्जातीयानन्तरं नियमेन कार्योत्पत्तिः । तत्त्वं करणत्व-मित्यर्थत्वस्य विवक्षितत्वात् । अत एव घटादिकं प्रति दण्डादिकं न कारणम् । चक्रादिकारणान्तरा-भावकालेऽकुण्ठितशक्तिमद्दण्डादिसत्त्वेऽपि घटानुत्पत्तेः । किन्तु मृदादिनिष्ठ चक्रभ्राम्यादिजन्य क्रियाविशेष एव । यथा छिदाया विजातीयदारुसंयोगः । एवं प्रकृते स्वविषयीभूतनिर्दुष्टार्थ-सन्निकृष्टेन्द्रियकाले प्रमोत्पद्यत एव । आलोकाद्यभावे तु तमसा चक्षुर्गतशक्तिः कुण्ठीभवति । आलोकेनैव तमोनाशे चक्षुःशक्तेः कुण्ठीभावापगमेन प्रत्यक्षमुत्पद्यत इत्यङ्गीक्रियते न त्वालोकस्य चाक्षुषत्वावच्छिन्नं प्रति कारणत्वम् । तदभावेऽप्यञ्जनादिना तमस्यपि प्रत्यक्षोदयेन व्यभिचारात् । घूकादीनां तमस्येव चाक्षुषोदयेन व्यभिचाराच्च । मनुष्यचाक्षुषत्वावच्छिन्नं प्रति कारणत्वाङ्गीकारेण व्यभिचारपरिहारश्च निष्प्रमाणकः । चक्षुष्येवोच्चावचशक्तेरनुभवसिद्धत्वाच्च । अत एवालोकस्य सहकारित्वमेव कारणगतशक्तावकुण्ठीभावसम्पादकत्वस्यैव सहकारित्वपदार्थत्वात् । चत्वारिंश-

द्वर्षानन्तरं सूर्यकान्तादेः सहकारित्वमेव । अन्यथा चत्वारिंशद्वर्षोत्तरं पुरुषविशेषचाक्षुषत्वावच्छिन्नं सूर्यकान्तादेरपि कारणत्वं कल्पनीयं स्यात् । न शक्तेस्तत्कुण्ठीभावतदभावादीनां कल्पने गौरवमिति वाच्यम् । अदृष्टकल्पन एव गौरवात् । दृष्टानुसारेण कल्पने तदभावात् । चक्षुषि शक्तेस्तारतम्य-स्यानुभवसिद्धत्वात् । एवं कस्यचित्पुरुषस्य गतिसामर्थ्यसत्त्वेऽपि प्रबलेन गृहीते सति गत्यभावोऽनु-भवसिद्धः । न च तदानीं तत्पुरुषे शक्तेर्नाशः । गृहीतस्यैव पुरुषशक्तेरनुभूयमानत्वात् । अत एवासौ प्रतिवदति मम गतिरस्ति न नष्टा किन्तु तच्छक्त्या प्रतिरुद्धेति । अतो दृष्टानुसारित्वान्न गौरवावकाशः । ततश्च निर्दुष्टार्थसन्निकृष्टनिर्दुष्टचक्षुष्ट्वावच्छिन्नसत्त्वे शक्तेः कुण्ठीभावसम्पादकासत्त्वे नियमेन प्रमोत्पत्तिर्भवत्येवेति दोषाभावात् । यादृच्छिकसंवादिवाक्यलिङ्गादीनां तु वाक्यत्वेन लिङ्गत्वेन सामान्यरूपेणानाप्तोक्तवाक्यत्वाव्यभिचारिलिङ्गत्वादिविशेषरूपेण वा तत्सजातीयसत्त्वेऽपि प्रमोत्पत्ति-नियमाभावेन तेन रूपेण न प्रमाकरणत्वम् । निर्दुष्टवाक्यत्वादिना तु कस्यापि साजात्यं नास्तीति न तेष्वतिव्याप्तिरित्याशयात् । केचित्तु । यद्धर्माभिव्यङ्ग्यसादृश्यं प्रमोत्पादकत्वधीजनकं तद्धर्मविशिष्ट-त्वस्य विवक्षितत्वात् । आलोकादिसहकार्यभावेन प्रमाया अजननेऽपि निर्दुष्टार्थेन्द्रिय सन्निकृष्टनिर्दुष्ट-चक्षुष्ट्वरूपधर्माभिव्यङ्ग्यसादृश्यज्ञानं तादृशचक्षुषि प्रमोत्पादकत्वबुद्धिं जनयति न भ्रमोत्पादकत्व-बुद्धिमिति तद्धर्मविशिष्टे लक्षणसमन्वयात् । शुद्धचक्षुष्ट्वावच्छिन्नस्यालक्ष्यत्वाल्लक्षणाभावेऽपि दोषा-भावात् । यादृच्छिकसंवादिवाक्यं यादृशानुपूर्वीविशिष्टं तादृशानुपूर्व्यभिव्यङ्ग्यसादृश्यज्ञानं न प्रमोत्पादकत्वबुद्धिं जनयतीति न दोषः । यद्यपि ज्ञानजनकत्वधियं जनयतीति प्रमोत्पादकत्वधियं प्रमोत्पादकधीजनकत्वमपि प्रमात्वविशिष्टधीजनकत्वविवक्षायामपि कदाचित्प्रमाजनकधियमपि जनयतीति न तद्दोषनिस्तारः । तथाऽपि भ्रमजनकत्वाभावविशिष्टप्रमाजनकत्वग्रहोत्पादकत्वस्य विवक्षितत्वान्न दोषः । यद्धर्माभिव्यङ्ग्यसादृश्यव्यापिका प्रमोत्पादकत्वशक्तिस्तद्धर्मविशिष्टत्वं विवक्षितम् । तादृशश्च धर्मो निर्दुष्टेन्द्रियत्वनिर्दुष्टोपपत्तित्वनिर्दुष्टवाक्यत्वादिकमेवेति न यादृच्छिक-संवादिष्वतिव्याप्तिरित्याहुः । यादृच्छिकसंवादिवाक्यमात्रवृत्त्यन्यतमत्वादिरूपधर्माभिव्यङ्ग्यसादृश्य-मादायातिव्याप्तिपरिहारस्य तादृशशक्त्यभिव्यञ्जकत्वनिवेशेनैव कर्तव्यतयाऽभिव्यञ्जकत्वस्य तद्धी-जनकत्वरूपेणोक्तपक्ष एव पर्यवसानं भवतीति बोध्यम् ।

**श्रीनि.— प्रत्यक्षसाधन इति ।** सन्निकृष्टेन्द्रियं हि प्रत्यक्षम् । तच्च विशिष्टं तत्साधने च क्रमेण विशेषणविशेष्यभूते सन्निकर्षेन्द्रिये तयोः सतोर्नियमेन तज्जननात् । अतस्तत्राव्याप्तिरित्यर्थः ।

**वि.—** अनुप्रमाणलक्षणमाह ॥ **यथार्थज्ञानसाधनमिति ।** यथार्थं यज्ज्ञानं तस्य साधनमित्यर्थः । नन्वनुप्रमाणे साक्षिणि लक्षणमव्याप्तम् । वृत्तिज्ञानस्य प्राकृतेन्द्रियकरणकत्वात्स्वरूपज्ञानस्य वा

जन्यत्वात् । ज्ञानसाधनत्वाभावेन तत्र लक्षणस्याभावादिति चेत् । न । सुधायां निर्दोषाक्षोद्भवं ज्ञानं प्रत्यक्षमिति गीयत इत्यनुव्याख्यानोक्तकेवलप्रमाणभूतप्रत्यक्षलक्षणस्येश्वरज्ञानरूपे प्रत्यक्षेऽव्याप्तिमा-शङ्क्योद्भवशब्दस्योत्पत्ति व्याप्त्यन्यतरार्थं यथोक्तमेवमत्र साधनशब्दस्य करणव्यञ्जकान्यतरार्थत्व-परत्वेनोक्तचोद्यानवकाशात् । अत एव स च स्वरूपज्ञानं व्यनक्ति प्राकृतेन्द्रियाणि मनोवृत्तिज्ञानं जनयन्तीति वक्ष्यति ॥ **केवल इति ।** केवलप्रमाण इत्यर्थः ॥ **तत्र संशयादौ चेति ।** अतिव्याप्ति-रित्यनुवर्तते । तत्र केवलप्रमाण इत्यर्थः । विपर्यय आदिशब्दार्थः ॥ **प्रत्यक्षेऽव्याप्तिश्चेति ।** निर्दोषार्थेन्द्रियसन्निकर्षे ज्ञानत्वाभावादिति भावः । ननु यादृच्छिकसंवादिस्थले प्रतीतिस्तावत्प्रमाव-धारणसाध्या क्रियात्वात् । करणं च लिङ्गशब्दविभ्रम एवातो यथार्थज्ञानसाधनत्वं तत्रास्तीत्यति-व्याप्तिः । न च तादृक् शब्दसंवाद्यपि लक्ष्यमेवेति सम्भवति । स्वरूपासिद्धव्याप्यत्वासिद्ध्यादेर-दोषत्वापातात् । यादृच्छिकसंवादादिषु प्रामाण्यव्यवहाराभावाच्चेत्याशङ्कमानं प्रति नात्र साधनत्वं करणत्वमात्रं विवक्षितं किन्नामान्यदेव विवक्षितमतो नातिव्याप्तिरित्यभिप्रेत्याह ॥ **यज्जातीयानन्तर-मिति ।** सतोरपि कर्तृकर्मणोर्यज्जातीयानन्तरं यद्धर्मावच्छिन्नकरणसमवधानानन्तरं नियमेनाव्यभिचारेण यथार्थज्ञानरूपकर्मोदयो भवति । यद्धर्मावच्छिन्नकारणमात्रानुप्रमाणलक्षणे साधनं विवक्षितमतो लिङ्गशब्दभ्रमत्वावच्छिन्नसमवधानानन्तरं नियमेन यथार्थज्ञानरूपकार्याभावात् । यादृच्छिकसंवादादिषु यदिच्छाधीनसंवादस्तु लिङ्गभ्रमेषु नाव्याप्तिरित्यर्थः । यथार्थज्ञानवत्त्वावच्छिन्ने लिङ्गशब्दज्ञानरूपकारणे सत्यव्यभिचारेण यथार्थज्ञानरूपकार्योत्पत्तेस्तदेव साधनं नान्यदिति प्रमाकरणे लिङ्गशब्दविभ्रमे नातिव्याप्तिरिति भावः । यथार्थं च ज्ञानसाधनं चेति विग्रहाश्रयणे तु साधनपदं करणपरमेव न विवक्षितसाधनपरम् । न च यादृच्छिकसंवादादिष्वतिव्याप्तिः यथार्थपदेनात्र निर्दोषत्वस्याभिप्रेतत्वात् । यादृच्छिकसंवादलिङ्गविभ्रमादेर्भ्रमत्वादिदोषयुक्तत्वेन निर्दोषत्वाभावात् । तदुक्तं बृहदारण्यभाष्ये । मानं चैव विशेषेण निर्दोषं ज्ञानसाधनमिति । निर्दोषं ज्ञानसाधन विशेषेण मानमनुप्रमाणमित्यर्थः । उक्तं च सुधायाम् । यद्वा निर्दोषतया ज्ञानसाधनं विशेष्यते । निर्दोषता च लिङ्गज्ञानादेर्यथार्थत्वलक्षणा व्याख्येया । निर्दोषं ज्ञानसाधनमनुप्रमाणमित्येवास्तु कृतं यथार्थज्ञानमिति ज्ञानार्थविशेषणेनेति चेन्न । तत्फलितार्थस्यैव निर्दोषग्रहणेन विवक्षितत्वादिति । एतेन यथार्थज्ञानसाधने ज्ञातज्ञापके निष्प्रयोजनादौ वाक्येऽतिव्याप्तिरित्यपास्तम् । ज्ञानसाधनत्वे सत्यपि तत्र निर्दोषत्वाभावात् । ज्ञातज्ञापकत्व-निष्प्रयोजनत्वादेर्वाक्यशेषत्वात् । तथा च प्रकरणान्ते वदति । ननु यादृच्छिक संवादिलिङ्ग-विभ्रमादेर्दुष्टकरणत्वे कथं तेन प्रमोत्पत्तिः । प्रमाप्रतिबन्धकस्यैव दोषत्वादिति चेन्न । विषयसत्त्वस्यो-त्तेजकतयोत्तेजकाभावविशिष्टस्यैव दोषस्य प्रतिबन्धकत्वेन तस्य तत्राभावेन यथार्थज्ञानोदया-

यथार्थज्ञानानुदयोरसम्भवात् । नन्वथाऽपि प्रमाकरणसामान्यलक्षणस्य यादृच्छिकसंवादिलिङ्ग-विभ्रमादिष्वव्याप्तिर्दुर्वारा । तेषां ज्ञानकरणत्वेन ज्ञेयविषयीकारित्वात् । ज्ञेयस्य यथावस्थितत्वाच्च यथावस्थितज्ञेयविषयीकारित्वस्य तत्र सत्त्वादिति चेन्न । ज्ञेयविषयीकारिणो निर्दोषत्वेन विशेषणीय-त्वात् । तथात्वे निर्दोषज्ञेयविषयीकारि प्रमाणमित्येवास्तु कृतं यथावस्थितेति ज्ञेयविशेषणेनेति । चेन्न । तस्यैव तदर्थत्वाभ्युपगमेन ज्ञेयविशेषणत्वानङ्गीकारात् । निर्दोषाभ्यां ज्ञेयविषयीकारिभ्यां ज्ञान-तत्साधनाभ्यां यज्ज्ञेयं तद्यथावस्थितेन न व्यभिचरतीति स्वरूपकथनपरं वा तद्विशेषणम् । तथा च यद्वा निर्दोषया ज्ञानसाधनं विशेष्यत इति पक्षे यथार्थज्ञानसाधनमनुप्रमाणलक्षणवाक्ये यथेति विशेषणकृत्यं यथावस्थितज्ञेयविषयीकारिप्रमाणमिति प्रमाणसामान्यलक्षणवाक्येऽपि यथावस्थितेति विशेषणकृत्यं न्यायसाम्यादिति । तदुक्तं सुधायाम् । निर्दोषज्ञानसाधनमनुप्रमाणमित्येवास्तु कृतं यथार्थमिति ज्ञानविशेषणेनेति चेन्न । तत्फलितार्थस्यैव निर्दोषग्रहणेन विवक्षितत्वात् । निर्दोष-करणजन्यज्ञानं यथार्थं न व्यभिचरतीति स्वरूपकथनपरं वा तदिति । केचित्तु नियमेन यथावस्थित-ज्ञेयविषयीकारित्वं प्रमाणसामान्यलक्षणमत एव यथावस्थितमेव ज्ञेयं यद्विषयीकरोति तत्प्रमाणमित्युक्तं प्राक् । तच्च यादृच्छिकसंवादिनि लिङ्गभ्रमादौ नास्तीति नाव्याप्तिरित्याहुः ।

**(२२) प्र.प.— ननु त्रिविधं प्रमाणमिति वक्तव्यम् । ल्युटोऽधिकरणेऽप्यनुशासनात् । सत्यम् । तथाऽपि प्रमाणशब्दस्याधिकरणे प्रयोगाभावात्तदसङ्ग्रहः । तथाऽपि प्रमाणशब्दो भावसाधनः करण-साधनश्चेत्यनेकार्थः । तत्र किमनुगतलक्षणकथनेनेति । उच्यते । नायमक्षादिशब्दवदत्यन्तभिन्नार्थः । किन्तु धात्वर्थानुगमस्तूभयत्र सम इत्येकार्थत्वमाश्रित्यानुगतलक्षणोक्तिरित्यदोषः ।**

**जना.—** ॥ **ल्युटोऽधिकरण इति** । करणाधिकरणयोश्चेति सूत्रेण ल्युटोऽधिकरणेऽपि विधानादित्यर्थः । अर्धाङ्गीकारेण परिहरति ॥ **सत्यमिति** ॥ **तथापीति** । ल्युटोऽधिकरणेऽनुशासने सत्त्वेऽपीत्यर्थः । अनेनाङ्गीकारांश उक्तः । अनङ्गीकृतांशमाह ॥ **प्रमाणशब्दस्येति** । अत्रार्थे ज्ञानं प्रमाणमितिवदत्रार्थे देवदत्तः प्रमाणमिति प्रमाणशब्दस्याधिकरणे प्रयोगाभावादित्यर्थः । अत्रार्थे विप्राः प्रमाणमिति प्रयोगस्तु तज्ज्ञानविषय इति प्रतिपादितमधस्तात् ॥ **किमनुगतेति** । लक्ष्यस्यानु-गतत्वे ह्यनुगतं लक्षणं वक्तव्यमिति भावः । लक्ष्यवाचकशब्दस्य नानार्थत्वं नानुगतलक्षणाकथने प्रयोजकम् । तथा सति नैयायिकमतेऽपि साधनाश्रयानुगतलक्षणाऽकथनप्रसङ्गात् । किन्त्वत्यन्त-सहप्रतीतिरहितार्थकत्वमिति मनसि निधाय तत्प्रकृते नास्तीत्याह ॥ **नायमिति** ॥ **अत्यन्तभिन्नेति** । अत्यन्तसहप्रतीतिरहितार्थको न भवतीत्यर्थः । प्रमीयते येन तत्प्रमाणमिति करणव्युत्पत्त्या प्रमिति-रूपधात्वर्थः प्रमितिकरणत्वघटकोपाधितया प्रतीयते । प्रमितिः प्रमाणमिति भावव्युत्पत्त्या तु

प्राधान्येनेतीषत्प्रकारभेदोऽस्ति तथाऽपि सहप्रतीत्यभावलक्षणभेदो नास्तीत्यन्तशब्दं प्रयुञ्जानस्य भावः। लक्ष्यवाचकशब्दस्यैकधात्वर्थघटितप्रवृत्तिनिमित्तकत्वमेवानुगतलक्षणोक्तौ प्रयोजकमिति मनसि निधाय तत्प्रकृतेऽस्तीति समाधत्ते ।। **धात्वर्थेति ।** माङ्मान इति धात्वर्थानुस्यूतिरित्यर्थः ।। **उभयत्रेति ।** प्रमितिः प्रमाणमिति भावे प्रमीयते येन तत्प्रमाणमिति करणे चेत्यर्थः। इत्येकार्थत्वमाश्रित्येति वदता नेदं घटकलशशब्दयोरिव मुख्यत एकार्थत्वम्। किन्त्वमुख्यमेव। तथाऽपि प्रकृते तदेवैकार्थत्वमिति ग्राह्यं गत्यन्तराभावात्। साधनाश्रयौ सङ्गृह्णद्भिर्नैयायिकैर्ज्ञानतत्करणे सङ्गृह्णद्भिर्भाट्टैश्चैवमेवैकार्थत्वं वाच्यम्। फलकरणादिसाधनस्यैकधर्मस्य तत्र घटकलशशब्दप्रवृत्तिनिमित्तस्येव दुर्वचत्वादिति सूचितम्।

**राघ.**— द्विविधं प्रमाणमिति प्रागुक्तविभागमाक्षिपति ।। **नन्विति ।** केवलप्रमाणमनुप्रमाणमधिकरणमिति वक्तव्यमित्यर्थः। कुत इत्यत आह ।। **ल्युट इति ।** ल्युट् च भावे करणाधिकरणयोश्चेति भावकरणयोरिवाधिकरणेऽप्यनुशासनादित्यर्थः। अधिकरणं ह्याधारोऽधिकरणमिति सूत्रोक्तदिशा क्रिययोः कर्तृकर्मणोराधारक्रियां प्रति य आश्रयस्तदुच्यते। न प्रमारूपक्रियाश्रयम्। तादृशाधिकरणे च प्रमाणपदस्य क्वाप्यप्रयोगान्न प्रमाणशब्देनाधिकरणार्थो ग्राह्य इत्याह ।। **प्रमाणशब्दस्येति ।** यद्वा क्रियाश्रयोऽधिकरणमिति भावेन शङ्कायामभ्युपगमवादेनाह ।। **प्रमाणशब्दस्येति ।** विप्राः प्रमाणमित्यादिस्तु तद्वाक्यस्य तज्ज्ञानस्य वा प्रामाण्याभिप्रायेणौपचारिकः प्रयोगः । न चैवमधिकिरणे ल्युङ्नुशासनवैयर्थ्यमिति शङ्क्यम्। धात्वन्तरेऽवकाशसम्भवादिति भावः ।। **तथाऽपीति ।** द्वैविध्येनैव विभागोपपत्तावपीत्यर्थः ।। **भावसाधन इति ।** भावो नाम धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयत इत्युक्त्या केवलो धात्वर्थः। स एव साधनं यस्य शब्दस्य प्रत्ययोत्पत्तौ यस्य स भावसाधनः। एवं करणसाधन इत्यपि बोध्यम् ।। **धात्वर्थेति ।** माङ् मान इति धातोरर्थस्य मितेर्यथार्थज्ञाने तत्साधने च मितिरियमिति साधनमिदमितीव केवलानुप्रमाणयोरनुगतिरस्तीत्येतावन्मात्रेणैकार्थत्वं प्रमाणपदस्याश्रित्यानुगतलक्षणोक्तिः ।- यदाऽनुप्रमाणे मितिसाधनमित्येवं मितिघटितत्वेन विना क्रियासाधनं छिदासाधनं गतिसाधनमित्यादिरूपेण निरूपणं स्यात् तदा प्रमाणपदस्य केवले मितत्वेन निरूपणमनुप्रमाणे च माङ्धात्वर्थासंस्पर्शेनैव निरूपणमस्तीत्यन्तभिन्नार्थत्वात्। भावकरणयोरनुगतिर्न कर्तव्या स्यात्। न चैवमस्तीति भावः। सर्वतः प्राबल्यात्प्रत्यक्षस्य पूर्वं निर्देशः। तदुपजीविनोऽनुमानस्य पश्चान्निर्देशः। अवशिष्टस्यागमस्यान्ते निर्देशः। क्वचिदनुमानस्यागममूलत्वेऽपि प्रायेण प्रत्यक्षोपजीवित्वादन्ततः प्रत्यक्षमूलत्वाच्च प्रत्यक्षानन्तरमनुमानस्य निर्देशोयुक्त इति ज्ञेयम्।

**विज.**— करण इवाधिकरणेऽपि करणाधिकरणयोश्चेति ल्युटोऽनुशासनाविशेषात्कुतस्तस्यापरिग्रह इत्यत आह ।। **नन्विति ।। प्रयोगाभावादिति ।** किमत्र प्रमाणमिति प्रश्ने घटोऽयमिति धीरिति वा

चक्षुरादीनि वेति फलकरणयोरस्ति प्रमाणपदप्रयोगः । न चैवमधिकरणे । न च देवदत्तोऽत्र प्रमाणमिति प्रयोगदर्शनात्कथमेवमिति वाच्यम् । तत्तदर्थविषयकप्रमाप्रयोजकत्वमादाय तथा प्रयोगात् । ननु तदर्थविषयकप्रमाश्रयत्वमादाय किमत्र प्रमाणमिति प्रश्नस्य प्रष्टुः संशयनिवर्तकप्रमाविषयत्वेन व्यधिकरणप्रमोपदर्शनान्निवर्त्यत्वाभावादिति भावः । प्रमितत्वतत्साधनत्वाभ्यामेव प्रमाणपदप्रयोगोपपत्तेः किमुक्तप्रवृत्तिनिमित्तेनेत्यत आह ।। **तथाऽपीति ।। धात्वर्थानुगम इति ।** नियमेन प्रमापदजन्यप्रतीतिविषययथावस्थितार्थविषयकत्वेन प्रमाप्रमासाधनोभयसाधारणेनोभयत्र प्रमाणपदप्रयोगोपपत्तौ ज्ञानत्वसाधनत्वप्रवेशेनोभयत्र प्रवृत्तिनिमित्तकत्वकल्पनागौरवात् । अक्षशब्दादौ तु नैवं किञ्चिदुभयसाधारणमवश्यं तत्पदजप्रतीतिविषयोऽस्तीत्यर्थः ।

**वेदे.**— भावकरणयोरिवाधिकरणेऽपि करणाधिकरणयोश्चेति ल्युटोऽनुशासनविशेषाद्विविधमिति विभागोऽनुपपन्न इत्याशङ्कते ।। **नन्विति ।। प्रयोगाभावादिति ।** नन्वस्त्यधिकरणेऽपि विप्राः प्रमाणमिति प्रयोगः । मैवम् । विप्राणां प्रमायां स्वातन्त्र्येण कर्तॄणामधिकरणत्वाभावात् । न हि क्रियाधारोऽधिकरणम् । किं नाम कर्तृकरणयोः क्रियाश्रययोः । धारणक्रियां प्रति यदाधारस्तदधिकरणं तस्मात्तदीयस्य विज्ञानस्य वाक्यस्य वा प्रामाण्याद्विप्राः प्रमाणमित्युपचर्यते । अतो नायमधिकरणे प्रयोग इति भावः ।। **भावसाधन इति ।** भावं साधयतीति भावसाधनः । भावव्युत्पन्न इति यावत् । एवमग्रेऽपि द्रष्टव्यम् ।। **किमनुगतेनेति ।** न ह्यक्षादिशब्दार्था यावन्तस्तावदनुगतत्वं लक्षणं परीक्षकैरुच्यत इति भावः । ननु भावकरणरूपार्थभेदात्कथं प्रमाणशब्दो न भिन्नार्थ इत्यत उक्तमत्यन्तेति । सर्वत्रानुगतैकधात्वर्थशून्यविजातीयार्थ इत्यर्थः । अयं भावः । सत्यमनेकार्थशब्दवाच्यानां नैकलक्षणमुच्यत इति । प्रमाणशब्दस्तु नात्यन्तमनेकार्थः । तद्वाच्ययोर्भावकरणयोरनेकत्वेऽपि तदुभयत्रैकमाङ्धात्वर्थानुगमेनैकत्वस्यापि सम्भवेनैकार्थत्वात् । न ह्यक्षादिशब्दवाच्येषु वेदने करणेन्द्रियादिष्वर्थेष्वेकधात्वर्थानुगमोऽस्ति । येन तेऽप्येकार्थाः स्युः । तथा चात्रानुगतार्थलक्षणोक्तिर्युक्तेति । अन्ये तु नियमेन प्रमाणपदजन्यप्रतीतिविषययथावस्थितार्थ विषयकत्वेन प्रमातत्साधनोभयसाधारणेनोभयत्र प्रमाणपदप्रयोगोपपत्तौ ज्ञानत्वसाधनत्वप्रवेशेनोभयप्रवृत्तिनिमित्तकत्व कल्पनायां गौरवात् । अक्षादिशब्देनैव किञ्चिदुभयसाधारणं तत्पदजन्यप्रतीतिविषयोऽस्तीत्यर्थ इत्याहुः । अत्र धात्वर्थानुगमस्त्वित्यादिग्रन्थस्वारस्यं कथमिति चिन्त्यम् ।

**अभि.— ल्युटोऽधिकरणेऽप्यनुशासनादिति ।** करणाधिकरणयोश्चेति सूत्रेणानुशासनादित्यर्थः ।। **अधिकरण इति ।** कर्तृकरणयोराश्रये पृथिव्यादौ प्रयोगाभावादित्यर्थः ।। **भावसाधन इति ।** भावः

साधनं निष्पत्तौ कारणं यस्य स भावसाधनः । भाववाचिप्रत्ययान्ततया निष्पन्न इति यावत् । एवं करणसाधन इत्यत्रापि ज्ञातव्यम् ॥ **अनेकार्थ इति ।** केवले व्युत्पादनीयः प्रमाशब्दोऽन्यो भावसाधनत्वात् । अनुप्रमाणे व्युत्पादनीयोऽन्यः करणसाधनत्वात् । एवं चानुगतशब्दाभावाल्लक्ष्यैक्य विवक्षया तद्व्युत्पत्तिसिद्धये लक्षणयोः कथनमनुपपन्नमिति भावः ।

**आद.**— ॥ **तथाऽपीति ।** एकया वृत्त्या यावदर्थबोधकमेकं पदं तावत्स्वेकजातीयत्वमपेक्षितम् । अन्यथा विप्रकृष्टार्थानामनुपस्थित्या तेषु शक्तिग्रहासम्भवात् । सामान्यतः प्रमेयत्वादिनोपस्थितावपि तत्र प्रवृत्तिनिमित्तो यो धर्मस्तद्रूपेणोपस्थितेरेवापेक्षितत्वात् । अन्यथाऽतिप्रसङ्गात् । एकजातीयत्वे तु सर्वेषां तत्सादृश्यप्रत्यासत्त्योपस्थितिः सम्भवतीति तादृशसादृश्याभिव्यञ्जकश्च धर्मो निर्वाच्यः । तादृशश्च धर्म उक्तलक्षणरूप इति लक्षणाभिधानसार्थक्यं सम्भवति । प्रकृते चैकशक्त्या ज्ञानतत् कारणोभयबोधकत्वाभावेनोभयसाधारणलक्षणमप्रयोजकमित्याशयः ॥ **नायमिति ॥ अत्यन्तभिन्नार्थ इति ।** एकरूपघटितधर्मावच्छिन्नाबोधक इत्यर्थः । तत्र द्यूतत्वेन्द्रियत्वादिरूपप्रवृत्तिमिमित्तयोरेकरूपावच्छिन्नाघटितत्वाद्भिन्नार्थत्वमिति भावः । प्रमाणपदस्य तु याथार्थ्यरूपधात्वर्थघटितधर्मावच्छिन्नबोधकत्वमेवेत्यर्थः ॥ **धात्वर्थानुगम इति ।** याथार्थ्यरूपयाथार्थ्यानुगमादित्यर्थः ॥ **एकार्थत्वमाश्रित्येति ।** तस्यैव प्रवृत्तिनिमित्तत्वाङ्गीकारेणेत्यर्थः । अयमाशयः । प्रमाणपदस्यास्ति ज्ञाने तत्करणे च प्रयोगः । तत्र च प्रवृत्तिनिमित्तमेक एव धर्मः । तदनुसारेणैव लोकैर्व्यवह्रियमाणत्वात् । न च प्रमायां यथार्थज्ञानत्वाभिप्रायेण तत्करणेषु तत्करणत्वबोधतात्पर्येण प्रयोगः । न तूक्तबोधतात्पर्येणेति वाच्यम् । जलाधिरूपार्थे वाक्यानुमानतद्दर्शनरूपप्रमाणसम्प्लवे सत्यत्रार्थे वाक्यानुमानं चाक्षुषं च प्रमाणमित्येकदा प्रमाणपदप्रयोगात् । सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायेनैकया वृत्त्या प्रतीतार्थस्य समभिव्याहृतपदार्थेष्वन्वयस्यासति बाधके न्याय्यत्वेन ज्ञानतत्करणत्वोभय साधारणरूपावच्छिन्नबोधकत्वस्यावश्यकत्वात् । किमत्र प्रमाणमित्याकाराया जिज्ञासाया ज्ञानस्य तत्करणस्य वा कथने निवृत्तेर्जायमानत्वेन जिज्ञासाबोधकवाक्यघटकप्रमाणपदस्योभयसाधारणरूपावच्छिन्नबोधकत्वस्यावश्यकत्वात् । यदि च याथार्थ्यानुसन्धानाभावेऽपि प्रमायास्तत्करणस्य वा प्रमाणपदबोध्यत्वं तर्हि याथार्थ्यस्यापि तत्पदप्रवृत्तिनिमित्तत्वाङ्गीकारे गौरवादिरूपं बाधकं स्यात् । न च तदस्ति । याथार्थ्यानुसन्धानं विना प्रमाणपदबोध्यत्वस्यैवासम्भवात् । लाघवात्तस्यैव स्वरसतस्तत्पदप्रयोगे निमित्तत्वमङ्गीकर्तव्यम् । अनुशासनबलात्क्वचित्तदर्थकत्वमप्यस्त्विति याथार्थ्यस्यैव धात्वर्थत्वं तथोपपादितमधस्तात् ।

**श्रीनि.—** ॥ **ल्युटोऽधिकरण इति ।** प्रपूर्वकान्माङ्माने इति धातोर्ल्युट् भावे करणाधिकरणयोश्चेति सूत्राभ्यां भावकरणाधिकरणेषु ल्युट्प्रत्यये सति प्रमा ल्युडिति स्थिते लशक्वतद्धित इति लस्य हलन्त्यमिति टस्य चेत्संज्ञायां तस्य लोप इति लोपे प्रमा यु इति जाते युवोरनाकाविति युकारस्या-नादेशे प्रमानेति जाते रषाभ्यां नो णः समानपद इति णत्वे प्रमाणेति शब्दनिष्पत्तिरिति भावः ॥ **तथाऽपीति ।** अनुशासनेऽपीत्यर्थः ॥ **प्रयोगाभावादिति ।** किमत्र प्रमाणमिति प्रश्ने घटोऽयमिति प्रतीतिश्चक्षुर्वेति भावकरणयोरिवाधिकरणे प्रयोगाभावात् । कृत्तद्धितसमासानां च प्रयोगाधीनत्वात् प्रमाणशब्दस्यापि कृदन्तत्वादिति भावः । ननु यावत्सुखविशेषेषु सामान्यशब्दार्थानुगमस्तावत्सामान्य शब्देन सङ्ग्रहाय तत्प्रवृत्तिनिमित्ततयाऽनुगतलक्षणमुच्यते । यथा केवलशब्दार्थानुगतवतामीशज्ञानादीनां सङ्ग्रहाय यथार्थज्ञानमिति लक्षणोक्तिः । यत्र सामान्यशब्दार्थानुगमस्तत्रानुगतलक्षणकथनम् । यथाऽक्ष शब्दार्थानुगतिशून्येन्द्रिय एव नाकरणादिसङ्ग्रहायानुगतलक्षणानुक्तिः । प्रमाणशब्दार्थश्च केवलानु-प्रमाणयोरनुगत एव केवले प्रमितिः प्रमाणमिति भावव्युत्पत्त्या धात्वर्थभूतज्ञानरूपक्रियावाचकत्वात् । अनुप्रमाणे च प्रमीयतेऽनेनेति करणव्युत्पत्त्या धात्वर्थक्रियावाचकत्वात् । अतो यथार्थं प्रमाण-मित्यनुगतलक्षणकथनमयुक्तमिति शङ्कते ॥ **तथाऽपीति ।** विभागन्यूनताभावेऽपीत्यर्थः । भावो धात्वर्थक्रिया ॥ **धात्वर्थानुगम इति ।** माङ्धात्वर्थो ज्ञानं तस्य यथार्थज्ञानरूपकेवले यथार्थज्ञान-साधनरूपानुप्रमाणे चानुगतिरस्ति । उभयत्रापि ज्ञानपदप्रवेशादिति भावः ।

**वि.— ल्युटोऽधिकरणेऽप्यनुशासनादिति ।** प्रमितितत्करणयोरिव मित्यधिकरणेऽपि करणाधि-करणयोश्चेत्यनेन ल्युडन्तप्रमाणशब्दस्य विधानादित्यर्थः । ल्युडन्तप्रमाणशब्दस्य कर्तर्यनुशासनाभावा-त्तस्यासङ्ग्रहेऽपि भावे करणाधिकरणयोश्चेति भावकरणाधिकरणेषु विधानात् । त्रयाणामपि लक्ष्यत्वेन सङ्ग्राह्यतया त्रिविधं प्रमाणमिति वक्तव्यमिति भावः ॥ **सत्यमिति ।** ल्युटोऽधिकरणेप्यनुशासन-मस्तीत्येवमित्यर्थः । तर्हि त्रिविधं प्रमाणमित्यत आह ॥ **तथाऽपीति ।** ल्युडन्तप्रमाण-शब्दस्याधिकरणेऽनुशासनेऽपीत्यर्थः । तदसङ्ग्रहस्तस्याधिकरणस्य लक्ष्यत्वेनास्वीकार इत्यर्थः । यावल्लोकवेदयोः प्रमाणमिति व्यवहितत्वादेव लक्ष्यं भवति नान्यत् । तथा च प्रमितिवत्करणयोरनुभव एवात्र मानं सम्भवदेव हि भगवति वस्तूपगमे नः शरणम् । अत्रार्थेऽनुमानं प्रमाणमत्रार्थे शब्दः प्रमाणमिति प्रमितितत्करणयोः प्रमाणशब्दयोगवत्प्रमित्यधिकरणेऽत्रेदं प्रमाणमिति प्रमाधिकरणेऽपि प्रमाणशब्दप्रयोगः । मैवम् । प्रमाकर्तॄणां तदधिकरणत्वाभावात् । न हि क्रियाधारोऽधिकरणं किं नाम कर्तॄणां कर्मणोः क्रियाश्रययोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणम् । अतस्तदीयज्ञानस्य तद्वाक्यस्य वा प्रामाण्याद्विप्राः प्रमाणमित्युपचर्यन्त इत्येवाभ्युपेयम् । अन्यथा प्रमाणभूततदीय-

ज्ञानयोरन्यतरस्य ज्ञाने प्रमातरि प्रमाणमिति व्यवहारापातादिति ॥ **तथाऽपीति** । अस्तु नानाधिकरणस्यासङ्ग्रहस्तथाऽपि प्रमाणमिति शब्दो भावं साधयतीति भावः । करणसाधनः करणप्रतिपादक इति हेतोरनेकार्थः । अनेकप्रवृत्तिनिमित्ताविशिष्टार्थप्रतिपादक इत्यर्थः । तत्र भिन्नप्रवृत्तिनिमित्तक प्रमाणशब्दार्थयोर्भावकरणयोरनुगतलक्षणकथनेन साधारणोक्तौ किं प्रयोजनं न किमपीत्यर्थः । अनुगतव्यवहाराभावादनुगत लक्षणकथनं व्यर्थमिति भावः ॥ **नायमिति** । अयं प्रमाणशब्दोऽजगवादिशब्दवदत्यन्तभिन्नार्थः । एकानर्थत्वमधिकरणतानर्थत्वं ग्राह्यमित्यर्थः ॥ **किन्तु धात्वर्थानुगम इति** । माङ्मान इति धातुव्याख्यानाद्धात्वर्थभूतमानस्यानुगमः सम्बन्धस्तूभयत्र भावकरणयोः प्रमातत्करणयोः समान इत्येकार्थतामेक प्रवृत्तिनिमित्तविशिष्टार्थतामाश्रित्यानुगतलक्षणोक्तेरिति हेतोरदोषः । अनुगतलक्षणस्य वैय्यर्थ्यरूपदोषो नास्तीत्यर्थः ।

## अनुप्रमाणभेदाः प्रत्यक्षलक्षणम्

(२३) प्र.प.— **त्रिविधमनुप्रमाणम् । प्रत्यक्षमनुमानमागमश्चेति । तत्र निर्दोषार्थेन्द्रिय सन्निकर्षः प्रत्यक्षम् । अर्थशब्देनेन्द्रियविषया गृह्यन्ते । तेषां दोषाः । अतिदूरत्वमतिसामीप्यं सौक्ष्म्यं व्यवधानं समानद्रव्याभिघातोऽनभिव्यक्तत्वं सादृश्यं चेत्यादयः । तेषु सत्सु क्वचिज्ज्ञानमेव न जायते । क्वचिद्विपरीतज्ञानमुत्पद्यते ।**

**जना.**— ॥ **निर्दोषेति** । निर्दोषे च ते अर्थेन्द्रिये च तयोः सन्निकर्षः प्रत्यक्षमित्यर्थः । नन्वर्थशब्दस्य पूर्वोक्तरीत्या ज्ञेयपरत्वेऽतीन्द्रियवाय्वादिना चक्षुस्सन्निकर्षस्यापि लक्ष्यत्वापत्तौ तत्र याथार्थ्यज्ञानसाधनत्वरूपानुप्रमाण लक्षणाभावादव्याप्तिः स्यादित्यत आह ॥ **अर्थशब्देनेति** । के तेषां दोषा इत्यत आह ॥ **तेषामिति** । सौक्ष्म्यमणुपरिमाणवत्त्वमित्यर्थः । नन्वतीन्द्रियत्वं सौक्ष्म्यम् । इन्द्रियविषया गृह्यन्त इत्यनेन विरोधापत्तेः । ननु कथमतिदूरस्थत्वादीनामर्थदोषत्वमित्याशङ्क्य दोषलक्षणसद्भावादिति वक्तुं दोषलक्षणं तेषु दर्शयति ॥ **तेषु सत्स्वित्यादिना** । इन्द्रियग्रहणयोग्यविषयक सम्यग्ज्ञानप्रतिबन्धकत्वमिन्द्रियार्थदोषलक्षणम् । तच्च ज्ञानमात्रप्रतिबन्धकत्वाद्वा तदप्रतिबन्धकत्वेऽपि संशयविपर्ययजनकत्वाद्वा सम्भवतीति भावः ।

**राघ.**— तत्र तेषु मध्ये ॥ **निर्दोषेति** । अर्थाश्चेन्द्रियाणि चार्थेन्द्रियाणि । निर्दोषाणामर्थानां निर्दोषाणामिन्द्रियाणां च सन्निकर्षः । समुदायाशयमेकवचनम् । स प्रत्यक्षमुच्यत इत्यर्थः । पदानां कृत्यानि स्वयमेव वक्ष्यति । अर्थपदस्यानेकार्थत्वादत्राभिमतमर्थमाह ॥ **अर्थशब्देनेति** । अन्यथाऽऽकाशादिना चक्षुरादेः सन्निकर्षेऽतिव्याप्त्यापत्तेरिति भावः ॥ **समानद्रव्याभिघात इति** ।

क्षीरनीरादाविव सदृशद्रव्यान्तरमेलनमित्यर्थः । अनभिव्यक्तत्वमन्धकाराद्यावृतत्वम् । सादृश्यं द्रव्यान्तरेण सादृश्यमित्यर्थः । आदिपदेनालातभ्रमणप्रबलद्रव्याभिभवादिग्रहः । कथमेषां दोषतेत्यत आह ।। **तेषु सत्स्विति ।** एतेषामन्यतमे सतीत्यर्थः ।

**विज.—** प्रमोत्पत्तिनियतत्वमनुप्रमाणसामान्य लक्षणमभिप्रेत्याह ।। **निर्दोषेति ।** निर्दोषेत्युपलक्षणम् । स्वेतरसकलभावभूतकारण सहकृतेत्यपि द्रष्टव्यम् । न चैवं स्वेतरसकलकारणसहितमिन्द्रियमपि स्यात् ।। **इष्टत्वादिति ।। व्यवधानमिति ।** व्यवधायकमित्यर्थः ।। समानाभिघात इति । बलवत्सजातीयसम्बन्ध इत्यर्थः । अनभिव्यक्तं स्वस्वाभिव्यक्त्यसाधारणरहितमित्यर्थः । आदिपदादसाधारणपित्तादितद्दोषपरिग्रहः ।

**वेदे.—** अनुप्रमाणविभागमाह ।। **त्रिविधमिति ।** न्यूनाधिकसङ्ख्यान्यतमान्तर्भावाभावज्ञापनार्थोऽयं विभागः । करणत्रैविध्यकथनेन तत्फलरूपकेवलप्रमाणत्रैविध्यमप्यनुमतमिति द्रष्टव्यम् । प्रायेणासन्नाव्यवहितवर्तमानकतिपयार्थग्राहकं प्रत्यक्षमनासन्नातीतानागतव्यवहितार्थगोचरमनुमानं स्वातन्त्र्येणाशेषार्थविषय आगम इत्यर्थग्रहणक्रमेणोद्दिशति ।। **प्रत्यक्षमिति ।** अर्थं प्रति स्थितमक्षं प्रत्यक्षम् । प्रमाणान्तरानुसारेणैवार्थ प्रमापकमनुमानं सम्यगतीन्द्रियार्थावगमक आगम इति संज्ञानिरुक्त्यैव लक्षणसिद्धौ प्रत्यक्षे तस्यैवार्थस्य स्पष्टीकरणार्थमनुमानादौ शृङ्गिग्राहकतया तज्ज्ञानार्थं पुनर्लक्षणारम्भः । तत्र प्रत्यक्षलक्षणमाह ।। **निर्दोषेति ।** निर्दोषत्वमर्थेन्द्रिययोर्विशेषणम् । तत्कृत्यं चाग्रे स्वयमेव विभावयिष्यति । चक्षुराकाशसन्निकर्षेऽतिव्याप्तेराह ।। **अर्थशब्देनेति ।** अतिदूरत्वं मेर्वादौ । अतिसामीप्यं चक्षुःपक्ष्मादौ । सौक्ष्म्यं किञ्चिद्दूरस्थकेशादौ । व्यवहितत्वं कुड्यादिव्यवहितघटे । समानाभिघातो बलवत्सजातीयसम्बन्धः क्षीरनीरादौ । अनभिव्यक्तत्व स्वाभिव्यञ्जकराहित्यमन्धकारस्थघटादौ । रजतादिना चाकचक्यादिसादृश्यं शुक्त्यादौ च दोषत्वेन प्रसिद्धमिति द्रष्टव्यम् । आदिपदेन प्रतिबद्धत्वं गृह्यते । मणिमन्त्रादिदशायां त्वक्स्पृष्टेऽपि वह्नावौष्ण्यानुपलम्भात् । नन्वेतेषां दोषत्वं न ज्ञानाजनकत्वं सादृश्यादौ विपरीतज्ञानजनकेऽव्याप्त्यापत्तेः । नापि विपरीतज्ञानजनकत्वं ज्ञानाजनकेऽतिदूरत्वादावव्याप्त्यापत्तेरित्यत आह ।। **तेष्विति ।** तथा च प्रमाप्रतिबन्धकत्वमेव दोषत्वम् । तत्प्रतिबन्धकत्वं च द्वेधा तदजनकत्वेन तद्विपरीतकार्यजनकत्वेनेत्युक्तं भवति ।

**अभि.—** अर्थशब्दस्य ज्ञेयवाचित्वादाकाशेन्द्रियसन्निकर्षेऽति व्याप्तिरित्यत आह ।। **अर्थशब्देनेति ।।** समानाभिघात इति । नक्षत्राणां सूर्यतेजोऽभिघातः समानाभिघात इत्यर्थः ।। **सादृश्यं चेत्यादय इति ।** किमुदाहरणम् । शुक्तिगतं चाकचक्यं भ्रमहेतुत्वात् । ननु नेदमुदाहरणं युक्तम् । शुक्तिरियमिति

ज्ञानं हेतुसन्निकर्षेऽव्याप्तिप्रसङ्गात् । रजतसादृश्यरूपदोषस्य शुक्तौ सदातनत्वेन निर्दोषार्थेन्द्रिय सन्निकर्षत्वाभावादिति चेत् । न ब्रूमो वयं सादृश्यं व्यवधानमिव स्वतन्त्रदोष इति येनोक्तदोषः स्यात्। किं नाम सम्यक् सन्निकर्षाभावेनाधिष्ठानयाथात्म्यज्ञानाभावे आरोपोपयोगिस्मृतिहेतुत्वाद्दोष इति। एवं च शुक्तिरिति ज्ञानहेतुसन्निकर्षे निर्दोषार्थेन्द्रियसन्निकर्षत्वस्य भावान्नाव्याप्तिः । अतिदूरत्वादयः केषाञ्चिदर्थदोषा अपि गृध्रादीनामदोषा इति बोध्यम् ।

**वि.—** अनुप्रमाणविभागमाह ॥ **त्रिविधमिति ।** न्यूनाधिकसङ्ख्यासङ्ख्येयाभावान्तर्भावज्ञापनार्थोऽयं विभागः । तिस्रो विधा उद्दिशति ॥ **प्रत्यक्षमिति ।** प्रायेणासन्नाव्यवहितवर्तमानकतिपयार्थग्राहकं प्रत्यक्षम् । पारतन्त्र्येणानासन्नातीतानागतव्यवहितार्थ गोचरमनुमानम् । स्वातन्त्र्येणाशेषार्थविषय आगम इत्यर्थग्रहणक्रमेणोद्देशक्रम इति बोध्यम् । उद्देशानुसारेण प्रत्यक्षलक्षणमाह ॥ **तत्रेति ॥** प्रत्यक्षानुमानागमेषु निर्दोषयोरर्थेन्द्रिययोः सन्निकर्षः सम्बन्धः प्रत्यक्षमित्यर्थः। अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यभिधानादर्थशब्दस्याभिधेयादिवाचित्वभ्रमवारणायार्थमाह ॥ **अर्थशब्देनेति ।** अन्यथा चक्षुरीश्वरसन्निकर्षेऽति व्याप्तिः स्यादिति बोध्यम् । अर्थेन्द्रिययोर्निदोषत्वमुक्तं के तत्रार्थदोषा इति जिज्ञासायामाह ॥ **तेषां दोषा इति ।** तेषां विषयाणां दोषा विषयनिष्ठाः प्रमाप्रतिबन्धका इत्यर्थः । अतिदूरत्वं चक्षुरादिकरणापेक्षया ज्ञात्रपेक्षया वाऽतिसमीपस्थमित्यर्थः । सौक्ष्म्यं महत्त्वे सति न्यूनपरिमाणवत्त्वमित्यर्थः । व्यवधानं चक्षुरादिकरणापेक्षया वा कुड्यादिव्यवहितत्वमित्यर्थः । समानाभिघातः सदृशवस्तुसम्बन्धः । अनभिव्यक्तत्वमन्धकाराद्यावृतत्वमित्यर्थः। सादृश्यं गुणादिवद्धर्मविशेषः । आदिपदेनात्र भ्रमादिकं गृह्यते । तेषां दोषत्वमुपपादयति ॥ **तेषु हि सत्स्विति ।** अतिदूरस्थत्वादिषु सत्सु क्वचित्कस्मिंश्चिद्विषये ज्ञानमेव न जायते । एवकारेण तत्प्रमा नोत्पद्या इति ज्ञापयति । क्वचिच्च कस्मिंश्चिद्विषये विपरीतज्ञानं मिथ्याज्ञानमुत्पद्यत इत्यर्थः ।

## साक्षीन्द्रियस्य स्वरूपम्, विषयाः

**(२४) प्र.प.— इन्द्रियशब्देन ज्ञानेन्द्रियं गृह्यते। तद् द्विविधम्। प्रमातृस्वरूपं प्राकृतं चेति। तत्र स्वरूपेन्द्रियं साक्षीत्युच्यते । तस्य विषया आत्मस्वरूपं तद्धर्मा अविद्या मनस्तद्वृत्तयो बाह्येन्द्रियज्ञानसुखाद्याः कालोऽव्याकृताकाशश्चेत्याद्याः। स च स्वरूपज्ञानमभिव्यनक्ति।**

**जना.—** नन्वेवमपि कर्मेन्द्रियसन्निकर्षेऽतिव्याप्तिः । तत्रापि निर्दोषार्थेन्द्रियसन्निकर्षत्वसद्भावादित्यत आह ॥ **इन्द्रियशब्देनेति ।** केचित्प्रमातृस्वरूपभूतमिन्द्रियं नाङ्गीकुर्वते । अपरे तु मनस इन्द्रियत्वं प्रत्याचक्षते । तदुभयनिरासायेन्द्रियं सामान्यतो विशेषतश्च विभजते ॥ **तद्द्विविधमिति ।**

प्रमातृस्वरूपभूतमिन्द्रियं सुधायां साधितम् । मनस इन्द्रियत्वं तु स्वातन्त्र्येण स्मरणसाधनं मन इति स्वयमेव साधयिष्यतीति द्रष्टव्यम् । नन्विन्द्रियत्रैविध्यं वक्तव्यम् । साक्षिणोऽप्यन्यस्य सत्त्वादित्यत आह ।। **तत्रेति** । साक्षिण्यनुप्रमाणसामान्यलक्षणमुपपादयति ।। **स चेति** । तथा च यथार्थ-ज्ञानसाधनमनुप्रमाणमिति लक्षणे योगिज्ञानलक्षण इव यथार्थज्ञानातिशयसाधनत्वं विवक्षितमतिशय-श्चोत्पत्तिर्व्यक्तिर्वेति नाव्याप्तिरिति भावः ।

**राघ.**— कर्मेन्द्रियेष्वपि वाक्पाणिपादपायूपस्थेष्विन्द्रियशब्दप्रवृत्तेराह ।। **इन्द्रियशब्देनेति** । जात्येकवचनम् । तत्तद्विषयेण तत्तदिन्द्रियस्य सन्निकर्षः प्रत्यक्षमित्यर्थसिद्धये इन्द्रियावान्तरभेदं तद्विषयांश्च विवेचयति ।। **तद्विविधमित्यादिना मनोवृत्तिज्ञानं त्वित्यन्तेन** । प्राधान्यक्रमेण निर्दिशति ।। **प्रमात्रिति** । प्रकृतिपरिणामाहङ्कारपञ्चमहाभूतांशैरुपचितं प्राकृतमित्युच्यते ।। **बाह्येन्द्रियज्ञान-सुखाद्या इति** । आद्यपदेनेच्छा प्रयत्नग्रहः । इत्याद्या इति कालविशेषाणां प्राच्यादिदेशविशेषाणां प्रामाण्याप्रामाण्यादेर्ग्रहः । साक्षिणो यथार्थज्ञानसाधनत्वेनानु प्रमाणान्तर्भावः कथमित्यत आह ।। **स चेति** । आत्मस्वरूपज्ञानव्यक्तिहेतुतया साक्षिणो यथार्थज्ञानसाधनत्वेनानुप्रमाणान्तर्भेदभिन्न-प्रत्यक्षान्तर्भावो युक्त इति भावः ।

**विज.**— ।। **ज्ञानेन्द्रियमिति** । साक्षात्कारविषयताप्रयोजकासाधारणसम्बन्धप्रतियोगीत्यर्थः । सम्बन्धश्चक्षुरादौ संयोगादिः । साक्षिणि तु स्वरूपमेवेत्यवधेयम् । तद्विभजते ।। **तद्विविधमिति** । ननु साक्षिणोऽपीन्द्रियत्वात्त्रिविधमिति वक्तव्यं तत्कथं द्वैविध्योक्तिरित्यत आह ।। **स च स्वरूपेति** । प्रमातृस्वरूपसाक्षिणोरभेदान्नोक्तदोष इत्यर्थः ।। **अविद्येति** । भावरूपमज्ञानमित्यर्थः ।। **स्वरूपज्ञानं व्यनक्तीति** । आत्मधर्मतत्प्रयोजनादेः स्वाभिन्नसाक्षात्कारविषयतां प्रयोजयतीत्यर्थः ।

**वेदे.**— एवं प्रत्यक्षलक्षणप्रविष्टमर्थं तद्दोषांश्च निरूप्येदानीं तत्प्रविष्टमिन्द्रियं सपरिकरं तद्दोषांश्च निरूपयिष्यन्वागादिकर्मेन्द्रियार्थ संसर्गेऽति व्याप्तिपरिहाराय तावदत्र विवक्षितमिन्द्रियशब्दर्थमाह ।। **इन्द्रियशब्देनेति** । ज्ञानसाधनमिन्द्रियं ज्ञानेन्द्रियम् । तत्फलमाह ।। **स चेति** ।।

**अभि.**— अवान्तरव्यापारप्राधान्यविवक्षया सन्निकर्षः प्रत्यक्षमित्युक्तम् । वस्तुतस्त्विन्द्रियमेव प्रत्यक्षमिति भावेनेन्द्रियविषयानाह ।। **तस्य विषया इति ।। स च स्वरूपज्ञानमिति** । चक्षुरादिवन्मनो वृत्तिज्ञानमपि कदाचिज्जनयतीति बोध्यम् । एतेन मोक्षयोग्यानां प्रामाण्यज्ञानस्य स्वरूपज्ञानत्वात्तस्य च यथार्थत्वादधमानां स्वरूपज्ञानमयथार्थमेवेति निर्धारणमयुक्तमिति परास्तम् । प्रमाणेनापि

साक्षिणेश्वरसङ्कल्पवशाज्जायमानज्ञानस्य मनोवृत्तित्वात्तस्य यथार्थत्वेऽपि स्वरूपज्ञानस्य नियमेना-यथार्थत्वान्मनसश्चाक्षुषादिज्ञानकरणत्वेऽपि यथार्थज्ञानसाधनत्वाभावान्नानुप्रमाणत्वमित्याह ॥ **स्वातन्त्र्येणेति** । यद्यपि स्मरणं साधनमित्यनेनैवोक्तशङ्कापरिहारः । तथाऽपि साधनत्वस्फोरणाय स्वातन्त्र्योक्तिरित्यदोषः ।

**आद.**— ॥ **प्रमातृस्वरूपमिति** । प्रमातृस्वरूपे इन्द्रियाङ्गीकारे कालादीनां तद्विषयत्वे प्रमाणं श्रीमन्न्यायसुधायां व्यक्तम् । ग्रन्थगौरवभयान्नात्र विवेचयिष्यते ।

**श्रीनि.**— ॥ **प्रमातृस्वरूपमिति** । चेतनात्मकं प्रकृतिकार्यं चेत्यर्थः । प्रत्यक्षं सप्तविधम् । साक्षिषडिन्द्रियभेदेनेति प्रमाणलक्षणे साक्षिणोऽपीन्द्रियत्वोक्तेः कुतस्तस्यासङ्ग्रह इत्यत आह ॥ **तत्रेति** । तद्धर्माः स्वरूपसुखादयः । अविद्या भावरूपाज्ञानम् । तद्वृत्तयो मनः परिणताः । आद्यशब्देनेच्छादेः सङ्ग्रहः । इत्याद्या इत्यत्रादिपदेन सुखाद्यभावप्रामाण्यादेः सङ्ग्रहः ॥ **स चेति** । इन्द्रियात्मकः साक्षी ज्ञानात्मकः साक्षिणमर्थविषयीकरणव्यक्तिमन्तं करोतीत्यर्थः । तदुक्तं सुधायाम् । सुखादिविषयं स्वरूपभूतं चैतन्येन्द्रियं साक्षीत्युच्यते । तदभिव्यक्तं ज्ञानं चेति अत्रेदं बोध्यम् । स्वरूपेन्द्रियमपि घ्राणादिभेदेन षड्विधं सल्लिङ्गदेहस्थसूक्ष्मषडिन्द्रियैः स्थूलशरीरस्थस्थूलेन्द्रियैश्च मिश्रं तिष्ठति क्षीरनीरवत् । तत्र स्पर्शेन्द्रियं स्थूलशरीरे सर्वत्र व्याप्तं चक्षुरादिचतुष्टयं स्वस्वगोलकवृत्ति । मनस्तु सर्वेन्द्रियाधिष्ठातृ सर्वशरीरसञ्चारि प्रायो हृत्कण्ठवृत्ति । तत्पञ्चविधम् । चित्तं चेतनाऽहङ्कारो बुद्धिरन्तःकरणमिति । तत्र केनचिद्रूपेण बाह्येन्द्रियद्वारा घटादिबाह्यार्थज्ञानं जनयति । रूपान्तरेण च तज्ज्ञानस्य तज्जन्येच्छाप्रयत्नसुखदुःखसंस्कारद्वेषोपादानं भवति । रूपान्तरेण पूर्वपूर्वजातगुणादीन् सहकारीकृत्य निमित्तकारणं च भवति । तत्र साक्ष्याख्यमनोरूपेन्द्रियाभिव्यक्तस्वरूपज्ञानं बाह्यमनो-रूपेन्द्रियतत्परिणतज्ञानादिभिः सह विषयीकरोति । आत्मकालाकाशाविद्याप्रकृत्यादि विषयीकार्यमपि स्वरूपमनोऽभिव्यक्तं स्वरूपज्ञानमेव । इदं चेन्द्रियद्वैविध्यं संसारिणामेव । मुक्तानां तु स्वरूपेन्द्रियाण्येव । यथोक्तं बृहद्भाष्ये । मनसः सम्प्रयोगो यो दुःखादिरहितात्मनः । अभावरूपं प्रत्यक्षं मनश्च द्विविधं मतम् । चेतनं च जडं चेति चक्षुराद्यं तथैव च । चेतनं त्विन्द्रियं ह्यात्मा स्वरूपान्नापरं स्मृतम् । मुक्तानां चेतनं त्वेव बद्धानामुभयं तथा । स्वरूपेणापि संयोगः स्वरूपस्यैव युज्यते । यथा रक्तस्य संयोगस्तत्प्रकाशेन नित्यदेति । अनुव्याख्याने च । प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम् । शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युक्तमिति ।

**वि.**— इन्द्रियपदस्य ज्ञानेन्द्रियकर्मेन्द्रियपरत्वप्रतीतिवारणायाह ॥ **इन्द्रियशब्देन चेति** । अर्थ समुच्चयार्थश्चशब्दः । अन्यथा कर्मेन्द्रियार्थसन्निकर्षेऽतिव्याप्तिः स्यादिति बोध्यम् । ज्ञानेन्द्रियमात्माति-

रिक्तमेवेति भ्रान्तिरिति ज्ञापनाय तद्विभागमाह ।। **तद् द्विविधमिति ।** प्राधान्यक्रमेणोद्दिशति ।। **प्रमातत्स्वरूपं प्राकृतं चेति ।** अत्र प्रकृतिशब्दोऽहङ्कारपञ्चमहाभूतपरः सूक्ष्मरूपेण नित्यमपि जडेन्द्रियं तदंशैरुपचितत्वात्प्राकृतमित्यर्थः । तदुक्तं सुधायाम् । प्रकृतिशब्देनाहङ्कारः पञ्चमहाभूतानि चोच्यन्ते । सूक्ष्मरूपेण नित्यमप्यहङ्कारांशैरुपचितत्वात्प्राकृतमिति । जडस्य चानित्याहङ्कारभौतिकत्वम् ।

सूक्ष्मेन्द्रियाणि सन्त्येव तानि स्थूलान्यहङ्कृतेः ।
तेषां भूतैरुपचयः सृष्टिकाले विधीयत

इत्यादि स्मृतिसिद्धमिति च । साक्षिषडिन्द्रियभेदेनेति प्रमाणलक्षणोक्तेः साक्षिणोऽपि ज्ञानेन्द्रियत्वात्तस्य क्वान्तर्भाव इति जिज्ञासायामाह ।। **तत्रेति ।** तयोः स्वरूपेन्द्रियं साक्षीत्युच्यत इत्यर्थः । अर्थशब्देनेन्द्रियविषया गृह्यन्त इत्युक्तम् । तत्र साक्षिविषयः क इति जिज्ञासायामाह ।। **तस्येति ।** तस्य साक्षिण आत्मस्वरूपमात्मनो धर्मिभूतस्वरूपभूतमित्यर्थः । तद्धर्मास्तस्यात्मनो धर्मा ज्ञानसुखाद्या इति वक्ष्यमाणमत्रापि सम्बध्यते । अविद्या भावरूपाज्ञानं तद्वृत्तयो मनोवृत्तय इत्यर्थः । आद्यशब्देनेच्छाप्रयत्नादीनां सङ्ग्रहः । साक्षिणो ज्ञानसाधनत्वाभावात्कथं ज्ञानेन्द्रियत्वमित्यत आह ।। **स चेति ।** साक्षी तु प्रमातृस्वरूपज्ञानमर्थकरणरूपव्यक्तिमत्करोतीत्यर्थः । ज्ञानव्यञ्जकत्वादस्य ज्ञानेन्द्रियत्वमिति भावः ।

## प्राकृतेन्द्रियाः

**(२५) प्र.प.— प्राकृतं षड्विधम् । घ्राणरसनचक्षुस्त्वक् श्रोत्रमनोभेदात् । तत्र गन्धस्तद्विशेषाश्च घ्राणस्य विषयाः । रसस्तद्विशेषाश्च रसनस्य । महान्ति रूपवन्ति द्रव्याणि केचिद्गुणाः कर्माणि जातयश्च चक्षुस्त्वचोः । वायुस्पर्शोऽपि त्वचो विषयः । शब्दः श्रोत्रस्य । एतेषां पञ्चानां मनोऽनधिष्ठितत्वं काचकामलादयश्च दोषाः । मनसस्तु बाह्येन्द्रियाधिष्ठानेनैते सर्वे विषयाः । स्वातन्त्र्येण स्मरणसाधनं मनः । तस्य दोषा रागादयः ।**

**जना.—** ।। **गन्धस्तद्विशेषा इति ।** गन्धविशेषाः सुरभिपूतिगन्धादयः । रसविशेषा मधुरादयः ।। **महान्तीति ।** गुरुत्वादिव्यावृत्त्यर्थं केचिदित्युक्तम् । मनसो विषयानाह ।। मनसस्त्विति । ननु मनसो बहिरस्वतन्त्रत्वात्कथं बाह्येन्द्रियविषयविषयकत्वमित्यत आह ।। **बाह्येन्द्रियाधिष्ठानेनेति ।** अत्र प्रकरणे गन्धादयो घ्राणादीनां विषया इत्याद्युक्त्या घ्राणादीनां पञ्चानां यथाक्रमं गन्धरसरूपस्पर्शशब्दविषयकेन्द्रियत्वादीनि पञ्चलक्षणानीत्युक्तप्रायम् । तथा बाह्येन्द्रियाधिष्ठानेन सर्वबाह्येन्द्रिय-

विषयविषयकेन्द्रियत्वं मनसो लक्षणमित्युक्तप्रायमिति ज्ञातव्यम् । षट्स्वपि लक्षणेष्विन्द्रियपदं तत्तदिन्द्रियजन्यज्ञानव्यावृत्त्यर्थं मनोलक्षणे बाह्येन्द्रियाधिष्ठानेनेति पदं मनसो बाह्येन्द्रियानधिष्ठानदशायां बाह्येन्द्रियार्थविषयकत्वाभावेनासम्भवनिरासाय । बाह्यपदद्वयं तु साक्ष्यधिष्ठानेन मनसः साक्षिविषय-कालादिविषयत्वाभावेनासम्भवनिरासाय । ननु मनसो बाह्येन्द्रियार्थगन्धादिमात्रविषयकत्वे विषय-भेदाभावात्कथं ग्रहणाद्यपेक्षयेन्द्रियान्तरत्वम् । किञ्चेन्द्रियाणां स्वविषयगन्धादिज्ञानमेव फलम् । मनसोऽपि बाह्येन्द्रियगोचरगन्धादिमात्रविषयकत्वे तज्ज्ञानरूपफलस्य चक्षुरादिनैवोत्पत्तेरसाधारण फलाभावात्कथमनुप्रमाणत्वम् । अन्यथाऽर्थापत्त्यादेरपि पृथक् प्रमाणत्वापत्तिरित्याशङ्क्य विषय-भेदाभावेऽपि फलभेदसत्त्वादनुप्रमाणत्वादिकं युज्यत इत्याशयेनाह ॥ **स्वातन्त्र्येणेति ।** इन्द्रियान्तरा-नाधिष्ठानेनेत्यर्थः । तदुक्तं प्रमाणलक्षणटीकायाम् । द्विविधं हि ज्ञानं मनो जनयति । तत्तदिन्द्रियाधि-ष्ठातृत्वेन तत्तदिन्द्रियार्थविषयं स्वातन्त्र्येण स्मरणं चेतीति । एतेनैतन्निरस्तं यत्प्रलपितं नवीनैर्माया-वादिभिः । तथा हि । मनो न प्रमाणम् । प्रमाणसहकारित्वादालोकवत् । अन्यथाऽलोकस्यापि प्रमाणत्वं स्यात् । असाधारणविषयाभावाच्च । असाधारणविषयाभावस्य मनसस्त्विति वाक्येन स्वय-मेवोक्तेः । अपि चान्तःकरणवृत्तिरूपप्रमाश्रयत्वेनानीश्वरात्मवदप्रामाण्यं मनसः । तदयं निर्गलितोऽर्थः

प्रमाणसहकारित्वाद्विषयस्याप्यभावतः ।
न प्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वत ॥ इति ।

नापीन्द्रियं मनः । असाधारणविषयाभावात् । प्रमाणाभावाच्च । न च मनःषष्ठानीति गीतावाक्य-मेवेन्द्रियत्वे प्रमाणम् । शत्रुघ्नचतुर्थादाशरथय इत्यत्र दशरथपुत्रातिरिक्तस्य दाशरथिगतचतुष्ट्व-सङ्ख्यापूरकत्वानुपपत्तिवदनिन्द्रियस्य मनस इन्द्रियगतषट्त्वसङ्ख्यापूरकत्वानुपपत्तेरिति वाच्यम् । वेदानध्यापयामास महाभारतपञ्चमानिति भारतवाक्येऽवेदस्यापि भारतस्य वेदगतपञ्चत्वसङ्ख्यापूरकत्व दर्शनेन यजमानपञ्चमा इडां भक्षयन्तीत्यत्रानृत्विजोऽपि यजमानस्य ऋत्विग्गतपञ्चत्वसङ्ख्या-पूरकत्वदर्शनेन च सजातीयस्यैव सजातीयगतसङ्ख्यापूरकत्वनियमाभावात् । इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन इति श्रुतौ मनस इन्द्रियेभ्यः पृथगुपदेशाच्च । असाधारणविषयाभावेन च तत्प्रमितिरूपफलाभावाच्चेति । तत्तुच्छम् । न तावत्प्रमाणसहकारित्वादप्रामाण्यं मनसः संशयोत्तर-पुरुषप्रत्यक्षसाधनचक्षुस्सहकारिणोऽपि पुरुषत्वव्याप्यकरादिमत्त्वरूपलिङ्गदर्शनस्य प्रमाणत्वदर्शनेन व्यभिचारात् । अथ प्रमाणसहकारित्वादित्यनेन प्रमाणसहकारिमात्रत्वादिति विवक्षितम् । करादिमत्त्व रूपलिङ्गदर्शनस्याप्यप्रामाण्यं स्यात् । संशयोत्तरपुरुषप्रत्यक्षस्थले चक्षुस्सहकारित्वेऽपि पुरुषानुमित्सया

पुरुषानुमितिस्थले स्वतन्त्रत्वेन प्रमाणसहकारिमात्रत्वं नेति चेत् । हन्तैवं तर्हि मनसोऽपि रूपादि प्रत्यक्षे चक्षुस्सहकारित्वेऽपि स्मरणे जनयितव्ये स्वतन्त्रत्वेन प्रमाणसहकारिमात्रत्वाभावात् । तदेतदाह । स्वातन्त्र्येण स्मरणसाधनं मन इति । न तु स्वातन्त्र्येणानुभवसाधनमिति भावः । न च सर्वप्रमाणसहकारित्वं हेतुतया विवक्षितमिति न करादिमत्त्वरूपलिङ्गदर्शने व्यभिचार इति वाच्यम् । पक्षव्याप्तिशब्दस्वरूपादिग्राहकतयाऽनुमानादि सहकारिणि प्रत्यक्षे व्यभिचारापत्तेः । नाप्यसाधारण-विषयाभावेना प्रमाण्यं मनसः । असाधारणविषयाभावेऽप्यसाधारण फलभेदमात्रेण प्रमाणत्वोपपत्तेर-प्रयोजकत्वात् । नापि प्रमाश्रयत्वात्प्रामाण्याभावः । प्रमाश्रयत्वेन रूपेणाप्रामाण्यापादने इष्टापत्तेः । रूपान्तरेणापि प्रमाणत्वं न स्यात्प्रमाश्रयत्वादिति चेन्न । अप्रयोजकत्वात् । नन्वेवं प्रमातुरपि रूपान्तरेण प्रमाणत्वं स्यादिति चेदिष्टापत्तेः । तस्य साक्षित्वेन रूपेण प्रमाणत्वोररीकरणात् । यथोक्तमर्वाक् । तद् द्विविधं प्रमातृस्वरूपं प्राकृतं चेति । तत्र स्वरूपेन्द्रियं साक्षीत्युच्यत इति । एवं सति दुष्टेन्द्रियादेरपि रूपान्तरेण प्रमाणत्वं स्यादिति चेत् । स्यात् । यदि तत्र रूपान्तरेण प्रमाणत्वव्यवहारं पश्याम इति ।

तस्मात्पुंस्त्वलिङ्गकरादीव प्रमाणसहकार्यपि ।
मन आनन्दतीर्थीयमते मानं फलात्स्मृतेः ।

नापि मनस इन्द्रियत्वे प्रमाणाभावः । मनः षष्ठानीन्द्रियाणीत्यस्यैव प्रमाणत्वात् । न चानिन्द्रिय-त्वेऽपि तदुपपद्यत इत्युक्तमिति वाच्यम् । इन्द्रियाणां मनश्चास्मीति पूर्ववाक्यविरोधात् । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचरा इति पूर्वग्रन्थविरोधाच्च ।

यतिर्ययातिः संयातिरायतिर्नीयतिः कृतिः ।
षडिमे नहुषस्यासन्निन्द्रियाणीव देहिन ॥

इति नवमस्कन्धोक्तदृष्टान्तास्वारस्य प्रसङ्गाच्च । कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रिय-मित्यमरकोशपाठाच्च । न चासाधारणविषयाभावान्नेन्द्रियत्वमिति वाच्यम् । विषयभेदस्यापि फलभेद-द्वारैवेन्द्रियभेदप्रयोजकत्वात् । तस्य च प्रकृतेऽपि सत्त्वात् । तथा हि । स्मरणं न बाह्येन्द्रियं जन्यम् । असत्यपि बाह्येन्द्रियव्यापारे जायमानत्वात् । स्वप्नवत् । स्मरणमिन्द्रियजन्यं बाह्यज्ञानकरणाजन्यत्वे सति जन्यज्ञानत्वादित्यनुमानाभ्यां तत्सिद्धेः । अन्यथा चक्षुरादेरपीन्द्रियत्वं न स्यात् । यदि च फलभेदः पुराणादाविन्द्रियव्यवहारश्च चक्षुरादेरिन्द्रियत्वे मानं तदा मनस्यपि तुल्यमिति ।

पृथगुपदेशस्तु मनसः सर्वेन्द्रियसहकारित्वरूपवैशेष्यमादाय कुरुपाण्डवन्यायेन वा मनोभिमानिदेवतापरत्वेन वोपपद्यत इति दिक् । एवं च

फलभेदात्पुराणादाविन्द्रियव्यवहारतः ।
मन इन्द्रियमस्माकं राद्धान्ते नयनादिवत् ।

नन्वनुभवविषयपूर्वावस्थानिवृत्तेरप्रामाण्यस्य चासाधारणमनोविषयत्वात्कुतस्तदनुक्तिरिति चेन्न । पूर्वावस्थानिवृत्तेः प्रत्यभिज्ञाविषयत्वेनासाधारण्याभावात् । अप्रामाण्यस्यापि साक्षिवेद्यत्वेन तदभावाच्च । उक्तं सुधायाम् । साक्ष्यपवादसद्भावेऽप्रामाण्यमपि गृण्हातीति । या तु विष्णुतत्त्वनिर्णयटीकायामनुमेयमेवाप्रामाण्यमित्युक्तिः सा साक्षिणोऽप्रामाण्यग्रहणे शक्तिर्विसंवादायत्तेत्यभिप्रेत्य । अत एव तत्रैव न पुनर्ज्ञानग्राहकमात्रग्राह्यमित्युक्तम् । यद्यपीदं मनस इन्द्रियान्तरत्वं प्राकृतेन्द्रिया विभागावसर एव साधनीयम् । विभागस्य न्यूनाधिकसङ्ख्याव्यवच्छेदार्थत्वाम् । तथाऽपीन्द्रियान्तर साधकत्वस्य स्वातन्त्र्येणेत्यादेरत्रैव ग्रन्थकृतोक्तेरत्रैवास्माभिस्तत्साधितमिति धीमद्भिरवधातव्यम् ।

**राघ.—** पृथिव्यादिकार्यत्वात्तत्क्रमेणैव निर्दिशति ॥ **घ्राणेति** । तद्विशेषाः सौरभ्यादयो माधुर्यादय इत्यर्थः ॥ **केचिद्गुणा इति** । महद्रूपवद्द्रव्यनिष्ठा रूपरसादयः । कर्माण्युत्क्षेपणादीनि । घटत्वद्रव्यत्वादिजातयश्च । जातिपदेन सर्वघटादिनिष्ठान्योन्यसदृशघटत्वादयो धर्मा ग्राह्याः ॥ **काचकामलादय इति** । आदिपदेन पित्ताङ्गुल्यवष्टम्भादिग्रहः ॥ **एत इति** । गन्धादयः सर्वे विषया इत्यर्थः । नन्वेवं यथार्थज्ञानसाधनेन्द्रियसहकारितापत्त्याऽऽलोकादेरिव स्वतो यथार्थज्ञानसाधनत्वाभावात्कथमनुप्रमाणान्तर्गतप्रत्यक्षान्तर्भाव इत्यत आह ॥ **स्वातन्त्र्येणेति** । चक्षुरादेरिवान्यनिरपेक्षेणेत्यर्थः । एतेन प्रमाणत्रयविषया अप्यस्य साक्षाद्विषया इति सूचितम् । रागादयो रागद्वेषलोभादयः ।

**विज.— रूपवन्तीति** । त्वचा महत्त्वसमानाधिकरणोद्भूतरूपवद्द्रव्यग्रहणे रूपवत्त्वमुलक्षणम् । स्वव्यवस्थापकगुणपुरस्कारेणैव बहिरिन्द्रियस्य द्रव्ये प्रवृत्तिरिति । अनेन महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य बहिरिन्द्रियजन्यद्रव्यसाक्षात्कारप्रयोजकत्वाभिधानेन वायुरप्रत्यक्ष इति सूचितम् । अत एवाग्रे विच्छेद्य वक्ष्यति ॥ **वायुस्पर्शोऽपि त्वचो विषय इति** । रूपवत्त्वसमुच्चयार्थोऽपिशब्दः । शब्द इति शब्दविशेषश्चेत्यपि द्रष्टव्यम् ॥ **मनोऽनधिष्ठितत्वमिति** । भावरूपस्वेतरकारणाभाव इत्यर्थः ॥ **काचकामलादयश्चेति** । इन्द्रियनिष्ठज्ञानानुकूलशक्तिविघटका इत्यर्थः ॥ **स्वातन्त्र्येणेति** । बहिरिन्द्रियनैरपेक्ष्येणेत्यर्थः ॥ **दोषा इति** । यथा स्मृतिप्रयोजकशक्तिविघटका इत्यर्थः ।

**वेदे.**— ननु श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवत इति स्मृत्येन्द्रियषाड्विध्याभिधानादुक्तं द्वैविध्यमनुपपन्नमित्यत आह ॥ **प्राकृतं षड्विधमिति ।** तथा च यत् षड्विधं प्रसिद्धं तत्प्राकृतमित्यविरोध इति भावः । प्राकृत इत्यत्र प्रकृतिशब्देनाहङ्कारः पञ्चभूतानि चोच्यन्ते ।

सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः ।
तेषां भूतैरुपचयः सृष्टिकाले विधीयत इत्युक्तेः ।

न च श्रोत्रमनसोः सदा स्पर्शरहितद्रव्यत्वेन नित्ययोः कथं प्राकृतेति वाच्यम् । असिद्धेः । तमस्यनैकान्त्याच्च । तद्विशेषाः सौरभ्यादयोः रसविशेषा मधुरादयः ॥ **रूपवन्तीति ।** उद्भूतरूपवन्तीत्यर्थः । गुरुत्वव्यावृत्यर्थमाह ॥ **केचिदिति ।** ननु वायुस्पर्शस्य महत्त्वसमानाधिकरणो द्भूतरूपवद्द्रव्यन्निष्ठत्वाभावात्कथं त्वगिन्द्रियग्राह्यतेत्यत आह ॥ **वायुस्पर्शोऽपीति ।** पूर्वं केचिद्गुणा इति प्रायिकत्वादित्युक्तम् । वस्तुतस्तु गुणप्रत्यक्षत्वे महत्त्वसमानाधिकरणोद्भूतरूपवद्द्रव्यनिष्ठत्वं न प्रयोजंकम् । गौरवात् । किन्तु महत्त्वसमानाधिकरणोद्भूतविशेषगुणवत्त्वमेव लाघवादिति भावः । अत्र महान्ति रूपवन्ति द्रव्याणीत्यनेन बहिरिन्द्रियद्रव्यसाक्षात्कारे महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य प्रयोजकत्वकथनेन वायोरताद‍ृशत्वादप्रत्यक्षत्वमिति सूचयति । एतदुपपादनं चास्मत्कृतकाठकभाष्यटीकायां स्पष्टं द्रष्टव्यम् ॥ **शब्द इति ।** तद्विशेषश्चेत्यपि द्रष्टव्यम् । विषय इति सम्बधः । एवं बाह्येन्द्रियं सपरिकरं निरूप्येदानीं तद्दोषमाह ॥ **एतेषामिति ।** मनसस्त्वेतद्व्यतिरिक्तत्वमेवेति सूचनायैतेषामित्युक्तम् । काचो दृग्दोषः । काचाःशिक्यमृद्भेदद‍ृग्रुज इत्यभिधानात् । इदानीं मनोविषयमाह ॥ **मनसस्त्विति ।** ननु मनसोऽसाधारण फलाभावान्नानुप्रमाणरूपेन्द्रियप्रभेदत्वमित्यत आह ॥ **स्वातन्त्र्येणेति ।** बहिरिन्द्रियनैरपेक्ष्येणेत्यर्थः । एवं चासाधारणस्मृतिरूपयथार्थज्ञानस्य फलस्य सत्त्वादनुप्रमाणविशेषेन्द्रियरूपता मनस उपपद्यत इति भावः । एवं सतीदं मनोलक्षणमिति मत्वा तत्र स्वातन्त्र्येणोति पदकृत्यं चिन्त्यमिति वदन्तो भ्रान्ता इति द्रष्टव्यम् ।

**आद.**— ॥ **वायुस्पर्शोऽपीति ।** पूर्वोक्तविषयसमुच्चायकोऽपि शब्दः । ननु वायुर्वातीति प्रत्यक्षात् स्पर्शमात्रस्य प्रत्यक्षत्वोक्तिरयुक्तेति चेन्न । तस्य प्रत्यक्षत्वे विप्रतिपत्तेः । तृणादिनिष्ठविजातीयक्रियादर्शने सत्यपि वायुर्वातीति प्रतीतिदर्शनात् । व्याप्तिविषयकसंस्कारस्यातिदृढत्वादविलम्बेन ताद‍ृशप्रतीत्युपपत्तेः । न च तर्हि घटादीनामपि त्वग्विषयत्वं न स्यात्स्पर्शोत्तरमाकारविशेषादिना घटाद्यनुमितिरिति वक्तुं शक्यत्वादिति वाच्यम् । जात्यन्धस्यापि हस्तादिना परामर्शे तद्गतवैजात्यस्य

प्रतीतेः । आकारविशेषादिना घटाद्यनुमितेस्तत्रासम्भवात् । तत्राकारविशेषवैजात्ययोर्व्याप्ति ग्रहोपाया-भावेन व्याप्तिग्रहोपायाभावात् । आकारविशेषातिरिक्तघटादेरभावाच्च । अवयवसन्निवेशविशेष एवाकार इति चेत् । तर्ह्यवयवस्यापि ज्ञेयत्वापातात् । अवयवस्य त्वग्ज्ञेयत्वे किमपराद्धं घटेन । किञ्च घटत्वादि व्यङ्ग्यं विजातीयं सादृश्यं त्वचि प्रत्यक्षविषय इति वक्तव्यम् । अन्यथा सादृश्यप्रतीत्युपायाभावेन तदप्रतीतिप्रसङ्गात् । गुणादीनामाश्रयानुमापकत्वेऽप्याकारविशेषसादृश्याद्यनुमापकत्वस्यादृष्टत्वेन घटादिस्पर्शादेरनुमापकत्वासम्भवात् । आकारविशेषादेश्चाश्रयप्रत्यक्षाविनाभूतत्वात् घटादीनामपि प्रत्यक्षविषयत्वम् । न चात्र वायुत्वाकारविशेषो वा त्वचा गृह्यते । न च वायुः प्रत्यक्षः प्रत्यक्ष स्पर्शाश्रयत्वादित्यनुमानेन प्रत्यक्षविषयत्वम् सिद्ध्यतीति वाच्यम् । जलादिगततेजोभागादौ व्यभिचारात् । अनुद्भूतरूपानधिकरणत्वं हेतुविशेषणमिति चेत् । तथाऽप्यप्रयोजकत्वात् । त्रिवृत्कृते वायौ पार्थिवभागादेरपि सत्त्वेन रूपानधिकरणत्वस्यासिद्धत्वाच्च बहिर्द्रव्यप्रत्यक्षे उद्भूतरूपस्य प्रयोजकत्वेन वायौ तदभावाच्च । न च चाक्षुषं प्रत्येव प्रयोजकं स्पार्शनं प्रति स्पर्श एव प्रयोजक इति चेन्न । मानाभावेन स्पर्शस्य प्रयोजकत्वासिद्धेः । चन्द्रिकायां सत्यामपि स्पर्शे त्वाचप्रत्यक्षानुदयात् । न च रूपस्य प्रयोजकत्वे मानाभावः । प्रयोजक इत्यस्य व्यापक इत्यर्थकत्वेन बहिर्द्रव्यप्रत्यक्ष-व्यापकत्वस्य व्यभिचारादर्शनेन सिद्धत्वात् । वायावेव व्यभिचार इति चेत् । अत्र प्रत्यक्षविषयत्वस्यैव सन्दिग्धत्वादालोकप्रत्यक्षे तमः प्रत्यक्षे च स्पर्शस्य व्यभिचारित्वात् । ननु तथाऽपि वायोरप्रत्यक्षत्वे किं मानमिति चेत् । त्वङ् न वायुग्राहिका तदाकाराग्राहकत्वात् । विपक्षे गौरवस्यैव बाधकत्वात् । एवं वायुर्न स्वमात्राग्राहकग्राह्यस्तेजोभिन्नभूतत्वाद्गगनादिवत् । एवं वायुर्न बहिरिन्द्रियप्रत्यक्षविषयश्चाक्षुषा-विषयत्वात् । वायुस्पर्शो न स्वाश्रयग्राहिप्रत्यक्षविषयोऽचाक्षुष वृत्तिविषयत्वाच्छब्दवदित्यनुमाना-न्यप्यूह्यानि । न चैवं सति वायुसंयोगस्य प्रत्यक्षत्वं न स्यात् । प्रत्यक्षाप्रत्यक्षधर्मस्याप्रत्यक्षत्वादिति वाच्यम् । प्रत्यक्षविषयस्य संयोगस्य वायुधर्मत्वात् । वायुप्रतियोगिकत्वेऽपि स्तम्भेऽपि पिशाचभेद प्रत्यक्षवदुपपत्तेः । प्रतियोगिप्रत्यक्षस्य हेतुत्वे मानाभावात् । किञ्च शीतकाले बहिष्ठस्य मन्दमारुते आगतेऽपि स्पर्शगतवैजात्यस्याग्रहे वायुर्वातीति प्रत्ययाभावोऽनुभवसिद्ध इति वायुरप्रत्यक्ष एव । तप्तजलगतस्पर्शाग्रहेऽपि जलप्रत्यक्षस्य दृष्टत्वेन स्वगतस्पर्शं विना द्रव्यस्य त्वग्विषयत्वं नाङ्गीक्रियते । रूपं विना तदाश्रयप्रत्यक्षाभाववदिति चन्द्रिकागतशीतस्पर्शेन प्रत्यक्षान्न वायुगतस्पर्शप्रत्यक्षमिति न वायुप्रत्यक्षमित्यपि वक्तुमशक्यम् ।

त्वक् चर्मगोलके सर्वदेहगेहमुपागता ।
कुष्टभङ्गुरपामाद्यास्त्वग्दोषाः परिकीर्तिताः ।

अव्यक्तादिस्पर्शदोषशून्याः शीतोष्णपूर्वकाः ।
स्पर्शास्तद्विषयाः प्रोक्ता वायुतेजोऽम्बुभूमयः ।
पदार्थाः केचन गुणा न त्वगिन्द्रियगोचरा

इति प्रकाश संहितायामुक्तत्वाच्च । तस्माद्वायुरप्रत्यक्ष एवेति स्पर्शस्यैव त्वग्विषयत्वमुक्तम् । अत्रार्थेऽचेतनः स्पर्शगम्य इति काठकोदाहृता स्मृतिरपि बोध्या । उद्भूतरूपवन्तीत्यस्य प्रत्यक्षयोग्याकारवन्तीत्यर्थ उद्भूतपदस्य प्रत्यक्षयोग्यार्थकत्वाद्रूपपदस्याकारार्थकत्वं च नामरूपे व्याकरोदित्यादौ प्रसिद्धम् । बहिर्द्रव्यप्रत्यक्षप्रयोजकस्य प्रत्यक्षयोग्याकारवत्त्वस्य वायावभावान्न प्रत्यक्ष इत्यर्थ इत्याहुः । न च तदाकारग्राहकत्वे हेतोर्व्यभिचारः । गुणादीनामाकाराभावेन तदाकाराग्राहकत्वेऽपि गुणादिग्राहकत्वात् । आश्रयीभूतद्रव्याकारस्यैव तदाकारत्वे वायुस्पर्शस्यापि प्रत्यक्षानुपपत्तिर्व्यभिचारो वा स्यादिति वाच्यम् । यो यद्द्रव्याकाराग्राहकः स तद्द्रव्याग्राहक इति व्याप्तेर्विवक्षितत्वेन दोषाभावात् । केचित्तु । स्पर्शपदमपि त्वगिन्द्रियपरम् । तथा च स्पर्शगम्य इति काठकभाष्यस्य त्वगिन्द्रियजन्यप्रत्यक्षविषय इत्यर्थः । वायुः स्पर्शोऽपीति सविसर्ग एव पाठः पररीतिमवलम्ब्य वा तथोक्तिः । प्रकाशसंहितायामपि वायुरित्यस्य तद्विषया इत्यन्वयो वायुः प्रत्यक्ष एवेति वदन्ति ।

**श्रीनि.—** नन्वेवं स्वरूपेन्द्रियस्यापि षड्विधत्वे पञ्चेन्द्रियमनोभेदात्प्राकृतं षड्विधं स्मृतमित्यनुव्याख्याने च कथं प्राकृतस्यैव षड्विधत्वोक्तिः । तथा ननु प्राकृतशुद्धभेदादिन्द्रियं द्विविधमित्यसत् । श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायमिति पञ्चेन्द्रियमनोभेदेनेन्द्रियषाड्विध्यस्मरणविरोधादिस्यत आह ॥ **पञ्चेति ।** यत्पञ्चेन्द्रियमनोभेदादिन्द्रियं षड्विधं स्मृतं तत्प्राकृतं न तु सर्वम् । अतो न विरोध इति । सुधा च कथं युज्यत इति चेत् । उच्यते । स्वरूपेन्द्रियस्य षड्विधत्वेऽपि तद्विभागानुक्तिरन्योन्यभेदशङ्कानिरासाय । अन्यथा प्राकृतचक्षुरादीनामिव स्वरूपाणामपि भेदशङ्का स्यात् । सुधाऽपि सामान्यतोऽपीन्द्रियस्य षड्विधत्वमेव न तु स्वरूपेन्द्रियं नामास्तीत्याशङ्क्य तन्निरासपरा न तु स्वरूपेन्द्रियषाड्विध्यनिरासपरा । तत्र सर्वमित्यस्य सामान्यमित्यर्थः । अन्यथेशरमामुक्तानां चक्षुरादिराहित्यापत्तेरिति । परमाणुव्यावृत्त्यर्थमुक्तम् ॥ **महान्तीति ।** महत्परिमाणे विशेषवन्तीत्यर्थः । अन्यथा महत्त्वं च परमाणावणावपीति परमाणावपि महत्त्वाङ्गीकारात्तेन तन्निवृत्तिर्न स्यात् । अव्याकृताकाशनिवृत्त्यर्थ रूपवन्तीति । उद्भूतरूपवन्तीत्यर्थः । तेन भूताकाशादिव्यावृत्तिः । न च तर्ह्येतादृशानां पिशाचादीनामपि प्रत्यक्षत्वं स्यादिति वाच्यम् । अन्तर्धानशक्त्याऽतीन्द्रियत्वोपपत्तेः । अत एवोक्तं प्राक् । विद्यमान एव पिशाचोऽन्तर्धानशक्त्या

नोपलभ्यत इति ।। **मनोऽनधिष्ठितत्वमिति ।** मनसाऽनधिष्ठितत्वमनाश्रितत्वं मनःसंयोगशून्यत्वमिति यावत् । कामलं चक्षुर्दोषः ।। **बाह्येन्द्रियाधिष्ठानेनेति ।** बाह्येन्द्रियावलम्बनेनेत्यर्थः ।। **रागादय इति ।** विषयान्तरेच्छादय इत्यर्थः ।

**वि.**— स्वरूपेन्द्रियवत्प्राकृतेन्द्रियमेकमेवेति न मन्तव्यमिति ज्ञापयितुं तद्विभागमाह ।। **प्राकृतं षड्विधमिति ।** तेषां विषयाः क इति जिज्ञासायामाह ।। **तत्रेति ।** घ्राणादिषु षट्स्विन्द्रियेषु घ्राणेन्द्रियस्य गन्धस्तद्विशेषा गन्धविशेषाः सुरभिसुरभितरादयो विशेषा इत्यर्थः । तद्विशेषा रसविशेषा इत्यर्थः । मधुरमधुरतरादयो रसनेन्द्रियविषया इत्यर्थः ।। **महन्तीति ।** उत्कृष्टपरिमाणवन्तीत्यर्थः । न तु न्यायमत इव परिमाणत्वावान्तरजातिविशेषवत्परिमाणवन्तीत्यर्थः । सुधायां समयचरणे परिमाणावान्तरजातेरप्रकृतत्वात् । वर्णादिव्यावृत्त्यर्थं रूपवन्तीत्युक्तम् । भूतसूक्ष्मभागव्यावृत्त्यर्थं महान्तीति विशेषणम् । न तु तत्रापि महत्त्वमस्त्येव । सुधायाम् परिमाणावपि महत्त्वस्य प्रतिपादितत्वादिति चेत् । सत्यम् । तथाऽपि तेन तद्व्यावृत्तिर्युक्ता । अणुत्वविशेषरूपापकर्षरहितस्य महत्त्वविशेषस्य चक्षुरादिविषयतायां तत्र त्वभ्युपगमात् । अणुत्वविशेषापरनामकापकर्षो व्यवस्थित इति चेन्न । वस्त्वपेक्षया व्यवस्थाभावेऽपि पुरुषापेक्षया व्यवस्थोपपत्तेः । पटुतरालोचनेनापि पुरुषेण यदणुत्वं चक्षुषा नोपलभ्यते । तदणुत्वमपकर्ष इत्यङ्गीकारात् । अत एव सुधायां नासौ व्यवस्थितोऽस्तीति चेत् । सत्यम् । अत एव पुरुषापेक्षयेत्युक्तम् । अणुत्वाविशेषादस्याणुत्वस्याणुत्वस्यानुपलब्धिरेवायुक्तेति चेत् । तर्हि परपक्षेप्यणुत्वस्य द्व्यणुकादिमात्रगतत्वेपि घटपरिमाणत्वा विशेषादपकृष्टपरिमाणवत्त्वाच्चानुपलब्धिरयुक्तेति फलानुसारेण व्यवस्थाकल्पनं भूतत्रयसमानमित्यलम् । ननु महतो रूपवतश्चपिशाचस्य घटादेरिव चक्षुरादिनोपलब्धिः स्यादिति चेत् । न । तस्यान्तर्धानशक्त्या स्वेच्छयैवानुपलब्धिसम्भवात् । अत एव किं विद्यमान एव पिशाचोऽन्तर्धानशक्त्या नोपलभ्यत इत्युक्तं प्राक् । यद्वोद्भूतरूपत्वेन विशेषणीयत्वान्नोक्तदोषः । अत एव सुधायां तर्हि गगनादेरपि कदाचित्प्रत्यक्षत्वं स्यादिति चेन्न । उद्भूतरूपाभावादित्युक्तम् । तद्गुणास्तेषां महतां रूपवतां रूपादयो गुणा इत्यर्थः । गुरुत्वादिव्यावृत्त्यर्थं किञ्चिदित्युक्तम् । कर्माणि जातयश्च तेषां तेषां कर्माणि जातयश्चेत्यर्थः । चक्षुस्त्वचोरुभयोरन्यतरस्योभयोश्च विषय इत्यर्थः । ननु नीरूपस्य वायोः स्पर्शस्त्वचो विषय इति कथम् । तद्गुणायुक्तेरित्यत आह ।। **वायुस्पर्शोऽपीति ।** महतो रूपवतश्च द्रव्यस्पर्शवद्वायुस्पर्शोऽपीत्यपेरर्थः । अपिशब्दो वायुसमुच्चयार्थ इति केचित् ।। **शब्दः श्रोत्रस्येति ।** अस्य विषय इत्यनुवृत्तेनान्वयः । निर्विषयत्वमिन्द्रियविशेषणमित्युक्तम् । कस्तद्दोष इति जिज्ञासायां बाह्येन्द्रियदोषमाह । एतेषां पञ्चानामिति । मनोऽधिष्ठितत्वं विषयान्तरासञ्चारिमनोयुक्तत्वरूप समनस्कत्वराहित्यमित्यर्थः । काचकामले नेत्ररोग-

विशेषौ । अङ्गुल्यवष्टम्भादिरादिशब्दार्थः । मनसो विषयानाह ॥ **मनसस्त्विति ।** एते गन्धादयः सर्वे बाह्येन्द्रियाणां विषया इत्यर्थः । गन्धादीनामान्तरिन्द्रियविषयत्वे बाह्येन्द्रियव्यापारमन्तरेण मनसा स्वाप्नसाक्षात्कारोदयो बाह्यगन्धसाक्षात्कारोऽपि स्यादिति चोद्यपरिहारायोक्तम् ॥ **बाह्येन्द्रियाधिष्ठानेनेति ।** बाह्येन्द्रियावलम्बनेनैव बाह्येन्द्रियसहायेनैवेति यावत् । मनसो बहिःस्वातन्त्र्येण बाह्यगन्धादिसाक्षात्कारसाधनत्वाभावेऽपि बाह्येन्द्रियावष्टम्भेन तत्साधनत्वाद्गन्धादयः पारतन्त्र्येण मनसो विषया भवन्ति । स्वाप्नपदार्थास्त्वान्तरा एवेति मनसः स्वातन्त्र्यमेवेति बोध्यम् । ननु मनसो बाह्येन्द्रियावष्टम्भेनैव बाह्यगन्धादिगोचरत्वे बाह्येन्द्रियसहकृतेन मनसा गन्धादिस्मरणरूपसाक्षात्कारोदयो न स्यात् । मनसो बहिरस्वातन्त्र्यादित्यत आह ॥ **स्वातन्त्र्येण स्मरणसाधनं मन इति ।** बाह्येन्द्रियासहकृतत्वेनैव स्मरणरूपसाक्षात्कारस्य साधनं मन इत्यर्थः । बाह्यपदार्थानुभवरूपसाक्षात्कार एव मनसः पारतन्त्र्यं न तु बाह्यगन्धादिस्मरणरूपसाक्षात्कार इति हृदयम् । स्वातन्त्र्येण स्मरणसाधनत्वोक्तिस्तु सुधायां ज्ञानविषय एव करणानां विषय इत्युक्तत्वात् । स्वातन्त्र्येण स्मरणो विषयो गन्धादिस्वातन्त्र्येण तत्साधनस्य मनसो विषयो भवतीत्युपपादयितुमन्तरिन्द्रियस्य मनसो दोषानाह ॥ **तस्य दोषा इति ।** आदिपदेन संस्कारादेर्ग्रहणम् ।

## स्मृतेः प्रामाण्यम्

**(२६) प्र.प.— ननु स्मृतेर्याथार्थ्यमेव नास्ति । न हि यदा यादृशोऽर्थः स्मर्यते तदाऽसौ तादृशः । पूर्वावस्थाया निवृत्तत्वादिति चेन्न । यतो ज्ञानकाले वस्तुनस्तथात्वं याथार्थ्योपयुक्तं न भवति । किन्तु यद्देशकालसम्बन्धितया यद्वस्तु ज्ञानेन यादृशं गृह्यते तद्देशकालयोस्तस्य तथात्वम् । स्मृतिश्च तदासौ स इति गृण्हाति । न च तत्र तदासौ न तादृशः । ननु पूर्वानुभवजनितसंस्कारः स्मृतिकारणम् । स चानुभूतविषय एव स्मृतिजननस्येष्टे । न चानुभवेन निवृत्तपूर्वावस्थतयाऽर्थो गृहीतः । तत्कथमनुभवसमानविषयसंस्कारजन्या स्मृतिरर्थं निवृत्तपूर्वावस्थतया विषयीकुर्यादिति । मैवम् । भवेदेतदेवं यदि संस्कारमात्रजन्यत्वं स्मृतेरभ्युपगच्छामः । न चैवम् । मनोजन्या स्मृतिः । संस्कारस्तु मनसस्तदर्थसन्निकर्षरूप एव । यथा योगीन्द्रियाणां योगजो धर्मः । ततश्च संस्कारसहकृतं मनोऽननुभूतामपि निवृत्तपूर्वावस्थां विषयीकुर्वत्स्मरणं जनयेदिति को दोषः । वर्तमानमात्रविषयाण्यपीन्द्रियाणि सहकारिसामर्थ्यात्कालान्तरसम्बन्धितामपि गोचरयन्ति । यथा संस्कारसहकृतानि सोऽयमित्यतीतवर्तमानत्वविशिष्टविषयप्रत्यभिज्ञासाधनानि । प्राकृतेन्द्रियाणि मनोवृत्तिज्ञानं जनयन्ति । तत्र सन्निकर्षः प्रत्यक्षमित्युक्ते घटपटसन्निकर्षेऽतिव्याप्तिः । इन्द्रियसन्निकर्षः प्रत्यक्षमित्युक्ते चक्षुराकाशसन्निकर्षेऽतिव्याप्तिः । अर्थसन्निकर्ष इत्यक्ते पूववदतिव्याप्तिः । दुष्टार्थानां दुष्टेन्द्रियैर्वा सन्निकर्षं व्यावर्तयितुमुभयत्र निर्दोषग्रहणम् ।**

**जना.**— भवतु मनसः स्मरणसाधनत्वम् । तथाऽपि स्मरणस्य यथार्थत्वाभावेन यथार्थज्ञान-साधनत्वमनुप्रमाणलक्षणं मनस्यव्याप्तमित्याशयेन शङ्कते ।। **स्मृतेरित्यादिना ।। यतो ज्ञानकाल इति ।** स्मरणरूपज्ञानकाल इत्यर्थः । तथात्वमनुभवविषयीभूतदेशकालविशिष्टत्वमित्यर्थः । स्मृतेस्तत्र तदाऽसौ तादृश इत्याकारत्वमसिद्धमित्याशयेन शङ्कते ।। **नन्वित्यादिना ।।** अनुभूतविषय एवेति । अननुभूतविषयेऽपि संस्कारस्य स्मृतिहेतुत्वे श्यामघटानुभवजनितसंस्कारेण रक्तघटस्मरणापत्तेरिति भावः ।। **निवृत्तपूर्वावस्थामिति ।** पूर्वावस्थानिवृत्तिमित्यर्थः । न च स्मृतेरननुभूतविषयत्वेऽति प्रसङ्ग इति वाच्यम् । अननुभूतस्यापि स्मृतौ भानेऽनुभवविषयदेशकालध्वंसत्वस्य नियामकस्य सर्वत्रावेनाति प्रसङ्गाभावात् । अतिप्रसङ्गं त्वनुभव एव पराकरिष्यतीत्याचार्याशयात् । अत एवोक्तं प्रमाणलक्षण टीकायाम् । अननुभूतैतावन्मात्रविषयस्यास्य साक्षिसिद्धत्वेनाति प्रसङ्गायोगादिति ।

**राघ.**— स्मृतिसाधनत्वेन मनसः प्रत्यक्षान्तर्भाव इति यदभिप्रेतं तदयुक्तमिति शङ्कते ।। **नन्विति ।** एवकारेण कुतस्तत्साधनत्वेनानुप्रमाणता कुतस्तरां च प्रत्यक्षप्रमाणतेति सूचयति ।। **पूर्वावस्थाया इति ।** अनुभवो यस्मिन्काले जातस्तस्य कालस्येदानीं स इति स्मृतिविषयस्य निवृत्ते-रित्यर्थः ।। **तथात्वमिति ।** याथार्थ्योपयोगि यतोऽतो नेति पूर्वेणान्वयः । अस्तूक्तदिशा स्मृतेर्याथार्थ्यम् । तथाऽपि तदुत्पत्तिसामग्र्या संस्कारस्य तज्जननासामर्थ्यात्कथं तदुत्पत्तिरिति सौहार्देन शङ्कते ।। **नन्विति ।। स्मृतिजननस्येष्ट इति ।** अधीगर्थदयेषां कर्मणीति षष्ठी ।। **भवेदेतदेवमिति ।** एवं त्वदुक्तरीत्यैतत्स्मृतिजन्मदौर्घट्यं भवेदित्यर्थः ।। **योगजो धर्म इति ।** अतीन्द्रियार्थविषये प्रत्यासत्तिरूपस्तथेत्यर्थः । एवं साक्षिणो मनसश्च यथार्थज्ञानसाधनत्वेनानुप्रमाणान्तर्भावमुपपाद्य घ्राणादीनामपि तदाह ।। **प्राकृतेन्द्रियाणीति ।। मनोवृत्तीति ।** मनःपरिणामरूपमित्यर्थः । यद्वा पूर्वमिन्द्रियपदेन ज्ञानेन्द्रियाणि गृह्यन्त इत्युक्तम् । तत्र साक्षिमनसोर्ज्ञानेन्द्रियत्वमुक्त्वा घ्राणादीनां तदाह ।। **प्राकृतेन्द्रियाणीति ।** आत्मसमवेतं ज्ञानं जनयन्तीति न्यायमतनिरासाय मनोवृत्तीत्युक्तम् । एवमुपयुक्तं सर्वं निरूप्याधुना पदकृत्यान्याह ।। **तत्रेति ।** प्रत्यक्षलक्षणे ।

**विज.**— ।। **याथार्थ्यमेव नास्तीति ।** तथा च यथार्थज्ञानसाधनप्रत्यक्षविशेषेषु विभागो नोचित इति भावः ।। **निवृत्तत्वादिति ।** स्मृतिकाले तत्ताया अभावादित्यर्थः ।। **ज्ञानेनेति ।** ज्ञानविषयी-भूतकाले विशेष्ये विशेषणसत्ताया याथार्थ्यप्रयोजकत्वम् । न तु ज्ञानाधारकाले । तथा सत्यतीताद्यनु-मित्यादेरप्य यथार्थापत्तेरित्यर्थः । प्रसङ्गात्पृच्छति ।। **नन्विति ।। अननुभूतमपीति ।** विशेषसंस्कारस्य पूर्वावस्थानिवृत्त्या सम्बन्धविशेषणतायाः प्रत्यासत्तेः सत्त्वात् । विशेषणज्ञानस्याकारणत्वात् ।

मनसस्तथाविधस्मृत्युपपत्तौ न किञ्चिद्बाधकमित्यर्थः ॥ **तत्रेति** । तत्रप्रत्यक्षलक्षणे । इदं च यथाश्रुतमभिप्रेत्य । वस्तुतस्तु दोषाणां प्रत्येकमभिधातुमशक्यत्वात् । स्वेतरसकलसहकारिसमवहितः सन्निकर्षः प्रत्यक्षमिति वाच्यम् । न चैवमभिधानेऽतिप्रसङ्ग इति ध्येयम् ।

**वेदे.—** ॥ **याथार्थ्यमेव नास्तीति** । तथा च तत्साधनस्य मनसोऽनुप्रमाणत्वानुपपत्तिरिति भावः ॥ **न हीति** । स्मृतिकाले तद्देशकालवैशिष्ट्यरूपपूर्वावस्थाया अभावेनाविद्यमानविषयकत्वात्स्मृतेरयथार्थत्वमेव युक्तमिति भावः ॥ **यत इति** । ज्ञानोल्लिखितदेशकालयोर्विषयासत्त्वमेव ज्ञानायथार्थत्वे तन्त्रं न तूल्लिखितस्य विषयस्य ज्ञानकालेऽसत्त्वम् । तथात्वेऽतीतानागतप्रमेययोरप्ययाथार्थ्यापत्तेः । स्मृत्युल्लिखितदेशकालयोश्च स्मृतिविषयः सन्निति न स्मृतेरयाथार्थ्यमिति प्रघट्टिकोऽर्थः । तदाऽसौ तादृश इति गृण्हातीत्यनेन निवृत्तपूर्वावस्थतयाऽर्थविषयकत्वं स्मृतेरुक्तम् । तदनुपपन्नमिति तटस्थः शङ्कते ॥ **नन्विति ॥ स चेति** । अन्यथाऽतिप्रसङ्गादिति भावः ॥ **संस्कारस्त्विति** । एतेन स्मृतेर्याथार्थ्ये तत्कारणसंस्कारस्य प्रमाणान्तरतापत्तिरित्यपि परास्तम् । मनस एव तत्करणत्वेन संस्कारस्य व्यापारमात्रत्वात् ॥ **को दोष इति** । अनुभवबलेनैवेत्थं सहकारिसामर्थ्यकल्पनान्नातिप्रसङ्गः । विशेषणज्ञानं च न विशिष्टज्ञानकारणमिति भावः । नन्विन्द्रियाणां वर्तमानमात्रग्राहित्वात्कथं मनो निवृत्तपूर्वावस्थाविषयकस्मरणं जनयेदित्यत आह ॥ **वर्तमानेति** । सत्यमिन्द्रियाणामियं सहजशक्तिर्यद्वर्तमानमात्रग्राहित्वमिति । तथाऽपि सहकारिसामर्थ्याच्छक्त्यन्तराविर्भावेनावर्तमानवस्तुविषयकत्वमपि तेषामुपलक्ष्यत इति भावः । यद्वक्ष्यति सहकारिसामर्थ्यात्कारणानां शक्त्यन्तराविर्भावस्य बहुलमुपलम्भादिति । एवं प्राकृतेन्द्रियाणि निरूप्य तत्फलमाह ॥ **प्राकृतेन्द्रियाणीति** । स्वरूपज्ञाननिरासाय मनोवृत्तीति । अनेन प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रियभेदेनेति प्रत्यक्षविभागोऽपि कृतो भवतीत्यवधेयम् । एवं प्रत्यक्षलक्षणान्तर्गतार्थेन्द्रियतद्दोषान्निरूप्येदानीं तल्लक्षणशरीरनिष्ठविशेषणानां कृत्यमाह ॥ **तत्रेत्यादिना** । तत्र प्रत्यक्षलक्षण इत्यर्थः ।

**अभि.—** ननु तत्र तदाऽसौ तादृश इति न स्मृत्याकारः । तद्धेतुसंस्कारजनकानुभवस्या तदाकारत्वात् । किन्त्वयमिदानीमेवं विध इत्यनुभवसमानाकारः । तत्र तदाऽसौ तादृश इति स्मृत्याकारावगाह्यनुव्यवसायो नीलं नभः प्रादेशसम्मितश्चन्द्रमा इत्यादिवद्भ्रमः । ततश्च बाधितविषयत्वादप्रमाणमेव स्मृतिरिति गूढाभिसन्धिः शङ्कते ॥ **ननु स्मृतेरिति ॥ याथार्थ्यमिति** । ननु स्मृतेरयमिदानीमेवंविध इत्यनुभवसमानाकारत्वेऽपि न याथार्थ्यहानिः । इदानीमित्यनुभवविषयकालस्यैवावगाहनेन वर्तमानकालानवगाहनात् । स्मृतिकाले च वस्तुनस्तथात्वे बाधितविषयत्वाभावादित्यत आह ॥

**न हीति ।** यदा यस्मिन्काले यादृशोऽर्थो यद्धर्मावच्छिन्नः स्मर्यते तदाऽसौ तादृशो नेति हि प्रसिद्धमित्यर्थः । सत्यम् । अनुभवसमानाकारा स्मृतिस्तथाऽपि नानुभवविषयकालविषया किन्तु वर्तमानकालविषया । संस्कारस्य घटादिज्ञापने सामर्थ्याभावेन तदर्थमनुभवनिरीक्षणेऽपि कालस्य ज्ञानजनकमात्राधीनज्ञानविषयत्वेन कालज्ञापनेऽनुभवमनपेक्ष्यैव सामर्थ्यसद्भावात् । चक्षुःसहकारि-वशाच्चन्दनं सौरभ्येनेव संस्कारोऽप्यनुभवोपनीतं घटं स्वमहिम्ना वर्तमानकालसम्बद्धतया ज्ञापयतीति भावः । एतेन निवृत्तपूर्वावस्थावगाहित्वेन स्मृत्यप्रामाण्यशङ्का न युक्ता । अतीतानागतविषयक-यौगिकज्ञानस्यातीतविषयकागमजज्ञानस्य तादृशानुमितेश्चा प्रामाण्यप्रसङ्गात् । न च तदिष्टम् । तथा सति सर्वप्रामाण्यस्यैव शङ्कनीयत्वेन विशिष्टस्मृत्यप्रामाण्यशङ्कायोगादिति परास्तम् । पूर्वपक्ष्यभिप्राय-मजानन्निव समाधत्ते ।। **यतो ज्ञानकाल इति ।** कदा तर्हि सत्त्वं याथार्थ्येऽपि युक्तमिति पृच्छति ।। **किन्त्विति ।** उत्तरमाह ।। **यद्देशकालतयेति ।** स्मृतिविषयस्य सत्त्वमुपपादयितुं स्मृत्याकारमनुवदति ।। **स्मृतिश्चेति ।** यद्यपि स्मृत्याकारं नैवं परो मन्यते । तथाऽपि तदाशयस्य गूढत्वाल्लोकप्रसिद्ध्यनु-सारेणानुवादः कृत इति बोध्यम् । पूर्वपक्षी स्वाभिसन्धिमुद्घाटयति ।। **ननु पूर्वानुभवेति ।। स चानुभूतविषय एवेति ।** अनुभूतस्यैव स्मृतिजनने समर्थः । कालांशे तु संस्कारजन्यज्ञानस्य स्मृतित्वमेव नेति न कालांशेऽनुभवापेक्षेति भावः । ननु विषयस्यासत्त्वात्कथमसौ सन्निकर्षः स्यादित्यत आह ।। **अननुभूतामिति ।** निवृत्ततयाऽननुभूतामित्यर्थः ।। **वर्तमानमात्रविषयाणीति ।** वर्तमानमात्रविषयीकरणस्वभावान्यपीन्द्रियाणि सहकारिसामर्थ्यादतीतत्वेनापि विषयीकुर्वन्तीत्यर्थः ।

**आद.**— ।। **पूर्वावस्थाया निवृत्तत्वादिति ।** पूर्वकालसम्बन्धित्वरूपसत्त्वस्येत्यर्थः । तदभाव-वति तत्प्रकारकत्वाद् भ्रमत्वमित्यर्थः ।। **यत इति ।** पूर्वकालसम्बन्धित्वेन स्वकालवृत्तित्वं स्मृतौ भासते येन भ्रमत्वं स्यात् । किन्तु यत्काले स्वयं जायते तत्कालवृत्तिध्वंसप्रतियोगित्वम् । तच्चास्त्येवेति न भ्रमत्वम् । न च तथाऽप्येतत्कालेऽसतो धर्मस्यावगाहित्वाद् भ्रमत्वमेव स्यादिति वाच्यम् । तथा सति कुत्रापि प्रमात्वस्यैवाभावप्रसङ्गात् । न सोऽस्ति प्रत्ययो लोके यत्र कालो न गोचर इति वचनात् । अनुभवस्यापि वर्तमानसम्बन्धावगाहित्वात्तादृशवर्तमानकालसम्बन्धस्य तस्मिन्नेव वस्तुनि पूर्वकाले चोत्तरकालेऽभावात् । तदभाववति तत्प्रकारकत्वस्य सर्वत्र सत्त्वात् । अभावे प्रतियोगि-वैय्यधिकरण्यादिनिवेशे स्मृतावपि साम्यादिति भावः । वस्तुतस्तु सतोऽसत्त्वावगाहित्वमसतः सत्त्वावगाहित्वान्यतरत्वस्यैव भ्रमरूपत्वेन स्मृतेर्घटादौ तत्कालेऽसति तत्कालासत्त्वावगाहित्वेन न भ्रमत्वमिति प्रघट्टिकार्थः ।। **ननु पूर्वानुभवजनितसंस्कार इति ।** इदमुपलक्षणम् । अनुभवस्य स्मृतिं प्रति समानविषयकत्वेन कारणत्वेन चानुभवाविषयविषयकत्वं स्मृतेर्न सम्भवतीत्यपि बोध्यम् ।। **न**

**चैवमिति ।** अनुभवजन्यत्वमपि नास्तीत्यपि बोध्यम् । संस्कारेणान्यथासिद्धत्वात् । न च संस्कारस्य व्यापारत्वेन व्यापारेण व्यापारिणोऽन्यथासिद्धिर्न सम्भवतीति । तथा सति यागस्यापि स्वर्गं प्रत्यन्यथासिद्धत्वं स्यादिति चेन्न । वैषम्यात् । श्रुत्या यागस्य स्वर्गकारणत्वसिद्धौ तदन्यथाऽनुपपत्त्या व्यापारः कल्प्यते । तत्र व्यापारेण यागस्यान्यथासिद्धिकथनं न सम्भवति । यागस्य स्वर्गकारणत्वाभावे व्यापारस्वरूपस्यैवासिद्धेः । यत्र तु व्यापारत्वेनाभिमतस्य स्वतः सिद्धत्वं तत्रोक्तौ दोषाभावात् । न च प्रकृतेऽप्यनुभवस्य स्मृतिकारणत्वोपपत्त्यर्थं संस्कारस्य कल्पनीयत्वेनान्यथासिद्धत्वकल्पनमयुक्तमिति वाच्यम् । अनुभवस्मृतिकारणत्वोपपत्त्यर्थं संस्कारस्याकल्पनात् । संस्कारोद्बोधेन कदाचित् स्मृत्युत्पत्तौ भवदुक्तकारणत्वानुसन्धानाभावेऽपि तदानीमुत्पन्नस्मृतेः सकारणकत्वानुमानेन स्मृतिकारणतयैव संस्कारसिद्धेः । अनुभवस्य संस्कारकारणत्वं तु कारणान्तरासम्भवरूपहेतुना प्रमाणान्तरेण वा कल्प्यते । अनुभवस्य स्मृतिकारणत्वे प्रमाणं तु नास्त्येवेति बोध्यम् ॥ **मनोजन्येति ।** ननु ज्ञानसामान्यस्य मनसः कारणत्वेन तत्र विवादाभावेन मनोजन्यत्वोक्तिरयुक्तेति विशेषकारणस्यैव वक्तव्यत्वादिति चेत् । चक्षुरादीनां चाक्षुषत्वावच्छिन्नं प्रति चक्षुष इव प्रत्यक्षत्वव्याप्यमानसत्त्वावच्छिन्नं प्रति मनस एव विशेषतोऽपि कारणत्वाङ्गीकारात् । न च चक्षुरादिभिः-संयोगादिलक्षणसन्निकर्षसत्त्वात्तेषां कारणत्वसम्भवेऽपि प्रकृते स्मृतिजनने सन्निकर्षाभावात्कथं स्मृतिं प्रति विशेषतः कारणत्वं सम्भवति । मानसत्वावच्छिन्नं प्रति मनसो विशेषतः कारणत्वसत्त्वेऽपि स्मृतेर्विशेषतः कारणजिज्ञासायां तदुक्तिरसङ्गतैवेत्यत आह ॥ **संस्कारस्त्विति ।** स्मृतेरपि मानसरूपप्रत्यक्षत्वेन नासङ्गतिरिति भावः । ननु कुत्रापि संस्कारस्य सन्निकृष्टत्वं न दृष्टमित्यत आह ॥ **चक्षुरिति ।** न च तत्र सहकारित्वमेव न सन्निकर्षत्वमिति वाच्यम् । ज्ञानस्य सन्निकर्षरूपताया उपनीतभाननिर्वाहाय त्वयाऽप्यङ्गीकृतत्वेन नासङ्गतिरिति भावः । ननु कुत्रापि संस्कारस्य सन्निकृष्टत्वं न दृष्टमित्यत आह ॥ **चक्षुरिति ।** न च तत्र सहकारित्वमेव न सन्निकर्षत्वमिति वाच्यम् । ज्ञानस्य सन्निकर्षरूपताया उपनीतभाननिर्वाहाय त्वयाऽप्यङ्गीकृतत्वेन तद्विषयकोपनयत्वावाच्छिन्नं प्रति तद्विषयकत्वेनैव संस्कारसाधारणरूपेणैव कारणताकल्पनस्यैव न्याय्यत्वेन ज्ञानवत्तस्यापि सन्निकर्षत्वासम्भवात् । मन्मते मानसोपनीतसामान्यस्यापि स्मृतित्वेन ज्ञानजन्यत्वाभावेन संस्कारत्वेनैव हेतुत्वाच्च । उद्बोधकाभावकाले उपनीतभानादेः स्मृतेश्चाभावेनोद्बोधकविशिष्टे संस्कारे एव कारणत्वं वक्तव्यमित्युद्बोधकानामननुगतत्वेनानुगतकार्यकारणभावानुपपत्तिः । विनिगमकाभावेनोद्बोधकविशिष्टे संस्कारे संस्कारोद्बोधके वा कारणत्वं स्यादिति गौरवम् । न च मन्मते ज्ञानस्यैव मानसप्रत्यक्षत्वावच्छिन्नं प्रति कारणत्वाङ्गीकारेण नैष दोष इति वाच्यम् । भवन्मते स्मृतित्वावच्छिन्नं प्रति

संस्कारत्वेन कारणताया आवश्यकत्वात्तत्रोक्तदोषस्य सत्वान्मानसत्त्वावच्छिन्नं प्रति ज्ञानत्वेन कारणताया अधिकत्वाच्च । मन्मते मानसप्रत्यक्षत्वस्मृतित्वयोरेकत्वेनोक्तरीत्या कारणाद्वयस्याभावाल्लाघवम् । एवं उक्तेः कारणतारूपत्वेन तस्योभयत्राङ्गीकारेऽपि बाधकाभावादवच्छेदकत्वादेरप्रामाणिकत्वेन गुरुतरकार्यकारणतावच्छेदकत्वादिकल्पनाप्रयुक्तगौरवादेरभावाच्च । स्वनिष्ठज्ञानजननानुकूलशक्त्यभिव्यञ्जकत्वरूपोद्बोधकत्वस्यानुगतत्वेनानुगमस्याप्यभावाच्च । अत एवोद्बोधकविशिष्टसंस्कारस्यैवार्थविशेषविषयकत्वविशिष्टज्ञानजनने शक्तिमत्त्वेन विशेषणीभूतोद्बोधकस्यापि ज्ञाननिष्ठार्थविषयकत्वरूपशक्तिप्रयोजकत्वेन प्रमाणमविरोधत इत्यनुव्याख्याव्याख्यावसरे निपुणतरमुद्बोधकेऽपि प्रामाण्यमुपपादितम् । केवलसंस्कारस्यासन्निकर्षत्वेन तद्रूपसन्निकर्षविशिष्टो मनसि प्रमाव्याप्तत्वरूपपूर्वोक्तप्रमाकरणत्वाभावेऽपि न दोषः । उद्बुद्धसंस्कारविशिष्टमनस `एव प्रमाणत्वात् । न च मन्मते उद्बुद्धसंस्कारस्य कारणत्वानङ्गीकारेण लाघवमिति वाच्यम् । ज्ञानकाले उद्बुद्धसंस्कारस्यावश्यकत्वेनान्यत्र क्लृप्तसंस्कारस्यैवात्रापि हेतुकल्पनौचित्यादित्यलं विस्तरेण ।

**श्रीनि.**— ॥ **याथार्थ्यमेवेति ।** कुतस्तत्साधनमनसः प्रामाण्यमित्येवार्थः । कुत इत्यत आह ॥ **न हीति ।** यदा स्मृतिकाले । यादृशो यद्धर्मवान् । कुत इत्यत आह ॥ **पूर्ववस्थाया इति ।** स घट इति स्मृतिस्तद्देशसम्बन्धत्वाख्यपूर्वावस्थाविशिष्टघटं विषयीकरोति । तद्देशकालसम्बन्धश्च नेदानीमित्यर्थः । तथात्वं तद्धर्मोपेतत्वम् । अनुभूतविषय इति सप्तम्यन्तम् ॥ **न चानुभवेनेति ।** अनुभवकाले पूर्वावस्थायाः सत्त्वेऽपि तन्निवृत्त्याभावादिति भावः ॥ **अनुभवसमानविषयकेति ।** अनुभवविषयमात्रविषयको यः संस्कारस्तज्जन्येत्यर्थः । नन्विन्द्रियाणां प्राप्यप्रकाशकारित्वादतीतेन सह मनसः सन्निकर्षाभावात्कथं तेन तज्ज्ञानम् । तथात्वे चाननुभूतस्मृतिरपि किं नोत्पद्यत इत्यत आह ॥ **संस्कार इति ॥ तदर्थेति ।** स्मृतिविषयातीतार्थेत्यर्थः । नन्वसम्बन्धरूपस्य कथं सन्निकर्षत्वमितत्यत आह ॥ **यथेति ।** योगीश्वराणामतीतानागतज्ञानं जायते तेन तदिन्द्रियाणां तैः सन्निकर्षान्तरमस्ति । अतो योगजन्यपुण्यमेव सम्बन्धरूपमपि प्रत्यसत्तिः सन्निकर्षस्थानीया इति वाच्यम् । तथाऽत्रापीत्यर्थः । अस्त्वेवं संस्कारसहकृतमनोजन्यत्वं स्मृतेस्तथाऽपि कथमुक्तशङ्कापरिहार इत्यत आह ॥ **ततश्चेति ।** संस्कारसहकृतमनसः स्मृतिजनकत्वादित्यर्थः । तथा च विशेष्यपूर्वावस्थासंस्कारसहकृतमनसाननुभूताऽपि निवृत्तिर्विषयीक्रियते । न च निवृत्त्यंशे प्रत्यासत्त्यभावः । सम्बन्धे विशेषणताया एव प्रत्यासत्तित्वात् । फलबलेनाननुभूतैतावन्मात्राविषयत्वेऽतिप्रसङ्गाभावादिति भावः ॥ **चक्षुराकाशसन्निकर्ष इति ।** अतिव्याप्तिरित्यनुवर्तते । अर्थशब्देन तत्तदिन्द्रियविषयवाचकेन तत्परिहारः इति भावः ॥ **पूर्ववदिति ।** घटपटसन्निकर्ष इत्यर्थः ॥ **दृष्टार्थानामिति ।** वाशब्दो व्यवस्थितविकल्पे ।

दुष्टार्थानामदुष्टेन्द्रियैः सन्निकर्षं व्यावर्तयितुमर्थेष्वदुष्टार्थानां दुष्टेन्द्रियैः सन्निकर्षं व्यावर्तयितुमिन्द्रियेषु निर्दोषत्वग्रहणमित्यर्थः । नन्विन्द्रियार्थयोर्भेदस्येव संयोगस्याप्यनेकत्वेनार्थधर्मिकेन्द्रियसंयोगे समग्र लक्षणस्यातिव्याप्तिरिति चेन्न । इन्द्रियार्थसन्निकर्ष इत्यत्रेन्द्रियधर्मिकार्थप्रतियोगिकसन्निकर्षस्यैव विवक्षितत्वात् ।

**वि.—** ननु रागादीनां तद्रहितस्य स्मृतिसाधनस्य मनसो यथार्थस्मृतिहेतुत्वं वाच्यम् । निर्दुष्ट-करणस्य यथार्थज्ञानसाधनत्वान्न च तत्सम्भवति । स्मृतियाथार्थ्यस्यैवाभावेन यथार्थस्मृतिजनकत्वा-योगादित्यभिप्रेत्य शङ्कते ॥ **ननु स्मृतेरिति ।** यथार्थमेव नास्ति । यथार्थस्मृतिजनकत्वं मनसः सुतरां नास्तीत्येवार्थः । यथार्थराहित्यमुपपादयति ॥ **न हीति ।** यदा यस्मिन्काले यादृशोऽर्थो यैः कुण्डलादि धर्मैर्युक्तोऽर्थः स्मर्यते तदा तस्मिन्काले तादृशस्तद्युक्तो न हि भवतीत्यर्थः । कुत एतदित्यत आह ॥ **पूर्वावस्थाया इति ।** पुरातनाया अनुभवकालीनायास्तादृशकालकुण्डलादिसम्बन्धरूपाया इत्यर्थः ॥ **नेति ।** यतो यस्माज्ज्ञानकाले वस्तुनस्तथात्वं ज्ञानविषयीकृतधर्मयुक्तत्वं ज्ञानस्य यथार्थोपयोगि न भवति तस्मान्नेत्यर्थः । तर्हि याथार्थ्ये किं तत्त्वमिति पृच्छति ॥ **किन्त्विति ।** उत्तरमाह ॥ **यद्देशेति ।** यद्वस्तु ज्ञानेन यद्देशकालतया यद्देशकालसम्बद्धतया यादृशं यद्धर्मविशिष्टं गृह्यते विषयीकरोति । तद्देशकालयोस्तयोर्देशकालयोस्तस्य वस्तुनस्तत्त्वं याथार्थ्योपयुक्तमित्यर्थः । अन्यथाऽतीतानागतवस्तु-विषयकानुनित्यादेरपि याथार्थ्यं स्यादिति भावः । अस्तु नामेदं याथार्थ्योपयोगि । तथाऽपि किं प्रकृत इत्यत आह ॥ **स्मृतिश्चेति ।** स्मृतिस्तु तद्देशे तदाऽनुभवकालेऽसौ देवदत्तादिरर्थस्तद्धर्मविशिष्ट इति तत्पदार्थं विषयीकरोतीत्यर्थः ॥ **न च तत्रेति ।** यद्देशकालयोः स्मृतिर्यादृशमर्थं गोचरयति । तत्र देशे तदा तस्मिन्कालेऽसौ स्मृतिगतोऽर्थस्तादृशो न भवतीति न चेत्यर्थः । ननु स्मृतेस्तत्त्वं च तदाऽसौ तादृश इत्येव स्मारकत्वे हि याथार्थ्योपयोगिरूपसम्पत्त्या याथार्थ्यं सिध्येत् । न च स्मृतिस्तथा भवितुमर्हति । सामग्र्यभावादित्यभिप्रेत्य शङ्कते ॥ **नन्विति ।** परिहरति ॥ **मैवमिति ।** यदि संस्कारमात्रजन्यत्वं संस्कारेतराकारणकत्वे सति संस्कारजन्यत्वं स्मृतेरङ्गीकुर्मस्तर्ह्येतन्निवृत्तपूर्वावस्थि-तयाऽर्थाविषयीकारित्वं भवेत्स्यात् । न चैवमेवं संस्कारमात्रत्वाभ्युपगमो न चेत्यर्थः । तर्हि केन कारणेन जायत इति जिज्ञासायामाह ॥ **मनोजन्येति ।** मनोरूपेन्द्रियजन्येत्यर्थः । शब्दलिङ्गज्ञाना-करणकस्य जन्यस्येन्द्रियजन्यत्वनियमादिति भावः । न च मनःकरणकत्वे मानाभावः । लिङ्गेन वन्हिं जानामीत्यनुभवस्य वन्ह्यनुमितेर्लिङ्गकरणकत्वे मानत्ववच्चक्षुषा घटं जानामीत्यनुभवस्यायं घट इति ज्ञानस्य चक्षुःकरणकत्वे मानत्ववच्च बालं मुकुन्दं मनसा स्मरामीत्यनुभवस्य

कायेन प्रणमेद्विष्णुं वाराहं नाम कीर्तयेत् ।
मनसा संस्मरेद्विष्णुं भक्त्या भक्तजनप्रियम् ।

इत्याद्यागमस्याद्यापि तामेव मनसा स्मरामीति लोकव्यवहारस्य च तत्र मानत्वादिति । ननु स्मृतेर्मनःकारणत्वे संस्कारजम्यत्वमेव न स्यात् । अथ सन्निकृष्टमनसैव स्मृतिजन्यत्वसम्भवादित्यत आह ॥ **संस्कारस्त्विति ।** मनसो मनोरूपेन्द्रियस्य तदर्थसन्निकर्षरूप एव । तैः पूर्वानुभूतैरर्थैस्तस्य मनसोऽर्थैर्वा प्रत्यासत्तिभूत एव न तु स्वातन्त्र्येण कारणकमित्यर्थः । पूर्वानुभूतपदार्थसन्निकर्षत्वेन सहकारित्वाभ्युपगमान्नोक्तचोद्यावकाश इति बोध्यम् । नन्विन्द्रियार्थात्सम्बन्धरूपस्य संस्कारस्य कथं सन्निकर्ष इत्यत आह ॥ **यथा योगीन्द्रियाणामिति ।** तदर्थसन्निकर्ष इत्यनुवर्तते । असम्बन्धरूपोऽपि वियोगजो धर्मो योगीन्द्रियाणां तदर्थैः सन्निकर्षस्तर्थेन्द्रियार्थासम्बन्धरूपोऽपि संस्कारः सन्निकर्ष-स्थानीयत्वात्संस्कार इति भावः । उक्तं च सुधायाम् । संस्कारसन्निकर्षस्थानीयतायाऽङ्गीकारादिति । प्रमाणलक्षणटीकायां च संस्कारस्तत्र सहकारिमात्रमित्युक्तम् । अत एव संस्कारसहकृतस्यापि कथमनुभूतातीतपूर्वावस्थाविषयस्मरणजनकत्वमतिप्रसङ्गात् । कथं वा साक्षात्स्मरणस्य प्रत्यक्षफलत्व-मित्यत उक्तम् ॥ **को दोष इति ।** किं शब्द आक्षेपे । न कोऽपि दोष इत्यर्थः । स्मृतेः पूर्वावस्था-विषयकत्ववन्निवृत्तविशेषकत्वस्यापि साक्षिसिद्धत्वादनुभूतपूर्वावस्थानिवृत्तत्वस्यापि स्मृतिविषयतायां तत्र नातिप्रसङ्गः । न च स्मृतेरसाक्षात्काररूपप्रतीतितज्ज्ञानकरणकज्ञानत्वात्स्वप्नवन्मानसत्वाच्च स्मरणत्वसाक्षात्कारासिद्धेः । अनुमितिशाब्दज्ञानयोर्ज्ञानरूपकरणजन्यतयां नानुमितिशब्दत्वं वा तन्त्र-मननुगमात् । नाप्यनुमितिशब्दज्ञानान्यत्वं गौरवात् । किन्तु परो वा साक्षात्कारातिरिक्तज्ञानत्वं वा तन्त्रमित्यभ्युपेयम् । सति सम्भवे त्यागायोगात् । अन्यथा क्वचिदपि प्रयोजकानभ्युपगमप्रसङ्गात् । तथा च स्मरणस्यासाक्षात्कारत्वे ज्ञानपरणत्वापत्तिः प्रयोजकमभ्युपेत्य प्रयोज्यानभ्युपगमस्य व्याहतत्वात्पश्वहेतूच्छित्तिप्रसङ्गान्नाद्यो हेतुरप्रयोजकः । नापि द्वितीयो हेतुरप्रयोजकः । चाक्षुषत्वादेरिव मानसत्वस्यापि साक्षात्कारव्याप्यत्वात् । न च द्वितीयो हेतुरसिद्धः । लिङ्गेन वह्निं जानामीत्यनु-भवाद्वन्हिज्ञानस्य लैङ्गिकत्वव्यवच्छेदेन धर्माधर्मादिकं जानामीत्यनुभवतज्ज्ञानस्य शाब्दवद्योऽहं चक्षुषा घटमन्वभूवं सोऽहं त्वं वा घटमनुभवामीत्याद्यनुभवात्तदनुभवस्य चाक्षुषत्वस्पार्शनत्वादिवच्च योऽहं चक्षुषा स्त्रियमन्वभूवं सोऽहं मनसा तामेव स्मरामीत्यनुभवात्स्मरणस्य मानसत्वसिद्धेः । अन्यथो-दाहृतानुभवस्यापि चाक्षुषत्वाद्यविषयतापातात् । किञ्चेन्द्रियकरणत्वेन स्मरणस्य साक्षात्कारत्व-मभ्युपेयम् । असिद्धं तस्येन्द्रियकरणकत्वमिति चेन्न । परिशेषानुमानात्तत्सिद्धेः । तथा हि । ज्ञानस्य प्रत्यक्षमनुमानं शब्दश्चेति त्रयं करणमित्यविवादम् । तथा च क्रियात्वेन रूपादिप्रतीतिवत्स्मरणस्य

करणजन्यत्वे वाच्ये लिङ्गशब्दानुसन्धानव्यतिरेकेणापि जायमानत्वात् स्मरणस्य नाऽनुमानमागमश्चाकरणं किन्तु प्रत्यक्षमिन्द्रियमेव करणमभ्युपेयम् । ज्ञानाकारके रूपाद्यभावे क्लृप्तत्वात् । न तु संस्कारः करणमक्लृप्तत्वात् । अन्यथा क्लृप्तहानाक्लृप्तकल्पनाप्रसङ्गात् । न नु संस्कारस्य स्मृतिसाधनत्वे कथं संस्कारः सन्निकर्षः स्यादिति चेन्न । परिशेषाच्चक्षुरिन्द्रियस्य रूपादिप्रतीतिकरणसिद्धावसन्निकृष्टस्य चक्षुरादेस्तत्करणत्वासम्भवाच्चक्षुरादिसंयोगस्य सन्निकर्षत्वाभ्युपगमवदिन्द्रियस्य स्मृतिसाधनत्वसिद्धौ बाह्येन्द्रियव्यापाराभावेऽपि जायमानस्य स्मरणस्य परिशेषादन्तरिन्द्रियकरणकत्वसिद्धावसन्निकृष्टस्य मनसस्तत्साधनत्वासम्भवेन संस्कारस्य सन्निकर्षत्वाङ्गीकारसम्भवात् । सन्निकर्षत्वेन संस्कारकरणकत्वं च स्मरणस्य साक्षात्कारत्वसाधकमेव न प्रतिकूलम् ॥ न च स्मरणस्य साक्षात्कारत्वे घटादेरिव धर्मादिरप्यैन्द्रियकत्वापत्तिः । स्मरणसाधनमनोरूपेन्द्रियविषयत्वादिति वाच्यम् । योगजधर्मसहकृतेन्द्रियविषयत्वेऽपीन्द्रियविषयत्व संस्कारसहकृतेन्द्रियविषयत्वेनातीन्द्रियविषयत्वोपपत्तेः एतेन स्मरणस्य साक्षात्कारत्वाङ्गीकारे धर्मादेरपि प्रत्यक्षत्वाभ्युपगमविरोधप्रसङ्ग इति परास्तम् । लौकिक साक्षात्कारस्य योगिसाक्षात्कार इव स्मृतावनभ्युपगमेन घटादितुल्यतया प्रत्यक्षत्वस्य तत्रानभ्युपगमात् । न च स्मरणस्य मानससाक्षात्कारत्वे तत्र साक्षात्कारत्वस्य प्रत्यक्षतापत्तिः । इष्टापत्तेः । संस्काराकरणके धर्मादिज्ञानेऽनुभवत्वशब्दत्वादिवदज्ञानकरणकानुमिति शाब्दज्ञाने व्यावृत्तस्य ज्ञानकरणकम् । ज्ञानसाधारणस्येन्द्रियजन्यताप्रयोजकस्य साक्षात्कारस्य स्मृतौ साक्षिसिद्धत्वात् । न चात्र विवादः । मनसा स्मरामीत्यनुभवस्यैव स्मृतौ च मानसत्वसाक्षात्कारत्वगोचरत्वात् । स्मरणं मानससाक्षात्कार इति व्यवहारस्तु व्यवजिहीर्षाभावादेव । सत्यां च व्यवजिहीर्षायामस्त्येव स्मरणम् । मानससाक्षात्कार इति व्यवहारः । अन्यथा लिङ्गेन वह्निं जानामीत्यनुभवस्यानुमितित्वानुभवत्वगुणत्वाविषयकस्य शब्देन धर्माधर्मादिकं जानामीत्यनुभवस्याशाब्दत्वानुभवत्वगुणत्वाविषयकत्वस्य च त्वचा घटं स्पृशामीत्यनुभवस्य स्पार्शनसाक्षात्कारत्वानुभवत्वगुणत्वाविषयकत्वस्य चापातात् । तस्माद्यथा शब्दकरणके संस्कारकरणके धर्मादिज्ञाने शब्दत्वमनुभवत्वं च साक्षिप्रत्यक्षसिद्धम् । तथा मनोरूपेन्द्रियकरणके स्मरणे मानसत्वं साक्षात्कारत्वं च साक्षिप्रत्यक्षसिद्धमिति स्मृतिर्मानससाक्षात्कार इति । तदुक्तं सुधायाम् । मानसं तद्धि विज्ञानं तच्च साक्षिप्रमाणकमित्यनुव्याख्यान व्याख्यानावसरेऽसाक्षात्काररूपत्वान्न प्रत्यक्ष फलमित्यत उक्तम् ॥ **विज्ञानमिति ।** साक्षात्कार इत्यर्थः । स्मरणस्य मानसत्वं साक्षात्कारत्वं च कुत इत्यत आह ॥ **तच्चेति ॥** तदिति मानसत्वं च शब्दात्साक्षात्कारत्वं च परामृश्यत इति । नन्विन्द्रियाणां वर्तमानग्राहित्वादन्तरिन्द्रियजन्या स्मृतिः कथमतीतकालसम्बन्धितामर्थस्य विषयीकुर्यादित्यत आह ॥

वर्तमानविषयाण्यपीति । तत्र दृष्टान्तमाह ।। **संस्कारसहकृतानीति** । प्रत्यभिज्ञासाधनानीत्यनन्तरमिन्द्रियाणीत्यनुवर्तनीयम् । मनसः संस्काररूपसहकारिसामर्थ्यात्तद्युक्तमिति भावः । स्वरूपेन्द्रियस्येव प्राकृतेन्द्रियाणां न ज्ञानव्यञ्जकत्वं न ज्ञानेन्द्रियकत्वं किन्तु तज्जनकत्वेनैवेत्याह ।। **प्राकृतेन्द्रियाणीति** । मनोवृत्तिज्ञानं मनोवृत्तिरूपं ज्ञानमित्यर्थः । प्रत्यक्षलक्षणे विशेषणकृत्यमाह ।। **तत्रेति** । प्रत्यक्षलक्षणवाक्य इत्यर्थः ।। **चक्षुराकाशसन्निकर्ष इति** । अतिव्याप्तिरित्यनुवर्तते । यद्यप्यर्थपदोपादानेऽपि तत्रातिव्याप्तिरेव । आकाशशब्दार्थस्याव्याकृताकाशस्य स्वरूपेन्द्रियविषयत्वेनार्थत्वस्य तत्र सत्त्वात् । न चार्थशब्देनेन्द्रियविषया गृह्यन्त इत्यत्रेन्द्रियपदं प्राकृतेन्द्रियपरमिति वाच्यम् । चक्षुरादेर्गन्धादिसन्निकर्षे विशिष्टलक्षणस्यातिव्याप्त्यापातात् । साक्षिसुखादिसन्निकर्षेऽतिव्याप्तिप्रसङ्गाच्च । तथाऽप्यर्थ शब्देनेन्द्रियविषया गृह्यन्त इत्यत्रेन्द्रियपदं न तत्तदिन्द्रियपरम् । अत एव स्वसन्निकृष्टमिन्द्रियं प्रत्यक्षमिति वक्ष्यति । तथा चाव्याकृताकाशस्य चक्षुरर्थत्वाभावान्न चक्षुराकाशसन्निकर्षेऽतिव्याप्तिरिति बोध्यम् । यद्वाऽऽकाशपदं भूताकाशपरम् । तच्चातीन्द्रियमित्यर्थपदोपादानेन चक्षुराकाशसन्निकर्षेऽति व्याप्तिपरिहार इत्यवगन्तव्यम् ।। **पूर्ववदिति ।। व्याप्तिरिति** । पूर्ववत्सन्निकर्षः प्रत्यक्षमित्युक्ते यथा घटपटसन्निकर्षेऽतिव्याप्तिस्तत्सन्निकर्षः प्रत्यक्षमित्युक्तेऽपि तत्रातिव्याप्तिरेव न तत्रातिरिक्तः कश्चिद्दोषो मृग्य इत्यर्थः ।। **दुष्टार्थानामिति** । अदुष्टेन्द्रिये दुष्टार्थानामिति शेषः । वाशब्दो व्यवस्थितविकल्पार्थः । तथा च दुष्टार्थानामदुष्टेन्द्रियैरदुष्टार्थानां दुष्टेन्द्रियैर्वा सन्निकर्षं व्यावर्तयितुमुभयत्रार्थेन्द्रिये च क्रमेण निर्दोषत्वोपादानमित्यर्थः । नन्विन्द्रियार्थयोर्भेदस्येवेन्द्रिय सन्निकर्षस्य संयोगस्यानेकत्वेनार्थधर्मिकेन्द्रिय सन्निकर्षे विशिष्टलक्षणस्यातिव्याप्तिः । न च सोऽपि लक्ष्यं वेति वाच्यम् । अर्थस्य घटादेरिव तद्धर्मिकेन्द्रियसंयोगस्यापि यथार्थज्ञानहेतुत्वस्यैवाभावेन तत्साधनत्वस्य सुतरामभावात् । अनुप्रमाणविशेषप्रत्यक्षत्वायोगादिति चेन्न । प्रत्यक्षलक्षणवाक्ये निर्दोषयोरर्थेन्द्रिययोः सन्निकर्षोऽर्थरूपेन्द्रियधर्मिकः संयोगः प्रत्यक्षमिति विवक्षितत्वेनोक्तचोद्यानवकाशात् । अत एव क्वचित्तु धर्मिप्राधान्यविवक्षया स्वस्वविषयसन्निकृष्टमिन्द्रियं प्रत्यक्षमुच्यत इति वक्ष्यतीति । अत्रापीन्द्रियकरणधर्मातिरिक्त प्रत्यक्षरूपकरणेऽपीन्द्रियं करणधर्मीत्यर्थः । धर्मिरूपकरणं वाऽवान्तरव्यापारवद्भवति । तस्यावान्तरव्यापारवत्त्वमविकलमिति भावः ।

## प्रत्यक्षशब्दार्थः

**(२७) प्र.प.— ननु प्रत्यक्षं करणविशेषः । करणस्य चावान्तरव्यापारेण भवितव्यम् । यथा छिदाकरणस्य परशोर्दारुसंयोगोऽवान्तरव्यापारः । सत्यम् । अत्रापीन्द्रियं करणधर्मि ।**

**तस्यार्थसन्निकर्षोऽवान्तरव्यापारः । तत्रावान्तरव्यापारप्राधान्यविवक्षयाऽर्थेन्द्रियसन्निकर्षः प्रत्यक्ष-मित्युच्यते । क्वचित्तु धर्मिप्राधान्यविवक्षया स्वस्वविषयसन्निकृष्टमिन्द्रियं प्रत्यक्षमित्युच्यते । स्वरूपेन्द्रियस्यापि आत्मतद्धर्मैः विशेषशक्त्या सन्निकर्षः असत्येव ।**

## प्रत्यक्षप्रभेदः

**चतुर्विधं प्रत्यक्षम् ईश्वरप्रत्यक्षं लक्ष्मीप्रत्यक्षं योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति । तत्राद्यद्वयं स्वरूपेन्द्रियात्मकमेव । उत्तरद्वयं तु द्विविधेन्द्रियात्मकम् । विषयस्तु तत्तज्ज्ञानविषयवद्विवेक्तव्यः ।**

**जना.—** ।। **करणविशेष इति** । यज्जातीयानन्तरमित्यादिना निरुक्तसाधनविशेष इत्यर्थः । यथार्थज्ञानसाधनमनुप्रमाणमिति सामान्यलक्षणपूर्वकं त्रिविधमनुप्रमाणं प्रत्यक्षमनुमानमागम इतीत्यादिना विभागकरणात्साधनविशेषत्वं प्रत्यक्षस्येति भावः । अस्तु प्रत्यक्षं करणविशेषः । ततः किमित्यत आह ।। **करणस्य चेति** । प्रकृते सन्निकर्षविशिष्टस्यैवेन्द्रियस्य करणत्वेन तस्येन्द्रियार्थ-सन्निकर्षो नावान्तरव्यापारः । न हि तद्विशिष्टस्य स एव व्यापारो भवति । आत्माश्रयादिति शङ्कितुराशयः । प्रत्यक्षपदार्थत्वं सन्निकर्षरूपधर्मस्येन्द्रियरूपधर्मिणश्च द्वयोरप्यस्ति । साधनत्वापर-पर्यायकरणत्वे धर्मिसन्निकर्षयोः समानेऽपि धर्मिण एवावान्तरव्यापार आवश्यको न धर्मस्यापि । प्रकृते च धर्मिण इन्द्रियस्यावान्तरव्यापारोऽस्तीति भावेन परिहरति ।। **सत्यमित्यादिना** । उक्ताभि-प्रायस्फुरणायाह ।। **इन्द्रियं करणधर्मीति** । अन्यथा करणपदं व्यर्थं स्यादिति ज्ञातव्यम् । ननु धर्मिण इन्द्रियस्य प्रत्यक्षत्वे निर्दोषेन्द्रियार्थसन्निकर्षः प्रत्यक्षमिति पूर्वग्रन्थविरोधः । निर्दोषेन्द्रियार्थसन्निकर्षः प्रत्यक्षमिति प्रमाणलक्षणविरोधश्च । तत्परिजिहीर्षयेन्द्रियार्थसन्निकर्षस्यैव प्रत्यक्षत्वाङ्गीकारेऽदुष्टमिन्द्रियं त्वक्षमिति ब्रह्मतर्कविरोध इत्याशङ्क्योभयविधव्यवहारस्यापि गतिमाह ।। **तत्रावान्तरेत्यादिना** । ननु स्वरूपेन्द्रियस्य विषयीभूतात्मतद्धर्मैः सन्निकर्षो दुर्वचः । तैः साकमभिन्नत्वादित्यत आह ।। **स्वरूपेन्द्रियस्येति** ।। **विशेषशक्त्येति** । अभेदेऽपि भेदकार्यनिर्वाहकत्वाद्विशेषस्येति भावः ।। **उत्तरंत्विति** । द्विविधेन्द्रियात्मकं स्वरूपबाह्योभयेन्द्रियात्मकमित्यर्थः ।

अक्षाणि च स्वरूपाणि नित्यज्ञानात्मकानि च ।
विष्णोः श्रियस्तथैवोक्तान्यन्येषां द्विविधानि

त्विति ब्रह्मतर्कानुसारादिति भावः ।। **तत्तज्ज्ञानविषयवदिति** । तत्तदिन्द्रियजन्यज्ञानविषय एव तत्तदिन्द्रियविषय इति वक्तव्यमित्यर्थः ।

**राघ.—** निर्दोषार्थसन्निकृष्टं निर्दोषेन्द्रियं प्रत्यक्षमिति भावेन शङ्कते ॥ **नन्विति ॥ अत्रापीति ।** अस्मदीये प्रत्यक्षलक्षणेऽपीत्यर्थः । करणरूपधर्मीत्यर्थः । तर्हि तथैव लक्षणं कुतो नोक्तमित्यत आह ॥ **तत्रेति ।** एवं सतीत्यर्थः ॥ **इत्युच्यत इति ।** निर्दोषेन्द्रियसंयोगः प्रत्यक्षमिति गीयत इति बृहद्भाष्योक्तब्रह्मतर्कतदनुसारि प्रमाणलक्षणे । अत्रापि ग्रन्थे चेत्यर्थः ॥ **कचित्त्विति ।** अदुष्टमिन्द्रियं त्वक्षमिति तत्त्वनिर्णयोक्तब्रह्मतर्कतदनुसार्यनुव्याख्यानसुधयोरित्यर्थः । ननु परमतनिरासप्रस्तावे वक्ष्यमाणदिशा प्राकृतेन्द्रियाणां स्वस्वविषयैः संयोगरूपसन्निकर्षसम्भवेऽपि साक्षिणः स्वरूपज्ञान-व्यक्तीकरणे तद्विषयैरात्मतद्धर्मैः सन्निकर्षो न युक्तः साक्षिणः प्रमात्रभेदादित्याह ॥ **स्वरूपेन्द्रिय-स्यापीति ॥ विशेषशक्त्येति ।** वस्तुसामर्थ्यबलेनेत्यर्थः । पदार्था एवाभिन्नाः सन्तोऽपि भेदकार्य-निर्वहण सामर्थ्योपेताः प्रमाणप्रमिता इति तादृशपदार्थसामर्थ्यमेव भेदकार्यकारितयाऽन्योन्य-विशेषकत्वेन भेदप्रतिनिधिर्विशेषोऽस्ति । वस्तुषु प्रत्यक्षादिप्रमाणप्रमित इति शास्त्रे प्रतिपादित इति ज्ञेयम् । अत एवाह ॥ **अस्त्येवेति ।** इन्द्रियेषु निर्दोषपदव्यावर्त्यं वक्तुं तद्विभागमाह ॥ **चतुर्विधमिति ॥ अभ्यर्हितक्रमेण निर्दिशति ॥ ईश्वरेति ।** स्वरूपेन्द्रियात्मकमेवेत्येवकारेण प्राकृतदेहाभावादिति युक्तिं सूचयति ॥ **द्विविधेन्द्रियेति ।** स्वरूपेन्द्रियबाह्येन्द्रियात्मकमित्यर्थः ॥ **तत्तज्ज्ञानविषयवदिति ।** ईश्वरप्रत्यक्षं कृत्स्नविषयमित्यादिरूपेण ज्ञेयमित्यर्थः ।

**विज.—** ॥ **सत्यमिति ।** विनिगमनाविरहेण सन्निकृष्टेन्द्रियसन्निकर्षयोः प्रत्यक्षपदाभिधेय-त्वेऽपीन्द्रियस्यैव प्रत्यक्षपदाभिधेयस्य सव्यापारत्वनियमो न त्विन्द्रियसन्निकर्षरूपस्य प्रत्यक्षस्य तत्र प्रमायोगव्यवच्छिन्नत्वस्येव प्रत्यक्षत्वस्याभ्युपगमादिति भावः । यद्यपि सन्निकष्टेन्द्रियकरणत्वपक्षेऽपि न सन्निकर्षव्यापारः । विशिष्टस्य विशेषणजनकत्वात् । अन्यथाऽऽत्माश्रयात् । तथाऽपि सन्निकर्ष-स्योपलक्षणत्वमभिप्रेत्य तथोक्तमिति बोध्यम् । नन्वात्मतद्धर्मैः स्वरूपेन्द्रियस्य कः सन्निकर्षः । यः प्रत्यक्षं स्यादित्यत आह ॥ **स्वरूपेन्द्रियस्येति ।** साक्षात्कारविषयताप्रयोजिकतायाः शक्तेरेव सन्निकर्षत्वमित्यर्थः ॥ **स्वरूपेन्द्रियात्मकमेवेति ।** प्राकृतेन्द्रियस्य तत्राभावादिति भावः ॥ **द्विविधेन्द्रियेति ।** स्वरूपप्राकृतेन्द्रियेति । एतेषां विषयापेक्षायामाह ॥ **विषय इति ।** यथेश्वरज्ञानं सर्वविषयमेवं तत्प्रत्यक्षम् । ईश्वरादन्यत्रानालोचनेऽपि सर्वविषयं यथा लक्ष्मीज्ञानं तथा लक्ष्मीप्रत्यक्षम् । एवमन्यत्रापि स्वयमूह्यमिति देवासुरसम्बन्धिभिन्नमित्यर्थः ।

**वेदे.—** ननु नेन्द्रियसन्निकर्षस्य प्रत्यक्षत्वं युक्तम् । प्रत्यक्षस्य यथार्थज्ञानकारणरूपानुप्रमाण-विशेषत्वेन करणत्वात् । करणस्य च व्यापारवत्तानियमात्सन्निकर्षस्य च व्यापारत्वादित्याशङ्कते ॥

**नन्विति ॥ अत्रापीति ।** इन्द्रियसन्निकर्षस्य प्रत्यक्षत्वेनोक्तत्वेऽपीत्यर्थः । ननु सन्निकृष्टेन्द्रियव्यापारत्वं न तत्सन्निकर्षस्य सम्भवति । आत्माश्रयप्रसङ्गादित्यत आह ॥ **करणधर्मीति ।** तथा च धर्मीभूतमिन्द्रियमेव करणं न तु सन्निकृष्टेन्द्रियमित्यर्थः । एवं चात्रापीन्द्रियमेव करणं विवक्षितम् । तद्धर्मभूतः सन्निकर्षोऽवान्तरव्यापारत्वेन विवक्षितोऽतो नानुपपत्तिरिति भावः । ननु तर्हि सन्निकृष्टेन्द्रियं प्रत्यक्षमित्येव कस्माल्लक्षणं नोच्यते । किमुक्तलक्षणविवक्षणेनेत्यत आह ॥ **अत्रेति ।** एवं सत्यपीत्यर्थः । इत्युच्यत इत्यनन्तरं प्रमाणलक्षणादौ भगवत्पादैरिति शेषः । तथा च तदनुसारिभिरस्माभिरपि तथैव व्यवहृतम् । वस्तुतस्तु सन्निकृष्टमिन्द्रियमेव प्रत्यक्षं विवक्षितमिति भावः । ननु न व्यापारवत्त्वं करणत्वं किन्त्वविलम्बेन प्रमोत्पादकत्वम् । तच्च सन्निकर्षेऽप्यक्षतमेवेति परिहारं मनसि निधाय किं व्यापारवत्त्वरूपकरणत्वपुरस्कारेणोक्तपरिहारेणेत्यत आह ॥ **क्वचिदिति ।** अदुष्टमिन्द्रियं त्वक्षमित्यादिब्रह्मतर्कवाक्यादावित्यर्थः । तथा च ब्रह्मतर्कव्याक्यानुसारादुक्त एव परिहार इति भावः । प्रमाणलक्षणब्रह्मतर्कवाक्ययोः परस्परविरोधपरिहारार्थमुक्तम् । अत्र धर्मिप्राधान्यविवक्षयेति पूर्वं चावान्तरव्यापारप्राधान्यविवक्षयेति । तथा चास्मन्मते इन्द्रियमेव करणं सन्निकर्षोऽवान्तरव्यापारः प्राधान्यविवक्षावशाद्वैचित्र्येण व्यवहार इति न कोऽपि दोष इत्युक्तं भवति । नन्वात्मतद्धर्मैः स्वरूपेन्द्रियस्याप्यभेदात्कथं सन्निकर्षरूपव्यापारसम्भव इत्यत आह ॥ **स्वरूपेन्द्रियस्यापीति ॥** विशेषेति । तस्याभेदेऽपि भेदकार्यकारित्वेन धर्मिग्राहकप्रमाणसिद्धत्वादिति भावः । पूर्वं प्रत्यक्षस्य सप्तविधत्वेन विभागः सूचितः । इदानीमपरमपि तद्विभागमाह ॥ **चतुर्विधमिति ।** तेषां विषयमाह ॥ **विषयस्त्विति ।** तत्र सर्वार्थविषयमीश्वरज्ञानमित्यादिना ग्रन्थेन ये ईश्वरादिज्ञानविषयाः प्रोक्तास्त एव तत्तत्प्रत्यक्षविषयत्वेनाभिमता इत्यर्थः ।

**आद.—** ॥ **अवान्तरप्राधान्यविवक्षयेति ।** मुख्यविशेष्यतया बोधतात्पर्येणेत्यर्थः । उक्तरीत्या प्रमासाधनत्वस्य प्रमाण्यास्यापि सन्निकर्षेऽपि सत्त्वेनोभयोः प्रमाणपदवाच्यत्वमस्तीति भावः ।

**श्रीनि.—** ॥ **द्विविधेन्द्रियात्मकमिति ।** स्वरूपबाह्यात्मकमित्यर्थः ।

**वि.—** ननु धर्मिण इन्द्रियस्यैव प्राधान्यात्स्वविषयसन्निकृष्टमिन्द्रियं प्रत्यक्षमित्येव वक्तव्यम् । कथं निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षमित्युक्तिरित्यत आह ॥ **तत्रेति ।** प्रत्यक्षरूपकरण इत्यर्थः । करणधर्मिणीन्द्रिये सत्यपि सन्निकर्षरूपावान्तरव्यापारात्मककरणरूपधर्मविलम्बेन कार्यविलम्बात् । धर्मस्याप्यवान्तरव्यापारस्य सन्निकर्षस्य केनचिद्रूपेण प्राधान्यात्तद्विवक्षयैवमुक्तिरिति भावः । ननु तर्हि कथं विष्णुतत्त्वनिर्णयेऽदुष्टमिन्द्रियं त्वक्षमिति ब्रह्मतर्कोक्तिरित्यत आह ॥ **क्वचित्त्विति ।**

नन्वस्त्ववान्तरव्यापारस्य प्राधान्यविवक्षया स्वस्वविषयप्रतियोगिकेन्द्रियसन्निकर्षः प्रत्यक्षमित्युक्तिः क्वचिद्धर्मिणः प्राधान्यविवक्षया स्वस्वविषयैः सन्निकर्ष इन्द्रियं प्रत्यक्षमित्युक्तिस्तथाऽपि सन्निकर्षत्वस्येन्द्रियेऽभावात् । इन्द्रियत्वस्य सन्निकर्षेऽभावात् । लक्षणद्वयं पस्परमव्याप्तमिति चेन्न । स्वस्वविषयेन्द्रियसन्निकर्षस्वस्वविषयसन्निकृष्टेन्द्रिययोरन्यतरत्वस्यैव सामान्यलक्षणत्वेनाभिप्रेतत्वात्तत्प्राधान्य विवक्षानुसारेणैवमुक्तिरिति नाव्याप्तिदोष इति । ननु स्वरूपेन्द्रियस्यात्मादिना विषयेणाभेदात्सन्निकर्षा भावेन कथं प्रत्यक्षत्वमित्यत आह ।। स्वरूपेन्द्रियस्यात्मादिना विषयेणाभेदात्सन्निकर्षाभावेन कथं प्रत्यक्षत्वमित्यत आह ।। **स्वरूपेन्द्रियस्यापीति ।** आत्मादिस्वरूपेन्द्रियस्यापि साक्षिणोऽप्यात्मधर्मैः स्वरूपसुखादिभिः सन्निकर्षोऽस्त्येवेत्यर्थः। अभिन्नेऽपि सन्निकर्षसद्भावे उपपत्तिः।। **विशेषशक्त्येति ।** अभेदेऽपि भेदकार्यकारिविशेषस्य सामर्थ्येनेत्यर्थः । भेदकार्यकारिविशेषस्य वस्तुसामर्थ्येनेति वा । प्रत्यक्षविभागमाह ।। **चतुर्विधमिति ।** महावैलक्षण्यद्योतनार्थोऽयं विभागः । प्राधान्यक्रमेणोद्दिशति ।। **ईश्वरप्रत्यक्षमिति ।। चतुर्विधमिति ।** प्रत्यक्षं पूर्वोक्तद्विविधेन्द्रियात्मकमिति न मन्तव्यमित्याह ।। **तत्रेति ।** चतुर्विधेषु प्रत्यक्षेष्वीश्वरप्रत्यक्षं लक्ष्मीप्रत्यक्षं चेति । आद्यं प्रत्यक्षद्वयं स्वरूपेन्द्रियात्मकमेव न तु प्राकृतेन्द्रियरूपमित्यर्थः । तर्हि योगिप्रत्यक्षमयोगिप्रत्यक्षं च किं प्राकृतेन्द्रियात्मकमेवेति जिज्ञासायामाह ।। **उत्तरं तु द्वयमिति ।** योगिप्रत्यक्षमयोगिप्रत्यक्षं चेत्युत्तरं पक्षद्वयं तु स्वरूपेन्द्रियप्राकृतेन्द्रियभेदेन द्विविधेन्द्रियरूपमित्यर्थः । चतुर्विधमपि प्रत्यक्षं पूर्वोक्तेन्द्रियविषयनियमवदेवेति भ्रमवारणायाह ।। **विषयस्त्विति ।** चतुर्विधस्यापि प्रत्यक्षस्य विषयस्तु तत्तज्ज्ञानवत्तस्य तस्य ज्ञानस्य विषयवत् । ईश्वरज्ञानस्य यावान्विषयस्तावानीश्वरप्रत्यक्षस्य विषय इत्यादिरूपेणेति यावदिति विवेक्तव्यो विलक्षणतया ज्ञातव्य इत्यर्थः । पूर्वमिन्द्रियाणां विषयनियमोक्तिरयोगीन्द्रियविवक्षयेत्यनुसन्धेयम् । अत एव प्रमाणलक्षणटीकायां तत्र योगिनां देशकालस्तु स्वभावव्यवहितार्थमपि विषयीकरोति । अयोगिनां तु यदा कालाद्यव्यवहितार्थमेवेत्युक्तम् ।

## बाह्येन्द्रियत्रैविध्यम्

**(२८) प्र.प.— बाह्येन्द्रियं त्रिविधम् । दैवमासुरं मध्यममिति । तत्र यथार्थज्ञानप्रचुरं दैवम् । अयथार्थज्ञानप्रचुरमासुरम् । समज्ञानसाधनं तु मध्यमम् । स्वरूपेन्द्रियमप्युत्तमानां विषयस्वरूपे प्रकारे च यथार्थमेव । अधममध्यमानां तु स्वरूपमात्रे यथार्थमेव । प्रकारे त्वयथार्थं मिश्रं चेति । इन्द्रियार्थयोस्तु सन्निकर्षोऽपरोक्षज्ञानहेतुः षोढा भिद्यत इत्येके । तद्यथा । संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणविशेष्यभावश्चेति । तत्र चक्षुःस्पर्शन-**

**योर्घटादिद्रव्यैर्मनसश्चात्मना संयोगः । तेषां स्वविषयगतगुणकर्मसामान्यैः संयुक्तसमावायः । तथा घ्राणरसनयोर्गन्धरसाभ्याम् । एतेषां स्वविषयगुणकर्मगतसामान्यैः संयुक्तसमवेतसमवायः । श्रोत्रस्य शब्देन समवायः । तद्गतसामान्यैः समवेतसमवायः । एतेषामेतत्पञ्चविधसम्बन्ध-सम्बद्धार्थस्थाभावसमवायाभ्यां पञ्चविधो विशेषणविशेष्यभाव इति । तदसत् । गुणादीनां गुण्यादिभिरभेदेन समवायाभावात् । आत्मनस्तद्धर्माणां च साक्षिविषयत्वेन मनोविषयत्वाभावात् । वर्णात्मकस्य शब्दस्य द्रव्यत्वेनाकाशविशेषगुणत्वाभावात् । अतः सर्वेन्द्रियाणां स्वस्वविषयैः स्वस्वविषयप्रतियोगिकाभावेन च साक्षादेव रश्मिद्वारा सन्निकर्षः ।**

**जना.—** ॥ **अयथार्थं मिश्रं चेति** । अधमानां स्वरूपेन्द्रियमयथार्थं मध्यमानां स्वरूपेन्द्रियं मिश्रमिति यथायोग्यं द्रष्टव्यम् ॥ **तथेति** । संयुक्तसमवाय इत्यर्थः ॥ **एतेषामिति** । चक्षुःस्पर्शन-मनोघ्राणरसनानामित्यर्थः । स्वविषयगतगुणकर्मसामान्यैरिति । गुणत्वरूपत्वकर्मत्वोत्क्षेपणत्वादि-सामान्यैरित्यर्थः ॥ **तद्गतसामान्यैरिति** । गत्वकत्वादिभिरित्यर्थः । **एतेषामिति** । षडिन्द्रियाणा-मित्यर्थः । एते सम्बन्धाः संयोगादयः । तैः सम्बन्धैः सम्बद्धार्था घटत्वरूपत्वशब्दत्वरूपाः । तेषु विद्यमानाभ्यामभावसमवायाभ्यामित्यर्थः । इदमुक्तं भवति । यदा चक्षुस्संयुक्ते भूतले घटाभावो गृह्यते तदा चक्षुर्घटाभावयोः संयुक्तविशेषणविशेष्यभावः सन्निकर्षः । यदा चक्षुस्संयुक्तघटसमवेतरूपे रसाभावो गृह्यते तदा रसाभावचक्षुषोः संयुक्तसमवेताविशेष्यभावः । रसत्वरहितं रूपत्वं रूपत्वे रसत्वं नास्तीत्यत्र संयुक्तसमवेतसमवेतविशेषणविशेष्यभावः । गकारे घत्वं नास्तीत्यत्र समवेत-विशेषणविशाष्यभावः । गत्वरहितं घत्वं धत्वे गत्वं नास्तीत्यत्र समवेतसमवेतविशेषणविशेष्यभाव इत्यभावे विशेषणविशेष्यभावपाञ्चविध्यम् । समवाये तु तन्तुषु पटसमवाय इत्यत्र संयुक्तविशेषण-विशेष्यभावः । पटे रूपसमवाय इति संयुक्तसमवेतविशेषणविशेष्यभावः । पटरूपे रूपत्वसमवाय इति संयुक्तसमवेतसमवेतविशेषणविशेष्यभावः । इहाकाशे शब्दसमवाय इति समवेतविशेषण-विशेष्यभावः । शब्दे शब्दत्वसमवाय इत्यत्र समवेतसमवेतविशेषणविशेष्यभाव इति पाञ्चविध्यं द्रष्टव्यमिति ॥ **वर्णात्मकस्येति** । न तु ध्वन्यात्मकशब्दस्य द्रव्यत्वमिति भावः ॥ **साक्षादेवेति** । न तु नैयायिकोक्तरीत्या संयुक्तसमवेतादिसम्बन्धान्तरघटित इत्यर्थः । ननु नयनोन्मीलनसमनन्तर-मनेकयोजनस्थितमार्ताण्डमण्डलमुपलभ्यते । तत्कथं नयनसूर्यमण्डलयोः साक्षादेव सन्निकर्षः । न हि मार्ताण्डमण्डलं चक्षुर्देशमायाति । न वा चक्षुर्मार्ताण्डमण्डलं यातीत्यत आह ॥ **रश्मिद्वारेति** । रश्मीनामतिलघुत्वेन शीघ्रं बुहदूरगामित्वं युक्तमेव । दृश्यते हि लाघवातिशयेन तेजसो वेगातिशयः । यदुदयाचलचूडावलम्बिन्येव मयूखमालिनि भवनोदरेष्वालोकः प्रसरीसरीतीति भावः ।

**राघ.**— ॥ **यथार्थज्ञानप्रचुरमिति ।** बाहुल्येन यथार्थज्ञानजनकमित्यर्थः । एवमग्रेऽपीत्यर्थः ॥ **समज्ञानेति ।** भ्रमाभ्रमज्ञानेत्यर्थः ॥ **स्वरूपेन्द्रियमपीति ।** न केवलं स्वरूपज्ञानमित्यपेरर्थः ॥ **प्रकार इति ।** सत्यत्वपारतन्त्र्यादितद्धर्म इत्यर्थः । यदत्रायथार्थज्ञानसाधनं तन्निर्दोषपदव्यावर्त्यमिति भावो ध्येयः । स्वमतं विवक्षुर्न्यायमतं तावदनूद्य निराह ॥ **इन्द्रियार्थयोरिति ॥ तद्यथेति ।** तत् षाड्विध्यं यथा स्पष्टं भवति तथोच्यत इत्यर्थः ॥ **तेषामिति ।** चक्षुस्त्वङ्मनसाम्यिर्थः ॥ **गन्धरसाभ्यामिति ।** संयुक्तसमवाय इति तथा शब्दार्थः । चक्षुस्त्वङ्मनोरसनघ्राणसंयुक्तेषु स्वस्वविषयेषु गुणकर्मसामान्यगन्धरसानां समवायादिति भावः ॥ **एतेषामिति ।** उक्तचक्षुरादिपञ्चेन्द्रियाणां गुणकर्मगतैः सामान्यैरिति चक्षुरादीन्द्रियसंयुक्तेषु घटादिविषयेषु समवेतानि गुणकर्माणि तत्र रूपत्वोत्क्षेपणत्वादिसामान्यानां समवायादिति भावः ॥ **श्रोत्रस्येति ।** तस्याकाशात्मकत्वाद्वर्णध्वन्यात्मकशब्दस्य च तद्गुणत्वाद्गुणगुणिनोश्च समवायादिति भावः ॥ **तद्गतेति ।** शब्दकखादिगतकत्वखत्वादिसामान्यैरित्यर्थः । श्रोत्रसमवेते शब्दे तेषां समवायादिति भावः ॥ **एतेषामिति ।** चक्षुस्त्वङ्मनोघ्राणरसनश्रोत्राणां संयोगादिभेदेन पञ्चविधविषयसम्बद्धा येऽर्था द्रव्यतद्गतगुणकर्मसामान्यगुणकर्मगतसामान्यशब्दतद्गतसामान्यरूपाः पञ्चविधा अर्थाः । तत्त्रयाभावसमवायौ ताभ्यां सह पञ्चविधो विशेषणविशेष्यभावश्चेत्यर्थः । चक्षुःसंयुक्ते घटे रूपसमवाय इति । घटो नास्तीति च समवायाभावौ संयुक्तविशेषणविशेष्यभावेन । तथा घटरूपे रूपत्वसमवाय इति । घटो नास्तीति च समवायाभावौ संयुक्तविशेषणविशेष्यभावेन । तथा घटरूपे रूपत्वसमवाय इति रसत्वाभाव इति संयुक्तसमवेतविशेष्यविशेषणभावेन रूपत्वे रूपसमवाये रसत्वाभाव इति । संयुक्तसमवेतविशेषणविशेष्यभावेन सङ्गृह्यते । सत्यन्तानां विशेषणत्वात् । प्रथमान्तानां विशेष्यत्वात् । एवं ककारे कत्वसमवाय इति गत्वाभाव इति समवेतविशेषणविशषष्यभावेन शक्यत इति संयक्तविशेषणविशेष्यभावादिभेदेन पञ्चविध इत्यर्थः । तर्हि कः सन्निकर्षोऽर्थेन्द्रियाणामित्यत आह ॥ **अत इति ।** परोक्तस्यायुक्तत्वादित्यर्थः । स्वस्वविषयप्रतियोगिकाभावेनेतीन्द्रिययोग्याभावेनेत्यस्योपलक्षणमेतत् । समवायसम्बन्धाव्यवधानेनेत्यर्थः । सर्वेन्द्रियाणां तैजसत्वाभिप्रायेणोक्तम् ॥ **रश्मिद्वारेति ।** यद्वा चक्षुरभिप्रायेण रश्मिद्वारेति । तदितरेन्द्रियाभिप्रायेण साक्षादेवेति ।

**विज.**— ॥ **यथार्थज्ञानप्रचुरमिति ।** यथार्थसाक्षात्कारप्रचुरमित्यर्थः । एवमग्रेऽपि ॥ समज्ञानसाधनमिति । परस्परमधिकाधिकसञ्चारहितयाथार्थायथार्थसाक्षात्कारसाधनमित्यर्थः स्वरूपमात्रे यथार्थमेवेत्येतत्तूभयसाधारणमू । तेषामेव प्रत्येकमसाधारणरूपमाह ॥ **प्रकारे त्विति ।** अयथार्थमयथार्थमेवेत्यर्थः । स्वाभिमत सन्निकर्षस्य प्रत्यक्षत्वव्यवस्थापनाय पराभिमतं सन्निकर्षं दूषयितुमुप-

न्यस्यति ॥ **इन्द्रियार्थयोस्त्विति** । क्रमेण तेषां विषयं दर्शयति ॥ **तत्रेत्यादिना ॥ एतेषामिति** । उक्तसन्निकर्षविषयाणां पञ्चविधविशेष्यभाव इत्यर्थः । सन्निकर्षस्य प्रतियोगिनि निरूप्यत्वात्प्रतियोगिनं दर्शयति ॥ **एतत्पञ्चविधसम्बन्धसम्बद्धार्थस्याभावसमवायाभ्यामिति ॥ गुणादीनामिति** । तथा च समवायघटिताः संयुक्तसमवायादयोऽसिद्धा इत्यर्थः । अन्यत्र संयोगस्य प्रत्यासत्तित्वेऽपि नात्मनि तस्य प्रत्यासत्तित्वमित्याह ॥ **आत्मन इति ॥ आकाशगुणत्वाभावादिति** । इदं च वस्तुगतिमनुरुध्योक्तम् । तस्याकाशगुणत्वेऽपि गुणगुणिनोरभेदेन साक्षादेव रूपस्य चक्षुषेव रश्मिद्वारा सम्बन्धस्य प्रकृते वक्तुं शक्यत्वेन क्षत्यभावादिति । कस्तर्हि सन्निकर्ष इत्यपेक्षायामाह ॥ **अतः सर्वेन्द्रियाणामिति ॥ रश्मिद्वारेति** । तत्तदिन्द्रियैकदेशद्वारेत्यर्थः ।

**वेदे.—** प्रत्यक्षलक्षणे यन्निर्दोषत्वमिन्द्रियविशेषणमुक्तं तत्स्वरूपेन्द्रिये स्वरूपकथनमात्रमितरत्र विशेषणमिति भावेन प्रकारान्तरेणेन्द्रियविभागमाह ॥ **बाह्येन्द्रियमिति** । यथार्थज्ञानप्रचुरं यथार्थज्ञानसाक्षात्कारप्रचुरमित्यर्थः । एवमग्रेऽपि ॥ **विषयस्वरूप इति** । धर्मिणीत्यर्थः । अत्र यथार्थज्ञानसाधनं स्वरूपं बाह्यं वा । यावदिन्द्रियं तावन्निर्दोषविशेषविशेषणेन व्यावर्त्यमिति भावः । एवं स्वमते प्रत्यक्षं निरूप्येन्द्रियार्थयोः सर्वत्र साक्षादेव सन्निकर्षो न तु क्वचित्साक्षात्क्वचित्परम्परयेति व्यवस्थापयितुं तावत्परमतमनूद्य दूषयति ॥ **इन्द्रियार्थयोस्त्विति** । अत्र समवायस्याजन्यत्वेऽपि संयोगस्य जन्यत्वेन तद्घटितसंयुक्तसमवायादेर्जन्यत्वोपपत्तेरिन्द्रियव्यापारतोपपन्नेति । ध्येयम् । एवं श्रोत्रेण शब्दग्रहे केवलसमवायस्याव्यापारत्वेऽपि शब्दसमवायस्याजन्यत्वसम्भवेन व्यापारत्वं युक्तमेवेति द्रष्टव्यम् । ननु विशेषणविशेष्यभावस्य भूतलघटाभावादिमात्रवृत्तित्वेनेन्द्रियावृत्तित्वात्कथमिन्द्रियसन्निकर्षता तस्येत्यत आह ॥ **एतेषामिति** । पूर्वोक्तेन्द्रियाणामित्यर्थः । एते संयोगादयः पञ्च सम्बन्धास्तैः सम्बन्धा येऽर्थास्तत्स्थौ विद्यमानौ यावभावसमवायौ ताभ्यामित्यर्थः । तथा च न विशेषणविशेष्यभावमात्रं सन्निकर्षो येन तस्येन्द्रियावृत्तित्वेन तत्सन्निकर्षतानुपपत्तिः । किन्त्विन्द्रियसंयुक्तविशेषणतादिरेवेति भावः । पञ्चविध इत्युपलक्षणम् । अन्येऽपि विशेषणविशेष्यभावा इन्द्रियाभावसन्निकर्षभूताः सन्तीति ज्ञातव्यम् । तथा हि । शब्दाभावग्रहे केवलविशेषणविशेष्यभावः शब्दाभावस्याकाशात्मकश्रोत्रविशेषणत्वात् । भूतलवृत्तिघटाभावग्रहे संयुक्तविशेषणविशेष्यताऽपरा । भूतलवृत्तिघटाभावग्रहे संयुक्तसमवेतसमवेतविशेषणविशेष्यतेत्याद्या विशेषणविशेष्यभावा अभावग्राहका अनेने द्रष्टव्याः । समवायग्रहार्थं तु विशेषणविशेष्यभावचतुष्टयमेव । तन्तुषु पटसमवायग्रहे संयुक्तविशेषणता प्रथमा । द्वितीया तु तन्तुरूपरूपत्वसमवायग्रहे केवलविशेषणता । तृतीया शब्द समवायग्रहे केवलविशेषणता । तुरीया शब्दत्वसमवायग्रहे समवेतविशेषणतेति ॥ **गुणादीनामिति** ।

समवायस्य भेदनियतत्वादित्यर्थः । तथा च समवायघटिताः संयुक्तसमवायादयः सन्निकर्षा न युक्ता इति भावः । गुणगुण्यादीनामभेद एव कुत इति चेत् । अस्ति तावद्गुण्यादिप्रतीतेः कुण्डबदरादि-प्रतीतितो वैलक्षण्यं साक्षिसिद्धम् । न चाभेदविषयत्वमन्तरेणान्यद्व्यावर्तकं तत्रास्ति । न वाऽयुत-सिद्धविषयकत्वेनान्यथासिद्धिः । अभेदातिरिक्तस्यायुतसिद्धत्वस्यानिर्वचनात् । निर्वचने वा कालान्तर-भाविनः संविभागादेः प्रतीत्यनुपयोगात् । अभेदेऽपि गुणगुणिभावोऽपर्यायशब्दवाच्यादिकं विशेष-बलादुपपद्यते । विशेषश्च धर्मिग्राहकप्रमाणेन भेदकार्यकारित्वेनैव सिद्ध इत्यादिकं शास्त्रे समर्थितं द्रष्टव्यम् । विस्तरभयान्नेह प्रपञ्च्यते । संयोगस्यान्यत्र प्रत्यासत्तित्वेऽपि नात्मनि तस्य तथात्वमित्याह ॥ **आत्मन इति ।** ततश्च यदुक्तं मनसश्चात्मनेत्यादि तद्गतमिति भावः । आत्मतद्धर्मज्ञानस्य मानसत्वे च तस्या बुभुत्सितग्राह्यत्वस्य च बुभत्साया अपि तज्ज्ञानाधीनत्वेनानवस्थापत्त्योगात् । साक्षिणश्च स्वप्रकाशत्वेन सुषुप्त्यादौ मनस उपरमेऽपि साक्षिरूपज्ञानाङ्गीकारेण चास्मन्मते न काचिदनुपपत्ति-रिति ध्येयम् ॥ **वर्णात्मकस्येति ।** ध्वन्यात्मकस्य च वायुगुणत्वाङ्गीकारादाकाशगुणत्वाङ्गीकारेऽपि न समवायः सन्निकर्षो भवेदिति भावः । द्रव्यत्वेनेति वस्तुगतिमनुरुध्योक्तम् । वस्तुतस्तु गुणत्वेऽपि न समवायः सन्निकर्षोऽभेदादिति बोध्यम् । न च सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वेन वर्णानां गुणत्वसिद्धेः कथं द्रव्यत्वमिति वाच्यम् । अस्मन्मते तमसि व्यभिचारात् । परमते प्रदीप-प्रभायां व्यभिचारात् । एवं परमतं दूषयित्वेदानीं स्वमते साक्षादेव सन्निकर्ष इत्याह ॥ **अत इति ।** परमतस्यायुक्तत्वादित्यर्थः । रश्मिद्वारेतीन्द्रियाणां तैजसत्वादुक्तम् । तथा च वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दः शब्दान्तरमारभते । यस्तु कर्णशष्कुल्यवच्छिन्नशब्दः स एव श्रोत्रेण गृह्यत इति यन्मतं तदसमञ्जसमित्युक्तं भवति । श्रोत्रस्यैव रश्मिद्वारा गमनोपपत्तेः । विवृतं चैतदन्यत्र तत्रैवानुसन्धेयम् । रश्मिद्वारेत्यस्य तत्तदिन्द्रियैकदेशद्वारेत्यर्थ इति केचित् । अन्ये तु चक्षुरभि-प्रायेणेदमुक्तमित्याहुः ।

**अभि.—** प्रत्यक्षलक्षणे लक्ष्यालक्ष्यविवेकाय बहिरिन्द्रियविभागमाह ॥ **बाह्येन्द्रियमिति ॥ यथार्थज्ञानप्रचुरमिति ।** यथार्थज्ञानजननस्वभावं दैवमित्यर्थः ॥ **समानसाधनमिति ।** उभय-स्वभावत्वान्नृसिंहाकारं प्रमाणमप्रमाणमिन्द्रियमिति बोध्यम् ॥ **प्रकारे त्वयथार्थं मिश्रं चेति ।** नन्वेवं तर्हि साक्षिणः प्रामाण्यनियमाभावात्साक्षिगृहीते ज्ञानप्रामाण्ये पुनः सन्देहापत्त्या निःशङ्कप्रवृत्तिर्न स्यादिति चेत् । सत्यम् । अप्रमाणमेव तमोयोग्यानां साक्षी किं नाम तमः पातानन्तरमेव न तु संसारदशायाम् । एवं मध्यमानां साक्षी लिङ्गभङ्गानन्तरमेवायथार्थज्ञानं व्यनक्ति न तु संसारदशायाम् । इदानीं जगत्प्रवृत्तिनिवृत्त्यनुकूले ईश्वरसङ्कल्पानुरोधेन प्रमाणमेव साक्षी यथार्थत्वेन मनोवृत्तिरूपं

विज्ञानं जनयति । प्रमाणानां प्रामाण्यमिवाप्रमाणानां प्रामाण्यमपि परत इत्यङ्गीकारात् । एवं च साक्षीगृहीतेऽर्थे संसारदशायां विसंवाददर्शनाभावेन प्रामाण्यनिश्चये पुनः प्रामाण्यसन्देहाभावेन निःशङ्कप्रवृत्तिरुपपन्नैवेति । भूतलादिनिष्ठाभावसमवायाभ्यामिन्द्रियस्य न विशेषणविशेष्यभावसन्निकर्ष इन्द्रियस्याभावं प्रति विशेषणत्वस्य विशेष्यत्वस्य वाऽभावादित्यत आह ॥ **एतेषामिति ।** चक्षुरादीन्द्रियाणामेतत्पञ्चविधसम्बद्धार्थस्वभावसमवायाभ्यां पञ्चविधः सम्बन्ध इत्यर्थः । तथा हि । चक्षुषा भूतलवृत्त्यभावभूतलभूतलत्वसमवाययोर्ग्रहे संयुक्तविशेषणविशेष्यभावः । घटरूपवृत्त्यभाव-रूपत्वसमवाययोर्ग्रहे संयुक्तसमवेतसमवेतविशेषणविशेष्यभावः । श्रोत्रेण शब्दवृत्तिशब्दत्वाभावयोर्ग्रहे समवेतविशेषणविशेष्यभावः । शब्दवृत्तिशब्दवृत्तित्वसमवायाभावग्रहे समवेतसमवेतविशेषणविशेष्य-भाव इति । नन्वस्तु येषां गुणानां गुणिनां भेदस्तत्र समवायाभावः । यस्य वर्णात्मकशब्दरूपगुणस्य गुणिनाऽत्यन्तभेदः । तत्र समवायसम्बन्धोऽभ्युपेयः । ततश्च समवायनिराकरणमयुक्तमित्यत आह ॥ **वर्णात्मकस्येति ।** यद्यपि द्रव्यत्वं प्रतिवादिनोऽसिद्धम् । तथाऽपि तत्साधयामीति भावेन तथोपन्यासः ॥ **स्वविषयप्रतियोगिकाभावेन चेति ।** यद्यप्यभावो विषय एव तथाऽपि कुरुपाण्डवन्यायेनेयमुक्ति-रित्यदोषः ॥ **साक्षादेवेति ।** इन्द्रियस्य घटादिनेव रूपादिनाऽपि साक्षादेव सन्निकर्षः । न तु घटादिव्यवधानेनेत्यर्थः । ननु विप्रकृष्टत्वात्कथं साक्षात्सन्निकर्ष इत्यत अत आह ॥ **रश्मिद्वारेति ।** न च तावता साक्षात्त्वभङ्गः । साक्षाच्छब्देन घटादिव्यवधानाभावस्य विवक्षितत्वात् ।

**आद.—** ॥ **समवायाभावादिति ।** यद्यपि गुणगुण्यादीनां समवायाभावेऽपि सम्बन्धान्तर-मस्त्येव तथापि तद्घटितस्य सम्बन्धस्य न सन्निकर्षत्वम् । साक्षात्सम्बन्धस्यैव सम्भवे परम्परा-सम्बन्धस्य कल्पने प्रमाणाभावादिति भावः ॥ **साक्षादेवेति ।** द्वयोरेव संयोग इति नियमे प्रमाणा-भावादिति भावः । चक्षुषो दूरस्थविषयैः कथं सम्बन्धः । न च बहिर्गच्छतीति वाच्यम् । अणो-र्युगपदनेकार्थसम्बन्धायोगात् । व्याप्तत्वे चाल्पस्थाने स्थित्ययोगादित्यत उक्तं रश्मिद्वारेति । प्रभादीनामिवेन्द्रियरश्मीनामपि सङ्कोचविकाससम्भवादित्याशयः ॥ छ ॥ छ ॥

**॥ इति श्रीमट्टीकाकृत्पादविरचितप्रमाणपद्धतिभावप्रकाशके श्रीमद्व्यासपुरीवासिवासुदेवाचार्यशिष्यश्रीनिवासाचार्यशिष्यनरसिंहाचार्यविरचितादर्शनामके ग्रन्थे प्रत्यक्षपरिच्छेदः समाप्तः ॥**

**श्रीनि.—** ॥ **दैवमिति ।** मुक्तियोग्यतमोयोग्यनित्यसंसारिसम्बन्धीत्यर्थः॥ **यथार्थज्ञानप्रचुरमिति ।** ऋजुज्ञाने स्वविरोध्यल्पत्वाभावेऽपि रवेः प्रचुरप्रकाशवद्यथार्थप्राचुर्यं द्रष्टव्यम् ॥ **समज्ञानसाधनमिति ।**

कालादिभेदेनेदं द्रष्टव्यम् । उक्तं च सुधायाम् । मध्यमजीवसम्बन्धिचैतन्ये प्राकृते चाक्षे निर्दोषत्वं सदोषत्वं चोभयं कालादिभेदेनेप्यत इति ।। **प्रकारे त्विति ।** सत्यत्वभगवदधीनत्वादौ तज्ज्ञानप्रामाण्या प्रामाण्यादावित्यर्थः । तदयथार्थज्ञानस्यैव मोक्षविरोधित्वात् । तेन तेषां दुःखज्ञानं सुखत्वप्रकारकं स्यात् । घटादिज्ञानप्रामाण्यज्ञानमप्ययथार्थमेव स्यादिति शङ्काऽनवकाशः ।। **साक्षादेवेति ।** इन्द्रियस्य घटादेरिव रूपादिभिरपि साक्षादेव सन्निकर्षः । न तु घटाव्यवधानेनेत्यर्थः । विप्रकृष्टार्थैः कथं साक्षात्सन्निकर्ष इत्यत उक्तम् ।। **रश्मिद्वारेति ।** साक्षादिति तु घटादिव्यवधानमेव व्यावर्तितमिति भावः।

**वि.—** प्राकृतेन्द्रियं सर्वेषामेकरूपमेव न किन्तु तद्विशेषोऽस्तीति ज्ञापनाय प्रकारान्तरेण तद्विभागमाह ।। **बाह्येन्द्रियं त्रिविधमिति ।** आत्मातिरिक्तं नेन्द्रियमित्यर्थः । दैवं मुक्तियोग्यजीवसम्बन्धिबाह्येन्द्रियमित्यर्थः । आसुरं तमोयोग्यजीवसम्बन्धिबाह्येन्द्रियमित्यर्थः । मध्यमं मध्यमजीवसम्बन्धिबाह्येन्द्रियमित्यर्थः । बाह्येन्द्रियेषूत्तमत्वाद्दैवोन्द्रियस्य प्रथममुद्देशः । तत्रापकृष्टेषूत्तमत्वादासुरेन्द्रियत्त्यनन्तररमुद्देशोऽवविष्टस्यान्ते निर्देशः ।। **तत्रेति ।** तेषु देवासुरमध्यमबाह्येन्द्रियेषु यथार्थज्ञानं प्रचुरं बहु यस्मिंस्तथा । साधनत्वसम्बन्धेन बहुयथार्थज्ञानवदित्यर्थप्रचुरयथार्थज्ञानसाधनमिन्द्रियं दैवोन्द्रियमिति हृदयम् । मुक्त्ययोग्यबाह्येन्द्रियेष्वतिव्याप्तिवारणाय प्रचुरपदम् । यद्यपीदमृजुबाह्येन्द्रियेषु नास्त्येव ऋजूनामयथार्थज्ञानाभावात् । तद्बाह्येन्द्रियाणां स्वजन्यायथार्थज्ञानापेक्षया प्रचुरयथार्थज्ञानसाधनत्वायोगात् । तथाऽप्येतेषु जनेषु धनप्रचुरो देवदत्त इतिवद्व्यावृत्तयथार्थज्ञानप्रचुरं दैवमित्यस्यायथार्थवर्णनसम्भवात् । तेषु द्विविधेन्द्रियापेक्षया बहुयथार्थज्ञानसाधनत्वस्य ऋजुबाह्येन्द्रियेऽपि सत्त्वान्नातिव्याप्तिः । केचित्तु सुधायामव्याप्तेरदोषस्योक्तत्वादव्याप्तेरदोषत्वपक्षे इयमुक्तिरित्याहुः ।। **अयथार्थज्ञान प्रचुरमिति ।** अयथार्थज्ञानं प्रचुरं यस्मिंस्तत्तथा । साधनसम्बन्धेन प्रचुरायथार्थज्ञानवदासुरमध्यमजीवसम्बन्धि बाह्येन्द्रियमित्यर्थः ।। **समज्ञानसाधनमिति ।** समार्थो यथार्थज्ञानायथार्थज्ञानयोः साधनत्वं मध्यमजीवसम्बन्धि बाह्येन्द्रियमित्यर्थः । उत्तमाधममध्यमजीवसम्बन्धि बाह्येन्द्रियवत्तत्स्वरूपेन्द्रियमपीति भ्रान्तिवारणायाह ।। **स्वरूपेन्द्रियमपीति ।** यथोत्तमानां स्वरूपज्ञानं तथोत्तमानां मुक्तियोग्यानां स्वरूपेन्द्रियमपीत्यर्थः । विषयस्वरूपे तस्य विषया आत्मरूपतद्धर्मा विषयाणां स्वरूपे प्रकारे च तद्धर्मतया प्रतीयमाना पारतन्त्र्ये पराधीनस्वातन्त्र्यादौ प्रकारे च यथार्थं बाह्येन्द्रियवत्कुत्रचिद्विषयेऽयथार्थमित्यर्थः । उत्तमानां साक्षिविषयात्मादिधर्मतया भ्रान्तिवारणायाह ।। **स्वरूपेन्द्रियमपीति ।** यथोत्तमानां स्वरूपज्ञानं तथोत्तमानां मुक्तियोग्यानां स्वरूपेन्द्रियमपीत्यर्थः । विषयस्वरूपे तस्य विषया आत्मरूपतद्धर्मा विषयाणां स्वरूपे प्रकारे च तद्धर्मतया प्रतीयमानपारतन्त्र्ये पराधीनस्वातन्त्र्यादौ प्रकारे च यथार्थं बाह्येन्द्रियवत्कुत्रचिद्विषयेऽयथार्थमित्यर्थः । उत्तमानां

साक्षिविषयात्मादिधर्मतया प्रतीयमानाः स्वातन्त्र्यादेः प्रकारा मनोविषय एवेत्युत्तमानां स्वरूपेन्द्रिय-नियमनं यथार्थमिति भावः । तर्ह्यधममध्यमानां स्वरूपेन्द्रियं विषयस्वरूपप्रकारेऽप्ययथार्थमेव किमिति जिज्ञासायामाह ॥ **अधममध्यमनां त्विति** । स्वरूपेन्द्रियमित्यनुवर्तते । अधममध्यमानां तु तमोयोग्यनित्यसंसारिणां तु स्वरूपेन्द्रियं स्वरूपमात्रे पूर्वोक्तसाक्षिविषयात्मसुखदुःखादिस्वरूपमात्रं यथार्थमेव नायथार्थमित्यर्थः । मात्रपदव्यावर्त्यमाह ॥ **प्रकारेत्विति** । तद्धर्मतया प्रतीयमानस्वातन्त्र्यादि प्रकारे त्वयथार्थमित्यर्थः । आत्मसुखदुःखादिरूपसाक्षिविषयधर्मतया प्रतीयमानः स्वातन्त्र्यादि-प्रकारस्तेषां स्वरूपेन्द्रियविषय इति भावः । इन्द्रियाणामर्थसन्निकर्षः साक्षादेवेति वक्तुं समयान्तरोक्त सन्निकर्षाननूद्य दूषयति ॥ **इन्द्रियार्थयोस्त्वित्यादिना** । अपरोक्षज्ञानहेतुरिन्द्रियार्थयोः सन्निकर्ष-स्त्वित्यन्वयः । आचक्षत इति शेषः ॥ **घटादिद्रव्यैरिति** । आदिपदेन पटादयो गृह्यन्ते । यद्यपि घटादिरित्येवालम् । तथाऽप्यादिपदेन पटादिद्रव्यस्यैव सङ्ग्रहो न तु घटादिगतगुणकर्मगतसामान्या-नामिति ज्ञापयितुं द्रव्यपदं तेषामिति । चक्षुःस्पार्शनमनसामित्यर्थः । विषयपदं तद्विषयद्रव्यपरम् । तेन तद्विषयाणां गुणकर्मगतसामान्यानामसङ्ग्रह इति बोध्यम् ॥ **गन्धरसाभ्यामिति** । संयुक्तसमवाय-मिनुवर्तते ॥ **एतेषामिति** । चक्षुस्त्वङ्मनोघ्राणरसनानां स्वविषयेषु रूपस्पर्शज्ञानगन्धरसादिगुणेषु कर्मसु च गते सामान्य इत्यर्थः । तदेतत्पञ्चविधसम्बद्धार्थस्थाभावसमवायाभ्यामिति तेषु गतैः संयोगादिभिः पञ्चविधैः सम्बन्धैः सम्बन्धेषु युक्तेषु संयुक्तसंयुक्तसमवेतसंयुक्तसंयुक्तसमवेतसमवेत-समवेतेष्वर्थेषु घटतद्रूपत्वशब्दशब्दत्वादिरूपविषयेषु स्थिताभ्यामभावसमवायाभ्यां संयुक्तविशेषण-विशेष्यभाव इत्येवं प्रकारेण पञ्चविधो विशेषणविशेष्यभाव इत्यर्थः ॥ **गुणादीनामिति** । प्रथमादिपदेन क्रियासामान्ययोर्ग्रहणम् । द्वितीयादिपदेन क्रियातद्व्यक्त्योर्ग्रहणम् ॥ **अभेदेन समवायाभावादिति** । समवायस्य भिन्नोभयाश्रितत्वान्नाभेदे समवायः सम्भवति । तथा च संयुक्तसमवायादिसमवायघटितो न सन्निकर्ष इति बोध्यम् ॥ **तद्धर्माणां चेति** । आत्मधर्माणां जातीनां योग्यगुणानां चेत्यर्थः । मनोविषयत्वाभावादात्ममनसोर्न संयोगः सन्निकर्षस्तद्धर्मैश्च न संयुक्तसमवायः सन्निकर्ष इति भावः ॥ **आकाशविशेगुणत्वाभावादिति** । विशेषपदं स्वरूपकथनपरम् । शब्दस्य गुणत्वाभावा-दाकाशात्मकस्य श्रोत्रस्य वर्णात्मकशब्देन समवायाभावान्न समवायसन्निकर्षः । शब्दत्वादिना च समवायघटितः सन्निकर्ष इति ज्ञातव्यम् । परमतदूषणमुपसंहरन्स्वसिद्धान्तमाह ॥ **अत इति** । संयुक्त समवायादेरभावेनासन्निकर्षत्वादित्यर्थः । विषयाणां दूरस्थत्वादिन्द्रियाणां कथं तैः साक्षात्सन्निकर्ष इत्यत उक्तम् ॥ **रश्मिद्वारेति** ॥ रश्मिवर्तिनामिन्द्रियाणामत्यन्ताभेदात्साक्षात्सन्निकर्षो युक्त इति भावः ।

# निर्विकल्पकसविकल्पकस्वरूपविचारः

**(२९) प्र.प.— निर्विकल्पकसविकल्पकभेदेन च द्विविधं प्रत्यक्षमित्याचक्षते । तत्र वस्तुस्वरूपमात्रावभासकं निर्विकल्पकम् । विशिष्टकारगोचरं सविकल्पकम् । तदष्टविधम् । तत्र द्रव्यविकल्पो यथा दण्डीति । गुणविकल्पो यथा शुक्ल इति । क्रियाविकल्पो यथा गच्छतीति । जातिविकल्पो यथा गौरिति । विशेषविकल्पो यथा विशिष्टः परमाणुरिति । समवायविकल्पो यथा पटसमवायवन्तस्तन्तव इति । नामविकल्पो यथा देवदत्त इति । अभावविकल्पो यथा घटाभावपद्भूतलमिति । एतदप्यसत् । विशेषसमवाययोरप्रामाणिकत्वात् । नाम्नः पश्चात्स्मरणेनाभावस्य च प्रतियोगिस्मरणाधीनज्ञानत्वेन तद्विकल्पस्य प्रथमाक्षिसन्निकर्षानन्तरमेवोत्पत्त्यभावेऽपि द्रव्यादिविकल्पानां प्रथममेवोत्पत्तौ बाधकाभावेन निर्विकल्पकानुपपत्तेः ।**

**जना.—** जरन्नैयायिकमतमाह ॥ **निर्विकल्पकेत्यादिना ॥ एतदपीति** । प्रत्यक्षप्रमाद्वैविध्यं सविकल्पकाष्टविध्यं चेत्यर्थः ॥ **नाम्नः पश्चादिति** । धर्मिज्ञानादिति शेषः । विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वनियमे खलु विशेषणज्ञानरूपं निर्विकल्पकमङ्गीकार्यमिति नैयायिकादयः । विशिष्टज्ञानापरपर्याये सविकल्पके विशेषणज्ञानात्मकनिर्विकल्पकं न हेतुः । सविकल्पकाष्टके द्वयोरप्रामाणिकत्वेन निरासादितरेषु षट्सु निर्विकल्पकं हेतुरिति वाच्यम् । तदयुक्तम् । युगपद्विशेषणविशेष्येन्द्रियसन्निकर्षेणैव सविकल्पकोत्पत्तेरित्याशयेनाह ॥ **द्रव्यादिविकल्पानामिति** । ननु सर्वस्यापि सविकल्पस्य प्रथमाक्षिसन्निकर्षादेवोत्पत्तिः किमिति नोच्यत इत्यत आह ॥ **नाम्न इत्यादिना** । ननु नामस्मरणहेतुधर्मिज्ञानमेव निर्विकल्पकमिति चेन्न । तस्य सम्बन्धितावच्छेदकप्रकारकत्वावश्यंभावेन सविकल्पकत्वनियमात् । अन्यथा पशुत्वप्रकारकहस्तिज्ञानादपि हस्तिपस्मणापत्तिरित्याचार्याशयात् ।

**राघ.—** एवं सन्निकर्षविषये वादिविवादं निरस्य तज्जन्यज्ञानेऽपि तन्निरसितुमाह ॥ **निर्विकल्पकेति ॥ प्रत्यक्षमिति** । ज्ञानमित्यर्थः ॥ **आचक्षत इति** । तार्किकाः । तत्र तयोर्मध्ये । वस्तुमात्रेति । गुणगुण्यादिसम्बन्धमगृहीत्वा द्रव्यस्वरूपं गुणकर्मादि स्वरूपमात्रं वा गृह्णाति । यज्ज्ञानं तदित्यर्थः । विशिष्टाकारेति । सम्बन्धमपि गृह्णदित्यर्थः ॥ **अप्रामणिकत्वादिति** । विशेषविकल्पः समवायविकल्पश्चेति द्वावयुक्तावित्यर्थः । अन्ये तु षडपि युक्ताश्चेदपि निर्विकल्पकं नोपेयमिति भावेनाह ॥ **नाम्न इति** । द्रव्यादिविकल्पानां दण्डी शुक्ल इत्यादीनां प्रथममेवेन्द्रियसन्निकर्षोत्तरकालमेव । विशेषणीभूतदण्डादिज्ञानं विनैवेति यावत् । ननु नामविकल्पे पिण्डेन्द्रियसंयोगानन्तरं देवदत्त इति वर्णमाला-

रूपनाम्नो गुणकर्मारिवेन्द्रियसंयुक्तार्थनिष्ठत्वाभावेन विशेषणीभूतनाम्नः पुरोवर्तिनि विशेषणरूपेण सम्बद्धतया भानार्थं तदुपनायकस्मरणमपेक्षितम् । तस्मिन्सति पश्चादेव नामविशिष्टनामिप्रत्यक्षेण देवदत्त इति भाव्यम् । तथा घटाभाववद्भूतलमित्यत्राभावस्य तत्र ससम्बन्धिकत्वेन सम्बन्धिनः प्रतियोगिभूतस्य घटस्य स्मृतिं विना तन्निरूपिताभावविशेषणज्ञानायोगेन तत्र स्मरणमपेक्षितमिति कथं प्रथममेव तयोर्विकल्पयोरुत्पत्तिरित्यत आह ॥ **नाम्नः पश्चादिति ।** पिण्डेन्द्रियसंयोगानन्तरमित्यर्थः । तदर्थमपि न निर्विकल्पकापेक्षा सविकल्पकस्मरणेनैव तयोर्विकल्पयोरुपपत्तेरिति भावः ॥

**विज.— स्वरूपमात्रावभासकमिति ।** वैशिष्ट्यानवगाहि ज्ञानमित्यर्थः ॥ **विशिष्टाकारगोचरमिति ।** वैशिष्ट्यावगाहीत्यर्थः ॥ **अप्रामाणिकत्वादिति ।** तथा चाष्टविधत्वमनुपपन्नमित्यर्थः ॥ **बाधकाभावेनेति ।** विशेषणविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहाभ्यामेव विशिष्टप्रत्यक्षोपपत्तौ विशेषज्ञानस्य तत्र हेतुत्वाभावादिति भावः ।

**वेदे.—** ॥ **अप्रमाणिकत्वादिति ।** तथा चाष्टविधत्वमनुपपन्नमिति भावः । ननु समानगुणकर्मजातिमत्सु पृथिवीत्वाद्यवान्तरजातिविरहितेषु परमाणुषु परस्परं व्यावृत्तिबुद्धिर्योगिनामुदेति । सा च न तेषु व्यावर्तकधर्माभावे भवितुमर्हति । अतस्तेषु व्यावृत्तेर्बुध्द्यन्यथाऽनुपपत्त्या व्यावर्तकधर्माः स्वीकार्यास्त एव विशेषनामान इति कथं विशेषोऽप्रामाणिक इति चेन्मैवम् । विशेषेष्विव परमाणुष्वपि स्वरूपेणैवासङ्कीर्णेन व्यावृत्तिबुध्द्युपपत्तेः । अन्यथा विशेषेष्वपि विशेषन्तरकल्पनापत्त्याऽनवस्थापत्तेः। न चैवं घटादेरपि स्वव्यावृत्तिबुद्धिहेतुतोपपत्तौ रूपादिधर्माणामप्युच्छेदः स्यादिति वाच्यम् । तेषामनुभवसिद्धत्वेनापलापासम्भवात् । एवं समवायोऽप्रामाणिक एव । इमौ संयुक्तावितिवदिमौ समवेताविति प्रत्यक्षेणानुभवात् । समवायं जानामीत्यनुव्यसायाभावाच्च । नापि गुणक्रियाजातिविशिष्टा बुद्धयः सम्बन्धिभिन्नसम्बन्धविषयाः । भावमात्रविषयविशिष्टलौकिकप्रत्यक्षत्वात् । इतनिरूपणाधीननिरूप्यमात्रगोचरलौकिकप्रत्यक्षत्वाद्वा । दण्डीति प्रत्यक्षवदित्याद्यनुमानं मानम् । समवायसिध्द्यनन्तरं समवायेतरसम्बन्धिभिन्नसम्बन्धविषया इत्यपि प्रयोगसम्भवेन तृतीयस्याप्यतिरिक्तसम्बन्धस्य सिद्ध्यापत्त्याऽऽभाससमानयोगक्षेमत्वात् । अभावविशिष्टबुद्धिवत्स्वरूपसम्बन्धविषयत्वेनैवोपपत्त्याऽप्रयोजकत्वाच्च । न च लाघवादेक एव सम्बन्धः सिध्यतीति वाच्यम् । तथा सति प्रागभावादिविशिष्टबुद्धीः पक्षीकृत्य सम्बन्धिविषयकत्वसाधने लाघवेन तत्राप्यभावमात्रनुगत एको नित्यः सम्बन्धोऽङ्गीकार्यः स्यात् । विनिगमकाभावात् । तस्मान्नानुमानं तत्र मानम् । नाप्यागमः ।

अपौरुषेयस्य समवायावेदकस्यागमस्यानुपलम्भात् । गुणादिविशिष्टबुद्धीनां कुण्डबदरादिविशिष्टप्रत्यय-वैलक्षण्यं त्वभेदविषयकत्वेनोपपद्यत इत्युक्तत्वान्नार्थापत्तिस्तत्र मानम् । अभेदेऽपि विशेषणविशेष्य-भावादिकत्वं ततः सर्वैरङ्गीकार्येण पदार्थस्वभावविशेषेणैवोपपद्यते । कथमन्यथा सामान्यं सदित्यादि-प्रत्यय इति । ननु द्रव्यादिविकल्पानां विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वावश्यम्भावद्यदेव तज्जनकं विशेषणज्ञानं तदेव निर्विकल्पकं किञ्चिदङ्गीकार्यमित्यत आह ॥ **नाम्न इति ॥ बाधकाभावेनेति** । न च विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वान्यथाऽनुपपत्तिरेव बाधिका । विशेषणविशेष्योभय-सन्निकर्षाभ्यामेव विशिष्टज्ञानोत्पत्तौ विशेषणज्ञानस्यापि तत्र कारणत्वे मानाभावात् । न चानुमिति-रूपविशिष्टज्ञानविशेषे साध्यप्रसिद्धिरूपविशेषज्ञानविशेषस्य हेतुत्वदर्शनात् । यद्विशेषयोरिति न्यायेन सर्वत्रापि विशिष्टज्ञाने विशेषणज्ञानस्य कारणतेति वाच्यम् । मन्मते सामान्यप्रत्यासत्त्यभावेन साध्यतावच्छेदकप्रकारकयत्किञ्चित्साध्यविषयकप्रसिद्धेरेव कारणत्वेन विशेषणीभूतपक्षीयसाध्यविषयक प्रसिद्धेरेव कारणत्वात् । अन्यथाऽनुमितावेव पक्षविशेष्यज्ञानस्य कारणतोपलम्भाद्यद्विशेषणयोरिति न्यायेनैव सर्वत्र विशिष्टज्ञाने विशेष्यज्ञानस्यापि कारणतापातादिति भावः । ननु द्रव्यादिविकल्पापेक्षया पूर्ववस्तुदर्शनाभावेऽपि नामाभावविकल्पयोः पूर्ववस्तुमात्रवगाहि ज्ञानमङ्गीकार्यम् । न हि नाम्यधि-करणयोरदर्शने नामप्रतियोगिनोः स्मृतिः । येन तद्विशिष्टज्ञानं स्यात् । एवं चेत्तदुभयविकल्पयोः पूर्ववस्तुमात्रावगाहिप्रथमाक्षिसन्निकर्षानन्तरमेवोत्पत्त्यभावेन नामप्रतियोगिस्मरणजनकं वस्तुमात्रा-वगाहिज्ञानं निर्विकल्पकरूपं सिद्धमित्यत उक्तं नाम्न इत्यादिना । पश्चान्नामिदर्शनानन्तरं प्रतियोगि-स्मरणाधीनज्ञानत्वेनेत्यन्तरं प्रतियोगिनश्च पश्चात्स्मरणेनेत्यावर्तनीयम् ॥ **उत्पत्त्यभावेऽपीति** । तदुक्ताभ्युपगमो भिक्षुपादप्रकरणन्यायेनावस्तुतस्तत्रापि निर्विकल्पकानुनपत्तिरेव नामप्रतियोगि-स्मरणजनकनाम्यधिकरणज्ञानयोः यत्किञ्चित्प्रकारावगाहित्वेन निर्विकल्पकत्वाभावादिति भावः ।

**अभि.**— ॥ **निर्विकल्पकेति** । विकल्प इति संज्ञा पूर्वाचार्यस्य । तथा च निष्कान्तं विकल्पेभ्य इति निर्विकल्पकं निष्प्रकारकं ज्ञानमिति यावत् ॥ **सविकल्पकमिति** । विकल्पेन सहितं सविकल्पकम् । सप्रकारकमिति यावत् । एवं प्रकारेण प्रत्यक्षफलं द्विविधमाचक्षत इत्यर्थः ॥ **तदष्टविधमिति** । द्रव्य-विकल्पं गुणविकल्पं क्रियाविकल्पकं जातिविकल्पं विशेषविकल्पं समवायविकल्पं नामविकल्प-मभावविकल्पं चेति ग्राह्यम् । कस्मिन्ज्ञाने द्रव्यविकल्पमिति पृच्छति ॥ **द्रव्यविकल्पो यथेति** । द्रव्यमेव विकल्पो द्रव्यविकल्पः । यथा कथं कस्मिन्ज्ञान इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । एतेन तदितिन-पुंसकलिङ्गेन प्रकृतत्वाद्विकल्पो यथेति पुल्लिङ्गनिर्देशोऽनुपपन्न इति निरस्तम् । विशिष्टः परमाणुरिति योगिनां ज्ञानमिदं द्रष्टव्यम् ॥ **देवदत्त इति** । उपनीतज्ञानमिदं द्रष्टव्यम् । निर्विकल्पकज्ञानं दूषयति ॥

**नाम्न इति ॥ तद्विकल्पकस्येति ।** अभावनाम विकल्पो यस्येति तद्विकल्पं यस्येत्यर्थः ॥ **द्रव्यादिविकल्पानामिति ।** द्रव्यादयो विकल्पा येषां तानि द्रव्यादिविकल्पानि तेषां द्रव्यादिविकल्पानामित्यर्थः ॥ छ ॥ छ ॥

**इति श्रीमत्सत्यनिधितीर्थश्रीमच्चरणाराधकश्रीसत्यनाथतीर्थयतिविरचितप्रमाणपद्धतिव्याख्यानेऽभिनवामृते प्रत्यक्षपरिच्छदः समाप्तः ॥ छ ॥**

**श्रीनि.—** ॥ **निर्विकल्पकेति ।** निष्क्रान्तं विकल्पेभ्यः प्रकारेभ्य इति निर्विकल्पकम् । निष्प्रकारकमिति यावत् । विकल्पैः सहितं सविकल्पकम् । सप्रकारकमिति यावत् ।

**॥ इति श्रीप्रमाणपद्धतिवाक्यार्थमञ्जर्यां श्रीनिवासातीर्थकृतायां प्रत्यक्षप्रकरणं समाप्तम् ॥ छ ॥**

**वि.—** परोक्षप्रत्यक्षविभागं दूषयितुमनुवदति ॥ **निर्विकल्पकेति ।** सन्निकर्षषाड्विध्योक्तिसमुच्चयार्थश्चशब्दः ॥ **स्वरूपमात्रावभासकमिति ।** सम्बन्धाविषयकत्वे सति वस्तुस्वरूपमात्रविषयकत्वमित्यर्थः ॥ **विशिष्टाकारगोचरमिति ।** विशेषणविशेष्यभावगोचरमित्यर्थः॥ **एतदप्यसदिति ।** सन्निकर्षषड्विधत्ववदेतदपि प्रत्यक्षद्वैविध्यादिकमप्यसदित्यर्थः ॥ **नाम्नः पश्चादिति ।** नामदर्शनान्तरमित्यर्थः । तद्विकल्पस्य नामाभावयोर्विकल्पस्येत्यर्थः । प्रथमाक्षसन्निकर्षानन्तरं नामाभावयोर्भानमिति प्रतियोगिस्मरणात्प्रागेवेन्द्रियसन्निकर्षस्तदनन्तरमित्यर्थः । आदिपदेन गुणक्रियाजातयो गृह्यन्ते । प्रथममेव द्रव्यगुणक्रियानिरूपितविशेषणज्ञानान्निर्विकल्पकात्प्रागेवेत्यर्थः । ननु विशेषणज्ञानजन्यत्वाद्विशिष्टज्ञानस्य विशेषणगोचरनिर्विकल्पकज्ञानात्प्रथममेव कथं तद्विशिष्टज्ञानोदयः । कारणाभावे कार्यायोगादिति चोद्यपरिहारायोक्तम् ॥ **बाधकाभावेनेति ।** विशेषणज्ञानरूपकारणाभावस्य बाधकस्याभावेनेत्यर्थः । निर्विकल्पकानुपपत्तेर्निर्विकल्पकस्यासम्भवादित्यर्थः । विशेषणज्ञानं विना विशिष्टस्मरणोदयान्न विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वम् । न च पूर्वानुभवस्य संस्कारद्वारा विशेषणज्ञानत्वेन हेतुत्वान्न स्मरणे व्यभिचार इति वाच्यम् । तस्य विशेषणज्ञानत्वेन जनकतया संस्कारस्य व्यापारत्वायोगात् । न हि तज्जन्यत्वे सति तज्जन्यजनकत्वमवान्तरव्यापारत्वम् । कुलालपुत्रादेरपि कुलालत्वव्यापारप्रसङ्गात् । किन्तु यद्धि यज्जनयित्वैव यज्जनयति तस्यैव तदवान्तरव्यापारत्वम् । न चात्र तत्सम्भवति । विशेषणज्ञानस्य प्रतियोगिस्मरणादेः संस्कारं जनयित्वापि विशिष्टज्ञानजनकत्वात् अन्यथा जागराद्यसविकल्पकप्रत्यक्षस्य एतज्जन्मनि गौरिति प्राथमिकप्रत्यक्षस्य वा संस्कारद्वारा पूर्वानुभवरूपविशेषणज्ञानजन्यत्वसम्भवान्निर्विकल्पकासिद्ध्या विवादापर्यवसानात् । स्मरणस्य

विशिष्टज्ञानं प्रत्यप्यहेतुत्वापाताच्च । पूर्वानुभवस्यैव संस्कारद्वारा तत्र हेतुत्वोपपत्तेः । जन्यविशिष्टानुभवं प्रति विशेषज्ञानस्य हेतुत्वाङ्गीकारान्न स्मरणे व्यभिचार इति चेन्न । विशिष्टज्ञानरूपस्मरणस्येव विशिष्टानुभवस्यापि विशेषणज्ञानव्यतिरेकेणोत्पत्तिसम्भवात् । अभावत्वप्रतियोगित्वविशिष्टानुभवेऽनुपस्थितयोरेवाभावप्रतियोगित्वयोर्विशेषणयोः परेणापि भानाभ्युपगमादनुव्यवसाये पूर्वानुपस्थितस्य व्यवसायगतघटत्वादिप्रकारत्वादेर्विशेषणस्य च भानात् । अभावत्वादिविशिष्टानुभवादौ व्यभिचारापरिहाराच्च । न च तत्रापि प्रतियोग्यादिविशेषणज्ञानजन्यत्वस्य सत्त्वान्न व्यभिचार इति वाच्यम् । इदं रजतमिति ज्ञानस्य रजतांशे दोषजन्यत्वेऽपि धर्म्यंशेऽदोषः । जन्यत्वाभाववद्धर्म्यंशे गुणजन्यत्वेऽपि रजतांशगुणजन्यत्वाभावाच्च । प्रतियोगित्वादिविशिष्टानुव्यवसायस्य च प्रतियोग्यादिविशेषणविशिष्टांशे विशेषणज्ञानजन्यत्वेऽपि प्रतियोगित्वादिरूपविशेषणविशिष्टांशे विशेषणज्ञानजन्यत्वाभावेन तत्तांशे व्यभिचारापरिहारात् । अन्यथाजन्यज्ञानत्वावच्छिन्ने कार्ये आत्ममनोयोगादेरिव गुणस्य दोषाभावस्यापि हेतुत्वापातात् । विशेषणज्ञानस्य विशिष्टानुभव इव गुणदोषाभावयोर्जन्यज्ञानमात्रे व्यभिचाराभावस्य सुवचत्वात् । भ्रमत्वावच्छिन्नकार्यस्य गुणजन्यत्वापाताच्च । भ्रमत्वाधिकरणे तस्याव्यभिचारित्वात् । अनुमित्यादेर्विशिष्टज्ञानस्य पक्षादिरूपविशेष्यज्ञानजन्यत्वेन यत्सामान्ययोरिति न्यायाद्विशेषणज्ञानस्यैव विशिष्टानुभवस्यापि जन्यविशिष्टानुभवहेतुत्वापाताच्च । न चेष्टापत्तिः । समवायाभावविशेष्यकज्ञानस्यापि विशेष्यज्ञानजन्यत्वापत्त्या समवायादेर्ज्ञानाभावस्य निर्विकल्पविशेषत्वस्याभावापातात् । किञ्चास्तु विशेषणज्ञानस्य जन्यविशिष्टानुभवहेतुत्वम् । तथाऽपि प्रत्यभिज्ञायां तत्तास्मरणस्येव गौरित्यादिजागराद्यनुभवादावपि गोत्वादिस्मरणस्यैव हेतुत्वसम्भवान्निर्विकल्पकपक्षसिद्धिः । गौरित्याद्यनुभवपूर्वकाले गोत्वदिस्मरणयोग्यानुपलब्धिबाधितमिति चेत् तर्हि प्रत्यभिज्ञादिपूर्वकालेऽपि तत्तास्मरणादिकं योग्यानुपलब्धिबाधितमिति प्रत्यभिज्ञानादावव्यभिचाराद्विशेषणज्ञानस्य कारणत्वाभावान्निर्विकल्पकसिद्धिरिति बोध्यम् ।

**(३०) प्र.प.— हानोपादानोपेक्षाबुद्धयः प्रत्यक्षस्य फलमिति केचिदाहुः । तदप्यसत् । तासामनुमानफलत्वात् । तथा हि । कण्टकादिस्वरूपमात्रं प्रदर्श्य प्रत्यक्षं निवर्तते । अथदानीं पूर्वानुभूतस्य कण्टकादेरनिष्टसाधनत्वमनुभूतं स्मृत्वाऽस्य च कण्टकादित्वेन तदनुमिमानस्य हानबुद्धिरुपजायते । एवं कदलीफलादाविष्टसाधनत्वानुमानान्न्तरमुपादानबुद्धिरुत्पद्यते । तृणादौ चौदासीन्यमनुमायोपेक्षाबुद्धिः प्रतिपद्यते । अतो विशिष्टविषयसाक्षात्कार एव प्रत्यक्षस्य फलमिति ॥ इति श्रीमज्जयतीर्थपूज्यचरणविरचितप्रमाणपद्धतौ प्रत्यक्षपरिच्छेदः समाप्तः ॥ १ ॥**

**जना.—** सविकल्पकनिर्विकल्पकेत्यादिनोपक्रान्तप्रत्यक्षप्रमाद्वैविध्यमुपसंहरन्नेव स्वमते करणरूपप्रत्यक्षस्य फलमाह ।। **अत इति ।** निर्विकल्पकस्य निरस्तत्वादित्यर्थः ।। **विशिष्टविषयेति ।** इदमित्थमिति सप्रकारकेत्यर्थः ।।

**इति श्रीमद्दक्षिणमधुरश्रीनिवासभट्टोपाध्यायानां शिष्यस्य जनार्दननामिनः कृतौ प्रमाणपद्धतिटिप्पणे जयतीर्थविजयनाम्नि प्रत्यक्षपरिच्छेदः समाप्तः ।। १ ।।**

**राघ.—** प्रत्यक्षज्ञानफलेऽपि विवादमनूद्य निराह ।। **हानेति ।** प्रत्यक्षस्यापरोक्षज्ञानस्येत्यर्थः । अनुमानफलत्वादनुमितिजन्यत्वादित्यर्थः । कण्टकादिस्वरूपं प्रदर्श्येत्युक्त्या प्रत्यक्षादिज्ञानजनन एव प्रत्यक्षस्योपयोगो दर्शितः । अथ कण्टकादिदृष्ट्यनन्तरम् । इदानीं तत्काले स्मृत्वेत्यनेन व्याप्तिस्मृतिरुक्ता । इदानीमित्यनेन स्मृतेरेवावसरप्राप्तिरुक्ता । उपनयमाह ।। **अस्य चेति ।** एतेन विमतं कण्टकाद्यनिष्टसाधनं कण्टकादित्वात्प्रगुक्तानुभूतकण्टकादिवदिति प्रयोगः सूचितः । हानबुद्धिः परित्यागबुद्धिरित्यर्थः । एवमित्यनेन कदलीफलादिस्वरूपं प्रदर्श्य प्रत्यक्षं निवर्तत इत्यादेः परामर्शः । कण्टाकादिपदस्थाने कदलीफलादिपदप्रक्षेपप्रयोगोऽत्रोत्तरत्र च पूर्वत्रेव ध्येयः । अभ्यासपाटवाच्छीघ्रं जायमानानुमितिफले हानादिबुद्धौ प्रत्यक्षफलत्वभ्रम इति भावः ।। **अत इति ।** परोक्तस्यानुपपन्नत्वादित्यर्थः ।। **विशिष्टेति ।** द्रव्यगुणादिविशिष्टेत्यर्थः । प्रत्यक्षस्य करणभूतस्य फलमित्यर्थः ।।

**।। इति श्रीप्रमाणपद्धतिभावदीपे श्रीराघवेन्द्रयतिविरचिते प्रत्यक्षपरिच्छेदः ।। छ ।। छ ।।**

**विज.—** ।। **प्रत्यक्षमिति ।** तथा च लिङ्गविशिष्टपक्षग्रहे तदुपक्षीणं न विशिष्टसाधनत्वादिग्रहे हेतुरित्यर्थः । कथं तर्हि तद्ग्रह इत्यत आह ।। **अथेदानीमिति ।। स्मृत्वेति ।** कण्टकत्वनिष्ठव्याप्तिनिरूपकतयेति शेषः । तृतीयलिङ्गपरामर्शमाह ।। **अस्य चेति ।** यद्यप्यत्रास्त्येव प्रत्यक्षोपयोगस्तथाऽपि हानबुद्ध्यजनकत्वे निवर्तत इत्युक्तम् । **इष्टसाधनत्वानुमानानन्तरमिति ।** इष्टसाधनत्वानुमितिजनकलिङ्गज्ञानानन्तरमित्यर्थः ।। **उदासीन्यनुमायेति ।।** इष्टसाधनत्वानिष्टसाधनत्वाभावानुमितिहेतुलिङ्गज्ञानानन्तरमित्यर्थः । स्वाभिमत प्रत्यक्षे फलमाह ।। **अत इति ।** परोक्तप्रत्यक्षफलत्वभवनाक्षमत्वादित्यर्थः । न च प्रत्यक्षप्रतियोगित्वमादय प्रत्यक्षफलत्वमिति वाच्यम् । तथा च घटादेरपि प्रत्यक्षफलत्वापातादिति ।। छ ।। छ ।।

**इति श्रीप्रमाणपद्धतिटीकायां श्रीसुरेन्द्रपूज्यपादशिष्यविजयीन्द्रभिक्षुरचितायां प्रत्यक्षप्रकरणं समाप्तम् ।। छ ।।**

**वेद.**— कण्टकादीत्यत्रादिपदेन सर्पादिसङ्ग्रहः ।। **प्रत्यक्षमिति** । तथा च लिङ्गविशिष्ट-पक्षग्रहोपक्षीणं प्रत्यक्षम् । कदलीफलादावित्यत्रादिपदेनापूपादिग्रहणम् । एवं तृणादावित्यत्रादिपदेन काकदन्तादिसङ्ग्रहः ।। **स्मृत्वेति** । कण्टकत्वनिष्ठव्याप्तिनिरूपकतयेति शेषः । न च प्रत्यक्षप्रयोज्यत्व-मात्रेण तत्फलमिति वाच्यम् । तथात्वे घटादिपदप्रत्यक्षफलत्वप्रसङ्गात् । स्वाभिमतप्रत्यक्षफलमाह ।। **अत इति** । परोक्तस्य तत्फलत्वाभावादित्यर्थः ।। छ ।।

**।। इति श्रीमद्वेदेशभिक्षुविरचितप्रमाणपद्धतिटीकायां प्रत्यक्षनिरूपणं समाप्तम् ।। छ ।। छ ।।**

**वि.**— स्वयं प्रत्यक्षफलं वक्तुं परोक्तफलं दूषयितुमनुवदति ।। **हानोपादानोपेक्षाबुद्धय इति** । परित्यागस्वीकारौदासीन्यानां बुद्धय इत्यर्थः । प्रत्यक्षद्वैविध्यकथनसमुच्चयार्थश्चशब्दः ।। **प्रत्यक्षं निवर्तत इति** । प्रत्यक्षं चरितार्थं भवतीत्यर्थः ।। **अथेति** । कण्टकादिसाक्षात्कारोदयानन्तरमिदानीं तस्मिन्काल इत्यर्थः । अस्य स्मृत्वेत्यनेनान्वयः ।। **अनुभूतमिति** । तदन्वयव्यतिरेकानुविधायित्वलिङ्गान्यनुभव-विषयीकृतमित्यर्थः । स्मृत्वेत्यनन्तरं तद्दृष्टान्तेति शेषः । अस्य च प्रत्यक्षं द्रष्टव्यम् । वृश्चिकादेर-पीत्यर्थः।। **इष्टसाधनत्वानुमानानन्तरमिति** । तदन्वयव्यतिरेकत्वलिङ्गे चेष्टसाधनमनुमायेत्यर्थः ।। **औदासीन्यमिति** । इष्टानिष्टसाध्वत्वमिति तृणादित्वेनानुमाय तेनानुमानोपेक्षाबुद्धिहेतुतोपादेय-राहित्यबुद्धिः प्राप्यत इत्यर्थः । स्वमते प्रत्यक्षफलमाह ।। **अत इति** । हानोपादानोपेक्षाबुद्धीनां प्रत्यक्षायोगादित्यर्थः । निर्विकल्पकरूपसाक्षात्कारोऽपि प्रत्यक्षफलमिति मतं कुमतमिति ज्ञानायोक्तम् ।। **विशिष्टविषयेति** । इति शब्दः प्रत्यक्षप्रकरणपरिसमाप्तौ वर्तत इति ।

**।। इति श्रीनिवासबालनृसिंहभट्टसूनुना विठ्ठलभट्टेन रचितायां प्रमाणपद्धतिटीकायां प्रत्यक्षप्रकरणविवरणं समाप्तम् ।। १ ।। छ ।।**

# अथानुमानपरिच्छेदः

## अनुमानलक्षणम्

**(१) प्र.प.— निर्दोषोपपत्तिरनुमानम्। उपपत्तिर्व्याप्यं युक्तिर्लिङ्गमिति पर्यायः। अविनाभावो व्याप्तिः। साहचर्यनियम इति यावत्। व्याप्तेः कर्म व्याप्यम्। तस्याः कर्तृ व्यापकम्। यथा धूमस्याग्निना व्याप्तिरव्यभिचरितः सम्बन्धः। यत्र धूमस्तत्राग्निरिति नियमात्। तत्र धूमो व्याप्यः। अग्निर्व्यापकः।**

**जना.—** क्रमप्राप्तमनुमानं निरूपयति ॥ **निर्दोषेति।** बाधादिदोषरहितेत्यर्थः। उपपत्तिर्व्याप्यमित्यर्थः। एवं च निर्दोषपदं बाधितसाध्यके स्वरूपासिद्धे च ह्रदो वन्हिमान्धूमादित्यादावतिव्याप्तिवारणाय। उपपत्तिपदं तु प्रत्यक्षादावतिव्याप्तिवारणाय। निर्दोषपदेन स्वोचितदोषरहितत्वस्य विवक्षितत्वात्। नन्वत्राचार्यैरनुमा युक्तिरेवोक्तेत्यादिना युक्तित्वादेरनुमानलक्षणत्वेनोक्तत्वात्तद्विरोध इत्याशङ्क्यैकार्थत्वान्न विरोध इत्याशयेनाह ॥ **उपपत्तिरित्यादिना।** उपपत्त्यादिशब्दानां मध्येऽन्यतमशब्दार्थज्ञाने सति सर्वेषां पर्यायत्वं ज्ञातुं शक्यत इत्युपपत्तिशब्देन व्याप्यं विवक्षितमितिमनसि निधाय व्याप्यपदार्थघटकीभूतां व्याप्तिमाह ॥ **अविनाभाव इति।** नन्वविनाभावो नाम साध्येन विना साधनस्याभावो वा साध्येनाविना साध्यसाहित्येन साधनस्य भावो वा। नाद्यः। केवलान्वयिनि शब्दोऽभिधेयः प्रमेयत्वादित्यादौ साध्याभावाप्रसिध्याऽव्याप्त्यापत्तेः। न द्वितीयः। साध्यसाहित्यस्य व्यभिचारिसाधरणत्वेनातिव्याप्तेः। किञ्चोर्ध्वदेशो वृष्टिमानधोदेशे नदीपूरादित्यत्राव्याप्तेः। वृष्टिरूपसाध्याभाववत्यधोदेशे नदीपूररूपसाधनसत्त्वादिति चेत्। अत्र समाहितं तर्कताण्डवे। यद्देशकालसम्बद्धस्य यस्य यद्देशकालसम्बद्धेन येन विनाऽनुपपत्तिस्तस्य तेन सा व्याप्तिः। अनुपपत्तेर्व्याप्तित्वं च प्रमाणलक्षणे परिशेषोऽर्थापत्तिरनुमानमित्यविशेष इत्यनेनार्थापत्तिरिवानुमानमप्यावश्यकानुपपत्त्यैव गमकमित्युक्तत्वात्। उपमानेऽपि न हि स्वसदृशेनासदृशं क्वचिद्दृष्टमित्यनेन गवयनिष्ठगोसादृश्यस्य गोनिष्ठगवयसादृश्यं विनाऽनुपपत्तेरेवोक्तत्वात्। पद्धतौ च निर्दोषोपपत्तिरनुमेति प्रमाणलक्षणस्थोपत्तिशब्दो न पर्यायमात्रम्। किन्तु साध्ये सत्युपपद्यते। अन्यथा तु नेति भावेनोपपत्तिर्व्याप्यमिति व्याख्यातत्वात्। प्रमाणलक्षणटीकायामपि जीवनवत्त्वे सति गृहेऽसत्त्वरूपे व्याप्येऽनुपपद्यमानार्थप्रमितिरर्थापत्तिरित्यनुपपद्यमानपदप्रयोगात्। परिशेषादेरनुमानत्वाङ्गीकारे धूमोऽप्यनुपपत्त्याऽग्निं गमयन्नानुमानं स्यादित्युक्तत्वात्। सुधायां चानुमा युक्तिरेवोक्तेत्यनुव्याख्यानस्थयुक्तिशब्दस्य युज्यत एवेति युक्तिरिति व्याख्यातत्वाच्च भाष्यकाराद्यभिप्रेतमेव। यत्तु विमतो गौर्गवयसदृशः। गवयगत-

सादृश्यप्रतियोगित्वादिति प्रमाणलक्षणटीकायां हेतुसाध्ययोः सामानाधिकरण्यसम्पादनं तत्परमतमाश्रित्य । अत एव तत्रैवेति प्रयोगसम्भवादित्युक्तम् । अत एव हि पद्धतावसौ गौरेतद्गवयसदृशः । अस्य गवयस्य तद्गोसदृशत्वादिति वैयधिकरण्येनैव प्रयुक्तम् । अत एव च सुधायां रोहिण्युदयासन्नः कृत्तिकाऽभ्युदिता यत इत्यनुव्याख्यानोक्ते व्यधिकरणप्रयोगे कालादिपक्षीकारेणैकाधिकरण्यमाशङ्क्यैवं प्रयोगविपरिणामे प्रमाणं नेत्युक्तम् । अनुपपत्तिश्चासम्भवः प्रमाणविरोध इति यावत् । उक्तं हि प्रमाणलक्षणटीकायाम् । अनुपपत्तिश्चासम्भव इति । या तु परेण व्याप्त्या गमकमनुमानमनुपपत्त्या गमिकाऽर्थापत्तिरित्यनुमानार्थापत्त्योः भेदे शङ्किते तं प्रति टीकाकारीया केनचिद्विना कस्यचिदनुपपत्तिर्हि तयोर्व्याप्तिं विना नोपपद्यत इत्यनुपपत्तिव्याप्त्योर्भेदोक्तिः साऽनुपपत्तिनियामकद्वैधीभावकार्यकारणभावाद्यभिप्राया नियतसामानाधिकरण्यानौपाधिकसम्बन्धरूपपराभिप्रेतव्याप्त्यभिप्राया वेति न टीकाविरोधः । इयमेव व्याप्तिः साध्येन विना साधनस्याभावोऽनुपपत्तिरिति भावेनाविनाभाव इति साहचर्यनियम इति चोच्यते । यस्यानुपपत्तिः स व्याप्यः येन विनाऽनुपपत्तिः स व्यापकः । इयं च व्याप्तिः प्रसिद्धेषु धूमाद्यनुमानेष्वधोदेशे नदीपूराद्यनुमितिष्वर्थापत्त्यादिरूपानुमानेष्वात्माश्रयान्योन्याश्रयचक्रकानवस्थाव्याघाताद्यापादकेषु केवलव्यतिरेकिषु सर्वत्र केवलान्वयिषु चानुगताऽऽवश्यकी च । अन्यथाऽप्रयोजकतापातात् । हेतुरस्तु साध्यं मास्त्वित्येवाव्याप्तेः शङ्क्यमानत्वाच्च । न चात्माश्रयादिकमापाद्यमापादकसमानाधिकरणत्वेन कुत्रचित्प्रमितम् । तथात्वेऽनिष्टत्वायोगात् । उक्तं च टीकाकारैः । न हि कुत्राप्यात्माश्रयादि प्रमाणप्रमितमिति । न चैवं व्यतिरेकव्याप्तिः । केवलान्वयिन्यपि साध्यं विनाऽनुपपत्तेः सत्त्वात् । वृष्टिरूपसाध्याभाववत्यधोदेशे पूररूपसाधनाभावस्याभावेन व्यतिरेकव्याप्त्यभावेऽपि पूरे वृष्टिं विनाऽनुपपत्तेर्दर्शनाच्च । किञ्च वन्हिं विनाऽनुपपत्तिर्धूमगता । व्यतिरेकव्याप्तिस्तु वन्ह्यभावगतेति कथं तयोरभेदः । वन्ह्यभावस्य धूमाभावेन व्याप्तिरपि धूमाभावं विनाऽनुपपत्तिरेव । सा च वन्ह्यभावेन धूमाभावे साध्ये व्याप्यगतत्वादन्वयव्याप्तित्वेनैवाङ्गम् । धूमेन वन्हौ साध्ये तु धूमानिष्ठत्वान्न साक्षादङ्गम् । न च केवलान्वयिन्यव्याप्तिः । तत्र साध्याभावस्यासत्त्वादेव साध्याभावे सति साधनस्य योपपत्तिस्तदभावरूपानुपपत्तेः सत्त्वात् । मन्मतेऽप्रामाणिकस्यापि निषेधप्रतियोगित्वात् । तथा च कृत्तिकोदयस्य समानकालया भिन्नदेशाया रोहिण्युदयासत्त्या विनेवाधोदेशे नदीपूरस्यापि भिन्नदेशकालयोर्ध्वदेशवृष्ट्याऽनुपपत्तिलक्षणव्याप्तिरस्तीति सामानाधिकरण्य इव वैयधिकरण्येऽप्युक्तरूपा व्याप्तिर्युक्ता । प्रत्युत नदीपूरादौ सामानाधिकरण्य एवोक्तरूपा व्याप्तिरयुक्ता । न ह्यधोदेशे गतो नदीपूरः स्वदेशगतां वृष्टिं विनाऽनुपपन्नः । किन्तु ततोऽप्यूर्ध्वदेशगताम् । ननु साध्याभावेनैव सम्बद्धस्य नदीपूरस्य वृष्टिरूपसाध्येन कथं

व्याप्तिरिति चेत् । नियमेन साध्याभावसम्बद्धस्य द्रव्यत्वस्य संयोगेन कथं व्याप्तिः । यदि तत्र फलबलेन व्याप्तिलक्षणे प्रतियोग्यसमानाधिकरणेति विशेषणाद्व्याप्तिसिद्धिस्तर्ह्यत्रापि फलबलेनैव व्याप्तिलक्षणान्तरस्यैवोक्तत्वात्तत्सिद्धिरिति । विस्तरभयान्नेह कृत्स्नमुच्यते । अत्र प्रपञ्चनं तर्कताण्डवादेवावगन्तव्यम् । अनुपपत्तिरेव व्याप्तिरिति । व्याप्तिलक्षणनिष्कर्षमाह ॥ **साहचर्येति ।** अत्र साहचर्यं नियमयतीति व्युत्पत्त्या साहचर्यवियमशब्देन तर्कताण्डवोक्तानुपपत्तिरेवोच्यते । अन्यथा तत्रोक्तदूषणग्रासात् । तथा पूर्ववाक्येऽप्यनिनाभावशब्देन साध्येन विना साधनास्याभाव उपपत्त्यभाव इति व्युत्पत्त्याऽनुपपत्तिरेवोच्यते । उक्तं च तर्कताण्डवे । इयमेव व्याप्तिः साध्येन विना साधनस्याभावोऽनुपपत्तिरिति भावेनाविनाभावः साहचर्यनियम इति चोच्यत इति । यदर्थं व्याप्तिर्निरूपिता तदाह ॥ **व्याप्तेरिति ।** साध्येन विना नोपपद्यत इत्यनुपपत्तिलक्षणक्रियायाः कर्म आश्रय इत्यर्थः ॥ **तस्या इति ।** साध्येन विना साधनं नोपपद्यत इत्यनुपपत्तिलक्षणक्रियायाः कर्तृतृतीयान्तादिपदवाच्यं व्यापकमित्यर्थः । व्याप्तिमुदाहृत्य दर्शयति ॥ **यथेति ।** व्याप्तिरनुपपत्तिरित्यर्थः । अव्यभिचरितो व्यभिचार्यसल्लिङ्गतद्व्यावृत्तः सम्बन्धः इत्यर्थः । ननु धूमाग्न्योरनुपपत्तिलक्षणव्याप्तिरस्तीत्यत्र किं मानमित्यत आह ॥ **यत्रेति ।** एवं च साहचर्यनियमस्य किञ्चिन्नियामकं विनाऽनुपपत्त्या तन्नियामिका धूमस्य वन्हिना विनाऽनुपपत्तिरङ्गीकार्येति भावः ॥ **तत्रेति ।** धूमाग्न्योर्मध्य इत्यर्थः ।

**राघ.**— अवसरप्राप्तनुमानं प्रमाणलक्षणोक्तदिशा लक्षयति ॥ **निर्दोषेति ।** उपपत्तिर्घटनेति भ्रमं वारयन्नग्रेतनव्याप्त्युक्तिप्रसञ्जकतयोपपत्तिपदस्य विवक्षितमर्थमाह ॥ **उपपत्तिर्व्याप्यमिति ॥ पर्याय इति ।** एतावत्येव वक्तव्ये युक्तिर्लिङ्गमित्युक्तिस्तु निर्दोषयुक्तिरनुमेति बृहद्भाष्येऽनुमा युक्तिरेवोक्तेत्यनुव्याख्याने लिङ्गं हेतुरिति मिथ्यात्वानुमानखण्डने च भगवत्पादाक्तेस्तत्तदविरोधायेति ज्ञेयम् । इतिपदस्य प्रत्येकमन्वयः । तेन पर्यायमित्येकवचनं साधु । ननु किं व्याप्यं नामेत्यतस्तत्स्वरूपमग्रे विवक्षुर्व्याप्तिस्वरूपं तावदाह ॥ **अविनाभाव इति ।** नन्वविनाभावो नाम किं विनाऽभावो वाऽविनाऽपरित्यज्य साहित्येनेति यावत् भावो वर्तनं वा । नाद्यः । तस्य केवलान्वयिन्यभावात् । अस्य व्यतिरेकव्याप्तित्वेन वक्ष्यमाणदिशाऽनुमानानङ्गत्वात् । न द्वितीयः । व्यभिचारिण्यतिव्याप्तेरित्यत आह ॥ **साहचर्येति ।** तथा च व्यभिचारिणि नातिव्याप्तिरिति भावः । इदानीं व्याप्यस्वरूपमाह ॥ **व्याप्तेः कर्मेति ।** व्याप्तिर्नाम व्यापनक्रिया तां प्रति कर्मकारकं यत्तद्व्याप्यते कात्स्न्र्येन सम्बध्यतेऽनेनेति व्युत्पत्त्या व्याप्यमित्यर्थः ॥ **कर्तृ व्यापकमिति ।** व्याप्नोति कात्स्न्र्येन सम्बध्नातीति व्यापकम् । विपूर्वादापृव्याप्तावित्यस्मात्कर्तरि ण्वुल्प्रत्यय इति भावः । उदाहृत्य दर्शयति ॥ **यथेति ।** व्याप्तिः साहचर्यनियम इति प्रागुक्तिरयुक्ता । तथात्वे नियमस्य व्याप्तिघटितत्वेनात्माश्रयापत्तेः । अतोऽभिप्रायमाह ॥ **अव्यभिचरितस्सम्बन्ध इति ।**

**विज.**— प्रमाणपद्धतिमित्यनेन प्रमाणत्वाक्रान्ततयाऽनुमानस्यापि प्रतिज्ञाविषयत्वेऽपि प्रत्यक्षस्य स्वेतरसकलप्रमाणोपजीव्यत्वस्योत्कटेच्छाविषयत्वेन तन्निरूप्यानुमानं निरूपयति ॥ **निर्दोषोपपत्तिरिति अनुमानं प्रमाणमित्यर्थः** । ननु ज्ञायमानं लिङ्गमनुमानमुच्यते । तत्कथमुपपत्तिरनुमानमिति । तत्राह ॥ **उपपत्तिर्युक्तिरित्यादि** । उपपत्तिशरीरप्रविष्टाया व्याप्तेर्लक्षणमाह ॥ **अविनाभाव इति** । ननु साध्येन विनाभावो नेत्यस्य साध्याभाववन्निष्ठाभावप्रतियोगित्वात्तस्य तदभावस्य केवलान्वयित्वादित्यत आह ॥ **साहचर्येति** । हेतुसमानाधिकरणप्रतियोगिविरोध्यभावाप्रतियोगिसाध्यसामानाधिकरण्यमित्यर्थः । अतो नियमस्य व्याप्तित्वेन नात्माश्रयशङ्का । साध्ये तादृशाभावाप्रतियोगित्वस्यैव नियमपदार्थत्वात् । व्याप्तेः सम्बन्धरूपाया अनुयोगिप्रतियोगिनौ दर्शयति ॥ **व्याप्तेरित्यादिना** । अत्र यद्यपि व्याप्त्याश्रयो व्याप्तिरित्येव वक्तुमुचितं तथाऽपि वन्हिर्धूमं व्याप्नोतीत्यादिव्यवहारोपपादनाय कर्मत्वादिनोक्तमिति ध्येयम् । तदिदमुदाहरणमुखेन दर्शयति ॥ **यथेति** । ननूपपत्तिरनुमानमेवास्तु । किं निर्दोषत्वप्रवेशेनेत्यत आह ॥ **तत्रेति** । तथा च प्रमारूपानुमित्युपहितस्यैवानुमानत्वात्तदनुपहिते लक्ष्ये यथोक्तोपपत्तित्वस्य सत्त्वादति व्याप्तिवारणाय तत्प्रवेश इति भावः ।

**वेदे.**— उपपत्तिशब्दार्थमाह ॥ **उपपत्तिरिति** । अत्र यद्यप्युपपत्तिर्व्याप्यमित्येतावतैवालम् । तथाऽप्याचार्यैरनुव्याख्यानादावनुमा युक्तिरेवोक्ता । अत्र यद्यप्युपपत्तिशब्दस्य व्याप्यपर्यायत्वेनाव्याप्ते हेतावतिव्याप्तिवारणाय न निर्दोषत्वं विशेषणम् । तथाऽप्यसिद्धे बाधितादौ चातिव्याप्तिवारकं तदिति बोध्यम् । तत्र युक्तिशब्देन यथार्थानुमितिजनकत्वरूपमुख्यार्थस्यैव विवक्षितत्वात् । अत्र व्याप्यमात्रस्यैवामुख्योपपत्तिशब्देन ग्रहणात् । अत एव सुधायामत्र पुनरन्तर्गतनिर्दोषत्वं मुख्यमेवार्थमुपादाय युक्तिरित्येवोक्तमित्युक्तम् । व्याप्तिघटितत्वेन व्याप्यस्य व्याप्तिलक्षणमाह ॥ **अविनाभाव इति** । अत्र भावः सत्ता । एवं च साध्येन विना साधनस्य भावो नेत्यनेन साध्याभाववन्निष्ठाप्रतियोगित्वं व्याप्तिरित्युक्तं भवति । न चैतत्सम्भवति । तुच्छस्यापि वन्हिव्याप्यतापत्तेः । तदत्यन्ताभावस्य केवलान्वयित्वेन वन्ह्यभाववन्निष्ठत्वात् । अत्र विवक्षितमर्थं स्वयमेवाह ॥ **साहचर्येति** । अत्र साहचर्यं स्वदेशकाल विशेषगतस्य हेतोः स्वदेशकालगतेन साध्येन सम्बन्धमात्रं विवक्षितम् । न तु सामानाधिकरण्यमेव । अधोदेशे नदीपूरादावव्याप्तेः सम्बन्धमात्रं तु तत्राप्यस्ति वृष्टिमदूर्ध्वदेशनिरूपिताधोदेशगतत्वात्पूरस्य । एवमन्यत्रापि कृत्तिकोदयादौ हेतुसाध्यसम्बन्धमात्रमुपपादनीयम् । असतश्चोक्तरूपत्वाभावान्नातिव्याप्तिः । व्यभिचारिसम्बन्धव्यावर्तनाय नियम इत्युक्तम् । नन्वेवं नियमस्य व्याप्तिरूपतयाऽऽत्माश्रय इति चेन्न । नियमपदेनाव्यभिचारस्य विवक्षितत्वात् । तथा चाव्यभिचरितसाध्यसम्बन्धो व्याप्तिरित्युक्तं भवति । अत एवाग्रे वक्ष्यति ॥ **व्याप्तिरव्यभिचरितः सम्बन्ध इति** । अत्र च सम्बन्धविशेषणत्वमिति

चोद्यानवकाश इति ध्येयम् । केचित्तु हेतुसमानाधिकरणप्रतियोगिविरोध्यभावाप्रतियोगिसाध्य-सामानाधिकरण्यमित्यर्थः । अतो न नियमस्य व्याप्तित्वेनात्माश्रयशङ्केत्याहुः । अत्र व्यधिकरणे नदीपूरादाव व्याप्तिः कथं परिहरणीयेति चिन्त्यम् । यदर्थे व्याप्तिनिरूपणं कृतं तदिदानीमाह ॥ **व्याप्तेरिति** । अत्र यद्यपि व्याप्त्याश्रयो व्याप्यमित्येव वक्तुमुचितः । तथाऽपि वन्हिर्धूमं व्याप्नोतीति-व्यवहारानुसारेणैवमुक्तमिति ध्येयम् । यत्र व्याप्तिसम्भावनयोर्मध्ये ।

**अभि.—** निर्दोषोपपत्तिरनुमानमिति शब्दानां मुख्यामुख्यभेदेन वृत्तिद्वयसद्भावादुपपत्ति-शब्देनामुख्यवृत्तिमुपादाय हेत्वाभासप्रतिपत्तिः स्यात् । सा मा भूदिति मुख्यवृत्तिरेव विवक्षितेति ज्ञापनाय निर्दोषग्रहणं न त्वतिव्याप्तिवारणायेति बोध्यम् । तदुक्तं सुधायाम् । शब्दानां खलु मुख्या-मुख्यभेदेन द्वे वृत्ती । एवं चोपपत्तिशब्दादुपपत्ताविव तदाभासेऽपि प्रतिपत्तावुत्पन्नायां तद्व्यवच्छेदेन मुख्यार्थोपदर्शनार्थं तत्र निर्दोषग्रहणं कृतम् । अत्र पुनरन्तर्गतं निर्दोषत्वं मुख्यमेवार्थमुपादाय युक्ति-रेवेत्युक्तम् । तदिदमुक्तम् । युक्तिरेवेति न तु निर्दोषत्वविशेष्य इति । एतेन यद्युपपत्तिशब्दस्य मुख्यार्थो विवक्षितस्तर्हि व्यावृत्त्यभावान्निर्दोषग्रहणं व्यर्थम् । अथामुख्यार्थो विवक्षितस्तदा विशेषणविशेष्य-भावानुपपत्तिः । न हि निर्दुष्टो हेत्वाभासः सम्भवति । माता वन्ध्येतिवद्व्याघातात् । असम्भवलक्षण-लक्ष्यस्यामुख्योपपत्तिशब्दार्थत्वाभावादिति परास्तम् । यदाह प्रमाणलक्षणटीकायाम् । निर्दोषोपपत्ति-रनुमानमुपपत्तिरति लिङ्गमुच्यते । साहचर्यबलेनार्थगमकं लिङ्गं निर्दोषग्रहणमनुमानाभासव्युदा-सार्थमित्युक्तम् । व्याप्त्याद्यनुमानलक्षणरहितोऽनुमानवदवभासमानोऽनुमानाभासः । उपपत्तिग्रहणं प्रत्यक्षादिव्युदासार्थमित्युक्तम् । ततश्चातिव्याप्तिवारणाय निर्दोषेति विशेषणं नेति वदतां तद्विरोध इचि चेत् । न । भावानवबोधात् । न ह्यनुमानाभासेऽतिव्याप्तिनिरासाय निर्दोषत्वविशेषणं प्रत्यक्षादावति-व्याप्तिनिरासायोपपत्तिविशेषणमिति प्रमाणलक्षणटीकाभिप्रायः । येनोक्तदोषः स्यात् । किं नामोप-पत्तिशब्दस्य मुख्यामुख्यभेदेन वृत्तिद्वयसद्भावादमुख्यवृत्तिमादायानुमानाभासेऽनुमानत्वबुद्धिःस्या-त्तन्निरासाय निर्दोषग्रहणम् । ततश्चानुमानबुद्धिरनुमानाभासनिवृत्ता भवति । ननु वृत्तिद्वयोपेत-मुपपत्तिशब्दं प्रयुज्यानभिप्रेतार्थनिरासाय स्वाभिप्रायप्रयोजनं किं निर्दोषेण निर्दोषमात्रमेव लक्षणं किं न स्यादिति चेन्न । निर्दोषत्वमात्रमपि लक्षणत्वेनैव प्रतिपत्त्याऽलम् । सर्वदोषशून्यत्वस्य क्वाप्य-भावात् । यत्किञ्चिद्दोषशून्याभिप्राये च प्रत्यक्षादौ तद्दोषशून्यत्वदर्शनेनानुमानबुद्धिः स्यात्ततोऽवश्य-मुपपत्तिदोषशून्यत्वमिह विवक्षितमिति स्वाभिप्राय आविष्करणीयः । आविष्करणं च द्वेधा भवति । वक्ष्यमाणदोषाणां परिगणनं कृत्वा तद्रहितमित्युक्त्या वा निर्दोषोपपत्तिरित्युपपत्तिग्रहणेन तत्र शब्दलाघवाय निर्दोषोपपत्तिरनुमानमित्याशयः । अवश्यं चैतदेवं विज्ञेयम् । हेत्वाभासानामुपपत्त्या-



भासत्वेनोपपत्तित्वाभावादिति व्याप्त्यभावेन तत्परिहाराय निर्दोषग्रहणमित्यङ्गीकारायोगात् । उपपत्तिशब्दस्यामुख्यवृत्तिमादायातिव्याप्त्युपादाने निर्दोषविशेषणानुपपत्तेः । उपचाररूपामुख्यवृत्त्या हेत्वाभासमात्रस्यैवोपस्थितत्वेन तस्य निर्दोषविशेषणत्वा**योगात्** । **उपपत्तिशब्दस्य** न हेत्वाभासेषूपचारवृत्तिरङ्गीक्रियते । किं नाम सदसदुपपत्तिसाधारणी वृत्तिरङ्गीक्रियत **इति निर्दोषत्वविशेषणं** सार्थकमिति चेन्न । सदसत्साधारणवृत्तेरप्रामाणिकत्वात् । न ह्युपपत्तिशब्दस्य मुख्यार्थविवक्षयैव लक्ष**णसामञ्जस्ये** सत्यप्यप्रामाणिकं वृत्त्यन्तरमभ्युपगम्यातिव्याप्तिं प्रापय्य तत्परिहाराय विशेषणं देयमिति कुल**धर्मः** । सुधाविरोधस्तु स्पष्ट एव । नापि निर्दोषमनुमानमित्युक्ते इन्द्रियादावतिव्याप्तिः । उपपत्तिदोषवैधुर्य**स्य** तत्राभावात् । अभिप्रायानवबोधेनातिव्याप्तिशङ्कायामपि तत्परिहारविशेषणदानायोगादिति । तर्कताण्डवेऽपि निर्दोषोपपत्तिरनुमा । उपपत्तिर्व्याप्यं निर्दोषत्वेति विशेषणान्नासिद्धादावतिव्याप्तिरित्युक्तम् । उपपत्तिशब्दस्य मुख्य एवार्थ विवक्षित इति ज्ञापनाय निर्दोषेति विशेषणादसिध्याद्यादावतिव्याप्तिर्नास्त्येवेति तत्परिहाराय न यतितव्यमिति तदाशयो बोध्यः । अन्यथा सुधाविरोधो दुष्परिहारः स्यात् । प्रधानाङ्गत्वाद्व्याप्तेर्लक्षणमाह ॥ **अविनाभाव इति** । अविना व्यापकाव्यतिरेकेण व्याप्यस्याभावः सत्तेत्यर्थः । इममेवाभिप्रायं व्यनक्ति ॥ **साहचर्यनियम इति ॥ यावदिति** । ननु नियमो नाम व्याप्तिः । ततश्च व्याप्तिलक्षणे व्याप्तेः प्रविष्टत्वादात्माश्रय इति चेत् । कथमिदमवगतं लोकोत्तरप्रज्ञेन । नियमो व्याप्तिरिति यावता कृतकत्वनित्यत्वयोर्नियमेनासाहचर्यमिति प्रयोगोऽस्ति । न च **तत्र नियमो** व्याप्तिरिति शक्यते वक्तुं विरोधात् । न हि जातु जना धूमाग्न्योर्व्याप्तिवद्धूमाग्न्योर्नियम **इति व्याहरन्ति** । येन नियमो व्याप्तिरिति प्रतीमः । प्रत्युत धूमाग्न्योः साहचर्यनियम इति व्याहरन्ति । येन नियमो नाम व्याप्तिपदार्थैकदेशो न तु व्याप्तिरिति । ननु वृष्ट्यादिसाधननदीपूरादिव्याप्तावव्याप्तं लक्षणमिदमिति चेत्। उच्यते । अत्र साहचर्यनियमो नाम यद्देशकालयोर्व्याप्यसत्तातद्देशकालयोर्व्यापकसत्तैवेति न विवक्षितः । किं नाम व्यापकोचितदेशकालाद्यवच्छेदेन साध्यमविहायैव स्वोचितदेशकालयोः सत्ता साहचर्यनियमशब्दार्थो विवक्षितः । न चासौ नदीपूरादौ शक्यते नेति वक्तुम् । ऊर्ध्वदेशपूर्वकालाद्यवच्छेदेन वृष्टिसद्भाव एव तदुत्तरकालावच्छेदेनाधोदेशे नदीपूरसद्भावात् । एवमन्यत्रापि स्वयमेवोहनीयम् । ननु व्याप्तिर्व्याप्यव्यापकघटिता । अतस्तत्प्रतिपत्तिं विना न प्रत्येतुं शक्येत्यन्योन्याश्रय इति चेन्न । लक्ष्यभूतव्याप्तेरकर्मकत्वेन व्याप्यव्यापकान्तर्गतव्याप्तेश्च सकर्मकत्वेन भिन्नत्वादित्याशयेनाह ॥ **व्याप्तेः कर्मेति** । एतेन साध्याव्यतिरेकेण सत्तारूपाया व्याप्तेरकर्मकत्वात्कर्मण्यप्रत्यययायोगेन व्याप्यमिति प्रयोगानुपपत्तिरिति परास्तम् । व्याप्यशरीरान्तर्गताया व्याप्तेराप्नोत्यर्थकत्वेन सकर्मकत्वात् । एतेनैवोपपत्तिर्युक्तिर्लिङ्गं व्याप्यमिति पर्याय इति व्याप्यस्य प्रकृतत्वात्तल्लक्षणाभिधानस्योपयोगेऽपि

व्यापकलक्षणाभिधानमयुक्तमप्रयुक्तत्वादिति परास्तम् । वन्हिर्धूमं व्याप्नोतीति प्रयोगाद्व्याप्तिक्रियां प्रति वन्हेः कर्तृत्वं धूमस्य कर्मत्वमुपपन्नमिति बोध्यम् । नन्वनुमानाङ्गभूता व्याप्तिरन्या । व्याप्यव्यापक-शरीरान्तर्गता व्याप्तिरन्येत्युक्तम् । वन्हिव्याप्यधूमवानयमिति परामर्शे ण्यप्रत्ययान्तव्याप्यशब्दोल्लेख-बलाद्वन्हिव्याप्तिकर्मताया एव धूमे भासमानत्वेन व्याप्यशरीरान्तर्गतव्याप्तेरनुमानाङ्गकौचित्यात् । न हि या परामर्शे भासते सा नाङ्गम् । या च परामर्शे न भासते साऽङ्गमिति सम्मतम् । तस्मादविनाभावो व्याप्तिरित्यादिलक्षणमयुक्तमिति चेत् । उच्यते । व्याप्यशब्दोऽयं बव्हर्थः । अस्ति व्यापनक्रियाकर्मणि वन्हिव्याप्यो धूम इत्युक्ते वन्हिनिष्ठव्यापनक्रियाविषयो धूम इति भावात् । अस्ति व्यापनक्रिया हि देवदत्तव्याप्योऽयं ग्राम इत्युक्ते देवदत्तव्याप्तिमर्हतीत्यवगमात् । अस्ति साहचर्यनियमाश्रये वह्निव्याप्य-धूम इत्युक्ते वन्ह्यविनाभावाश्रये धूम इति प्रतीतेः । न चानुशासनाभावः । कृत्यल्युटो बहुलमित्यनु-शासनात् । तद्योऽविनाभावश्रये वर्तते तस्यायमुल्लेखो वन्हिव्याप्यधूमवानयमिति । न त्वव्यापिनः क्रियाकर्मत्ववाचिनो व्याप्यशब्दस्यायमवभासः । अवश्यं चैतदेवं विज्ञेयम् । व्याप्तिग्रहणवेलायां यत्र धूमस्तत्राग्निरिति साहचर्यनियमरूपव्याप्तेरेव गृहीतत्वेन परामर्शे तद्भानौचित्यात् । न च यत्र धूम-स्तत्राग्निरिति वन्हिनिष्ठव्यापनक्रियापत्तिरिति युक्तम् । अविनाभावस्य स्पष्टमवभासात् । व्याप्ति-शरीरान्तर्गते व्याप्यव्यापके लक्षयित्वा व्याप्तिमुदाहरणमुखेन दर्शयति ॥ **यथा धूमस्याग्निनेति** । अग्निसम्बन्धस्याव्यभिचरितत्वं दर्शयति ॥ **यत्र धूमस्तत्रेति** । व्याप्तेः कर्म व्याप्यमित्यादि-नोक्तव्याप्यव्यापके उदाहरणमुखेन दर्शयति ॥ **तत्र धूमो व्याप्य इति** ।

**आद.—　　आखणाभ्मानमानम्य गुरुभिर्नतमादरात् ॥**
**अनुमापद्धतिव्याख्यां करिष्यामो यथामति ॥ १ ॥**

**क्रमप्राप्तमनुमानं निरूपयति ॥ निर्दोषेति** । दोषाभावविशिष्टस्यैव प्रमोत्पत्तिनियतत्वात्तस्यैव प्रमाणत्वं न केवलोपपत्तेरित्यर्थः । यद्यपि दुष्टाया नोपपत्तिपदवाच्यत्वं तथाऽपि तस्मिन्नपि हेत्वादि-पदप्रयोगात्तस्याप्युपस्थितिः स्यादिति निर्दोषेत्युक्तम् । ननु यथार्था युक्तयः स्मृता इत्यनुव्याख्याने युक्तेरनुमानत्वमुक्तम् । मिथ्यात्वानुमानखण्डने लिङ्गं हेतुरिति लिङ्गस्यैवानुमानत्वमुक्तमितितद्विरोधः । लोके व्याप्य एवानुमानत्वव्यवहारात्तद्विरोधश्चेत्यत आह ॥ **उपपत्तिरिति** । व्याप्यपदार्थस्य व्याप्ति-घटितत्वाद्व्याप्तिः केत्यत आह ॥ **अविनाभाव इति** । विनाऽभावाधिकरणे भावः सत्तावृत्तित्व-मित्यर्थः । विनाभावस्याभावोऽविनाभाव इत्यर्थः । नन्वभावाधिकरणवृत्तित्वस्य केवलान्वयित्वेन तदभावोऽप्रसिद्ध इति चेत् । यमित्यध्याहृत्य विनेत्यस्य यदभावाधिकरण इत्यर्थत्वेन दोषाभावात् ।

ननु यदभावाधिकरणे यस्त्ववृत्तिः स तद्व्याप्य इत्यक्तं स्यात् । असतः कुत्राप्यवृत्तित्वेन यदभावाधिकरणावृत्तित्वादतिव्याप्तेः । वह्न्यभावाधिकरणे ह्रदादौ धूमादेः कालिकादिसम्बन्धेन वृत्तेरसम्भवश्चेति चेन्न । अविनेत्यत्र यदभावमित्यध्याहारो विनेत्यस्याभावाधिकरण इत्यर्थः । तथा च यदभावाभावाधिकरणे इत्युक्तं स्यात् । द्वितीयाभावः प्रतियोग्येवेति यदधिकरणे भावः सत्त्वं वृत्तित्वमपि लभ्यते । अतो न दोष इत्याशयेनाह ॥ **साहचर्यनियम इति** । न च नियमपदार्थस्य व्याप्तिघटिततयाऽऽत्मश्रय इति वाच्यम् । साध्यसहचरितत्वे सति तदभावासहचरितत्वमित्यर्थकत्वेन दोषाभावात् । ननु धूमवान्वन्हेरित्यादावतिव्याप्तिः । साध्यसहचरितस्य वह्नेः साध्याभावाधिकरणीभूतायोगोलकादाववृत्तित्वात् । न च वह्नित्वेन रूपेण पर्वतीयवह्नेरप्ययोगोलकादौ वृत्तित्वमप्यस्तीति वाच्यम् । वह्नित्वेनास्तीत्यस्यार्थस्य निरूपयितुमशक्यत्वात् । न च यद्धर्मविशिष्टस्य साध्याभाववद्वृत्तित्वं तद्धर्मवत्त्वं वा साध्याभाववद्वृत्तितावच्छेदकधर्मवत्त्वं वा तदर्थः । धूमाभाववद्वृत्तितावच्छेदकं वह्नित्वं भवति । वह्नित्वविशिष्टस्यायोगोलकवृत्तित्वं चेति तद्विशिष्टत्वात् । वह्नित्वेन सामान्यरूपेणायोगोलकवृत्तीति वाच्यम् । सिद्धान्तेऽनुगतधर्माभावादयोगोलकीयवह्निवृत्तिवह्नित्वस्य पर्वतीयवह्न्यादावभावात् । अधिकरणतानिरूपितावच्छेकत्वादीनामप्रामाणिकत्वेन सिद्धान्ते वह्नित्वेऽयोगोलकीयवृत्तितावच्छेदकत्वस्याप्यभावात् । अवच्छेदकत्वादीनामङ्गीकारेऽप्ययोगोलकवृत्त्यवृत्तिवह्नित्वे तद्वृत्तितावच्छेदकत्वासम्भवात् । अयोगोलकवृत्तिवह्निनिष्ठवह्नित्वे तत्सम्भवेऽपि तस्य पर्वतीयवह्न्यादावभावात्। न च निखिलवह्निव्यक्तीनां तद्वृत्तितावच्छेदकत्वमङ्गीक्रियत इति वाच्यम् । तत्र मानाभावात् । न च वह्निरयोगोलकवृत्तीति प्रतीतौ प्रकारतावच्छेदकतया प्रतीयमानत्वमेव हि तत्र प्रामाण्यम् । तच्चायोगोलकीयवह्निनिष्ठवह्नित्व एव न तु पर्वतीयवह्निनिष्ठवह्नित्वे । तथा सत्ययोगोलकीयवह्नावपि पर्वतीयवह्नित्ववृत्तित्वापातात् । प्रमायां तस्मिन्भासमानत्वात् । ततश्चानुगतधर्माङ्गीकारः कृतः स्यात् । प्रमायां तस्मिन्भासमानमपि तत्र नास्तीति वदन् श्लाघनीयप्रज्ञ एवेति चेन्न । साध्यसहचरितत्वे सति साध्याभावसहचरितसजातीयान्यत्वस्य विवक्षितत्वात् । धूमवान्वह्नेरित्यत्र महानसादिवृत्तेर्धूमाभावासहचरितत्वेऽपि धूमाभावसहचरितायोगोलकीयवह्निसजातीयत्वेन दोषाभावात् । सजातीयान्यत्वं च सजातीयत्वविशिष्टप्रतियोगिकं ग्राह्यम् । तेन तादृशवह्निसजातीयवह्निव्यक्त्यन्तरान्यत्वसत्त्वेऽपि न क्षतिः । तद्वह्निर्धूमाभावसहचरितपर्वतीयवह्निनेति प्रतीतिसिद्धे भेदे धूमाभावसहचरितसजातीयत्वविशिष्टप्रतियोगिकत्वानङ्गीकारात् । विशिष्टस्यातिरिक्तत्वेन विशेष्यगतधर्माणां विना प्रमाणमसिद्धेः । न च प्रमेयत्वादिना वह्न्यभावसहचरितघटादिसाजात्यस्य धूमादावपि सत्त्वाद्वह्निमान्धूमादित्यादावव्याप्तिरिति हेतुतावच्छेदकाभिव्यङ्ग्यसादृश्यविशिष्टान्यत्वस्यैव विवक्षितत्वात् । यादृशधर्मविशिष्टस्य

हेतुत्वं स धर्मो हेतुतावच्छेदकः । धूमादेरपि मेयत्वादिना रूपेण वह्निव्यभिचारित्वमिष्टमेव । ननु तथाऽप्यूर्ध्वदेशो वृष्टिमानधोदेशे नदीपूरादित्यत्र साध्यसाहचर्याभावान्नदीपूरेऽव्याप्तिः ।

तृतीयाया अवच्छेदकत्वार्थकत्वेऽनुशासनाद्यभावात् । किन्तु वैशिष्ट्यार्थकत्वमेव सहयोगाद्यभावेऽपीत्थम्भूतलक्षणे तृतीयेति सूत्रेणैव तृतीया जटाभिस्तापसो नास्तीत्यादिवाक्यवत् । तथा च घटसंयोगाभावो वा संयोगविशिष्टघटाभावो वा तादृशप्रतीतिविषयः । अत एव न्यायामृते भूतले घटो नास्तीति प्रतीतेर्वक्तृतात्पर्यानुसारेण घटसम्बन्धध्वंसप्रागभावविषयकत्वमुक्तम् । एवमधिकरणताऽपि न संसर्गावच्छिन्ना । संयोगेन घटोऽस्तीति प्रतीतेः संयोगविशिष्टघटविषयकत्वमेव न त्वधिकरणतायां संयोगसम्बन्धावच्छिन्नत्वविषयकत्वम् । नापि संसर्गस्याधिकरणतायां प्रयोजकत्वविषयकत्वं वा । तत्र प्रमाणाभावात् । न च संयोगेन घटाधिकरणे समवायेन घटो नास्तीति प्रत्ययानुपपत्तिः । घटरूपप्रतियोगिनः सत्त्वादिति वाच्यम् । समवायस्यैवालीकत्वात् । सत्त्वेऽपि विशिष्टस्यातिरिक्तत्वेन तादृशविशिष्टरूपप्रतियोग्यभावादेव तादृशप्रत्ययोपपत्तेः । लक्षणे साध्यतावच्छेदकविशिष्टप्रतियोगिकाभावस्यैव निवेशेन विशिष्टाभावमादाय न दोषः । न च तादृशाभावाप्रसिद्धिः । अभावावगाहिप्रतीतिसामान्यस्य तत्तदधिकरणसम्बन्धविशिष्टस्य प्रतियोगिन एव विषयीकरणादिति वाच्यम् । अभावज्ञानोपयोगिज्ञाननिरूपिताधिकरणविषयताभिन्नविषयताया एव प्रतियोगितारूपत्वेन तस्याः शुद्धवन्हावपि सम्भवात् । किञ्च संसर्गस्याधिकरणतायां प्रयोजकत्वं न सम्भवति पर्णद्वयस्य संयोगसत्त्वेऽपि धर्मधर्मिता नास्तीत्यन्वयव्यभिचारात् । न च संयोगो वृत्त्यनियामक इति वाच्यम् । तस्यैव परिवृत्त्यस्थापने आधारादेयभावप्रतीतेः । न च तदानीं संयोगान्तरोत्पत्तिरिति वाच्यम् । पर्णयोः परस्परसंयोगनाशकक्रियाया अनुत्पन्नत्वेन पूर्वसंयोगनाशाभावस्यानुभवसिद्धत्वात् । अभावस्य स्वस्मिन्स्वधर्मितासत्त्वेन स्वस्मिन्स्वसम्बन्धाभावाद्यतिरेकव्यभिचारश्च । न च नास्त्येव स्वस्मिन्स्वधर्मितेति वाच्यम् । घटाभावे घटो नास्तीत्यबाधितप्रतीतेः । तत्रापि विशेषणताख्यसंसर्गोऽङ्गीक्रियत इति वाच्यम् । सम्बन्धस्य भेदव्याप्तत्वेन स्वस्मिन्स्वसंसर्गासम्भवात् । तादृशसंसर्गस्य सप्तपदार्थातिरिक्तत्वप्रसङ्गात्प्रमाणाभावाच्च । न च धर्मित्वानुपपत्तिरेव मानमिति वाच्यम् । धर्मितायाः संसर्गप्रयोज्यत्वसिद्ध्युत्तरकालीनत्वादस्याः कल्पनाया अन्योन्याश्रयात् । न चासम्बद्धयोराधाराधेयभावः कथं युज्यत इति चेत् । असंयुक्तयोः संयोग इवेति गृहाण । तत्रापि सम्बन्धान्तरमङ्गीक्रियत इति चेत् । असम्बद्धस्यैतत्सम्बन्धत्वासम्भवेन सम्बन्धान्तरस्याङ्गीकर्तव्यता स्यात् । तदङ्गीकारे तत्र सम्बन्धान्तरापेक्षत्वेनानवस्थाप्रसङ्गात् । न च समवायस्य न सम्बन्धान्तरापेक्षा । स्वयमेव स्वस्य सम्बन्धित्वं सम्पादयति । स्वनिर्वाहकत्वान्नानवस्थेति चेत् । धर्मताया धर्मिताया अपि

सम्बन्धत्वेन स्वनिर्वाहकत्वसम्भवेनाप्रामाणिकपरम्पराकल्पनस्यायुक्तत्वादित्यलं विस्तरेण । न चाभावाधिकरणताया संसर्गविशेषावच्छिन्नत्वानिवेशेऽसम्भव एव स्यात्सर्वत्राप्येककाले साध्याभावाधिकरणे हेतोर्वृत्तित्वादिति वाच्यम् । साध्याभावाधिकरणतायां साध्याधिकरणदेशभेदकालभेदान्यतराप्रयोज्यत्वस्य विवक्षितत्वात् । प्रतियोग्यभावयोरेकदेशवृत्तित्वे कालभेदः प्रयोजकः । एककालवृत्तित्वे देशभेदः प्रयोजकः । एवं च क्षणनिष्ठसाध्याभावाधिकरणताया देशभेदप्रयोज्यत्वेन तदप्रयोज्याधिकरणता । जलहृदादिनिष्ठवन्ह्यभावाधिकरणतैव तदवृत्तित्वाद्धूमस्य लक्षणसमन्वयात् । एवं पर्वत एव कालभेदेन वन्ह्यभावधूमयोः सत्त्वेऽपि पर्वतादिनिष्ठवन्ह्यभावाधिकरणतायाः कालभेदप्रयोज्यत्वेन तदप्रयोज्याधिकरणता हृदादिनिष्ठैवेति तत्र धूमस्यासत्त्वाल्लक्षणसमन्वयः । न च तथापीष्ट साधनं भोजनत्वादित्यादावौत्सर्गिकव्याप्तिमत्यव्याप्तिः । इष्टसाधनत्वाभावाधिकरणे विषपात्रादिदूषितान्नभोजनेऽपि भोजनत्वहेतोः सत्त्वात् । न च शुद्धभोजनत्वं व्यभिचार्येव किन्तु तत्तद्भोजनान्यभोजनत्वमेव लक्ष्यमिति वाच्यम् । तथा सति लोकानां भोजनस्वरूपहेतुता स्वप्रवृत्तिविषयीभूतभोजने इष्टसाधनत्वानुमित्यनुपपत्तेः । न च तत्तद्भोजनान्यभोजनत्वहेतुनैवेष्टसाधनत्वानुमितिरिति वाच्यम् । भोजनविशेषे तत्तद्भोजनान्यत्वस्यैव ज्ञातुमशक्यत्वेन कस्यापि तत्रेष्टसाधनत्वानुमित्यभावप्रसङ्गेन प्रवृत्त्यभावप्रसङ्गात् । न च सम्भावनयैव प्रवृत्तिर्न निश्चयेनेति चेत् । अनुभवविरोधात् । न च निश्चयो भ्रम एवेति चेत् । लोकानां तस्मिन्भ्रान्तित्वव्यवहाराभावात् । भ्रान्तित्वेऽपि कारणत्वस्य वक्तव्यत्वाच्च । न च निश्चयः । प्रत्यक्षं शाब्दबोधो वा । अनुभवविरोधात् । प्रत्यक्षायोग्यत्वाच्च । अनुमितित्वेऽपि न लिङ्गान्तरजन्या भोजनत्वज्ञानमात्रेण तादृशज्ञानस्य जायामानत्वात् । न च व्यभिचाराभाव भ्रमकाल एवोत्पद्यत इत्यपि भोजनविशेषे इष्टसाधनत्वाभावज्ञानकालेऽपि भोजनत्वज्ञानमात्रेणानुमितेरनुभवात् । अतो भोजनत्वेऽप्यनुमितिकारणज्ञानाविषयीभूता व्याप्तिरस्त्येवेत्युक्तलक्षणस्य तत् साधारण्याभावादव्याप्तिरेवेति चेन्न । साध्याभावाधिकरणतायां साध्याधिकरणताविघटकधर्मान्तराप्रयोज्यत्वस्यापि विशेषणस्य विवक्षितत्वाद्भोजनविशेषनिष्ठेष्टसाधनत्वाभावाधिकरणताया विषपात्रादिसम्बन्धरूपधर्मान्तरप्रयोज्यत्वेन तदप्रयोज्यसाध्याभावाधिकरणता भोजनान्यनिष्ठैव । तत्र भोजनस्यावृत्तित्वाल्लक्षणसमन्वयात् । इत्थं च साध्यतावच्छेदकविशिष्टाधिकरणदेशकालभेदाप्रयोज्या साध्याधिकरणताविघटकधर्मान्तराप्रयोज्या साध्यतावच्छेदकविशिष्टप्रतियोगिकाभावाधिकरणता तन्निरूपिततद्धर्मवत्सम्बन्धवत्सजातीयान्यत्वे सति साध्यतावच्छेदकविशिष्टाधिकरणतानिरूपिततद्धर्मव्यञ्ग्यसाजात्यप्रतियोगित्वमनुयोगित्वं वा व्याप्तिरिति फलितम् । पदकृत्यानि स्वयमूह्यानि । केचित्तु । ननु साहचर्यनियम इत्यत्र नियमपदार्थस्यैव व्याप्तिरूपत्वेन व्याप्तिलक्षणस्य व्याप्तिघटितत्वादात्माश्रयोऽनवस्था

वेत्यत आह ॥ **अविनाभाव इति** । यादृशसाहचर्यरूपसम्बन्धेन विना स्वस्याभावोऽस्थिति-स्तादृशसम्बन्धवत्त्वमित्यर्थः । तथा च साध्यसम्बन्धस्य हेतुसमकालत्वोक्त्या स्वाभाविकत्वं लभ्यते । सम्बन्धे स्वाभाविकत्वं चानौपाधिकत्वमेव । एवं चानौपाधिकसम्बन्धो व्याप्तिरित्युक्तं भवतीत्याहुः । न च संयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिः । संयोगाभाववत्येतद्वृक्षे एतद्वृक्षत्वरूपहेतोः सत्त्वादिति वाच्यम् । अग्रे संयोगस्य विद्यमानत्वेन मूलनिष्ठसंयोगाभावाधिकरणताया मूलग्ररूपदेशभेदप्रयोज्यत्वेन देशभेदाप्रयोग्यतादृशसाध्याभावाधिकरणतैतद्वृक्षान्येष्वेवेति तत्रैव तद्वृक्षत्वस्यावृत्तित्याल्लक्षण-समन्वयात् । नन्वग्रमूलरूपावयवभेदस्य वृक्षनिष्ठसंयोगाधिकरणतायां तदभावाधिकरणतायां च प्रयोजकत्वं कुतः कल्प्यत इति चेत् । प्रतियोग्यभावयोरेकाधिकरणवृत्तित्वघटकत्वं कालभेदस्यैक-देशवृत्तित्वं सम्पादकत्वं तथा प्रकृतेऽप्यवयवभेद एव दृष्टानुसारेण प्रयोजकताकल्पनस्यैव न्याय्यत्वात्। तदभावे प्रतिनिधेः कल्पनीयत्वात् । ननु संयोगाधिकरणताया वृक्षनिष्ठाया अग्रमवच्छेदकमेव । तदभावाधिकरणताया मूलमवच्छेदकम् । अग्रे वृक्षः संयोगी मूले नेति प्रतीत्याऽवच्छेदकत्वस्यैव सिद्धेः । न चावच्छेदकत्वसिद्धावपि प्रतियोग्यभावयोः परस्परं विरुद्धयो-रेकाधिकरणवृत्तित्वं कथं घटत इति चेत् । अवच्छेदकभेदेनैकाधिकरण्यसम्भवादेका-वच्छेदका-वच्छेदेनैकत्र वृत्तित्वं विरुद्धं न त्ववच्छेदकमेद इति चेत् । आगतं तर्हि मूलाग्रभेदस्य प्रयोजकत्वम् । तयोरेवावच्छेदकत्वेनाङ्गीकृतत्वात् । परन्त्वकिञ्चित्करेणाप्रमाणिकेनावच्छेदकेन न किमपि प्रयोजनं पश्यामः । मूलाग्रयोरवच्छेदकत्वसत्त्वेऽपि तद्भेदस्य प्रतियोग्यभावाधिकरणताप्रयोजकत्वस्यावयो-रावश्यकत्वात् । न चाग्रे वृक्षः संयोगीति प्रतीत्याऽग्रादेरवच्छेदकत्वं सिध्यतीति चेत् । सप्तम्या अवच्छेदकत्वार्थकत्वे मानाभावात् । अग्रे वृक्षः संयोगीत्यस्याग्रवृत्तिसंयोगाश्रयो वृक्ष इत्यर्थः । एवं मूले वृक्षो न संयोगीत्यस्य मूलवृत्तिसंयोगाश्रयो नेत्यर्थः । अवयवावयविनोरभेदात्तत्तदवयव-वृत्तिपदार्थाश्रयत्वमवयवीभूतवृक्षादेः सम्भवत्येव । अभेदश्च प्रत्यक्षसिद्धः । एतन्मूलवृत्तिकपिसंयोग-स्त्वप्रसिद्ध इति चेत् । अत एव तद्विशिष्टभेदो वृक्षे सम्भवति । प्रतियोग्यसिद्धेरदोषत्वात् । अत एवैकस्मिन्वृक्षे विरुद्धयोः प्रतियोग्यभावयोः कथं समावेशः सम्भवतीति तत्तधिकरणयोर्भागयो-र्भिन्नत्वान्न त्ववच्छेदकभेदवत् लोकानुसारेण कल्पनायाः कर्तव्यत्वादिति वदन्ति । केचित्तु कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिरिति न वाच्यम् । संयोगाभावस्यैतद्वृक्षवृत्तित्वे मानाभावात् । मूले वृक्षो न संयोगी किन्त्वग्र इति प्रतीतिबलान्मूलावच्छेदेन संयोगाभाववत्त्वं वृक्षे सेत्स्यतीति वाच्यम् । अवच्छेदकताया मूलादिनिष्ठाया अप्रामाणिकत्वात् । मूलस्यैव संयोगाभावाधिकरणत्वाङ्गीकारात् । चक्षुषा भूतले घटस्येव मूले एव तदभावप्रतीतेरनुभवात् । तदनुसारेणैवाभिलापकवाक्यस्याप्यर्थस्य

वाच्यत्वात् । मूल इति सप्तम्यर्थसंसर्गविशिष्टवृक्षे संयोगिभेदप्रतीतावपि सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतो विशेष्ये बाधिते विशेषणे हीति न्यायेन मूल एव संयोगिभेदं बोधयति । शिखी नष्ट इति वाक्यं यथा शिखायामेव ध्वंसप्रतियोगित्वं बोधयति । अन्यथा वृक्षे संयोगो नास्तीति प्रत्ययप्रसङ्गः । संनिकर्षादिः कारणकलापस्य सत्त्वात् । वस्तुतस्तु मूले वृक्षः कपिसंयोगीति वाक्येन मूलवृत्तिसंयोगाद्भेद एव प्रतीयते । स चैतद्वृक्षेऽबाधित एव । शिखी नष्ट इत्यत्र विशिष्टे ध्वंस-प्रतियोगित्वमेव प्रतीयते । तच्चाबाधितमेव विशिष्टस्यातिरिक्तत्वादिति । यदि चावच्छेदकत्वानवगाहि-प्रतीतावविच्छिन्नस्य भानं तर्हि वृक्षे संयोगोऽस्तीति प्रत्ययो न स्यात् । वृक्षस्य मूले संयोगो नास्तीति प्रतीत्या मूलस्य संयोगाभावाधिकरणत्वेन तदवच्छेदकत्वायोगाच्च । तदभाववतोऽपि तदवच्छेदक-त्वाङ्गीकारे वृक्षे वृक्षे संयोगो नास्तीत्यपि प्रत्ययप्रसङ्गः । न च वृक्षे संयोगाभावसत्त्वेऽपि तदवच्छेदकता नाङ्गीक्रियत इति वाच्यम् । वृक्षे मूलेन संयोग इति प्रतीतेर्मूलनिष्ठसंयोगाभावाधि-करणतायामवच्छेदकत्वं वृक्ष एवावगाहत इत्यपि वक्तुं शक्यत्वेनानया प्रतीत्यैव वृक्षे संयोगा-भावावच्छेदकत्वसिद्धेः सम्भवात् । अन्यथा मूले व्यधिकरणतैव सिध्येन्नावच्छेदकत्वमित्यापातात् । न च भवन्मतेऽपि वृक्षमूलयोरभेदेन मूलवृत्तिसंयोगाभावस्य कथं वृक्षावृत्तित्वमिति वाच्यम् । भेदस्याप्यङ्गीकृतत्वेन प्रमितानामेव वृक्षे न सर्वेषां मूलवृत्तिधर्माणामिति सम्भवात् । न च मूलनिष्ठ-संयोगाभावाधिकरणताया वृक्षावच्छेद्यत्वेऽपि वृक्षनिष्ठसंयोगाभावाधिकरणतायां मूलावच्छेद्यत्वमेव न वृक्षावच्छेद्यत्वमिति वृक्षे न कपिसंयोग इति प्रतीत्यापत्तिरिति वाच्यम् । मूलवृक्षयोरभेदेन मूलनिष्ठसंयोगाधिकरणताया एव वृक्षनिष्ठत्वेन वृक्षनिष्ठाधिकरणत्वावच्छेदकत्वाङ्गीकाराभावस्याति-रिक्तत्वात् । न च मन्मते वृक्षमूलयोर्भेद एवेति वाच्यम् । प्रत्यक्षेणाभेदस्यैव गृहीतत्वेन भेदस्यासिद्धेः। वृक्षमूलयोरभेदग्रहवतः पुरुषस्य तादृशप्रत्ययोत्पत्तौ बाधकाभावेन वृक्षे वृक्षे संयोगो तदभावो वेति प्रतीतेः कदाचिदप्यापत्तेः । मूलनिष्ठसंयोगाभावाधिकरणताभिन्नाया वृक्षनिष्ठाधिकरणताया अप्रतीत्या मानाभावेनाधिकरणताद्वयस्यासिद्ध्या न वृक्षत्वादीनामवच्छेदत्वाद्यङ्गीकारेणाप्युक्तापत्तिवारणासम्भवः। तस्मादवच्छेदकत्वादीनामप्रामाणिकत्वेन न वृक्षे संयोगाधिकरणे संयोगाभावधिकरणतेत्याहुः । ननु व्याप्य इत्यस्य व्याप्त्याश्रय इत्यर्थः । तथा च निर्दोषत्वे सति व्याप्त्याश्रयत्वमनुमानलक्षणमित्युक्तम् । तथा सति तर्केऽव्याप्तिः । कस्यचित्पदार्थस्याङ्गीकारेऽर्थान्तरापादनं तर्क इत्युक्तत्वादापाद्यमानधूमाभाव एव तर्कः । स च न साध्यीभूतवन्हिव्याप्य इत्यत आह ॥ **व्याप्तेः कर्मेति** । व्याप्यपदस्य कर्मवाचक-यत्प्रत्ययान्तत्वाद्वन्हिर्धूमं व्याप्नोतीति प्रयोगाद्धेतोर्व्याप्तिकर्मत्वमस्त्येव । अयमाशयः । क्रियाजन्यफल-शालित्वमेव कर्मत्वम् । प्रकृते व्याप्तिरूपक्रियाप्रयोज्यं फलम् । अनुमितिजननानुकूला शक्तिर्व्याप्ति-

ज्ञानाभावे धूमादिरूपहेतुज्ञानमात्रादनुमितेरनुत्पत्तेः । न च व्याप्तिज्ञानमपि साक्षादनुमितिहेतुः किन्तु लिङ्गज्ञानमेव । व्याप्तिज्ञानं तु सहकारि । सहकारित्वं च करणगतशक्त्युपबृंहकत्वम् । यथा लोकेऽञ्जनविशेषादेश्चक्षुर्गतशक्तिव्यञ्जकत्वं वेत्रबीजानां कदलीकाण्डजनने भर्जनं सहकारि । ननु वन्हिव्याप्यधर्मवान्पर्वत इति विशिष्टज्ञानमेवानुमितिहेतुर्न लिङ्गज्ञानमात्रमिति वाच्यम् । ज्ञानद्वया-दप्यनुमितेरानुभाविकत्वेन तत्रापि विशिष्टज्ञानकल्पने गौरवात् । न च ज्ञानद्वयादनुमित्यङ्गीकारे कारणताद्वयं कल्पनीयम् । मम त्वेक एव कार्यकारणभावः । यद्यपि गुरुरूपस्य कारणता-वच्छेदकत्वान्मन्मते विशेषणविशेष्यभावे विनिगमनाभावान्नानाधर्माणां गुरूणां कारणतावच्छेदकत्व-प्राप्त्या कारणाभावबाहुल्येन च कल्पनागौरवम् । तथाऽपि समनियतकारणतानामैक्याङ्गीकारे न गौरवम् । किञ्च तज्ज्ञानविशिष्टैतज्ज्ञानविशिष्टतज्ज्ञानविशिष्टतज्ज्ञानत्वादिकारणतावच्छेदकानां भवन्मतेऽपि बहुत्वम् । सामानाधिकरण्यकालिकविशेषणतयोर्ज्ञानयोर्वैशिष्ट्यविधया निवेशनाधिक्यं च । यदि समवायसम्बन्धेन स्वतन्त्रं कारणताद्वयं मिलितयोः फलोपधायकत्वाङ्गीकारान्नैकज्ञानकालेऽनु-मित्यापत्तिरित्युच्यते । तथाऽपि त्वन्मतेऽपि विषयतानां विनिगमनाप्रयुक्तकारणबाहुल्यमस्त्येव । व्याप्त्यंशे निश्चयत्वनिवेशश्चाधिकः । व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वेन ज्ञानस्य कारणत्वे तु न तन्निवेशः । तादृशज्ञानं प्रति विशेषणतावच्छेदकनिर्णयस्य कारणीभूतस्य पूर्वं सत्त्वेन तदंश-संशयात्मकत्वस्यासम्भवात् । इत्थं च फलमुखगौरवस्यादोषत्वा (फलं कार्यकारणभावग्रहः । तन्मुखं तदधीनं यद्गौरवज्ञानं तस्यादोषत्वात् । तत्तदनुमित्यव्यवहितपूर्ववृत्तित्वाश्रयकत्वरूपकार्यकारण-भावग्रहाप्रतिबन्धकत्वात् ।) विशिष्टवैशिष्ट्यावगाहिज्ञानं कल्प्यत इति । मैवम् । धूमालोकपरामर्श-जन्यानुमितौ तत्तत्परामर्शानव्यवहितोत्तरत्वनिवेशस्य कार्यतावच्छेदककोटौ निवेशस्य भवन्मतेऽप्या-वश्यकतया विषयतानां विशेषणविशेष्यभावे विनिगमकाभावेन कार्यतावच्छेदकबाहुल्यस्यावश्यकत्वेन तन्निमित्तकार्यकारणभावबाहुल्यस्यावश्यकत्वेन तन्मतापेक्षया गौरवस्य स्फुटत्वात् । ज्ञानद्वयकारणता-पक्षे पक्षधर्मतानिश्चयोत्तरानुमितित्वमेव पक्षधर्मताज्ञानकार्यतावच्छेदकं व्याप्तिनिश्चयोत्तरानुमितित्वमेव । वन्हिसाध्यकपर्वतादिनानापक्षकानुमितिसाधारणं कार्यतावच्छेदकमिति लाघवस्य स्फुटत्वात् । त्वन्मते विशिष्टपरामर्शोत्तरत्वस्य धर्मितावच्छेदकभिन्नभिन्नानुमितिसाधारण्यासम्भवेन तत्र तत्रातिरिक्ताया: कारणतायाः कल्पनेन गौरवस्य स्फुटत्वात् । वस्तुतस्तु कारणताशक्तिरूपाऽखण्डैव स्वरूपसम्बन्ध-रूपसमवच्छेदकत्वादिकं त्वप्रमाणमेव । यद्भेदात्कारणताकार्यतयोरपि भेदः स्यात्किन्तु तयोर्ज्ञापकं तदाश्रययोरितरव्यावर्तकमवच्छेदकमित्युच्यते । यथा घटत्वावच्छिन्नं प्रति दण्डत्वेन कारणता तत्र दण्डत्वं सादृश्यविशेषजननद्वारा तादृशसादृश्यानुयोगिनि प्रतियोगिषु च कारणत्वबुद्धिं जनयति

कारणभेदं च ज्ञापयत्येवं सादृश्यज्ञानद्वारा सर्वेषु घटेषु कार्यताबुद्धिं जनयतीति कारणतावच्छेदकं कार्यतावच्छेदकमित्युच्यते । एवं च विशेषणविशेष्यभावे विनिगमनाविरहेण समनियतानां परामर्शवृत्तिनानाधर्माणामुक्तावच्छेदकत्वसत्त्वेऽपि न कारणताभेदः । एकस्या एव कारणताया नानाधर्मज्ञानजन्यज्ञानविषयत्वसम्भवात्स्वाश्रयेषु स्वानाधिकरणव्यावृत्तिबुद्धिविषयत्वसम्भवाच्च । न हि धूमालोकादिनानाधर्मज्ञाप्यसत्त्वेऽपि वन्हेर्भेदोऽस्ति । एवं तादृशमवच्छेदकत्वं गुरुधर्मस्यापि सम्भवत्येव । न हि नानारूपत्वं गन्धापेक्षया गुर्वित्येतावता पृथिवीत्वाज्ञापकं पृथिव्याव्यावर्तकं वा न भवति । अत एव गुरुत्वात्कारणतावच्छेदकं न सम्भवतीत्युक्तिरसङ्गतैव । किन्तु गुरुधर्मपुरस्कारेण कारणत्वं वक्तुरेव कौशल्यज्ञापकं गुरुत्वं गुरोर्धर्मस्य लघुधर्मापेक्षया विलम्बोपस्थितिकत्वेन झटिति व्यावर्तकाद्यसम्भवात् । लघोः शीघ्रोपस्थितिकत्वेन तस्यैव वक्तव्यत्वात् । एवं च नोक्तगौरवादिभिया विशिष्टस्य तत्त्वेन कारणत्वपरित्यागः । किन्तु ज्ञानद्वयस्थले सर्वत्र क्षणविलम्बेन विशिष्टज्ञानकल्पने मानाभावेन विशिष्टज्ञानं विना क्वचिज्ज्ञानद्वयेनाप्यनुमित्युत्पत्तौ बाधकाभावात् । अतः केवलपक्षधर्मताज्ञानमप्यनुमितिहेतुर्व्याप्तिज्ञानं सहकारीत्यङ्गीक्रियते । अन्यथा पर्वतो वन्हिमानित्युक्ते कुत इति इति प्रश्ने धूमादित्युक्ते रसगतत्वापातात् । व्याप्यधूमादिति वक्तव्यत्वापातात् । न हि चन्दनप्रभववन्हिमानित्यक्ते कुत इति प्रश्ने धूमादिति वदन्ति किन्तु सुरभिधूमादित्येव वदन्ति । अतः केवलपक्षधर्मताज्ञानस्य कारणत्वमङ्गीकरणीयम् । न च तथाऽपि व्याप्तिज्ञानस्यापि कारणत्वमङ्गीकार्यमेवेति वाच्यम् । सहकारिकारणत्वस्येष्टत्वात् । स्वातन्त्र्येणैव कारणत्वमास्तां किं कारणीभूपक्षधर्मताज्ञानगतशक्तिव्यञ्जकत्वकल्पनेनेति चेत् । तथा सति ज्ञायमानलिङ्गस्यानुमितिकरणतावद्व्याप्तेरप्यनुमानत्वापत्तिः । यद्यपि व्याप्त्यादेः करणसन्निकर्षरूपत्वात्सन्निकर्षस्यापि प्रत्यक्षप्रमाणत्ववत्प्रमाणत्वमङ्गीकर्तुमुचितम् । तथाऽपि न लिङ्गवत्प्रामाण्यं किन्तु लिङ्गविशेषणतयैव प्रामाण्यम् । तथाऽपि लिङ्गगतशक्तिव्यञ्जकत्वमङ्गीकार्यम् । पर्वतस्य वन्हिमत्त्वे धूमादिहेतोरिव व्याप्तेः प्रमाणत्वेन पृथगुपन्यासाभावाल्लिङ्गविशेषे गमकता कुत इत्याकांक्षायामेव व्याप्त्यादेरुपन्यासात् । व्याप्तिमुख्यविशेष्यकज्ञानस्यानुमिति-जनकत्वाभावाल्लिङ्गविशेषणतया ज्ञाताया एव व्याप्तेरुपयुक्तत्वात् । व्याप्तेर्लिङ्गधर्मत्वाच्च लिङ्गज्ञानमेवानुमितिहेतुः । व्याप्तिस्तज्ज्ञानं वा स्वाश्रये स्वनिरूपके वा लिङ्गप्रमितिजननानुकूलां शक्तिं सम्पादयति । अतो व्याप्तिप्रयोज्यानुमितिजननानुकूलशक्तिरूपफलाश्रयत्वाद्व्याप्यत्वं धूमादेर्न तु व्याप्त्याद्याश्रयाद्व्याप्य इति व्यवहारविषयत्वमिति । अत एव प्रमाणलक्षणे व्याप्तिबलेनार्थावगमकं लिङ्गमित्युक्तम् । प्रकृते चापाद्यमाने धूमाभावे तदापत्तौ वा या वन्ह्यभावनिष्ठधूमाभावनिरूपिता व्याप्तिः सा वन्ह्यनुमितिजननानुकूलां शक्तिं सम्पादयति ।

धूमाभावस्य व्याप्त्यनाश्रयत्वेऽपि तन्निरूपकत्वादाश्रय इव निरूपकेऽपि शक्तिविशेषाधाने बाधकाभावात् । तथा च धूमाभावे तदापत्तौ वा वन्ह्यभावनिष्ठस्वनिरूपितव्याप्त्याहितसाध्यप्रमानुकूलशक्तिमत्त्वसत्त्वान्निर्दोषोपपत्तित्वरूपलक्षणं नाव्याप्तमिति । न च वन्ह्यभावनिष्ठधूमाभावनिरूपिता व्याप्तिरापत्तिस्वरूपनिष्पत्तावेवोपयुज्यते । आपत्तावनुमितिजननाकूलशक्तिसम्पादकत्वे मानाभाव इति वाच्यम् । व्याप्तावप्रामाण्यग्रहदशायां निष्पन्नत्वादापत्तेरनुमित्यापत्तेः । न च तत्स्थले आपत्तावप्रमाण्यधीर्जायत इति वाच्यम् । तदभाववति तत्प्रकारकत्वरूपस्याप्रामाण्यस्यापत्तौ पूर्वमेव निश्चितत्वात् । व्याप्तिधीकाले तादृशाप्रमाण्यग्रहसत्त्वादनुमित्यभावप्रसङ्गादापत्तेर्भ्रमरूपत्वस्य कथमप्यसम्भवेन भ्रमत्वरूपाप्रामाण्यस्याप्यसम्भवाद् भ्रमस्य विधिरूपविषयताघटितत्वेनापत्तीयविषयताया विजातीयत्वेन विधिरूपत्वाभावात् । एतत्तत्त्वमधस्ताद्विवोचितं वेदितव्यम् । अथोच्यते । आपत्तिर्न विजातीयविषयतावज्ज्ञानम् । तथात्वे प्रमाणाभावात् । आपत्तेर्धूमाभावपर्वततत्सम्बन्धमात्रावगाहित्वे तर्हि स्यादिति पदद्वयस्य यदीति पदस्य चानर्थक्यप्रसङ्गात् । किन्तु धूमाभावानङ्गीकारे स्वक्रियाविरोधज्ञानमेवापत्तिः । प्रकृते च व्याप्त्यङ्गीकाररूपैव क्रिया विरुद्धा । इत्थं च वन्ह्यभावे धूमाभावव्याप्तेरभावज्ञाने आपत्तेरेव लीनत्वान्ननुमितिरिति चेन्न । धूमाभावानङ्गीकारस्तद्व्याप्यवन्ह्यभावाङ्गीकाररूपस्वक्रियाविरुद्ध इति वाक्याधीनज्ञानापेक्षया यद्यग्निर्न स्यात्तदा धूमोऽपि न स्यादित्यापादकवाक्याधीनप्रतीतेर्विलक्षणाया अनुभवसिद्धत्वात् । अनुभवानादरे सर्वव्यवस्थोच्छेदप्रसङ्गः । धूमाभावमनङ्गीकृत्य वन्ह्यभावाङ्गीकारकर्तुः स्वक्रियाविरोधव्युत्पादनेन तद्वाक्यस्य स्वव्याहतत्वेन तद्वाक्यस्य जात्युत्तरत्वेन च ज्ञातत्वेन विपर्ययपर्यवसानस्य निष्प्रयोजनत्वेन तर्काङ्गत्वं न स्यात् । वन्हिप्रमां प्रत्युक्तविरोधज्ञानस्य कारणत्वासम्भवेनापत्त्या वन्हिप्रमानुत्पत्तिप्रसङ्गश्च । न च वन्ह्यनुमितिर्नोत्पद्यत एवेति वाच्यम् । विपक्षे बाधकेनात्र वन्हिं कल्पयामीति सर्वानुभवसत्त्वादापत्तेरेव बाधकपदार्थत्वाद्विपक्षे बाधकसत्त्वादिदमङ्गीकार्यमिति परःशतं शास्त्रेषु व्यवहारस्य सत्त्वात् । वाद्यङ्गीकृतपक्षाभावासाधने वादिनिवृत्तेरयोगेनापत्तेर्वैयर्थ्यापत्तेश्च । मयाऽपि वाद्यङ्गीकृतसाध्याभावत्वेन प्रकृतसाध्यसाधकत्वस्याङ्गीकृतत्वात् । न च विपर्ययपर्यवसानस्याव्यापकाभावधीरूपत्वाविपर्यये पर्यवसाने व्याप्यीभूतवन्ह्यभावस्याभावो न सिध्यतीति वाच्यम् । तर्ह्यापत्तेरनुमित्यकारणत्वेन तत्कारणानुपपत्तेः । न च वादिनिवृत्त्यर्थमापात्तिकारणमापत्तौ कृतायां जातित्वं ज्ञास्यत इति वाच्यम् । यत्र वादिना पक्षविशेष धूमादिकमपश्यता वन्ह्यभावोऽङ्गीकृतस्तत्रापत्तेर्व्यर्थत्वापत्तेः । धूमाभावानङ्गीकारबोधस्य धूमोऽस्त्वित्यादिवाक्यस्याप्रयुक्तत्वेन जातित्वपकत्वासम्भवाद्वन्हिप्रमायामापत्तेरनुपयुक्तत्वात्तत्रापत्तेरनुदयप्रसङ्गश्च । धूमाङ्गीकाररूपधूमाभावानङ्गीकारस्य प्रतिवादिन्यसत्त्वेन तत्र

स्वक्रियाविरोधोद्भावनस्यासङ्गतत्वात् । धूमाभावङ्गीकाराभावस्यैवानङ्गीकारपदार्थत्वे प्रतियोगिस्मरणाद्यभावनिबन्धनधूमाभावाङ्गीकाराभावस्य वन्ह्यभावाङ्गीकारविरुद्धत्वाभावेनापत्तेरप्रामाण्यापत्तेः । तद्व्याप्यत्वेन गृहीतधर्माङ्गीकारविरुद्धो व्यापकानङ्गीकार इति चेत् तर्हि धूममजानतः प्रतियोगिज्ञानाभावेन धूमाभावमप्यजानतोऽदर्शनात् वह्नि र्नास्तीति वदतो वादिनो वन्ह्यभावाङ्गीकारे धूमो न स्यादित्यापादनस्यासङ्गतत्वापत्तिः । तत्र वन्ह्यभावस्यधूमाभावव्याप्यत्वेनागृहीतत्वात् । तस्मादापत्ति र्विजातीयविषयतावज्ज्ञानमेव । यत्तु तर्कस्य भ्रमरूपत्वान्न प्रमाणत्वमिति । तत्तुच्छम् । तदभाववति तत्प्रकारत्वस्य भ्रमरूपत्वाभावात् । किन्तु तत्प्रकारकविजातीयविषयताश्रयज्ञानस्यैव भ्रमरूपत्वात् । तादृशविजातीयविषयताया आपत्तावनङ्गीकारात् । न च तथाऽपि तर्कस्य प्रमाजनकत्वं न सम्भवति । तर्केण हेतावप्रामाण्यशङ्कानिरासद्वारा व्याप्तिनिश्चय एव जायते । तेन प्रकृते हेतुनैव साध्यानुमितिरिति वाच्यम् । मध्ये पुनः परामर्शान्तरकल्पने गौरवापातात् । नन्वक्लृप्तस्य प्रकृतहेत्ववृत्तिव्याप्तिनिश्चयस्य कारणताकल्पनापेक्षया परामर्शन्तरकल्पनमेव ज्याय इति चेत् । शास्त्रे प्रकृतसाध्यव्याप्यहेतुमनुपन्यस्यापत्तिमात्रस्य शतधा क्रियमाणत्वेनापत्तेर्हेतुताया अपि क्लृप्तत्वात् । आपत्त्यनन्तरमनुमितिस्तावदनुभवसिद्धा साध्यं तर्कयामीत्यनुभवस्य सर्वसाक्षित्वात् । तत्र च व्याप्यस्यानुक्तत्वेन व्याप्यज्ञानाभावेन सिद्धे परिशेषादापत्तिजन्यत्वस्यैव सिद्धेः । न च तत्राप्यापद्यमानप्रतियोगिन एव हेतुत्वेनाभिमतत्वेन तद्धेतौ व्याप्यादिसिध्यर्थमेव तर्कोक्तिरिति वाच्यम् । अनुभवविरोधाद्गौरवाच्च ।

अन्यथा शब्दस्यापि पृथक् प्रामाण्यासिद्धिप्रसङ्गः । तत्रापि वैशेषिकोक्तदिशा व्याप्त्याद्यनुसन्धानेनैव शाब्दत्वेनाभिमतस्योत्पत्तिः । अक्लृप्तशब्दादिकारणत्वकल्पनापेक्षया व्याप्त्याद्यनुसन्धनकल्पनस्य गौरवानापादकत्वात् । शृणोमीत्यनुभवस्य शाब्दत्वस्यानुमितित्वव्याप्यधर्मत्वेनाप्युपपत्तेः । व्याप्त्याद्यनुसन्धानं तत्रानुभवविरुद्धमिति चेत् । अत्रापि व्याप्त्यन्तरानुसन्धानादिस्तथैवेति । किञ्चापात्तिस्थले आपादकाभावाभावत्वेन रूपेण साध्यानुमितिः । साधनस्थले वन्हित्वादिरूपेण वन्ह्याद्यनुमितिरिति फलभेदस्यानुभवसिद्धत्वात् । अत एवास्य दूषणानुमानत्वं प्रतिवाद्युक्तार्थाभावसाधकत्वात् । ननु तथाऽपि नापत्तेरनुमितिजनकत्वं किन्तु व्यतिरेकव्याप्तिज्ञानविपर्ययपर्यवसानयोर्द्वयोरेव हेतुत्वसम्भवान्नैयायिकादिभिरपि केवलव्यतिरेकिस्थले यन्न पृथिवीतरेभ्यो भिद्यते तन्न पृथिवीत्युदाहरणं न च नेयं तथेति पक्षे हेत्वभावाभावबोधकं चोपनयं साध्यभावाभावत्वेन साध्यबोधकं तस्मान्न तथेति निगमनं च दर्शयद्भिः साध्याभावे हेत्वभावव्याप्यत्वग्रहस्य व्यापकीभूतहेत्वभावाभावत्वेन पक्षे हेतुज्ञानस्य करणतायाश्चाङ्गीकृतत्वादिति चेन्न । तत्र व्यापकत्वेन गृहीतधूमाभावनिवृत्त्यैव वन्ह्यभावाभावज्ञानात् । तत्र च व्यापकाभावव्याप्याभावयोर्व्याप्तिज्ञानाभावे

व्यापकत्वेन गृहीतधूमाभावाभावग्रहेऽपि वन्ह्यभावाभावविषयकबुद्धेरनुदयेन यो यद्व्यापकशून्यः स तद्व्याप्यशून्य इति सामान्यव्याप्तिज्ञानसहकृत एव धूमाभावाभावग्रहो वन्ह्यभावाभावग्रहं जनयति । अत एव केवलव्यतिरेकिणो लिङ्गस्य सिद्धान्तेऽङ्गीकारः । उक्तसामान्यव्याप्तिग्रहमपेक्ष्यैव साध्यधी-जनकत्वात् । व्यतिरेकव्याप्तिग्रहस्य तादृशसामान्यव्याप्तिग्रहाभवे केवलव्यापकाभावग्रहेऽपि प्रकृतानुमित्यजनकत्वात् । एवं चापात्तिस्थले तादृशसामान्यव्याप्तेरनुसन्धानाभावेऽप्यनुमितेरनुभव-सिद्धत्वेनापत्तेः कारणत्वाङ्गीकारस्यैव युक्तत्वात् । अन्यथा सर्वत्रापत्तिरेवानुमितिकारणमनुमानं त्वापत्तिनिष्पत्त्यर्थमिति स्याद्विनिगमकाभावात् । अनुभवस्य च प्रकृतेऽपि प्रदर्शितत्वात् । अथ व्यापकत्वेन गृहीतधर्माभावज्ञानस्योक्तरीत्या सामान्यव्याप्तिग्रहसापेक्षत्वं कुतः सामान्यव्याप्तिग्रहसत्त्वे व्याप्याभावधीजनकत्वं तदभावे तदभाव इति सर्वानुभवसिद्धान्वयव्यतिरेकबलादेवेति । केचित्तु व्याप्तिस्तु साध्यसम्बन्धः । तदभावाधिकरणवृत्तित्वे सति तदधिकरणवृत्तित्वरूपः । प्रकृते हेत्व-भावाधिकरणवृत्तित्वस्य हेत्वभावाभावाधिकरणवृत्तित्वस्य च साध्याभावे भानेऽपि हेत्वधिकरणे साध्यसन्देहस्तु स्यादेव व्याहतत्वादेरभावात् । व्याघातबाधितत्वादिशङ्कया वह्न्यभावनिष्ठ-हेत्वाधिकरणावृत्तित्वस्य साध्यनिष्ठहेत्वधिकरणावृत्तित्वं प्रति साक्षाद्विरोधित्वाभावात् । यद्यपि हेत्वधिकरणे साध्यसन्देहस्य साध्याभावे हेत्वधिकरणवृत्तित्वावगाहित्वेन व्याप्तिज्ञानस्य तदभावा-वगाहित्वेन साक्षाद्विरोधिविषयकत्वेन प्रतिबन्धकत्वमेवेति प्रतिभाति । तथाऽपि साध्याभावे हेत्वधिकरणवृत्तित्वसंशयासम्भवेऽपि हेत्वधिकरणे साध्यधीजनकत्वासम्भवेन साध्यवत्तासंशयस्तु स्यादेव । तथा हि । वन्ह्यभावो धूमाभाववद्वृत्तिर्धूमाभावाभाववदवृत्तिश्च धूमाभावाभाववांश्च पर्वत इति ज्ञानसत्त्वेऽपि यस्मिन्धूमाभावाभावो ज्ञायते तदवृत्तित्वग्रह एव वन्ह्यभावे भवेत् न तु तस्मिन्वह्न्य-भावाभाववत्त्वम् । ननु भावाभावयोरन्यतरस्यावृत्तित्वेऽन्यतरस्य वृत्तित्वं नियतमेवेति वाच्यम् । उक्तनियमज्ञानकाले साध्याभावाभावे तद्वृत्तित्वग्रहजनकत्वेऽपि तज्ज्ञानाभावकाले तद्धीजनकत्वा-सम्भवात् । सर्वेषामुक्तनियमज्ञानं वर्तत एवेति न शङ्क्यम् । मायावादिषु तदभावात् । जगति मिथ्यात्वतदभावयोरुभयोरपि निषेधाङ्गीकारात् । किञ्चाप्रामाणिकप्रतियोगिकत्वमभावस्येति नियमोऽ-भावस्य प्रतियोग्यारोपे यत्प्रधानं तेन साकं विरोधः । अतो व्यतिरेकित्वं चेति मते देशविशेष-संसृष्टघटादिरूपासत्प्रतियोगिकाभावस्य प्रतियोग्यारोपे यत्प्रधानं तदधिकरणावृत्तित्वेऽपि तत्पति-योगिनोऽसद्विशेषस्य तत्र वृत्तित्वाभावात् । तन्मते भावाभावयोरेकतरनिषेधे एकतरसत्त्वनियम इत्यस्य गौणप्रतियोगिनं प्रतियोग्यारोपे प्रधानरूपमादायोपपादनं कार्यम् । तस्माज्ज्ञानद्वयसत्त्वेऽपि साध्याधि-करणतायाः शङ्कासम्भवेन धूमाभावाभाववति वन्ह्यभावाभावज्ञानमापत्तिमपेक्षत एव । आपत्तेरापादका

भावाभववद्विशेष्यकत्वनियमेन वन्ह्यभावाभाववत्त्वेन वन्हिप्रमितौ स्वतन्त्रकारणता स्वीक्रियते । पूर्वं सर्वानुभवस्य प्रदर्शितत्वात् । अत एवापत्तेः साध्यप्रमितौ स्वातन्त्र्येण हेतुत्वादनुमानमित्युच्यते । विपर्यये पर्यवसानं तु सहकारि । तस्मात्तर्कस्यानुमानसामान्यलक्षणाक्रान्तत्वादनुमानत्वं निर्बाधमित्यलं विस्तरेण । पर्वते यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्काभिलापकवाक्यस्यायमर्थः । यदीत्यत्र यत्पदस्य प्रमात्वेन गृह्यमाणं ज्ञानमर्थः । पूर्वं वादिवाक्येन तादृशज्ञानस्य बुद्धिस्थत्वात् । तदुत्तर-प्रत्ययस्य विषयताऽर्थः । तस्या अग्निपदार्थान्विते नञर्थेऽभावेऽन्वयः । पर्वतेऽग्निर्नेत्यस्य पर्वतवृत्तित्व विशिष्टवन्हिप्रतियोगिकाभाव इत्यर्थः । स्यादित्यस्य सत्ताश्रय इत्यर्थः । तथा च यद्यग्निर्न स्यादित्यस्य प्रमात्वेन गृह्यमाणज्ञानविषयताविशिष्टपर्वतवृत्तित्वविशिष्टवन्हिप्रतियोगिकोऽभावः सत्ताश्रय इति बाधः । इदं वाक्यं तर्हीत्यत्र तत्पदशक्तिग्रहाय तात्पर्यग्राह्यम् । तथा च तर्हीत्यत्र तत्पदस्य प्रमात्वेन गृह्यमाणं तादृशाभावविषयकं ज्ञानमित्यर्थः । तदुत्तरप्रत्ययस्य समकालीनत्वमुत्तरकालीनत्वं वाऽर्थः । स्यात्पदार्थे सत्तायामन्वयः । तस्या धूमोऽपि नेति वाक्यबोधे पर्वतवृत्तित्वविशिष्टधूमाभावेऽन्वयः । इत्थं च पर्वतवृत्तित्वविशिष्टवन्हिप्रतियोगिकाभावविशेष्यकसत्ताश्रयत्वप्रकारकं यत्प्रमात्वेन गृह्यमाणं ज्ञानं तत्कालीनसत्ताश्रयः । पर्वतवृत्तित्वविशिष्टधूमाभाव इति बोधः । सत्तायां विधिरूपत्वाभावान्न भ्रमत्वम् । वन्ह्यभावस्य व्याप्यत्वात्तदङ्गीकारे व्यापकीभूतधूमाभावाङ्गीकारो न्यायप्राप्त इति ज्ञापयितुं यदीत्याद्युक्तिः । तेन स्वक्रियाविरोधोऽपि सूचितो भवति । प्राचीनग्रन्थेषु प्रकारान्तरेणान्तर्भाव-प्रकारोक्तिसत्त्वेऽपि तदविरुद्धत्वादयमपि प्रकारो ज्ञातव्य इत्यलम् । ननु साहचर्यस्यैव व्याप्तित्वमस्तु किं नियमपदेन । न च धूमवान्वन्हेरित्यत्रातिव्याप्तिः । अयोगोलकीयवन्हौ तदभावेनातिव्याप्तेरभावात् । तदतिरिक्तवन्हेर्व्याप्तत्वमिष्टमेव । न च साहचर्यमात्रज्ञानादनुमित्यापत्तिः । हेतुतावच्छेदकावच्छेदेन साहचार्यज्ञानस्यानुमितिहेतुत्वेन तादृशज्ञानसत्त्वे इष्टापत्तिः । अत एव व्याप्तिप्रमाधीनानुमिते-र्भ्रमत्वानुपपत्तिरित्यपि निरस्तम् । हेतुतावच्छेदकावच्छेदेन साध्यसामानाधिकरण्यज्ञानस्य भ्रमत्वेनानु-मितेर्व्याप्तिप्रमाऽनधीनत्वात् । न च हेतुतावच्छेदकसामानाधिकरण्येन व्याप्तिज्ञानमप्यनुमितिहेतुः । तथा सति चैकधूमे वन्हिसामानाधिकरण्यनियमज्ञानेनापि धूमान्तरदर्शनादनुमित्यापत्तेः ।

**श्रीनि.—** ॥ **निर्दोबोपपत्तिरिति** । नन्वत्र निर्दोषपदकृत्यमस्ति न वा । नाद्यः । अनुमा युक्तिरेवोक्तेत्यनुव्याख्यानविरोधात् । तत्रैवकारेण निर्दोषत्वव्यावर्तनात् । न द्वितीयः । तद्ग्रहणानु-पपत्तेरिति चेत् । उच्यते । अत्रोपपत्तिर्हि लिङ्गमुच्यते । तच्च यदा प्रमाणलक्षणटीकानुसारेण साहचर्यबलेनार्थगमकं विवक्षितम् तदा पर्वतोऽग्निमान्प्रमेयत्वादिति व्यभिचारिण्यतिव्याप्तिः । यदा च मिथ्यात्वानुमानखण्डनटीकानुसारेण व्याप्तिबलेनार्थगमकं विवक्षितम् तदा ह्रदो वन्हिमान्धूमादिति

स्वरूपासिद्धे बाधिते चातिव्याप्तिरतो निर्दोषपदम् । तत्र व्याप्तिसमुचितदेशादिसिद्धिबलेनाविरुद्धार्थगमकत्वरूपमुख्यार्थस्य विवक्षितत्वाद्युक्तिरेवेत्युक्तम् । तदुक्तं सुधायाम् । अस्ति खलु शब्दानां मुख्यामुख्यभेदेन द्वयी वृत्तिः । एवं चोपपत्तिशब्दादुपपत्ताविव तदाभासेऽपि कृतम् । अत्र पुनरन्तर्गतं निर्दोषत्वं मुख्यमेवार्थमुपादाय युक्तिरित्येवोक्तम् । तदिदमुक्तं युक्तिरेवेति न तु निर्दोषत्वविशेषणतेत्यर्थ इति । एतदभिप्रायेण प्रमाणलक्षणटीकायां निर्दोषग्रहणमनुमानाभासाव्युदासर्थमित्युक्तम् ॥ **पर्याय इति ।** एकप्रवृत्तिनिमित्त इत्यर्थः । ननु कोऽयमविनाभावः । अविना साध्याव्यतिरेकेण साधनस्य भावो वा विना साध्यव्यतिरेकेण भावो वा । नाद्यः । साध्यसाहित्यरूपस्य तस्य त्वन्मते अनुमानाङ्गत्वाच्चेत्यतः प्रथमपक्षाङ्गीकारेणाविनाभावाब्दार्थमाह ॥ **साहचर्येति ।** द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः । अन्यथा तत्प्रयोगे वैय्यर्थ्यापत्तेः । अतिशयश्च व्याप्तिः । नियमश्चाव्यभिचार इति । इदं च सम्बन्धगर्भतयाऽविनाभावशब्दार्थकथनं पररीत्या । साध्यसम्बन्धकथनस्य प्रायिकत्वाभिप्रायेण वा । व्याप्तिस्तावदनुमानाङ्गम् । व्याप्तिश्च सम्बन्धविशेषः । न च व्याप्त्याश्रययोः सम्बन्धोऽस्तीति चेन्मैवम् । अविनाभावमात्रस्य व्याप्तित्वादिति भक्तिपादीयसुधायां सम्बन्धस्य व्याप्तित्वनिषेधात् । अत एव सर्वव्याप्तिसङ्ग्रहायाविनाभावो व्याप्तिरित्युक्तम् । अन्यथा साहचर्यनियम इत्येव ब्रूयात् । वस्तुतस्तु स्वदेशकालविशेषगतस्य साधनस्य स्वदेशकालगतविशेषगतसाध्येन विनाऽनुपपत्तिरेवाविनाभावशब्दार्थस्तर्कताण्डवरीत्या ध्येयः ॥ **व्याप्तेः कर्मेत्यादि ।** देवदत्तो ग्रामं प्राप्नोतीत्यत्रेव वन्हिर्धूमं व्याप्नोतीत्युक्ते वन्हिधूमयोः क्रमेण कर्तृकर्मभावप्रतीतेरिति भावः ।

**वि.—** प्रत्यक्षनिरूपणान्तरमनुमानं लक्षयति ॥ **निर्दोषोपपत्तिरिति ।** उपपत्तिशब्दार्थजिज्ञासायामाह ॥ **उपपत्तिरिति ।** उपपत्तिर्युक्तिर्लिङ्गं व्याप्यमित्यादिशब्दाः पर्याया इत्यर्थः । अत्रोपपत्तिर्व्याप्यमिति पर्यायावित्येतावताऽलम् । तावताऽप्युपपत्तिशब्दार्थज्ञानसम्भवात् । तथाऽपि युक्तिलिङ्गपदोपादानं भगवत्पादैरनुव्याख्यानेऽनुमा युक्तिरेवेत्युक्तत्वान्मिथ्यात्वानुमानखण्डने लिङ्गं हेतुरिति चोक्तत्वात्तद्विरोध इति शङ्कावारणाय । तथा च निर्दोषं व्याप्यमनुमानमित्यर्थः । न च प्रत्यक्षेऽतिव्याप्तिः स्वविषयघटादिसन्निकृष्टे निर्दुष्टे चक्षुरादीन्द्रिये निर्दोषत्वे सति घटाद्यर्थव्याप्यत्वस्य साक्षिणि निर्दोषत्वे सति सुखाद्यर्थव्याप्यत्वस्य च सत्त्वेन विशिष्टलक्षणस्य प्रत्यक्षे सत्त्वादिति वाच्यम् । व्याप्यमित्यनेन व्याप्यार्थगमकत्वस्य विवक्षितत्वात् । तदुक्तं प्रमाणलक्षणटीकायाम् । यथोपपत्तिर्लिङ्गं व्याप्तिबलेनार्थधीहेतुस्तथोपक्रमादयोऽपीति । व्याप्त्यपेक्षयाऽर्थगमकमनुमानमिति चोक्तमिति च । उक्तं च तत्रैवानुमानलक्षणव्याख्यानावसरे साहचर्यबलेनार्थगमकं लिङ्गमिति । अत्र साहचर्यपदं नियतसाहचर्यरूपव्याप्तिपरम् । अन्यथोदाहृतवाक्यद्वयविरोधात् । पद्धतौ ततश्चानुमानस्य

द्वयं सामर्थ्यम् । व्याप्तिः समुचितदेशादौ सिद्धिश्चेत्युक्तत्वेन व्याप्तेरनुमानत्वबलतया व्याप्त्यैकदेशस्य साहचर्यस्यानुमानबलत्वायोगात् । साहचर्यमात्रस्यानुमानाङ्गत्वे धूमस्य पक्षतानिश्चयदशायां साहचर्य-मात्रनिश्चयेनार्थगमकत्वापातात् । अस्मिन् लिङ्गे साध्यसाहचर्याभावाच्च । साहचर्यग्रहणं तु लिङ्गं प्रायेण साहचर्यवदेव भवतीति ज्ञापयितुं न तु लिङ्गपदस्य व्याप्यपदीयपर्यायत्वाभिप्रायेणेति बोध्यम् । तथा च निर्दोषं व्याप्त्याऽर्थगमकमनुमानमित्युक्तं भवति । प्रत्यक्षागमव्यवच्छेदाय व्याप्येति विशेषणम् । व्याप्तेः प्रत्यक्षागमसहकारित्वात् । तेन तद्व्यवच्छेदः । अत एव प्रमाणलक्षणटीकायां न ह्यागमव्याप्तिमनपेक्ष्य बोधकाबोधका अनुभूयन्त इत्युक्तम् । निर्दोषमविनाभावरूपम् । व्याप्त्यैक-देशेनावस्थानेनार्थगमकमनुमानमित्येवोक्तावनवस्थानपदेन सावधानावस्थानोक्तावसम्भवः । धूमादि-सद्धेतौ क्वापि सर्वथाऽनवस्थानस्याभावात् । साध्येन सहानवस्थानोक्तौ भूधूभादौ लक्ष्ये लक्षणस्यातः साध्येन सहनवस्थानस्य तत्राभावात् । अतस्तत्परिहारार्थं व्याप्यमित्युक्तम् । साध्यसामानाधिकरण्येषु नियतसामानाधिकरण्यं व्याप्तिरिति पक्षेऽपि सामानाधिकरण्यमात्रेण धूमादेरर्थगमकत्वाभावादनिर्दोषं साहचर्येणार्थगमकमनुमानमित्युक्तौ लक्ष्ये लक्षणस्याभावः । तत्परिहारार्थं व्याप्तौ हि विशेषणम् । व्याप्त्याऽर्थगमकमनुमानमित्येवोक्तौ वन्हिव्याप्ये स्वरूपासिद्धिर्धूमादावव्याप्तिस्तद्वारणाय निर्दोषपदम् । ननु प्रतिज्ञादृष्टान्तदोषा निर्दोषपदेनाव्यवच्छेद्या उत व्यवच्छेद्याः । नाद्यः । हेतुदोषस्येव प्रतिज्ञादोषस्य बाधप्रतिरोधादेरप्यनुमितिप्रतिबन्धकत्वेन निर्दोषपदव्यवच्छेद्यत्वात् । निर्दोषपदव्यवच्छेद्यतायां यस्यानुमितिरूपप्रमाप्रतिबन्धकत्वरूपदोषत्वस्योभयत्र साम्यात् । अन्यथा दोषस्यापि निर्दोषपद-व्यवच्छेद्यत्वापातात् । अविशेषात् । प्रत्यक्षलक्षणेऽपि करणदोषाणामेव निर्दोषपदव्यवच्छेद्यत्वान्न तु विषयदोषाणामित्यापाताच्च । द्वितीये बाधादिहेतुदोषान्तर्भूत इत्यङ्गीक्रियते उत तदनन्तर्भूत इति वा । नाद्यः । प्रमाणविरोधादीनां प्रत्यभिज्ञादिदोषत्वस्य वक्ष्यमाणत्वात् । द्वितीये हेतुविशेषणेन निर्दोषत्वेन तद्व्यवच्छेदो न युक्त इति चेन्न । हेतुविशेषणेनापि निर्दोषत्वेन तद्व्यवच्छेदसम्भवात् । तथा हि । प्रमाणप्रतिबन्धकरहितोपपत्तिर्हि निर्दोषोपपत्तिः । अनुमितिरूपप्रमाप्रतिबन्धकत्वं च निर्दोषपद-व्यवच्छेद्यतया तत्रानुमितेश्च तावदविवादम् । तच्च हेतुदोषयोरिव प्रतिज्ञादृष्टान्तदोषाणामप्यस्त्येव । असिध्यादिहेतुदोषसद्भाव इव बाधादिप्रतिज्ञाविशेषसद्भावेऽपि लिङ्गेन प्रमारूपानुमित्यनुदयात् । अत एवाव्यापके तत्रोपपत्तिदोषा यत्सद्भावे लिङ्गाभिमतं ज्ञानमेव न जनयन्ति संशयविपर्ययौ वा कुर्वन्ति ते दोषा इत्यनेन प्रतिज्ञादिदोषसाधारण्येनैव निर्दोषपदव्यवच्छेद्यदोषात् । वक्ष्यति । उक्तं च विष्णुतत्त्व-निर्णयटीकायाम् । तथा च वक्ष्यमाणविरोधादिदोषरहितमुपपत्तियुक्त्यादिशब्दवाच्यमनुमेति । तथा च हेतुदोषसद्भाव इव प्रतिज्ञादृष्टान्तदोषसद्भावे लिङ्गस्य सदोषत्वमेव । तथा च न दाहजनकत्वा-

भावसम्पादकमणिमन्त्रौषधादिप्रतिबन्धकस्य पुरुषादिनिष्ठत्वेऽपि स प्रतिबन्धक एव तदभावे वन्हेः प्रतिबन्धकशून्यत्वमेव लिङ्गस्यापि प्रमितिजनकत्वाभावसम्पादकत्वस्य स्वनिष्ठस्य वा दोषसत्त्वे दोषत्वमेवेति तेन प्रतिज्ञादृष्टान्तदोषव्यवच्छेदो युक्त एव । नन्वेवं सति प्रत्यक्षेणेन्द्रियविशेषणेनादोषत्वेनार्थदोषव्यवच्छेदोऽस्त्विति चेन्न । अर्थस्यापि तत्र लक्षणेऽवश्यं विशेषणीयत्वादर्थदोषरहितस्यैव वाऽर्थस्य तत्र प्रवेशकथनमात्रेणार्थदोषव्यवच्छेदसम्भवादिन्द्रियविशेषणनिर्दोषत्वस्य तद्व्यवच्छेदकत्वकल्पकाभावादिति । नन्वेवं सति यादृच्छिकसंवादादिलिङ्गस्य निर्दोषत्वमुत सदोषत्वम् । नाद्यः । असिध्यादेरदोषत्वापातात् । न द्वितीयः । सति प्रमाप्रतिबन्धके दोषे तेन प्रमोत्पत्त्यसम्भवादप्रमोत्पत्तिप्रसङ्गाच्चेति चेन्न । तस्य सदोषत्वाभ्युपगमात् । न चोक्तदोषप्रसक्तिः । उत्तेजकाभावकाल एव तस्य प्रतिबन्धकत्वात् । विषयस्तत्त्वस्योत्तेजकतया प्रमाप्रतिबन्धकत्वयोग्यदोषे सत्यप्युत्तेजकाभावविशिष्टाप्रमाप्रतिबन्धक- त्वोपेतस्य दोषस्य तत्राभावेनोक्तचोद्यानवकाशादिति । उपपत्तिर्व्याप्यमुक्तम् । तत्र का व्याप्तिरिति जिज्ञासायां व्याप्तिलक्षणमाह ॥ **अविनाभाव इति ॥ येन विना यस्य भावः सत्त्वम् ।** अवस्थानमिति यावत् । अभावोऽनवस्थानं तत्तस्य व्याप्तिरित्यर्थः । अत एव सुधायां जीवतो गृहेऽभावस्यानुपपद्यमानहानात्किं सर्वथाऽसम्भवः किं वा बहिर्भावेनानवस्थानमिति विकल्प्याद्यदूषणमभिधाय द्वितीये व्याप्तिरेव सेतीत्युक्तम् । या तु प्रमाणलक्षणटीकायां केनचिद्विना कस्यचिदनवस्थानं हि तयोर्व्याप्तिं विनोपपद्यत इत्यव्याप्त्यनवस्थानरूपनुपपत्त्योर्भेदोक्तिः सा व्याप्त्यानुपपत्तौ भेद इति परमतमभ्युपेत्यार्थापत्तेरनुमानान्तर्भावकथनार्थं प्रवृत्ता न तु केनचिद्विना कस्यचिदनवस्थानरूपानुपपत्तेः वस्तुनोर्व्याप्तिर्भेदोऽस्तीत्यभिप्रेत्यान्यथा द्वितीये व्याप्तिरेव सेतीति सुधावचनविरोधात् । प्रमाणलक्षणटीकायामपि परिशेषादेव मानत्वानङ्गीकारे धूमोऽप्यनुपपत्त्याऽग्निं गमयन्नानुमानं स्यादिति । तदुत्तरवाक्येऽनुमानाङ्गभूतव्याप्तावनुपत्तिपदप्रयोगाच्च । तथा च यस्य स्वाधिकरणत्वानधिकरणान्यतरागतेन येन विना यदवस्थानं तदभावस्य तेन व्याप्तिरित्युक्तं भवति । अधिकरणं च देशः कालश्च । एवं च समानाधिकरणयोरिव व्याश्रययोरपि व्याप्तिर्लक्षिता भवति । नदीपूरादेः स्वाधिकरणदेशकालसम्बन्धवृष्ट्यादिनाऽवस्थानाभावेन न लक्षणस्य तत्र सत्त्वात् । न ह्यूर्ध्वदेशपूर्वकालयोर्वृष्ट्याद्यभावेऽधोदेशोत्तरकालयोर्नदीनूरस्यावस्थानं सम्भवति । ननु तदभाववति विद्यमानस्य नदीपूरादेस्तेन व्याप्तिर्न सम्भवतीति चेन्न । संयोगाभाववति विद्यमानस्य द्रव्यत्वादेरिवास्यापि व्याप्तिसम्भवात् । अनुभवबलात्तत्सङ्ग्रहेण व्याप्तिलक्षणं वाच्यमित्येतदत्रापि समानां व्याश्रययोरपि व्याप्तेरनुभवसिद्धत्वात् । लोको ह्यधोभागे नदीपूरं दृष्ट्वोर्ध्वभागो वृष्टिमानित्यनुमिनोति । न च केवलान्वयिसाध्यकस्य हेतोर्व्याप्त्यभावप्रसङ्गः । साध्याभावस्यासत्त्वादेव साध्यभावे सति

यदवस्थानं तदभावरूपव्याप्तेस्तत्रासम्भवात् । अत एव भावनिरूपकत्वादसतोऽवस्थानस्य कथमभाव इति चेन्न । अतीतानागतयोरसतोरेवाभावनिरूपकत्व-दर्शनादुक्तनियमाभावात् । कदाचित्स तोरस्तीति चेत्किं तावता निरूपणकाले सत्त्वस्याभावेनाभाव निरूपणे तस्यानुपयुक्तत्वात् । अन्यथा भिन्नकाल-गतसत्त्वस्येव भिन्नदेशगतसत्त्वस्यापि कार्योपयोगितापत्त्या भिन्नदेशे सता दण्डेन घटरूपकार्योदय-प्रसङ्गात् । घटस्यापि प्रथमक्षणे प्रत्यक्षतापाताच्च । प्रत्यक्षताप्रयोजकस्य महत्त्वे सत्युद्भूतरूपवत्त्वस्य कदाचित्तत्र सत्त्वादिति समानाधिकरणहेतुनिष्ठव्याप्तेर्बहुवादिसम्मतत्वात्प्रयिकत्वाच्च । तत्र व्याप्तिलक्षणं प्रदर्शयितुमविनाभावरूपव्याप्तिः समानाधिकरणेषु हेतुषु नियतसामानाधिकरण्यरूपत्वेन पर्यवस्य-तीत्यभिप्रेत्य साहचर्यनियम इत्याह ॥ **साहचर्यनियम इति ।** द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायात्साध्येन विनाऽवस्थानाभावप्रतिपादकस्याविनाभावशब्दस्य साध्यसमानाधिकरणहेतुषु साध्येन सहैवावस्थाननाशपर्यवसानात्साध्यसमानाधिकरणहेतुषु साहचर्यनियमोऽविनाभावशब्दार्थ इति बोध्यम् । एतेन नियतासामानाधिकरण्यस्याव्याप्तित्वे व्याश्रययोर्व्याप्तिर्न स्यादिति चोद्यं निरस्तम् ॥ **साहचर्या-नियम इति ।** यावदित्यस्य वचनस्याविनाभावः साध्यसामानाधिकरण्येषु हेतुसाध्यनियतसामानाधि-करण्यरूपं साध्यसम्बन्धमन्तर्भाव्यं भवतीत्यभिप्रायेण प्रवृत्तत्वात् । तथा च सर्वेष्वपि हेतुषु नायमविनाभावशब्दार्थ इति नोक्तचोद्यावकाश इति । तदुक्तं सुधायाम् । स्यादेतत् । व्याप्तिस्ताव-दनुमानाङ्गम् । सम्बन्धविशेषश्च व्याप्तिः । न च व्याश्रययोः सम्बन्धो युज्यते । अतो व्याश्रयस्या-दोषत्वात् । सम्मते विषये विपरिणाम इति । मैवम् । अविनाभावमात्रस्य व्याप्तित्वात् । सम्मते विषयेऽपि विपरिणाम इति मैवम् । अविनाभावमात्रस्य व्याप्तित्वात् । अविनाभावश्च क्वचिदेकाश्रयत्व-मान्तर्भाव्य भवति । यथा कृतकत्वस्यानित्यत्वेन । अत एवान्यगतेन कृतकत्वेन नित्यत्वासिद्धिः । क्वचिद्भिन्नाश्रययोरेव यथा धूमस्याग्निनेति । तथा च साध्याधिकरणवृत्तिरूपसाध्यसम्बन्धवस्तुहेतुषु यस्य नियतसम्बन्धः स तस्य व्याप्तिरित्युक्तं भवति । न च नियमस्य निरुच्यमानव्याप्तित्वादात्माश्रय इति वाच्यम् । नियमशब्देन व्याप्त्यैकदेशभूताव्यभिचारस्यैव कथनात् । अत एव धूमस्याग्निना व्याप्ति-रव्यभिचरितसम्बन्ध इति वक्ष्यति । उक्तं च सुधायाम् । नियतः सम्बन्धो व्याप्तिः । नियमश्चा-व्यभिचार इति । व्याप्तेरुभयनिरूप्यत्वात्किं तत्र व्याप्यमिति जिज्ञासायामाह ॥ **व्याप्तेः कर्मेति ।** यद्वाऽऽप्नोतीति क्रियाकारककर्मतद्व्याप्यमित्यर्थः । व्याप्तिरूपक्रियाकर्मणा व्याप्यत्वे तस्याः कर्म किमिति जिज्ञासायामाह ॥ **तस्या इति ।** समानाधिकरणेषु हेतुष्वविनाभावशब्दोक्तं नियतसम्बन्धरूपं व्याप्तेर्लक्षणं लक्ष्ये दर्शयति ॥ **यथेति ।** अव्यभिचरितः स्वाश्रयजातीये सर्वत्र विद्यमानाधीनः सम्बन्धः साध्याधिकरणवृत्तित्वरूपसाध्यसम्बन्ध इत्यर्थः । यद्यपि सुधायां धूमाग्नी खलु न

समवायवृत्त्या समानाश्रयौ नापि संयोगवृत्त्योर्ध्वदेशसंयोगत्वाद्धूमस्याधोदेशसंयोगस्यासिद्धत्वादित्युक्तत्वान्न सामानाधिकरण्यरूपः सम्बन्धस्तयोरस्ति । तथाऽप्येकपर्वतसंयोगिता द्वयोरस्तीत्येतावतैव सामानाधिकरण्यरूपसम्बन्धोक्तिरिति बोध्यम् । अत एव सुधायां तथाऽप्येकपर्वतसंयोगिता द्वयोरस्तीति चेदित्युक्तम् । लक्षणसत्त्वमुपपादयति ॥ **यत्रेति** । धूम इत्यनन्तरमग्निरित्यनन्तरं चास्तीति शेषः । इति हेतोर्नियमाद्वन्हिसम्बन्धस्य धूमेऽव्यभिचार इत्यर्थः । धूमाग्न्योर्व्याप्तिरुक्ता । तत्र व्याप्तिकर्मकत्वरूपं व्याप्यत्वं कस्य तत्कर्तृकत्वं रूपं व्यापकत्वं च कस्येति जिज्ञासायामाह ॥ **तत्रेति** । धूमाग्न्योर्मध्य इत्यर्थः ।

## धर्माणां व्याप्यव्यापकभावव्यवस्था

**(२) प्र.प.— चतुष्टयी खलु धर्माणां गतिः । केचित्समवृत्तयो यथा निषिद्धत्वपापसाधनत्वे । यत्र निषीद्धत्वं तत्र पापसाधनत्वं यत्र पापसाधनत्वं तत्र निषिद्धत्वमिति नियमात् । तत्र द्वयोरप्यन्योन्यं व्याप्यव्यापकभावः । केचिन्न्यूनाधिकवृत्तयः । यथा धूमवत्त्वाग्निमत्त्वे । तत्र न्यूनवृत्ति धूमवत्त्वं व्याप्यमेव । अधिकवृत्यग्निमत्त्वं व्यापकमेव । केचित्परस्परपरिहारेणैव वर्तन्ते । यथा गोत्वाश्वत्वे । यतो यत्र गोत्वं न तत्र सर्वथाऽश्वत्वम् । यत्र चाश्वत्वं न तत्र सर्वथा गोत्वम् । तेषां नान्योन्यं व्याप्यव्यापकभावः । सम्बन्धस्यैवभावात् । केचित्क्वचित्समाविष्टा अपि क्वचित्परस्परपरिहारेणैव वर्तन्ते । यथा पाचकत्वपुरुषत्वे । तयोः पुरुषविशेषे समावेशेऽपि पाचकत्वं पुरुषत्वपरिहारेण स्त्रीषु वर्तते । पुरुषत्वमपि पाचकत्वपरिहारेणापचति पुरुषे वर्तते । तेऽपि नान्योन्यं व्याप्यव्यापकभाववन्तः । सत्यपि सम्बन्धे परस्परव्यभिचारित्वात् । तत्र व्याप्यो धर्मो व्यापकप्रमितिसाधनं भवन्ननुमानमित्युच्यते । व्यापकश्चानुमेय इति ।**

**जना.–** शिष्यव्युत्पादनायानुपपत्तिनियम्यं साहचर्यमनेकविधमिति वक्ष्यन्साहचर्यनिरूपकान् धर्मभेदानाह ॥ **चतुष्टयीत्यादिना** ॥ **व्याप्यमेवेति** । न तु व्यापकमित्यर्थः । अधिकवृत्तीत्यग्निमत्त्वस्य व्यापकत्वे हेतुगर्भविशेषणम् । अधिकवृत्तित्वादिति भावः । व्यापकमेव न तु व्याप्यमपीति भावः ॥ **सम्बन्धस्यैवेति** । अधोदेशनदीपूरोर्ध्वदेशवृष्ट्योरिव ज्ञाप्यज्ञापकभावसम्बन्धस्याभावादिति तदर्थः । न तु सामानाधिकरण्यसम्बन्धस्यैवाभावादित्यर्थः । तदभावेऽपि नदीपूरवृष्ट्योरनुपपत्तिलक्षण व्याप्तेरुपपादितत्वादिति ज्ञेयम् ॥ **सत्यपि सम्बन्ध इति** । सामानाधिकरण्ये सत्यपीत्यर्थः । परस्परव्यभिचारित्वात् परस्परं विनोपपत्तेरित्यर्थः । नन्वनुमानशब्दस्य ल्युडन्तत्वाल्लयुटश्च कृत्यल्युटो बहुलम् करणाधिकरणयोश्चेत्यनेकार्थत्वादत्र कोऽर्थो विवक्षित इति प्रश्नानुपसंहारव्याजेन परिहरति ॥ **तत्रेति** ।

इत्युक्तचतुर्विधधर्माणां मध्य इत्यर्थः ।। **प्रमितिसाधनं भवन्निति ।** एवं चानुमीयते येन तदनुमानमिति करणसाधनोऽनुमानशब्द इत्युक्तं भवति ।

**राघ.–** अत्र विशेषणविशेष्ययोर्व्यावर्त्यं व्यक्तीकर्तुं तथाऽव्यभिचरितत्वं सम्बन्धिनोरन्योन्य-सम्बन्धस्यान्यतरेणान्यतरसम्बन्धस्य चेति द्वेधा विवक्षितमिति दर्शयितुं च धर्माणां स्थितिमाह ।। **चतुष्टयीति ।** धर्माणां गतिः स्थितिश्चतुष्टयी चतुरवयविका चतुष्प्रकारेति यावत् । सङ्ख्याया अवयवे तयबिति चतुश्शब्दादवयवार्थे तयप् ।। **व्याप्यमेवेति ।** एतेन समवृत्तयो न्यूनाधिकवृत्तयश्चोभयेऽपि लक्ष्या इति दर्शितम् । एवकारेण धूमस्याग्निसम्बन्धाव्यभिचारेऽप्यग्नेर्धूमसम्बन्धस्य व्यभिचारात्कथं तयोस्सम्बन्धोऽव्यभिचरित इति निरस्तम् । अग्नेर्धूमसम्बन्धस्यालक्ष्यत्वेनादोषतया तस्याव्यभिचरि-तत्वविशेषणेन व्यावर्त्यत्वादिति । सम्बन्धपदव्यावर्त्यमाह ।। **केचिदिति ।** अव्यभिचरितत्वविशेषण-व्यावर्त्यमाह । **केचिदिति ।** एवमियता ग्रन्थेन व्याप्यमुपपत्तिरिति व्युत्पाद्याधुना करणसाधन-ल्युडन्तानुमानपदोक्तानुमितिकरणत्वं दर्शयन्नुपपत्तिशब्दोक्तव्याप्यस्यानुमानत्वं व्यनक्ति । **तत्रेति ।** व्याप्यव्यापकयोर्मध्य इत्यर्थः ।

**वेदे.–** ननु धर्माणां बहुविधत्वात्केचिद्व्यभिचारिणो येऽव्यभिचारपदव्यवच्छेद्याः के च व्याप्य-व्यापकभावोपेता येऽत्र लक्ष्याः । न हि धूमानुमान इव सर्वत्र व्याप्यव्यापकभावप्रकारः । कीदृशस्य व्याप्यत्वं व्यापकत्वं च व्याप्यव्यापकयोश्च कस्यानुमानत्वं कस्य चानुमेयत्वमिति जिज्ञासायामाह ।। **चतुष्टयीत्यादिना ।** गतिः स्थितिः ।

**अभि.–** ।। **धर्माणां गतिरिति ।** धर्मयोश्च धर्मयोश्च धर्मयोश्च धर्माणां चतुर्धेत्यर्थः । द्वयोर्द्वयो-र्धर्मयोर्मेलनेन स्वरूपानिरीक्षणे वक्ष्यमाणप्रकारेण चतुर्धा गतिर्दृश्यत इत्यर्थः ।। **अन्योन्यं व्याप्य-व्यापकभाव इति ।** अत्र सर्वत्रापि व्याप्यशब्दो व्याप्त्याश्रयपरः । व्यापकशब्दस्तु व्याप्तिनिरूपण-कर्तृपर इति बोध्यम् ।

**आद.–** किञ्च व्याप्तिकर्मत्वं न व्याप्यत्वं किन्तु व्याप्तिसम्बन्धित्वमेव । अत एव पापसाधनत्व-व्यापकेऽपि निषिद्धत्वे व्याप्यत्वव्यवहारः । उक्तरीत्या व्याप्तिकर्मत्वस्यैव व्याप्यत्वरूपत्वे सर्वस्यापि पदार्थस्य व्याप्तिग्रहदशायामनुमापकत्वमध्यक्षसिद्धमिति व्याप्तिज्ञानाहितानुमिति जननानुकूलशक्तिमत्त्वं केवलान्वयीति न लक्ष्यालक्ष्यविभागो युज्यत इत्यत आह ।। **चतुष्टयी खल्वित्यादिना ।** चतुष्टयी चतुः प्रकारोपेता गतिः स्थितिः समव्याप्ता विषमव्याप्ता व्यभिचारिणो विरुद्धा इति चतुर्विधा धर्मा इत्यर्थः ।

व्याप्यमेव व्याप्यत्वेन व्यवहारविषय एव। व्यापकमेव व्यापकत्वेन व्यवहारविषय इत्यर्थः। अन्योन्यं न व्याप्यव्यापकभाव इति तत्त्वेन व्यवहारविषयत्वाभावो दृष्टान्तविधयोक्तिः ॥ **परस्परव्यभिचारित्वादिति।** परस्पराभाव-सम्बन्धवत्त्वादित्यर्थः ॥ **तत्र व्याप्यो धर्म इति।** व्याप्त्याश्रय इत्यर्थः। अयमाशयः। अत्र तत्पक्षतत्साध्यकानुमितिबोधकपदसमभिव्याहृतसद्धेतुपदव्यवहारविषयो लक्ष्यः। तादृशव्यवहारविषयावच्छेदकस्य निरुक्तिः कर्तव्या। लोके व्याप्त्याश्रये व्याप्य इति प्रचुरव्यवहारः प्राय आश्रयस्यैव कर्मत्वात्। व्याप्तिभ्रमेणानुमितिजननेऽपि तादृशानुमितिजननानुकूला शक्तिर्न स्वारसिकी किन्त्वाहिता व्याप्तिभ्रमात्मकदोषप्रयोज्यत्वात्। तत्प्रमाधीना शक्तिः स्वाभाविकी प्रमाधीनत्वात् दोषाप्रयोज्यत्वात्। अत एव व्याप्त्याश्रय एव लोकानां व्याप्य इति व्यवहारः। न च भ्रमाहितशक्तिरपि स्वाभाविकी। तथा सति विरुद्धेऽपि व्याप्य इति व्यवहारापत्तेः।

नन्वत एव न व्याप्तिकर्मत्वं व्याप्यपदप्रवृत्तिनिमित्तमिति चेत्। कर्मवाचकयत्प्रत्ययान्तत्वेन व्याप्तिकर्मत्वावच्छिन्नवाचकत्वस्य प्रमितत्वाद्वह्निर्धूमं व्याप्नोतीति प्रयोगेन धूमादेः कर्मत्वस्यावश्यकत्वाच्च। न चाश्रयत्वमेव व्याप्तिकर्मत्वमिति वक्तुं युक्तम्। क्रियाजन्यफलशालित्वस्य कर्मत्वरूपत्वस्य सुप्रसिद्धत्वात्। तादृशकर्मबोधतात्पर्येण धूमो वह्निं व्याप्नोतीति मुख्यप्रयोगस्य दुर्वारत्वात्। तस्माद्भ्रमाहितशक्तिरस्वाभाविकी। बाधोत्तरं तादृशशक्तेरसत्त्वेन कादाचित्कत्वात्। अत एव धूमादौ व्याप्तिग्रहेऽप्रामाण्यग्रहकालेऽनुमित्यजननेऽपि धूमोऽनुमितिजनक एवेति लोका व्यवहरन्ति। किञ्च यत्र धूमस्तत्राग्निरिति व्याप्तेर्धूमोऽनुमितिजनक इति लोकप्रवादः। पञ्चम्याः प्रयोजकत्वमर्थः। तस्य जनकतायामन्वयः। तथा च व्याप्तिप्रयोज्यत्वं जनकतारूपायां शक्तौ सिध्यति। न च तत्र ज्ञाप्यत्वं पञ्चम्यर्थः। कुतो धूमाद्वन्ह्यनुमितिर्जायते प्रमेयत्वान्न जायत इति प्रश्नेऽस्य वाक्यस्योत्तरत्वानुपपत्तेः। तत्र धूमनिष्ठानुमितिजनकतायां निमित्तस्यैव पृष्टत्वेन वह्नौ प्रमाणस्यास्पष्टत्वात्। धूमज्ञानवह्न्यनुमित्यो र्जन्यजनकभावे वा प्रमाणस्यास्पष्टत्वात्। व्याप्तिस्तु ज्ञातैव सहकारिणीति व्याप्तिप्रमाप्रयोज्यैव शक्तिः स्वाभाविकी। तथा च व्याप्तिप्रमाप्रयोज्यानुमिति जननानुकूलशक्तिमत्त्वं सद्धेतावेव न केवलान्वयीति न सर्वस्यापि लक्ष्यत्वापत्तिः। व्याप्तिप्रमाप्रयोज्यतादृशशक्तिमत्त्वस्योपपत्तियुक्त्यादिपदमुख्यार्थत्वाभिप्रायेणानुमा युक्तिरेवोक्तेत्यादौ निर्दोषत्वरूपविशेषणानुक्तिः। न च बाधितादिव्यावृत्त्यर्थं निर्दोषत्वविशेषणमावश्यकमिति वाच्यम्। बाधितादेः समुचितदेशवृत्तित्वरूपपक्षधर्मताविकलत्वे तन्निष्ठानुमितिजननानुकूलशक्तेरप्य-स्वाभाविकत्वात् सामानाधिकरण्यादिरूपसाध्यसम्बन्धज्ञानमात्रस्य नानुमितिजनकत्वं सम्भवति। तथा सति वह्निज्ञानादपि धूमप्रमोत्पत्त्यापत्तेः। न चोक्तमेव हेतुतावच्छेदकावच्छेदेन व्याप्तिज्ञानमेवानुमितिहेतुरिति वाच्यम्। हेतुतावच्छेदकावच्छेदेनेत्यस्य कोऽर्थः।

हेतुतावच्छेदकाश्रयासु निखिलव्यक्तिष्विति चेत् । तर्ह्यनाद्यनन्तनिखिलकालीनधूमव्यक्त्युपस्थित्यभावकालेऽनुमित्यनुपपत्तिः । न चेष्टापत्तिः अनुभवविरोधात् । सामान्यप्रत्यासत्त्या तत्सम्भवेऽपि प्रकृतहेतुव्यक्तावपि सामानाधिकरण्यज्ञानस्य पूर्वं सत्त्वापत्त्या व्याप्तिज्ञानस्यैवानुमितिरूपत्वापत्तेः । उत्सर्गस्थले व्याप्तिज्ञानस्य नियमेन भ्रमत्वापत्तेश्च । तत्र नियमेनापवादस्थले साध्यसम्बन्धाभावेन तद्व्यक्तौ साध्यसम्बन्धावगाहित्वात् । मन्मते तु साध्याभावप्रतियोगिकानौपाधिकसम्बन्धस्य हेतावभावेन तद्वत्प्रतियोगिकाभाववत्साजात्यरूपव्याप्तिज्ञानस्य प्रमात्वसम्भवात् । अत एव हेतुतावच्छेदकव्यापकत्वं साध्यसम्बन्धे भासत इति पक्षोऽपि परास्तः । उत्सर्गव्याप्तिस्थले व्याप्तिग्रहस्याप्रमात्वापत्तेः । लाघवाद्यभावाच्चेति । किञ्च सामानाधिकरण्यमात्रस्य व्याप्तित्वे धूमो वह्निव्याप्य इतिवद्वह्निर्धूमव्याप्य इति व्यवहारः स्यात् । न चेष्टापत्तिः । व्यभिचारास्फूर्तिदशायां तादृशव्यवहारदर्शनादिति वाच्यम् । तर्हि विरुद्धेऽपि विरोधास्फूर्तिदशायां व्याप्य इति व्यवहारदर्शनेन तस्यापि व्याप्यत्वापत्त्या सामानाधिकरण्यस्यापि व्याप्तित्वं न स्यात् । ननु तथाऽपि पापसाधनत्वव्यापके निषिद्धत्वादावपि व्याप्य इति व्यवहाराद्व्याप्तिसम्बन्धित्वमेव व्याप्यत्वं वक्तव्यं न तु व्याप्त्याश्रयत्वम् । व्याप्तिकर्मत्वं व्याप्तेः कर्म व्याप्यमित्युक्तिः कथमिति चेन्न । निषिद्धत्वादेरपि व्याप्त्याश्रयत्वमस्त्येव । व्याप्तिकर्मत्वमपि तत्रैव तयोः समव्याप्तत्वात्तदभिप्रायेणैव व्याप्य इति व्यवहारः । अन्यथा विषमव्याप्तिस्थले धूमो वह्निव्याप्य इतिवद्वह्निर्धूमव्याप्य इति व्यवहारापत्तेः । न चास्ति तथा व्यवहारः किन्तु व्यापक इत्येव । अतो व्याप्यो धर्मो व्यापकप्रमितिसाधनं भवन्नेवानुमानमुच्यत इति व्याप्तिकर्मत्वमेव व्याप्यत्वमित्युक्तिर्युक्तैवेति ।

**वि.–** धर्माणामानन्त्यात्तेषु कयोरन्योन्यव्याप्यव्यापकभावः । कयोर्व्याप्यव्यापकभावमात्रं कयोश्च व्याप्यव्यापकभाव एव नास्तीति जिज्ञासायामाह ॥ **चतुष्टयी खल्विति** । गतिः स्थितिरित्यर्थः ॥ **समवृत्तय इति** । अन्यूनानधिकवृत्तिः सत्त्वं येषां ते तथोक्ता इत्यर्थः ॥ **यथानिषिद्धत्वं पापसाधनत्वे इति** । समवृत्तित्वमुपपादयति ॥ **यत्रेति** ॥ निषिद्धत्वनित्यनन्तरं पापसाधन्वमित्यनन्तरं वाऽस्तीति शेषः । इति हेतोः निषिद्धत्वपापसाधनत्वदोरन्योन्यसम्बन्धस्य नियमाददव्यभिचार इत्यर्थः ॥ **तत्र द्वयोरिति** । तत्र तयोर्द्वयोर्निषिद्धत्वपापसाधनत्वयोरित्यर्थः ॥ **यथा धूमत्वाग्निमत्त्वे इति** । न्यूनाधिकवृत्तीति शेषः ॥ **तत्रेति** । तयोर्धूमाग्न्योरित्यर्थः । व्याप्यव्यापकभावाभावश्च द्वेधा ज्ञातव्य इत्याह ॥ **केचिदित्यादिना ॥ परस्परपरिहारेणैव वर्तन्त इति** । अन्योन्यसत्त्वाभाववत्येव वर्तन्त इत्यर्थः । **यथा गोत्वाश्वत्वे इति** । परस्परपरिहारेण वर्तमाने इति शेषः ॥ **यतो यत्र गोत्वमिति** । गोत्वमित्यनन्तरमश्वत्वमित्यनन्तरं वाऽस्तीति शेषः । यत्र गोत्वमस्ति तत्र सर्वथा क्वाप्यश्वत्वं नास्ति ।

यत्राश्वत्वमस्ति तत्र सर्वथा क्वापि गोत्वं नास्ति । यतोऽतो गोत्वाश्वत्वे परस्परविरहेण वर्तमाने इति पूर्वेणान्वयः ॥ **तेषामिति** । परस्परपरिहारेणैव वर्तमाने इत्यर्थः । यद्यपि परस्परपरिहारेणैव वर्तमानयोरधोदेशनदीपूरोर्ध्वदेशवृष्ट्योरस्ति व्याप्यव्यापकभावस्तथा नियमतः सामानाधिकरण्य-रूपपर्यवसन्नाविनाभावरूपव्याप्त्यपेक्षया व्याप्यव्यापकभावपरमिदं वचनमिति नोक्तशङ्कावकाश इति बोध्यम् ॥ **सम्बन्धस्यैवाभावादिति** । तदधिकरणवृत्तित्वरूपतत्सम्बन्धस्यैवाभावादित्यर्थः । एवेत्यनेन व्याप्यव्यापकभावस्य दौर्घट्यं ज्ञापयति ॥ **केचिदिति** । कचित्समाविष्टा अपि क्वचिद्देशे सहवर्तमाना अपि । परस्परपरिहारेणान्योन्यंसत्त्वव्यतिरेकेणेत्यर्थः ॥ **यथा पाचकत्वपुरुषत्वे इति** । क्वचित् समावेशेऽपि परस्परपरिहारेण वर्तमाने इति शेषः । समावेशेऽपि सहावस्थानेऽपीत्यर्थः । अपचति पुरुषे वर्तमाने यतोऽत इति शेषः । अस्य पाचकत्वपुरुषत्वे समाविष्टेऽपि परस्परपरिहारेण वर्तमाने इति पूर्वेणान्वयः ॥ **तेऽपीति** । यतः परस्परपरिहारेणैव वर्तमानधर्मास्तथा क्वचित्समाविष्टा अपि परस्परपरिहारेण वर्तमानाः पाचकत्वपुरुषत्वादयो धर्मा इत्यर्थः । तत्र व्याप्यभावहेतुमभिप्रेत्य तमुपपादयति ॥ **सत्यपि सम्बन्ध इति** । पाचकत्वपुरुषत्वादिधर्माणां परस्परमन्योन्यं सम्बन्धे समानदेशत्वरूपसम्बन्धे सत्यपि व्यभिचारित्वात्स्वाश्रयजातीये सर्वत्रावर्तमानत्वादित्यर्थः । ननु व्याप्यव्यापकयोर्व्याप्तिसम्बन्धित्वाविशेषादुपपत्तिरनुमानमित्युक्तौ किं निमित्तमित्यत आह ॥ **तत्र व्याप्यो धर्म इति** । तत्र व्याप्यव्यापकयोर्मध्य इत्यर्थः । अनुमीयतेऽनेनेति व्युत्पत्तिलब्धमनुमिति-करणत्वमनुमानमित्युक्तौ निमित्तं तच्च व्याप्य एवास्तीति भावः । नन्वनुमितिकरणत्वव्याप्यमनुमान-मित्युक्तौ निमित्तं चेदनुमेयप्रमितिकरणत्वं वाच्यम् । व्यापकमिति साधनत्वोक्तिरसङ्गतेत्यत आह ॥ **व्यापकश्चेति** ॥ चकारो धर्म इत्यनुकर्षणार्थः । अनुमेयमितीत्यस्योच्यत इत्यनुवृत्तेनान्वयः ।

## व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गस्य सम्यग्ज्ञानमनुमानम्

**(३) प्र.प्र.– ननु पर्वते वर्तमानो धूमो गृहान्तर्वर्तिनः पुरुषस्य किमित्यग्निप्रमां न जनयति । उच्यते । न प्रत्यक्षवदनुमानमज्ञातकरणम् । किन्तु सम्यग्ज्ञातमेव । तथाऽपि नारिकेलद्वीपवासिनो देशान्तरं गतस्य धूमप्रमितावपि कस्मान्नाग्निप्रमोदयः । उच्यते । तस्य धूमस्वरूपज्ञानेऽप्यग्नि-व्याप्ततया तज्ज्ञानाभावात् । ज्ञातव्याप्तिकस्यापि कुतः कदाचिदग्निप्रमाऽनुत्पत्तिः । व्याप्तिस्मरणा-भावात् । व्याप्तिस्मरणवतः पर्वते धूमं दृष्टवतोऽपि कथं पर्वतादन्यत्राग्निप्रमाऽनुद्भवः । व्याप्ति-प्रकारमपेक्ष्य लिङ्गज्ञानस्य लिङ्गिज्ञानजनकत्वनियमात् । तथा हि । कयोश्चित्समानदेशकालयो-र्व्याप्तिः । यथा रसस्य रूपेण । कयोश्चित्समानदेशत्वेऽपि भिन्नकालयोः । यथा धूमस्याग्निना ।**

**कयोश्चित्समानकालत्वेऽपि भिन्नदेशयोः । यथा कृत्तिकोदयस्य रोहिण्युदयासत्त्या । कयोश्चिद्भिन्नदेशकालयोः । यथाऽधोदेशे नदीपूरस्योर्ध्वदेशवृष्ट्या । कस्यचित्कादाचित्कस्य समानदेशत्वेऽपि सार्वकालीनेन । यथा पतनस्य गुरुत्वेन । कस्यचित्समानदेशत्वेऽपि सार्वकालिकस्य कादाचित्केन । यथा शरीरत्वस्य विनाशेन । कस्यचित्प्रदेशवर्तिनो व्याप्यवर्तिना । यथा संयोगस्य द्रव्यत्वेन । कस्यचिद्व्याप्यवर्तिनः प्रदेशवर्तिना । यथा रूपस्य संयोगेन । कयोश्चिदेकावयविवर्तिनोरप्यवयवभेदेन । यथा तुलोन्नमनावनमनयोरित्यादि । तथा च व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गस्य सम्यग्ज्ञानं सम्यग्ज्ञातं वा लिङ्गं व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गिप्रमां जनयदनुमानमित्युक्तं भवति । अत एव लिङ्गिस्वरूपस्य ज्ञातत्वेऽपि देशविशेषादिसंसृष्टतया ज्ञापकत्वान्नानुमानस्य वैयर्थ्यम् । ततश्चानुमानस्य द्वयं सामर्थ्यम् । व्याप्तिः समुचितदेशादौ सिद्धिश्चेति । न तु पक्षधर्मतानियमः ।**

**जना.–** स्वरूपसत एव व्याप्यधर्मस्य व्यापकप्रमितिसाधनत्वं सिद्धान्तिनोऽभिमतमिति भ्रमन् शङ्कते ॥ **नन्विति ॥ तथाऽपीति** । ज्ञातस्य व्यापकप्रमितिसाधनत्वपक्षेऽपीत्यर्थः ॥ **नारिकेलद्वीपवासिन इति** । धूमरहितदेशनिवासिमात्रोपलक्षणमिदम् । कथं तर्हि तादृशपुरुषस्य जीवनमिति शङ्कानिरास उपलक्षणप्रयोजनम् । व्याप्तिप्रकारभेदान्वक्तुं प्रतिजानीते ॥ **तथा हीति ॥ यथा कृत्तिकेति** । कृत्तिकोदयस्य रोहिण्युदयेन समानकालत्वाभावादासत्तिग्रहणम् । आसत्तिर्नाम सन्निधिः। अनुमानलक्षणमुपसंहरति ॥ **तथा चेति** । यदर्थं व्याप्तिप्रकारो निरूपितस्तदाह ॥ **व्याप्तिप्रकारेति** । अत्र चार्वाकाः प्रत्यातिष्ठन्ते । धूमवत्त्वरूपं लिङ्गं वह्निमत्त्वरूपलिङ्गिनं साधयतीत्येतदयुक्तम् । विकल्पासहत्वात् । तथा हि । किमत्र पर्वतीयोऽग्निः साध्यः किंवा वह्निसामान्यमाहोस्वित्तार्णत्वपार्णत्वादिविशिष्टः । नाद्यः । पर्वतनिष्ठेनाग्निना धूमस्य क्वचिदपि साहचर्यादर्शनेन व्याप्तेर्दुर्गमत्वात् । न द्वितीयः । वह्निसामान्यस्य सिद्धत्वेन सिद्धसाधनात् । न तृतीयः । तार्णादीनामनन्तत्वेन तैः साकं धूमस्य व्याप्तिग्रहणानुपपत्तेः । तदुक्तमभियुक्तैः । विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात् । तद्वतोऽनुपपन्नत्वादनुमानकथा कुत इति । तद्वतोऽनुपपन्नत्वादित्यस्य तार्णत्वादिविशिष्टस्यानन्तत्वेन तद्विशिष्टवह्निना धूमे व्याप्तिग्रहणस्यानुपपन्नत्वादित्यर्थः । तस्माल्लिङ्गिप्रमासाधनत्वानुपपत्तेरनुमानं निष्फलमिति । तदेतदपाकरोति ॥ **अत एवेति** । उक्तचोद्यं सूचयति ॥ **लिङ्गिस्वरूपस्य ज्ञातत्वेऽपीति** । धूमाधिकरणावच्छेदेन सामान्येनेति शेषः । **देशविशेषादिसंसृष्टतयेति** । पर्वतादिदेशविशेषेत्यर्थः । अयं भावः । आद्यपक्ष एव स्वीक्रियते । न च साध्यविशेषेण साकं हेतोर्व्याप्तेर्दुर्ग्रहत्वेन तत्सिद्ध्यनुपपत्तिः । साध्यसामान्येन व्याप्ततया ज्ञातस्य लिङ्गस्येव समुचितदेश-

वृत्तिताज्ञानरूपसहकारिबलेन पर्वतादिदेशविशेषसंसृष्टतया साध्यानुमापकत्वसम्भवादिति उक्तमेवार्थं प्रपञ्चयितुमनुमानसामर्थ्यं विभजते ।। **ततश्चेति** । नन्वनुमानस्य त्रीणि सामर्थ्यानि । व्याप्तिः समुचितदेशे सिद्धिः पक्षधर्मता चेति । तथा च कथं द्वैविध्यमित्यत आह ।। **न त्विति** । पक्षधर्मताया अधोदेशनदीपूरादावभावेनासार्वत्रिकत्वादिति भावः । न तु पक्षधर्मतेत्येव वाच्ये नियम इति निर्दिशता क्वाचित्कापि न पक्षधर्मतात्वेन रूपेणोपयुज्यते । किन्तु समुचितदेशवृत्तितारूपेण । पक्षस्यापि समुचितदेश एवान्तर्भावात् । क्वचित्समुचितदेशवृत्तित्वं सामर्थ्यं क्वचित्पक्षधर्मतेत्यननुगतसामर्थ्य-द्वयकल्पने गौरवादिति सूचितं भवति ।

**राघ.–** प्रमितिससाधनमित्युक्त्या यथार्थज्ञानसाधनत्वेनानुप्रमाणान्तर्गतिः सूचिता । व्याप्यस्य व्यापकप्रमितिसाधनत्वमसिद्धमिति भावेनाशङ्क्य व्याप्तिस्मरणं व्याप्यज्ञानं वाऽनुमितिसामग्रीत्याह ।। **नन्वित्यादिना व्याप्तिस्मरणाभावादित्यन्तेन** । उक्तसामग्र्या अप्यनुमितिसाधनत्वाभावमाशङ्क्य व्याप्तिस्मृतिसापेक्षत्वमिव व्याप्तिप्रकारसापेक्षत्वमपि व्याप्यज्ञानस्य लिङ्गिज्ञानजनने सामग्रीति परिहरति ।। **व्याप्तिप्रकारमिति** । व्याप्तिप्रकारं प्रतिज्ञापूर्वं नवधा दर्शयति ।। **तथा हीत्यादिने-त्यादीत्यन्तेन ।। रसस्य रूपेणेति** । यत्र रसस्तत्र रूपं यदा रसस्तदा रूपमिति च पृथिवीजलयो-र्व्याप्तिसत्त्वादिति भावः ।। **यथा धूमस्येति** । यत्र धूमस्तत्राग्निरितिवन्न समानकालत्वं कार्यकारण-भावापन्नत्वेन धूमाग्न्योः पूर्वापरकालत्वनियमादिति भावः । रोहिण्युदयासत्त्या रोहिण्युदयसान्निध्ये-नेत्यर्थः ।। **शरीरस्य त्वविनाशेनेति** । यच्छरीरंतद्विनाशीति व्याप्तेरिति भावः । **संयोगस्य द्रव्यत्वे-नेति** । यत्र संयोगस्तत्र द्रव्यत्वमिति व्याप्तेरिति भावः ।। **रूपस्य संयोगेनेति** । यत्र रूपं तत्र संयोग इति पृथिव्यादित्रिषु व्याप्तेरिति भावः ।। **एकावयवीति** । तुलारूपैकावयवीत्यर्थः । इत्यादीत्यादिपदेन भिन्नदेशयोः समानकालयोर्व्याप्यवर्तिनोः पक्षिगमनतच्छायागमनयोर्व्याप्तिरित्यादेर्ग्रहः । ततश्च किं प्रकृत इत्यत आह ।। **तथा चेति** । व्याप्तिप्रकारस्यानेकविधत्वे सतीत्यर्थः । **समुचितदेशादौ लिङ्गिप्रमां जनयदिति** । एवं च **धूमस्य स्वसमानदेशस्थेन वह्निना व्याप्तिरिति स्वसमानदेश** एव लिङ्गि-प्रमाजनकत्वं न पर्वतादन्यत्रेति भावः । व्याप्तिप्रकारस्यानेकविधत्वोक्त्या **समानाधिकरणयोरेव** व्याप्ति-रिति तार्किकमतं निरस्तं ध्येयम् । ननु व्याप्तिग्रहदशायामेव वह्न्यादिसाध्यस्य ज्ञातत्वात्किमनुमाने-नेत्यत आह ।। **अत एवेति** । समुचितदेशे लिङ्गिप्रमाजनकत्वादेवेत्यर्थः ।। **ततश्चेति** । लिङ्गस्य व्याप्तिप्रकारस्योक्तत्वादेवेति वाऽर्थः ।

**विज.–** ननु व्यवहितधूमेऽननुमानरूपे निर्दोषोपपत्तित्वसत्त्वादव्याप्तितादवस्थ्यमित्याह ।। **नन्विति** ।। **सम्यग्ज्ञातमेवेति** । तथा चाज्ञातत्वमप्युपपत्तिदोष इति भावः । एवमग्रेऽपि तथाऽज्ञातत्वं तद्दोष

एवेति मन्तव्यम् ॥ **व्याप्तिप्रकारमपेक्ष्येति ।** पक्षनिरूपितव्याप्तिप्रविष्टसम्बन्धवत्तया ज्ञातस्येत्यर्थः । व्याप्तिप्रविष्टसम्बन्धमेवाह ॥ **तथा हीत्यादिना ॥ अधोदेशे नदी पूरस्येति ।** नदीपूरासमानाधिकरणत्वनिरूपकदेशत्वं वृष्टिसमानाधिकरणोर्ध्वदेशत्वनिरूपकदेशत्वं व्याप्यव्यापकयोः परस्पराधिकरणेन सम्बन्ध इत्यर्थः ॥ **लिङ्गस्य सम्यग्ज्ञानमिति ।** व्याप्तिप्रविष्टसम्बन्धवत्तया व्याप्यतावच्छेदकेन चेत्यर्थः ॥ सम्बन्धान्तरेण व्यापकसत्त्वादनुमितेः प्रमात्वेऽपि नोपपत्तेः । प्रमाऽनुमानमिति करणत्वमत आह ॥ **व्याप्तिप्रकारानुसारेणेति ।** व्याप्तिप्रविष्टसम्बन्धानुसारेणेत्यर्थः । अत एव व्याप्तिप्रविष्टसम्बन्धेन पक्षे व्यापकमनुमितिविषयोऽत एव व्यापकस्य क्वचिज्ज्ञाने सम्बन्धान्तरेण पक्षे वा ज्ञानेन सिद्धसाधनमित्याह ॥ **अत एवेति ॥ सिद्धश्चेति ।** सत्तेत्यर्थः । न तु पक्षधर्मतेति ।

ननु हेतौ पक्षनिरूपितव्याप्तिप्रविष्टसम्बन्धवत्त्वस्यावश्यवाच्यत्वे पक्षे व्याप्तिप्रविष्टसम्बन्धेन हेतुसत्त्वमेव सामर्थ्यमस्तु । कृतं सम्बन्धपर्यन्तानुधावनेन । न च सम्बन्धस्य तवापि प्रवेशान्न गौरवमिति वाच्यम् । सम्बन्धवत्त्वमित्यत्र तवाधिकस्य सम्बन्धसम्बन्धस्य प्रवेशादिति । मैवम् । एतस्य पक्षधर्मापक्षधर्मोभयसमुचितदेशवृत्तिहेतुसमानाधिकरणत्वेन सामान्यतया लघुत्वात् । न च तत्र शरीरलाघवम् । तदपेक्षया सामान्याभाववत्त्वस्यादरणीयत्वात् । अत एव व्याप्तिस्मृतिप्रकारेण समुचितदेशवृत्तित्वज्ञानं कारणमित्यपि सङ्गच्छते । अन्यथा व्याप्यत्वप्रकारकसमुचितदेशवृत्तित्वज्ञानस्यैव जनकतया व्याप्तिस्मरणस्य परामर्शेनान्यथासिद्धस्य साहित्यापवर्गानौचित्यात् । व्याप्यतावच्छेदकप्रकारकज्ञानत्वस्यावच्छेदकप्रवेशेन गुरुत्वात् । अत एव यत्नत्वं जातिरूपतया लघुशरीरं परिहृत्योपाधितया गुरुशरीरमपि व्यापारत्वमेवाख्यातवाच्यतावच्छेदकमिति भाट्टाः । भवतु वा शरीरलाघवम् । तथाऽपि हेतौ तादृशसम्बन्धज्ञानस्यैव कारणत्वम् । व्याप्तिप्रविष्टसम्बन्धेन नदीपूरस्योर्ध्वदेशे ज्ञानाभावात् । तथा सति लोहितस्फटिक इतिवदूर्ध्वदेशो नदीपूरवानिति प्रतीत्यापत्तेरिति दिक् ।

**वेदे.–** ननु व्याप्यो धूमो व्यापकप्रमितिं जनयन्ननुमानं चेत् व्यवहितधूमोऽप्यग्निप्रमां जनयेत् । न हि जनयति । अनुभवविरोधात् । तथा चानुमानेऽपि तस्मिन्निर्दोषोपपत्तित्वसत्त्वादतिव्याप्तिरित्याशङ्कते ॥ **नन्विति ।** व्याप्योऽपि धूमो न सत्तामात्रेणेन्द्रियवत्प्रमाकरणं किन्तु प्रमित एव । तथा च तत्राज्ञातत्वरूपदोषस्यैव सत्त्वान्नातिव्याप्तिरित्याह ॥ **उच्यत इत्यादिना ।** एवमग्रेऽपि तथा तथा ज्ञातव्यम् । न दोष इति मन्तव्यम् । नन्वेवं यदुक्तरूपं लिङ्गपर्यन्त इवान्यत्राप्यग्निप्रमापकतां न जनयेत् । न हि कुठारो देशविशेष एव हेतुरित्याशङ्कते ॥ **व्याप्तीति ।** समुचितदेशे व्याप्तिप्रविष्टसम्बन्धवत्तया ज्ञातस्यैव लिङ्गस्यानुमानत्वेन फलबलेन कल्पनात् । न हि सर्वकरणैरेकविधैर्भाव्यमिति

नियमोऽस्ति । अतिप्रसङ्गात् । अतो नोक्तदोष इति परिहरति ॥ **व्याप्तीति** । व्याप्तिप्रकारं व्याप्तिप्रविष्टसम्बन्धम् । एवमग्रेऽपि । व्याप्तिप्रविष्टसम्बन्धमेवाह ॥ **तथा हीत्यादिना** । एवमनुमानस्यानुमितिजनकत्वप्रकारं निरूप्योक्तार्थं सङ्गृह्योपसंहरति ॥ **तथा चेति** ॥ **सम्यग्ज्ञातं वा लिङ्गमिति** । वर्तमानलिङ्गाभिप्रायेण । वस्तुतस्त्वतीतानागतादावव्यभिचाराल्लिङ्गज्ञानमेव सर्वत्र मानमिति द्रष्टव्यम् । समुचितदेशादावित्यस्यावश्यकत्वे उपष्टम्भकमाह ॥ **अत एवेति** । एवं सति परोक्षधर्मताऽऽवश्यकतेत्याह ॥ **ततश्चेति** । नन्वधोदेशगतनदीपूरकत्वादित्यादिप्रयोगेण सर्वत्र पक्षधर्मता सम्पादयितुं शक्या । अतः कथं तदनियम इति चेत् । किमेवं प्रयोगविपरिणामो लौकिकरीतिमाश्रित्योत स्वक्रियासंरक्षणार्थः । नाद्यः । लौकिका ह्यूर्ध्वदेशे वृष्टिः कुत इति पृष्टा अधोदेशे नदीपूरादित्येव वदन्ति । न द्वितीयः । सिद्धे प्रयोगपरिणामे व्यभिचाराभावेन प्रक्रियाप्रामाण्यसिद्धिस्तत्सिद्धौ च प्रयोगपरिणामसिद्धिरित्यन्योन्याश्रयात् ।

**अभि.–** ॥ **नन्विति** । यदि व्याप्यो धर्मो व्यापकप्रमितिजनकः स्यात्तर्हि गृहान्तर्वर्तिनोऽप्यग्निप्रमाजनकः स्यात् । न चासौ तथेति व्यापकप्रमाजनक एव न भवतीति भावः ॥ **कायोश्चित्समानदेशकालयोरिति** । कयोश्चित्समानदेशकालयोर्मध्ये एकस्यापरेण व्याप्तिरित्यर्थः । एतेन व्याप्तेर्हेतुमात्रनिष्ठत्वेनोभयनिष्ठत्वाभावात्कयोश्चित्समानदेशकालयोरित्ययुक्तमिति परास्तम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ **रोहिण्युदयासत्त्येति** । रोहिण्युदयासत्तिर्नाम रोहिण्युदयसामग्रीसम्मेलनम् । एतेनोदयासत्तिशब्दस्योदयाव्यवहितपूर्वकालवाचित्वेन तस्य सार्वत्रिकेन भिन्नदेशत्वानुपपत्तिरिति परास्तम् ॥ **सार्वकालीनेनेति** । अत्र गुरुत्वस्य सार्वकालीनत्वं नाम यावद्वस्तुभावित्वं विवक्षितमिति बोध्यम् ॥ **विनाशेनेति** । अत्र विनाशशब्देन विनश्यदवस्थैवोच्यते । एतेन विनाशस्य शरीरनिष्ठत्वाभावाच्छरीरत्वेन समानदेशत्वाभिधानमयुक्तमिति परास्तम् ॥ **तुलोन्नमनावनमनयोरिति** । अत्र समव्याप्तिसद्भावात्तुलोन्नमनावनमनयोरिति द्विवचनम् । अन्यथा प्राग्वदुन्नमनस्यावनमनेनेति वाऽवनमनस्योन्नमनेनेति वाऽवक्ष्यत् ॥ **सम्यग्ज्ञातं वा लिङ्गमिति** । नन्वतीतानागतलिङ्गकानुमितौ लिङ्गस्यासत्त्वेन कारणत्वायोगात् । सम्यग्ज्ञातं लिङ्गमनुमानमित्ययुक्तमिति चेन्न । लिङ्गसत्तादशायां व्यापारोऽपि लिङ्गपरामर्शः । लिङ्गाभावदशायां तत्प्रतिनिधिरित्यङ्गीकारात् । न हि प्रतिनिधिकृतं स्वकृतं नेति वक्तुं शक्यते । अन्यथा विशेषकृतस्वव्यवहारादेर्भेदकार्यत्वं न स्यात् । न स्याच्च पूतिकाकृतस्य सोमकार्यत्वम् ॥ **द्वयं सामर्थ्यमिति** । सामर्थ्यापादकमङ्गमिति यावत् ।

**आद.––** ॥ **व्याप्तिप्रकारमपेक्ष्येति** । व्याप्तेः प्रकारस्तद्घटकपदार्थानां विशेषणविशेष्यभावः । अपेक्षणं च ज्ञानमेव । उत्तरकालीनत्वं ल्यबर्थः । लिङ्गिज्ञानजनकतायामन्वयः । व्याप्तिशरीरे

स्वजातीयहेत्वधिकरणे येन सम्बन्धेन साध्यसजातीयाधिकणं निविष्टं तत्सजातीयसंसर्गप्रतियोग्यधिकरणे लिङ्गिप्रमां जनयतीत्यर्थः ॥ **धूमस्याग्निनेति ।** वन्ह्यधिकरणे देशोर्ध्वभागवृत्तित्वमेव। तत्राव्याप्तिरिति व्याप्तिशरीरघटकयोरूर्ध्वाधोदेशयोर्भिन्नत्वादिति भावः । **व्याप्तिज्ञानतत्स्मरणेति** प्रात्यक्षिकस्थलाभिप्रायेण । अथवा स्मरणपदं ज्ञानसामान्यार्थकम् । व्याप्तेः प्रकारो विशेषणविशेष्यभावः । तस्यानुसारस्तत्सदृशविशेषणविशेष्यभावः । तृतीयार्थो वैशिष्ट्यम् । व्याप्तिशरीरे हेत्वधिकरणनिविष्टसम्बन्धांशे यादृशसम्बन्धेन यादृशसजातीयस्य विशेषणत्वं देशविशेषस्य विशेष्यत्वं तत्सजातीयविशेष्यता योग्यताविशिष्टत्वमित्यर्थः । समुचितदेशादावित्यत्रान्वयः । समुचितत्वं च व्याप्तिरूपो यः सम्बन्ध आधेयतारूपस्तन्निरूपकाधिकरणसजातीयत्वम् । आदिपदेन तादृशोर्ध्वदेशादिर्ग्राह्यः । अनुमानस्य लिङ्गस्य । **समुचितदेशादौ सिद्धिश्चेति ।** स्वनिष्ठव्याप्तिरूपाधेयतानिरूपकीभूताधिकरणभूते देशे इत्यर्थः ।

**श्रीनि.–** ॥ **यथा तुलेति ।** यदैकस्मिंस्तुलावयवे उन्नमनमूर्ध्वगमनं तदा तदवयवोत्तरेऽवनमनमधोगमनमित्यर्थः ।

**वि.–** ॥ **व्यापकमिति ।** साध्यत्वाद्व्याप्यमनुमानमित्युक्तम् । तर्ह्यप्रमितधूमस्य पुरुषस्य धूमेनाग्निप्रमा कस्मान्नोत्पद्यत इति पृच्छति ॥ **गृहान्तर्वर्तिन इति ।** एतदप्रमितधूमपुरुषस्योपलक्षणम् । **किमिति** कस्मादित्यर्थः ॥ **सम्यग्ज्ञातमेवेति ।** अन्यथाज्ञातस्याग्निप्रमित्यसाधनत्वात्सम्यगिति विशेषणम् ॥ **तथाऽपीति ।** सम्यग्ज्ञातस्यैव लिङ्गस्य व्यापकमिति साधनत्वेन गृहान्तर्वर्तिनः पुरुषस्य पर्वते सताऽपि धूमेनाग्निप्रमित्यनुदयेऽपीत्यर्थः । नारीकेलद्वीपवासिन इत्येतदज्ञातधूमाग्निव्याप्तिपुरुषपरम् ॥ **कदाचिदिति ।** व्याप्तिस्मरणाभावदशायामित्यर्थः ॥ **व्याप्तिस्मरणवतो धूमं दृष्टवतोऽपीति ।** पर्वते धूमं व्याप्यतया दृष्टवत इत्यर्थः । अन्यथा न खलु विशकलिते व्याप्तिस्मृतिपक्षधर्मताज्ञाने भावयतोऽनुमितिमिति सुधावचनविधापातात् । विशकलिताधिकणभेदेन व्याप्तिपक्षधर्मविषय इत्यर्थः । **स्मृतिव्याप्तिश्च** व्याप्यं धूमं प्रतिजानामि । ततोऽनुमितिरिति प्रमालक्षणटीकावचनविरोधप्रसङ्गाच्च । **कथं पर्वतादन्यत्राग्निप्रमानुद्भव इति ।** कथं कस्मादित्यर्थः । न चान्यत्र धूमप्रमितिभावादेवाग्निप्रमानुदय इति वाच्यम् । साध्यप्रमितिः पक्ष एव प्रवर्तते । प्रदेशविशेषनियमस्याकस्मिकत्वापातात् । न च यदवच्छिन्ने लिङ्गप्रमितिस्तदवच्छिन्ने देशे साध्यप्रमितिनियम इति नोक्तातिप्रसङ्ग इति वाच्यम् । व्याप्यवृत्तिद्रव्यत्त्वादिनाऽव्याप्यवृत्तिसंयोगादेरव्याप्यवृत्तिसंयोगादिना व्याप्यवृत्तिद्रव्यत्वादेरवयवान्तर्वृत्ति- तुलोन्नमनेनावयवान्तरेऽवनमस्य चासिद्ध्यापातात् । तथा च

पक्षधर्मताप्रकारानुसारेणानुमानस्यानुमिति जनकत्वनियमायोगादनुमिते देशे नियमेन किञ्चिन्नियामकमिति प्रष्टुराशय इति बोध्यम्।

**व्याप्तिप्रकारमपेक्ष्येति।** अविनाभावरूपाया व्याप्तेः स्वभावमनुसृत्येत्यर्थः। अत एव सुधायां तथा साध्यनियतदेशता कथं स्यादित्याशङ्क्य व्याप्तिस्वभावादिति ब्रूम इत्युक्तम्। इदमुक्तं भवति। केनचिद्विना कस्यचिदवस्थानं यत्तस्य तेनास्याव्याप्तिः। सा च यदि यस्य लिङ्गस्य व्यधिकरणेनैव साध्येन विनाऽवस्थानरूपा तर्हि तत्स्वभावानुसारेण तस्य लिङ्गस्य स्वानधिकरण एव पक्षे साध्यानुमितिहेतुत्वं सा यदि यस्य लिङ्गस्य स्वाधिकरणेनैव साध्येन विनाऽनवस्थानरूपा तर्हि तदनुसारेण तस्य स्वाधिकरण एव पक्षे साध्यानुमितिजनकत्वम्। धूमस्य तु व्याप्तिः स्वाधिकरणेनैव साध्येन विनाऽनवस्थानरूपेति तस्य स्वाधिकरण एव पक्षे साध्यप्रमाजनकत्वान्न पर्वतादन्यत्र वह्निप्रमोद्भव इति लिङ्गस्य साध्यप्रमाजनकत्वं व्याप्तिप्रकारमभ्युपेत्येत्युक्तम्। के तत्र व्याप्तिप्रकारा इति जिज्ञासायां तानाह॥ **तथा हीत्यादिना॥ कयोश्चित्समानदेशकालयोर्व्याप्तिरिति।** समान एको देशः कालश्च यतोस्तौ तथोक्तौ। उभयोरेकव्याप्तिनिरूपणपरस्येत्यर्थः। उदाहरणमुखेन दर्शयति॥ **यथेति।** व्याप्तिरित्यनुवर्तते। एवमुत्तरत्राप्यनुवृत्तिरनुसन्धेया। रसस्येत्यनन्तरं स्वसमानदेशकालीनेति शेषः॥ **कयोश्चित्समानदेशत्वेऽपीति।** उदाहृतव्याप्तिप्रकारस्य वैलक्षण्यस्फुटीकरणयापिशब्दः॥ **यथा धूमस्येति।** स्वसमानदेशभिन्नकालेनेति शेषः। एवमुत्तरत्रापि शेषोऽनुसन्धेयः। यद्यप्यधिकरण देशस्यापि वह्निधूमसमानदेशत्ववदधिककालस्यापि तस्य धूमकालसमानकालसम्भवाद्वन्हेः समानदेशकालत्वमेव। तथाऽप्येकदा सतोरपि ज्येष्ठकनिष्ठयोः सव्येतरविषाणयोरिव समानकालत्वव्यवहारत्वाभावात्समानकालोत्पन्नत्वमनधिककालत्वं वा समानकालत्वम्। तच्च धूमाग्न्योर्नास्त्येवेत्यभिप्रेत्यैवमुक्तिरिति मन्तव्यम्॥ **रोहिण्युदयासत्त्येति।** रोहिण्युदयाव्यवहितपूर्वसमयेनेत्यर्थः॥ **कादाचित्कस्येति।** अयावद्धर्मभाविन इत्यर्थः॥ **सार्वकालीनेति।** यावद्धर्मभाविनेत्यर्थः॥ **कस्यचित् समानदेशत्वेऽपीति।** एकदेशसम्बन्धेऽपीत्यर्थः। सार्वकालीनस्य यावद्धर्मभाविन इत्यर्थः॥ **कादाचित्केन इति।** धर्म्युत्तरकालीनेत्यर्थः। **प्रदेशवर्तिन इति।** धर्म्येकदेशवर्तिन इत्यर्थः॥ **व्याप्यवर्तिन इति।** धर्मिणां व्याप्यवर्तमाने तु सर्वावच्छेदेन धर्मिणि वर्तमानेनेति यावत्॥ **कयोश्चिदेकावयविवर्तिनोरप्यवयवभेदेनेति।** अवयवभेदेनैकावयवये वर्तिनोरन्योन्यं व्याप्तिरित्यर्थः॥ **यथा तुलोन्नमनावनमनयोरित्यादीति।** अवयवभेदेनैकावयविवर्तिनोरित्यनुवर्तते। भिन्नावयववर्तिनोस्तुलोन्नमनावनमनयोर्द्वयोरप्येकनिरूपिताव्याप्तिरूपस्येत्यर्थः। यत एवान्यत्र यथा रसस्य रूपेणेत्याद्येवोक्ता। अत्र यथा तुलोन्नमनावनमनयोरिति द्विवचनमुपात्तम्। कयोश्चिदवयविभेदेन भिन्नावय-

विवर्तिनोर्यथा छाया शिरश्चलनस्य । छायावच्छिरसश्चेत्यनेनेत्यादिरादिशब्दार्थः । अस्त्येवं व्याप्तिरनेक-प्रकारा तथाऽपि किं प्रकृत इत्यत आह ॥ **तथा चेति** । व्याप्तिप्रकारानुसारेण यन्निष्ठव्याप्तिर्यत् स्वभावात्तल्लिङ्गं तद्व्याप्तिस्वभावानुसारेणेत्यर्थः । समुचितदेशादौ समुचित आदिशब्दार्थः । यद्देशकालवर्तिसाध्येन विना लिङ्गस्यानवस्थानं स एव साध्यस्य समुचितो योग्यो देशः । कालश्च तस्मिन्नधिकरणे पक्षे साध्यप्रमां जनयदनुमानमित्युक्तं भवति । व्याप्यो धर्मो व्यापकप्रमितिसाधनं भवदनुमानमित्युच्यत इत्यनेनोक्तं भवतीत्यर्थः ।

ननु व्याप्यो धर्मो व्यापकमिति साधनं भवन्ननुमानमित्युक्तम् । व्याप्तिग्रहणदशायामेव वह्न्यादेर्व्यापकस्वरूपस्य प्रमितत्वात् । अनुमानं विफलमेव स्यादिति चोद्यमप्यत एव निरस्तमित्याह ॥ **अत एवेति** । लिङ्गस्य समुचितदेशादौ लिङ्गिप्रमाजनकत्वादेवेत्यर्थः । देशविशेषसम्बन्धतया व्यापकमिति न प्रमाणान्तरसाध्येति भावः । ननु व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गप्रमां जनयदनुमानं चेत्तर्हि व्याप्तिरेवानुमितौ प्रयोजिका न त्वन्यदिति प्राप्तम् । न च तद्युक्तम् । व्याप्तिज्ञानवतोऽपि लिङ्गस्य स्वोचितदेशादौ प्रमितिं विना साध्यस्य स्वोचितदेशादौ सिद्धिश्चेति । यत्र प्रमितं लिङ्गमनुमितं जनयति स एव लिङ्गस्य समुचितो देशकालश्च स च क्वचित्पक्षभूत एव क्वचिदन्य एव तत्र सिद्धः प्रमितिरित्यर्थः । तार्किकादिपक्षं प्रतिपक्षयति ॥ **न तु पक्षधर्मतानियम इति** । न तु पक्षे तत्त्वप्रमितिरेवानुमानस्य सामर्थ्य इत्यर्थः । अधोदेशादौ प्रमितस्य नदीपूरस्योर्ध्वदेशे पक्षे कालान्तरस्थवृष्ट्यनुमितिहेतुत्वस्य पक्षे प्रमितस्य विकास्यस्य देशान्तरस्थसूर्योदयानुमापकत्वस्य समुद्रे प्रमिताया वृद्धेर्देशान्तरस्थचन्द्रोदयानुमापकत्वस्य चोपादेयगतरूपादेरुपादान गतरूपाद्यनुमापकत्वस्य चानुभवान्न पक्षधर्मतानियम इति भावः ।

## प्रत्यक्षानुमानागमैः व्याप्तिज्ञानम्

**(४) प्र.प्र.— ननु व्याप्तिज्ञानं केन प्रमाणेन जायते । यथायथं प्रत्यक्षानुमानागमैरिति ब्रूमः । तत्र तावद्धूमस्याग्निना व्याप्तिः प्रत्यक्षगम्या । तथा हि । महानसादौ धूमाग्न्योः साहचर्यं पश्यतः पुरुषस्यैष विमर्शो जायते । किमत्रैवैतो धूमाग्नी सहचरितावन्यत्र देशान्तरे कालान्तरे चैतज्जातीयौ परस्परपरिहारेण वर्तेते उतान्यतर एवान्यतरपरिहारेण किंवा सकलदेशकालयोः सहचरितावेवेति । ततो भूयोभूयो धूमं पश्यन्नग्निं पश्यति । अग्न्यभावे च धूमाभावम् । तथा धूमाभावेऽपि क्वचिदग्नि-सद्भावम् । ततः पुनरेष विचारो भवति । यथा बहुषु स्थलेषु धूमेन सहचरितोऽप्यग्निः क्वचित्तं परित्यज्य वर्तते । तथा धूमो मत्परिचितस्थलेष्वग्निना सह वर्तमानोऽपि क्वचित्तं परित्यज्य वर्तते ।**

**किं वा सर्वत्र तत्सहचरित एवेति । ततः पुनरेषा बुद्धिरुत्पद्यते । अग्नेर्धूमसम्बन्धेऽस्त्यार्द्रेन्धनसंयोग उपाधिः । स च धूमस्याग्निसम्बन्धे यदि कश्चिदुपाधिः स्यात्तदा सोऽप्यग्निं व्यभिचरिष्यति । न चेन्निर्निमित्तस्य सम्बन्धस्य धूमस्वभावत्वेन न क्वापि तदभावो भविष्यती (ति निश्चि) त्येवं निश्चित्य महानसादावुपाधिगवेषणे प्रवर्तते ।**

**जना.**— ननु व्याप्तिज्ञानं केन प्रमाणेन जायते । न तावत्प्रत्यक्षेण । तदभावेऽपि ब्राह्मणो न हन्तव्य इत्यादिव्याप्तिग्रहात् । अत एव नानुमानेन । नाप्यागमेन । तदभावेऽपि प्राणादिमत्त्व-सात्मकत्वयोरनुमानेन व्याप्तिग्रहादित्याक्षिपति ।। **नन्विति ।। केनेति ।** न केनापीत्यर्थः । उक्तरीत्या पस्परराननुगमादिति भावः । तृणारणिमणिन्यायेनाननुगतैर्विजातीयैरेव प्रमाणैर्विजातीये व्याप्तिग्रहो जायते । अतोऽननुगमो न दोष इति समाधत्ते ।। **यथायथमित्यादिना नापिदृष्टान्तापेक्षेत्यन्तेन ।** यथायथं प्रत्यक्षयोग्या व्याप्तिः प्रत्यक्षेण गृह्यत इत्यादिक्रमेणेत्यर्थः । अत्रागमशब्दो वेदतन्मूलान्यतर-वाक्यपरः । अतो धूमवह्निव्याप्तेरेव धूमो वह्निव्याप्य इत्याप्तोपदेशगम्यत्वेनोभयोदाहरणत्वेन सम्भवे ब्राह्मणो न हन्तव्य इत्यग्रेतनागमगम्यव्याप्त्युदाहरणं व्यर्थमिति शङ्कानवकाश इति द्रष्टव्यम् । तत्र प्रत्यक्षगम्यां व्याप्तिमुदाहरति । **तत्रेति ।** प्रत्यक्षादिगम्यव्याप्तिमध्य इत्यर्थः । प्रत्यक्षस्य व्याप्तिग्राहकत्वे किमत्रैवैतावदित्यादिना वक्ष्यमाणव्यभिचारसंशयदशायां तथा ततः पुनरेष विचार इत्यादिना वक्ष्यमाणोपाधिसंशयदशायां च प्रत्यक्षेण व्याप्तिग्रहापत्तिरित्याशङ्क्य तच्छङ्काद्वयनिवर्तकाव्यभिचारा-नौपाधिकत्वनिश्चयसनाथस्यैव प्रत्यक्षस्य व्याप्तिग्राहकत्वमिति वक्ष्यन् व्याप्तिग्रहप्रकारप्रदर्शनव्याजेन तदुपपादयितुमारभते ।। **तथा हीत्यादिनाऽविनाभावप्रमितिरुत्पद्यत इत्यन्तेनावान्तरवाक्यजातेन । विमर्श इति ।** विचार इत्यर्थः ।।

**परस्परपरिहारेणेति ।** गोत्वाश्वत्ववदिति शेषः ।। **अन्यतर एवेति ।** घटत्वेन विना प्रमेयत्ववदिति शेषः । यथा साध्यसाधनयोर्भूयस्सहचारदर्शनं व्याप्तिग्रहोपयोगि तथा साध्याभावसाधनाभावयोरपि भूयस्सहचारदर्शनं व्यभिचाराभावप्रदर्शनद्वाराऽन्वयव्याप्तिग्रहोपयोगीत्याह ।। **अग्न्यभावे चेति ।** अत्र भूयोभूय इत्यनुषज्यते । अग्न्यभावे च धूमभावमित्यस्यानन्तरं ततः परस्परपरिहारेण कालान्तरे देशान्तरे वा वर्तनशङ्कां विधुनोतीति शेषः ।। **तथा धूमाभावेऽपीति ।** धूमाभावेऽपि क्वचिदग्नि-सद्भावदर्शनाद्यथा बहुष्विति वक्ष्यमाणविचारावतारघटनार्थम् । अन्यथा भूयो दर्शनानन्तरं यथा बहुष्वित्युक्तशङ्कानवकाशादिति ध्येयम् ।। **ततः पुनरेष इति ।** यद्यप्ययं विचारः किमत्रैवैतावित्यादिना प्राक् प्रदर्शितः । तथाऽपि भूयोदर्शनाभावप्रयुक्त एव सः । अयं त्वनौपाधिकत्वनिश्चयप्रयुक्त इति न पौनरुक्त्यमिति ज्ञातव्यम् । अत एव प्राग्विचारस्य सकृद्दर्शनकालीनत्वसूचनायात्रैवेत्युक्तम् । अत्र च

तस्य भूयोदर्शनकालीनत्वसूचनाय बहुषु स्थलेष्वित्युक्तम् । अग्निरग्निजातीयः । धूमो धूमजातीयः ॥ **सोऽपीति** । धूम इत्यर्थः ॥ **न चेदिति** । उपाधिरित्यनुषज्यते । निर्निमित्तस्य निरूपाधिकस्येत्यर्थः ।

**राघ.**— ननु प्रत्यक्षस्य सन्निकृष्टमात्रग्राहितया नियमघटितसहचाररूपव्याप्तिग्रहे सामर्थ्यं नेति भावेन शङ्कते ॥ **नन्विति** । यद्वा तर्केणैव व्याप्तिज्ञानं तर्कस्य च व्याप्तिसापेक्षत्वादनवस्थेति भावेन शङ्कते । **नन्विति** । भूयोदर्शनव्यभिचाराभावनिश्चयोपाध्यभावनिश्चयरूपसहकारिसामर्थ्यात्प्रत्यक्षाद्येव तद्ग्राहकं न तर्क इति भावेनाह ॥ **यथायथमिति** । अव्ययं विभक्त्यादिनाऽव्ययीभावसमासः । स्वस्वयोग्यतामनतिक्रम्येत्यर्थः । जायते व्याप्तिज्ञानमित्यनुषङ्गः । प्रत्यभिज्ञानं प्रत्यक्षगम्यत्वं भूयोदर्शनादिसहकारित्रयव्यक्तीकरणेन दर्शयति ॥ **तथा हीत्यादिनाऽनुमानगम्यां त्वित्येतत्पर्यन्त-ग्रन्थेन** । एष विमर्शो वक्ष्यमाणो विचारः । एतज्जातीयौ एतत्सदृशौ । अन्यतर एवाग्निरेव सहचरितावेवेति कृतकत्वानित्यत्वयोरिवेति भावः । इति विमर्श इति पूर्वेणान्वयः । तत एवं विमर्शानन्तरं भूयोभूयः पुनः पुनः पश्यतीति पदमुत्तरवाक्यद्वयेऽप्यनुषज्यते । एवं भूयोदर्शनप्रकारं प्रदर्श्योपाध्यभावनिश्चयेनैव व्यभिचाराभावनिश्चय इति भावेनोपाध्यभावनिश्चयप्रकारं दर्शयितुं व्यभिचारसन्देहप्रकारं तावदाह ॥ **ततः पुनरेष विचार इति** । भूयः सहचारदर्शनानन्तरं व्यभिचार-सन्देहगोचरो विचार इत्यर्थः । तं व्यनक्ति । **यथेति** । तथेत्यग्रेतनेनास्यान्वयः । इदानीमुपाधिभावा-भावाधीनौ व्यभिचारतदभावावित्याह ॥ **ततः पुनरेषा बुद्धिरिति** । व्यभिचारसन्देहानन्तरमुपाधि-भावाभावाधीनौ व्यभिचारतदभावाविति बुद्धिरुत्पद्यत इत्यर्थः । तां व्यनक्ति ॥ **अग्नेरिति** । यथेत्यनुषङ्गः । तथेत्यन्वयः ॥ **तमिति** । धूममग्नितो व्यावर्तितवानयोगोलकादौ । न पुनरग्निं धूमवन्महानसादौ व्यावर्तितवानित्यर्थः । तत्र हेतुः ॥ **तदव्यापकत्वादिति** । एतेनार्द्रेन्धनसंयोगे साधनाव्यापकत्वे सति साध्यव्यापकत्वरूपोपाधिलक्षणमपि सूचितं भवति । **उपाधिस्स्यादिति** । धूमाव्यापको वह्निव्यापकश्च धर्मः स्यादित्यर्थः । सोऽपि धूमोऽपीत्यर्थः । तदभावोऽग्निसम्बन्धभाव इत्यर्थः ॥ **इति निश्चित्येति** । व्यभिचारभावाभावावुपाधिभावाभावाधीनाविति निश्चित्येत्यर्थः ॥ **उपाधीति** ॥ साधनधूमाव्यापकवह्निव्यापकधर्मगवेषण इत्यर्थः ।

**वि.**– व्याप्तिप्रमितिरनुमानस्य सामर्थ्यमित्युक्तम् । सा च केन प्रमाणेनोत्पद्यत इति पृच्छति ॥ **नन्विति** ॥ **यथायथं प्रत्यक्षानुमानागमैरिति** । व्याप्तिज्ञानं जायत इत्यनुवर्तते । यथायथं यथास्वरूपमित्यर्थः ॥ **तत्रेति** । प्रत्यक्षादिगम्यास्वित्यर्थः । विमर्शो विचारस्तदङ्गभूतः संशयो जायत इत्यर्थः । संशयाकारमेव दर्शयति ॥ **किमत्रैवेति** । अस्मिन्नेव देशे काले चेत्यर्थः ॥ **अन्यत्रेति** ।

तस्यैव विवरणं देशान्तरे कालान्तरे चेति ॥ **तत इति** । उक्तसन्देहानन्तरमित्यर्थः । पश्यतीत्येतद्धूमाभावमित्यादिनाऽपि सम्बध्यते ॥ **ततः पुनरिति** । भूयोदर्शनानन्तरं विचारस्त्वङ्गभूतः संशय इत्यर्थः । विचाराकारं दर्शयति ॥ **यथेति** ॥ **ततः पुनरेषा बुद्धिरिति** । एतादृशसंशयानन्तरं बुद्धिर्निश्चयरूपा बुद्धिरित्यर्थः । निश्चयाकारं दर्शयति ॥ **अग्नेर्धूमसम्बन्ध इति** । तं व्यावर्तितवान् धूमं व्यावर्तितवानित्यर्थः । व्यापकनिवृत्त्या व्याप्यनिवृत्तेरेवावश्यकत्वादिति भावः । व्यावर्तितवानित्येतदग्निमित्यनेनापि सम्बध्यते ॥ **तदेति** । तर्हीत्यर्थः । सोऽपि यथाऽग्निर्धूमं तथा धूमोऽप्यग्निं व्यभिचरिष्यति । तं परित्यज्य स्थास्यति ॥ **न चेदिति** ॥ **निर्निमित्तस्येति** । निरूपकस्याग्निना सम्बन्धस्य धूमस्वभावत्वेन धूमस्य सहजत्वेन क्वापि धूमवति देशे तदभावोऽग्निसम्बन्धाभावो न भविष्यतीत्येवं निश्चित्यैतादृशनिश्चयानन्तरमित्यर्थः । महानसादावित्यनन्तरं धूमाग्निसम्बन्ध इत्यनुवर्तते ।

**(५) प्र.प.— तत्र केचिद्धर्मा उभयव्यापकाः । यथा प्रमेयत्वम् । नैतत्सम्बन्धं विघटयितुमीशते । केचिदुभयाव्यापकाः । यथा महानसत्वम् । तेऽपि नैतत्सम्बन्धविघटनाय समर्थाः । केचिद्धूमव्यापका अग्न्यव्यापकाः । यथाऽऽर्द्रेन्धनसंयोगः । तेऽप्यग्नेर्धूमवियोजने शक्ता अपि न धूमस्याग्निवियोजने । यस्त्वग्नेर्व्यापको धूमस्य त्वव्यापकः स स्वयं व्यावर्तमानः शक्ष्यत्येतत्सम्बन्धं विघटयितुम् । स तु नास्त्येव । अनुपलम्भात् । अतीन्द्रियोऽपि प्रमाणान्तरवेद्यः स्यात् । न च तत्प्रमाणमुपलभ्यते । न चाप्रामाणिकः शङ्कामप्यधिरोहति । अतो नात्रोपाधिरस्तीति निर्णीतवतोऽविनाभावप्रमितिरुत्पद्यते ।**

**जना.—** ॥ **उभयव्यापका इति** । साध्यसाधनोभयव्यापका इत्यर्थः ॥ **न धूमस्याग्निवियोजन इति** । शक्ता इत्यनुषज्यते ॥ **शक्ष्यत्येतत्सम्बन्धं विघटयितुमिति** । व्यापकनिवृत्तौ व्याप्यनिवृत्त्यवश्यम्भावादिति भावः ॥

**राघ.—** अभावं निर्धारयितुमुपाधिं परिशेषयति ॥ **तत्रेति** । व्यभिचारभावाभावयोरुपाधिभावाभावाधीनत्वे सतीति वा धर्मेषु मध्य इति वाऽर्थः । उपलक्षणत्वेनैकमुदाहरति ॥ **यथा प्रमेयत्वमिति** । एवमग्रेऽपि । अत एव त इत्यग्रे बहुवचनोक्तिः । तत्सम्बन्धं धूमस्याग्निसम्बन्धमित्यर्थः । स्वनिवृत्तेरेवाभावेन कथमग्निसम्बन्धं धूमस्य व्यावर्तयेदिति भावः । तेऽपि न शक्ता इति अव्यापकस्य साध्यव्यावर्तनेऽतिप्रसङ्गादिति भावः ॥ **न धूमस्याग्निवियोजन इति** । शक्ता इत्यनुषङ्गः । धूमव्यापकः स्वयं व्यावर्तमानः स्वव्याप्यं धूममेव व्यावर्तयति । न तु धूमं स्थापयित्वा तस्याग्निसम्बन्धं व्यावर्तयतीत्यर्थः । एवं प्रसक्तां त्रिविधान्धर्मानुपाधित्वसम्भवेन निरस्योपाधित्वेन सम्भवा-

वितं धर्मं परिशेषयति ॥ **यस्त्वग्नेरिति** । तं सम्बन्धं धूमस्याग्निसम्बन्धमित्यर्थः । सम्भावितं धर्मं परिशेष्याधुना तदभावनिर्धारप्रकारमाह ॥ **स तु नास्तीति** ॥ **अत इति** । प्रामाणिकत्वात्तद्दशस्य शङ्कानर्हत्वाच्चेत्यर्थः ॥ **उपाधिरिति** । व्यभिचारसम्पादक इति योज्यम् ॥ **अविनाभावेति** । साध्यत्वाभिमतवस्तुसाहित्येनैव सत्त्वरूपाव्यभिचरितसम्बन्धप्रमितिरित्यर्थः। नन्वत्र धूमस्याग्निसम्बन्धे उपाधिरैन्द्रियकश्चेदुपलभ्येत नोपलभ्यते । अतोऽनुपलम्भान्नास्तीति । अतीन्द्रियश्चेत्प्रमाणान्तरवेद्यः स्यात् । न च तत्प्रमाणमुपलभ्यते । अप्रामाणिकं न शङ्कार्हम् । अतोऽत्र नास्त्युपाधिरिति तर्केणोपाध्यभावं निश्चित्य तेन तदधीनव्यभिचाराभावनिश्चयेन व्याप्तिनिश्चये तर्कस्यापि व्याप्तिधी-सापेक्षत्वादनवस्था स्यादिति चेन्न । उपाधिसन्देहे सत्येव तदपनयेन तदभावनिर्णयाय तर्क-स्यावतारात् । अत एव प्रागुपाधिसन्देह एव प्रदर्शितः । यत्र तु नोपाधिसन्देहो न तत्र तर्कावतार इति नानवस्थेति तात्पर्यात् । वक्ष्यति चान्ततः प्रत्यक्षागममूलत्वादिति । उक्तं हीत्थमेव तर्कताण्डवे खण्डनोक्तिव्याप्तिनिश्चयानुपपत्तिभङ्गे ।

**वि.—** ॥ **तत्रेति** । महानसादिधर्मोष्वित्यर्थः । उभयव्यापकादुभयोर्धूमाग्न्योर्व्यापकादित्यर्थः ॥ **नैतत्सम्बन्धमिति** । एते उभयव्यापकाः प्रमेयत्वादयस्तत्सम्बन्धं धूमस्याग्निनैकाधिकरणवृत्तित्वरूपं सम्बन्धमित्यर्थः ॥ **तेऽप्रीति** । धूमव्यापकाग्न्यव्यापकाश्चार्द्रेन्धसंयोगादय इत्यर्थः । धूमेवियोजनेऽपि धूमसम्बन्धविघटन इत्यर्थः ॥ **अग्निवियोजन इति** । शक्त इत्यनुवर्तते ॥ **स तु नास्तीति** । तुशब्दो विशेषणार्थः । योग्यत्वविशिष्टोऽपीत्यर्थः । अनुपलम्भाद्योगानुपलब्धेरित्यर्थः । इन्द्रिययोग्यस्योपाधेरपि तदयोग्यः कश्चिदस्त्वित्यत आह ॥ **अतीन्द्रियोऽपीति** । प्रमाणान्तरवेद्यः प्रत्यक्षातिरिक्तप्रमाणविषय इत्यर्थः ॥ **तत्प्रमाणमिति** । प्रत्यक्षातिरिक्तप्रमाणमित्यर्थः । उपाधाविति शेषः । यद्वा तस्मिन् इन्द्रियोपाधौ प्रमाणमनुमानादिकमित्यर्थः । अनुमानागमयोरभावादयोग्योपाधिर्नास्तीति भावः । ननु प्रमाणभावेनोपाध्यनिश्चयेऽपि तत्र कर्हिचिदुपाधिरिति सन्देहो भविष्यतीत्यत आह ॥ **न चेति** । अप्रामाणिकः सर्वप्रमाणागोचरः । शङ्कायामपि न केवलं निश्चयम् । किं नाम सन्देहं च नाधिरोहति विषयतया न बध्नातीत्यर्थः । सत्त्वस्य प्रमाणवृत्तौ तन्त्रत्वात् । तत्सद्भावे प्रमाणविषय-त्वावश्यम्भावात् । अविषयस्य सत्त्वव्यतिरेकात्तत्सन्देहो न युक्त इति भावः ॥ **अत इति** । उपाधेः सकलप्रमाणविषयत्वादत्र धूमाग्निसम्बन्ध इत्यर्थः ॥ **अविनाभावप्रमितिरिति** । नियतसामानाधि करण्यरूपसम्बन्धपर्यवसन्नान्वयादविनाभावरूपव्याप्तिः प्रमितिरित्यर्थः ।

**(६) प्र.प.— नन्वेवं सति न प्रत्यक्षं व्याप्तिग्राहकम् । मैवम् । यतः साहचर्यग्राहिणः प्रत्यक्षस्य भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चयाः सहकारिणः । न च सहकारिभेदेऽपि**

**प्रत्यभिज्ञायामिव प्रमाणान्तरत्वम् । वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षं कथमतीताद्यास्पदां व्याप्तिं गृह्णीयादिति चेन्न । सहकारिसामर्थ्येन करणानां शक्त्यन्तराविर्भावस्य बहुलमुपलम्भात् ।**

**जना.—** आशयमविद्वान् शङ्कते ॥ **नन्वेवमिति ।** प्रत्यक्षे सत्यप्यनौपाधिकत्वाद्यनिश्चयदशायां व्याप्तिनिश्चयाभावेनान्वयव्यभिचारादिति भावः । आशयमाविष्करोति ॥ **मैवमित्यादिना ॥ शक्त्यन्तर अविर्भावस्येति ।** यथा वेत्रबीजस्य दावलक्षणसहकारिवशात्कदलीकाण्डजननानुकूल-शक्त्यन्तराविर्भावस्तद्वदिति भावः ।

**राघ.—** ॥ **नन्वेवमिति ।** तर्काधीनोपाध्यभावनिश्चयायत्तव्यभिचाराभावनिर्णयसहकृत-भूयोदर्शनजन्यत्वे व्याप्तिज्ञानस्य स्वीकृते सतीत्यर्थः । यत इत्यस्य यतः सहकारिणोऽतो मैवमिति योजना । भूयोदर्शनव्यभिचारादर्शने द्वे एव सहकारिणी । उपाध्यभावनिश्चयस्तु व्यभिचाराभावनिश्चये हेतुरिति कृत्वा सोऽप्यत्र सहकारित्वेनोपात्त इति ध्येयम् । सहकारिभेदे मानान्तरापत्तिरित्यत आह ॥ **न चेति ।** संस्काररूपसहकारिभेदेन चक्षुर्जन्यप्रत्यभिज्ञायां यथा न प्रमाणान्तरता तथा व्याप्ति-निश्चयस्यापि । किन्तु प्रत्यक्षत्वमेवेत्यर्थः । सन्निकृष्टकतिपयधूमादिव्यक्तिषु व्याप्तिग्रहेऽपि देशकाल-व्यवहितव्यक्तिषु कथं व्याप्तिग्रहः । तत्र न्यायमत इव सामान्यप्रत्यासत्तेरभावेन तत्र चक्षुषोऽ-सामर्थ्यात् । तत्र व्याप्त्यग्रहे चापूर्वधूमदर्शनाद्वन्हिधीर्न स्यादिति भावेन शङ्कते ॥ **वर्तमानेति ॥ बहुलमुपलम्भादिति ।** संस्काररूपसहकारिसामर्थ्याहितशक्तिकस्य चक्षुषोऽतीतवर्तमानविषय-प्रत्यभिज्ञाजनकत्वदर्शनात् । तथा गन्धानुभवजन्यसंस्काराहितशक्तिकस्य चक्षुषश्चन्दनखण्डे सुरभि-श्चन्दनखण्ड इति साक्षात्कारजनकत्वदर्शनाद्दोषाहितशक्तिकस्य चक्षुष इदं रूप्यमित्यसद्रूप्य-विषयकधीजनकत्वदर्शनात् । दावदग्धवेत्रबीजस्य कदलीकाण्डजनकत्वदर्शनादित्यर्थः । तथा च भूयोदर्शनव्यभिचाराभावनिश्चयोपाध्यभावनिश्चयजन्यसंस्काराविर्भूतशक्तिकस्य चक्षुषोऽतीतादिधूमनिष्ठ-व्याप्तिविघटकत्वोपपत्तिरिति भावः । न चैवं धूमवह्निगोचरभूयोदर्शनसहकार्याहितशक्तिकं चक्षू रूपरसादिविजातीयगतव्याप्तिं गृह्णीयादिति शङ्क्यम् । इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यत इत्यनु-व्याख्यानसुधोक्तरीत्या भूयोदर्शनजनितसंस्काराविर्भूतशक्तिकं चक्षुः स्वसन्निकृष्टव्यक्तिनिष्ठसादृश्य-प्रतियोग्यतीतादिग्राहकमित्यत्र तात्पर्यात् ।

**विज.—** ॥ **नन्वेवं सतीति ।** विचारसमुत्थानौपाधिकत्वज्ञानस्य हेतुत्व इत्यर्थः ॥ **भूयो-दर्शनेति ।** इदं च व्याप्तिप्रत्यक्षनियतपूर्ववर्तितया सर्वमुपात्तम् । न हेतुताया उपाध्यभावनिश्चय-भूयोदर्शनयोर्व्यभिचारज्ञानाभाव एवोपक्षीणत्वात् । कारणं तु व्यभिचारविरवसहकृतं साहचर्य-

ग्राहिप्रत्यक्षमेवेत्यवगन्तव्यम् । यद्वा भूयोदर्शनानौपाधिकत्वनिश्चयव्यभिचारज्ञानाभावानां व्यापारव्यापारिभावेन हेतुतयैवोपादानम् । अस्ति च भूयोदर्शनेनोपाधितया शङ्क्यमानसाध्यसाधनसहचरितधर्माणां केषाञ्चित्साध्यव्यापकत्वनिश्चयः । सति च तस्मिन्नुपाधिकज्ञानविरहे व्यभिचारज्ञानविरहित इति न व्यापारेण व्यापारिणोऽन्यथासिद्धिः । न च स्वतः सिद्धव्यभिचारज्ञानविरहवतोऽनौपाधिकत्वनिश्चयं विनैव व्याप्तिप्रत्यक्षसम्भवान्नैवमिति वाच्यम् । प्रत्यक्षेण व्याप्तिग्रहे विशेषादर्शने सति सहचारादिसाधरणधर्मदर्शनाव्यभिचारशङ्कावश्यकतयोक्तप्रकारानुसरणनियमादिति । प्रत्यक्षस्य नियतसहकारित्वात्सहकारिभेदेन सहितं यच्च व्याप्तिज्ञानं जनयति तत्प्रमाणान्तरमापद्येतेत्याशङ्क्याह ॥ **न चेति** । प्रत्यक्षस्य व्याप्तिग्राहकत्वे बाधकान्तरं शङ्कते ॥ **वर्तमानेति** । धूमत्वादिसामान्यस्य त्वयाऽनभ्युपगमादिति शङ्काभिप्रायः ॥ **सहकारेति** । अञ्जनाद्यौषधरूपसहकारिसामर्थ्याच्चक्षुरादिप्रमाणस्य व्यवहितधनादिग्राहकत्वव्यभिचारादर्शनादिसहकारिवशादतीतादिनिष्ठतया व्याप्तिग्राहकत्वं प्रत्यक्षस्य भविष्यतीत्यर्थः ।

**वेदे.—** ॥ **एवं सतीति** । उक्तविचारसाध्योपाध्यभावज्ञानस्य व्याप्तिग्रहणहेतुत्वरूपेत्यर्थः ॥ **यत इति** । अत्र भूयोदर्शनव्यभिचारादर्शनयोरेव सहकारित्वम् । उपाध्यभावनिश्चयग्रहणं तूपाधिशङ्कास्थलाभिप्रायं न तु सार्वत्रिकाभिप्रायम् । अन्यथोपाध्यभावनिश्चयस्य व्याप्तिसोपक्षोक्तविमर्शाधीनत्वेनानवस्थानात् । नन्वेवं व्याप्तिज्ञानं न प्रत्यक्षफलमपि तु विजातीयम् । प्रत्यक्षे क्लृप्तसामग्र्यजनकत्वात् । तथा च तद्धेतोर्भूयोदर्शनादेः प्रमाणान्तरत्वमित्यत आह ॥ **न चेति** । सहकारिभेदेऽपि प्रमाणान्तरत्वं न चेति सम्बन्धः । अयं भावः । स्यादिदं यदि भूयोदर्शनादिकमेव स्वातन्त्र्येण व्याप्तिग्राहकं स्यात् । न चैवम् । यतो भूयोदर्शनादिकं व्याप्तिग्राहकप्रत्यक्षस्य सहकारीत्युक्तम् । न च सहकारिमात्रभेदे फलस्य विजातीयत्वम् । प्रत्यभिज्ञाया अपि तथात्वापातादिति ॥ **कथमतीतेति** । सर्वोपसंहारेण कथं व्याप्तिग्रहः । सामान्यलक्षणानभ्युपगमादिति भावः ॥ **सहकारीति** । प्रत्यभिज्ञायामेव दर्शनादिति भावः । अञ्जनादिसहकारिसामर्थ्येन चक्षुषो व्यवहितधनादिज्ञानजनकत्वस्य दर्शनादित्याहुः । सहकारिसामर्थ्येनेत्युपलक्षणम् । सामान्यलक्षणप्रत्यासत्त्यभावेऽपि वक्ष्यमाणरीत्या सादृश्यस्यैवातीतादिना प्रत्यासत्तित्वसम्भवात्सर्वोपसंहारेण व्याप्तिग्रहोपपत्तिरिति ध्येयम् ।

**अभि.—** ॥ **न च सहकारीति** । यथा प्रत्यभिज्ञायां जनयितव्यायां विलक्षणसामग्रीसहितत्वेऽपि न प्रमाणान्तरत्वम् । तथा प्रकृतेऽपि न प्रमाणान्तरत्वमित्यर्थः ॥ **बहुलमिति** । वेत्रबीजादावित्यर्थः ।

आद.— ॥ **भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चया इति ।** व्यभिचारः साध्याभावसम्बन्धमात्रम् । अयमर्थः । व्याप्तिस्त्वनौपाधिकसाध्याभाववत्सजातीयान्यत्वे सति साध्यसम्बन्धः । तत्र सहचारज्ञानं तु विशेष्यज्ञानविधयोपयुज्यते । तत्रोपाध्यभावनिश्चयव्यभिचारादर्शनाभ्यां साध्याभाववत्सजातीयान्यत्वं ज्ञानं जायते । तथा हि । स्वाव्यापकस्य स्वनिष्ठसाध्यसम्बन्धप्रयोजकत्वे खलु तत्प्रयोजकीभूतधर्माभावाधिकरणे वृत्तेः स्वसजातीयस्य साध्यसम्बन्धाभावेन साध्याभावसम्बन्धो भवेत् । स्वाव्यपकस्य स्वजातीयनिष्ठसाध्यसम्बन्धप्रयोजकत्वाधिकरणविशेषे साध्याधिकरणतासम्पादनद्वारैव । यथाऽऽर्द्रेन्धसंयोगस्य पर्वते धूमाधिकरणेनासम्पादनेन वह्निनिष्ठधूमवद्वृत्तिताप्रयोजकत्वं साध्याधिकरणताप्रयोजकत्वं च साध्यव्यापकस्यैव सम्भवति । अन्यथा यत्र स्वं नास्ति तत्रत्यसाध्याधिकरणतायामेव प्रयोजनकत्वासम्भवेन सर्वत्रापि तदसम्भवात् । नित्यभूतद्रव्यत्वाधिकरणतायामपि गुणवत्त्वं क्षेमसाधारणं प्रयोजकम् । यद्वा तदभावप्रयोजकाभावप्रतियोगित्वमेव । तत्र प्रयोजकत्वं व्याप्याधिकरणतायां व्यापकस्यास्त्येव । ततश्चोपाध्यभावे निश्चिते स्वनिष्ठसाध्यसम्बन्धे स्वाभाविकत्वधीर्जायते । यथा धूमनिष्ठो वन्हिमद्वृत्तित्वादिरूपसम्बन्धः स्वाभाविकः स्वाव्यापकप्रयोज्यत्वाद्धूमत्वादित्यनुमानेन तादृशधीसम्भवात् । सम्बन्धे स्वाभाविकत्वं च धूमत्वादिव्यङ्ग्यसादृश्यप्रयोज्यप्रयोजकत्वम् । तादृशसादृश्यप्रयोजकश्च धूमाद्युत्पत्तिप्रयोजकस्तत्सत्ताप्रयोजको वा । अन्यत्र व्यापकान्तरे प्रयोजकत्वाङ्गिकारे गौरवान्मानाभावाच्च । ततश्चैतद्धूमसजातीयः साध्याभावप्रतियोगिकानौपाधिकसम्बन्धशून्यः साध्यसम्बन्धप्रयोजकप्रयोज्यसादृश्यप्रतियोगित्वादित्यनुमानेन व्यभिचाराभावनिर्णयो जायते । अत्र यो यद्धर्मविशिष्टप्रतियोगिकसम्बन्धप्रयोजकप्रयोज्यसादृश्यप्रतियोगी स तद्धर्मविशिष्टप्रतियोगिकाभावप्रतियोगिकानौपाधिकसम्बन्धशून्यो यथा वन्ह्यभावप्रतियोगिकानौपाधिकसम्बन्धशून्य आलोक इति सामान्यव्याप्तिः । अत्र भोजननिष्ठतृप्तिसाधनत्वादिरूपधर्मसम्बन्धप्रयोजकं यद्भोजनत्वं तदेवैतद्भोजनवृत्तिभोजनान्तरप्रतियोगिकसादृश्यप्रयोजकमिति साधनीभूततृप्तिसाधनत्वसम्बन्धप्रयोजकप्रयोज्यसादृश्यप्रतियोगित्वस्य विषपत्रादिदूषितभोजनवृत्तिभोजनत्वादौ सत्त्वात्तत्र तृप्तिसाधनत्वाभावाधिकरणवृत्तित्वस्यैव सत्त्वाद्व्यभिचारवारणायानौपाधिकत्वं साध्याभावसम्बन्धे विशेषणम् । अनौपाधिकत्वं च स्वनिष्ठसाध्यसम्बन्धे यः प्रयोजकस्तन्निष्ठतादृशप्रयोजकतारूपशक्तिविघटकाप्रयोजकत्वमेव । विषपत्रादेरेव तद्भोजननिष्ठतृप्तिसाधनताशक्तेः कुण्ठीभावापादनद्वारा भोजनत्वेऽपि तत्सम्बन्धविघटनपूर्वकं तदभावसम्बन्धापादकत्वेनानौपाधिकत्वेनौपाधिकसाध्याभावसम्बन्धाभाववत्त्वेन न व्यभिचारः । ततश्च धूमत्वव्यङ्ग्यसादृश्ये स्वप्रतियोगिसामान्यनिष्ठसाध्याभावसम्बन्धाभावकत्वहेतुना साध्याभावसम्बन्धवदप्रतियोगित्व-

मनुमिनोति । ततश्च साध्यभावसम्बन्धवदप्रतियोगिहेतुतावच्छेदकव्यङ्ग्यसादृश्यवत्त्वहेतुनाऽनौपाधिकसाध्याभावसम्बन्धवत्सजातीयान्यत्वरूपव्यभिचाराभावधीर्जायते । यद्वाऽनौपाधिकसाध्याभावसम्बन्धवदप्रतियोगिहेतुतावच्छेदकाभिव्यङ्ग्यसादृश्यमेव व्याप्तिघटकं तादृशसादृश्यनिष्ठं तादृशसाध्याभावसम्बन्धवत्प्रतियोगिकत्वं व्यभिचारः । तथा च सादृश्ये तादृशप्रतियोगित्वाभावज्ञानमेव व्यभिचाराभावज्ञानं बोध्यम् । ततश्च व्यभिचाराभावनिर्णयसहकृतं चक्षुर्व्यभिचाराभावांशेऽलौकिकं साध्यसम्बन्धांशे लौकिकं निर्णयेन व्याप्तिप्रत्यक्षं जनयतीति । अथ व्याप्तिप्रत्यक्षे व्यभिचारादर्शनं सामानाधिकरण्यं द्वयमेवानुमितिहेतुर्न तु व्यभिचाराभावनिर्णयोऽपि । तज्ज्ञानस्य दुर्मिलत्वात् ।

न चोभयोपाध्यभावनिर्णयेन व्यभिचाराभावधीः सम्भवतीति वाच्यम् । उपाध्यभावस्यापि निर्णेतुमशक्यत्वात् । साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । तदभावज्ञाने प्रतियोगिन उपाधेर्ज्ञानस्यावश्यकत्वात्तादृशोपाधेरेवाप्रसिद्धत्वात् । उपाधिशरीरे व्यापकताया निविष्टत्वेन साध्ये तद्व्याप्यत्वज्ञानायोपाध्यभावनिश्चयापेक्षापत्त्या तत्राप्येवमित्यनवस्थापाताच्च । न च तत्र प्रमाणान्तरेण व्यापकत्व निश्चय इति वाच्यम् । तादृशशप्रमाणान्तरस्यानुपलभ्यमानत्वात् । सत्त्वे वा धूमनिष्ठव्याप्तिनिश्चयस्यापि तेनैव सम्भवेन प्रत्यक्षगम्यत्वोक्तेरयुक्तत्वापाताच्च । किञ्च वह्नौ धूमसम्बन्धे आर्द्रेन्धनसंयोगरूपोपाधिनिश्चयेन व्यभिचारज्ञानं भवतीत्युपपादनं विरुध्येत । तत्रोक्तरीत्योपाधिनिर्णयासम्भवात् । न च व्यभिचारज्ञानाभावस्यापि हेतुत्वे मानाभावः । व्याप्तेरव्यभिचारघटितत्वेन तज्ज्ञानं प्रति व्यभिचारज्ञानस्य प्रतियोगिज्ञानमुद्रया प्रतिबन्धकत्वेन कारणताया आवश्यकत्वादिति चेत् । मैवम् । धूमसामान्यस्यापि सामान्यत उपस्थितत्वेन तत्र वह्न्यभावसम्बन्धाभावसाधकविशेषप्रमाणस्याप्यभावकाले वस्तुत्वादिसामान्यधर्मदर्शनस्यापि सत्त्वेन तत्र व्यभिचारसन्देहस्याशक्यवारणत्वेन व्याप्तिग्रहप्रतिबन्धकव्यभिचारनिर्णयाभावेऽपि सार्वत्रिकव्याप्तिग्रहासम्भवात् । न च यस्य पुरुषस्य वह्निसमानाधिकरणतया यावन्तो धूमा दृष्टास्तावत्स्वेव धूमत्वज्ञानं तदरितिक्तधूमव्यक्तिर्नास्त्येवेति ज्ञानं तस्योक्तविधया धर्मिज्ञानाभावादेवोक्तविधया संशयसम्भवेन व्याप्तिनिर्णयः सम्भवतीति व्याच्यम् । तथापि पर्वतादौ धूमं दृष्टवतः पूर्वोत्पन्नज्ञानेऽप्रामाण्यज्ञानद्वारा व्याप्तिसंशयस्यावश्यकत्वात् । न हि वयं व्याप्तिज्ञानमन्यथा न जायत इति नियमं ब्रूमः । दोषविशेषेण सामानाधिकरण्यज्ञानमात्रेणापि व्याप्तिग्रहसम्भवात् । अत एव सुधायां व्यभिचाराभावनिर्णयस्यैव कारणत्वमुपपादितम् । अत्र तूत्सर्गत उपाध्यभावनिर्णयस्य व्यभिचाराभावनिर्णयजनकत्वात्सहकारित्वमुक्तम् । न च तथाऽपि व्यभिचारज्ञानाभावस्य क्लृप्तत्वात्तस्यैव कारणत्वामास्तां न व्यभिचाराभावनिर्णयस्येति वाच्यम् । प्रतिबन्धकाभावस्यैव कारणताया अनङ्गीकारेण व्यभिचारज्ञानभावस्याक्लृप्तत्वात् । व्यभिचारनिर्णयस्यैव

प्रतिबन्धकत्वेन तदभावस्य कथञ्चित्कारणत्वाङ्गीकारसम्भवेऽपि तज्ज्ञानसामान्याभावस्य सर्वथाऽक्लृप्तत्वाच्च । व्यभिचाराभावनिर्णयस्याप्युपनायकतया कारणतायाः क्लृप्तत्वाच्च । अन्यथा सन्निकर्षाभावेनोक्तव्यभिचाराभावस्य चाक्षुषव्याप्तिज्ञाने भानायोगात् । न चोपाध्यभावो निर्णेतुमशक्यः । प्रमाणाभावहेतुना तस्य सिद्धेः ।

तथा हि । न तावत्प्रत्यक्षम् । तद्धि वन्हिव्यापकत्वेन ज्ञातेषु धूमवन्निष्ठाभावप्रतियोगित्वावगाहि वा धूमवन्निष्ठाभावप्रतियोगित्वेन ज्ञातेषु वन्हिव्यापकत्वावगाहि वा भवेत् । नोभयमपि सम्भवति । धूमवन्निष्ठाभावप्रतियोगिषु वह्निमन्निष्ठाभावप्रतियोगित्वस्यैव प्रतियोगित्वेन प्रत्यक्षेण ग्रहणात् । अनुमानादिकं तु नास्त्येवेति प्रमाणसामान्याभावसिद्धेः । सद्धेतुस्थले उपाधेरप्रसिद्धत्वेऽप्यप्रमाणिकप्रतियोगिकात्यन्ताभावादेर्न दोषः । यत्तु साध्यव्यपाकत्वग्राह्ययोपाध्यन्तराभावग्रहापेक्षयाऽनवस्थितिरिति । तदतीव मन्दम् । न हि व्याप्तिज्ञानसामान्यं प्रत्यक्षरूपमेव येन सर्वत्राप्युपाध्यभावनिश्चयोऽपेक्षित इति ब्रूमः । येनोक्तदोषः स्यात् । किन्तु क्वचिदनुमानादिना काश्चन व्याप्तयोऽनादितः सिद्धाः काश्चन साक्षिसिद्धाः । प्रत्यक्षस्थले स्वरसतश्च काश्चन । यत्र तु व्यभिचारशङ्कया विमर्शस्तत्रायमुपायो दर्शितः । तत्र तु क्वानवस्थावार्ता बाहुलिकत्वादस्यैव प्रदर्शनम् । यत्त्वार्द्रेन्धनसंयोगस्योपाधित्वप्रदर्शनं तदयुक्तमिति । तन्न । किं तत्र व्यभिचारनिर्णयायोपाधिनिर्णयो वर्णितः । न चैवम् । व्यभिचारस्य प्रत्यक्षत एव सिद्धत्वात् । किन्तु सामानाधिकरण्यसत्त्वेऽपि वह्नौ धूमव्यभिचारवद्व्यभिचारशङ्कायामुपाध्यभावेन व्यभिचाराभावं साधयितुमुपाधेर्व्यभिचारप्रयोजकत्वं च प्रदर्शयितुं प्रवृत्तत्वेन वैय्यर्थ्याभावात् । आर्द्रेन्धनसंयोगस्य वन्हिमन्निष्ठाभावप्रतियोगित्वं त्वध्यक्षसिद्धम् । धूमवन्निष्ठाभावप्रतियोगिता तु नोपलभ्यत इति तदभावज्ञानं जायते । यत्र तु शङ्का तत्र जनकत्वरूपानुमानेन जनकताज्ञानं च बहुषु स्थलेष्वन्वयव्यतिरेकौ दृष्टवतोऽन्यत्र तदलभ्यमानस्य भवति । तत्साजात्येनैवान्यत्रापि तज्ज्ञानं धूमेऽपि वह्निजन्यत्वरूपानुमानेन व्याप्तिनिश्चयसम्भवेऽपि तदनुपस्थितावपि व्याप्तिज्ञानस्यानुभवसिद्धत्वेन तत्प्रकारकस्यात्र प्रदर्शितत्वेन बाधकाभावात् । ननु हेतुनिष्ठसाध्यप्रतियोगिकस्वाभाविकसम्बन्ध एव व्याप्तिरस्तु । तथा च तज्ज्ञानादेवानुमितिसम्भवेन किमव्यभिचारस्य व्याप्तिघटकेनालं तज्ज्ञानेनापीति चेन्न । स्वाभाविकसाध्यसम्बन्धज्ञानस्य साक्षाद्विरोध्यविषयकत्वेनैकहेतौ तत्सत्त्वेऽपि हेत्वन्तरे साध्याभावशङ्कासम्भवेनानुमितेरसम्भवात् । एतत्सादृश्यप्रतियोगिकसामान्ये साध्याभावसम्बन्धाभावग्रहदशायां तु व्यभिचारशङ्काया असम्भवेन भवत्येवानुमितिः । नन्वेकत्र हेतौ साध्यसम्बन्धस्य स्वाभाविकत्वे गृहीते तादृशप्रतियोगित्वहेतुना यथा तत्सजातीयसामान्ये साध्याभावसम्बन्धाभावोऽनुमीयते तथा स्वाभाविकसाध्यसम्बन्ध एवानुमातुं

शक्यः । तेनैवानुमितिः सम्भवतीति तस्यैव व्याप्तित्वमस्तु किं व्यभिचाराभावस्य व्याप्तिघटकत्वेनेति चेन्न । हेतौ साध्याभाववद्वृत्तित्वरूपव्यभिचारग्रहं प्रति साध्यवद्वृत्तिज्ञानस्य साक्षाद्विरोधित्वाभावात् । साध्याभाववद्वृत्तिरूपहेतुना साध्यसम्बन्धाभावसाधनसम्भवेन सत्प्रतिपक्षग्रस्तत्वनोक्तप्रतियोगित्व-हेतुना साध्यसम्बन्धासिद्धेः । व्यभिचाराभावोऽवश्यं साधनीय एवेति । तावन्मात्रज्ञानस्यानुमिति-जनकत्वसम्भवे सर्वत्र हेतौ साध्यसम्बन्धज्ञानस्यानपेक्षितत्वात् । व्यभिचारनिश्चयाभावेन निश्चया-साम्भवेऽपि तच्छङ्काया अपि सत्ताकाले तज्ज्ञानासम्भवात् । प्रतिपक्षसन्देहेऽप्यनुमितेरसम्भवात् ।

**श्रीनि.—** ॥ **सहकारिसामर्थ्येनेत्येदि** । नन्वत्र भक्तिपादीयसुधाविरोधः । तत्रातीतादिकसर्वं धूमादि तथाविधेनाग्न्यादिना व्याप्तमिति ज्ञापनपूर्वकं खल्वनुमानम् । तथा साक्षिणोऽतीतादि-गोचरत्वाभावेऽन्यस्य तथाविधस्याभावादनुमानमात्रोच्छेदः स्यादित्युक्तेरिति चेत् । उच्यते । द्विविधं हि विप्रकृष्टधूमादिज्ञानम् । सर्वत्वप्रकारकं धूमत्वप्रकारकं चेति । तत्र सर्वत्वेन विप्रकृष्टधूमादिज्ञानं साक्षिणा विना न सम्भवतीति सुधाशयः । धूमत्वादिना तज्ज्ञानं त्वत्रोक्तम् । प्रकारद्वयेनेत्यङ्गीकारे न कोऽपि विरोध इति ।

**वि.—** ॥ **नन्वेवं सतीति** । उपाध्यभावनिश्चयादीनां व्याप्तिप्रमाहेतुत्वे सतीत्यर्थः । सत्यपि सम्बन्धगोचरप्रत्यक्षे तेन व्याप्तिज्ञानानुदयादन्यस्य च प्रत्यक्षस्य व्याप्तिज्ञानजनकत्वात्प्राक्तनं प्रत्यक्षं व्याप्तिग्राहकमिति भावः । साहचर्यान्तरविरहादेव तेन व्याप्तिप्रमित्यनुदय इत्यभिप्रत्य परिहरति ॥ **मैवमिति** । मैवमित्यस्य तस्मादिति शेषेणान्वयः । यद्यपि व्यभिचाराज्ञाने सत्युपाध्यभावनिश्चय-विलम्बेन व्याप्तिनिश्चयविलम्बाभावान्न तस्य सहकारित्वम् । तथाऽपि सत्युपाधिज्ञाने व्यभिचारा-दर्शनायोगात्तदर्थमुपाध्यभावनिश्चयोऽपेक्षित इति तस्य सहकारित्वाभिमान इति ध्येयम् । ननु तयोर्दर्शनादेः क्वापि प्रत्यक्षसहकारित्वाभावात्तत्सहकृतस्य साहचर्यग्राहिणः प्रत्यक्षस्य प्रमाणान्तर-मेवाङ्गीकार्यं न प्रत्यक्षत्वेन प्रामाण्यमित्यत आह ॥ **न चेति** । तथा प्रत्यभिज्ञायां कार्ये संस्कारलक्षणसहकारिविशेषे सत्यपि न प्रमाणान्तरत्वम् । तथा सम्बन्धग्राहिणः प्रत्यक्षस्य भूयोदर्शनादिसहकारिविशेषसद्भावेऽपि न प्रमाणान्तरत्वमित्यर्थः । ननु भूयोदर्शनादेः सहकारित्वेऽपि न प्रत्यक्षं व्याप्तिग्राहकं तस्य वर्तमानसन्निकृष्टार्थमात्रग्राहकत्वादिति शङ्कते ॥ **वर्तमानेति** । कथमित्याक्षेपे । अतीताद्यस्पृशमतीतानागतासन्निकृष्टवर्तमानहेत्वाश्रयमित्यर्थः। **नेति** । भूयोदर्शनादि-सहकारिसामर्थ्येन तस्य शङ्कान्तराविर्भावादिति शेषः । ननु सहकारिसामर्थ्येन शङ्कान्तराविर्भावस्य काप्यनुपलम्भाद्वर्तमानसन्निकृष्टमात्रग्राहिणः प्रत्यक्षस्य सहकारिसामर्थ्येनातीतादिविषयीकरणसामर्थ्या-

विर्भाव एवायुक्त इत्यत आह ।। **सहकारिसामर्थ्येनेति** । शङ्कान्तराविर्भावस्य सहजशक्त्यतिरिक्त शक्त्युद्भावनस्येत्यर्थः । इदमुक्तं भवति । प्रत्यभिज्ञासाधनस्य प्रत्यक्षस्य संस्कारलक्षणसहकारि-सामर्थ्येनातीतविषयीकरणसामर्थ्यस्य वेत्रबीजस्य दावदाहलक्षणसहकारिसामर्थ्येन कदलीकाण्ड-जननसामर्थ्यस्यामयसाधनद्रव्याणां तत्तदनुपानरूपसहकारिसामर्थ्येनामयनिवृत्तिजननसामर्थ्यात्सोपरता तत्र प्रकृतोऽपि शक्त्यन्तराविर्भावो युक्त इति न दोषः इति ।

(७) प्र.प.— **किञ्च प्रतीतस्य धूमस्याग्निसम्बन्धे स्वाभाविकतया निश्चिते यद्यन्यत्रापि धूमः स्यात्तर्हि तस्याप्येवमित्येवं व्याप्तिग्रहो भवतीत्यतः काऽत्रानुपपत्तिः । एतेन प्रमेयत्वाभिधेय-त्वयोर्व्याप्तिं गृण्हतः सार्वज्ञप्रसङ्गः इत्यपि परास्तम् । कुत एतत्सर्वं कल्प्यत इति चेत् । कार्यदर्शनादेव । अस्ति तावद्धूमदर्शनानन्तरमग्निज्ञानम् । न च तदयथार्थम् । संवादित्वात् । न चान्यदर्शनेनान्यज्ञानं निर्निमित्तं भवितुमर्हति । अतिप्रसङ्गात् । न च व्याप्तिप्रमां समुचितदेशत्वप्रमां चापहाय निमित्तान्तरमस्तीति कार्यमेवैतत्कल्पयति । यथा खलु शिलाशकलादावनुपलब्धामपि क्षितिसलिलादिसहकारिसमुद्भूतां बीजस्य शक्तिमङ्कुरदर्शनं कल्पयतीति । अनुमानगम्यां तु व्याप्तिमुत्तरत्रोदाहरिष्यामः । न च तस्याप्यनुमानस्य व्याप्त्यपेक्षायामनवस्था । अन्ततः प्रत्यक्षागम-मूलत्वात् । ब्राह्मणो न हन्तव्यो गौर्न पदास्पृष्टव्येत्यागमगम्या व्याप्तिः । न चात्र कश्चित्क्षुद्रोपद्रवो नापि दृष्टान्तापेक्षेति ।**

**जना.**— असन्निकृष्टधूमादौ व्याप्तिग्रहणार्थमुपायान्तरमाह ।। **किञ्चेति** ।। **तस्याप्येवमिति** । तस्यापि देशान्तरीयधूमस्य । एवं वह्निव्याप्तिरित्यर्थः ।। **इत्येवं व्याप्तिग्रह इति** । यद्यन्यत्रापि धूमः स्यात्तर्हि सोऽपि धूमो वन्हिव्याप्यः स्यात् । सन्निकृष्टधूमवदित्यनुमानेन व्याप्तिग्रह इत्यर्थः । अत्र शङ्कासमाधानप्रकारस्तर्कताण्डवे द्रष्टव्यः ।। **एतेनेति** । व्याप्तिग्रहणकाले साध्यसाधनाधिकरणानां यत्र यत्रेति सामान्यकारेणैव ज्ञानेनेत्यर्थः । प्रमेयत्वाभिधेयत्वयोर्व्याप्तिग्रहणकाले साध्यसाधनाधि-करणानामशेषविशेषज्ञाने हि सार्वज्ञं स्यात् । न त्वेवमिति भावः ।। **कुत एतत्सर्वमिति** । अतीतादिनिष्ठव्याप्तिग्रहणं तदनुकूलतर्कादिकं चेत्यर्थः । कार्यदर्शनमेवोपपादयति ।। **अस्ति तावदि-त्यादिना** ।। **अतिप्रसङ्गादिति** । घटदर्शनादपि पटज्ञानापत्तेरिति भावः । नन्वन्यस्य दर्शनेनान्य-ज्ञानान्यथाऽनुपपत्या निमित्तमात्रसिद्धावपि तयोर्व्याप्तिसिद्धौ किमायातमित्यत आह ।। **न चेति** । **अनुमानगम्यामिति** । प्राणादिमत्त्वं सात्मकत्वव्याप्यम् । तदभावव्यापकाभावप्रतियोगित्वादि-त्यादिनोत्तरत्रोदाहरिष्याम इत्यर्थः । उत्तरत्रावश्यमुदाहरिष्यमाणाया अस्या व्याप्तेः पूर्वमप्युदाहरणे वचनगौरवं स्यात् । अतो लाघवादुत्तरत्रैवोदाहरिष्याम इति भावः ।। **ब्राह्मण इति** । एतदर्थप्रतिपादेन

यो ब्राह्मणायावगुरेत्तं शतेन यातयेदित्यागमेन गम्येत्यर्थः ॥ **कश्चिदिति** । व्यभिचाराशङ्कारूपः कथमतीताद्यास्पदां व्याप्तिं गृह्णीयादित्यादिरूपश्चेत्यर्थः । आद्यस्य प्रात्यक्षिक-व्याप्तिग्रह एव प्रतिबन्धकत्वात् । आगमस्यातीतानागतादिसकलगोचरत्वेन द्वितीयोऽपि नागमिकव्याप्तिग्रह-प्रतिबन्धक इति भावः ॥ **नापीति** । प्रत्यक्षानुमानाभ्यां व्याप्तिग्रह एव दृष्टान्तस्यापेक्षितत्वादिति भावः । धूमे वह्निव्याप्तेरेव यथाऽगमगम्या व्याप्त्युदाहरणत्वं न सम्भवति तथोक्तमर्वाक् ।

**राघ.—** अनुमानादिना तत्र व्याप्तिग्रह इति पक्षान्तरमाह ॥ **किञ्चेति ॥ निश्चित इति** । प्रागुक्तदिशा प्रत्यक्षेणाप्तोपदेशेन वा निश्चिते सति तस्याप्येवं व्याप्यत्वम् । पुरोवृत्तिधूमनिष्ठ-स्वरूपतत्सादृश्यप्रतियोगित्वेन व्यवहितधूमव्यक्त्युपस्थितौ सत्यां यद्यन्यत्र धूमः स्यात्तर्हि सोऽपि वह्निव्याप्यो धूमत्वादेतद्धूमवदित्यनुमानेन यद्यन्यत्रापि धूमः स्यात्सोऽपि वह्निव्याप्यः स्यान्न चेद्वह्नि-व्याप्यस्तर्ह्येतत्सदृशो न स्यात् । एतन्निष्ठसादृश्यप्रतियोगी वा न स्यात् । भवति च तथा । अतो वह्निव्याप्य इति तर्केण वा तद्ग्रह इति न काऽप्यनुपपत्तिरित्यर्थः ॥ **एतेनेति** । विप्रकृष्टानुमिति-रूपत्वेनेत्यर्थः । तर्कताण्डवे तु व्याप्तिज्ञानं यद्यन्यत्रापि धूमः स्यात्तर्हि तस्याप्येवमिति विप्रकृष्ट-व्याप्यांशे सम्भावनारूपम् । न निश्चयरूपम् । व्याप्त्यंशे तु निश्चयरूपमिति नृसिंहाकारमिति । पूर्ववाक्यार्थमुक्त्वैतेन सर्वत्र निश्चयरूपत्वाभावेन न सार्वज्ञप्रसङ्ग इत्यर्थ उक्तः । विस्तरस्तु खण्डनोक्तसार्वज्ञप्रसङ्गभङ्गे ध्येयः ॥ **एतत्सर्वमिति** । लिङ्गप्रमितिव्याप्तिस्मृत्योरनुमितेहेतुत्वं भूयोदर्शनादेर्व्याप्तिधीहेतुत्वं व्याप्तिप्रकारमपेक्ष्यानुमितिजनकत्वं शक्त्यन्तरकल्पनेत्यादिकं सर्वमित्यर्थः ॥ **अतिप्रसङ्गादिति** । घटज्ञानात्पटधीप्रसङ्गादित्यर्थः ॥ **कार्यमेवेति** । अग्निज्ञानरूपमेवेत्यर्थः । तत्र दृष्टान्तो **यथेति** ॥ प्रत्यक्षेण व्याप्तिग्रहोक्तिः ॥ **उत्तरत्रेति** । केवलव्यतिरेक्युक्तिप्रस्तावे इत्यर्थः ॥ **इत्यागमगम्येति** । इत्यागमाभ्यां ब्राह्मणत्वाहन्तव्यत्वयोर्गोत्वपदाऽस्प्रष्टव्यत्वयोर्व्याप्तिर्गम्येत्यर्थः ॥ **न चात्रेति** । व्याप्तेरागमगम्यत्वविषये भूयोदर्शनादिसापेक्षत्वं शक्त्यन्तरकल्पनाऽनुमानगम्यव्याप्ताविवा-नवस्थानाश्वासशङ्काव्यवहिते व्याप्तिग्रहायोग इत्यादिक्षुद्रोपद्रवो नास्ति अनयोर्वाक्ययोः यो यो ब्राह्मणस्स न हन्तव्य इति तात्पर्येण ब्राह्मणसामान्यस्यैव हननप्रतिषेधेन सर्वेष्वपि हननाभावाव-गतेरिति भावः । इतिशब्दः प्रत्यक्षादिप्रमाणत्रयगम्यव्याप्त्युक्तिसमाप्तौ ।

**विज.–** असन्निकृष्टधूमादौ व्याप्तिरनुमेया सन्निकृष्टप्रत्यक्षगृहीतव्याप्तिकधूमादिवदित्याह ॥ **किञ्चेति** । प्रतीतस्य धूमस्य सन्निकृष्टस्येति शेषः । यद्यप्यसन्निकृष्टो धूमो वह्निव्याप्यो धूमवान् सन्निकृष्टधूमवदिति व्याप्तिग्रहे धूमत्वादेः सामान्यस्याभावाद् दृष्टान्ते साधनवैकल्यं पक्षाद्यनुपस्थिते-

रनुमानानवतारश्च । तथाऽपि धूमत्वमात्रनिष्ठसाध्यप्रतियोगिधर्मवत्त्वस्य हेतुकरणेन साधनवैकल्यम् । धूमनिष्ठसादृश्यप्रतियोगित्वादिरूपसामान्यलक्षणाभ्युपगमाच्च न पक्षाद्यनुपस्थितिरिति मन्तव्यम् ॥ **एतेनेति** । यद्यप्यभिमतसामान्यलक्षणापेक्षयाऽयं प्रसङ्गो दुर्वारः । तेन रूपेण सार्वज्ञप्रसङ्गस्येष्टत्वे समं समाधानम् । तथाऽपि सामान्यलक्षणायां पराभिमतायां मानाभाव इत्यत्र तात्पर्यम् ॥ **अनुमानगम्यां त्विति** । प्रत्यक्षेतरमानगम्यामपीत्यर्थः ॥ **ब्राह्मणो न हन्तव्य इति** । यद्ब्राह्मणहननं तदनिष्टसाधनमिति नरकसाधनत्वप्रविष्टव्याप्तिरस्मादागमादवगन्तव्येत्यर्थः ॥ **नापीति** ॥ व्याप्तेरागमेनोपस्थितौ न सहचारज्ञानापेक्षेति भावः ।

**वेदे.–** तुष्यत्विति न्यायेनाह ॥ **किञ्चेति** । माऽस्तु प्रत्यक्षेणातीतादिधूमे व्याप्तिग्रहः । वर्तमानधूमनिष्ठव्याप्तौ प्रत्यक्षेण निश्चितायां तद्धूमदृष्टान्तेन विप्रतिपन्नो धूमोऽग्निव्याप्तो भवितुमर्हति धूमात्परिदृश्यमानधूमवदिति धूमवत्त्वादिहेतुना तत्रापि व्याप्तिग्रह इति स्वीकारे बाधकाभावात् । न चैवमनुमानगम्यां त्वित्युत्तरग्रन्थविरोधः । अतीतादाविव वर्तमानेऽपि लिङ्गे व्याप्तेः केवलानुमानगम्यत्वस्य तदर्थत्वादिति भावः । यद्वा यद्यतिथिरागच्छेत्तर्हि स भोजयितव्य इत्यादौ वाक्यजन्यज्ञानस्य निमित्तांशे सम्भावनारूपत्वं तस्मिन्सति नैमित्तिकं कार्यमित्यंशे तु निश्चयरूपत्वमित्येवं नरसिंहाकारत्वं तथा प्रकृतेऽपि व्याप्यांशे सम्भावनारूपं व्याप्त्यंशे तु निश्चयरूपमिति नरसिंहाकारमतीतादिलिङ्गे व्याप्तिज्ञानमित्याह ॥ **किञ्चेति** । सर्वोपसंहारेण व्याप्तिग्रहे खण्डनोक्तदूषणं परिहरति ॥ **एतेनेति** । अत्रोक्तखण्डने एवं चेत्प्रमेयत्वाभिधेयत्वयोर्व्याप्तिं गृह्णतः सार्वज्ञं स्यात् । तथा च सर्वगताशेषविशेषाणां ज्ञातत्वादयं च घटो न वेति संशयादिकं न स्यादिति । तदप्येतेनोक्तरीत्याऽतीतादिलिङ्गेऽनुमानेनैव व्याप्तिज्ञानाङ्गीकारेण नरसिंहाकारज्ञानाङ्गीकारेण वा निरस्तमित्यर्थः । येन सामान्यलक्षणयाऽशेषपदार्थान्ज्ञात्वा तत्र व्याप्तिर्गृह्यत इत्युच्यते । तं प्रतीदं त्वदीयं दूषणं नास्माकमिति भावः । ननु तथाऽपि सहकारिसामर्थ्येन वा सादृश्यरूपप्रत्यासत्त्या वा प्रत्यक्षेणैवातीतादौ व्याप्तिग्रह इति पूर्वोक्तपक्षे सार्वज्ञप्रसङ्गोऽनिवार्य इति चेन्न । सर्वं सामान्यतो यस्मात्सर्वैरेवानुभूयत इत्याचार्यैरुक्तत्वेन सामान्यतः सार्वज्ञस्येष्टत्वात् । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः । एवं प्रत्यक्षगम्यां व्याप्तिमुदाहृत्येदानीमनुमानगम्या व्याप्तिः केत्यपेक्षायामाह ॥ **अनुमानेति** । परोक्तकेवलव्यतिरेक्यनुमानदूषणावसरे व्यतिरेकव्याप्त्याऽन्वयव्याप्तिरनुमेयेति वक्ष्याम इति भावः ॥ **न चात्रेति** । अनुमानागमगम्यव्याप्तावित्यर्थः । क्षुद्रोपद्रवो प्रत्यक्षस्य वर्तमानमात्रग्राह्यत्वात्कथमतीताद्यास्पदव्याप्तिग्राहकत्वमित्यादिरूपः । प्रत्यक्षस्य तथा नियमेऽप्यनुमानागमयोर्वर्तमानमात्रग्राहित्वनियमाभावादिति भावः ॥ **नापि दृष्टान्तापेक्षेतीति** । येन तस्याप्यागमान्तरवेद्यत्वेऽनवस्थेति शङ्कावकाश इति भावः ।

**अभि.–** केषाञ्चित्प्रत्यक्षेण व्याप्तिग्रहणप्रकारमुक्त्वाऽन्येषां व्याप्तिग्रहप्रकारमाह ।। **किञ्चेति ।।** पूर्वेषां सर्वत्र प्रत्यक्षेणैव व्याप्तिग्रहः । एतेषां सन्निकृष्टधूमेषु प्रत्यक्षेण व्याप्तिग्रहोऽसन्निकृष्टधूमेषु विप्रकृष्टो धूमो वह्निना स्वाभाविकसम्बधवान् धूमत्वादेतद्धूमवदित्यनुमानेन व्याप्तिग्रह इति भेदः ।। **शिलाशकलादाविति ।** शिलाशकलादौ बीजस्याङ्कुरजननेऽनुकूलां भूशक्तिमनुपलब्धामपि क्षिति-सलिलादिसमुद्भूतमङ्कुरदर्शनं कल्पयतीत्यर्थः ।। **अनुमानगम्यामिति ।** सन्निकृष्टासन्निकृष्ट-मात्रेऽनुमानगम्यामित्यर्थः । पूर्वत्र सन्निकृष्टेषु प्रत्यक्षेण व्याप्तिग्रहोऽसन्निकृष्टेष्वनुमानेनेत्युक्तम् । उत्तरत्र व्याप्यमात्रेऽनुमानेन व्याप्तिग्रहप्रकारो वक्ष्यतीति भेदः । **न चात्र कश्चिदिति ।** अतीतादिविषयकत्वं कथमिति शङ्का नेत्यर्थः ।

**आद.–** किञ्च साध्यसम्बन्धज्ञानस्यैव हेतुतामते प्रत्येकं तत्तद्व्यक्तित्वावच्छिन्ने साध्यसम्बन्धज्ञानं कारणं वा सामान्यरूपावच्छिन्ने वा सामान्यरूपेणापि सर्वहेतुव्यक्तिविशेषकं वा व्याप्तिज्ञानं कारणम् । नाद्यः । व्यक्त्यन्तरे सामानाधिकरण्यज्ञानानामनन्तानां हेतुत्वे मानाभावात् । कदाचित्कतिपय-व्यक्त्यनुपस्थितिकालेऽनुमित्यभावप्रसङ्गाच्च । प्रकृतसाध्यसन्देहदशायां प्रकृतहेतौ साध्यसम्बन्ध-ग्रहासम्भवश्च । सम्भवे वा सिद्धसाधनताप्रसङ्गश्च । न च पर्वतत्वाद्यवच्छिन्ने वह्नित्वावच्छिन्नं न सिद्धमिति वाच्यम् । तत्रापि निमित्ताभावात् । पर्वतत्वावच्छिन्नस्य धूमाधिकरणत्वं गृहीतवतः पुरुषस्य तद्धूमाधिकरणे पर्वतत्वग्रहस्यावश्यकत्वेन तत्रैव वह्निसम्बन्धस्य ज्ञानात् । अत एव वर्ण्यसमाख्याजातिलक्षणस्य परसिद्धस्यानुवादकप्रमाणलक्षणटीकायां पक्षवृत्तिहेतोर्व्याप्तिग्राहक-मानाविषयत्वं धर्म इत्युक्तम् । न द्वितीयः । व्यभिचारग्रहाप्रतिबद्ध्यत्वप्रसङ्गात् । मणिमन्त्रादिन्यायेन पृथक् प्रतिबन्धकत्वाङ्गीकारे गौरवात् । अत एव न तृतीयः । समानविशेष्यकसिद्धेः । प्रतिबन्धकतामते सिद्धसाधनत्वाच्च । तस्मादव्यभिचरितसाध्यसम्बधो व्याप्तिः । तज्ज्ञानं चोक्तरीत्या चक्षुरादिना व्यभिचाराभावज्ञानसहकृतेनाव्यभिचारांशस्य लौकिकसन्निकर्षेण भानासम्भवेऽपि ज्ञानलक्षणसन्निकर्षेण भानसम्भवः । उक्तव्याप्तौ साध्याभावसंसर्गवत्सजातीयान्यत्वस्य घटकत्वेनै-तद्धूमसजातीयेषु तत्सजातीयत्वशङ्काया उपाध्यभावादिना निरसनेन जायमानं व्याप्तिज्ञानं धूमत्वेन सामान्यरूपेणातीतादिधूमविषयकमपि भवति । स्मरणे तु यथासम्भवं सामान्यरूपेण व्यक्त्यवगाहीति द्रष्टव्यम् । यद्वा वर्तमानधूममात्रावगाह्येव भवतु व्याप्तिनिश्चयः । तथाऽपि तादृशव्याप्तिघटक-सादृश्यप्रतियोगित्वज्ञानं हेतावपेक्षितम् । तादृशप्रतियोगिभूतहेतुज्ञानादेवानुमितिः । इत्थं च व्याप्तिज्ञानस्यातीताद्यास्पदत्वं नास्त्येव ।

न चैवं तर्हि धूमान्तरव्यक्तौ कदाचिद्व्याप्तिसंशयोऽपि स्यादिति वाच्यम् । धूमत्वादिसामान्यरूपेण व्याप्तिग्रहस्यैव सामान्यरूपवत्तया ज्ञातव्यक्तौ तादृशसंशयविरोधित्वाङ्गीकारात् । यदि देशान्तरेऽपि धूमः सोऽपि धूमत्वरूपसामान्यधर्मेण ज्ञातो भवत्येवेति न तत्र व्याप्तिसंशयः । प्रकृतहेतौ व्याप्तिग्रहस्यानपेक्षितत्वे कथादावुपन्यस्तहेतोर्व्याप्तौ प्रमाणाकाङ्क्षाया अनुत्थानप्रसङ्गेन तत्कथनादेरसङ्गतत्वप्रसङ्गः । तदपेक्षायां तु न वर्तमानमात्रे व्याप्तिग्रहोपपादनं सम्भवतीति चेत् । तत्र हेतुतावच्छेदकाभिव्यङ्ग्यसादृश्ये साध्याभावसम्भन्धवदप्रतियोगिकत्वसाध्यसम्बन्धवदनुयोगिकत्वयोरेव प्रमाणादेरुपन्यासादसङ्गत्यादेरभावात् । अत एवैतत्सजातीय एव दृष्टान्तप्रदर्शनेन साध्यसामानाधिकरण्यं क्रियत इत्याशयेनाह ॥ **किञ्चेति** । एवं धूमनिष्ठसादृश्यप्रतियोगित्वात् । इति हेतौ । व्याप्तिमत्प्रतियोगिकसादृश्यज्ञानस्यैवानुमितिहेतुत्वात्प्रकृतहेतौ व्याप्तिग्रहस्यानपेक्षितत्वात् । एवं व्याप्तिग्रह उक्तप्रकारेण सन्निकृष्टधूमेष्वेव व्याप्तिग्रहः । यद्वा । साध्यसम्बन्धवदनुयोगिकसाध्याभावसम्भन्धवदप्रतियोगिकसादृश्यप्रतियोगित्वं व्याप्तिः । तथा च सन्निकृष्टधूमेष्वनुयोगित्वरूपा व्याप्तिरुक्त प्रकारेण गृह्यते । तदनन्तरं देशान्तरे धूमदर्शनानन्तरं तत्प्रतियोगित्वरूपा व्याप्तिश्चक्षुषैव गृह्यते । पूर्वव्याप्तिस्मरणस्यानुमिति कारणत्वोक्तिस्त्वनुयोगित्वरूपव्याप्त्यभिप्रायेणेत्याशयेनाह ॥ **किञ्चेति** ॥ **तस्याप्येवमिति** । एतद्धूमसदृशत्वहेतोः । एवं व्याप्तिग्रह उक्तप्रतियोगित्वरूपव्याप्तिग्रहः ॥ **एतेनेति** । सामान्यरूपेणैव व्याप्तिग्रहस्योपपादितत्वेनेत्यर्थः । संशयादिविरोधिविशेषशक्तिमज्ज्ञानस्यैव सार्वज्ञप्रयोजकत्वेन तादृशज्ञानानङ्गीकारेण न सार्वज्ञस्य प्रसङ्ग इति भावः ।

**वि.– तस्याप्येवमित्येवमिति** । तस्यापि देशान्तरस्थधूमस्याप्ययमेवमग्निसम्बन्धः स्वाभाविक इत्यनेन प्रकारेणेत्यर्थः । काऽत्रानुपपत्तिरिति किंशब्द आक्षेपे । अत्र प्रत्यक्षस्यातीताद्यव्याप्तिनिश्चायकत्व इत्यर्थः । एतादृशव्याप्तिज्ञानस्यातीतानागतविप्रकृष्टव्याप्यांशे सम्भावनारूपत्वानिश्चयहेतुं प्रत्यक्षस्य वर्तमानसन्निकृष्टमात्रग्राहित्वेऽपि संशयोत्पादने प्रत्यक्षस्य सन्निकर्षानपेक्षत्वान्नोक्तदोष इति भावः ॥ **एतेनेति** । व्याप्तिज्ञानस्यातीतानागतविप्रकृष्टव्याप्यांशे निश्चयत्वाभावेनेत्यर्थः । ननु व्याप्यांशे सन्देहरूपस्य तत्सम्बन्धरूपव्याप्त्यंशे निश्चयरूपत्वमनुपपन्नमिति चेन्न । यद्यतिथिरागच्छेत्स भोजयितव्यो यदि प्रतिहर्ताऽयच्छेत्सर्ववेदसं दध्यादित्यादि व्याप्तिजन्यज्ञानस्य निमित्तांशे सम्भावनारूपत्वेऽपि तस्मिन्सति नैमित्तिकं कार्यमित्यंशे निश्चयरूपत्वोपपत्तेः ॥ **एतत्सर्वमिति** । व्याप्त्यादिप्रमितेरनुमितिहेतुत्वं भूयोदर्शनादेश्चानुमितिप्रयोजकत्वमित्येतत्सर्वमित्यर्थः ॥ **कार्येति** । अनुमितिरूपकार्यस्य दर्शनादेवेत्यर्थः । एवेत्यनेनास्य कल्पनस्य निमित्तान्तरं नान्वेषणीयमिति सूचयति ॥ **संवादित्वादिति** । बाधकाभावरूपसंवादित्वादित्यर्थः ॥ **अतिप्रसङ्गादिति** । घटपटादिज्ञानस्य वह्न्यनुमितिहेत्वापत्तिरूपातिप्रसङ्गादित्यर्थः ।

ननु तथाऽपि व्याप्तिसमुचितदेशवृत्तित्वतया धूमप्रमितिर्वह्न्यनुमितौ निमित्तमित्यत्र किमायात-मित्यत आह ।। **न च व्याप्तिप्रमामिति ।** व्याप्तितया समुचितदेशवृत्तित्वतया च धूमप्रमितिं परित्यज्य निमित्तान्तरं न चास्तीति हेतोः कार्यमनुमितिरूपं कार्यं ज्ञातमेतद्व्याप्तिसमुचितदेशत्ववत्तया धूमज्ञान-मनुमितिकारणं भूयोदर्शनादिसहकृतप्रत्यक्षं व्याप्तिग्राहकमित्येतत्सर्वं कल्पयतीत्यर्थः । बीजस्य शक्तिं कमलबीजादेरङ्कुरजननानुकूलसामर्थ्यमित्यर्थः ।। **अनुमानगम्यामिति ।** उत्तरत्र ततोऽनुमानेन तां साधयितुं व्यतिरेकव्याप्तिरुपन्यस्यत इत्यत्रानुमानज्ञेयां व्याप्तिं च वक्ष्याम इत्यर्थः । **न च तस्यापीति ।** व्याप्तिग्राहकस्याप्यनुमानस्य व्याप्त्यपेक्षया व्याप्तिज्ञानापेक्षयेत्यर्थः ।। **अन्तत इति ।** दूरे गत्वा प्रत्यक्षागमयोरन्यतरस्य व्याप्तिज्ञाननिमित्तत्वादित्यर्थः ।। **इत्यागमगम्येति ।** इत्यागमाभ्यां ज्ञेया व्याप्तिरित्यर्थः । आगमगम्येति शेषः । ब्राह्मणत्वादिपुरस्कारेण हननाद्यकर्तव्यताबोधकत्वात्तयोर्व्याप्ति-ग्राहकत्वमिति ज्ञेयम् । यद्वा ब्राह्मणो ब्राह्मणत्वावच्छिन्नो न हन्तव्यः । गौर्गोत्वावच्छिन्ना न पदा स्पृश्येति व्याप्तिरागमस्येत्यर्थः ।। **न चेति ।** अत्रागमस्य व्याप्तिग्राहकत्वे न कश्चिद्वर्तमानमात्र-ग्राहित्वादिरूपः क्षुद्रोपद्रवः क्षुद्रबाधको न चास्तीत्यर्थः । न च ब्राह्मणत्वावच्छिन्नो न हन्तव्य इत्यादेरर्थस्य दृष्टान्ताभावात्कथमागमेन व्याप्तिग्रहो भविष्यतीत्यत आह ।। **नापीति ।** अत्रेत्यनुवर्तते । आगमस्य व्याप्तिग्राहकत्वे दृष्टान्तापेक्षा निदर्शनापेक्षा नास्तीत्यर्थः । आगमान्तरस्येवास्याप्यागमस्य व्याप्तिरूपस्वार्थबोधकत्वोपपत्तेर्दृष्टान्तो नापेक्षित इति भावः ।

## अनुमानप्रकाराः

**(८) प्र.प.– त्रिविधमनुमानम् । कार्यानुमानं कारणानुमानमकार्यकारणानुमानं चेति । तत्राद्यं यथा । धूमोऽग्नेः । द्वितीयं यथा । विशिष्टमेघोन्नतिर्वृष्टेः । इयांस्तु विशेषः । कार्यं कारणमात्रमनुमापयति । कारणं तु समग्रमेव कार्यमिति ।** तृतीयं यथा । रसो रूपस्येति । **पुनर्द्विविधम् । दृष्टं सामान्यतो दृष्टं चेति । तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम् । यथा धूमोऽग्नेः । प्रत्यक्षायोग्यार्थानुमापकं सामान्यतो दृष्टम् । यथा रूपादिज्ञानं चक्षुरादेः । अथवा यथा भूतयो-र्व्याप्तिग्रहणं तथा भूतयोरेव लिङ्गलिङ्गिभावे दृष्टम् । यथा धूमाग्न्योः । व्याप्यव्यापकयोरन्यादृशत्वेऽपि तत्सामान्याकारानुगमेन लिङ्गलिङ्गिभावे सामान्यतो दृष्टम् । यथा कृषीवलस्य कर्षणादि-प्रवृत्तेर्धान्यादिफलवत्त्वदर्शनेन यज्ञादेः स्वर्गादिफलानुमानम् । प्रेक्षावत्प्रवृत्तित्वफलवत्त्व-सामान्यानुगमात् ।**

**जना.–** अनुमानविभागादीनामपि प्रतिज्ञातत्वादनुमानं विभजते ।। **त्रिविधमित्यादिना ।** अथवा कार्यकारणभावाद्वा स्वभावाद्वा नियामकादविनाभावनियमदर्शनादकार्यकारणानुमानमनभ्युपगच्छतां

सौगतानां मतमपाकर्तुमनुमानं बिभजते ॥ **त्रिविधमित्यादिना** ॥ **कार्यानुमानमिति** कार्यरूपमनुमापकमित्यर्थः । एवं कारणेत्यादावपि द्रष्टव्यम् ॥ **धूमोऽग्नेरिति** । अनुमानमिति शेषः । विभागस्य प्रयोजनान्तरमाह ॥ **इयानिति** । प्रमाणलक्षणे सम्भवपरिशेषावनुमेत्यादाविवावान्तरविशेषसूचनार्थं विभाग इति भावः ॥ **कारणमात्रमिति** । समग्रं कारणमित्यर्थः । **कार्यमितीति** । अनुमापयतीत्यनुषज्यते । शिष्याणां विषयव्याप्त्यर्थं प्रकारान्तरेणानुमानं विभजते **पुनरिति** । ते एव विधे दर्शयति ॥ **दृष्टमिति** । दृष्टार्थकमित्यर्थः । एवं सामान्यतो दृष्टमित्यस्याप्यर्थो ज्ञेयः । विभक्तधना भ्रातरः पीतजला गाव इतिवदत्रार्थपदलोपो द्रष्टव्यः । दृष्टपदद्वयेऽपि दृश्धातोश्चाक्षुषज्ञानार्थत्वं वारयन्विवक्षितार्थकथनपूर्वकं द्वयोर्लक्षणमाह ॥ **प्रत्यक्षेत्यादिना** ॥ **यथा रूपादीति** । अयं देवदत्तश्चक्षुष्मान् । रूपादिद्रष्टृत्वादित्यादिप्रकारेणानुमानं द्रष्टव्यम् । अथेदानीं विशेषपदाध्याहारेण विशेषतो दृष्टं सामान्यतो दृष्टमिति विभागं मनसि निधायाद्यस्य संज्ञानुसारेण लक्षणमाह । **अथवेति** । यथाभूतयोर्येन रूपेण ज्ञातयोः ॥ **अन्यादृश्यत्वेऽपीति** । अनुमितिहेतुभूतसमुचितदेशवृत्तिताज्ञाने विशेषरूपेण विषयत्वेऽपीत्यर्थः ॥ **लिङ्गलिङ्गिभाव इति** । व्याप्यव्यापकभाव इत्यर्थः ।

**राघ.–** पूर्वं कार्यमेवैतत्सर्वं कल्पयतीत्युक्त्या कार्यरूपमेकविधमेवानुमानमिति धीनिरासाय वादिविप्रतिपत्तिनिरासाय चाह ॥ **त्रिविधमिति** । कार्यानुमानमित्यादौ कर्मधारयः करणे ल्युट् । कार्यं सत्कारणस्यानुमापकं यत्तत्कार्यानुमानमित्यर्थः । एवमग्रेऽपि ॥ **विशिष्टेऽपि** । उदकपूर्णमेघस्यौन्नत्यमित्यर्थः । ननु कार्यात्कारणानुमाने धूमोऽग्नेरित्येवोक्तम् । न त्वार्द्रेन्धनाग्नेरिति विशेषणमुपात्तम् । कारणात्कार्यानुमाने तु विशिष्टमेघोन्नतिरिति कारणे विशेषणमुक्तम् । कुत एवमित्यतो वा कार्यानुमानसम्भवेऽपि न कारणानुमानं युक्तम् । अयोगोलके सत्यप्यग्नौ धूमाभावेन व्याप्त्यभावादित्यतो वाऽऽह ॥ **इयांस्त्विति** । कारणमात्रं न तत्र व्यापकीभूते समग्रत्वविशेषणम् । कारणमात्रेणापि व्याप्तिसत्त्वेन विशेषणकृत्याभावात् । कारणं तु समग्रमेव कृत्स्नकारणकलाप एव कार्याव्यभिचारात्कार्यमनुमापयति । न त्वेकदेश इत्यर्थः ॥ **यथा रूपादिज्ञानमिति** । रूपज्ञानं करणसाध्यं जन्यक्रियात्वाच्छिदिक्रियावत् । करणं च न घ्राणादि । तस्य गन्धादिज्ञानकरणत्वादिति सामान्यपरिशेषाभ्यां वा रूपज्ञानं चक्षुःकरणकम् । तदन्वयव्यतिरेकित्वादिति वा । अयं चक्षुष्मान्रूपज्ञानित्वात्सम्मतवदिति वा । चक्षुषोऽनुमापकम् । एवं गन्धादिज्ञानं घ्राणादेरित्यर्थः ॥ **व्याप्यव्यापकयोरिति** । दृष्टान्ते व्याप्तिनिरूपकयोरित्यर्थः ॥ **यज्ञादेरिति** । यज्ञादिप्रवृत्तेरित्यर्थः । यज्ञादिप्रवृत्तिः स्वर्गादिफलवती प्रवृत्तित्वात् । कृषीवलस्य धान्यादिफलकर्षणादिप्रवृत्तिवदिति प्रयोगे कृषीवलस्य कर्षणादिप्रवृत्तेर्धान्यादिफलत्वेऽपि यज्ञादिप्रवृत्तेस्तत्कुत इति चोदिते प्रेक्षावत्प्रवृत्तित्वा-

विशेषादित्युक्त्वा यत्र प्रेक्षावत्प्रवृत्तित्वं तत्र फलवत्त्वमिति नियमादिति व्याप्यव्यापकभाव इत्युच्यते। तत्र यज्ञादिप्रवृत्तित्वस्वर्गादिफलवत्वयोर्लिङ्गलिङ्गिशब्दित ज्ञाप्यज्ञापकभावः प्रेक्षावत्प्रवृत्तित्वफलवत्वयो र्व्याप्यव्यापकभाव इत्यादिरूपमपि सामान्यतो दृष्टानुमानमित्यर्थः।

**विज.–** क्वचित्स्वक्रियाव्याघातेन व्यभिचारशङ्कानिराससूचनायानुमानविभागमाह ॥ **त्रिविधमिति।** कार्यरूपं कारणरूपमुभयभिन्नं चेत्यर्थः। यद्यपि षष्ठीसमासे सम्बन्धिशब्दमहिम्ना कार्यरूपं कारणरूपं चानुमानं क्रमेण लभ्यते। तथाऽप्युदाहरणक्रमानुरोधेन कर्मधारयो व्याख्यातः। उदाहरति ॥ **तत्रेति॥ विशिष्टेति।** व्याप्त्यनुपहितव्यावर्तकधर्मवतीत्यर्थः। नन्वजनितकार्यस्यापि कारणस्य नाशाद्व्यभिचारेण न कारणस्य कार्यानुमापकतेति विभागानुपपत्तिमाशङ्क्य सकलकारणसहितैककारणस्यानुमानत्वं वक्तुमाह ॥ **इयांस्त्विति॥ कारणमात्रमिति।** व्यापकतायां न विशेषणनियम इत्यर्थः॥ **समग्रमिति।** सकलेतरसमवहितमित्यर्थः। विभागान्तरमाह ॥ **पुनरिति।** नैयायिकमतानुसारेणोभयोर्लक्षणमाह ॥ **तत्रेति।** भाट्टानुसारेणाह ॥ **अथवेति।** यथैव व्यक्त्या व्याप्तिग्रहस्तस्या एव यत्र कालान्तरे व्याप्तिस्मरणेऽनुमितिस्तत्र दृष्टम्। व्यक्त्यन्तरस्यानुमितिविषयत्वे सामान्यदृष्टमिति तात्पर्यार्थः॥ **व्याप्यव्यापकयोरिति।** व्याप्तिग्रहविषयीभूतयोरित्यर्थः॥ **प्रवृत्तित्वेति।** प्रवृत्तिविषयत्वेत्यर्थः। यज्ञादिपदं वा प्रवृत्तिपरम्॥ **प्रेक्षावदिति।** प्रथमव्याख्याने प्रवृत्तिविषयत्वेत्यर्थः। बहुव्रीहिसमासो वाऽयं द्रष्टव्यः।

**वेदे.–** अकार्यकारणानुमानम्। कार्यकारणभिन्नानुमानम्। **विशिष्ट इति।** इतरकारणविशिष्ट इत्यर्थः। कारणमात्रं नेतरकारणविशिष्टम्। यत्कार्यं तत्कारणपूर्वकमिति नियमात्। अत एव धूमेनाग्निमात्रस्यैवानुमानं न धूमजनकस्वेतरसकलसहितस्य व्यर्थत्वादिति भावः। कारणं यथा स्वयमेकमेव कार्येणानुमीयते न तथा स्वयं तदनुमापयति। किन्तु स्वेतरसकलकारणसहितमेवेत्याह ॥ **समग्रमेवेति।** स्वेतरसकलकारणसहितमेवेत्यर्थः। कारणमात्रस्य कार्यव्यभिचरितत्वेन सामग्र्या एव तदव्यभिचारादिति भावः। अत एव पूर्वं विशिष्टमेघोन्नतिरित्युक्तम्॥ **यथाभूतयोरिति॥** यद्धर्मावच्छिन्नयोर्व्याप्यव्यापकभावस्तद्धर्मपुरस्कारेणैव साध्यसाधनभावे दृष्टानुमानमित्यर्थः॥ **अन्यादृश्यत्व इति।** यद्धर्मपुरस्कारेण साध्यसाधनभावस्तद्धर्मभिन्नधर्मावच्छिन्नत्व इत्यर्थः। एवं च यद्धर्मपुरस्कारेण व्याप्तिग्रहस्तद्धर्मभिन्नधर्मपुरस्कारेण लिङ्गलिङ्गिभावे सामान्यतो दृष्टमित्यर्थः। नन्वेवमतिप्रसङ्गः। धूमत्ववह्नित्वपुरस्कारेण व्याप्तिग्रहे रूपत्वरसत्वपुरस्कारेण लिङ्गलिङ्गिभावस्यापि सामान्यतो दृष्टतापत्तेरित्यत उक्तं **तत्सामान्याकारानुगमेति।** तयोर्व्याप्यव्यापकयोर्यत्सामान्याकारः सामान्यधर्मो व्याप्यव्यापकतावच्छेदकतारूपं तस्य लिङ्गलिङ्गिनोरपि साक्षाद्भानमेवेत्यर्थः। अत्रेत्थं

प्रयोगः । यज्ञादिकं स्वर्गफलवत्प्रेक्षावद्यजमानप्रवृत्तिमत्त्वात् । यत्प्रेक्षावत्प्रवृत्तिमत्तत्फलवत् । यथा कर्षणादिकमिति । यज्ञादेः प्रवृत्तिमत्त्वं च विषयत्वेनेति ज्ञातव्यम् ।

**अभि.– कार्यकारणमात्रमिति ।** धूमादिकार्यं वह्न्यादिकृत्स्नकारणमनुमापकमित्यर्थः । यथा धूमो वह्नेः साधक एवमदृष्टकालेश्वरार्द्रेन्धनसंयोगादेरपि साधको व्याप्तिसद्भावादिति भावः ॥ **कारणं तु समग्रमेवेति ।** समग्रमेव कारणं कार्यमनुमापयति । समग्रकारणस्यैव कार्यव्याप्तत्वेन प्रत्येकं व्याप्त्यभावात् । न प्रत्येकं कार्यमनुमापयतीत्यर्थः । व्याप्तिसद्भावस्यैव कार्यव्याप्यत्वेन प्रत्येकं व्याप्त्यभावान्न प्रत्येकं कार्यमनुमापयतीत्यर्थः ।

**आद.– ॥ यज्ञादेः स्वर्गफलत्वानुमानमिति ।** ननु प्रेक्षावत्प्रवृत्तिविषयत्वहेतुना सफलत्वमात्रं यागादिप्रवृत्तेस्तद्विषयीभूतयागादेर्वा सिध्यति । परिशेषेण स्वर्गफलकत्वं सिध्यतीति नेदमुदाहरणमिति चेत् । तथाऽपि स्वर्गान्यफलकत्वे सति सफलत्वरूपहेतुना स्वर्गफलकत्वस्य कल्पनीयतया तादृश-हेतोरपि यद्यदन्याफलकत्वे सति सफलं तत्तत्फलत्वमिति सामान्यव्याप्तिसापेक्षत्वेनोदाहरणत्व-सम्भवात् । वस्तुतस्तु स्वर्गफलकत्वाभावज्ञानरूपेतरबाधसहकारेण प्रेक्षावत्प्रवृत्तित्वहेतुनैव स्वर्गफलकत्वं सिध्यतीति युक्तमेवोदाहरणमिति द्रष्टव्यम् ।

**श्रीनि.–** नन्वत्र साध्यत्वे कारणं केवलमुपात्तम् । अग्निरित्येवोक्तत्वात् । साधने त्वितर-सहितविशिष्टमेघेत्युक्तेः । किमत्र नियामकमित्यत आह ॥ **इयांस्त्विति ।** नैय्यायिकमतानुसारेणाह ॥ **तत्रेति ।** भट्टमतानुसारेणाह ॥ **अथवेति ॥ यज्ञादेरिति ।** यज्ञादिप्रवृत्तेरित्यर्थः ।

**वि.–** अनुमानं विभज्य दर्शयति ॥ **त्रिविधमिति ।** अनुमानं त्रिविधमित्यर्थः ॥ **कार्यानुमान-मिति ।** कार्यमनुमीयतेऽनेनेति व्युत्पत्त्या कारणस्यानुमानमित्यर्थः ॥ **कारणानुमानमिति ।** कारणमनुमीयतेऽनेनेति व्युत्पत्त्या कार्यस्यानुमानमित्यर्थः ॥ **अकार्यकारणानुमानं चेति ।** कार्यकारणाभ्यामन्यत्करणव्युत्पत्त्या कार्यकारणातिरिक्तस्यानुमानमित्यर्थः ॥ **यथा धूमाग्नेरिति ।** अनुमानमिति शेषः ॥ **विशिष्टमेघोन्नतिरिति ।** निबिडावयवविशिष्टानां मेघानां समूहविशेषरूप उत्कर्ष इत्यर्थः । अनुमानमिति शेषः । ननु कारणस्य कार्यमिव कार्यस्य न कारणमनुमानम् । समुत्पादित-कार्यस्यापि कारणस्य नाशेन व्यभिचारादित्यत आह ॥ **इयांस्तु विशेष इति ।** कारणमात्रमित्यत्र मात्रशब्दः कृत्स्नपरः । तथा च प्रत्येकं मिलितानि च सर्वाणि कारणानीत्यर्थः ॥ **कारणं तु समग्रमेवेति ।** समग्रं सकलं स्वेतरसकलकारणमिलितमेव न तु प्रत्येकमित्यर्थः । अनुमीयत

इत्यनुवर्तते । समग्रकार्यस्यानुमानमिति भावः । समग्रं पूर्णं स्वेतरकारणसहितमेव । कारणं च परमकारणरूपं कारणं त्विति यावत् । यच्चरमकारणं न तत्कार्यं व्यभिचरतीति भावः । इतिशब्द-स्येयान्विशेष इत्यनेनान्वयः ।। **पुनर्द्विविधमिति** । द्विविधं चेत्यर्थः । अनुमानमित्यनुवर्तते ।। **प्रत्यक्षयोग्यार्थेति** । अनुमानमित्यनुवर्तनीयम् । यद्वाऽर्थशब्दो ज्ञेयरूपविशेषरूपानुमेयपरः । तथा च प्रत्यक्षयोग्योऽर्थोऽनुमेयो यस्य तत्तथा प्रत्यक्षयोग्यार्थानुमापकमिति यावत् ।। **रूपादिज्ञानं चक्षुरादे-रिति** । रसादिरादिशब्दार्थः रसनादिर्द्वितीयादिशब्दार्थः । अयं चक्षुष्मान् । रूपसाक्षात्कारत्वव्यति-रेकेणान्धवदित्यादिप्रकारेण रूपादिज्ञानं चक्षुराद्यनुमापकमिति ज्ञेयम् ।। **यथाभूतयोरिति** । यद्धर्मावच्छिन्नयोर्व्याप्तिग्रहस्तद्धर्मावच्छिन्नयोरेवानुमापकानुमेयभावे सति तल्लिङ्गं दृष्टानुमानमित्यर्थः ।। **व्याप्यव्यापकयोरिति** । लिङ्लिङ्गिनोरन्यादृशत्वेऽपि यथा भूतयोर्व्याप्तिग्रहस्तथाविधत्वाभावेऽपि तत्सामान्याकारानुगमेन तल्लिङ्गं दृष्टं दृष्टानुमानमित्यर्थः ।। **कृषीवलस्येति** । कृषिकस्येत्यर्थः । धान्यादिकामस्योपलक्षणमेतत् । कर्षणादिप्रवृत्तेर्धान्यादिफलवत्त्वनियमेन कर्षणहलेन भूम्युल्लेखनम् । कर्षणादौ प्रवृत्तेर्धान्यादिरूपेष्टसाधनत्वदर्शनेनेत्यर्थः । भोजनादिप्रथमादिशब्दार्थः । तृप्त्यादिद्वितीयादि शब्दार्थः । कर्षणादिप्रवृत्तत्वस्य धान्यरूपेष्टसाधनत्वेन व्याप्तिदर्शनेनेति तात्पर्यार्थः ।। **यज्ञादेरिति** । तद्विषयकप्रवृत्तरूपलक्षणमेतत् । स्वर्गादिः फलं यस्य तत्तथा । भावप्रधानो निर्देशः । स्वर्गादि-रूपेष्टसाधनत्वमिति यावत् । तस्यानुमानमनुमितिरित्यर्थः । अनुमापकं च स्वर्गोद्देश्यक-प्रेक्षावत्प्रवृत्तिरिति हृदयम् । ननु कर्षणादिप्रवृत्तेर्धान्यादिरूपेष्टसाधनत्वदर्शनेन यज्ञादिप्रवृत्तेः स्वर्गादिरूपेष्टसाधनत्वानुमानं कथं स्यादित्यत आह ।। **प्रेक्षावत्प्रवृत्तिफलवत्त्वेति** । प्रेक्षावत्प्रवृत्तित्वेष्ट साधनत्वयोः सामान्ययोः साधारणकारणयोरनुगमाद्दृष्टान्ते सद्भावादित्यर्थः । इदमत्राकूतम् । यज्ञादिप्रवृत्तिः स्वर्गादिफलत्ववती स्वर्गाद्युद्देश्यकप्रेक्षावत्प्रवृत्तित्वात् । कृष्यादिप्रवृत्तिवदित्यनुमाने लिङ्गलिङ्गिनोर्दृष्टान्तेऽसत्वेऽपि तत्सामान्याकारयोः सत्त्वात् । यदुद्देश्यकप्रेक्षावत्प्रवृत्तिर्या सा तत्फल-वतीति सामान्यतो व्याप्तिग्रहसम्भवादस्य लिङ्गस्य स्वर्गादिफलवत्त्वानुमापकत्वं युक्तमिति । अनुमानमित्यनुवर्तते ।

**(९) प्र.प्र.– पुनर्द्विविधम् । साधनानुमानं दूषणानुमानं चेति । तत्राद्यं यथा । धूम-प्रमित्याऽग्निप्रमितिसाधनम् । दूषणानुमानमपि द्वेधा । दुष्टिप्रमितिसाधनं तर्कश्चेति । तत्राद्यं यथा । नेदं स्वसाध्यसाधनसमर्थम् । प्रमाणबाधितत्वादित्यादि । कस्यचिद्धर्मस्याङ्गीकारेऽर्थान्तरस्यापादनं तर्कः।**

**जना.—** यदुक्तं प्राक् तर्कोऽनुमानमेवेति वक्ष्याम इति तत्समर्थयितुं प्रकारान्तरेणानुमानं विभजते ।। **दुष्टिप्रमितीति** । परोदीरिते दोषप्रमितिसाधनमित्यर्थः ।। **प्रमाणबाधितत्वादित्यादीति** । आदिपदेन व्याप्तिविधुरत्वादेः परिग्रहः ।। **कस्यचिदिति** । व्याप्यस्येति शेषः ।। **अर्थान्तरस्येति** । व्यापकस्येति शेषः।

**राघ.**— तर्कोऽनुमानमेवेति वक्ष्याम इत्युक्तम् । तदीदानीं व्यनक्ति ॥ **पुनर्द्विविधमित्यादिना ॥ अग्निप्रमितिसाधनमिति** । अग्निप्रमित्युत्पादनमित्यर्थः ॥ **दुष्टिप्रमितीति** । कार्याक्षमताप्रमितिजनकमित्यर्थः । **नेदमिति** । वह्निरनुष्णः पदार्थत्वादित्युक्ते परो वक्ति पदार्थत्वादिति त्वदुक्तं साधनं न साध्यसाधनसमर्थमित्यादि । तर्कस्वरूपमाह ॥ **कस्यचिदिति** । वह्न्यभावादेरर्थान्तरस्य धूमाभावादेरापादनं प्रसक्तताप्रतिपादनमित्यर्थः ।

**विज.**— तर्कस्वरूपमाह ॥ **कस्यचिदिति** । व्याप्यस्येति शेषः । एवमर्थान्तरमपि व्यापकत्वमेवेति द्रष्टव्यम् । तर्कस्यानुमानत्वं वक्तुं विभागान्तरमाह ॥ **पुनरिति ॥ दुष्टीति** । असाधकत्वेत्यर्थः ।

**वेदे.**— ॥ **साधनानुमानमिति** । स्वपक्षसाधकानुमानमित्यर्थः ॥ **दूषणानुमानमिति** । परपक्षप्रतिक्षेपानुमानमित्यर्थः ॥ **दुष्टीति** । यद्यपि दुष्टिप्रमितिसाधनत्वं तर्केऽप्यस्ति । तर्कादपि परपक्षायुक्तता प्रमितिः । तथाऽप्यापादनरूपेण तस्य तथात्वमस्य तु साधनरूपेणेति भेदः । अत एवाह ॥ **दुष्टिप्रमितिसाधनमिति** । परपक्षायुक्तताप्रमितौ साधनरूपमित्यर्थः । इत्यादीत्यादिपदेन प्रमाणलक्षणटीकद्युदाहृतं नायं निरग्निकमित्यादिकमपि सङ्गृहीतमिति ध्येयम् । इयांस्तु विशेषः । हेत्वयुक्ताप्रमितिसाधनरूपमेकमपरं साध्यायुक्तताप्रमितिसाधनरूपमिति । दुष्टिरसाधकतेति कश्चित् । तदसत् । प्रमाणलक्षणटीकादिगतोदाहरणाव्याप्तेः॥ **कस्यचिदिति** । व्याप्यस्येति शेषः । एवमर्थान्तरमपि व्यापकमेवानिष्टभूतं द्रष्टव्यम् ।

**अभि.**— ॥ **पुनर्द्विविधमिति** । त्रिधा विभक्तमनुमानं पुनर्द्विविधमित्यर्थः । अनेन कार्याद्यनुमानानां प्रत्येकं द्वैविध्यमुक्तमित्यवधेयम् ॥ **व्याप्यव्यापकभावयोरन्यादृशत्वेऽपीति** । दृष्टान्ताभावेन विशेषव्याप्तिग्रहायोगात्सामान्यव्याप्तिर्यत्र गृह्यते तत्सामान्यतो दृष्ट इत्यर्थः । अयमत्र प्रयोगक्रमः । यज्ञादिप्रवृत्तिः स्वर्गफलिका । स्वर्गार्थिप्रेक्षावत्प्रवृत्तित्वात् । या यदर्थिप्रेक्षावत्प्रवृत्तिः सा तदपेक्षितफलहेतुर्यथा कृषीवलस्य कर्षणादिप्रवृत्तिर्धान्यादिफलिकेति साधनानुमानं दूषणानुमानं चेति । यद्यपि दूषणानुमानमपि साधनानुमानमेव । तथाऽपि प्रयोगप्रकारवैचित्र्यात्कुरुपाण्डवन्यायेन पृथगुक्तिः । दूषणानुमानस्य साधनानुमानत्वादेव निर्धूमो भवतीत्यसाधनादिति वक्ष्यति । अन्यथा निर्धूमत्वासाधनादित्यवक्ष्यत् ॥ **तत्राद्यं यथेति** । तत्राद्यं साधनानुमानं यथा कदा प्रवृत्तं भवतीति ज्ञेयमिति प्रश्न इत्यर्थः । उत्तरमाह ॥ **धूमप्रमित्येति** । प्रयोक्तृधूमादिति हेतुप्रयोगेण धूमप्रमितिमुत्पाद्य तयाऽग्निप्रमितिसाधनमग्निप्रमित्युत्पादनं क्रियते तदा साधनानुमानं प्रवृत्तमिति बोध्यमिति भावः ॥ **नेदं स्वसाध्यसाधनसमर्थमिति** । समर्थमित्यतःपरं स्यादिति शेषः । अवश्यं चैतदेवं विज्ञेयम् ।

अन्यथाऽनुमानस्यास्य धूमानुमानतौल्येन पृथग्विभागो न स्यात् । न हि व्याप्तिपक्षधर्मताग्रहयोर्वैचित्र्यस्याभावे प्रयोगप्रकारवैचित्र्यस्याभावे दुष्टप्रमितिसाधनमित्येतावता भेदो भवति । अन्यथा घटाद्यनुमानानां विधान्तरत्वं स्यादविशेषात् । अनुमानविशेषस्य स्याच्छब्दयोग इत्यनुमतं भाष्यकारस्य ।

**वस्तुत्वात्तुरगः भृङ्गी पुष्पवत्खं सुतैर्युता ।**
**चित्रिणी च रसःषष्ठो रसत्वात्सोत्तरो भवेत् ॥** इत्यभिधानात् ।

नन्वेवं तर्हि दुष्टिप्रमितिसाधनानुमानस्य तर्काद्भेदो न सिध्येत् । प्रयोगप्रकारवैचित्र्याभावादिति चेन्न । तत्रापि प्रयोगप्रकारवैचित्र्यसद्भावात् । तथा हि । दुष्टिप्रमितिसाधनानुमाने प्रतिज्ञायामेव स्याच्छब्दप्रयोगः । हेतुवाक्यं साधनानुमानवदेव पञ्चम्यन्तं विपर्ययपर्यवसानाभावस्तर्कोत्पादकं प्रथमतः प्रयोक्तव्यम् । तत्रादौ यदिशब्दोऽन्त्ये तु स्याच्छब्दः । आपाद्यं तु पश्चादापादनीयम् । तत्रादौ तर्हिशब्दोऽन्त्ये तु स्याच्छब्दः । विपर्यये पर्यवसानं चेत्यादिभेद इति । **कस्यचिद्धर्मस्याङ्गीकार इति ।** अप्रामाणिकस्य कस्यचिदर्थस्याङ्गीकारे तद्व्यापकस्यानिष्टार्थान्तरस्यापादनं तर्क इत्यर्थः ।

**आद.— ॥ तर्कश्चेतीति ।** तर्कस्यानुमानरूपत्वे किं मानमिति चेत् । व्याप्तिज्ञानजन्यत्वादिति ब्रूमः । न च संशयोत्तरप्रत्यक्षस्याप्यनुमितित्वापत्तिः । तस्य सन्निकर्षजन्यत्वेन पश्यामीत्यनुभवेनच बाधात् । अत्र च तादृशापवादकप्रमाणाभावात् । आपत्त्या साध्यप्रमित्युत्तरं कल्पयामीत्यनुमितित्वग्राहकानुभवसद्भावाच्च । यथा साध्यप्रमितेर्व्याप्तिज्ञानजन्यत्वं तथोपपदितमनुमितिसामान्यलक्षणकथनावसरे प्रतीतिकार्यविलोपलक्षणानवस्थेति । आपादनप्रकारस्तु यदीदं प्रतीतं कार्यमसिद्धानवस्थितकारणपरम्परासत्ताप्रयोज्यसत्ताकं स्यात्तर्ह्यसत्स्यादिति । यथा भेदस्याज्ञानाधीनत्वपक्षे भेदसापेक्षत्वेनाज्ञानस्य ज्ञानभेदपरम्परायाः प्रमाणान्तरासिद्धत्वेन तत्सत्ताया एवाभेदेन प्रयोजनकत्वेनाङ्गीकृतस्याभावात्तत्प्रयोज्यत्वेनाङ्गीकृत्या भेदसत्ताया अभावेन भेदस्यासत्त्वप्रसङ्ग इति । व्याप्तिस्तु यद्यत्सत्ताप्रयोज्यस्वसत्ताकं तत्तत्सत्ताभावाधिकरणकालवृत्ति । यथा घटसत्ताप्रयोज्यसत्ताकं घटवृत्तिरूपादीति । यथा घटवृत्तिरूपादेर्घटानधिकरणकालवृत्तित्वं दृष्टं तद्वदुक्तपरम्पराया अप्रामाणिकत्वेन सर्वकालस्यापि तदधिकरणभिन्नत्वेन तदवृत्तित्वं सर्वकालसत्त्वमेवेत्यसत्त्वापादनं युक्तमेवेति भेदस्य प्रत्यक्षादिप्रमाणसिद्धत्वादसच्चापादनमनिष्टम् । न च भेदोऽसदिति वक्तुं शक्यत इति विपर्यये पर्यवसानम् । तस्मान्नाज्ञानकल्पित इत्यनुमितिरिति । अथवा यद्यजन्यं प्रयोज्यं वा तत्तदुत्तरत्वानधिकरणकालवृत्ति । यथा

घटो दण्डोत्तरत्वानधिकरणकालवृत्तिरिति व्याप्तिः । तदुत्तरत्वं च तदधिकरणक्षणध्वंसाधिकरणत्वम् । तथा चोक्तपरम्पराघटकभेदाद्यधिकरणक्षणाप्रसिध्या तद्धटितोत्तरत्वाप्रसिध्या सर्वकालस्यपि तदनधिकरणत्वेन तदवृत्तित्वापादनमसत्त्वापादनमेवेति बोध्यम् ।

**श्रीनि.—** ॥ **प्रमितिसाधनमिति** । प्रमित्युपपादनमित्यर्थः ॥ **प्रमाणबाधितत्वादिति** । प्रमाण-बाधितप्रतिज्ञार्थवत्त्वादित्यर्थः ॥ **आपादनमिति** । अङ्गीकार्यतया ज्ञापनमित्यर्थः । ननु व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्क इति प्रमाणलक्षणटीकोक्तलक्षणे व्याप्यादिपदव्यावर्त्यमस्ति न वा । अस्ति चेदत्रापि प्रष्टव्यम् । न चेत्तत्रापि न वक्तव्यमेवेति चेन्न । भावानवबोधात् । सेतिकर्तव्यताकं हि कारणम् । तत्र तर्कः करणधर्मी तस्य च वक्ष्यमाणानि व्याप्त्यादीन्यङ्गानि तत्र करणधर्मिणः प्राधान्यादङ्गेभ्यः पृथक्कृत्यात्रोक्तिः । प्रमाणलक्षणटीकायां च सेतिकर्तव्यताकस्यैवेति न दोषः ।

**वि.—** **साधनेति** । साध्यतेऽनेनेति व्युत्पत्त्या साधनं स्वपक्षसाधकमनुमानं दूष्यतेऽनेनेति व्युत्पत्त्या परपक्षदूषणात्मकमनुमानं चेत्यर्थः ॥ **धूमप्रमित्येति** । अग्निप्रमितेरग्निसद्भावप्रमितेः साधनं सिद्धिरुत्पत्तिर्भवतीत्यर्थः । अग्निसाधकं धूमवत्त्वं साधनानुमानमिति भावः । **दूषणानुमानमपीति** । परपक्षासाधुत्वप्रमितिसाधनमपीत्यर्थः ॥ **दुष्टीति** । साध्यासाधकत्वरूपदुष्टत्वप्रमितिसाधनमित्यर्थः ॥ **प्रमाणबाधितत्वादित्यादीति** । अतः प्रतिपक्षत्वादित्यदिरादिशब्दार्थः । तस्यानुमानान्तर्भावज्ञापनाय तत्स्वरूपं निरूपयति ॥ **कस्यचिद्धर्मस्येति** । व्याप्यस्याङ्गीकारेऽर्थान्तरस्यानिष्टस्य व्यापकस्यापादन-मङ्गीकर्तव्यताज्ञापनमित्यर्थः । तदुक्तं प्रमाणलक्षणटीकायाम् । व्याप्याङ्गीकारेऽनिष्टप्रसञ्जनं तर्क इति । विष्णुतत्त्वनिर्णयटीकायां च । व्याप्याङ्गीऽकारेऽनिष्टव्यापकप्रसञ्जनं तर्क इति । प्रसञ्जनमानपादन-मित्यनर्थान्तरम् । आपादनं चाङ्गीकार्यताज्ञापनमेव । तदुक्तं सुधायाम् । आपादनं नामाङ्गीकार्यता-ज्ञापनमिति । यद्ययं पर्वतो निरग्निकः स्यात्तर्हि निर्घटः स्यादितीष्टापादनव्यवच्छेदायानिष्टस्येत्युक्तम् । यद्ययं निर्वह्निः स्यात्तर्हि वृक्षरहितः स्यादित्यनिष्टापादनव्यवच्छेदाय व्यापकस्येत्युक्तम् । एवमपि न तद्व्यवच्छेदः । वृक्षरहितत्वादेरपि व्यापकत्वात् । न हि वृक्षराहित्यं कस्याप्यव्यापकमिति सम्भवति । अतस्तदापादनेऽप्यतिव्याप्तिस्तदवस्थेति तद्वारणाय व्याप्याङ्गीकार इत्युक्तम् । पितुर्धनं पुत्रो गृह्णीयादित्यत्र पुत्रशब्दस्य तत्पुत्र एव पर्यवसानाद्व्याप्याङ्गीकारे व्यापकस्यापादनमित्यत्रापि व्यापक-शब्दस्य तद्व्यापके पर्यवसानात्तद्व्यवच्छेदः । अनिष्टपदं परित्यज्य सर्वस्योक्तौ यद्ययं निर्वह्निः स्यात्तर्ह्यभिधेयः स्यादितीष्टापादनेऽतिव्याप्तिस्तद्व्यवच्छेदायानिष्टपदोपादानम् । अङ्गपञ्चकयुक्त एव तर्केण प्रतिरोध इत्यर्थः ।

## तर्कस्य पञ्चाङ्गानि

**(१०) प्र.प.— तस्य पञ्चाङ्गानि । आपादकस्यापाद्येन व्याप्तिः प्रतितर्केणाप्रतिघात आपाद्यस्यानिष्टत्वं तद्द्विविधम् । प्रामाणिकहानमप्रमाणिककल्पनं चेति । तत्राद्यं त्रेधा । दृष्टाऽनुमितश्रुतहानभेदात् । द्वितीयमप्यदृष्टाननुमिताश्रुतकल्पनाभेदात्त्रिविधम् । एतदेव कल्प्यानेकत्वे कल्पनागौरवमित्युच्यते । आपाद्यस्य विपर्यये पर्यवसानं परस्याननुकूलत्वं चेति । आपाद्यमनिष्टं पुनः पञ्चधा भिद्यते । आत्माश्रयत्वमन्योन्याश्रयत्वं चक्रकाश्रयत्वमनवस्था केवलानिष्टं चेति । तद्भेदात्तदापादनरूपस्तर्कोऽपि पञ्चविधः । तत्र तस्यैवोत्पत्तिज्ञप्त्यर्थं तदुत्पत्तिज्ञप्त्यपेक्षाङ्गीकारे स्वापेक्षया पूर्वभावित्वरूपमात्माश्रयत्वमापाद्यते । यदि घटोऽयमस्यैव घटस्योत्पादकः स्यात्तर्हि स्वतोऽपि पूर्वभावी स्यात् । यद्यस्य कारणं तत्ततोऽपि पूर्वभावि दृष्टम् । यथा पटकारणं तन्तवस्तदपेक्षया पूर्वभाविनः । न चात्र प्रतिकूलस्तर्कोऽस्ति । यदि घटस्य घट एव कारणं न स्यात्तर्हीदमापद्यत इति । अनिष्टं चेदम् । स्वापेक्षया पूर्वभावित्वस्याप्रामाणिकत्वात् । व्याहतत्वेनाङ्गीकर्तुमनुचितत्वाच्च । पूर्वभावित्वं हि तदभाववति काले भावः । न च स्वाभाववति काले स्वयं भवतीति न व्याहतम् । न चेत्पूर्वभावित्वमङ्गीक्रियते तदा न स्वस्य स्वयं कारणम् । न चैवमेवापादकं प्रत्यापादयितुं शाक्यत इति पञ्चाङ्गानि । एवं ज्ञप्तावपि तज्ज्ञानं प्रति पूर्वभावित्वमापाद्यम् । द्वयोरितरेतरकारणत्वाङ्गीकारे त्वन्योन्यापेक्षया पूर्वभावित्वरूपमन्योन्याश्रयत्वमापाद्यम् । बहूनां चक्रवत्कार्यकारणभावाभ्युपगमे पूर्वभावित्वलक्षणं चक्रकाश्रयत्वम् । अनवस्थितासिद्धकारणापेक्षायां मूलक्षयापरनामकप्रतीतकार्यविलोपलक्षणा- नवस्था ।**

**जना.—** केनचित्पुंसा बाधानवतारदशायां ह्रदे धूमभ्रमे सति ह्रदो वह्निमान्धूमवत्त्वादित्यनुमितेऽन्येन च ह्रदो धूमवानस्तु माऽस्तु वह्निमानित्यप्रयोजकत्वे शङ्किते वादिना च यदि ह्रदो न वह्निमान् स्यात्तदा निर्धूमः स्यादिति यस्तर्कः प्रयुज्यते तत्र यथार्थवह्निज्ञानाभावादव्याप्तिरिति चेन्न । अङ्गपञ्चकसम्पन्नस्यैव तर्कस्यानुमानान्तर्भाविनास्सन्मते लक्ष्यत्वात्तत्र च यथार्थज्ञानसाधनत्वस्य सत्त्वान्नाव्याप्तिः । तदुक्तं वरदराजेनापि । अङ्गपञ्चकस्मपन्नस्तर्को ज्ञानाय कल्पत इति । ह्रदपक्षकपूर्वोक्ततर्कस्य च विपर्यये पर्यवसानरूपाङ्गविधुरत्वेन तर्काभासतयाऽलक्ष्यत्वात् । एतच्चोवाच वरदराजोऽपि । अङ्गान्यतरवैकल्ये तर्कस्याभासता भवेदिति । एतत्समाधानं मनसि निधायास्य समाधानस्याङ्गज्ञानसापेक्षत्वादङ्गान्याह ।। **तस्य चेत्यादिना इति पञ्चाङ्गानीत्यन्तेन** ।। **तदिति** । आपाद्यस्यानिष्टत्वमिति पूर्ववाक्ये त्वप्रत्ययशिरस्कानिष्टप्रातिपादिकार्थभूतमनिष्टमित्यर्थः ।। **केवलानिष्टं चेतीति** । इत्यनिष्टं पञ्चधा भिद्यत इति पूर्वेणान्वयः । केवलानिष्टत्वं नामात्माश्रयत्वादिचतुष्टयाति-

रिक्तानिष्टत्वमित्यर्थः । तत्रादाववसरकथनपूर्वकमात्माश्रयत्वापादकतर्कमाह ॥ **तत्रेत्यादिना पूर्वभावी स्यादित्यन्तेन ।** तत्रात्माश्रयादीनां मध्य इत्यर्थः । तस्यैव स्वस्यैवेत्यर्थः ॥ **तदुत्पत्तिज्ञप्तीति ।** स्वोत्पत्तिज्ञप्तीत्यर्थः ॥ **अपेक्षाङ्गीकार इति ।** केनचिद्वादिनेति शेषः । आत्माश्रयत्वमापाद्यते । प्रतिवादिनेति शेषः ।

ननु प्रमाणलक्षणटीकायां यद्येवमुपगम्यते तदाऽऽत्माश्रयादिप्रसङ्ग इत्यात्माश्रयत्वाद्यापदकतर्क-प्रवृत्तिप्रकारप्रदर्शनादत्र च पूर्वभावी स्यादित्यापादनाकारप्रदर्शनानुपपत्तिरिति चेन्न । उभयाकारात्मक-त्वेनाविरोधात् । तदेतदाह ॥ **पूर्वभावित्वरूपमिति ।** आत्माश्रयत्वापादकतर्कस्य व्याप्तिरूपमङ्गं दर्शयति ॥ **यद्यस्येत्यदिना ।** प्रतितर्केणाप्रतिघातलक्षणमङ्गं दर्शयति ॥ **न चेति ।** प्रतितर्कस्याकारं दर्शयति ॥ **यदीति । तर्हीदमापद्यत इतीति ।** प्रतिकूलतर्को नास्तीति पूर्वेणान्वयः । आपाद्यस्या-निष्टत्वरूपमङ्गं दर्शयति ॥ **अनिष्टं चेदमिति ।** इदमेतद्घटस्यैवेतद्घटपूर्वभावित्वमित्यर्थः । व्याहति-मुपपादयितुं पूर्वभावित्वं निर्वक्ति ॥ **पूर्वभावित्वं हीति ।** भावो विद्यमानत्वम् । विपर्यये पर्यवसानमाह ॥ **न चेदिति ।** परस्यानुकूलत्वमाह ॥ **न चैवमिति ।** एवमापादकं पुरुषं प्रतीति शेषः । अनवस्थाया लक्षणमाह ॥ **अनवस्थितेति ।** अनवस्थितमविश्रान्तं प्रमाणासिद्धं च यत्कारणं तदपेक्षायामित्यर्थः । मृत्पिण्डतदवयवाद्युपादानकारणपरम्परायामतिव्याप्तिनिरासायानवस्थितपदम् । मृत्पिण्डादिपरम्परा त्वन्ततो जडप्रकृतौ विश्रान्ता । बीजाङ्कुरपरम्पराव्यावृत्त्यर्थमसिद्धेति । बीजाङ्कुरयोः कार्यकारण-भावस्यान्वयव्यतिरेकलक्षणप्रमाणसिद्धत्वान्नातिव्याप्तिः । अनवस्थाया अनिष्टत्वसमर्थनायाह ॥ **प्रतीतिकार्यविलोपेति ।** मूलक्षयोऽनवस्थेति ग्रन्थान्तरानुगुण्यायाह । **मूलक्षयेति ।**

**राघ.**— कथमस्यानुमानान्तर्गतिरित्यतो व्याप्तिबलेनार्थप्रमापकत्वादिति भावेनाह ॥ **तस्य चेति ।** चस्त्वर्थस्सन्ननुमानान्तरवैलक्षण्यद्योतकः । यदि घटोऽत्र स्यात्पटोऽपि स्यादित्यादेस्तर्कत्वव्यावृत्तये आपादकस्यापाद्येन व्याप्तिरित्युक्तम् । यदि शब्दोऽनित्यः स्यात्तर्ह्यश्रावणः स्यादित्यादेर्यदि शब्दोऽनित्यो न स्यात्तर्हि कृतकोऽपि न स्यादिति प्रतितर्केण पराहतस्यातर्कत्वायोक्तं **प्रतितर्केणेति ।** यदि धूमः स्यात्तर्हि वह्निः स्यादित्यादेरतर्कत्वायोक्तमापाद्यस्यानिष्टत्वमिति । यद्यग्निर्न स्यात्तर्हि धूमो न स्यात् । यदि घटो घटं प्रति हेतुः स्यात्तर्ह्यात्माश्रयः स्यादित्येवंविधयोस्तर्कत्वसङ्ग्रहायाह ॥ **तद्द्विविधमिति ।** हानं त्यागः । यदि तेजोजातं प्रकाशकं स्यात्तर्ह्यनुष्णं न स्यादित्यादेरतर्कत्वायोक्तं **विपर्यय इति ॥ अननुकूलत्वमिति ।** यदापादने परस्यानुकूलता न भवति तथात्वमित्यर्थः । यदि शब्दो नित्यः स्यात्तर्हि कृतको न स्यात् । भवति कृतकोऽतोऽनित्य इत्युक्ते परो वक्ति यदि

कृतकस्तर्ह्यनित्य एव शब्दो घटादौ तथा दृष्टेरिति परानुकूलस्यातर्कत्वाय परानुकूलतेत्युक्तम् । आत्माश्रयादिचतुर्णां क्रमेणोदाहरणमाह ।। **तत्रेति** । तेषु मध्य इत्यर्थः । पञ्चाङ्गानि क्रमेण दर्शयति ।। **यद्यस्येत्यादिनेति पञ्चाङ्गानीत्यन्तेन** । अनिष्टत्वे हेतुद्वयम् । स्वापेक्षयेत्यादि । व्याहतिं व्यनक्ति ।। **पूर्वभावित्वं हीति** । न व्याहतमिति न च व्याहतमेवेत्यर्थः । विपर्यये पर्यवसानं न चेत्पूर्वभावित्वमिति । तदा पूर्वभावित्वानङ्गीकारपक्षे । स्वयं स्वस्य कारणमपि नेति । चरमाङ्गं व्यनक्ति ।। **न चैवमापादकं प्रतीति** । तर्कप्रवक्तारं पुरुषमित्यर्थः । पूर्वभावित्वाभावो ममानुकूल एव । स्वस्य स्वात्मानं प्रति कारणत्व इति न प्रतिवादिना वक्तुं शक्यते व्याहतेरिति भावः ।। **द्वयोरितरेतरेति** । घटपटयोरित्यर्थः । बहूनां घटपटकुड्यानाम् ।। **अनवस्थितेति** । अपर्यवसितेत्यर्थः । बीजाङ्कुरानवस्थाव्यावृत्तयेऽसिद्धकारणापेक्षायामिति ।।

**विज.**— अनुमानान्तर्भावसाधिके व्याप्तिसापेक्षत्वकथनायाह ।। **तस्येति** । अङ्गत्वं सत्तर्कताप्रयोजकत्वम् । अनिष्टपदार्थमेव दर्शयितुमाह ।। **तदिति** । व्याप्तेरापाद्यानिष्टत्वस्य तर्कस्वरूपनिर्वाहकतातर्कप्रतिपत्त्यभावाननुकूलयोः सत्प्रतिपक्षाभावप्रकरणसमत्वाभावोपयोगः । विपर्ययापर्यवसानं त्वनुग्राहकतर्कोपयोगीति वक्ष्यते । अनिष्टभेदोक्तिपूर्वं तर्कभेदमाह ।। **आपाद्यमिति** । गोबलीवर्दन्यायेनात्माश्रयादेरनिष्टस्य पृथगुक्तिः । आत्माश्रयापादनमाह ।। **तत्रेति** । तत्तस्यैवोत्पत्त्यर्थं तदुपत्त्यपेक्षाभ्युपगमे पूर्वाज्ञातस्यैव वस्तुनो ज्ञानार्थं तत्तज्ज्ञानापेक्षाभ्युपगमे तस्य तज्ज्ञानस्य वा पूर्वभावित्वमापाद्यमित्यर्थः । यद्यपि तदपेक्षैव वक्तव्या न तूत्पत्तेस्तथाऽप्युत्पद्यमानस्य तदपेक्षोत्पत्तिमादायैवेत्युत्पत्त्यपेक्षोक्ता । तदपेक्षा च तज्जननानुकूला शक्तिर्द्रष्टव्या । अत्र पञ्चाङ्गानि दर्शयितुमाह ।। **यद्यस्येति** । न चेदित्यनेन विपर्यये पर्यवसानम् । न चैवमित्यनेनाननुकूलत्वमुक्तम् । अन्योन्याश्रयत्वापादनप्रकारमाह ।। **द्वयोरिति** । चक्रभ्रमणयोरित्यर्थः । चक्रकस्याह ।। **बहूनामिति** । चक्रभ्रमणघटानामित्यर्थः ।। **चक्रवदिति** । परावृत्येत्यर्थः । अनवस्थामाह ।। **अनवस्थितेति** । उभयत्रापाद्यपदानुषङ्गः । अन्योन्याश्रयादिनिरासायाह ।। **अनवस्थितेति** । असिद्धिपदं प्रमाणासिद्धबीजाङ्कुरादिपरिहाराय ।

**वेदे.**— अनुमानान्तर्भावसाधकव्याप्तिसापेक्षत्वादिकथनायाह ।। **तस्येति** । अत्राङ्गत्वं सत्कर्तृताप्रयोजकत्वम् । आत्माश्रयत्वमित्याद्यत्र गोबलीवर्दन्यायेनात्माश्रयादेरनिष्टात्पृथगुक्तिः ।। **तस्यैवोत्पत्तीति** । तस्यैवोत्पत्त्यर्थम् । तदुत्पत्त्यपेक्षाङ्गीकारे तस्यैव ज्ञप्त्यर्थं तस्यैव ज्ञप्त्यपेक्षाङ्गीकार इत्यर्थः । उत्पत्तौ तावदुदाहरति ।। **यदीति** । विपर्यये पर्यवसानं दर्शयति ।। **न चेत्पूर्वेति** ।

अननुकूलत्वं दर्शयति ।। **न चैवमिति ।** यथा बाह्यार्थमपलपतो बौद्धस्य यदीदमस्थूलं स्यात्तर्हि स्थूलतया न प्रतिभासेतेत्यस्थूलतानिरासकतर्कः स्थूलसूक्ष्मबाह्यार्थवादिनोऽनुकूल एव । बाह्यार्थवादिनोऽपि स्वाभिमतस्थूलतासाधनायैवमेवामपादकं बौद्धं प्रत्यापादयितुं शक्यत्वात् । यदीदं स्थूलं स्यात्तर्हि स्थूलतया न प्रतीयेतेति । न च तथा प्रकृते । आपादकतर्कप्रयोक्तारं परं प्रति स्वेष्टसिध्यनुकूलतया एवमेवापादयितुं शक्यते । अयमेव तर्कः प्रयोक्तुं शक्यते वादिनाऽतोऽननुकूलत्वमस्येत्यर्थः । अनवस्थापादनप्रकारं दर्शयति ।। **अनवस्थितेति ।** अनवस्थितेत्यनेन चक्रकव्यावृत्तिः । बीजाङ्कुरपरम्पराव्यावृत्तयेऽसिद्धेति । मूलक्षयकारीं प्राहुरनवस्थां हि दूषणमित्युक्तदूषणकृताबीजप्रदर्शनाय मूलेत्यादि । मूलक्षयव्याख्यानाय प्रतीतेत्यादि । अनवस्थाऽऽपाद्येति शेषः । अन्यथोपक्रमविरोधात् । ततश्चायमापादनक्रमः । विवादास्पदे कस्मिंश्चित्कार्ये यद्यनवस्थितासिद्धकारणपरम्पराऽङ्गीक्रियते तर्ह्यनवस्था स्यात् । नचैवमनवस्थाऽङ्गीकर्तुमुचिता । अप्रामाणिकत्वात् । तस्मात्प्रकृतकार्यं न सम्भवतीति । एवं ज्ञप्तावति द्रष्टव्यम् ।

**अभि.—** ।। **आपादकस्यापाद्येन व्याप्तिरिति ।** सुगममेतत् ।। **प्रतितर्केणाप्रतिघात इति ।** पर्वतस्यानग्निमत्त्वं मन्यमानस्य वादिनो यदि पर्वतो वह्निमान्न स्यात् । तर्हि वह्निमत्त्वेनाध्यक्षसिद्धः स्यादिति यस्तर्कस्तस्य यदि पर्वतो निरग्निकः स्यात्तर्हिनिर्धूमः स्यादिति प्रतितर्केणैव विघाताभावः । प्रतितर्काप्रतिघातः । आपाद्यस्य विपर्ययपर्यवसानमिति । न च निर्धूम इति विपर्ययपर्यवसानम् । इदं चापाद्यस्याप्रामाणिकत्वेन वा प्रमाणविरुद्धत्वेन वा परस्येव स्वस्याभिमतं चैतद्भवति न त्वन्यथा । व्यतिरेकोदाहरणं तु वेदादिवेद्यं जगन्मिथ्येति वदन्तं मायावादिनं प्रति सत्यत्ववादी हैतुकं मन्यमाह । यदि वेदादिवेद्यं स्यात्तर्हि मिथ्या न स्यादिति । अत्र हैतुकं मन्येन मिथ्याभावस्या-प्रामाणिकत्वप्रमाणविरुद्धयोरनङ्गीकाराद्विपर्ययपर्यवसानाभावः ।। **परस्याननुकूलत्वं चेतीति ।** प्रतिवादिनोऽनुकूलत्वाभावः । व्यतिरेकोदाहरणं त्वनित्यः शब्दः इत्याचार्यदेशीयः । नित्यः शब्द इति चार्वाकः । आचार्यदेशीय आह । यदि शब्दो नित्यः स्यात्तर्ह्याकाशविशेषगुणो न स्यादिति । अस्ति तावदापाद्यापदकयोर्व्याप्तिः । परमाणुरूपादावव्यभिचरितसहचारदर्शनात् । न च प्रतितर्केण बाधमीक्षामह इति प्रतितर्केणाप्रतिघातोऽप्यस्ति । आपाद्यमिदनिष्टं भवति चोदकस्य । तेनाकाशगुणत्वाभावस्य प्रमाणविरुद्धत्वाङ्गीकाराद्विपर्ययपर्यवसानं च भवति । आचार्यदेशीयेनापि तस्य प्रमाणविरुद्ध-त्वाङ्गीकारात् । परस्याननुकूलत्वं नास्ति । चोदकस्याप्यननुकूलत्वात् । तथा हि । चोदकोऽप्याचार्यदेशीयमाह । यद्यनित्यः शब्दस्तर्ह्याकाशविशेषगुणो न स्यात् । घटरूपादावव्यभिचतिसहचारदर्शनात् । व्याप्तिस्तावदस्ति । प्रतितर्काप्रतिघातादिकं तु पूर्ववदस्ति । परस्याननुकूलत्वं तूभयत्रापि नास्तीति सत्प्रतिपक्षहेतुवत्तर्कद्वयमप्याभास इति बोध्यम् ।

एतेन यद्यापाद्यं परस्यानिष्टं तर्हि परस्याननुकूलं भवेदेव । अथ नानिष्टं तर्हि परस्यानुकूलं भवेदेवेति नियमात् । आपाद्यानिष्टत्वात्परस्याननुकूलत्वं पृथङ् न वाच्यमिति परास्तम् । असङ्कीर्णव्यतिरेकोदाहरणसद्भावात् ।। **आपाद्यमनिष्टं पुनरिति ।** न केवलमापाद्यानिष्टे पूर्वोक्तविभाजकोपाधिद्वयमेवापि तु विभाजकोपाधिपञ्चकं चास्तीति भावः । अत्रायं विवेकः । पूर्वोक्तविभागस्य प्रथमकल्पे केवलानिष्टस्य दृष्टहानादिभागत्रयमन्तर्भवति । द्वितीयकल्पे त्वात्माश्रयादिचतुष्टयं केवलानिष्टस्यादृष्टकल्पनादिभागत्रयं चान्तर्भवति । द्वितीयभागे त्वात्माश्रयादिभागचतुष्टये केवलानिष्टस्यादृष्टकल्पनादिभागत्रये चाप्रामाणिककल्पनमन्तर्भवति । केवलानिष्टस्य दृष्टहानादिभागत्रये प्रामाणिकहानमन्तर्भवति । यद्यप्यात्माश्रयत्वादिदोषचतुष्टयं केवलानिष्टेऽन्तर्भवति । तथाऽपि कुरुपाण्डवन्यायमाश्रित्य पृथगुक्तम् । तस्योत्पत्तिज्ञप्त्यर्थमिति यद्यपि द्वितीयमुत्पत्तिग्रहणं व्यर्थम् । तदुत्पत्त्यर्थं तस्यैवापेक्षाङ्गीकार इत्येतावतैव पूर्णत्वात् । तथाऽपि पूर्वभावी स्यादित्यापाद्यस्यापाद्याप्रामाणिकस्य स्फुटीकरणाय तद्ग्रहणम् । न ह्यनुपपन्नस्य कार्यस्य सत्त्वं प्रमाणदृष्टमिति । अप्रमाणिकं पूर्वभावित्वमिति । ननु तस्योत्पत्त्यर्थं तदुत्पत्त्यपेक्षाङ्गीकारे आत्माश्रयो भवतीत्येतावतैव ज्ञप्तावप्यात्माश्रय उक्तो भवति । ज्ञानोत्पत्त्यर्थं ज्ञानोत्पत्त्यपेऽक्षाङ्गीकारसाम्यात् । न हि घटोत्पत्तिः पटोत्पत्तिरित्येतावता विशेषो भवति । अन्यथा पटोत्पत्त्यादिनाऽपि विधान्तरं स्यादिति चेत् । सत्यम् । उत्पत्तावात्माश्रयोक्त्यैव ज्ञप्तावप्यात्माश्रय उक्तो भवतीति । तथाऽपि ज्ञप्तावात्माश्रयो ज्ञानस्येव ज्ञेयस्यापि दोषो भवतीति सूचनाय तस्य ज्ञप्त्यर्थमित्याद्युक्तम् । इदमुक्तं भवति । प्रमेयस्योत्पत्तावात्माश्रयो हि प्रमेयस्यैव दोषो नान्यस्य प्रमेयविलोपहेतुत्वात् । यस्य हि मते घटस्य घट एव कारणं न तस्य घटोत्पत्तिः सिध्यतीति । ज्ञप्तौ त्वात्माश्रयस्तु ज्ञानस्येव ज्ञेयस्यापि दोषः । उभयविलोपहेतुत्वात् । तथा हि । यस्य हि मते तस्य हि ज्ञानस्य तदेव ज्ञानं कारणं न तस्य ज्ञानमिति सिध्यतीत्यात्माश्रयात् । ततश्च तस्य ज्ञेयविलोपश्चाप्नोति । ज्ञानविषयज्ञेयसद्भावे प्रमाणाभावादिति । आपादकस्यापाद्येन सामान्यव्याप्तिमुपपादयति ।। **यद्यस्य ज्ञानकारणमिति ।** प्रतितर्केणाप्रतिघातमुपपादयति ।। **न चात्रेति ।** आपाद्यस्याङ्गीकृतत्वात् । कथमनिष्टत्वमित्यत आह ।। **अनिष्टं चेदमिति ।** नानङ्गीकृत्वमनिष्टत्वमपि त्वप्रामाकित्वं प्रमाणविरुद्धत्वं वेति भावः । विपर्यये पर्यवसानं दर्शयति ।। **न चेदिति ।** परस्यानुकूलत्वमाह ।। **न चैवमिति ।** यदि घटः स्वस्यैव कारणं न स्यात्तर्हि स्वतोऽपि पूर्वभावी स्यादिति । परेणापादकं पुरुषं प्रत्यपादयितुं न शक्यत इत्यर्थः ।। **केवलानिष्टोपादनमिति ।** प्रामाणिकहानाप्रामाणिककल्पनात्वेन द्वेधा विभक्तं प्रत्येकं त्रिविधमित्यर्थः । एतेन त्रिधेति प्रतिज्ञाय षण्णां परिग्रहणमनुपयुक्तमिति परास्तम् ।

**आद.—— ॥ अदृष्टाननुमितेति ।** नन्वप्रामाणिककल्पनाया आपादनं न सम्भवति । यथा शशे विषाणकल्पनेऽप्रामाणिककल्पनायाः सिद्धत्वान्नापाद्यता सम्भवति । प्रतिवादिनोऽप्रामाणिकत्व-कल्पनमसिद्धमिति चेन्न । तत्र प्रमाणाभावेऽपि तदङ्गीकारे बाधकाभावादङ्गीक्रियत इति वदतः प्रतिवादिनोऽसिद्धत्वाभावात् । न च सत्त्वे प्रत्यक्षविषयत्वाद्यापत्तिरूपं बाधकमस्त्येवेति चेत् । तदभावप्रयोजकशक्तिविशेषाद्यङ्गीकारेण बाधकाभावात् । न च तत्कल्पनायां प्रमाणजन्यत्व-मापादनीयमिति वाच्यम् । विपर्यये पर्यवसानायोगात् । तथा सति त्वत्कल्पनायां प्रमाणजन्यत्वापत्तेः । तथा च स्वस्यैव निग्रहापत्तेः । मैवम् । तादृशस्थले तत्कल्पनायां प्रमाणजन्यत्वाभावाङ्गीकार-स्यैवापाद्यमानत्वात् । तदङ्गीकारस्यैवासिद्धत्वेनापाद्यत्वसम्भवात् । तेन च तत्कल्पनायां प्रमात्वा-भावाङ्गीकारस्य वा भ्रमत्वाङ्गीकारस्य वाऽऽपाद्यमानत्वात् । तदङ्गीकारे च स्वव्याहत्या वादिनिवृत्तिर्भवतीति ।

**श्रीनि.—— ॥ आपादकस्येति ।** आपादनकर्तुरीत्यर्थः ॥ **आपाद्येनेति ।** आपादनकर्मण इत्यर्थः ॥ **व्याप्तिरिति ।** यथा यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्के यत्र वह्न्यभावस्तत्र धूमाभाव इति व्याप्तिः ॥ **प्रतितर्केणाप्रतिघात इति ।** यथाऽऽह बौद्धः । यदि जगतः क्षणिकत्वं न स्यात्तर्ह्यर्थ-क्रियाकारित्वरूपं सत्त्वं न स्यात् । तथा हि । स्थायिनो घटादेः किं युगपदर्थक्रियाकारित्वमुत क्रमेण । नाद्यः । एकक्षणे सर्वकारणप्रसङ्गात् । द्वितीये प्रथमक्षणे द्वितीयादिक्षणीयकार्यकारणशक्तिरस्ति न वा । आद्ये प्रथमक्षणे एव सर्वं कुर्यात् । समर्थस्य विलम्बायोगात् । द्वितीये द्वितीयादिक्षणेऽपि न कुर्यादिति । तदेतस्य तर्कस्य यदि क्षणिकं स्यात्तर्हि तदेवेदमिति प्रत्यभिज्ञाविरोधः स्यादिति प्रतितर्केण विरोधोऽस्ति । सत्तर्के तु नैवम् । यद्यग्निः । स्यात्तर्हिदं स्यादित्यभावात् ॥ **आपाद्यस्यानिष्टत्वमिति ।** अङ्गीकर्तव्यताविरोधिधर्मवत्त्वमित्यर्थः ॥ **आपाद्यस्य विपर्ययपर्यवसान-मिति ।** आपाद्यव्यतिरेकस्य पक्षधर्मताप्रदर्शनपूर्वकमापादकव्यतिरेकस्य पक्षसम्बन्धकथनमित्यर्थः । यथा वर्तते च धूमस्तस्मादग्निमानेवेति । बौद्धतर्के तु नैवम् । प्रत्यभिज्ञादिप्रमाणबाधितत्वेन क्षणिकमेवेति वक्तुमयोगात् ॥ **परस्याननुकूलत्वं चेति ।** दृश्यत्वादिप्रकरणसमवत्प्रतिपक्षसाधकत्व-मित्यर्थः । यथा बौद्धतर्कस्य परानुकूलत्वम् । यदि क्षणिकं स्यात्तर्हि सत्त्वं न स्यादित्यापादन-सम्भवात् । तथा हि । कारणस्य हि कार्यक्षणवर्तिन एव जनकत्वम् । अन्यथाऽतिप्रसङ्गात् । न चैतत्क्षणिकस्य सम्भवति । एकक्षणमात्रावस्थायिनस्तस्य कार्यक्षणे भावात् । अतः क्षणिकत्वेऽर्थ-क्रियाकारित्वरूपं सत्त्वं न सम्भवतीति न तथा सत्तर्कस्य व्याप्त्यभावेन यद्यग्निः स्यात्तर्हि धूमोऽपि न स्यादित्यापादनायोगादिति ॥ **केवलानिष्टमिति ।** आत्माश्रयत्वादिरहितमनिष्टमित्यर्थः ॥

**पूर्वभावित्वेति** । इत्यापाद्यत इति पूर्वेण सम्बन्धः । तस्य व्याप्त्यादिपञ्चाङ्गानि क्रमेण दर्शयति ॥ **यद्यस्येत्यादिना** । आपाद्यत इति प्रतितर्कोऽस्तीति पूर्वेण सम्बन्धः ॥ **न चैवमेवेति** । यदि घटोऽयमस्यैव घटोत्पादको न स्यात्तर्हि स्वतोऽपि पूर्वभावी न स्यादित्यापादनमपि न शक्यते । तद्घटकार्यजलाहरणादौ व्यभिचारादित्यर्थः ॥ **आपादकमिति** । तर्कप्रयोक्तृपुरुषं प्रतीत्यर्थः ॥ **द्वयोरिति** । चक्रभ्रमणयोरित्यर्थः ॥ **बहूनामिति** । चक्रभ्रमणघटानामित्यर्थः ॥ **चक्रवदिति** । परावृत्त्येत्यर्थः ॥ **अनवस्थितेति** । अपर्यवसितेत्यर्थः ।

**वि.—** ॥ **अपाद्यस्यानिष्टत्वमिति** । अनिष्टत्वमङ्गीकार्यानर्हत्वमित्यर्थः ॥ **तद् द्विविधमिति** । नन्वदृष्टकल्पनादिभ्योऽन्यस्य कल्पनागौरवस्यापि सत्त्वात्त्रिविधप्रामाणिककल्पनमित्ययुक्तमित्यत आह ॥ **एतदेवेति** । त्रिविधमप्रामाणिककल्पनमेवेत्यर्थः ॥ **आपाद्यस्य विपर्यये पर्यवसानमिति** । आपाद्यस्य राहित्येऽनिष्टापादनस्य पर्यवसानं परिसमाप्तिर्विपर्ययपर्यन्तधावनमिति यावत् ॥ **परस्यनानुकूलत्वं चेति** । विरुद्धहेत्वाभासवत्प्रतिपक्षासाधकत्वं चेत्यर्थः । आपादनात्मक-तर्कभेदकथनायापाद्यानिष्टभेदमाह ॥ **आपाद्यमनिष्टमिति** । पुनः पञ्चधा चेत्यर्थः ॥ **केवलानिष्ट-मिति** । आत्माश्रयत्वचक्रकाश्रयत्वानवस्थात्वरहितमनिष्टमित्यर्थः । सर्वस्याप्यनिष्टत्वेऽपि गोबली-वर्दन्यायेन पृथगुक्तिः । तत्राद्यचतुष्टयमप्रामाणिककल्पनात्मकम् । न ह्यात्माश्रयादिकं कुत्रापि प्रमितं पञ्चममुभयात्मकमिति ज्ञातव्यम् । आत्माश्रयादिः कः कश्च तदापादनप्रकार इति जिज्ञासायामाह ॥ **तत्रेति** । आत्माश्रयादिपञ्चस्वित्यर्थः । आपादानप्रकारं दर्शयति ॥ **यदीति** । तर्कस्य पञ्चाङ्गानि प्रदर्शयति ॥ **यद्यस्य कारणमित्यादिना** ॥ **इतीति** । इति प्रतिकूलस्तर्कोऽत्र तर्के न चास्तीत्यन्वयः । आपाद्यस्यानिष्टत्वं दर्शयति ॥ **अनिष्टं चेदमिति** । इदं स्वापेक्षया पूर्वभावित्वमित्यर्थः । तदभाववति काले भावः सत्त्वमित्यर्थः । विपर्यये पर्यवसानं दर्शयति ॥ **न चेदिति** । चेच्छब्दो यद्यर्थे । तदा तर्हीत्यर्थः । अननुकूलत्वं दर्शयति ॥ **न चैवमापादकं प्रतीति** । यद्ययं घट एतद्घटज्जनकः स्यात्तर्हि स्वापेक्षया पूर्वभावी स्यादित्यापादकं पुरुषं प्रत्येवमेव । अनेन प्रकारेणैव यद्ययं घट एतद्घटजनको न स्यात्तदा स्वापेक्षया पूर्वभावी स्यादिति प्रतिबन्द्याऽऽपादयितुं च न शक्यते । इत्यनेन प्रकारेण जिज्ञासापञ्चाङ्गानि ज्ञातव्यानीत्यर्थः ॥ **चक्रवदिति** । पुनः पुनरावर्तनलक्षणचक्रभ्रमणेन चक्र-साम्यमिति बोद्धव्यम् ॥ **चक्रकाश्रयत्वमिति** । आपाद्यमित्यनुवर्तनीयम् ॥ **अनवस्थासिद्धेति** । पर्यवसिताप्रमितकारणानामङ्गीकार इत्यर्थः । सामग्र्याः सामग्र्यन्तरसापेक्षत्वात्प्रमितसामग्री-परम्परापेक्षाव्यवच्छेदायासिद्धेत्युक्तम् । मूलक्षयनामकापाद्यमन्यदस्तीत्याशङ्कापरिहारायोक्तं मूलक्षया-परनामकेति । मूलक्षयं इत्यपरं पर्यायरूपं नाम यस्याः सा तथोक्तेत्यर्थः । प्रतीतकार्यविलोपलक्षणा प्रमितकार्यविलोपरूपाऽनवस्थाऽऽपाद्येत्यर्थः ।

**(११) प्र.प.– केवलानिष्टापादनमपि त्रेधा । दृष्टानुमितश्रुतहानापादनभेदात् । अदृष्टाननुमिताश्रुतकल्पनापादनभेदाच्च । एतदेव कल्प्यानेकत्वे कल्पनागौरवमित्युच्यते । दृष्टहानं यथा । यदि पर्वतो निरग्निकस्तर्हि निर्धूमः स्यादिति । एवमन्यस्याप्युदाहरणं शास्त्रे द्रष्टव्यम् । अनुमानत्वेऽपि तर्कस्यापादकासिद्धिरदूषणम् । पराभ्युपगममात्रस्य तत्र सिद्धिपदार्थत्वात् ।**

**जना.–** दृष्टानुमितेति द्वन्द्वान्ते श्रूयमाणो हानशब्दः प्रत्येकं सम्बध्यते । नन्वप्रामाणिककल्पनं चतुर्धेति वाच्यम् । कल्पनागौरवस्य तुरीयस्य सत्त्वादित्यत आह ।। **एतदेवेति ।। एवमन्यस्यापीति ।** अनुमितहानादेरित्यर्थः । अनुमितहानं यथा । यदि देवदत्तो रूपद्रष्टा न स्यात् तदा चक्षुष्मान्न स्यादिति । श्रुतहानं यथा । यदीश्वरो न सर्वज्ञस्तर्हि न जगत्कर्ता स्यादिति ।। **अदृष्टाननुमितेति ।** अदृष्टकल्पनं यथा । यदि पीतमुदकं परमन्तर्दहेत्तर्हि मामपि दहेत् । अविशेषादिति । अननुमितकल्पनं यथा । यदि वह्निर्जलाभिन्नः स्यात्तर्हि शीतलः स्यादिति । ननु तर्कस्यानुमानत्वे आपादकं निर्वह्नित्वं निर्धूमत्वं प्रति लिङ्गमिति वाच्यम् । निर्वह्नित्वस्य वह्निमति पर्वते पक्षेऽसिद्धत्वेन कथं तर्कस्यानुमानत्वमित्यत आह ।। **अनुमानत्वेऽपीति ।** तर्कोऽनुमानं व्याप्तिबलेन परोक्षज्ञानजनकत्वादित्यनुमानादिति भावः । आपादकरूपलिङ्गस्यासिद्धत्वात्कथं प्रामाण्यमिति शङ्कां निराकरोति ।। **आपादकासिद्धिरदूषणमिति ।** साधनरूपलिङ्गस्यैवासिद्धिर्दोषो न त्वापादकरूपस्य । यदापादकं तत्पराभ्युपगतमेव भवति । वस्तुतः पक्षे विद्यमानत्वे आपादकत्वव्याघातः । कथमन्यथा न चायं निर्धूमः । तस्मान्न निरग्निक इति विपर्यये पर्यवसानम् । तदभावे च तर्क एवाभासः स्यात् । न चात्र निरग्निकत्वं साधनत्वेनोपात्तम् । तथात्वे यदीति स्यादिति च न स्यात् । किन्तु निरग्निकत्वादिति स्यादिति । एवं तर्के आपादकसत्त्वरूपासिद्धिर्न दोषायेत्यभिधायेदानीमापादाकासिद्धेर्दोषत्वमप्यङ्गीकृत्याप्यापादकस्यापि पक्षे सिद्धिं सम्पादयति ।। **परेति ।** परस्य प्रतिवादिनो य आपादकनिर्वह्नित्वाभ्युपगमस्तस्यैव तर्के सिद्धिपदार्थत्वात् । असिद्धिविरोधिभूतसिद्धिपदार्थत्वादित्यर्थः । मात्रचाऽऽपादकस्य पक्षे सत्त्वं व्यवच्छिनत्ति । अयं भावः । आपादकरूपलिङ्गस्य निर्वह्नित्वादेः पक्षे पराभ्युपगतत्वमेव पक्षसम्बन्ध इति नासिद्धिः । युक्तं चैतत् । धूमरसादेः संयुक्तत्वसमवेतत्वादिना ज्ञानस्यैवाग्निरूपादिसाधकतया तत्र संयोगसमवाययोरिव निरग्निकत्वस्यापि पराभ्युपगतत्वेन ज्ञातस्यैवापादकतयाऽभ्युपगमस्यैव सम्बन्धतयोचितत्वाच्च । दृश्यते च कृत्तिकोदयादधोदेशे नदीपूरादिरूपसाधनानुमानस्यापि रोहिण्युदयोर्ध्वदेशादिरूपपक्षेऽभावेऽपि पक्षनिष्ठसाध्यसमानकालीनत्वपक्षनिरूप्याधोदेशत्वादिः । यथा नैयायिकमते शब्दोऽभिधेयः प्रमेयत्वादित्यनुमाने प्रमात्वमेव प्रमेयत्वमिति पक्षे ज्ञानत्वरूपप्रमेयत्वस्य पक्षीभूतेन शब्देन स्वरूपप्रत्यासन्नज्ञानसमवेतत्वादिश्च परम्परासम्बन्ध इति ।

**राघ.– शास्त्रे द्रष्टव्यमिति ।** अनुव्याख्यानसुधादौ । तथा हि । ईश्वरः सर्वज्ञः सर्वकर्तृत्वादित्यत्र हेतुरस्तु साध्यं माऽस्त्वित्युक्ते यदि सर्वज्ञो न स्यात्तर्हि कार्यत्वादिलिङ्गानुमितसर्वकर्तृत्वमपि न स्यादिति । आनन्दमयमात्मानमुपसङ्क्रम्येत्यत्राति क्रम्येति यद्यर्थः स्यादुपशब्दो न स्यादिति । अदृष्टकल्पनं यथा । भोजनं यदि न तृप्तिहेतुस्तर्हि ममापि न तृप्तिहेतुः स्यादिति । ईश्वरो न कर्ता स्यात्तर्हि दुःखी स्यादित्यनुमितकल्पनोपसङ्क्रम्येत्यत्र यद्यतिक्रम्येत्यर्थस्तर्हि श्रुतावतिशब्दः स्यादिति । कल्पनागौरवं तु तत्त्वमसीत्यत्र जीवब्रह्मैक्ये पदद्वयलक्षणा । श्रुतिप्रत्यक्षयोरतत्त्वावेदकत्वकल्पनेत्यादि ध्येयमित्यर्थः । ननु तर्कस्यानुमानत्वे आपादकं निरग्निकत्वं लिङ्गमापाद्यं निर्धूमत्वं लिङ्गीति वाच्यम् । तथा च हेतोरसिद्धिर्बाधोऽपसिद्धान्तश्च । प्रतिवादिना निरग्निकत्वनिर्धूमत्वयोरस्वीकाराद्धूमस्य प्रमितत्वाच्चेत्यत आह ॥ **अनुमानत्वेऽपीति ।** साधनरूपत्वे हि स्वसिद्ध्या भाव्यं न त्वापादन-रूपत्वे। अन्यथा यदीति स्यादित्यापादनत्वव्याघातात् । ततस्तत्र च परसिद्धिमात्रमेवाङ्गमिति भावेनाह ॥ **पराभ्युपगमेति ।** तत्रापादने ।

**विज.—** केवलानिष्टभेदमाह ॥ **केवलेति ।** गौरवस्योभयत्रिकान्तर्भावमाह ॥ **एतदेवेति ।** ननु वह्न्यभावादेः पर्वतादावसिद्धत्वात्कथं तज्ज्ञानस्य प्रमात्वम् । धूमाभावादेश्च बाधकात्कथं प्रमाऽनुमितत्वं तज्ज्ञानस्येत्यत आह ॥ **अनुमानत्वेऽपीति ॥ परेति ।** अभ्युपगमस्यैव सम्बन्धित्वमिति भावः ।

**वेदे.— ॥ त्रेधेति ।** प्रमाणलक्षणटीकायामनुमितहानानुमितकल्पनयोरनुक्तिस्तु प्रायेण शास्त्रेषु तयोर्व्यवहाराभिप्रायेण ज्ञातव्यम् ॥ **एवमन्यस्यापीति ।** अनुमितहानं यथा । चक्षुष्मन्तं प्रत्यक्षीकृत्योच्यते । अयं यदि चाक्षुषसाक्षात्कारवान्नहि तर्हि चक्षुष्मानपि न स्यादिति । श्रुतहानं यथा। यदीश्वरो न सर्वज्ञस्तर्हि जगत्कर्ता न स्यादिति । अदृष्टकल्पनं यथा । यदा पीतमुदक-मन्तर्धक्ष्यति तर्हि मामपि दहेदविशेषादिति । अननुमितकल्पनं यथा । यथाऽन्दं लक्षीकृत्योच्यते । अयं यदि रूपज्ञस्तर्हि चक्षुष्मान्त्स्यादिति । अश्रुतकल्पनं यथा । यदीश्वरो जीवाभिन्नस्तर्हि दुःखी स्यादिति द्रष्टव्यमिति भावः । ननु तर्कस्यानुमानत्वे आपादकं निरग्निकत्वं लिङ्गम् । आपाद्यं निधूर्मत्वं साध्य-मित्यङ्गीकर्तव्यम् । न चेदं युक्तम् । लिङ्गस्यासिद्धत्वाल्लिङ्गिनश्च प्रत्यक्षबाधात् । धूमस्यैव तत्राङ्गीकृतत्वेन तदभावसाधनेऽपसिद्धान्तापत्तेश्चेत्याशङ्क्य निराकरोति ॥ **अनुमानत्वेऽपीति ॥ आपादकासिद्धिरिति ।** स्वमत इति शेषः । तर्हि कथं तर्कप्रवृत्तिरित्यत आह ॥ **परेति ।** पराभ्युप-गमेनैव तर्कः प्रवर्तते । परन्यायैश्च दूषणमित्युक्तत्वात् । अतः स्वमतेऽसिद्धिरदूषणमिति भावः । असाधनादित्यन्तरमनिष्टरूपे चानुमानिष्ठतोपपादकतया भूषणमेवेति वाक्यशेषः । इदमुक्तं भवति ।

साधनानुमानेऽसिद्ध्यादिकदोषो नानिष्टप्रसञ्जनरूपे दूषणानुमाने । तत्र ह्यापादकस्य स्वमतेऽसिद्धे-र्भूषणमेव पराभ्युपगमेनैव प्रवृत्तत्वात्तर्कस्य । एवमापाद्यस्य बाधितत्वादिकमपि न दोषः । तस्यापि साधनानुमाने एव दोषत्वात् । अस्माभिश्च निर्धूमो भवतीत्यसाधनात् ।आपादनरूपे च दूषणानुमाने बाधादेरनिष्टतोपपादकत्वेन भूषणतैवेति । यद्वा । नात्र निरग्निकत्वरूपापादकस्य पक्षेऽसिद्धिः । यत्सर्वथा पक्षे न सम्बद्धं तदसिद्धमिति लोके प्रसिद्धम् । निरग्निकत्वं च पक्षे परेणाभ्युपगतम् । ततश्च पराभ्युपगमस्यैव यक्षानुरूपबलिन्यायेन सम्बन्धतया सिद्धिपदार्थत्वान्नासिद्धमित्याह ।। **परेति ।**

**अभि.—** ।। **अदृष्टानुमितेति ।** यत्सत्त्वं प्रत्यक्षानुपलब्धिविरोधि तत्कल्पनमेकविधा यस्य च सत्त्वमनुमितिरूपोपालम्भाभावविरोधि तत्कल्पनमित्यपरा । यस्य स्वसत्त्वं स्वशब्दोपालम्भाभाव-विरोधि तत्कल्पनमित्यपरा ।। **त्रेधेति ।** अप्रामाणिककल्पनात्मकं केवलानिष्टापादनं त्रेधेत्यर्थः । एतेनादृष्टस्याप्यनुमानवेद्यत्वस्याननुमितायाः प्रत्यक्षवेद्यत्वसम्भवाददृष्टकल्पनादेः केवलानिष्टत्ववर्णन-मयुक्तमिति परास्तम् । ननु तर्को नानुमानमसिद्धत्वेनाभासत्वादित्यत आह ।। **अनुमानत्वेऽपीति ।** यथाऽधोदेशे नदीपूरस्यानुमानत्वेऽपि विवक्षितसिद्धेः सत्त्वात्पक्षावृत्तित्वं न दोषः । तथा तर्क-स्यानुमानत्वेऽपि विवक्षितसिद्धेः सत्त्वेनापादकसत्त्वप्रयुक्तमसिद्धिर्न दोषायेति भावः । एतेनोत्तरवाक्ये सिद्धेर्व्युत्पादितत्वेनासिद्धेरेवाभावात्तददोषत्वमानविशेषत्ववर्णनं व्यर्थमिति परास्तम् ।

**आद.—** ।। **एवमन्यस्यापीति ।** अनुमितहानं यथा । कस्मिंश्चित्पर्वते सुरभिधूमेन चन्दन-प्रभववह्नावनुमिते सति तत्र पर्वते चन्दनानङ्गीकारे चन्दनप्रभववह्निर्न स्यादित्यापादनम् । श्रुतहानं यथा । तत्रैव चन्दनप्रभववह्निमाप्तवाक्याज्ज्ञानतस्तदभावः स्यादित्यापादनं द्रष्टव्यम् । नन्वत्राप्या-पाद्यमानतर्कस्य समुचितदेशवृत्तित्वाभावादनुमापकत्वानुपपत्तिः । यत्र कुत्रापि विद्यमानस्य साध्यानुमितिजनकत्वे पर्वते आपाद्यमानस्य धूमाभावस्य महानसे वह्न्यनुमितिजनकत्वापत्तिः । यत्रापत्तिस्तत्रैव साध्यप्रमापकमिति चेत् । आपत्तेरपि नियतविषयकत्वानुपपत्तिः । आपादकस्यापि समुचितदेशवृत्तिस्वाभावादित्यत आह ।। **तर्कस्यापादकासिद्धिरिति ।** तर्कसम्बन्ध्यापादकस्येत्यर्थः । यत्रापादकस्याङ्गीकारस्तद्विशेष्यकापत्तिजनकत्वमेवेति भावः ।

**श्रीनि.–** ।। केचित्तु कल्पनागौरवं पृथक् तर्कमाहुः । तन्मतनिरासायाह ।। **एतदेवेति ।** अप्रामाणिककल्पनमेवेत्यर्थः ।। **कल्प्यानेकत्व इति ।** कल्प्यस्याप्रामाणिकस्यानेकत्व इत्यर्थः ।

**वि.–** ।। **केवलानिष्टमापादनमपीति ।** अनवस्थात्वादिरहितं प्रामाणिकहानाप्रामाणिककल्पना-रूपमनिष्टापादनं चेत्यर्थः ।। **एतदेवेति ।** अदृष्टाननुमिताश्रुतकल्पनापादनमेवेत्यर्थः । अनुमितहानादेः

किमुदाहरणमिति जिज्ञासायामाह ।। **एवमन्यस्यापीति** । अनुमितहानं यथा । यदीश्वरो न सर्वज्ञस्तदा दुःखी स्यादित्येवं शास्त्रोक्तानि तदुदाहरणानीति ज्ञातव्यम् । ननु तर्कः प्रमाणानामनुग्राहक एव न स्वयमनुमानभावेन प्रमाणम् । अनुमाने च तस्यापादके लिङ्गमापाद्यमनुमेयमिति वाच्यम् । न च तद्युक्तम् । आपादकस्य निर्वह्नित्वस्य पक्षे सिद्धान्तिनाऽनभ्युपगमेनासिद्धत्वात् । आपाद्यस्य निर्धूमत्वस्यानिष्टत्वेन बाधितत्वात् । धूमसद्भावस्य स्वयमभ्युपगतत्वेनापसिद्धान्ताच्च । न ह्यसिद्धं लिङ्गं भवति नापि बाधितसिद्धं न विरुद्धं चानुमेयं च भवितुमर्हतीत्यतिप्रसङ्गादित्यत आह ।। **अनुमानत्वेऽपीति** । तर्क्यतेऽनेनेति व्युत्पत्त्या तर्कोऽनुमानम् । अत एव निर्धूमत्वं तत्राङ्गीकार्यमिति ज्ञानं फलरूपमपि प्रमेव व्याप्याङ्गीकृतत्वस्य व्यापकाङ्गीकृतत्वेन विनाऽयोगादङ्गीकार्यत्वस्य तत्र सत्त्वात् । अपसिद्धान्तोऽपि सिद्धान्तविरुद्धसद्भावप्रतिपादन एव दोषो न तु तद्विरुद्धापादने । तदुक्तं प्रमाणलक्षणटीकायाम् । अतः परसिद्धन्यायेन परोक्तस्य दूषणीयत्वात् । दूषणानुमानेनापसिद्धान्ताद्युद्भावनीयमिति । अतो बाधोऽपसिद्धान्तश्चापाद्यस्य न दूषणमिति ।

(१२) प्र.प.— **एवमापाद्यस्य प्रमाणविरोधोऽपसिद्धान्तश्च न दूषणम् । निर्धूमो भवतीत्यसाधनात् । यथा साधनानुमाने न व्याप्तिमात्रं नापि पक्षधर्मतामात्रं साध्यप्रमितिसाधनं किन्तु मिलितमेव । एवमनिष्टापादनं विपर्यये पर्यवसानं चोभयं मिलितमेवानुमितिसाधनं भवतीति तर्कस्य प्रामाण्यमुपपद्यते । सोऽयं क्वचिद्विपरीतशङ्कानिरसनद्वारेण प्रमाणानामनुग्राहकोऽपि भवतीति ।**

**जना.**— ननु तथाऽपि न तर्कस्यानुमानत्वं सङ्गच्छते । तर्कस्यानुमानत्वे ह्यापाद्यं निर्धूमत्वं लिङ्गीति वाच्यम् । तस्य धूमवत्यभावाद्बाधः । अपसिद्धान्तश्च । सिद्धान्तिनाऽपि पक्षे निर्धूमत्वास्वीकारात् । धूमस्य प्रतीतत्वाच्चेत्याशङ्क्य निराकरोति ।। **एवमिति ।। न दूषणमिति** । अयं भावः । साध्यरूपस्यैव लिङ्गिनो बाधो दोषो न त्वापाद्यरूपस्य । आपाद्यत्वव्याघातात् । यदापाद्यं तत्प्रमाणबाधितमेव । अनिष्टं ह्यापाद्यम् । प्रमाणबाध एवानिष्टत्वम् । न चात्र निर्धूमत्वं साध्यम् । तथात्वे यदि तर्हीति च न स्यात् । किन्तु निर्धूमोऽयमिति स्यात् । न च निर्धूमोऽयमिति ज्ञानस्य यावान्विषयस्तावानेव तर्हि निर्धूमः स्यादित्यस्यापि विषयः । अधिकस्य तर्हि स्यादिति शब्दयोरर्थस्याप्युल्लेखात् । अत एव नापसिद्धान्तोऽपि । स हि सिद्धान्तविरुद्धस्य साधने स्यात् । न त्वापादनेन । तस्मात् साधनानुमान एव बाधापसिद्धान्तयोर्दूषणत्वम् । न प्रसङ्गानुमानरूपतर्के । प्रत्युत तयोर्भूषणत्वमेवेतीत्याशयवानाह ।। **निर्धूमो भवतीत्यसाधनादिति** । अस्य न दूषणमिति पूर्वेणान्वयः । साधनानुमान एव तयोर्दोषत्वमित्येकः पक्षः । अथवा यक्षानुरूपबलिन्यायेन लिङ्गिनाऽऽपाद्यस्य निर्धूमत्वादेरपि पक्षे परेणाभ्युपगमनीयत्वमेव बाधाभाव इति पक्षान्तरमूह्यम् ।

ननु विपर्यये पर्यवसाने विरहिते सति केवलतर्केणोद्देश्याया न निरग्निक इति प्रतीतेरनुत्पादात्कथं तर्कस्य प्रामाण्यमित्याशङ्क्य निराचष्टे ॥ **यथेति ॥ एवमनिष्टापादनमिति ।** अनिष्टापादनात्मकस्तर्क इत्यर्थः । न हि सहकारिविरहदशायां प्रमित्यजनकत्वमात्रेणाप्रामाण्यम् । तथात्वे संसारसापेक्षतया प्रत्यभिज्ञानजनकस्य चक्षुरादेरप्रामाण्यापातादिति भावः । तर्कस्य प्रामाण्यं बहुधा पूर्वपक्षयित्वा समर्थितं तर्कताण्डवे व्यासतीर्थैः । विस्तरभीरुत्वादस्माभिर्नेह कृत्स्नमुच्यते । ननु सधूमोऽपि पर्वतो निरग्निकोऽस्त्विति या पक्षे साध्याभावजिज्ञासा तन्निवृत्तिमात्रोपक्षीणस्य तर्कस्य कथं प्रामाण्यम् । तदुक्तं वरदराजेन । प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहको भवेत् । पक्षे विपक्षजिज्ञासाविच्छेदस्तदनुग्रह इति । एतन्निरसितुमाह ॥ **सोऽयमिति ॥ क्वचिदिति ।** अद्रिरग्निमान्धूमवत्त्वादिति प्रयोगेऽग्निमत्त्व शङ्काप्रतिक्षेपद्वाराऽनुग्राहको भवति । अपिशब्दात्क्वचित्स्वतन्त्रोऽपि भवति । कुत्रेति चेत् । अद्रि-रग्निमान्न वेति विप्रतिपत्तौ साधनानुमानं विनैव यदि निरग्निकः स्यात्तर्हि निर्धूमः स्यात् । न चायं निर्धूम इति तर्करूपानुमानेनैवाग्निसिद्धेः । न हि विधिमुखेन साधयित्वैव निषेधमुखेन साधनीयमिति कुलधर्म इत्यर्थः । यद्वा क्वचिद्दशाविशेषे करणनिष्पत्तेरर्वाक् प्रतिप्रमाणनिरसनद्वारेण करणस्यानुग्राहको भवति । अपिशब्दात्ततः प्राग्व्यभिचारशङ्कानिरसनद्वारेण करणशरीरनिष्पादकश्च भवतीत्यर्थः । यद्वा क्वचित्प्रत्यक्षादावनुग्राहको भवति । सर्वत्र करणशरीरनिष्पादकत्वासम्भवात् । अपिशब्दादनुमाने उक्तरीत्योभयात्मकश्च भवतीत्यर्थः । तस्माद्यथा प्रमाणानुग्राहकः । साधकं बाधकं वा प्रमाणमेव हि शङ्कानिवर्तकमित्यर्थः । अत्र सुधायां तर्कताण्डवे चोक्तं तर्कस्य साधनानुमानान्तर्भावादिकं बहु वक्तव्यमस्ति । विस्तरभयादुपरम्यते ॥ **गतस्तर्कप्रमाणविचारः ॥**

**राघ.—** ननु तर्के निरग्निकत्वनिर्धूमत्वरूपापादकापाद्यगोचरज्ञानयोर्यथाक्रमं करणत्वेन फलत्वेनाभिमतयोर्द्वयोरपि भ्रमत्वात्कथं तर्कस्य प्रामाण्यमित्यतो मैवं फलकरणभावः किन्त्वन्यथैवेति भावेन दृष्टान्तपूर्वकमाह ॥ **यथेति ।** पक्षधर्मतेति परमताभिप्रायेण समुचितदेशवृत्तित्वाभिप्रायेण चोक्तिः । निर्धूमः स्यान्न च निर्धूमस्तस्मान्न निरग्निक इत्यनिष्टापादनविपर्यये पर्यवसानरूपं द्वयमपि मिलितमेवेत्यनेन निर्धूमत्वाभावज्ञानं करणम् । निरग्निकत्वाभावज्ञानं फलम् । ज्ञानद्वयमपि प्रमास्वरूप मेवेति तर्कस्य प्रामाण्यं प्रमितिकरणत्वमित्यर्थः । तर्कताण्डवे तु निर्धूमः स्यादित्यस्य निर्धूमत्वेनाभ्युप गमनीयः स्यादित्यर्थः । तथा च निरग्निकत्वाङ्गीकारज्ञानं करणम् । निर्धूमत्वेनाङ्गीकर्तव्यत्वज्ञानं फलमित्यापादकापाद्यगोचरज्ञानयोर्द्वयोरपि प्रमात्वमेव । तथाऽपि मिलितमेवेत्युक्तिस्तु न प्रामाण्योप-पादनाय । किन्तु तर्कोद्देश्यिकायां निरग्निकत्वाभावप्रमायां विपर्ययपर्यवसानसापेक्षत्वाभिप्रायेणेत्युक्तम् ॥ **सोऽयमिति ।** हेतुरस्तु साध्यं माऽस्त्विति हेतोरप्रयोजकत्वेनाव्याप्यत्वशङ्का हि लिङ्गपरामर्शात्

पूर्वकालीना स्वारसिका परामर्शोत्पत्तिप्रतिबन्धिका । तदुत्तरकालीना तु साध्याभावं विषयं प्रति प्रमाणाहितानुमितिफलप्रतिबन्धिका । करणफलयोरुत्पत्तिप्रतिबन्धकशङ्काद्वयमपि तर्केण निरस्यत इत्येवंरूपविपरीतशङ्कानिरसनद्वारा करणस्वरूपफलस्वरूपनिष्पादनरूपोपकारकतयाऽनुमानानुग्राहका अपि न केवलं स्वतन्त्रप्रमाणमित्यर्थः । प्रमाणान्तरेत्युक्त्या प्रागुक्तदिशा प्रत्यक्षस्योपाध्यभावग्रहे सहकारिता सूचिता । क्वचिदित्युक्त्या विपरीतशङ्कास्थल एव न त्वन्यत्रेति दर्शितम् ।। **तर्कोक्तिः** ।।

**विज.**— विपर्ययपर्यवसानाङ्गत्वस्यानुग्रहतर्कविषयतां वक्तुमाह ।। **एवमिति** । अनुमितीति । वह्न्यनुमित्युपयोगीत्यर्थः ।। **सोऽयमिति** । विपर्ययपर्यवसायीत्यर्थः ।

**वेदे.**— आपाद्ये बाधादिकं परिहरति ।। **एवमिति** । स्यादिदं बाधादिकमापाद्यस्य यद्यापाद्यं पक्षे केनापि सम्बन्धेन न स्यात् । न चैवं प्रकृतेऽस्ति । किं नाम निर्धूमत्वस्यापि पक्षे परेणाभ्युपगमनीयत्वरूपसम्बन्धेन सत्त्वात् । अत एवापादके आपाद्ये चोक्तसम्बन्धद्योतनाय यदीति । तर्हीत्युभयत्र स्यादिति चोपपद्यते । अन्यथा निरग्निकत्वान्निर्धूमो भवतीति स्यादिति भावः । एतेनेदमपि निरस्तम् । अग्न्यभावज्ञानधूमाभावज्ञानयोः करणफलयोरुभयोरप्यप्रमात्वात्कथं तर्कस्य प्रामाण्यमिति । उक्तसम्बन्धेनोभयज्ञानयोरपि प्रमात्वात् । नन्वेवमपि तर्कोत्पन्नया निर्धूमत्वेनाभ्युपगमनीयत्वप्रमया व्यभिचारशङ्काविधूननद्वारा धूमे वह्निव्याप्तिप्रमोदयेऽपि तर्केण परमप्रमेयवह्निसिद्धिः कथमित्यत आह ।। **यथेत्यादिना** ।। **अनुमितिसाधनं भवतीति** । साधनानुमानवत्स्वातन्त्र्येणाग्निप्रमापको भवतीत्यर्थः । पर्वतोऽग्निमान्न वेति विप्रतिपत्तौ साधनानुमानं विनैव यदि निरग्निकः स्यात्तर्हि निर्धूमः स्यात् । न चायं निर्धूम इति तर्करूपानुमानेनैवाग्निसिद्धेरनुमानसिद्धत्वादिति भावः । अनेन तर्कस्य यदा स्वातन्त्र्येण साध्यसाधकत्वं तदा विपर्ययपर्यवसानोपयोगः । यदा तु वक्ष्यमाणरीत्या मानान्तरानुग्राहकत्वं तदा न विपर्ययपर्यवसानोपयोग इत्युक्तं भवति । तर्कः किमुक्तरीत्या स्वातन्त्र्येणैव सर्वत्र साध्यप्रमापको नेत्याह ।। **सोऽयमिति** । अनुमानस्थले तर्कनिवृत्त्या शङ्का द्विविधा। एका लिङ्गपरामर्शात्पर्वतो धूमवानपि कश्चिन्निरग्निः स्यादिति व्यभिचारशङ्का । अपरा परामर्शोत्पत्यनन्तरं प्रमाणोपलम्भेन धूमवानपि पर्वतो निरग्निकः किं न स्यादिति बाधसत्प्रतिपक्षशङ्का। ततश्चैतन्निवर्तकसाध्यानुग्रहोऽपि द्विविधः । आद्ये व्यभिचारशङ्कारूपं विपरीतशङ्कानिरसनद्वारेण व्याप्तिप्रमाफलकतया लिङ्गपरामर्शरूपप्रमाणनिष्पादनरूपः । द्वितीयस्तु निष्पन्ने लिङ्गपरामर्शे प्रतिप्रमाणशङ्कारूपविपरीतशङ्काविधानेन द्वारेण वह्न्यनुमितिरूपकेवलप्रमाणनिष्पादनरूपः । ततश्चानुमानेऽयमुभयविधोऽप्यनुग्रहस्तर्कसाध्यो विवक्षित एव । प्रत्यक्षादावपि तर्कसाध्यानुग्रहप्रकारो

द्रष्टव्यः । नन्वनुमानेऽनुक्तरूपानुग्रह एव तर्केणापादकोद्देश्यः । तदा तर्के विपर्ययपर्यवसानस्यावसानस्यापेक्षिततया प्रयोगेऽङ्गहीनस्य तस्य तर्काभासः स्यादिति चेन्न । तत्प्राप्तिविपर्ययपर्यवसानप्रयोगाङ्गीकारात् । अन्यथा कथकसम्प्रदायविरोधात् । न च वैय्यर्थ्यम् । निर्धूमतायाः अङ्गीकर्तव्यत्वात् । साधनस्य सिद्धसाधनतानिरासार्थत्वेन स्यादित्यनेन बाधितप्रमाणविरोधोपपदनार्थत्वेन वा सार्थकत्वादित्याहुः ॥ **अनुग्राहकोऽपीति** । न केवलमुक्तरीत्या स्वातन्त्र्येणानुमापकः किन्त्वनुग्राहकोऽपीत्यपिशब्दार्थः ।

**अभि.**— नन्वथापि तर्क आभास एव । आपाद्यस्य प्रमाणविरुद्धत्वसिद्धान्तविरुद्धत्वाच्चेत्यत आह ॥ **एवमापाद्यस्येति** । अनुमानत्वादसिद्धिर्यथा दूषणं न भवति । एवमपसिद्धान्तः प्रमाणविरोधश्च न दूषणमिति भावः । ननु तथाऽपि नानिष्टापादकस्तर्कः प्रमाणं प्रमितिसाधनत्वाभावानित्यत आह ॥ **यथा साधनानुमान इति** । यथाऽज्ञाता पक्षधर्मताऽनुमितिहेतुरिति मते तन्मात्रस्यानुमितिहेतुत्वाभावेऽपि मिलितयोस्तत्र हेतुत्वात्प्रामाण्यं न विहन्यते । तथाऽनिष्टापादनमात्रस्यानुमिति हेतुत्वाभावेऽपि विपर्ययपर्यवसानसहितस्य तदस्त्येवेति न प्रामाण्यहानिरित्यर्थः । यद्यपि पञ्चाङ्गसाहित्यमेव तर्कस्य प्रमितिसाधनत्वोपयोगि तथाऽपि विपर्ययपर्यवसानस्य प्राधान्यज्ञापनाय तथोक्तम् । ननु तर्कस्य प्रमाण्ये प्रमाणान्तरानुग्राहकत्वप्रसिद्धिविरोध इत्यत आह ॥ **सोऽयमिति** । प्रमाणान्तरानुग्राहकस्यापि विद्यमानत्वात्प्रसिद्धिरुपपन्नेति भावः ।

**आद.**— ननु तथाऽप्यापत्तेर्न प्रामाण्यम् । स्वयं भ्रमरूपत्वात् । भ्रमत्वं च प्रमाणविरोधात् । स्वेनाप्यापाद्यस्यानङ्गीकृतत्वेन तद्विरेधाच्चेत्यत आह ॥ **एवमिति** । विरोधो विपरीतार्थविषयकत्वम् । अपसिद्धान्तः प्रमाणत्वेन स्वाङ्गीकृतविपरीतार्थविषयकत्वम् । अदूषणं भ्रमत्वासम्पादकम् ॥ **असाधनादिति** । विधिरूपविषयतानाश्रयत्वादित्यर्थः । अयमाशयः । तदभाववति तत्प्रकारकत्वमात्रं न भ्रमत्वं किन्तु तदभाववति तन्निष्ठविधिरूपविषयताश्रयत्वं वा दोषप्रयोज्यताविषयताश्रयत्वं वा । तच्चापत्तौ नास्त्येव । विधिरूपविषयताया एव दोषप्रयोज्यत्वादापत्तौ तदभावादापत्तिविषयताया विजातीयत्वादिति ॥ **मिलितमेवेति** । आपाद्यापादकयोर्व्याप्तिज्ञानस्वातन्त्र्येणानुमितिकारणतायां मानाभाव एव । किन्त्वापत्तावनुमितिजननानुकूलशक्तिसम्पादनद्वारा । एतदभिप्रायेणेव व्याप्तिज्ञानजन्यत्वव्यवहार इत्याशयेनोभयमित्युक्तमिति द्रष्टव्यम् ॥ **सोऽयं तर्क इति** । तर्को द्विविधः । प्रकृतसाध्यस्य प्रकृतपक्षे साधकहेत्वाद्युपस्थितेः पूर्वं प्रवृत्तस्तत्पाश्चात्यश्चेति । आद्यस्तु विपर्ययपर्यवसानसहितः साध्यप्रमितिमेव जनयति । द्वितीयस्तु धूमादिहेतूपस्थितौ तत्र वह्निव्यभिचारशङ्कायां

पूर्वकालीना स्वारसिका परामर्शोत्पत्तिप्रतिबन्धिका । तदुत्तरकालीना तु साध्याभावं विषयं प्रति प्रमाणाहितानुमितिफलप्रतिबन्धिका । करणफलयोरुत्पत्तिप्रतिबन्धकशङ्काद्वयमपि तर्केण निरस्यत इत्येवंरूपविपरीतशङ्कानिरसनद्वारा करणस्वरूपफलस्वरूपनिष्पादनरूपोपकारकतयाऽनुमानानुग्राहका अपि न केवलं स्वतन्त्रप्रमाणमित्यर्थः । प्रमाणान्तरेत्युक्त्या प्रागुक्तदिशा प्रत्यक्षस्योपाध्यभावग्रहे सहकारिता सूचिता । क्वचिदित्युक्त्या विपरीतशङ्कास्थल एव न त्वन्यत्रेति दर्शितम् ॥ **तर्कोक्तिः** ॥

**विज.**— विपर्ययपर्यवसानाङ्गत्वस्यानुग्रहतर्कविषयतां वक्तुमाह ॥ **एवमिति** । अनुमितीति । वह्न्यनुमित्युपयोगीत्यर्थः ॥ **सोऽयमिति** । विपर्ययपर्यवसायीत्यर्थः ।

**वेदे.**— आपाद्ये बाधादिकं परिहरति ॥ **एवमिति** । स्यादिदं बाधादिकमापाद्यस्य यद्यापाद्यं पक्षे केनापि सम्बन्धेन न स्यात् । न चैवं प्रकृतेऽस्ति । किं नाम निर्धूमत्वस्यापि पक्षे परेणाभ्युपगमनीयत्वरूपसम्बन्धेन सत्त्वात् । अत एवापादके आपाद्ये चोक्तसम्बन्धद्योतनाय यदीति । तर्हीत्युभयत्र स्यादिति चोपपद्यते । अन्यथा निरग्निकत्वान्निर्धूमो भवतीति स्यादिति भावः । एतेनेदमपि निरस्तम् । अग्न्यभावज्ञानधूमाभावज्ञानयोः करणफलयोरुभयोरप्यप्रमात्वात्कथं तर्कस्य प्रामाण्यमिति । उक्तसम्बन्धेनोभयज्ञानयोरपि प्रमात्वात् । नन्वेवमपि तर्कोत्पन्नया निर्धूमत्वेनाभ्युपगमनीयत्वप्रमया व्यभिचारशङ्काविधूननद्वारा धूमे वह्निव्याप्तिप्रमोदयेऽपि तर्केण परमप्रमेयवह्निसिद्धिः कथमित्यत आह ॥ **यथेत्यादिना** ॥ **अनुमितिसाधनं भवतीति** । साधनानुमानवत्स्वातन्त्र्येणाग्निप्रमापको भवतीत्यर्थः । पर्वतोऽग्निमान्न वेति विप्रतिपत्तौ साधनानुमानं विनैव यदि निरग्निकः स्यात्तर्हि निर्धूमः स्यात् । न चायं निर्धूम इति तर्करूपानुमानेनैवाग्निसिद्धेरनुमानसिद्धत्वादिति भावः । अनेन तर्कस्य यदा स्वातन्त्र्येण साध्यसाधकत्वं तदा विपर्ययपर्यवसानोपयोगः । यदा तु वक्ष्यमाणरीत्या मानान्तरानुग्राहकत्वं तदा न विपर्ययपर्यवसानोपयोग इत्युक्तं भवति । तर्कः किमुक्तरीत्या स्वातन्त्र्येणैव सर्वत्र साध्यप्रमापको नेत्याह ॥ **सोऽयमिति** । अनुमानस्थले तर्कनिवृत्त्या शङ्का द्विविधा। एका लिङ्गपरामर्शात्पर्वतो धूमवानपि कश्चिन्निरग्निः स्यादिति व्यभिचारशङ्का । अपरा परामर्शोत्पत्यनन्तरं प्रमाणोपलम्भेन धूमवानपि पर्वतो निरग्निकः किं न स्यादिति बाधसत्प्रतिपक्षशङ्का । ततश्चैतन्निवर्तकसाध्यानुग्रहोऽपि द्विविधः । आद्ये व्यभिचारशङ्कारूपं विपरीतशङ्कानिरसनद्वारेण व्याप्तिप्रमाफलकतया लिङ्गपरामर्शरूपप्रमाणनिष्पादनरूपः । द्वितीयस्तु निष्पन्ने लिङ्गपरामर्शे प्रतिप्रमाणशङ्कारूपविपरीतशङ्काविधानेन द्वारेण वह्न्यनुमितिरूपकेवलप्रमाणनिष्पादनरूपः । ततश्चानुमानेऽयमुभयविधोऽप्यनुग्रहस्तर्कसाध्यो विवक्षित एव । प्रत्यक्षादावपि तर्कसाध्यानुग्रहप्रकारो

द्रष्टव्यः । नन्वनुमानेऽनुक्तरूपानुग्रह एव तर्केणापादकोद्देश्यः । तदा तर्के विपर्ययपर्यवसानस्यावसानस्यापेक्षिततया प्रयोगेऽङ्गहीनस्य तस्य तर्काभासः स्यादिति चेन्न । तत्प्राप्तिविपर्ययपर्यवसानप्रयोगाङ्गीकारात् । अन्यथा कथकसम्प्रदायविरोधात् । न च वैय्यर्थ्यम् । निर्धूमतायाः अङ्गीकर्तव्यत्वात् । साधनस्य सिद्धसाधनतानिरासार्थत्वेन स्यादित्यनेन बाधितप्रमाणविरोधोपपदनार्थत्वेन वा सार्थकत्वादित्याहुः ।। **अनुग्राहकोऽपीति** । न केवलमुक्तरीत्या स्वातन्त्र्येणानुमापकः किञ्चानुग्राहकोऽपीत्यपिशब्दार्थः ।

**अभि.—** नन्वथापि तर्क आभास एव । आपाद्यस्य प्रमाणविरुद्धत्वसिद्धान्तविरुद्धत्वाच्चेत्यत आह ।। **एवमापाद्यस्येति** । अनुमानत्वादसिद्धिर्यथा दूषणं न भवति । एवमपसिद्धान्तः प्रमाणविरोधश्च न दूषणमिति भावः । ननु तथाऽपि नानिष्टापादकस्तर्कः प्रमाणं प्रमितिसाधनत्वाभावानित्यत आह ।। **यथा साधनानुमान इति** । यथाऽज्ञाता पक्षधर्मताऽनुमितिहेतुरिति मते तन्मात्रस्यानुमितिहेतुत्वाभावेऽपि मिलितयोस्तत्र हेतुत्वात्प्रामाण्यं न विहन्यते । तथाऽनिष्टापादनमात्रस्यानुमिति हेतुत्वाभावेऽपि विपर्ययपर्यवसानसहितस्य तदस्त्येवेति न प्रामाण्यहानिरित्यर्थः । यद्यपि पञ्चाङ्गसाहित्यमेव तर्कस्य प्रमितिसाधनत्वोपयोगि तथाऽपि विपर्ययपर्यवसानस्य प्राधान्यज्ञापनाय तथोक्तम् । ननु तर्कस्य प्रमाण्ये प्रमाणान्तरानुग्राहकत्वप्रसिद्धिविरोध इत्यत आह ।। **सोऽयमिति** । प्रमाणान्तरानुग्राहकस्यापि विद्यमानत्वात्प्रसिद्धिरुपपन्नेति भावः ।

**आद.—** ननु तथाऽप्यापत्तेर्न प्रामाण्यम् । स्वयं भ्रमरूपत्वात् । भ्रमत्वं च प्रमाणविरोधात् । स्वेनाप्यापाद्यस्यानङ्गीकृतत्वेन तद्विरेधाच्चेत्यत आह ।। **एवमिति** । विरोधो विपरीतार्थविषयकत्वम् । अपसिद्धान्तः प्रमाणत्वेन स्वाङ्गीकृतविपरीतार्थविषयकत्वम् । अदूषणं भ्रमत्वासम्पादकम् ।। **असाधनादिति** । विधिरूपविषयतानाश्रयत्वादित्यर्थः । अयमाशयः । तदभाववति तत्प्रकारकत्वमात्रं न भ्रमत्वं किन्तु तदभाववति तन्निष्ठविधिरूपविषयताश्रयत्वं वा दोषप्रयोज्यताविषयताश्रयत्वं वा । तच्चापत्तौ नास्त्येव । विधिरूपविषयताया एव दोषप्रयोज्यत्वादापत्तौ तदभावादापत्तिविषयताया विजातीयत्वादिति ।। **मिलितमेवेति** । आपाद्यापादकयोर्व्याप्तिज्ञानस्वातन्त्र्येणानुमितिकारणतायां मानाभाव एव । किन्त्वापत्तावनुमितिजननानुकूलशक्तिसम्पादनद्वारा । एतदभिप्रायेणेव व्याप्तिज्ञानजन्यत्वव्यवहार इत्याशयेनोभयमित्युक्तमिति द्रष्टव्यम् ।। **सोऽयं तर्क इति** । तर्को द्विविधः । प्रकृतसाध्यस्य प्रकृतपक्षे साधकहेत्वाद्युपस्थितेः पूर्वं प्रवृत्तस्तत्पाश्चात्यश्चेति । आद्यस्तु विपर्ययपर्यवसानसहितः साध्यप्रमितिमेव जनयति । द्वितीयस्तु धूमादिहेतूपस्थितौ तत्र वह्निव्यभिचारशङ्कायां

धूमरूपहेतौ व्याप्तिनिश्चायकतयाऽनुग्रहको भवति । तत्र धूमाधिकरणे वह्न्यभावस्याशङ्कितत्वेन यदि धूमाधिकरणं वह्न्यभाववत्स्यात्तर्हि धूमाभाववत्स्यादित्यापत्त्या धूमाधिकरणे वह्निप्रमित्युत्पत्त्या व्यभिचारशशङ्काया विधूननात् । पर्वतादौ वह्निनिश्चयस्तु धूमादिरूपहेतुबलादेव । यत्र तु परामर्शोत्तरं यत्र प्रतिपक्षोत्थित्या नानुमितिस्तत्र पर्वतादावेव धूमाभावापत्या वह्न्यभावाभावत्वेन रूपेण वह्निसिध्या प्रतिपक्षे निरस्तेऽप्रतिबद्धेन धूमहेतुना वह्नित्वेन वह्निः सिध्यति । व्यभिचारशङ्का-तन्निरासप्रकारस्तु प्रदर्शित एव । यद्यपि वह्न्यभावाभावत्वेन वह्निसिध्यनन्तरं विनाऽपि धूमपरामर्शं वह्नित्वेन वह्निसिद्धिः सम्भवति । तथाऽपि प्रतिबन्धाभावो धूमपरामर्शः स्वकार्यं जनयत्येव । तथा च प्रतिबन्धकनिरासकत्वादिरूपमनुग्राहकत्वं तर्कस्याक्षतमिति भावः ।

**वि.—** नन्वस्त्वापाद्यस्य प्रमाणविरोधाद्यदूषणम् । तथा चापद्यस्य निर्धूमत्वस्यापादनमात्रेण पक्षे तदङ्गीकार्यमित्यनुमितिसम्भवात् । विपर्यये पर्यवसानं किमर्थमित्यत आह ॥ **यथा साधनानुमान इति ।** साध्यप्रमितिसाधनं साध्यप्रमितौ साधनं निमित्तौ प्रयोजकमित्यर्थः । एवमित्यनन्तरं प्रसाङ्गान्न इति शेषः । अनुमितिसाधनमापाद्यानुमितिसाधनमित्यर्थः । अयं भावः । यद्यपि निर्धूमः स्यादित्या-पादनेन स्यादेवापाद्यस्य निर्धूमत्वस्याङ्गीकार्यत्वसम्बन्धेन पक्षयित्वानुमितिस्तथाऽपि न निर्धूम-त्वमिहानुमेयं परपक्षसाधुत्वज्ञापनार्थत्वे तर्कस्यानुमानवैय्यर्थ्यात् । किन्त्वनिष्टत्वेनैव निर्धूमत्वमङ्गीकार्य-मित्यनुमितिर्वस्तुतोऽनिष्टस्य निर्धूमत्वस्यापादनं विपर्यये पर्यवसानमपेक्ष्यैव । अत एव यत्र निर्धूमत्वादेरापाद्यस्य विपर्ययो नास्ति । आपादनस्य पर्यवसानं तत्राप्रामाणिकं तदङ्गीकार्यमित्यनु-मित्यभाव इत्युभयमुक्तानुमितावपेक्षित एवेति ॥ **तर्कस्येति ।** तर्क्यतेऽनेनेति व्युत्पत्त्या तर्कस्या-पादकस्य प्रामाण्यमुपपन्नमित्यर्थः । यद्वा वस्तुतोऽनिष्टस्य निर्धूमत्वादेरापाद्यस्य विपर्यये पर्यवसानं चोभयं मिलितमेवायं निरग्निरिति परपक्षसाधुत्वानुमानमिति साधनं भवतीति हेतोस्तर्कस्यानिष्टप्रसङ्गस्य प्रामाण्यमुपपन्नमित्यर्थः । यदङ्गीकारेऽनिष्टप्रसङ्गस्तदसाध्विति सुप्रसिद्धमिति युक्तमेव तर्कस्य परपक्षासाधुत्वप्रमितिसाधनत्वेन प्रामाण्यमिति भावः । नन्वस्तु तर्कः प्रमाणम् । तथाऽपि प्रमाणानु-ग्राहक एव न भवति किमिति जिज्ञासायामाह ॥ **सोऽयमिति । स** स्वयं प्रमाणभूतोऽयं तर्कः । आगमस्य यत्रान्यथात्वशङ्का भवति । यत्र च लिङ्गस्य साधुमत्त्वेऽप्ययं निरग्निकोऽस्त्विति पक्षे विषयाभावशङ्का धूमवानपि कश्चिदनग्निरस्त्विति पक्षतदितरसाधारणो न व्याप्यभावशङ्का भवति । तत्र तादृशविपरीतशङ्कानिरासत्वात् । आगमादिप्रमाणसहकार्यपि भवतीत्यर्थः । स्वयमङ्गीकृतमप्रामाणिक-मङ्गीकारयति ॥ **तदप्रामाणिकमिति ।** सुप्रसिद्धत्वात्तर्को विपरीतशङ्कानिवर्तक इति भावः । इतिशब्दस्तर्कनिरूपणसमाप्तौ वर्तते ।

# व्यतिरेकव्याप्तेः अप्रयोजकता

(१३) प्र.प.— **केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्त्रिविधमनुमानमित्येके । साध्यधर्मविशिष्टो धर्मी पक्षः । तत्र व्याप्त्या वर्तमानम् । निश्चितसाध्यसमानधर्माधर्मी सपक्षः । तत्र सर्वस्मिन्नेकदेशे वर्तमानम् । साध्यतत्समानधर्मरहितो धर्मी विपक्षः । तद्रहितं केवलान्वयि । तद् द्विविधम् । सर्वसपक्षतदेकदेशवृत्तिभेदात् । शब्दोऽभिधेयः प्रमेयत्वादिति सपक्षव्यापकम् । सर्वस्मिन्नभिधेयतया सम्प्रतिपन्ने प्रमेयत्वस्य वृत्तेः । गुणत्वादिति सपक्षैकदेशवृत्ति । रूपादौ वृत्तेर्घटादाववृत्तेः ।**

जना.— सम्प्रति तत्रादौ तावत्प्रमाणसामान्येत्यादिना यत्प्रतिज्ञातं परोक्तानुमानविभाग-निराकरणं तत्कर्तुं नैयायिकमतमनुवदति ॥ **केवलान्वयीत्यादिना** ॥ **एक इति** । नैयायिका इत्यर्थः । केवलान्वयिनो लक्षणं वक्तुं लक्षणघटकस्य पक्षस्य लक्षणमाह ॥ **साध्येति** । धर्मिग्रहणं प्रमाण-प्रमितस्यैव पक्षत्वमिति सूचनार्थम् । व्याप्त्या सर्वत्रेत्यर्थः । सपक्षलक्षणमाह ॥ **निश्चितेति** । तत्र साधयितुं योग्यमिति व्युत्पत्त्या साध्यपदेन सिषाधयिषितं पक्षीयसाध्यं विवक्षितम् । निश्चितः साध्यसमानधर्मो यस्येति बहुव्रीहेर्धर्मादनिच् केवलादित्यनिच्प्रत्ययः । समानत्वं च धर्मस्य साध्यता-वच्छेदकरूपेण विवक्षितम् । तेन विपक्षस्यापि प्रमेयत्वादिना समानधर्मवत्त्वान्नातिव्याप्तिरिति ज्ञेयम् । साध्यानिश्चयदशायां महानसादावतिव्याप्तिवारणाय निश्चितेति साध्यसमानधर्मविशेषणम् । निश्चित-साध्यवत्वं सपक्षत्वमित्युक्तेऽसम्भवः । निश्चितत्वसाध्यत्वयोर्विरोधादतः समानपदम् । धर्मपदं स्वरूपकथनार्थम् । सर्वस्मिन्नेकदेशे वेति स्वरूपकथनम् । न तु लक्षणशरीरानुप्रवेशेन वृत्तित्वमात्रं विवक्षितम् । साध्यतत्समानधर्मरहित इत्यत्र साध्यपदव्याख्यानन्तु पूर्ववत् । साध्यरहितो विपक्ष इत्युक्ते सपक्षे गतम् । अतस्तत्समानेति । समानधर्मरहितो विपक्ष इत्युक्ते पक्षे गतम् । अतः साध्येति ॥ **तद्रहितमिति** । विपक्षशून्यमित्यर्थः । सर्वपक्षवृत्तित्वे सति सपक्षवृत्तित्वे सति विपक्षावृत्तित्वं केवलान्वयिनो लक्षणमिति निष्कर्षः । तदुक्तं वरदाराजेन ।

**पक्षः साध्यान्वितो धर्मी साध्यजातीयधर्मवान् ।**
**सपक्षोऽथ विपक्षस्तु साध्यधर्मनिवृत्तिमान् ।**
**सर्वेषु केषुचिद्वापि सपक्षेषु कृतान्वयि ।**
**विपक्षशून्यं पक्षस्य व्यापकं केवलान्वयीति ।**

अत्र पक्षवृत्तित्वमेव लक्षणमित्युक्ते भागासिद्धेऽतिव्याप्तिः । अतः सर्वेति । तावत्येवोक्ते केवलव्यतिरेकिणि गतम् । अतः सपक्षवृत्तित्वे सतीति । सर्वपक्षवृत्तित्वे सति सपक्षवृत्तित्वमेव लक्षणमित्युक्तेऽन्वयव्यतिरेकिणि धूमवत्त्वादौ गतम् । अतो विपक्षरहितत्वमिति क्रमेण व्यावर्त्यानि । व्युत्क्रमेण विपक्षरहितत्वेन केवलान्वयिनो लक्षणमित्युक्ते सर्वमनित्यं प्रमेयत्वादित्यनुपसंहारिणि गतम् । अतः सपक्षवृत्तित्वे सतीति । सपक्षवृत्तित्वे सति विपक्षावृत्तित्वमेव लक्षणमित्युक्ते आकाशमभिधेयमाकाशान्यत्वादित्यत्र गतम् । अतः पक्षवृत्तित्वे सतीति । पक्षविशेषणसर्वपदपरित्यागे तु कालाकाशावभिधेयौ कालान्यत्वादित्यत्र गतम् । अतः सर्वेति । आद्यन्तग्रहणेन सपक्षवृत्तित्वविशेषणत्यागे तु घटाकाशातिरिक्तं सर्वमभिधेयं घटाकाशान्यत्वादित्यत्र गतम् । अतः सपक्षवृत्तित्वे सतीति सर्वं सार्थकं द्रष्टव्यम् ।

**राघ.**— सर्वमप्यन्वय एवेति विवक्षुः परोक्तं निरसितुमनुवदति ॥ **केवलेति** । एके तार्किकाः ।

**सर्वेषु केषुचिद्वाऽपि सपक्षेषु कृतान्वयि ।**
**विपक्षशून्यं पक्षस्य व्यापकं केवलान्वयि ॥**

इति परोक्तलक्षणं पक्षादिस्वरूपं वदन्नेवाह ॥ **साध्येति** । यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्मः । सपक्षादिव्यावृत्तये धर्मेत्युक्तिः । वस्तुतोऽग्निविशिष्टपर्वतस्य साध्यत्वादन्यस्य पक्षत्वव्यावृत्तये धर्मेत्युक्तिः धर्ममात्रस्य प्रागेव सिद्धेः साध्यत्वायोगाद्विशिष्ट इत्युक्तिः । तथा च धर्मस्य साध्यत्वं तत्सम्बन्धितयैव सिध्यति । साधनसाध्यधर्मेण वैशिष्ट्यसम्बन्धोऽस्तीति धर्मीत्युक्तिः ॥ **तत्रेति** । उक्तरूपपक्षे । व्याप्त्या वर्तमानमित्यस्य केवलान्वयीति वक्ष्यमाणेनान्वयः ॥ **निश्चितेति** । निश्चितो यः साध्यसमानधर्मो व्यापकतावच्छेदकेन सदृशो यो धर्मः स यस्येति बहुव्रीहिः । इमौ पर्वतावग्निमन्तावित्यत्र व्यापकतावच्छेदकाग्नित्वधर्मेण साध्यसमानधर्मवत्त्वमन्योन्यं द्वयोरप्यस्तीति तद्व्युदासाय निश्चितेति धर्मविशेषणम् । असम्भवनिरासाय समानेति । व्याप्तिरूपप्रत्यासत्त्या निश्चितसाध्यसमानधर्मवतः साधनस्य निरासाय धर्मीति । तादृशधर्मं प्रत्याधारभूतेत्यर्थः । ननु कथं धर्मेति धर्मादनिच् केवलादित्युक्तेरिति चेन्मैवम् । धातुवृत्तावुक्तदिशा केवलादिति धर्मविशेषणम् । बहुव्रीह्याक्षिप्तपूर्वपदस्य विशेषणम् । तेन पूर्वपदीभवतः केवलादन्यनिरपेक्षात्परो यो धर्मशब्दस्तदन्तादित्यर्थः । तथा च निश्चितश्चासौ साध्यसमानश्च निश्चितसाध्यसमानः । तादृशो धर्मो यस्येति विग्रहे निश्चितसाध्यसमानपदस्य बहुव्रीहौ पूर्वपदीभवतोऽन्यनिरपेक्षत्वेनानिच् प्रत्ययोपपत्तेः । उक्ते विग्रहे केवलस्य धर्मविशेषणत्वेऽप्यदोषादिति ॥ **तत्रेति** । सपक्षे । वर्तमानपदस्य केवलान्वयि-

पदेनान्वयः ॥ **तद्रहितमिति** । विपक्षरहितमित्यर्थः । अभिधेयो वाच्यः । प्रमेयत्वात्प्रमाविषयत्वादित्यर्थः । शब्दोऽभिधेय इत्यत्रैव सपक्षैकदेशवृत्तिहेतुमुक्त्वोपपादयति ॥ **गुणत्वादिति** । वृत्तीत्यनन्तरं केवलान्वयीत्यनुषङ्गः ।

**विज.**— नैयायिकसिद्धमनुमानभेदं दूषयितुमाह ॥ **केवलेति** । सत्केवलान्वयादिलक्षणं वक्तुं पक्षादिलक्षणमाह ॥ **साध्येति** । सिषाधयिषितत्वरहितव्यापकत्वाभिमतत्वनिश्चयाविषयः पक्ष इत्यर्थः । तेन प्रमाणसम्प्लवेऽपि पक्षता तत्रेत्यनेन पक्षवृत्तित्वलक्षणविशेषणोक्तिः शब्दोऽभिधेयो मूर्तत्वाद्वर्णात्मकत्वादिति व्यावृत्त्यर्थम् ॥ **निश्चितेति** । व्यापकत्वाभिमतवत्तया निश्चित इत्यर्थः । तत्रेत्यनेन पक्षवृत्तित्वस्वरूपं द्विविधं चोक्तम् । विशेषणव्यावृत्त्यर्थं तु सर्वमभिधेयं प्रमेयत्वादिति साध्यतत्समानेऽतिव्यापकतावच्छेदकावच्छिन्नाभाववानित्यर्थः ॥ **तद्रहितमिति** । अत्यन्ताभावाप्रतियोगिकसाध्यमित्यर्थः । धूमादिव्यावृत्त्यर्थः । व्यतिरेकलक्षणे पृथिवीतरभेदसाध्ये द्रव्यत्वमनित्यत्वे साध्ये पृथिवीत्वरूपसाधारणमितरभेदे साध्ये गुरुत्वं च व्यावर्तयितुं विशेषणानि ।

**वेदे.**— घटकतया पक्षादिकं लक्षयन्नेव केवलान्वयादिलक्षणमाह ॥ **साध्येति** । अत्र साध्यत्वं सिद्धिकर्मत्वरूपमतो न सपक्षेऽतिव्याप्तिरिति ध्येयम् । हेत्वादेरतिव्याप्तेराह ॥ **धर्म इति** ॥ **तत्रेति** । पक्ष इत्यर्थः । शब्दोऽभिधेयश्चाक्षुषत्वादिति स्वरूपासिद्धेऽतिव्याप्तिवारणाय पक्षे वर्तमानमित्युक्तम् । एवमपि तस्यामेव प्रतिज्ञायां वर्णात्मकत्वादिति भागासिद्धेऽतिव्याप्तिवारणाय व्याप्येत्युक्तम् । सर्वमसिद्धेयं प्रमेयत्वादित्यत्रातिव्याप्तिवारकं सपक्षवृत्तित्वविशेषणम् । अन्वयव्यतिरेकादिव्यावृत्तकं विपक्षरहितमिति विशेषणमिति बोध्यम् ।

**अभि.**– ॥ **साध्यसमानधर्माधर्मीति** । ननु साध्यसमानधर्मेत्ययुक्तम् । धर्मादनिच् केवलादिति सूत्रेण केवलात्पदात्परो यः केवलो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिचो विहितत्वेन प्रकृते तदयोगादिति चेत् । उच्यते । साध्येन समानः साध्यसमानः साध्यसमानो धर्मो यस्येति विग्रहाश्रयणे समस्य समानस्य साध्यसमानेति पूर्वपदस्य केवलत्वानपायात् ।

**आद.**— ॥ **साध्यधर्मविशिष्टो धर्मी पक्ष इति** । साध्यः पक्ष इत्येवोक्तौ वह्न्यादिमात्रस्य पक्षप्रतीतिः स्यात् । अतः साध्यधर्म इत्युक्तम् । यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्म इत्यर्थः । धर्मविशिष्ट इत्येवोक्तौ यस्य कस्यापि स्यात् । साध्यविशिष्ट इत्येवोक्तौ वह्निमत्पर्वतादिविशिष्टस्यापि साध्यत्वेन (तथा च यथाऽग्निः पर्वतसम्भन्धितया साध्य एवमग्निविशिष्टपर्वतोऽप्यग्निसम्बन्धितया

साध्यः । अग्निपर्वतयोः स्वरूपमात्रस्य सिद्धत्वेऽपि विशिष्टासिद्धेरुभयत्रापि समानत्वात् । एवं चाग्नि-विशिष्टपर्वतस्यापि साध्यत्वेन तद्विशिष्टस्यान्यस्य तदवयवस्य पक्षत्वं स्यात् । अतस्तत्रातिव्याप्ति-वारणाय धर्मपदं दत्तम् ।) तद्भ्रूतलादेरपि पक्षत्वं स्यादतो धर्म इत्युक्तम् । अनुमितिविषयीभूत-विशिष्टघटकीभूतो यो धर्म इत्यर्थलाभेन तत्प्रतीतेर्वारणात् । साध्यधर्मविशिष्ट इत्येवोक्तौ शुद्धपर्वतादिसमवेतस्य शुद्धेन सह भिन्नाभिन्नस्यैव पक्षत्वं प्रतीयेत । विशिष्टगतस्य सर्वस्यापि धर्मस्य शुद्धसत्त्वनियमाभावात् । अतो धर्मीत्युक्तम् । तेन शुद्धस्यापि पक्षपदवाच्यत्वमस्ति ।

अयं भावः । सिद्धविषयीभूतधर्मविशिष्टत्वं पक्षपदप्रवृत्तिनिमित्तम् । तत्तत्पदान्तरसमाभि-व्याहारा-द्विशेषविशिष्टबोधकत्वमिति । न च तर्हि जलह्रदादौ वह्नेः साध्यतायां पक्षपदप्रयोगाभावप्रसङ्गः । तत्र वह्निविशिष्टह्रदत्वरूपपक्षपदप्रवृत्तिनिमित्ताभावादिति वाच्यम् । इष्टापत्तेः मुख्यवाच्यत्वस्यानङ्गी-कारात्। हेत्वाभासे हेतुपदप्रयोगस्येव पक्षाभासे ह्रदादौ पक्षपदस्य गौणत्वाङ्गीकारात् । न चोक्तधर्मावच्छिन्नवाचकत्वे खलु सर्वमिदं स्यात् । तत्रैव किं मानमिति चेत् । बहुव्यवहारस्यैव मानत्वात् । कोशादिवच्छक्तिग्राहकत्वेन तस्यापि प्रमितत्वात् । तथा हि । शास्त्रेऽयं पक्षः साधुरयमसाधुरस्मत्पक्षो भवत्पक्ष एकतरपक्षपरिग्रहः कार्य इत्यादयो बहवः पक्षपदव्यवहाराः । तत्र पक्षपदस्य नान्योऽर्थः सम्भवति । न हि पर्वतो वह्निमान्न वेति विवादवेलायां पर्वत इत्येतावन्मात्रोक्तौ पक्षपरिग्रहः कृतो भवति । पक्षपरिग्रहः इत्यस्य तदङ्गीकारबोधकवाक्यप्रयोग इत्यर्थकत्वात् । किन्तु वह्निमान्पर्वत इति विशिष्टबोधकवाक्यप्रयोग एव कृतो भवति । अयं पक्ष इत्यस्य प्रकृतसिद्धि-विषयीभूतविशिष्ट इत्येवार्थः । एवमस्मत्पक्ष इत्यस्यास्मत्सम्बन्धिसिद्धिविषयीभूत विशिष्ट इत्येवार्थः प्रतीयत इति । एवं चोक्तव्यवहारात्पक्षपदस्य प्रकृतज्ञानविषयीभूतधर्मविशिष्ट वाचकत्वमेवेति । अनुमितौ पक्ष इत्यस्याप्यनुमितिविषयीभूतविशिष्ट इत्येवार्थः । तदेकदेशप्रयोगस्तु लक्षणादिनैव । अत एव मिथ्यात्वानुमानखण्डनटीकायामाश्रयासिद्धः पक्ष इति वाक्यव्याख्यानावसरे पक्षपदेन तदेकदेशो धर्मी लक्ष्यत इत्युक्तम् । केचित्तु पक्षताया अनुमितिकारणतां वदन्तः साध्यसन्देहस्यैव पक्षतारूपत्वं वदन्ति । अपरे तु सिषाधयिषाया एव घनगर्जितेन मेघानुमाने तदुभयोरप्यभावाद्व्यभिचारान्न तयोः पक्षत्वं किन्तु सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेति । अपरे तु अनुमित्यन्यसिद्धिकारण-स्यानुमितिप्रतिबन्धकत्वम् । अत एव संशयोत्तरं परामर्शसत्त्वेऽपि सन्निकर्षसत्त्वे प्रत्यक्षमेव जायते । तथा च तदभावोऽप्यनुमितिकारणम् । अतस्तस्यापि पक्षतान्तर्भावः कर्तव्य इति वदन्ति । तत्सर्व-मप्यनादेयम् । सिद्धेरनुमितिप्रतिबन्धकतायां मानाभावात् । पर्वते वह्निरस्तीति श्रुतवतो धूमादिदर्शने विनाऽपीच्छामनुमितेरनुभवसिद्धत्वात् । तत्रेच्छाकल्पने चानुभवविरोधात् । अन्यथा मेघानुमानेऽपि

तत्कल्पनाप्रसङ्गः । तत्रेष्टत्वग्रहाभाववतस्तत्साधनत्व ग्रहाभाववतश्च तत्रेच्छासामग्र्यभावेन तत्रेच्छोत्पत्त्ययोगाच्चानिष्टं भवतीति श्रुतवतस्तद्व्याप्यदर्शनेनानुमितेरभावप्रसङ्गाच्च । अनिष्टानुमिता-विच्छाया असम्भवात् । अन्यथा शाब्देऽपि सिद्धेः प्रतिबन्धकत्वापातात् । मानाभावस्योभयत्रापि साम्यत् । एवं प्रत्यक्षादिसामग्र्या अनुमितिप्रतिबन्धकतायामपि मानाभाव एव । न चैवं संशयोत्तर-मनुमित्यापत्तिः । तत्र सन्निकर्षसत्त्वात् । करादिमत्त्वरूपव्याप्यदर्शनकाल एव पुरुषत्वस्यापि प्रत्यक्षोत्पत्तेः । द्वितीयक्षणेऽनुमित्यापादने त्विष्टापत्तेः । अथवा प्रत्यक्षानुमितित्वयोरेकत्र समावेशे बाधकाभावेन तस्मिन्काले जायमानप्रत्यक्ष एवानुमितित्वमपि स्वीक्रियताम् । जातिसाङ्कर्यस्य दोषत्वे मानाभावात् । न च तत्र पश्यामीत्यनुभववत्कल्पयामीत्यनुभवापत्तिः । त्वन्मतेऽपीच्छाघटितसामग्र्या बलवत्त्वेनेच्छाकाले सति चक्षुःसन्निकर्षे पुरुषत्वदर्शनानन्तरं पुरुषत्वं न पश्यामि किन्तु कल्पया-मीत्यनुभवापत्तेः । तत्रेष्टापत्तौ ममापीष्टापत्तिरेव तर्हि सर्वदा व्याप्यदर्शनसद्भावादनुमित्यापत्तिरेव तर्हि सर्वदा व्याप्यदर्शनसद्भावादनुमित्यापत्तिरिति वाच्यम् । त्वत्पक्षेऽप्यापत्तेः साम्यात् । क्वचिद्व्याप्ति-स्मरणाभावेन क्वचिदिच्छारूपोत्तेजकाभावेन नानुमित्यापत्तिरिति चेत् । समं ममापि । क्वचिदन्य-विषयकोत्कटेच्छादिना क्वचिद्व्याप्तिस्मरणाद्यभावादिना क्वचिदननुगतप्रतिबन्धकसत्त्वादिनेति वक्तुं सम्भवात् । अस्तु वा प्रत्यक्षसामग्र्याः समाने विषये बलवत्त्वं तथाऽपि न तदभावः कारणम् । प्रतिबन्धकाभावस्य कारणताया आकरे खण्डितत्वात् । कारणताङ्गीकारेऽपि तस्य पदप्रवृत्ति-निमित्ततायां मानाभाव इत्यलमनल्पजल्पनेन ॥ **तत्र व्याप्त्या वर्तमानमिति** । तत्र पक्षे । व्याप्त्या विशेषसम्भन्धेन यावत्पक्षे वर्तमानमित्यर्थः । केवलान्वयीत्यत्रान्वयः सपक्ष इत्यस्य पक्षसदृश इत्यर्थः । सादृश्यं च पक्षवृत्तिधर्मव्यङ्ग्यमेवेत्यभिप्रेत्य सपक्षलक्षणमाह ॥ **साध्यसमानेति ॥ तत्र सर्वस्मिन्निति** । सपक्ष इत्यर्थः ॥ **वर्तमानमिति** । केवलान्वयीत्यत्रान्वयः । विपक्ष इत्यत्र पक्षविरुद्ध इत्यर्थः । विपदस्य विरुद्धार्थकत्वादित्याशयेन विपक्षलक्षणमाह ॥ **साध्येति** । तथा च पक्षव्यापकत्वे सति सपक्षवृत्तित्वे सति विपक्षरहितत्वं केवलान्वयित्वमित्युक्तं भवति । एवमुत्तरत्रापि बोध्यम् ।

**वि.**— परोक्तानुमानविभागं दूषयितुमनुवदति ॥ **केवलान्वयीति** । केवलान्वयिलक्षणविशेषणानां पक्षादिघटितत्वादुपोद्धातप्रक्रियया पक्षादिलक्षणं वदन्नेव तद्विशेषणान्याह ॥ **साध्येति** । साध्यान्वितत्वं हेतावप्यस्तीति धर्मीत्युक्तम् । धर्मीत्यनेन साध्यधर्मित्वस्याविवक्षितत्वात् । तेन तद्व्यवच्छेदः । न चैवं विशिष्टपदवैय्यर्थ्यं स्यादिति वाच्यम् । धर्मीत्यस्य विशिष्टपदविवरणरूपत्वेन तस्य लक्षणशरीर-प्रविष्टत्वात् । साध्यपक्षेऽपादानान्न सपक्षेऽतिव्याप्तिः । तत्रानुमेयान्वितत्वाभावात् ॥ **तत्रेति** । पक्षे व्याप्त्या सार्वत्रिकसम्बन्धेन सर्वस्मिन्पक्षे वर्तमानमिति यावत् ॥ **निश्चितेति** । साध्यत्वाकारमन्तरेण

व्यापकतावच्छेदकेन धर्मेण साध्यसमानधर्मवत्त्वमभिप्रेतमिति विपक्षेऽतिप्रसङ्गः । निश्चितपदं स्वरूपकथनपरम् । पक्षेऽतिव्याप्तिवारणाय समानपदम् । साध्यसमानधर्मवति हेतावतिव्याप्तिवारणाय धर्मपदम् ॥ **तत्रेति** । सपक्षे वर्तमानमित्येतावदेव लक्षणशरीरप्रविष्टमिति ज्ञातव्यम् । साध्यतत्समानेति साध्यरहितत्वं सपक्षेऽस्ति । तत्समानधर्मरहितत्वं पक्षेऽस्तीति तद्व्यवच्छेदाय विशेषणद्वयम् । अत्र धर्मिपदं स्वरूपकथनार्थम् । तद्रहितं केवलान्वयीति विपक्षशून्यपूर्वोक्तविशेषणद्वयोपेतं च केवलान्वयीत्यर्थः । तथा च सकलपक्षवृत्तित्वे सति विपक्षशून्यं केवलान्वयीत्युक्तं भवति । शब्दोऽभिधेय आकाशविशेषगुणत्वादित्यादावतिव्याप्तिवारणाय द्वितीयं विशेषणम् । शब्दोऽभिधेयो मूर्तत्वादित्यत्रातिव्याप्तिनिवृत्त्यर्थं पक्षवृत्तित्वे सतीत्युक्तम् । शब्दघटावभिधेयौ मूर्तत्वादित्यादिहेतु-व्यावृत्त्यर्थं सकलेति ॥ **सपक्षतदेकदेशवृत्तिभेदादिति** । सपक्षवृत्तेः सत्त्वस्य भेदाभेदौ द्वैविध्या-दित्यर्थः । प्रमेयवदितीत्यनन्तरं केवलान्वयीति शेषः ॥ **गुणत्वादिति** ॥ **शब्दोऽभिधेय इति** । प्रतिज्ञाऽनुवर्तते । इतीत्यनन्तरं केवलान्वयीति शेषः ।

**(१४) प्र.प.— द्विविधा किल व्याप्तिः । अन्वयतो व्यतिरेकतश्चेति । साधनस्य साध्येन व्याप्तिरन्वयः । साध्याभावस्य साधनाभावेन व्याप्तिर्व्यतिरेकः । तत्रास्य केवलमन्वय एवास्ति । यत्प्रमेयं तदभिधेयं यथा घट इति । न तत्र व्यतिरेकः । यदभिधेयं न भवति तत्प्रमेयं न भवतीति निदर्शनाभावात् । सर्वस्याप्यभिधेयत्वेनानभिधेयासम्भवात् । तेनैतत्केवलान्वयीत्युच्यते ।**

**जना.**— केवलान्वयिकेवलव्यतिरेकीत्यन्वर्थसंज्ञासिद्ध्यर्थं तयोः परस्परभेदार्थं च नैयायिकोदाहृत व्याप्तिद्वैविध्यमाह ॥ **द्विविधेति** । किलेति नैयायिकानपहसति ग्रन्थकारः । वार्तामात्रमेवेदम् । विचार्यमाणे व्याप्तिद्वैविध्यमप्रामाणिकमिति भावः । वार्तासम्भाव्ययोः किलेत्यभिधानात् । यदर्थं व्याप्तिद्वैविध्यं न्यरूपयत्तदाह ॥ **तत्रेति** । तयोर्व्याप्त्योर्मध्य इत्यर्थः ॥ **निदर्शनाभावादिति** । निर्दिश्यते व्याप्यव्यापकभावोऽत्रेति व्युत्पत्त्या निदर्शनं दृष्टान्तः । तदभावादित्यर्थः ।

**राघ.**— ननु प्रमेयत्वहेतोः सर्वत्र सत्त्वेन केवलान्वयित्वेऽपि गुणत्वहेतोरसार्वत्रिकत्वात्कथं केवलान्वयित्वमित्यतो न हेतोः सार्वत्रिकत्वादिना केवलान्वयित्वतदभावौ । किन्तु केवलान्वयव्याप्ति-मत्त्वेनैवेति भावेन व्याप्तिविभागपूर्वं केवलान्वयित्वं द्वयोरपि हेत्वोर्व्यनक्ति ॥ **द्विविधेति** । किलेति प्रसिद्धिमाह ॥ **तत्रास्येति** । केवलान्वयित्वेनाभिमतस्य प्रमेयत्वादेरित्यर्थः ॥ **न तत्रेति** । केवलान्वयिहेतावित्यर्थः ।

**वेदे.**— केवलान्वयशब्दवाच्यतायां निमित्तं वक्तुमाह ॥ **द्विविधेति** ।

**वि.**— शब्दोऽभिधेयः प्रमेयत्वाद्गुणत्वादित्यनयोर्हेत्वोः केवलान्वयीति संज्ञायां किं निमित्तमिति जिज्ञासायां व्याप्तिद्वैविध्यकथनपूर्वकं तन्निमित्तमाह ।। **द्विविधा केवलेत्यादिना ।** अन्वयव्यतिरेकशब्दार्थजिज्ञासायामाह ।। **साधनस्येति । यथा घट इतीति ।** निदर्शनादिति शेषः ।। **प्रमेयमपि न भवतीति ।** यथाऽमुक इति शेषः । निदर्शनाभावाद् दृष्टान्ताभावादित्यर्थः ।। **तेनैतदिति ।** तेन केवलमन्वयत्वेनैतदुदाहृतमनुमानद्वयमित्यर्थः । गुणत्वहेतावप्यन्वयमात्रसद्भावादुक्तरीत्या सुगम इत्युक्तनिमित्तमस्तीत्यनुसन्धेयम् ।

**(१८) प्र.प.— पक्षव्यापकमविद्यमानसपक्षं सर्वस्माद्विपक्षाद्व्यावृत्तं केवलव्यतिरेकि । यथा जीवच्छरीरजातं सात्मकं प्राणादिमत्त्वादिति । अस्य हि यत्सात्मकं न भवति तत्प्राणादिमन्न भवति यथा घट इति व्यतिरेक एवास्ति । न तु यत्प्राणादिमत्तत्सात्मकमित्यन्वयः । सर्वस्यापि जीवच्छरीरस्य पक्षत्वात् । अन्यस्य सर्वस्य निरात्मकत्वात् । तेनैतत्केवलव्यतिरेकीत्युच्यते ।**

**जना.**— केवलव्यतिरेकिणो लक्षणमाह ।। **पक्षव्यापकमित्यादिना ।** पक्षव्यापकं सर्वपक्षवृत्तीत्यर्थः । सर्वपक्षवृत्तित्वे सत्यविद्यमानसपक्षत्वे सति सर्वविपक्षव्यावृत्तत्वं केवलव्यतिरेकिणो लक्षणमिति निष्कर्षः । तदुक्तं वरदराजेन

**असपक्षं विपक्षेभ्यो व्यावृत्तं पक्षभूमिषु ।**
**सर्वासु वर्तमानं यत्केवलव्यतिरेकि तदिति ।**

आद्यविशेषणमात्रोपादाने केवलान्वय्यन्वयव्यतिरेकिणोरतिव्याप्तिः । अतोऽविद्यमानेति द्वितीयविशेषणम् । पक्षव्यापकत्वे सत्यविद्यमानसपक्षत्वमेव लक्षणमित्युक्ते सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिणि गतम् । अतस्तृतीयं विशेषणम् । विपक्षविशेषणसर्वपदानुपादाने त्वाकाशकालातिरिक्तं सर्वमनित्यम् । आकाशान्यत्वादित्यत्रातिव्याप्तिः । तस्यापि सर्वपक्षवृत्तित्वादविद्यमान सपक्षत्वाद्यत्किञ्चिदाकाशादि व्यावृत्तत्वाच्च । अतः सर्वेति विपक्षविशेषणम् । एवं च नातिव्याप्तिः । कालरूपविपक्षव्यावृत्तत्वाभावात् । आद्यविशेषणे पक्षविशेषणसर्वपदानुपादाने आकाशपटातिरिक्तं सर्वमनित्यम् । आकाशपटान्यत्वादित्यत्र गतम् । अतः सर्वेति पक्षविशेषणम् । इति क्रमेण व्यावर्त्यानि । व्युत्क्रमेण तु विपक्षव्यावृत्तत्वं लक्षणमित्युक्ते आकाशकालातिरिक्तं सर्वमनित्यम् । आकाशान्यत्वादित्यत्र गतम् । अतः सर्वेति । सर्वविपक्षव्यावृत्तत्वमेव लक्षणमित्युक्ते आकाशघटातिरिक्तं सर्वमनित्यम् । आकाशान्यत्वादित्यत्र गतम् । अतोऽविद्यमानसपक्षमिति । अविद्यमानसपक्षत्वे सति सर्वविपक्षव्यावृत्तत्वमित्येवोक्ते आकाशातिरिक्तं सर्वमनित्यम् । आकाशाधिकरणत्वादित्यत्र गतम् ।

अतः पक्षवृत्तित्वे सतीति । पक्षविशेषणसर्वपदपरित्यागेन त्रितयग्रहणे त्वाकाशातिरिक्तं सर्वमनित्यम् । आकाशान्यत्वे सति रूपवत्त्वादित्यत्र गतम् । अतः सर्वेति पक्षविशेषणमिति । आद्यन्तग्रहणेनाविद्यमानसपक्षपदपरित्यागे तु घटाकाशातिरिक्तं सर्वमनित्यम् । आकाशान्यत्वादित्यत्र गतम् । अतोऽविद्यमानसपक्षेति । अत्र घटस्यैव सपक्षत्वान्नातिव्याप्तिरिति सर्वं सार्थकम् । उदाहृत्य दर्शयति ॥ **यथेति ।** अविद्यमानसपक्षसम्पादनार्थं प्रतिज्ञायां ज्ञानग्रहणम् । सात्मकं ज्ञानासमवायिकारणसंयोगावच्छेदकमित्यर्थः । यदवच्छिन्नात्मनि ज्ञानसमवायिकारणसंयोगो जायते तत्सात्मकमिति यावत्। तेन सात्मकत्वं यद्यात्मसंयोगित्वं तदा तस्य घटादावपि सत्त्वेन तत्र हेतोरवृत्त्याऽसाधारण्यम्। यद्यात्मसमवायित्वं तदा बाध इति निरस्तम् । हेतौ प्राणादीत्यादिशब्देन प्राणापाननिमेषोन्मेषजीवनमनोगतेन्द्रियान्तरमनोविकारसुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीति तृतीयाध्याय कणादसूत्रोक्तापाननिमेषादयो विवक्षिताः ।

**राघ.—** असपक्षं विपक्षेभ्यो व्यावृत्तं पक्षभूमिषु । सर्वासु वर्तमानं यत्केवलव्यतिरेकि तदित्युक्तदिशा केवलव्यतिरेकिलक्षणमाह ॥ **पक्षव्यापकमिति ॥ प्राणादीति ।** प्राणा इन्द्रियाणि श्वासवायवश्चादिपदेनाङ्गचेष्टादयः ।

**वेदे.—** ॥ **पक्षव्यापकमिति ।** अत्र जीवच्छरीरपक्षके सात्मकत्वसाध्यके नीलशरीरत्वादौ हेतोर्भागासिद्धेऽतिव्याप्तिवारणाय पक्षव्यापकमित्युक्तम् । अन्वयव्यतिरेकिव्यावृत्तयेऽविद्यमानसपक्षमिति । जीवच्छरीरं सात्मकं प्रमेयत्वादित्यत्रातिव्याप्तिवारणाय विपक्षाद्व्यावृत्तमित्युक्तम् । तस्यामेव प्रतिज्ञायां कतिपयविपक्षव्यावृत्तये पृथिवीत्वादिहेतावति व्याप्तिपरिहाराय सर्वस्मादित्युक्तमिति द्रष्टव्यम्। अत्रापि केवलव्यतिरेकिपदवाच्यत्वे निमित्तं वक्तुमाह ॥ **अस्य हीति ।**

**अभि.—** जीव प्राणधारण इति धातुव्याख्यानात्प्राणवायुधारि शरीरमित्यर्थः ॥ **व्यतिरेक एवास्तीति ।** ज्ञानत्वात्साध्यसिद्ध्यङ्गतयाऽस्तीत्यर्थः ॥ **न त्विति ।** निदर्शनाभावेन ज्ञानसम्भवात्साध्यसिद्ध्यङ्गतयाऽन्वयो नास्तीत्यर्थः ।

**आद.—** ॥ **जीवच्छरीरमिति ।** चेष्टावच्छरीरमित्यर्थः । तेन पक्षतावच्छेदकपक्षप्रमितेरेव साध्यप्रमितत्वात्कथमनुमानप्रवृत्तिरिति दोषानवकाशः ।

**वि.—** केवलव्यतिरेकिलक्षणमाह ॥ **पक्षव्यापकमिति ।** पक्षं व्याप्नोतीति पक्षव्यापकं सर्वस्मिन् पक्षे वर्तमानमित्यर्थः । अन्वयव्यतिरेकिण्यतिव्याप्तिपरिहाराय द्वितीयं विशेषणम् । अत्रैवाति-

व्याप्तिवारणायाद्येति विशेषणं सर्वस्मिन्निति विशेषणम् ॥ **प्राणादिमत्त्वादिति ।** इतीत्यनन्तरं हेतुरिति शेषः । जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादेः केवलव्यतिरेकीति संज्ञायां किन्निमित्तमिति जिज्ञासायामाह ॥ **अस्य हीति ।** यथा पट इतीत्यनन्तरं निदर्शनसद्भावादिति शेषः ॥ **अन्वय इति ।** निदर्शनाभावादिति शेषः । दृष्टान्ताभावमेवोपपादयति ॥ **सर्वस्यापीत्यादिना ॥ तेनेति ।** केवल-व्यतिरेकित्वेन । एतत्प्राणादिमत्त्वादित्यनुमानमित्यर्थः ।

**(१६) प्र.प.— पक्षव्यापकं सपक्षवृत्ति सर्वविपक्षव्यावृत्तमन्वयव्यतिरेकीति । तदपि द्विविधम् । सर्वसपक्षतदेकदेशवृत्तिभेदात् । शब्दोऽनित्यः कृतकत्वादिति सपक्षव्यापकम् । सर्वस्मिन्ननित्ये कृतकत्वस्य वृत्तेः । पर्वतोऽग्निमान्धूमवत्त्वादिति सपक्षैकदेशवृत्ति । अग्निमत्यपि क्वचिद्वृत्तेः । क्वचिच्चावृत्तेः । इदं हि यद्धूमवत्तदग्निमद्यथा महानसः । यदग्निमन्न भवति तद्धूमवन्न भवति यथा ह्रद इति व्याप्तिद्वयसद्भावादन्वयव्यतिरेकीत्युच्यते ।**

**जना.—** अन्वयव्यतिरेकिणो लक्षणमाह ॥ **पक्षेत्यादिना ।** सर्वपक्षवृत्तित्वे सति सपक्षवृत्तित्वे सति सर्वविपक्षव्यावृत्तत्वमन्वयव्यतिरेकिणो लक्षणमिति निष्कर्षः । एतदेवाह वरदराजोऽपि

**व्यावृत्तं यद्विपक्षेभ्यः सपक्षेषु कृतान्वयम् ।**
**व्याप्त्या पक्षे वर्तमानमन्वयव्यतिरेकि तदिति ।**

अतो द्वितीयम् । प्रथमद्वितीयमात्रोपादानेन तृतीयविशेषणपरित्यागे केवलान्वयिनिगतम् । आद्यविशेषणोपादाने केवलव्यतिरेकिणि गतम् । अतस्तृतीयं विशेषणमिति क्रमेण व्यावर्त्यानि । व्युत्क्रमेण तु विपक्षव्यावृत्तत्वमेव लक्षणमित्युक्ते कालाकाशातिरिक्तं सर्वमनित्यम् । आकाशा-न्यत्वादित्यत्र गतम् । अतः सर्वेति । तृतीयविशेषणमात्रोपादाने त्वाकाशातिरिक्तं सर्वमनित्यम् । आकाशान्यत्वादित्यत्र गतम् । अतः सपक्षवत्त्वे सतीति । द्वितीयतृतीयमात्रोपादाने तु तयोरेव पक्षसाध्ययोराकाशाधिकरणत्वहेतावतिव्याप्तिः । अत आद्यविशेषणम् । आद्यविशेषणानुपादानेन विशिष्टग्रहणे आकाशघटातिरिक्तं सर्वमनित्यम् । आकाशान्यत्वे सति घटत्वादित्यत्र गातम् । अत आद्यविशेषणम् । आद्यविशेषणे सर्वपक्षविशेषणसर्वपदानुपादाने त्वाकाशघटातिरिक्तं सर्वमनित्यम् । रूपवत्त्वादित्यत्र गतम् । अत आद्यविशेषणम् । आद्यविशेषणे सर्वपक्षविशेषणसर्वपदानुपादाने त्वाकाशघटातिरिक्तं सर्वमनित्यम् । रूपवत्त्वादित्यत्र गतम् । अतः सर्वेति पक्षविशेषणम् । आद्यन्तमात्रोपादानेन मध्यमविशेषणत्यागे तु केवलव्यतिरेकिणि प्राणादिमत्त्वादावतिव्याप्तिः । अतो मध्यमविशेषणमिति सर्वाण्यपि विशेषणानि सार्थकानीत्यवधेयम् ।

**राघ.**— व्यावृत्तं यद्विपक्षेभ्यः सपक्षे तु कृतान्वयि । व्याप्त्या पक्षे वर्तमानमन्वयव्यतिरेकि तदित्युक्तरीत्याऽन्वयव्यतिरेकिलक्षणमाह ॥ **पक्षव्यापकमिति ।**

**वेदे.**— ॥ **पक्षव्यापकमिति** । अत्र वाङ्मनसी अनित्ये मूर्तत्वादित्यत्र केवलव्यतिरेकि-केवलान्वयिनोश्चातिव्याप्तिवारणाय क्रमेण विशेषणानि द्रष्टव्यानि । अस्याप्यन्वयव्यतिरेकपदवाच्यायां निमित्तं वक्तुमाह ॥ **इदं हीति** । वक्ष्यमाणरीत्याऽन्वयव्याप्तिरूपसाध्यसिद्ध्युपयोगात् कथमनुपयोग इत्यत उक्तं प्रकृतसाध्यसिद्धाविति । सात्मकत्वरूपसाध्यसिद्धावित्यर्थः ।

**वि.**— अन्वयव्यतिरेकिणं लक्षयति ॥ **पक्षव्यापकमिति** । पूर्ववदिदं विशेषणं व्याख्येयम् । केवलव्यतिरेकिण्यतिव्याप्तिपरिहाराय द्वितीयं विशेषणम् । पर्वतोऽग्निमान्प्रमेयत्वादित्यादावति- व्याप्ति-निरासार्थं तृतीयं विशेषणम् । अस्यामेव प्रतिज्ञायां द्रव्यत्वादित्यत्रातिव्याप्तिपरिहारार्थं तृतीये सर्वस्मादिति विशेषणम् । कृतकत्वादित्यनन्तरमन्वयव्यतिरेकीति शेषः । एवं धूमत्वादित्यनन्तरं शेषोऽनुसन्धेयः । कृतकत्वादित्यादेर्हेतोरन्वयव्यतिरेकीति संज्ञायां किन्निमित्तमिति जिज्ञासायामाह ॥ **इदं हीत्यादिना** । इत्यनेन प्रकारेण व्याप्तिसद्भावादित्यर्थः । कृतकत्वहेतावपि व्याप्तिद्वयसद्भावस्तूक्त-रीत्या सुगम इत्युक्तनिमित्तमस्तीति ज्ञातव्यम् । उच्यत इत्यत्रेतिशब्दः परमतानुवादपरिसमाप्तौ वर्तते ।

**(१७) प्र.प.— तदिदमसत् । व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धावनुपयोगात् । न हि भावेन भावसाधनेऽभावस्याभावेन व्याप्तिरुपयुज्यते । व्याप्तिपक्षधर्मतयोर्वैय्यधिकरण्यं चैवं सति स्यात् । कथं तर्हि केवलव्यतिरेकिणः शास्त्रे संव्यवहारः । इत्थम् । तत्रापि यत्प्राणादिमत्तत्सात्मकमित्येव व्याप्तिः । किन्तु व्याप्तिग्रहणस्थानस्यैव विप्रतिपत्तिविषयत्वप्राप्त्या सा दर्शयितुमशक्याऽभूत् । ततोऽनुमानेन तां साधयितुं व्यतिरेकव्याप्तिरुपन्यस्यते । प्राणादिमत्त्वादिति प्रयुक्ते कथमस्य व्याप्तिरित्याकाङ्क्षायां प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम् । तदभावव्यापकाभावप्रतियोगित्वात् । यद्यदभावव्यापकाभावप्रतियोगि तत्तेन व्याप्तम् । यथा धूमवत्त्वमग्निमत्त्वेनेत्यस्यार्थस्य विवक्षितत्वात् । अन्वयव्यतिरेकिणि तु व्यतिरेकव्याप्तिरनुपयुक्तैव । विवक्षितव्याप्तेः प्रत्यक्षादिनैव सिद्धत्वात् । व्यभिचाराभावदर्शनमुखेन कथञ्चिदुपयुज्यते वेति ।**

**जना.**— व्याप्तिद्वैविध्यं दूषयति ॥ **तदिदमिति** । नन्वन्वयव्यतिरेकव्याप्त्योरुभयोरपि प्रमाण-प्रमितत्वात्कथमिदं व्याप्तिद्वैविध्यकथनमसदित्यत आह ॥ **व्यतिरेकेति** । प्रकृतकार्यसिद्धावनुपयोग-मेवोपपादयति ॥ **न हीति** । भावेन प्राणादिमत्त्वहेतुना । भावसाधने सात्मकत्वादिसाधने । अभावस्य सात्मकत्वाभावस्य । अभावेन प्राणादिमत्त्वाभावेन । व्याप्तिर्नोपयुज्यत इत्यर्थः । तथात्वे सात्मकत्वा-

भावनिष्ठया व्याप्त्या शब्दाद्यनित्यतासिद्ध्यापत्त्याऽतिप्रसङ्गादिति भावः । दूषणान्तरं चाह ॥ **व्याप्तीति**। वैयधिकरण्यं भिन्नाधिकरणत्वमित्यर्थः ॥ **कथं तर्हीति** । तर्हि व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धावनुपयुक्तत्वे । संव्यवहारः परं प्रति व्यतिरेकव्याप्त्युपन्यासो वा स्वस्य तज्ज्ञानं वा कथं न कथमपीत्यर्थः । प्रयोजनाभावादिति भावः । संव्यवहारस्य साध्यसिद्ध्यनुपयोगेऽप्युपयोगं समर्थयते ॥ **इत्थमिति** ॥ **तत्रापीति** । व्यतिरेकिस्थलेऽपीत्यर्थः ॥ **इत्येव व्याप्तिरिति** । उपयोगिनीति शेषः । तर्हि व्यतिरेकव्याप्तिरेव नोपन्यस्यतां किमनयाऽतिप्रसक्त्या व्यधिकरणया व्यतिरेकव्याप्त्येत्या-शङ्कते ॥ **किन्त्विति** । उत्तरमाह ॥ **व्याप्तिग्रहणेति** ॥ **तां साधयितुमिति** । तामन्वयव्याप्तिमित्यर्थः। उपन्यासस्यावसरमाह ॥ **प्राणादिमत्त्वादितीति** ॥ **तदभावेति** । तस्य सात्मकत्वस्य योऽभावस्तस्य-व्यापको योऽभावः प्राणादिमत्त्वाभावः यत्सात्मकं न भवति तत्प्राणादिमन्न भवतीति व्याप्तेः । तत्प्रतियोगित्वात्तन्निरूपकत्वादिति भावः । एवं केवलव्यतिरेकिणं भङ्क्त्वाऽन्वयव्यतिरेकिणं भिनत्ति ॥ **अन्वयव्यतिरेकिणि त्विति** ॥ **अनुपयुक्तैवेति** । कुत इत्यत आह ॥ **विवक्षितेति** । अन्वय-व्याप्तेरित्यर्थः । तत्र व्याप्तिग्रहणस्थानस्य विप्रतिपत्तिविषयत्वाभावेन व्यतिरेकव्याप्तिग्रहणमन्तराऽपि पक्षातिरिक्ते प्रमाणान्तरेण व्याप्तिग्रहणसम्भवादिति भावः । व्यतिरेकव्याप्तेरन्वयव्यतिरेकिणि नियमेनोपयोगं निराकृत्य क्वचिदेवान्वयव्यतिरेकिण्युपयोगमङ्गीकृत्य क्वाचित्कोपयोगेऽपि न व्यतिरेकिणीवान्वयव्याप्तौ लिङ्गीभूय किन्तु प्रकारान्तरेणेत्याह ॥ **व्यभिचाराभावेति** । यत्र साध्या-भावस्तत्र साधनमपि नास्तीति ज्ञाते साध्यभाववति साधनसत्त्वावगाहिन्यन्वयव्याप्तिग्रहप्रतिबन्धिका व्यभिचारशङ्का निवर्तते । विरोधज्ञानस्य वृत्तत्वात्तादृशशङ्कानिवृत्तिद्वारा व्यतिरेकव्याप्तिज्ञानमन्वय-व्याप्तिग्रह उपयुज्यत इति भावः ।

**राघ.**— त्रिविधमित्यादिनाऽनूदितं परमतमयुक्तमित्याह ॥ **तदिदमसदिति** । तत्र दूष्यांशं निराह ॥ **व्यतिरेकेति** । प्रकृतेत्युपक्रान्तसात्मकत्वादिसाध्यसिद्धावनुपयोगादित्युक्तं व्यनक्ति ॥ **न हीति** । प्राणादिमत्त्वेन सात्मकत्वसाधने कार्ये सात्मकत्वाभावस्य प्राणादिमत्त्वाभावेन व्याप्तिर्न ह्युपयुज्यत इत्यर्थः ॥ **एवं सतीति** । भावयोर्लिङ्गलिङ्गिभावः । तदभावयोर्व्याप्तिरित्युक्ते सतीत्यर्थः । व्यतिरेकिणः प्राणादिमत्त्वहेतोः शास्त्रेऽर्थसाधकत्वेनोपन्यासरूपसंव्यवहारः कथमित्यर्थः । एवं तर्हि व्यतिरेकोक्तिर्व्यर्थेति भावेन पृच्छति ॥ **किन्त्विति** । भावयोर्व्याप्तिग्रहानुमापकतयेति भावेनाह ॥ **व्याप्तिग्रहणस्थानस्यैवेति** । पक्षभूतत्वादिति भावः ॥ **तदभावेति** । सात्मकत्वाभावं प्रति व्यापको यो अभावस्तत्प्रतियोगित्वादित्यर्थः । एतेनानुमानगम्यां तु व्याप्तिं वक्ष्याम इति प्रागुक्तं विवृतं ध्येयम् । सर्वथाऽनुपयुक्तैव किमित्यत आह ॥ **व्यभिचाराभावेति** । व्यतिरेकव्याप्त्या साध्यभाववति विपक्षे

हेत्वभावप्रतिपादनादिति भावः । प्रागुक्तदिशोपाध्यभावनिश्चयेनापि व्यभिचाराभावनिश्चयसम्भवात्कथञ्चिदित्युक्तम् । इतिशब्दः परोक्तव्याप्तिद्वैविध्यादिनिराससमाप्तौ ॥ **परोक्तानुमानत्रैविध्यनिरासः।**

**विज.**— अन्वयव्यतिरेकिलक्षणेऽनित्ये वाङ्मनसे कृतकत्वादित्यस्य केवलव्यतिरेकिकेवलान्वयिनोश्चातिव्याप्तिवारणाय विशेषणानि दूषयति ॥ **तदिदमिति** ॥ **वैयधिकरण्यमिति** । न च साध्यभावव्यापकाभावप्रतियोगित्वं प्रयोजकमिति नोक्तदोष इति वाच्यम् । सामग्र्यन्तरकल्पनापत्तेः । तव विरुद्धस्य हेत्वाभासत्वाभावापत्तेश्च । यस्मिन्सत्यनुमितिप्रतिबन्धः स खल्वाभासः । अन्यथोपाधेरपि तथात्वापत्तेः । एवं च सकलसाध्याधिकरणनिष्ठाभावप्रतियोगित्वज्ञानेन हेतुसाध्यसामानाधिकरण्यज्ञानप्रतिबन्धेऽपि साध्याभावे साधनाभावसामानाधिकरण्याज्ञानस्यानुमित्युपयोगित्वेनाभिमतस्य न क्षतिरविरोधात् । तथा च व्यतिरेकव्याप्तिज्ञानमादायानुमितिसम्भवान्नानुमितिप्रतिबन्ध इति कथमाभासत्वमिति भावः । व्यतिरेकव्याप्तेरुपयोगमाह ॥ **कथमित्यादिना** । उपाधेरदूषणत्वेऽपि दूषणभूतोपायत्वेनोपन्यासवत्तदुपन्यास इति भावः । अन्वयव्यतिरेकिणि तत्प्रयोजनमाह ॥ **अन्वयेति।** व्याप्त्यनुमापकत्वाभावेऽपि साध्याभाववति साधनग्रहरूपव्यभिचारज्ञाननिवर्तकत्वेन व्यतिरेकव्याप्तेरुपयोग इत्यर्थः ।

**वेदे.**— ॥ **वैयधिकरण्यमिति** । तथा च व्याप्तिविशिष्टपक्षधर्मताज्ञानलक्षणलिङ्गपरामर्शासम्भवादनुमितिर्न स्यात् । न चात्र साध्याभावव्यापकाभावप्रतियोगित्वज्ञानमेवानुमितिकारणम् । अत उक्तपरामर्शासम्भवो न दोष इति वाच्यम् । तृणारणिमणिजन्यवह्निष्विव लिङ्गपरामर्शादिरूपोक्तकारणद्वयजन्यानुमित्योरवान्तरविशेषस्याननुभवात् । तत्कल्पनस्यान्योन्याश्रयेण योग्यानुपलब्धिबोधेन चायुक्तत्वादिति भावः ॥ **अनुमानेनेति** । एतेनानुमानगम्यां व्याप्तिमित्यादिनोक्तं प्रदर्शितं भवति । व्यभिचारशङ्काया असार्वत्रिकत्वान्न सर्वत्रान्वयव्यतिरेकिणि व्यतिरेकव्याप्त्युपयोग इत्यभिप्रेत्य कथञ्चिदित्युक्तमित्याहुः ।

**अभि.**— अन्वयव्याप्तेरज्ञातत्वाद्व्यतिरेकव्याप्तेरुपयोगाभावात्कथं केवलव्यतिरेकिणः संव्यवहार इति पृच्छति ॥ **कथं तर्हीति** ॥ **इत्येव व्याप्तिरिति** । साध्यसिद्धेरङ्गमिति शेषः । किमर्थं तर्हि व्यतिरेकव्याप्त्यनुसरणमिति पृच्छति ॥ **किन्त्विति** । उत्तरमाह ॥ **व्याप्तिग्रहमिति । तदभावव्यापकाभावेति ।** अस्य हेतोरसिद्धिपरिहाराय व्यतिरेकव्याप्त्युपन्यास इति भावः ॥ **व्यभिचाराभावेति ।** अन्वयव्याप्तिग्रहण इति शेषः ।

आद.— ॥ **न हि भावेन भावसाधन इति ।** धूमत्वावच्छिन्नेन वह्नित्वावच्छिन्नसाधन इत्यर्थः । ननु न वयं वह्न्यभावे धूमाभावव्याप्तिज्ञानात्पर्वते धूमरूपहेतोः सकाशादनुमितिं ब्रूमो येनेदं दूषणं सङ्गच्छेत किन्तु साध्याभावव्यापकतावच्छेदकं यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वं तद्धर्मावच्छिन्नत्वं व्याप्तिः । प्रकृतहेतावेतादृशव्याप्तिज्ञानादनुमितिरिति । अतो नेदं दूषणं लगतीति चेन्न । तथा सति केवलव्यतिरेकित्वानुपपत्तेः । तथा हि । केवलव्यतिरेकित्वं नाम किमन्वयव्याप्तिशून्यत्वं वा स्वजन्यानुमितेरन्वयव्याप्तिज्ञानाजन्यत्वं वा । नाद्यः । व्यतिरेकव्याप्तिमङ्गीकृत्यान्वयव्याप्त्यनङ्गीकारस्य व्याहतत्वात् । न द्वितीयः । भवदुक्तव्याप्तेः प्रकृतहेतुनिष्ठत्वेनान्वयव्याप्तित्वेन तज्ज्ञानादेवानुमितेरङ्गीकृतत्वात् । परन्तु स्वाश्रयव्यापकीभूताभावप्रतियोगित्वस्य प्रकृतहेतौ ज्ञानोत्पादनद्वारा । तथा च तद्विशिष्टहेतुप्रकारकं पक्षधर्मताज्ञानमनुमितिहेतुरिति वाच्यम् । उक्तपक्षधर्मताज्ञानमात्रेणानुमितिसम्भवेन व्यतिरेकव्याप्तिज्ञानस्यान्यथासिद्धत्वात् । पृथक्कारणताकल्पने मानाभावात् । किञ्च पृथक्कारणताकल्पने व्यतिरेकव्याप्तेर्हेत्वंशे भानासम्भवेन व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानस्यैवानुमितिकारणत्वं न तु ज्ञानद्वयस्येति पक्षो दत्तजलाञ्जलिः स्यात् । न चान्वयव्याप्तिस्थले एव तन्नियम इति वाच्यम् । वैलक्षण्यकल्पने बीजाभावात् । उक्तस्थलेऽप्यन्वयव्याप्त्यनुसन्धानेनैवानुमितिकल्पने लाघवाच्च । भवद्भिरपि साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपप्रकृतहेतुनिष्ठव्याप्त्यनुसन्धानस्याङ्गीकृतत्वात् । व्याप्तिपदस्यानुमितिजनकज्ञानविषयत्वार्थकत्वेनोक्तधर्मस्यानुमितिजनकज्ञानविषयत्वस्याङ्गीकृतत्वात् । न चैवं सर्वत्रान्वयव्याप्तिज्ञानकल्पने गौरवमिति वाच्यम् । व्यतिरेकव्याप्तिज्ञानवतोऽन्वयव्याप्तौ कदाऽपि संशयानुत्पत्त्याऽन्वयव्याप्तिज्ञानस्यानुभवसिद्धत्वेनाकल्पनात् । व्यतिरेकव्याप्तिस्थले पृथक्कारणताकल्पने गौरवात् ।

किञ्च यत्र केवलव्यतिरेकित्वाभिमानस्तत्रापि पुरुषविशेषस्योपदेशादिनाऽन्वयव्याप्तिज्ञानसम्भवेन तेनैवानुमितेरपि सम्भवेनान्वयव्यतिरेकित्वापातः स्यात् । न ह्यनादौ संसारे कस्यापि पुरुषस्योपदेशादिनाऽन्वयव्याप्तिज्ञानं तेन चानुमितिर्नैव जायत इत्यत्र प्रमाणमस्ति । तस्माद्व्यतिरेकव्याप्तिज्ञानस्यानुमितिकारणत्वासम्भवात् सर्वत्रान्वयव्याप्तिज्ञानसम्भवाच्च परोक्तविभागादिकमयुक्तमेव । वस्तुतस्तु साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्याप्तिज्ञानं वा व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानं वा नानुमितिहेतुः किन्त्वस्मदुक्तव्याप्तिज्ञानमेव । अन्यविधव्याप्तिज्ञानस्य कारणताङ्गीकारे स्वातन्त्र्येण कारणता कल्पनीया । उक्तव्याप्तिज्ञानस्य कारणताङ्गीकारे तु न कारणता पृथक्कल्पनीया । यत्समानाधिकरणत्वेन यः पदार्थो ज्ञातस्तत्प्रकारकज्ञानस्य तत्प्रकारकज्ञानं प्रति कारणता । साधारण धर्मज्ञानस्य संशयकारणतामङ्गीकुर्वता क्लृप्तैव । तत्प्रकारकज्ञानं प्रति तद्वदवृत्तिधर्मप्रकारकज्ञानस्य

प्रतिबन्धकताऽपि सर्वसम्मता । एवं च व्याप्तिज्ञानस्य साध्याभाववदवृत्तिहेतुप्रकारकत्वेनानुमितौ साध्याभावप्रकारकत्वाभावप्रयोजकत्वम् । एवं व्याप्तिज्ञानस्य साध्यसमानाधिकरणहेतुप्रकारकत्वेनानुमितौ साध्यप्रकारकत्वप्रयोजकत्वमपि क्लृप्तमिति नाधिककल्पनमिति मन्तव्यम् । अन्यविधव्याप्तिज्ञानादप्यनुभवसिद्धत्वेन तज्ज्ञानस्यापि कारणत्वमङ्गीकर्तव्यमिति केचित् ।

**श्रीनि.—** ॥ **कथं तर्हीति** । अन्वयव्याप्तिर्नास्त्येव व्यतिरेकव्याप्तिर्विद्यमानाऽपि चेदनुपयोगिनी सा ह्युपायाभावात्कथं प्राणादिमत्त्वस्य सात्मकत्वसाधकत्वं तदभावे च कथं तस्य शास्त्रे केवलव्यतिरेक्यनुमानत्वेन व्यवहार इत्यर्थः ॥ **इत्येव व्याप्तिरिति** । तथा च साध्यसाधकत्वं युक्तमेवेति भावः । तर्हि सैव प्रदर्शनीया । व्यतिरेकव्याप्तिप्रदर्शनस्य कुत्रोपयोग इति पृच्छति ॥ **किन्त्विति** । उत्तरमाह ॥ **व्याप्तीति** । साधनप्रकारमेवाह ॥ **प्राणादिमत्त्वादिति** ॥ **तदभावव्यापकाभावेति** । तथा चैतत्साधनप्रतिपत्त्यर्थंव्यतिरेकव्याप्त्युपन्यास इति भावः । केवलव्यतिरेकित्वव्यवहारस्तु केवलव्यतिरेकव्याप्त्यनुमेय व्याप्तिकत्वेनैव नान्वयव्याप्तिविरहादिति हृदयम् । एतेन यद्यनुमानत्रैविध्यं न स्यात्तर्हि कथं प्रमाणलक्षणटीकायां त्रिविधमनुमानमित्यनेन तत्त्रैविध्यमुक्तम् । न चासौ परमतानुवाद इति युक्तम् । तथा सति सर्वत्र निर्दोषत्वानुवृत्तेन बाधितादौ प्रसङ्गः । तत्पुनर्द्विविधं दृष्टं सामान्यतो दृष्टं चेत्युत्तरग्रन्थस्वारस्याप्रसङ्गात् । न हि परमतेनोक्तलक्षणेषु स्वमतेनोक्तसामान्यलक्षणस्थनिर्दोषत्वानुवृत्त्याऽतिव्याप्तिपरिहारो युज्यते । न वा पुनरुक्तविभागेन स्वाङ्गीकृतविभागस्य पुनर्विभागत्वं सङ्गच्छते । यदि चात्र द्वैविध्यस्य निराकरणेनेति कण्ठतो वक्ष्यमाणत्वात्तद्द्वैविध्यं न स्यात्कथं तर्ह्यविभागे व्याप्तिः । सा द्विविधा । अन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्चेति व्याप्तिद्वैविध्यं कथं तत्रोक्तम् । न चायमपि परमतानुवाद इति युक्तम् । यदुक्तं निर्दोषप्रमितलिङ्गमनुमानमिति तदयुक्तमित्यादिना व्याप्तिरुपपत्तिमूलमिति मूलमवतार्य तद्व्याख्यानपरोक्तं लक्षणमित्येतद्ग्रन्थसन्दर्भमध्यपतितव्याप्तिद्वैविध्योक्तेः परमतानुवादत्वस्य शङ्कितुमशक्यत्वात् । अत एव तत्र केचित्त्वित्यादिपाठकल्पनमपास्तम् । तथा सत्यत्रेव तत्रापि तद्दूषणप्रसङ्गात् । एवं वैधर्म्यदृष्टान्ततद्विरोधवैधर्म्योदाहरणानि व्यतिरेकानुमानेऽप्यङ्गीकारज्ञापकानि बहूनि तत्र सन्तीति कथमत्र तन्निरूपणमिति शङ्का परास्ता । न ह्यत्र केवलव्यतिरेकिस्वरूपमेव निराक्रियते किं नाम व्यतिरेकव्याप्त्या प्रकृतसाध्यकरूपमेव केवलव्यतिरेकि । अत एव व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धावनुपयोगादिति दूषितम् । व्यतिरेकव्याप्त्यनुमेयान्वयव्याप्त्यादिकं तु केवलव्यतिरेकि प्रमाणलक्षणटीकाभिप्रेतमत्राप्यङ्गीकृतमेव । अत एव कथं तर्हि केवलव्यतिरेकिणः संव्यवहार इत्यादिना तथैवोक्तम् । यद्यपि तदेतद्द्वैविध्यं तुशब्देन व्यवच्छिनत्तीति सुधायां व्याप्तिद्वैविध्यनिराकरणेनेत्यत्र च व्याप्तिद्वैविध्यं साक्षादेव निराकृतम् ।

तथाऽपि साक्षात्प्रकृतसाध्यसिद्ध्यङ्गभूतैव व्यतिरेकव्याप्तिस्तत्र च निराकृता न त्वन्वव्याप्त्यनुमापिका । अत एव तर्कताण्डवे यत्तु सुधायां व्यतिरेकिनाऽनुमानपञ्चरूपतावैधुर्यादित्येतत्परिशेषानुमानेष्व-नैकान्तिकमिति व्यतिरेकिणस्तटस्थशङ्कितानुमानत्व शङ्कानिराकरणं तत्पररीत्याश्रित्येत्युक्त्वा व्यतिरेक-व्याप्तिः साधकतयोपयुज्यत इत्यभिप्रेत्य वेत्थमपि पक्षोऽभिहित इति सङ्क्षेपः ।

वि.— ।। **तदिदमिति** । केवलान्वयिकेवलव्यतिरेकीत्यादिना पूर्वमुक्तमिदं हीत्यादिनाऽधुनोक्तं सर्वमसदित्यर्थः ।। **व्यतिरेकव्याप्तेरिति** । साध्याभावस्य साधनाभावेन व्याप्तेः प्राणादिमत्त्वसाधनेन ज्ञापनीयतया प्रसक्तसाध्यसिद्धौ साक्षाद्व्याप्यरूपाङ्गतयोपयोगाभावादित्यर्थः । अनुपयोगमुपपादयति ।। **न हीति** । हिशब्देन भावेन भावसाधने व्यतिरेकव्याप्तेरेव साक्षादुपयोगाङ्गीकारे विपक्षे बाधकाभावात्स धूमोऽप्ययमन्यो वा कश्चिन्निरग्निकेऽस्त्वित्यप्रयोजकत्वापरनामकव्याप्त्यभावशङ्कायां तन्निवर्तकविपक्ष-बाधकतर्काङ्गभूतव्याप्तेर्व्यतिरेकव्याप्तित्वेन तन्निश्चयेनैव प्रकृतसाध्यसिद्धिसम्भवात् । अप्रयोजकशङ्का-निरासार्थं तर्कानुसरतावैय्यर्थ्यापातात् । व्याप्यं लिङ्गमिति लिङ्गलक्षणस्य व्यतिरेकिण्यभावप्रसङ्गाच्च । साध्याभावस्य साधनाभावेन व्याप्तिरूपाया व्यतिरेकव्याप्तेस्तत्राभावात् । व्याप्तिबलेनार्थगमकत्वं लिङ्गलक्षणं व्यतिरेकिण्यस्तीति चेन्न । अतिप्रसङ्गेनान्यदीयव्याप्तेः प्रकृतहेत्वङ्गत्वरूपबलत्वासम्भवात् । प्रतियोग्यनुयोगिभावातिप्रसङ्गो निवारक इति चेन्न । तथा सत्यार्द्रेन्धनवह्निसंयोगगतधूमनिरूपितान्वय-व्याप्तेस्तदभावेन धूमाभावसिद्धावङ्गत्वापातात् । निषिद्धत्वेन पापसाधनत्वसिद्धौ निषिद्धत्वाभावस्य पापसाधनत्वाभावनिरूपितव्याप्तेरङ्गतापाताच्च । प्राणादिमत्त्वरूपसाधनाभावस्य साध्याभावेन व्याप्तेः प्रकृते हेत्वङ्गत्वापातात् । भावत्वे सति कृतकत्वाभावस्यानित्यत्वाभावेन व्याप्तेः कृतकत्वेनानित्यत्व-सिद्धावुपयोगप्रसङ्गाच्च । अविशेषादित्यादि विपक्षे बाधकं सूचयति । दूषणान्तरमाह ।। **व्याप्तिपक्षधर्म-तयोरिति** । एवं सति व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धौ साक्षादुपयोगे सतीत्यर्थः । न चेष्टापत्तिः । शब्दोऽभिधेयः प्रमेयत्वादित्यादौ पक्षधर्मतासमानाधिकरणव्याप्तेरेवाङ्गतया क्लृप्तत्वात् । अन्यथा धूमगतव्याप्तिव्यधिकरणवृक्षगत पक्षधर्मताया वह्निसिद्ध्यङ्गतापातात् । प्रतियोग्यनुयोगिभावोऽपि प्रसङ्गभञ्जक इति चेन्न । तथा सति पक्षधर्मताव्यधिकरणतायाः प्राणादिमत्त्वाभावस्य साध्याभावेन व्याप्तेरपि प्रकृतसाध्यसिद्धावङ्गत्वापातात् । आर्द्रेन्धनसंयोगाभावेन धूमाभावसिद्धावार्द्रेन्धन संयोग-गतान्वयव्याप्तेरसङ्गतापाताच्च । निषिद्धत्वाभावस्य पापसाधनत्वाभावेन व्याप्तेर्निषिद्धत्वेन पापसाधनत्व सिद्धावङ्गतापाताच्चेति हृदयम् । ननु तर्हि परीक्षकाणां केवलव्यतिरेकानुमानस्य प्रकृतसाध्ये प्रमाणतयाऽविगीतव्यवहारः कथमिति पृच्छति ।। **कथं तर्हीति** । तर्हि प्रकृतकार्यसिद्धावनङ्गत्व इत्यर्थः ।। **विप्रतिपत्तिविषयत्वव्याप्त्येति** । सात्मकत्वरूपसाध्यत्वेनेति शेषः ।। **विवक्षितव्याप्तेरिति** ।

प्रकृतसाध्ये सिद्ध्यङ्गभूतान्वयव्याप्तेरित्यर्थः ॥ **प्रत्यक्षादिनैवेति** । आगम आदिशब्दार्थः । एवेत्यनेन व्यतिरेकव्याप्तिरूपमनुमानं व्यवच्छिनत्ति ॥ **व्यभिचाराभावप्रदर्शनमुखेनेति** । तदभावव्यापकाभाव-प्रतियोगिनस्तद्व्यभिचाराभावायोगात् । व्यभिचाराभावप्रदर्शनद्वारेण कथञ्चिद्व्यभिचारशङ्कानिवर्तक-त्वेनान्वयव्याप्तिग्रहे उपयुक्तैवेत्यर्थः ।

## परार्थानुमाने पञ्चावयवनियमो नास्ति

**(१८) प्र.प.— पुनरनुमानं द्विविधम्। स्वार्थं परार्थं चेति। तत्र परोपदेशमनपेक्ष्य यत्स्वयमेव व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गज्ञानमुत्पद्यते तत्स्वार्थानुमानम् । यत्तु परोपदेशापेक्षमुत्पद्यते तत्परार्थानुमानम्। तज्जनकत्वात्परोपदेशोऽपि परार्थानुमितिं क्वचिदुपचर्यते। परोपदेशस्तु पञ्चावयव-वाक्यानीति नैयायिकादयः । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । एत एव वैशेषिकैः प्रतिज्ञोपदेशनिदर्शनानुसन्धानप्रत्याम्नाया इत्युच्यन्ते । तत्र पक्षवचनं प्रतिज्ञा । यथा पर्वतोऽग्नि-मानिति। तत्र धर्मिणमुद्दिश्य पश्चाद्धर्मो विधातव्यः । साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनं हेतुः। यथा धूमवत्त्वादिति। व्याप्तिग्रहणस्थलं दृष्टान्तः। स द्विविधः। साधर्म्यदृष्टान्तो वैधर्म्य-दृष्टान्तश्चेति। तत्रान्वयव्याप्तिग्रहणस्थलं साधर्म्यदृष्टान्तः। यथा धूमानुमाने महानसः। व्यतिरेक-व्याप्तिग्रहणस्थलं वैधर्म्यदृष्टान्तः । यथा तत्रैव महाह्रद इति । सम्यग्व्याप्तिप्रदर्शनपूर्वकं दृष्टान्ताभिधानमुदाहरणम्। तद्द्विविधम्। साधर्म्योदाहरणं वैधर्म्योदाहरणं चेति। अन्वयव्याप्ति-प्रदर्शनपूर्वकं साधर्म्यदृष्टान्ताभिधानं साधर्म्योदाहरणम् । यथा यो यो धूमवान्स सोऽग्निमान्यथा महानस इति । व्यतिरेकव्याप्तिप्रदर्शनपूर्वकं वैधर्म्यदृष्टान्ताभिधानं वैधर्म्योदाहरणम् । यथा योऽग्निमान्न भवति स धूमवान्न भवति। यथा महाह्रद इति। दृष्टान्ते प्रसिद्धाविनाभावस्य लिङ्गस्य पक्षे व्याप्तिरव्यापकं वचनमुपनयः । सोऽपि दृष्टान्तानुसारेण द्विविधः । तत्र महानस इव पर्वतो धूमवानिति साधर्म्योपनयः । न च ह्रद इवायं निर्धूमः पर्वत इति वैधर्म्योपनयः । पुनः सहेतुकं पक्षवचनं निगमनम्। यथा तस्मात्पर्वतोऽग्निमानिति।**

**जना.—** ॥ **तत्रेति** । स्वयमित्यस्य विवरणं परोपदेशमनपेक्ष्येति ॥ **व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गज्ञानमिति** । व्याप्तिज्ञानं व्याप्त्यनुभवः । लिङ्गज्ञानमित्युभयत्रापि सम्बद्ध्यते । व्याप्त्यनुभव-रूपलिङ्गज्ञानं व्याप्तिस्मरणरूपं वा लिङ्गज्ञानमित्यर्थः। व्याप्त्यनुभवजनितप्रबलतरसंस्कारसदसद्भाव-दशाभेदे व्याप्त्यनुभवतत्स्मरणे व्यवस्थिते न तु युगपदिति नासम्भवः । **तत्स्वार्थानुमानमिति** । स्वस्यार्थः प्रयोजनं वह्न्यादिलाभरूपं यस्मादिति व्युत्पत्त्या स्वप्रयोजनसाधनज्ञानजनकलिङ्गज्ञानत्वं

स्वार्थानुमानलक्षणं द्रष्टव्यम् । न चोदासीनलिङ्गज्ञानेऽव्याप्तिः । तस्यापि पुरुषविशेषापेक्षया स्वप्रयोजनसाधनज्ञानोत्पादनयोग्यत्वात् । योग्यताया एव प्रकृते विवक्षितत्वात् ॥ **यत्त्विति ।** व्याप्त्यवगाहिलिङ्गज्ञानमित्यर्थः ॥ **तत्परार्थानुमानमिति ।** अत्रापि परस्यार्थः प्रयोजनं यस्मादिति व्युत्पत्त्या परप्रयोजनोत्पादनयोग्यज्ञानसाधनयथार्थलिङ्गज्ञानत्वं परार्थानुमानलक्षणं बोध्यम् । ननु प्रतिज्ञाहेतूदाहरणादिरूपे परोपदेशे लिङ्गज्ञानत्वरूपकारणाभावात्कथं तत्र परार्थानुमानव्यवहार इत्याशङ्क्य परोपदेशे प्रायस्तादृशव्यवहारो नास्त्येव । क्वचित्कोऽपि व्यवहार औपचारिक इत्याह ॥ **तज्जनकत्वादिति ।** व्याप्त्यवगाहिपरकीयलिङ्गज्ञानजनकत्वादित्यर्थः । प्रसङ्गादाह ॥ **परोपदेशशस्त्वित्यादिना ॥ नैयायिकादय इति ।** नवीननैयायिकादय इत्यर्थः । जरन्नैयायिकैर्जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयनिरासैः सह प्रतिज्ञादिदशावयवस्वीकारादिति द्रष्टव्यम् । जिज्ञासादिपञ्चकस्या शब्दरूपत्वस्य स्फुटत्वेनानवयवत्त्वात्तत्पक्षो न क्षोदक्षम इति नवीननैयायिकैरुपेक्षितः । के ते पञ्चावयवा इत्याकाङ्क्षायां न्यायसूत्रं प्रमाणयति ॥ **प्रतिज्ञेति ।** अयं भावः । यावता व्याप्तिविशिष्टलिङ्गधीस्तावदाकाङ्क्षाक्रमेणाभिधेयम् । अन्यथा न्यूनत्वापत्तेः । तत्र साध्यानुपस्थितौ हेत्वाकाङ्क्षैव नोदेतीति तदुपस्थित्यर्थं प्रतिज्ञा । ततः कस्मात्प्रमाणादिदं ज्ञेयमित्याकाङ्क्षायां स्वरूपमात्रप्रतिपादकं धूमादिति हेतुवचनम् । ततोऽस्य सामर्थ्यजिज्ञासायां प्रथमं व्याप्तिदर्शनार्थमुदाहरणम् । पश्चात्पक्षधर्मता प्रदर्शनार्थमग्निव्याप्तधूमवांश्चायमित्युपनयः । ततः सर्वस्यैकबुद्ध्यारोहायैकवाक्यतामापादयितुं निगमनमिति पञ्चाप्यवयवा आवश्यका इति ॥

**वैशेषिकैरिति** । नैयायिकैकदेशिभिरित्यर्थः ॥ **तत्रेति** । **पक्षवचनमिति** । साध्यविशिष्टधर्मिवचनमित्यर्थः ॥ **तत्रेति ।** धर्मिसाध्ययोर्मध्य इत्यर्थः । यद्वा प्रतिज्ञावाक्य इत्यर्थः ॥ **पश्चादिति ।** पूर्वं बुद्ध्यनुपारूढधर्मिणि कस्यापि धर्मस्य विधातुं निषेद्धुं वाऽशक्यत्वादित्यर्थः । सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयत इति ॥ **साधनत्वेति ।** कारणत्वाभिधायिनी या विभक्तिस्तृतीया पञ्चमी वा तदन्तमित्यर्थः । अत्र लिङ्गवचनं हेतुरित्येवोक्ते धूमवान्पर्वतो वह्निमानिति वाक्येऽतिव्याप्तिः । अतः साधनत्वख्यापकेति । साधनत्वेत्यादिपूर्वविशेषणमात्रोपादाने तु पर्वतो वह्निमान्पर्वतत्वादिति वाक्येऽतिव्याप्तिः । अतो लिङ्गवचनमिति । उदाहरणलक्षणं वक्तुं तद्घटकं दृष्टान्तं निरूपयति ॥ **व्याप्तीति ।** व्याप्तिस्थलं दृष्टान्त इत्युक्ते पक्षे गतम् । अतो ग्रहणेति ॥ **तत्रान्वयेति ।** व्याप्तिग्रहणस्थलं साधर्म्यदृष्टान्त इत्येवोक्ते वैधर्म्यदृष्टान्ते गतम् । अतोऽन्वयेति । ग्रहणपदव्यावर्त्यं पूर्ववत् ॥ **व्यतिरेकेति ।** अत्र ग्रहणपदं पक्षातिरिक्ते वस्तुतः साध्यारहिते यस्मिन्साध्यसंशयस्तत्रातिव्याप्तिवारणायेति ज्ञेयम् । यदर्थं दृष्टान्तो निरूपितस्तदाह ॥ **सम्यगिति ।** अत्र दृष्टान्तवचन-

मुदाहरणमित्येवोक्ते कृतकत्वेन शब्दानित्यत्वे साध्येऽनुपदर्शितव्याप्तिके घटवदिति दृष्टान्तमात्रे गतम् । अतो व्याप्तिप्रदर्शनपूर्वकमिति । सम्यगित्यनेन तत्रैवानुमाने वैपरीत्योपदर्शितव्याप्तिकस्य यदनित्यं तत्कृतकं यथा घट इति वाक्यस्य निरासः ।। **दृष्टान्ते प्रसिद्धाविनाभावस्येति** । उदाहरणोपदर्शित-व्याप्तिकस्येत्यर्थः । पक्षे धर्मिणि । व्याप्तिख्यापकं सत्त्वप्रतिपादकम् । व्याप्तिख्यापकवचनमित्येवोक्ते महानसे धूम इति वाक्ये गतम् । अतः पक्ष इति । तावत्येवोक्ते महानसो वह्निमानिति वाक्ये गतम् । अतो लिङ्गस्येति । लिङ्गस्य पक्षे व्याप्तिख्यापकं वचनमुपनय इत्येवोक्ते धूमत्वादिति हेतुवचने गतम् । अतो दृष्टान्त इत्यादि ।। **दृष्टान्तानुसारेणेति** । दृष्टान्तस्य द्विविधत्वात्तदुपपादक उपनयोऽपि द्विविध इति भावः ।। **पुनरिति** । प्रतिज्ञावाक्येन पक्षवचनेऽपीत्यर्थः । सहेतुकमिति क्रियाविशेषणम् । पक्षवचनं धर्मिणि साध्योक्तिरित्यर्थः । पक्षवचनं निगमनमित्येवोक्ते प्रतिज्ञायां गतम् । अतः सहेतुकमिति । पुनरित्युपसंहाररूपत्वमस्य दर्शयितुम् ।

**राघ.**— ।। **यदिति** । भूयोदर्शनादिरूपप्रागुक्तसामग्रीत इत्यर्थः ।। **यत्तु परोपदेशापेक्षमिति** । व्याप्तिज्ञानमित्यादेरनुषङ्गः ।। **क्वचिदिति** । युक्तिः प्रतिज्ञारूपा च हेतुदृष्टान्तरूपिका । तथोपनयरूपा च परा निगमनात्मिकेत्यादि ब्रह्मतर्कवाक्यादावित्यर्थः । वैशेषिकोक्तानामन्यत्वशङ्कानिरासायाह ।। **एत एवेति** । क्रमेणावयवानां स्वरूपमाह ।। **तत्रेति** । तेषु मध्ये ।। **पक्षवचनमिति** । पक्षस्वरूपं प्रागुक्तम् ।। **पश्चाद्धर्म इति** । अग्निमान्पर्वत इति न वाच्यमिति भावः ।। **धूमेति** । प्रातिपदिक-मात्रोक्तेरहेतुत्वायोक्तं विभक्त्यन्तं लिङ्गवचनमिति । धूमोऽस्तीत्यादेरहेतुत्वायोक्तं साधनत्वख्यापक-विभक्त्यन्तमिति । सा च विभक्तिः पञ्चमीति भावः । उदाहरणलक्षणं वक्तुं दृष्टान्तस्वरूपमाह ।। **व्याप्तिग्रहणेति** ।। **तत्रैवेति** । धूमानुमाने ।। **सम्यग्व्याप्तीति** । यो यो धूमवानसावसावित्येव न तु वैपरीत्येनेति सम्यक् शब्दार्थः ।। **प्रसिद्धेति** । निश्चितव्याप्तिकस्य लिङ्गस्य व्याप्त्या वर्तमानत्वख्यापक-वचनमित्यर्थः । तत्र तयोर्मध्ये ।

**विज.**— मतान्तरनिरासचिकीर्षयाऽनुमानविभागान्तरमाह ।। **पुनरिति** । ननु स्वार्थं स्वेष्टसाधनं परार्थं परेष्टसाधनमिति पदार्थः प्रतीयते । स चासम्भवी । स्वार्थानुमितेरपि सर्वस्या इष्टत्वाभावात् । परार्थानुमितेरपि वादजन्यायाः स्वेष्टत्वात् । उपेक्षानुमितेरपि सम्भवे तत्र तत्र स्वार्थत्वादेरसम्भव इत्यत आह ।। **तत्रेति** । परोपदेशे त्वनुमितिपदमौपचारिकमित्याह ।। **तत्रेति** । परोपदेशे त्वनुमिति-पदमौपचारिकमित्याह ।। **तदिति** । जनकत्वं प्रयोजकत्वम् । मतान्तरसिद्धमवयवनियमं निराकर्तुं तार्किकसिद्धमवयवं तावदाह ।। **परेति** । उपदेशो न्यायः । स च तन्मतेऽनुमितिचरमकारणलिङ्ग-

परामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यम् । अत्रोपनयेति चतुरवयवे महावाक्येऽतिप्रसङ्गपरिहाराय चरमकारणेति । तस्यानुमितिकारणलिङ्गापरामर्शप्रयोजकशाब्दज्ञानेन मनसा ज्ञानद्वाराऽनुमिति-चरमकारणपरामर्शजननान्नासम्भवः । शाब्दपदेन कण्टकोद्धारवाक्यस्य नायमसिद्ध इत्यादेर्निरासः । तस्यानुमितिचरमकारणपरामर्शप्रयोजकज्ञानजनकत्वात् । कण्टकोद्धारजन्यज्ञानस्य योग्यताज्ञानत्वेनोप-योगात्तत्रापि व्याप्तिसम्भवात् । न शाब्दपदज्ञानेऽपि दोषतादवस्थ्यम् । तज्जन्ययोग्यताज्ञानस्या-शाब्दत्वादिति वाच्यम् । शाब्दज्ञानत्वेन जनकत्वस्य विवक्षितत्वात् । तस्य शाब्दज्ञानस्यापि योग्यता-ज्ञानत्वेन जनकत्वात् । वाक्यपदेन कालादिव्युदासः । वाक्यत्वं वाक्यान्तरघटकवाक्यत्वम् । तेन न्यायैकदेशेऽतिव्याप्तिरेकदेशस्यापि वाक्यत्वादिति निरस्तम् । नैयायिकवैशेषिकभेदेनावयवानां संज्ञाभेदमाह ॥ **प्रतिज्ञेति ।** प्रतिज्ञालक्षणमाह ॥ **तत्रेति ।** पक्षतावच्छेदकावच्छेदेन साध्यविधायक-न्यायावयव इत्यर्थः । निगमनं चानुवादः । अत एव वक्ष्यति ॥ **पुनः सहेतुकं पक्षवचनमिति ।** अत्रैव प्रतिज्ञाप्रयोजनकथने विधातव्य इति चोक्तम् । हेत्ववयवस्य लक्षणमाह ॥ **साधनत्वेति ।** लिङ्गवचनं न्यायावयवः । तेन न्यायबहिर्भूते निगमनैकदेशे च नातिप्रसङ्गः । उदाहरणं लक्षयितुं दृष्टान्तं लक्षयति ॥ **व्याप्तीति ।** व्यभिचारज्ञानविरोधिव्याप्तिग्रहणस्थलमित्यर्थः । तेन दृष्टान्तद्वयसङ्ग्रहः । व्यतिरेक-व्याप्तिग्रहस्यापि साधने साध्यव्यभिचारज्ञानविरोधित्वात् ॥

**अन्वयेति ।** साधने साध्यसम्बन्धबोधस्थलमित्यर्थः । एवं व्यतिरेकीत्यत्रापि साध्याभावे साधना-भावसम्बन्धेत्यादि द्रष्टव्यम् । दृष्टान्तलक्षणमुक्त्वोदाहरणलक्षणमाह ॥ **सम्यगिति ।** दृष्टान्त-विषयकत्वनियताभिन्नसम्यग्व्याप्तिदर्शकं वचनमित्यर्थः । तेन दृष्टान्तस्य सामर्पिकतया तद्रहितो-दाहरणाव्याप्तिः परिहृता । विपरीतोपदर्शितानुपदर्शितव्याप्तिकोदाहरणाभासवारणाय सम्यगित्यादि-पदम् । वह्निव्याप्यधूमवानयमित्युपनयेऽतिप्रसङ्गपरिहाराय दृष्टान्तेति । एवमन्वयेत्यादावपि द्रष्टव्यम् । उपनयलक्षणमाह ॥ **दृष्टान्त इति ।** एतत्स्वरूपकथनं पक्षतावच्छेदकावच्छिन्ने लिङ्गसम्बन्ध-बोधकन्यायावयवोऽथवा तद्विधायकं वचनमित्यर्थः । तेन निगमनैकदेशे तस्मादित्यत्र नातिप्रसङ्गः । निगमनलक्षणमाह ॥ **पुनरिति ।** पुनरित्यनुवादकत्वकथनाय लक्षणं तु सहेतुकमित्यादि । हेतुमत्त्व-पुरस्कारेण साध्यविशिष्टपक्षबोधकन्यायावयवेति तदर्थः । तेन प्रतिज्ञोदासीनयोः परिग्रहः ।

**वेदे.—** ॥ **परोपदेश इति ।** ससामर्थ्यलिङ्गप्रतिपादकं वाक्यमित्यर्थः ॥ **पक्षवचनमिति ।** परं प्रति प्रतिपादयितुमिति शेषः । दृष्टान्तघटिततयोदाहरणं लक्षयितुं दृष्टान्तलक्षणमाह ॥ **व्याप्तीति ।** तद्द्वैविध्यं वक्तुं दृष्टान्तद्वैविध्यमाह ॥ **स इति ॥ सम्यग्व्याप्तीति ।** विपरीतव्याप्त्यभिधानेऽनुपदर्शित

व्याप्तिके दृष्टान्तानभिधाने चोदाहरणाभासेऽतिव्याप्तिवारणाय क्रमेण विशेषणानि । प्रतिज्ञाव्यावृत्त्यर्थं सहेतुकमित्युक्तम् ।

**अभि.—** ॥ **पक्षवचनमिति** । साध्यविशिष्टतया पक्षवचनमित्यर्थः । उदाहरणं लक्षयितुं दृष्टान्तं लक्षयति ॥ **व्याप्तिग्रहणेति** ॥

**आद.—** ॥ **पक्षवचनं प्रतिज्ञेति** । वह्निमत्पर्वतादिरूपविशिष्टप्रतिपादकमित्यर्थः ।

**वि.—** ॥ **यस्त्वयमेवेति** । व्याप्त्यनुभवादिरूपं यत्परोपदेशमनपेक्ष्य स्वसामग्रीत एवोत्पद्यते तत्स्वार्थानुमानमित्यर्थः ॥ **यत्त्विति** । व्याप्तिज्ञानतत्स्मरणलिङ्गज्ञानरूपं यत्तु परोपदेशमपेक्ष्योत्पद्यते तत्परार्थानुमानमित्यर्थः ॥ **परोपदेशस्त्विति** । स्वसामर्थ्यलिङ्गोपस्थापकवाक्यं त्वित्यर्थः । पञ्चावयवोपेतं वाक्यं परोपदेश इत्युक्तम् । के ते पञ्चावयवा इति जिज्ञासायामाह ॥ **तत्रेति** ॥ **यथा पर्वतोऽग्निमानितीति** । वचनमिति शेषः । सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयत इत्यभिप्रेत्याह ॥ **तत्रेति** । प्रतिज्ञायामित्यर्थः । साधनत्वख्यापकेति करणत्वप्रतिपादिका विभक्तिः पञ्चमीविभक्तिस्तदन्तमित्यर्थः ॥ **धूमवत्त्वादिति** । वचनमिति शेषः ॥ **सम्यग्व्याप्तिप्रदर्शनपूर्वकमिति** । व्याप्यस्य वचनं पूर्वं व्यापकस्य ततःपरमित्युक्तरीत्या व्याप्तिप्रदर्शनपूर्वकमित्यर्थः ॥ **यथा महानस इतीति** । वचनमिति शेषः । एवं यथा महानस इतीत्यनन्तरमयं पर्वतोऽग्निमानित्यनन्तरं निर्धूमः पर्वत इतीत्यनन्तरं तस्मात्पर्वतोऽग्निमानित्यनन्तरं शेषो द्रष्टव्यः ।

(१९) प्र.प.— **प्रतिज्ञाहेतूदाहरणान्युदाहरणोपनयनिगमनानि वा त्रय एवावयवा इति भाट्टाः । उदाहरणोपनयौ द्वावेवेति बौद्धाः तदेतदसत् । व्याप्तिद्वैविध्यनिराकरणेनोदाहरणोपनयद्वैविध्यस्यापि निराकृतत्वात् । नियमानुपपत्तेश्च । न हीदं वाक्यमागमतया व्याप्त्यादिबोधकम् । येनाकाङ्क्षाद्यनुसारेण पञ्चावयवादिनियमः स्यात् । परस्य परस्मिन्नाप्त्यनिश्चयात् । निश्चये वा प्रतिज्ञामात्रेण पूर्तेर्हेत्वाद्यभिधानवैय्यर्थ्यात् । किन्तु गृहीतव्याप्त्यादेः पुरुषस्य तत्स्मारकत्वादिनाऽगृहीतव्याप्त्यादेस्तु तज्जिज्ञासाजनकत्वेनोपयुज्यते । व्याप्तिस्मरणादिकं चैतैश्चतुर्भिरपि प्रकारैर्भवदनुभूयते । तत्किमनेन नियमेन ।**

**जना.—** ॥ **तदेतदिति** । उदाहरणद्वैविध्यं पञ्चैव त्रय एवावयवा इत्यादिनियमो न चेत्यर्थः ॥ **नियमेति** । पञ्चैव त्रय एवेत्यादिनियमानुपपत्तेरित्यर्थः । पञ्चावयवनियमं वदन्वादी प्रष्टव्यः । पञ्चत्र्याद्यवयवप्रयोक्तरि वादिनि किमाप्तिनिश्चयो नास्त्युतास्तीति । आद्यपक्षेऽवयवनियमं भिनत्ति ॥ **न हीति** । इदं वाक्यं वादिवाक्यमित्यर्थः । आगमतयाऽऽप्तवाक्यत्वविधया । आप्त्यनिश्चयात् यथार्थमेवायं

वदतीति विश्वासाभावादित्यर्थः । तथा च वादिना पञ्चावयवादिप्रयोगेऽपि यथार्थमेवायं वदतीति निश्चयाभावेन पुनराकाङ्क्षोदयात्तन्निवृत्त्यर्थमवयवान्तरप्रयोगस्यावश्यकत्वान्न पञ्चावयवादिनियम इति भावः । परस्य परस्मिन्नाप्तिनिश्चयोऽस्तीति द्वितीयपक्षे बाधकमाह ॥ **निश्चये वेति** । यथार्थमेवायं वदतीति विप्रलम्भकत्वाभावादिघटिताप्तिनिश्चये वेत्यर्थः ॥ **हेत्वादीति** । परस्मिन्नाप्तिनिश्चय-सत्त्वेनास्तिकस्य मन्वादिस्मृतितः सन्ध्यावन्दनादिकर्तव्यतानिश्चयवत्प्रकृतेऽपि प्रतिज्ञामात्रेण साध्य-सिद्धेः सप्रमाणमेवायं वदिष्यतीति निश्चयसत्त्वेन हेत्वादिरूपप्रमाणाकाङ्क्षाविरहाद्धेत्वाद्यभिधान-वैय्यर्थ्यमित्यर्थः । तथा च वाक्यश्रोतुर्वादिन्याप्तिनिश्चयेऽनिश्चये वा पक्षद्वयेऽप्यवयवनियमोऽनुपपन्न इति भावः । तर्हि वादिवाक्यं कथं बोधकमिति पृच्छति ॥ **किन्त्विति** । उत्तरमाह ॥ **गृहीतेति** । तथा च पररीत्या व्याप्तिपक्षधर्मताभ्यां वाऽस्मद्रीत्या व्याप्तिसमुचितदेशवृत्तित्वाभ्यां वा विशिष्टलिङ्ग-स्मृतिर्यावता भवति तावदेव वक्तव्यम् । तावदभिधानं चावयवनियमाभावेऽप्युपपद्यत इत्याह ॥ **व्याप्तिस्मरणादिकमिति ॥ एतैश्चतुर्भिरिति** । पञ्चेत्येकः प्रकारः । उदाहरणान्ता उदाहरणादयो वा त्रय इति पक्षद्वयम् । उदाहरणोपनयौ द्वावेवेत्येकः ॥ **एवं चतुर्भिरित्यर्थः** । भवत् ज्ञायमानम् ।

**राघ.**— ॥ **नियमानुपपत्तेश्चेति** । पञ्चैवावयवास्त्रय एव द्वावेवेति नियमानामयोगाच्चेत्यर्थः । तां व्यनक्ति ॥ **न हीत्यादिना ॥ आकाङ्क्षाद्यनुसारेणेति** । अग्निमानित्युक्ते कुत इति प्रमाणाकाङ्क्षायां धूमवत्त्वादिति हेतूक्तौ कथमस्याग्निसाधकतेति सामर्थ्यजिज्ञासायां प्राधान्यक्रमेण व्याप्तिपक्षधर्मतयो-रुक्त्यर्थमुदाहरणोपनयौ सर्वस्य बुद्ध्यारोहाय निगमनमित्याकाङ्क्षायोग्यताद्यनुसारेणेत्यर्थः । परस्य प्रतिवादिनः । परस्मिन्वादिनि । गृहीतव्याप्त्यादेरित्यादिपदेन पक्षधर्मताग्रहः । व्याप्त्यादि-स्मरणाद्यर्थमप्यवयवनियमोऽपेक्ष्यत इत्यत अह ॥ **स्मरणादिकं चेति ॥ एतैश्चतुर्भिः प्रकारैरिति** । पूर्वोक्तप्रकारैरित्यर्थः । भट्ट(मतो)तथागतोक्तप्रकारद्वयमुपेत्य चतुर्भिरित्युक्तम् ।

**विज.**— भट्टमतेनावयवनियममाह ॥ **प्रतिज्ञेति** । बौद्धमतेनाह ॥ **उदाहरणेति** । तार्किकोक्तो-दाहरणादिद्वैविध्यं तावद्दूषयति ॥ **व्याप्तीति** । व्यतिरेकव्याप्तिगमकत्वमादायोदाहरणादिद्वैविध्य-मुक्तम् । तस्या गमकनिषेधादित्यर्थः । अवयवनियममपि दूषयति ॥ **नियमेति** । ननु कथं नियमानु-पपत्तिः । यावता कुत्र किं साध्यमित्याकाङ्क्षायां प्रतिज्ञा कुत इत्यत्र हेतुः । कथं गमकत्वमित्यत्रो-दाहरणम् । उपनयश्च गमकतौपयिकरूपताप्रदर्शनाय । बाधसत्प्रतिपक्षयोः सतोर्गमकत्वा-सम्भवात्तदभावज्ञानानुवादभूतनिगमनमन्यप्रयोजनाभावात्प्रयुज्यत इत्याकाङ्क्षैव तार्किकमते नियामिका । मीमांसकस्य त्वबाधितत्वज्ञानस्यानुमित्यहेतुत्वात्पक्षधर्मतायाश्च धूमवत्त्वादिति हेतुप्रयोगाभ्युपगमेन

हेतुवचनेनैव प्रदर्शनान्निगमनोपनययोरनपेक्षणात्प्रतिज्ञादित्रयम् । उपनयनिगमनाभ्यां वा पक्षधर्मतासाध्यत्वयोर्बोधनादुदाहरणेन व्याप्त्युपदर्शने उपनयेन च व्याप्तस्य लिङ्गस्य पक्षधर्मताप्रदर्शने हेत्ववयवकृत्यस्यापि कृतत्वादवयवद्वयनियमोऽप्यपेक्षानुसारेणैवेत्यत आह ॥ **न हीति** ॥ **आप्तीति** । आप्तत्वेत्यर्थः ॥ **तज्जिज्ञासेति** । व्याप्त्यादिज्ञानानुकूलजिज्ञासाजनकधूमाद्युपस्थितिजनकत्वेनेत्यर्थः ।

**वेदे.**— ननु कथं नियमानुपपत्तिः । हेत्वाकाङ्क्षाप्रयोजकत्वेन प्रतिज्ञाया आवश्यकत्वे ततो हेत्वाकाङ्क्षायां लिङ्गस्वरूपमात्रबोधकहेतुवाक्यप्रयोगे कथमस्या गमकतेति जिज्ञासायां व्याप्तिपक्षधर्मता रूपसामर्थ्यद्वयबोधनायोदाहरणोपनययोः प्रवृत्तिः । ततः सर्वस्यैकबुद्ध्यारोहायैकवाक्यतामापादयितुं निगमनमपेक्षितमित्याकाङ्क्षाद्यनुपपत्तिरेवावयवनियमकल्पिकेत्यत आह ॥ **न हीदमिति** । आगमतयाऽऽप्तवाक्यतया ॥ **चतुर्भिरिति** । नैयायिकसौगताभ्यामुक्तप्रकारद्वयम् । मीमांसकोक्तं च प्रकारद्वयमिति प्रकारचतुष्टयं बोध्यम् ॥ **अनुभूयत इति** । अयं भावः । मीमांसकादीनां स्वस्वनियमानुसारेण त्र्यवयवद्व्यवयवप्रयोगे पञ्चावयवनियमवादिनां नैयायिकादीनां व्याप्त्यादिमल्लिङ्गोपस्थितिर्भवति न वा । नेति पक्षे नैयायिकादिर्मीमांसकादीन्न निराकुर्यात् । तदुक्तलिङ्गाबोधात् । एवं मीमांसकादयोऽपि न तान्निराकुर्युः । तदुक्तलिङ्गाबोधात् । प्रत्युत परस्परं स्वस्वावयवनियमसंरक्षणायैतेषां कथान्तरारम्भः स्यात् । तत्राप्युक्तरीत्या परस्परमबोधे स्वस्वावयवनियमसमर्थनानुपपत्तिरिति वादिप्रतिवादिनोर्मूकीभाव एवापद्येत । तस्मात्समयबन्धानुसारेण स्वस्वरीत्या प्रयोगे परस्परं बोधो भवतीत्याद्य एव पक्षोऽङ्गीकार्यः । एवं तर्हि पञ्चावयवादिनियमाभावेऽपि व्याप्त्यादिमल्लिङ्गबोधोऽनुभूयत इति सर्वैरङ्गीकृतत्वान्न तन्नियमो युक्त इत्यर्थः ।

**अभि.**— ॥ **न हीदमिति** । आगमतया बोधके आकाङ्क्षाक्रमेण पञ्चावयवानां सार्थक्यमिति तुष्यतु दुर्जन इति न्यायेनोक्तमिति बोध्यम् । एतेन निश्चये वा हेत्वभिधानवैय्यर्थ्यमित्युत्तरग्रन्थविरोध इति परास्तम् ॥ **एतैः प्रकारैरिति** । तार्किकोक्तप्रकार एको मीमांसकोक्तप्रकारद्वयं बौद्धोक्त एकप्रकार इति प्रागुक्तैश्चतुर्भिः प्रकारैरित्यर्थः ।

**वि.**— ॥ **तदेतदसदिति** । तन्नैय्यायिकोक्तमेतद्भाट्टोक्तमित्यर्थः ॥ **ननु नियमानुपपत्तिश्चेति** । पञ्चावयवा इति नियमो युक्त इत्युक्तम् । यावता व्याप्तिपक्षधर्मताविशिष्टलिङ्धीस्तावदाकाङ्क्षाक्रमेण वक्तव्यम् । अन्यथा न्यूनतापातात् । तत्र साध्यानुपस्थितौ हेत्वाकाङ्क्षैव नोदेतीति साध्योपस्थित्यर्थं प्रतिज्ञातावशक्यशङ्का । कस्मादिदं ज्ञेयमित्याकाङ्क्षायां लिङ्गस्वरूपप्रतिपादकं धूमादिहेतुवचनम् । तत्र लिङ्गस्य सामर्थ्यजिज्ञासायां प्रथमं व्याप्तिप्रदर्शनार्थमुदाहरणम् । पश्चात्पक्षधर्मताप्रदर्शनार्थमग्निव्याप्त-

धूमवानयमित्युपनयः । ततः सर्वस्यैकबुद्ध्यारोहायैकवाक्यतामापादयितुमुपसंहाररूपं निगमनं चापेक्षितमिति पञ्चावयावनामपेक्षितत्वादित्यत आह ॥ **न हीदमिति** । इदं परोपदेशात्मकमागम-तयाऽऽप्तवाक्यतयेत्यर्थः । पक्षधर्मत्वमादिशब्दार्थः ॥ **येनेति** । आप्तवाक्यतया बोधकत्वेनेत्यर्थः ॥ **आकाङ्क्षाद्यनुसारेणेति** । श्रोतुर्जिज्ञासानुसारेणेत्यर्थः । विप्रलम्भराहित्यं सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयत इति परोक्तनियमश्चादिशब्दार्थः ॥ **स्यादिति** । उच्यत इति शेषः ॥ **गृहीतव्याप्त्यादेरिति** । गृहीता निश्चिता व्याप्तिरादिः पक्षधर्मता येन तस्येत्यर्थः ॥ **तत्स्मारक-त्वादिनेति** । तस्य व्याप्त्यादेरित्यर्थः । तत्स्मरणहेतुसंस्कारोद्बोधकत्वमादिपदेन गृह्यते ॥ **तज्जिज्ञासा-जनकत्वेनेति** । तत्तस्माद्व्याप्तिपक्षधर्मताविशिष्टलिङ्गस्मृत्यादेरनियतावयवैर्जायमानवदनेन पञ्चावयवा इत्यादिनियमेन किं फलं न किमपीत्यर्थः । एतैः पञ्चावयवादिरूपैः प्रकारः परोपदेशप्रभेदैर्बुद्धि-सौक्ष्म्यमान्द्यलक्षणवैचित्र्याज्जायमानोऽनुभूत इत्यर्थः । न चावयवनियमाभावे न्यूनादिनिग्रहोद्भावनं न स्यादिति वाच्यम् । यथोदाहरणे दृष्टान्तोक्तिः । यच्छब्दतच्छब्दयोर्वीप्साविशेष्यकण्टकोद्धारः । असाधकतानुमानं चानियतमिति न्यायमते समयसम्बन्धानुसारेण न्यूनाद्युद्भावनम् । यथा चोदाहरणादि कालस्त्रयोऽवयवा इति भट्टमतेऽप्राप्तकालाद्युद्भावनम् । तथाऽस्मत्पक्षेऽप्युक्तवक्ष्यमाणपक्षेष्वेतं पक्षमाश्रित्यैव वक्तव्यमिति बुद्धिसौक्ष्म्यमान्द्यरूप वैलक्षण्यमपेक्ष्य लोकशास्त्रप्रवाहतो मार्गेण यावती पक्षधर्मताविशिष्टलिङ्गोपस्थितिर्भवति तावद्वक्तव्यमिति वा समयसम्बन्धानुसारेण न्यूनतादि-निग्रहोद्भावनोपपत्तेरनियतावयवपक्षो युक्त इति बोध्यम् । तदुक्तं प्रमाणलक्षणटीकायाम् । न चैवमवयवाभ्युपगमव्याघातात् । यस्य यावता विना न बोधस्तं प्रति तदभिमानस्येष्टत्वात् । विचित्रबुद्धयो हि पुरुषा इति ।

**(२०) प्र.प.— सम्भवन्ति चान्येऽपि प्रकाराः । पर्वतोऽतिग्रमान्धूमवत्त्वान्महानसवदिति वा । धूमवान्पर्वतोऽग्निमानिति हेतुगर्भं पक्षवचनं वा । विवादेनैव प्रतिज्ञासिद्धौ कुतः पर्वतोऽग्नि-मानिति प्रश्ने धूमवत्त्वादिति हेतुमात्रं वा । पर्वतस्याग्निमत्त्वे किं प्रमाणमिति पृष्टे धूमवत्त्वमिति लिङ्गोक्तिमात्रं वा । धूमवन्महानसवत्पर्वतोऽग्निमानिति सप्रतिज्ञं हेतुगर्भं दृष्टान्तवचनं वा । अग्निव्याप्यो धूमोऽत्र पर्वतेऽस्तीत्युपनयो वा । व्याप्त्यादिमद्धूमवत्त्वात्पर्वतोऽग्निमानिति निगमनं वेति । सांव्यावहारिकैश्चैते प्रकाराः सर्वेषु शास्त्रेष्वित्येवं प्रकारमनुमानमिति ।**

**जना.— ॥ महानसवदिवेति ।** इति प्रतिज्ञाहेतूदाहरणैकदेशदृष्टान्तवचनमात्रेण वेत्यर्थः । अनुमानमुद्राभिज्ञस्य व्याप्तिग्रहणस्थल उक्ते व्याप्तिस्मृतिर्भवत्येवेति न न्यूनता । व्याप्तिवाचकतुशब्दस्तु यो यो धूमवानसावसावग्निमानित्युदाहरणभागान्तरेऽपि नास्तीति भावः ॥ **पक्षवचनं वेति ।**

अग्निव्याप्तधूमवान्पर्वतोऽग्निमानिति पक्षवचनं वेत्यर्थः । अत्र धूमवत्त्वादिति पञ्चम्यन्ताभावेऽपि लोके शास्त्रे च हेतुगर्भप्रयोगान्दृष्टवतो व्युत्पन्नस्य धूमवत्त्वं हेतुरिति धीर्भवत्येवेति न न्यूनतेति भावः ॥ **हेतुमात्रं वेति** । ननु प्रतिज्ञाभावेन साध्यानुपस्थित्या न्यूनतेत्यत आह ॥ **विवादेनैवेति** । अत्र धूमवत्त्वादिति हेतुश्रवणजनिताकाङ्क्षाशामकप्रतिज्ञाया अभावेऽपि प्रश्नस्थेनाग्निमानित्यनेन धूमवत्त्वादित्यस्यान्वयान्नापार्थकतेति ज्ञेयम् ॥ **दृष्टान्तवचनं वेति** । अत्र महानसवदिति व्याप्तेर्धूमवदिति दृष्टान्तवचनेन दृष्टान्तविशेषणेन च पक्षधर्मतायाश्चोपस्थितिरिति न न्यूनता । न चैवं वादिवाक्यस्याप्याप्तवाक्यवदनुसरणीयत्वे निग्रहोद्भावनं न स्यादिति वाच्यम् । प्रमापकतांशत्यागेन ज्ञापकत्वांशे लोके शास्त्रे प्रकृतरीत्यनुसारिणो वादिवाक्यस्याप्यनुसरणीयत्वात् । अन्यथाऽग्निमानित्युक्तेऽग्निशब्दस्य चित्रमूलाद्यर्थत्वमादायार्थान्तराद्युद्भावनं न स्यात् । यत्तु सुधायां सादृश्यसम्बन्धादिकं किमप्यन्वेष्टव्यमित्यादिना व्याप्तिपक्षधर्मतयोरन्यतरस्मिन्नुक्तेऽन्यस्य स्मृतिर्भविष्यतीत्युक्तिः सा दृश्यते खलु लोके पदैकदेशादितोऽपि पदार्थस्मरणादिकमित्युक्तिवदर्धवाक्याभिप्राया वैकोक्तिमात्रेणान्यस्मृतिमत्पुरुषविशेषाभिप्रायां वा कैमुत्याभिप्राया वा न तु द्वयोरन्यतरदेवाभिधेयमित्यभिप्राया वा । अत एव विष्णुतत्त्वनिर्णयटीकायां स्मरणं तु यदैकदेशादिभिरपि दृष्टं किमुत प्रतिज्ञादिभिरित्युक्तम् । अत एव च ब्रह्मतर्के युक्तिः प्रतिज्ञारूपा च हेतुदृष्टान्तरूपिका । तथोपनयरूपा च परा निगमनात्मिकेत्यवयवपञ्चकस्य प्रत्येकं परार्थानुमानत्वं प्रतिज्ञायान्ते व्याप्तिमाश्रित्य केवलमित्युक्त्या सर्वत्रापि व्याप्त्यभिधानं सूचितम् । विष्णुतत्त्वनिर्णयटीकायामपि व्याप्तिमाश्रित्येत्यपि पक्षान्तरमित्युक्त्या प्रतिज्ञादावपि व्याप्त्यभिधानं सूचितम् । प्रमाणलक्षणेऽपि हेतुगर्भा प्रतिज्ञा केवलाऽपि । सिद्धौ प्रतिज्ञायां हेतुमात्रं च । दृष्टान्तः सप्रतिज्ञो हेतुगर्भ इति व्याप्यरूपलिङ्गवचनार्थकेन हेतुशब्देन सर्वत्रापि व्याप्त्यभिधानं सूचितम् । सुधायामपि स्वसामर्थ्यलिङ्गप्रतिपादकं वाक्यमुपदेश इत्युक्तम् । उक्तानामेकादशप्रकाराणां सर्ववादिव्यवहारसिद्धत्वं वदन्नेवानुमानविभागमुपसंहरति ॥ **सांव्यावहारिका इति** ॥ **सर्वेषु शास्त्रेष्विति** । चार्वाकशास्त्रातिरिक्तसर्वशास्त्रेष्वित्यर्थः । अयमाशयः । पञ्चावयवादिनियमोऽपि विप्रतिपन्नं मीमांसकं प्रति नैयायिकेनानुमानेनैव साध्यः । तस्य प्रत्यक्षाद्यविषयत्वात् । पञ्चावयवादिप्रयोगेण तत्साधने मीमांसादिकान्प्रत्याधिक्यं स्यात् । तत्परिहारार्थं पञ्चावयवादिनियमस्य तात्त्विकत्व साधने चानवस्था स्यात् । तद्रीत्या त्र्यवयवादिप्रयोगे च नैयायिकस्य न्यूनत्वापातात्तन्मतरीत्या प्रयोक्तव्यमिति वा यावता व्याप्त्यादिविशिष्टलिङ्गधीस्तावत्प्रयोक्तव्यमिति वा समयबन्धे च मीमांसकादिना स्वाभिमतावयवसिद्ध्यर्थं कृतेन त्र्यवयवादिप्रयोगेण नैयायिकस्य व्याप्तिस्मृतिरावश्यकीति स्वीकृतत्वेन नैयायिकैरेव पञ्चावयवनियमस्त्याज्यः । एवं मीमांसकादिभिरपि स्वाभिमतो

नियमस्त्याज्य इति कथं तन्नियम इति ।। **इत्येवंप्रकारमिति** । अत्राद्य इतिशब्दो हेत्वर्थः । यतः सांव्यावहारिकास्तस्माद्धेतोरित्यर्थः । द्वितीय इतिशब्दोऽनुमानविभागनिरूपणसमाप्त्यर्थः ।। **एवं प्रकारमिति** । कार्यकारणाकारणदृष्टसामान्यतोदृष्टसाधनदूषणस्वार्थपरार्थभेदभिन्नमित्यर्थः ।

**राघ.**— ।। **सम्भवन्ति चेति** । व्याप्तिस्मरणलिङ्गज्ञानजननविषय इति योज्यम् ।। **महानसवदिति** । व्याप्तिग्रहस्थले उक्तेऽभिज्ञस्य व्याप्तिस्मृतिर्भवतीति भावः ।। **धूमवान्पर्वत इति** । वह्निव्याप्यधूमवानिति विशेषणं ध्येयम् । लोके शास्त्रे च हेतुगर्भप्रयोगान् दृष्टवतो व्युत्पन्नस्य धूमवत्त्वं हेतुर्भवत्येवेति भावः ।। **विवादेनैवेति** । अग्निमानिति कश्चिन्नाग्निमानित्यन्य इति विवादेनाग्निमान्पर्वत इति प्रतिज्ञासिद्धावित्यर्थः । अत्र पक्षे धूमवत्त्वादित्यस्य प्रश्नस्थेनाग्निमानित्यनेनान्वयान्नापार्थकता । अत्राप्यग्निव्याप्यधूमवत्त्वादिति विशेषणं ध्येयम् । धूमवत्त्वमित्यत्राप्यग्निव्याप्यधूमवत्त्वमिति ज्ञेयम् ।। **धूमवन्महानसवदिति** । अस्मिन्पक्षे महानसवदित्यनेन व्याप्तिः । धूमवदिति दृष्टान्तविशेषणेन पक्ष (धर्म) तायाश्चोपस्थितिरिति भावः । इति पदस्येत्यन्ये प्रकारा इति पूर्वेणान्वयः । एते सप्तापि प्रकारा नालौकिका इत्याह ।। **सांव्यावहारिकाश्चेति** । सम्यग्व्यवहारसिद्धा इत्यर्थः । उपसंहरति ।। **इत्येवं प्रकारमनुमानमिति** । इति हेतोरस्मदुक्तप्रकारमेवानुमानमिति ।

**विज.**— परसिद्धप्रकारैरनियममुक्त्वा स्वयं प्रकारान्तराणि सप्तविधान्याह ।। **सम्भवन्तीति** । प्रतिपाद्यपुरुषवैचित्र्यादिति भावः । नन्वागमतया न्यायस्य बोधकत्वाभावेऽपि कथकसम्प्रदायसिद्धतयाऽवयवनियमो युक्त इत्यत आह ।। **सांव्यवहारिकाश्चेति** । कथकसम्प्रदायोऽसिद्धः शास्त्रकारैरेव पूर्वोक्तनानाप्रकारैर्व्यवहारादिति भावः । एवं च स्वमते वाक्याद्यघटकोपपत्तिप्रतिपादकवाक्यत्वं न्यायत्वम् । वाक्याघटकपदेन प्रतिज्ञादिपञ्चकादिप्रयोगे तदन्तर्गतहेतुवचनस्य मात्रस्य न्यायत्वं परिहृतम् ।

**वेदे.**— ।। **अन्येऽपीति** । प्रमाणलक्षणब्रह्मतर्काद्युक्ता इत्यर्थः । ननूक्तप्रकारेषु न्यूनाधिक्योद्भावनमेव कस्मान्न क्रियते । युक्तमवोयं ब्रवीतीति वादिनि प्रतिवादिनः प्रत्ययाभावादित्यत आह ।। **सांव्यावहारिका इति** । प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमित्यादि तत्र तत्र शास्त्रे परीक्षकै-र्व्यवहृताः सर्व एवैते प्रकारा इत्यर्थः । तथा च परीक्षकव्यवहारातिक्रम एव न्यूनाधिकमुद्भावनीयमिति भावः । उपसंहरति ।। **इतीति** । निरूपितमिति शेषः ।

**वि.**— न केवलपरोक्ताश्चत्वार एव परोपदेशाः किन्त्वन्येऽपि सम्भवन्तीत्याह ।। **सम्भवन्ति चान्येऽपीति** । तानेव प्रकारान्दर्शयति ।। **पर्वतोऽग्निमानित्यादिना** । महानसवदित्यनन्तरं वचनमिति

शेषः । आद्यपक्षे व्याप्तिग्रहणस्थल उक्तेऽनुमानमुद्राभिज्ञस्य व्याप्तिस्मृतिर्भवत्येवेति न्यूनता । न हि यो यो धूमवानसावग्निमानित्युदाहरणभागान्तरेऽपि व्याप्तिवाचकं पदमस्ति येन तदावश्यकं स्यादिति भावः । द्वितीयेऽपि लोकशास्त्रयोर्हेतुगर्भविशेषणानि दृष्टवतो व्युत्पन्नवतो धूमवत्त्वस्य लिङ्गत्वप्रतीतेः प्रतिज्ञासाध्यस्य लिङ्गधर्मिणश्च प्रतीतेर्व्याप्तिपक्षधर्मताविशिष्टलिङ्गप्रतीतिर्भवतीति न्यूनतेति भावः । सुधायाम् । न सामर्थ्यलिङ्गवत्प्रतीतिजनकं वाक्यं परोपदेशयुक्तत्वात् । अत्राप्यग्निना व्याप्तो धूमः पर्वतेऽस्तीत्युपनयो वा व्याप्त्यादिधूमवत्त्वात्पर्वतोऽग्निमानिति निगमनं चेत्युक्तत्वाच्च । धूमवानित्यत्राग्नि व्याप्येति पूरणीयम् । एवं तृतीये धूमवत्त्वादित्यत्र चतुर्थे धूमवत्त्वमित्यत्रेदं दूषणं ज्ञातव्यम् । यद्वा सुधायां संस्कारोद्बोधकं सादृश्यसम्बन्धादिकं किमपेक्ष्यमित्यादिना व्याप्तिपक्षधर्मतयोरन्यतरस्मिन्नुक्तेऽन्यस्य स्मृतिर्भविष्यतीत्युक्तत्वान्नात्रेदं विशेषणमुपादेयम् । न चैवं न्यूनतावभाससामर्थ्यलिङ्ग-स्मृतित्वादिकं तावत एव वक्तव्यत्वेनैतावताऽप्यनुमानमुद्राभिज्ञस्य सामर्थ्यलिङ्गस्मृत्यादेर्जायमान-त्वात्। प्रतिवादिन आकाङ्क्षाक्रमेण व्याप्त्यादेर्द्वितीयतृतीयकक्ष्यासूक्तिसम्भवाच्च । न ह्युत्तरक्रमेणा-काङ्क्षिष्यमाणं सर्वमादावेव वाच्यमिति श्राद्धनियमः । अन्यथाऽऽकथापरिसमाप्ति यावद्वक्तव्यं तावत आदावेवोक्तिप्रसङ्गात् । न चैवं सति प्रकारचतुष्टये वोपनये वा निगमनं चेति स्वोक्तप्रकारद्वये वाऽऽधिक्यं स्यादिति वाच्यम् । लोकशास्त्रे च सूक्ष्मबुद्धिमन्दबुद्धिपुरुषापेक्षयोभयथाऽपि प्रयोगदर्शना-न्मन्दबुद्धिपुरुषापेक्षया सामर्थ्यलिङ्गोपस्थित्यर्थमेवं प्रयोगस्य वक्तव्यत्वान्नोक्तशङ्कावकाश इति तृतीये हेतुना लिङ्गोपस्थिते विवादलब्धं प्रतिज्ञया प्रश्नवाक्येन वा साध्यधर्मस्य लिङ्गधर्मिणश्चोपस्थितेः सामर्थ्यलिङ्गस्मृत्यादिसम्भवान्न न्यूनता । धूमवत्त्वादित्यस्य प्रश्नस्थेनाग्निमानित्यनेनान्वयेनापार्थकताऽ-पीति भावः । चतुर्थे धूमवत्त्वमित्यस्य प्रश्नस्थेन प्रमाणमित्यनेनान्वयान्नापार्थकता । प्रत्यक्ष-शब्दातिरिक्तस्य प्रामाण्यलिङ्गविधयैवेति जानतो भवत्येव । ततः सामर्थ्यलिङ्गस्मृत्यादिकमिति न न्यूनताऽपीति भावः । लिङ्गोक्तिमात्रमित्यत्र पदं पञ्चम्यन्तविभक्तिव्यावृत्त्यर्थमुपात्तं च । पञ्चमे धूमवदिति दृष्टान्तविशेषणे च पक्षधर्मतायाश्च स्मृतिर्न न्यूनतेति भावः ॥ **निगमनं वेतीति** । इत्यन्ये प्रकाराः सम्भवन्तीति पूर्वेणान्वयः । सर्वैरपि वादिभिरेवमेव व्यवहारान्नियमपक्षो युक्त इत्यत आह ॥ **सांव्यावहारिकाश्चैत इति** । एते परोक्ता अस्मदुक्ताः परोपदेशप्रभेदाः सर्वे सर्वेषु शास्त्रेषु सांव्यावहारिकाः । पर्वतोऽग्निमान्धूमवत्त्वान्महान-सवदित्यादिरूपेण व्यवह्रियमाणश्चेति हेतोरेवंप्रकार-मस्मदुक्तानियतावयववाक्यप्रभेदोपेतमनुमानं परोपदेशात्मकमनुमानमित्यर्थः । अनियतावयववाक्यं स्वशास्त्रे प्रयुञ्जता परेणावयवनियमाभिधाने क्रियाविरोधः स्यादिति भावः । यद्वा सर्वेषु शास्त्रेष्वितीति शब्दः परोपदेशनिरूपणपरिसमाप्तौ वर्तते । एवंप्रकारमनुमानमित्यनेनानुमानविभागनिरूपणमुपसंहरति

॥ **सर्वेष्विति** । एवंप्रकारं कार्यानुमानमकार्यकारणानुमानं चेत्यादिप्रकारेणास्मदुक्तविभागोपेत-मनुमानमित्यर्थः ।

## उपपत्तिदोषाः

(२१) प्र.प.— **अथ निर्दोषोपपत्तिरनुमानमित्युक्तम् । के तत्रोपपत्तिदोषाः । यत्सद्भावे लिङ्गाभिमतं ज्ञानमेव न जनयति संशयविपर्ययौ वा करोति ते दोषाः । ते द्विविधाः । अर्थवचनदोषभेदात् । तत्र साक्षादुपपत्तेरेव दोषौ विरोधासङ्गती । तद्द्वारा वचनस्यापि । वचनदोषौ न्यूनाधिक्ये । वचनद्वारेणार्थस्यापि । तत्र योग्यताभावो विरोधः । आकाङ्क्षाविरहोऽसङ्गतिः । अवश्यवक्तव्यस्यैकदेशमात्रवचनं न्यूनम् । सन्निध्यभावविशेषः** (?) **आकाङ्क्षितस्यैवान्येन कृतकार्यस्य वचनमाधिक्यम् ।**

**जना.**— अथानुमानाभासान्निरूपयितुं वृत्तानुवादपुरस्सरं प्रश्नमुत्थापयति ॥ **अथेत्यादिना** । उत्तरमाह ॥ **यत्सद्भाव इति** । अत्र यथार्थानुमितिप्रतिबन्धकत्वमनुमानदोषसामान्यलक्षणमभिहितम् । तच्च ज्ञानमात्रप्रतिबन्धकत्वेन वा संशयादिजनकत्वेन वोभयथापि सम्भवति । तथा च बाधादाव-सिद्ध्यादौ च न परस्पराव्याप्तिरित्याशयेनोपपादयति ॥ **ज्ञानमेव न जनयतीत्यादिना** । ननु यादृच्छिकसंवादिनि लिङ्गत्वेनाभिमतस्यासिद्ध्यादिदोषे ज्ञानमात्रप्रतिबन्धकत्वाभावात्संशयविपर्यय-जनकत्वाभावाच्च कथमसिद्ध्यादेर्दोषत्वमिति चेन्न । यादृच्छिकसंवादिस्थले विपर्ययाद्यनुत्पादेऽप्यन्यत्र लिङ्गाविभ्रमेण भ्रमानुमित्युत्पादाद्यज्जातीयानन्तरमिति लक्षणानुसारेण सिद्ध्यादेर्भ्रमानुमिति साधनत्वेन दोषत्वमित्येके । अन्ये तु कथं तत्र यथार्थानुमितिरित्याशङ्कचोत्तेजका भावविशिष्टस्यैवा-सिद्ध्यादेर्दोषत्वाद्यादृच्छिकसंवादिनि च विषयसत्त्वरूपस्योत्तेजकस्य सत्त्वान्न यथार्थानुमितिप्रतिबन्धे इति समादधते ॥ **तद्द्वारेति** । तत्प्रतिपादनद्वारेत्यर्थः ॥ **वचनद्वारेणेति** । वचनप्रतिपाद्यत्व-निमित्तेनेत्यर्थः ॥ **योग्यताभाव इति** । परस्परमन्वययोग्यताभाव इत्यर्थः । न्यूनत्वस्य वचनदोषत्वं कुत इत्यत आह ॥ **सन्निध्यभावेति** । स च सन्निध्यभावविशेष इति क्वचित्कः पाठस्तु लेखक-प्रमादादायात इति नपुंसकलिङ्गपरामर्शानुपपत्तिचोद्यानवकाश इति बोध्यम् । वाक्यार्थप्रमोपयुक्त-सन्निधिविघटकतया न्यूनत्वं वचनदोष इति भावः ॥ **आकाङ्क्षितस्यैवेति** । अत्र वचनमाधिक्य-मित्येवोक्ते पर्वतो वह्निमान्धूमवत्त्वादित्यत्रातिव्याप्तिः । अतोऽन्येनेत्यादि । आद्यविशेषणानुपादाने पर्वतो वह्निमान्धूमवत्त्वादित्यत्र धूमवत्त्वं हेतुर्हेतुशब्दश्च हिनोतेर्धातोस्तुन्प्रत्यये सति कृदन्तं पदमिति वक्ष्यमाणार्थान्तरोदाहरणे गतम् । अत आद्यविशेषणम् । अवशिष्टं सुबोधम् ।

**राघ.**— ॥ **अथेति** । प्रश्नार्थोऽयमथशब्दः । पृच्छ्यत इत्यर्थः । उत्तरमाह ॥ **यत्सद्भाव इति** । प्रमाप्रतिबन्धकत्वं दोषत्वमित्यनुगमो ध्येयः । अर्थपदार्थं वदन्नेव तद्दोषं विभज्याह ॥ **तत्रेति** । तयोर्मध्ये । साक्षाद्वचनद्वारमन्तरेणेत्यस्य विवरणार्थमेवकारः । अर्थस्याप्युपपत्तेरपीत्यर्थः ॥ **योग्यताभाव इति** । वह्निरनुष्णो वस्तुत्वादित्यादौ । पर्वतो नाग्निमानित्यादावाकाङ्क्षाविरहः ॥ **अवश्येति** । पर्वतो धूमवत्त्वादित्यादि । वचनदोषख्यापनायोक्तं सान्निध्याभावविशेष इति ॥ **आकाङ्क्षितस्येत्यादि** । पर्वतोऽग्निमानित्यादाविति ज्ञेयम् ।

**विज.**— एवं सविभागमनुमानं निरूप्यानुमानतदाभासविवेकायाभासनिरूपणार्थं पृच्छति ॥ **अथेति** । उत्तरमाह ॥ **यदिति** । ज्ञानं प्रमा । परोक्तदोषाणां स्वाभिमतदोषान्तर्भावं वक्तुं दोषभेदमाह ॥ **त इति** । अर्थदोषमाह ॥ **तत्रेति** । उपपत्तिनिष्ठतया पुरुषनिग्रहकावित्यर्थः । एवमुत्तरत्र । वचनदोषमाह ॥ **वचनेति** । ननु वचनस्य दोषेऽप्युपपत्तेरदुष्टतयाऽनुमितिजनकं स्यादित्यत आह ॥ **वचनद्वारेणेति** । कथमर्थादित्यागेनाकुलचित्तस्य न्यूनादिनाऽर्थाप्रत्ययेनोपपत्तेरबोधकत्वादिति भावः । विरोधादिपदार्थमाह ॥ **तत्रेति** ॥ **आकाङ्क्षेति** । एकोपस्थितिप्रयुक्तजिज्ञासायोग्यताभावोऽर्थे आकाङ्क्षाविरहः । शब्दे तादृशजिज्ञासानुकूलोपस्थित्यनुकूलत्वाभावः ।

**वेदे.**— अनुमानतदाभासविवेकाय पदव्यावृत्त्योपपत्तिदोषान्पृच्छति ॥ **अथेति** ॥ **क इति** । किंलक्षणकाः कति किं संज्ञकाश्चेत्यर्थः । अत्र क्रमेणोत्तरं वदन्नुपपत्तिदोषसामान्यलक्षणं तावदाह ॥ **यत्सद्भाव इत्यादिना** । इदमत्राकूतम् । यत्सद्भावे लिङ्गाभिमतमनुमितिप्रमां न जनयति स उपपत्ति-दोषः प्रमाजनकाभावश्च संशयविपर्ययजनके ज्ञानाजनके च लिङ्गाभिमतेऽनुगत इति नानुगमशङ्केति । ननूत्तरग्रन्थपर्यालोचनया समयबन्धादिसाधारणानामपि विरोधादीनां लक्ष्यताप्रतीतेस्तत्राव्याप्तमे-तल्लक्षणमिति चेदुच्यते । अनुमानमात्रनिष्ठविरोधादीनामेवात्र लक्ष्यत्वेनाभिप्रेततया तेषामेतल्लक्षण-लक्ष्यत्वाभावात् । तर्हि समयबन्धादिसाधारणविरोधादिलक्षणानुक्तिर्दोष इति चेत् । लिङ्गाभिमतं ज्ञापकत्वाभिमतमिति व्याख्यानेऽस्यैव तल्लक्षणत्वोपपत्तेः । अत एव ज्ञानमिति दोषा इति च सामान्येनोक्तम् । अन्यथाऽनुमित्युपपत्तिदोषा इति चावक्ष्यत् । एवं चात्रापि प्रमाप्रतिबन्धकत्वमेव दोषत्वम् । तत्प्रतिबन्धकत्वं च ज्ञानाजनकत्वेन क्वचिद्विपरीतज्ञानजनकत्वेन विवक्षितमिति नाननुगति-रिति द्रष्टव्यम् । साक्षाद्वचनोपधानेन विनोपपत्तेरेवेति प्रकृतत्वादुक्तम् । वस्तुतस्त्वर्थस्यैवेत्यर्थः । प्रायेण दोषाणां विरोध एवान्तर्भावात् । तमेवादावुद्दिशति ॥ **विरोधेति** । समयबन्धादिसाधारण-विरोधादिलक्षणमाह ॥ **तत्रेत्यादिना** । शब्ददोषोपपादनायाह ॥ **सान्निध्येति** । आकाङ्क्षितस्येत्यर्थान्तर निरासायोक्तम् ।

अभि.— ॥ **के तत्रोपपत्तिदोषा इति** । किंलक्षणकाः कियन्त इत्यर्थः ॥ **यत्सद्भाव इति** । अभिमतग्रहणं किमर्थं यत्सद्भावे लिङ्गं न जनयतीत्येवं किं नोच्यते । नैवं शङ्क्यम् । तथा सतीत्यसिद्धिसङ्ग्रह एव स्यात् । असिद्धिसद्भावे लिङ्गस्य ज्ञानजनकत्वान्न त्वव्याप्तिसङ्ग्रहः । अव्याप्तेर्लिङ्गनिष्ठत्वाभावेन लिङ्गस्य तत्सद्भावप्रयुक्तज्ञानजनकत्वाद्यभावात् । अभिमतग्रहणे पुनः क्रियमाणे तस्यापि सङ्ग्रहो भवति । ननु नैतत्प्रयोजनं युक्तम् । अव्याप्तेः सर्वथोपपत्तिदोषगतत्वाभावेनोपपत्तिदोषत्वासम्भवात् । उपपत्तिदोषलक्षणावसाने च तदसङ्ग्रहस्य गुणत्वात् । न हि यद्यज्जातीयस्य सर्वथा सामर्थ्यविघातकं न भवति तत्तस्य दोष इति वक्तुं शक्यते । अतिप्रसङ्गादिति चेन्न । अवश्यं तन्निष्ठ एव तस्य दोषः । किं तर्हि तदाभासत्वव्याप्यमपि । अनैकान्त्यादिकं तु लिङ्गाभासत्वव्याप्यमिति भवति तद्दोषः । उपपत्तित्वनिर्णयाय व्यभिचाराद्यभावपरामर्शात् । अर्थवचनदोषभेदात्साक्षाद्वचनदोषद्वारवददोषत्वभेदाद्द्विविधा इत्यर्थः ॥ **साक्षादुपपत्तेरेवेति** । नन्वस्तु विरोधोपपत्तेर्दोषः । समबलप्रमाणेन वा विरोधे व्याप्तिनिश्चयाभावेन लिङ्गाभिमतस्य ज्ञानाजनकत्वसम्भवात् । असङ्गतिस्तु कथमुपपत्तिदोषः । ज्ञानजनकत्वाहेतुत्वादिति चेन्न । असङ्गतस्य हेतोः प्रकृतसाध्यज्ञानाजनकत्वस्य सर्वानुभवसिद्धत्वात् ॥ **वचनद्वारेणेति** । न्यूनाधिक्याभ्यां वचने दुष्टे तदर्थोपपत्तेः प्रमाजनकत्वाभावादुपपत्तेरपि न्यूनाधिक्ये दोषावित्यर्थः । ननु वचनस्य न्यूनत्वे उपपत्तेरसम्यगवबोधादस्तु प्रमाजनकत्वाभावः । वचनाधिक्ये तु कथमबोधकत्वम् । उपपत्तेः सम्यग्बुद्धित्वादिति चेत् । सत्यम् । अस्ति पर्वतोऽग्निमान्धूमात् प्रकाशविशेषवत्त्वाच्चेत्यत्राद्यस्य लिङ्गस्य विवक्षितप्रमाजनकत्वं द्वितीयस्य तु नास्ति । आद्येनैव संशयविपर्ययाज्ञानानां निवृत्तत्वात् । एवं च विवक्षितप्रमाजनकत्वाभावादाधिक्यदोषो भवति । दार्ढ्यादिप्रयोजनसद्भावे तु विवक्षितप्रमाजनकत्वादाधिक्यं न दोषः ॥ **अवश्यवक्तव्येति** । यं प्रति यावद्वक्तव्यं तदेकदेशवचनं न्यूनमित्यर्थः । एतेनावयवनियमस्य निराकृतत्वेन न्यूनत्वं न दोष इति परास्तम् । न्यूनत्वं कथं शब्ददोष इत्यत आह ॥ **सन्निधीति** ।

आद.— ॥ **श्रीमदानन्दतीर्थार्यहृदयामलमन्दिरः । श्रीनिवासः सतां बन्धुर्दहत्वज्ञानसञ्चयम् ॥** **यत्सद्भाव इति** ॥ **ज्ञानं न जनयतीति** । पूर्वमसिद्धं साध्यविषयकज्ञानं न जनयति तथा च प्रकृतहेतुनिषठप्रकृतसाध्यविषयकफलप्रमाजननानुकूलशक्त्यभावप्रयोजकत्वमुपपत्तिदोषत्वमिति फलितम् । बाधितादावसदर्थविषयकत्वेन व्यभिचारादौ व्याप्त्यभावेनासिद्ध्यादौ समुचितदेशवृत्तित्वाभावेन सिद्धसाधकादौ सिद्धार्थविषयकत्वदोषेण साध्यविषयकसफलप्रमाजननानुकूलशक्त्यभावोऽस्ति । तत्प्रयोजकत्वं न बाधादिदोषेष्वक्षतमिति लक्षणसमन्वयः । प्रयोजकत्वं च ज्ञापकत्वम् । नातो स्वरूपसम्बन्धप्रयोजकत्वाभावेऽपि न दोषः । ननु सिद्धसाधनतार्थान्तरत्वादिकं न हेत्वाभासः ।

अनुमितिप्रतिबन्धकयथार्थज्ञानविषयताशून्यत्वात् । परैर्हेतुदोषत्वेनागणितत्वाच्चेति चेत् । सिद्धसाधनाय हेतुमुपन्यस्यतो निग्रहाभावप्रसङ्गात् । एवं च न सिद्धसाधनतादेः पृथङ् निग्रहस्थानत्वम् । सिद्धसाधनतास्थले पुरुषस्यैवायं दोषो न हेतोः । व्याप्तिपक्षधर्मतावत्त्वेनादुष्टत्वात् । इच्छाकालेऽनुमितेरपि जननादिति वाच्यम् । तर्हि बाधस्य पृथग्घेत्वाभासत्वं न स्यात् । पक्षे साध्याभावस्य पक्षदोषत्वेन हेतोरपराधाभावात् । तत्र हेतोः पक्षधर्मता नास्तीति चेत् । तर्ह्यसिद्धिरेव हेतुदोषताऽस्तु न बाधप्रतिरोधयोः । आद्यक्षणावच्छिन्नो घटो गन्धवान्पृथिवीत्वादित्यादौ दोषान्तराभावेऽपि बाधप्रतिरोध मात्रेण हेतोर्दुष्टत्वाङ्गीकारानुपपत्तिश्च । न च बाधितादौ भ्रमजननाकूलशक्तिमत्त्वरूपाविषयवृत्तित्वं हेतुदोष इति चेत् । प्रकृतेऽपि सिद्धार्थविषयकानुमितिजननानुकूलमत्त्वं हेतोर्दोषः । न च ज्ञानकरणस्य प्रमाकरणत्वरूपप्रामाण्याभावज्ञापकत्वेन दोषत्वं बाधादेरिति चेत् । तर्हि सिद्धसाधकत्वस्यापि सफलत्वघटितप्रामाण्यानुकूलशक्त्यभावज्ञापकत्वेन दोषत्वसम्भवात् । यथा शब्दस्य सिद्धार्थत्वे वैय्यर्थ्येनानुपादेयत्वम् । तत एव सफलत्वघटितप्रामाण्याभावश्च । एवमनुमानस्थलेऽपि परार्थत्वादनुमानस्य वैय्यर्थ्यादनुपादेयत्वप्रयोजकत्वेन सफलत्वघटितप्रामाण्याभावज्ञापकत्वेन दोषत्वमङ्गीकर्तुमुचितम् । केचित्तु सिद्धस्थले हेतौ सदसत्त्वविचारस्य निष्प्रयोजनत्वेन तत्र प्रवृत्त्यभावेन तत्र सद्धेतुनिश्चयानुपपत्त्या सद्धेतुत्वेनाप्रमितत्वरूपाज्ञानासिद्धिसम्पादकत्वाद्धेतुदोषत्वमेवावश्यकम् । कचित्सिद्धसाधकहेतौ पूर्वमेव व्याप्त्यादेर्निश्चितत्वेन दृढतरसंस्कारवशात्परामर्शसम्भवेऽपि परामर्शाभाव सम्पादनस्वरूपयोग्यत्वाद्दुष्टत्वमेव । यादृच्छिकसंवाद्यनाप्तवाक्यवदिति वदन्ति ।

किञ्चानुमितेः सिद्धिप्रतिबद्ध्यत्वाङ्गीकारात्सिद्धिविषयस्य दोषत्वं भवन्मतेऽपि दुर्वारम् । यज्ज्ञानसामान्यस्य प्रतिबन्धकता तस्यैव दोषत्वम् । इच्छाकाले सिद्धेर्नानुमितिप्रतिबन्धकत्वमिति न तद्विषयस्य दोषत्वमिति वाच्यम् । तर्हि साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यस्य दोषत्वं न स्यात् । पक्षधर्मताज्ञानाभावकाले तज्ज्ञानस्यानुमित्यप्रतिबन्धकत्वात् । न च पक्षधर्मताज्ञानसमानकालीनज्ञानसामान्यस्यास्ति प्रतिबन्धकत्वम् । तादृशस्यापि दोषत्वमङ्गीक्रियत इति वाच्यम् । तर्हि जलहेतुकस्थले वह्न्यभावावच्छेदेन जलघटितस्य वह्न्यभाववज्जलवतोऽपि दोषत्वप्रसङ्गात् । इच्छाभावकालीनस्य यद्रूपावच्छिन्नज्ञानसामान्यस्य प्रतिबन्धकत्वं तद्रूपावच्छिन्नस्य दोषत्वानङ्गीकारे बीजाभावाच्च । असाधारण्यादेः परामर्शरूपकारणविघटकत्ववत्सिद्धेरपि पक्षतारूपकारणविघटकत्वात् । एवं विशिष्टद्वयघटितस्य दोषत्वानङ्गीकारे बीजाभावाच्च । तत्र साधारण्यदोषत्वमन्येषां दोषत्वं नास्तीत्यत्र विशेषहेत्वभावात् । स्वप्रक्रियामात्रस्यानादरणीयत्वात् । विशिष्टद्वयघटितस्य सिद्धेश्च दोषत्वं नाङ्गीकार्यमिति प्राचीनोक्तेरप्यदृष्टेश्च । न च विभागव्याघातः । बाधादिषु

यथासम्भवमन्तर्भावयितुं शक्यत्वात्। न च सिद्धसाधनताया हेतुदोषेषु भवन्मतेऽप्यगणितत्वात्किमर्थमयमायास इति वाच्यम्। असङ्गतेर्हेतुदोषत्वेन कथितत्वात्। सिद्धसाधनमसङ्गतमिति प्रमाणलक्षणेऽन्तर्भावस्योक्तत्वात्। एवमाधिक्यस्यापि। न च सिद्धसाधनतास्थले हेतुर्दुष्ट इति व्यवहारापत्तिः। इष्टापत्तेः। अनुमितावसिद्धत्वं विहाय सफलत्वनिवेशात्। मननादिस्थले सिद्धसाधनताया न दोषत्वम्। तत्र साध्यस्य सिद्धत्वेऽपि दार्ढ्याय वा प्रतिवादिनिराकरणसम्पादकचातुर्यविशेषाय वा प्रयोजनान्तराय वा लिङ्गविशेषणसाध्यानुमितेरिष्टत्वात्। एवं तत्राधिक्यमपि न दोषः। न्यूनता तु हेत्वनुपस्थापनेनाज्ञानासिद्धिसम्पादकत्वाद्दोषः। यद्यपि हेतोराधिक्ये सिद्धसाधनतैव भवति तथाऽप्येकदैव हेतुद्वयोपन्यासेन तत्प्रसक्तिः। तत्र केनापि हेतुनाऽनुमितेरजातत्वात्। आधिक्यस्यैव प्रथमतः स्फूर्तेः। अत एव नासङ्गतिः। प्रकृतसाधकहेतोर्जिज्ञासितत्वेनोभयोरपि हेतुवाक्ययोराकाङ्क्षारूपत्वात्। अत आधिक्यस्य पृथग्दोषत्वं ज्ञेयम्। अत एव सिद्धसाधनताया न सिद्धसाधनत्वेन दोषत्वं किन्त्वसङ्गतित्वेन। अतः सिद्धसाधनतायाः क्वचिद्दोषत्वाभावेऽपि न क्षतिः। अधिकविशेषणस्य हेतुशरीरे प्रक्षेपे तु व्याप्यत्वासिद्धिः। यादृशविशिष्टे व्याप्तेर्भानं प्रथमतस्तत्रैव स धर्मोऽङ्गीकर्तव्यः। तदभिन्नविशिष्टान्तरे तु तदभेदप्रयोज्यतद्धर्माश्रयत्वमेव न साक्षात्। तदपि सति प्रमाणे यथा विधित्वं निषेद्धव्यं च भावाभावयोः। एवं च प्रमेयत्वादिविशेषणाघटिते धूम एव व्याप्तेः प्रथमतः प्रमाणेन गृहीतत्वात्तत्रैव वह्निव्याप्तिर्न प्रमेयत्वघटित इत्यनुमिति प्रयोजिका या व्याप्तिस्तदभावधीसम्पादनद्वाराऽनुमितिजननानुकूलशक्त्यभावसम्पादकत्वाद्दोषत्वम्। तादृशविशेषणबोधकपदस्याधिक्येनाधिक्यस्य दोषत्वम्। न च साक्षाद्वेतरतो वा व्यर्थविशेषणघटिते प्रमेये धूमादौ वह्निव्याप्तिरस्त्येव। प्रमेयधूमोऽपि वह्निव्याप्यलोकव्यवहारादिति वाच्यम्। तादृशव्यवहारस्याप्रमाणत्वात्। प्रामाण्ये वा साक्षाद्व्याप्त्याश्रय एव तादृशशक्त्यङ्गीकारेणोक्तविशिष्टे इतराप्रयोज्यव्याप्त्याश्रयत्वाभावादनुमितिजनकत्वरूपशक्तेरभावात् कारणाभिन्नेष्वनेकविशिष्टेषु कारणत्वशक्त्यङ्गीकारे गौरवात्। न च भेदादनेकेषु तत्कल्पना नास्त्येवेति शङ्क्यम्। अभेदेऽपि भेदस्य विशेषस्य वा सत्त्वात्तदभिन्नरूपादावपि स्पार्शनत्वाद्यापत्तेः। यदि च नवीनमतरीत्या व्यर्थविशेषणावच्छेदेनापि व्याप्तिग्रहः प्रामाणिकस्तर्हि तादृशहेतुवाक्यं प्रयुञ्जतः पुरुषस्यैवाधिक्यं निग्रहस्थानं न हेतुदोषत्वं तादृशाधिक्यस्येति मन्तव्यम्। अर्थान्तरता तु स्फुटमन्यथासिद्ध्याऽनुमितिजनकत्वाभावप्रयोजकः। प्रयोजकत्वं ज्ञानद्वारा साक्षाद्वेत्यन्यदेतत्। दृष्टान्ते साध्यासाधनवैकल्ययोश्च व्याप्तिधीप्रतिबन्धनद्वाराऽनुमितिजनकत्वरूपशक्त्यभावसम्पादकत्वाद्धेतुदोषत्वं मन्तव्यम्। सहचारग्रहहेतुत्वात् साध्यसाधनयोः सहचारग्रहप्रतिबन्धकत्वादिति। एवमन्यत्रापि स्ववचनविरोधरूपापसिद्धान्त-

जात्यादेरपि हेतौ तादृशशक्त्यभावसम्पादकतया हेतुदोषत्वं बोध्यम् । विरोधसामान्यस्य हेतुदोषत्वमित्यनुक्तत्वेन केषाञ्चिज्जात्यादीनां हेतुदोषत्वाभावेऽपि न दोषः । एवमसङ्गत्यादेरपि । पररीत्या हेत्वाभासविभागादिकं तु प्रतिबन्धकाभावस्य प्रकृतकार्यं प्रति कारणत्वाभावेन तद्घटितलक्षणासम्भवेन केषाञ्चिद्दोषाणामपरिगणनेनानुद्भाव्यतावच्छेदकानामुद्भाव्यतावच्छेदकत्वकथनेन चायुक्तत्वात्परित्यक्तम् । तत्प्रकारं च तत्र तत्र प्रदर्शयिष्यामः । इदं च लक्षणं दुषधात्वर्थ एव । तथा हि । धूमेन ह्रदे वह्निसाधने बाधो दोष इत्यत्र दुषधातोः सफलप्रमाजननानुकूलशक्तेरभावः प्रयोजकश्चार्थः । प्रमात्वं च स्वव्यधिकरणप्रकारानवच्छिन्नविधिरूपविषयतानिरूपकज्ञानत्वम् । धूमेन वह्निसाधन इत्यस्य धूमलिङ्गकह्रदोद्देश्यकवह्निविधेयकानुमितावित्यर्थः । साधनपदोत्तरसप्तम्या विषयत्वमर्थः । तथा च धूमलिङ्गकवह्निविधेयकह्रदोद्देश्यकानुमितिविषयकसफलप्रमाजननानुकूलशक्त्यभावप्रयोजकाभिन्नो बाध इत्यन्वयबोधः । शक्तेरपि सिद्धान्ते सविषयकत्वाङ्गीकारात् । अनुमितिविषयकत्वं शक्तौ युज्यते । ननु प्रकृतानुमितिविषयकप्रमाजननानुकूलशक्तेरप्रसिद्धेरिति वाच्यम् । प्रतियोग्यप्रसिद्धेरसतः प्रतीतिविषयत्ववादिनामस्माकमदूषणत्वात् । साधन इत्यस्य सतिसप्तमीत्वतात्पर्यसत्त्वे तु सति सप्तम्या उत्तरकालीनत्वमित्यर्थः । उत्तरकालीनत्वं न तदधिकरणकालोत्तरकालवृत्तित्वम् । तदधिकरणत्वं च तज्ज्ञानाधिकरणत्वमेव । उत्तरकालवृत्तित्वं चोत्तरकालवृत्तिज्ञानविषयत्वम् । तस्य शक्त्यभावेऽन्वयः । तथा च प्रकृतानुमितिविषयकज्ञानोत्तरकालीनज्ञानविषयीभूत शक्त्यभावप्रयोजको बाधादिरिति बोधः ।

न चास्मिन्पक्षे ह्रदे वह्निसाधने दूरस्थत्वादिकं दोष इत्यपि व्यवहारः स्यात् । तादृशानुमितिज्ञानोत्तरकालीनज्ञानविषयत्वदूरस्थत्वादिप्रयोज्यचक्षुरादिनिष्ठशक्त्यभावेऽबाधितत्वादिति वाच्यम् । अनुमितिज्ञानप्रयोज्यज्ञानविषयत्वस्यैव सप्तम्यर्थत्वाङ्गीकारेण दोषाभावात् । यद्वा शब्दतः सफलप्रमाजननानुकूलशक्त्यभावेऽनुमितिज्ञानोत्तरज्ञानविषयत्वमात्रभानेऽपि तात्पर्यबलात्पाश्चात्यमानसबोधेऽनुमितिज्ञानतादृशशक्त्यभावज्ञानयोः प्रयोज्यप्रयोजकभावस्य भानेनानुमितिविषयकज्ञानप्रयोज्यत्वस्य दूरस्थत्वादिप्रयोज्यशक्त्यभावज्ञाने बाधात् । प्रकृतिहेतुनिष्ठतादृशशक्त्यभावज्ञानं च भवत्यनुमितिज्ञानप्रयोज्यं बाधादिदोषाणामनुमितौ भ्रमत्वादिज्ञानजननद्वारा तज्जनकहेत्वादौ तादृशशक्त्यभावज्ञापकत्वात् । व्यभिचारादीनामप्यनुमितौ तद्धेतुकत्वज्ञानानन्तरमेव तद्धेतौ व्यभिचारज्ञानस्य तद्धेतौ शक्त्यभावज्ञापकत्वात् । अनुमितिप्रयोज्यज्ञानविषयीभूतशक्त्यभावप्रयोजकत्वमिति मन्तव्यम् । न चैवं प्रमेयत्वविशिष्टबाधो दोष इति व्यवहारापत्तिः । प्रमेयत्वविशिष्टबाधादौ तादृशप्रयोजकत्वानङ्गीकारात् । प्रमेयत्वविशिष्टबाधस्य शुद्धबाधाभिन्नत्वेऽपि विशेषबलाच्छुद्धवृत्तिप्रयोजकत्वस्य विशिष्टावृत्तित्वसम्भवात् । अनङ्गीकारश्चाङ्गीकारे मानाभावादेवेति । अत एव विशिष्टान्तरघटितत्वं न

लक्षणे देयम् । नापि धात्वर्थघटकम् । प्रयोजनाभावात् । ह्रदे वह्निसाधने धूमो दुष्ट इत्यत्र तादृशशक्त्यभाववान् क्तप्रत्ययार्थः । दोषपदार्थस्य प्रयोज्यतासम्बन्धेन शक्त्यभावेऽन्वयः । तथा च दोषप्रयोज्यप्रमाजननानुकूलशक्त्यभाववान्धूम इत्यन्वयबोधः । न च रासभो दुष्ट इति व्यवहारापत्तिः । इष्टापत्तेः । धूमेन वह्निसाधने रासभो दुष्ट इति व्यवहारापत्तिः । यल्लिङ्गकत्वमनुमितावुपस्थितं भवति शक्त्यभावत्त्वरूपेण तल्लिङ्गोपस्थापकत्वनियमेन शक्त्यभाववद्धूमाभेदस्य रासभे बाधान्न व्यवहार इति । अथवा किञ्चिन्निष्ठसमफलप्रमाजननानुकूलशक्तिरभावप्रयोजकश्च दुषधातोरर्थः । धूमेनेत्यादि-समाहारस्थले तृतीयार्थोऽभेदः किञ्चित्पदेऽन्वेति । धूमेनेत्यस्य द्वेधा भेदाभानाङ्गीकारात् । अनुमितौ धूमलिङ्गकत्वस्यापि भानसम्भवात् । हेतुवाचकपदाभावे धातोः सकाशादेव लक्षणया प्रकृतहेतुत्वं शक्त्यभावे भासते । तथा च प्रकृतहेतुनिष्ठतादृशशक्त्यभावप्रयोजक प्रयोज्यतादृशशक्त्यभाववानिति बोधोदयेन प्रकृतहेतुवृत्तित्वविशिष्टशक्त्यभावस्य रासभादौ बाधादेव तादृशव्यवहारः । अत एव न दूरस्थत्वादिकं दोष इति व्यवहारापत्तिः । प्रकृतहेतुनिष्ठशक्त्य भावाप्रयोजकत्वात् । धूमसाधने वह्नित्वेनायं दुष्ट इत्यत्र तृतीयार्थवैशिष्ट्यस्येदम्पदार्थ एवान्वयः । तद्व्यक्तित्वेन न दुष्ट इत्यत्र तद्व्यक्तित्व विशिष्टे दुष्टभेदः प्रतीयते । स चास्त्येव । भेदाभावे तु तत्प्रतिनिधिर्विशेष एव । नञा प्रत्यायत इत्यनुसन्धेयम् । प्रमेयो दुष्ट इत्यादयो प्रकृतहेतुतात्पर्यका व्यवहाराः स्वीक्रियन्त एव । एवं प्रमेयं दोष इत्यादयो न व्यवहारा आपादयितुं शक्यन्ते । दोषादिपदानां स्वसमभिव्याहृतपदाद्यादृशविशिष्ट-मुपस्थाप्यते तादृशविशिष्टवृत्तित्वस्य स्वोपस्थाप्यव्यवच्छेदकधर्मबोधकत्वं व्युत्पत्तिसिद्धमिति ।

प्रमेयत्वविशिष्टे दोषपदार्थस्यान्वये तादृशशक्त्यभावप्रयोजकत्वस्य दोषपदार्थतावच्छेदकस्यापि धर्मिपारतन्त्र्येण प्रमेयत्वविशिष्टे भानेन तस्य बाधात् । प्रमेयत्वविशिष्टव्यभिचारादाविवात्रापि विशिष्टे उक्तप्रयोजकत्वाङ्गीकारे मानाभावात् । वस्तुतस्तु नेदं लक्षणं दोषपदार्थः । सर्वत्रापकर्षप्रयोजक-स्योत्कर्षाभावप्रयोजकस्य वा दोषपदार्थत्वात् । उत्कर्षापकर्षौ चाखण्डोपाधी सनिरूपकौ । अयमस्मादुत्कृष्टोऽस्मादपकृष्ट इति प्रत्ययात् । यत्र यो धर्मोऽपेक्षितस्तत्र तदभावोऽपकर्षप्रयोजकः । तद्वत्ता चोत्कर्षप्रयोजिका । एवं च ज्ञानकरणेषु सफलप्रमाजननानुकूलशक्तिमत्त्वमुत्कर्षप्रयोजकम् । तदभावश्चापकर्षप्रयोजकः । तत्प्रयोजकं च करणदोषलक्षणत्वेनोक्तम् । अत एव चक्षुषो दूरस्थत्वं दोषः । शब्दस्याकाङ्क्षाविरहो दोषः । इत्यादौ चक्षुर्वृत्त्यपकर्षप्रयोजकः । शब्दवृत्त्यपकर्षप्रयोजक इत्येव बोधः । अपकर्षप्रयोजकत्वं च सफलप्रमाजननानुकूलशक्त्यभावज्ञापनद्वारेति । तथाऽत्राप्यपकर्ष-प्रयोजकत्वमेव दोषशब्दार्थः । न च ह्रदे वह्निसाधने बाधो दोषः । धूमो दुष्ट इत्यादौ साधनपदार्थादिः कुत्रान्वय इति चेत् । तत्र साधनपदार्थोऽनुमित्युद्देश्यककृतिः । साधने कृते सतीत्यादावनुमित्यनुकूल-

व्यापारः सप्तम्याः प्रयोज्यत्वमर्थः । तस्य दोषपदार्थतावच्छेदकेऽपपर्षेऽन्वयः । तथा च ह्रदोद्देश्यक वह्निविधेयकानुमित्यनुकूलव्यापारप्रयोज्यापकर्षप्रयोजको बाध इति बोधः । प्रयोज्यत्वं च तज्ज्ञानाधीन-ज्ञानविषयत्वं ज्ञानकरणेष्वेव सफलप्रमाजननानुकूलशक्त्यभावो भ्रमजननानुकूला शक्तिर्वाऽपकर्ष-प्रयोजकः । ज्ञानकरणत्वे ज्ञाते तत्रोक्तशक्त्यभावे ज्ञाते सत्यपकर्षो ज्ञायते नान्यथा । भ्रमजनकत्वेनैव क्लृप्तेषु मन्त्रादिषूक्तशक्त्यभावज्ञानेऽप्यपकर्षज्ञानात्प्रत्युतभ्रमानुकूलशक्तेरेवोत्कर्षज्ञापकत्वं वर्तते । यादृशकार्योत्पादकत्वेन यज्ज्ञानं समीचीनतादृशकार्योत्पादनशक्तेरेवोत्कर्षज्ञापकत्वं वर्तते । यादृश-कार्योत्पादकत्वेन यज्ज्ञानं समीचीनतादृशकार्योत्पादनशक्तेरेवोत्कर्षः (ज्ञापक) हेतुत्वात् । एवं च प्रमारूपानुमित्युत्पादनाय हेतूपन्यासे कृते सति तेन च तत्र हेतौ सफलप्रमाकरणत्वप्रसक्तौ सत्यां पश्चात्तदभावज्ञानेनापकर्षो ज्ञायत इति हेतूपन्यासादिरूपव्यापार जन्यज्ञानविषयत्वरूपप्रयोज्यत्व-मपकर्षेऽस्तीति योग्यतानिर्वाहः । अत एव बाधो दोष इतिवद्दूरस्थत्वं न दोष इति व्यवहारः । तादृशानुमित्यनुकूलव्यापारस्य नेत्रनिष्ठापकर्षं प्रत्यप्रयोजकत्वात् । एवं धूमो दुष्ट इत्यादौ क्तप्रत्ययस्य धात्वर्थतावच्छेदकापकर्ष एवार्थः । तादृशानुमित्यनुकूलव्यापार ज्ञाप्यापकर्षप्रयोजकप्रयोज्यतादृशाप-कर्षाश्रयो धूम इति बोधः । धूमेन वह्निसाधने रासभो दुष्ट इति न व्यवहारापत्तिः । धूमलिङ्गकानु-मित्यनुकूलव्यापारज्ञाप्यापकर्षस्य रासभे बाधात् । एवं प्रमेयं दोषः । मेयत्वविशिष्टव्यभिचारो दोष इत्यादयोऽपि न व्यवहाराः । तत्तद्धर्मविशिष्टेषु व्यभिचारादि रूपापकर्षप्रयोजकाभिन्नेष्वपि तादृशापकर्षप्रयोजकत्वस्यानङ्गीकारात् । तस्य विशेषबलादुपपत्तेः । एवं च सर्वत्र दोषपदस्यैकार्थ-त्वेनैवोपपत्तौ नानार्थकत्वस्य मानाभावेनानुचितत्वान्नानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वावच्छिन्न-विषयताकधर्मावच्छिन्नाद्यर्थकत्वम् । तथा सति महानसे वह्निसाधने सिद्धसाधनतादोष इति वाक्यस्या-प्रामाण्यप्रसङ्गात् । एवं धूमो दुष्ट इति वाक्यस्याप्यप्रामाण्यप्रसङ्गात् । न चेष्टापत्तिः । दोषत्वाभावे सिद्धसाधनताया निग्रहस्थानत्वानुपपत्तेः । पञ्चानामेव हेतुत्वं नान्येषामिति नियमे प्रमाणाभावात् । सिद्धसाधकत्वार्थान्तरत्वादेर्हेतु- दोषत्वस्याङ्गीकृतत्वाच्च । अनुमितिप्रतिबन्धकज्ञानविशेषस्यैव दोषत्वेन सद्धेतुस्थलेऽपि प्रतिबन्धकज्ञानासम्भवेन तद्विषयीभूतपर्वतादेरपि दोषत्वापत्तेः । दुष्टादुष्टविभागस्यैवा-भावप्रसङ्गात् । प्रतिबन्धकज्ञानविषयीभूतविशिष्टस्यैव दोषित्वमिति चेत् । पाषाणमयत्ववत्पर्वतादेरपि दोषत्वापातात् । ज्ञानानवच्छिन्नप्रतिबन्धकताश्रयज्ञानविषयदोषस्यैव दोषत्वमिति चेत् । असाधारण्यस्य सत्प्रतिपक्षादेश्च दोषत्वाभावप्रसङ्गात् । स्वदर्शनाग्रहमात्रसिद्धनियमस्याप्रामाणिकत्वात् । अपकर्ष-प्रयोजकत्वस्य दोषशब्दार्थत्वेन क्लृप्तत्वेन तात्पर्येण महानसे वह्निसाधने सिद्धसाधनतादोष इति व्यवहारस्य वारयितुमशक्यत्वेन तत्साध्यकतत्पक्षकानुमितिबोधकपदसमभिव्याहृतदोष पदव्यवहार-

विषयत्वरूपशक्यतावच्छेदकाक्रान्तत्वेन सिद्धसाधनताया अपि लक्ष्यत्वेन तत्र भवदुक्तलक्षणस्याव्याप्तेरित्यादिकं स्वयमूह्यमित्यलं विस्तरेण । दोषं विभजति ॥ **त इति** ॥ **विरोधेति** । हेतुदोषाणां प्रायो विरोध एवान्तर्भावात्स्वार्थानुमानपरार्थानुमानसाधारण्याच्च विरोधस्य प्रथममुद्देशः । उद्देशक्रमेण विरोधं लक्षयति ॥ **योग्यतेति** । योग्यसाध्यनिरूपितव्याप्तिविशिष्टसमुचितदेशवृत्तित्वं योग्यता तदभाव इत्यर्थः । साध्यस्य योग्यत्वं च विरोधिप्रमाणविषयत्वम् । केचित्तु सम्भावित प्रतीतिकस्य साध्यसाधनभावसम्बन्धस्येति शेषः । तथा च सम्भावितप्रतीतिकस्य साध्यसाधनभाव सम्बन्धस्य योग्यताविरह इत्यर्थः । अहं मूक इति प्रतिज्ञायां नोक्तप्रतिज्ञाविरोधोद्भावनस्यावसरः । व्याहतेरेव स्फुटं प्रतीत्या विरोधोद्भावनं विना वादिनो निवृत्तेर्हेत्वाकाङ्क्षादेरनुदयेन हेतुदोषत्वाभावात् । ''सम्भावितः प्रतिज्ञाया अर्थः साध्येत हेतुने''त्युक्तेर्हेतुदोषोद्भावनस्यानवसरात् । अतः सम्भावित प्रतीतिकस्येति सम्बन्धविशेषणम् । स्वविरुद्धाविषयकस्यानाहार्य प्रतीतिविषयस्येत्यर्थः । सम्बन्धः साध्यत्वसाधनत्वरूपः । साध्यत्वं चानुमितिविषयविशिष्टत्वम् । तादृशानुमितिजननानुकूलशक्तिमत्त्वं साधनत्वम् । साध्ये साध्यत्वयोग्यता च स्वविषयेऽप्रामाण्यग्रहानास्कन्दित स्वासत्त्वग्राहकमानाविषयत्वम् । साधने तद्योग्यता न शक्तौ भ्रमाप्रयोज्यत्वम् । तथा स्वासत्त्वग्राहकाहीनबलप्रमाणाविषयविशिष्टविषयकानुमितिजननानुकूलभ्रमाप्रयोज्यशक्तिमत्त्वाभाव ज्ञापकत्वं विरोधत्वमिति निष्कर्षः। साध्यस्यासत्त्वग्राहकमानसत्त्वे तु विशिष्टस्य तादृशमानविषयत्वेन तदविषयीभूतविशिष्टविषयकानुमिति जननानुकूलशक्त्यभावो हेतौ ज्ञायत इति प्रतिज्ञार्थविरोधावगाहिमानसद्भावस्य विरोधरूपत्वं तादृशानुमितिजननानुकूलशक्त्यभावो हेतुनिष्ठोऽविषयवृत्तित्वमिति व्यवहारविषयो बाधः सत्प्रतिपक्षो वा कथायां न पृथगुद्भावनीयः । किन्तु प्रमाणविरोधत्वेन । अयं हेतुदोषज्ञापका इति हेतुदोषा इत्युच्यन्ते । अथवा निश्चितप्रामाण्यकानुमितिजननानुकूलशक्त्यभावज्ञापकत्वं विरोधत्वम् । अयं हेतुर्न प्रमात्वेन निश्चितजननानुकूलशक्तिमान् । अनुमितिविषयस्य प्रमाणविरुद्धत्वात् । यज्जन्यज्ञानविषयस्य प्रमाणविरुद्धत्वं तन्न प्रमात्वनिश्चयविषयताविशिष्टतज्ज्ञानजननानुकूलशक्तिमदिति व्याप्तिसत्त्वेन वैयधिकरण्यस्यादोषत्वात् । कथायां प्रमाणविरुद्धत्वादित्येव वक्तव्यम् । हीनबलस्य प्रमाणपदादुपस्थितेरभावेनाधिक्येनाधिकपदप्रयोक्तुर्निग्रहापत्तेः । दृष्टान्तविरोधो यद्यप्यव्याप्त्युन्नायक इति लिङ्गविरोधरूप एव न ततोऽतिरिक्तः । तथाऽपि कथायां साध्यवैकल्यत्वादिनैवोद्भाव्यता न त्वव्याप्त्युन्नायकत्वेनोद्भाव्यता । साध्यसाधनवैकल्ययोरेव प्रथममुपस्थितेः । तदुद्भावनमात्रेण वादिनिवृत्तेरिति ज्ञापनाय तयोः पृथग्ग्रहणमित्याहुः । ननु सुधायां साध्यसाधनयोः सम्बन्धविरहो विरोध इत्युक्तलक्षणे सिद्धसाधनकेऽतिव्याप्तिमाशङ्क्य साकाङ्क्षत्वे सतीति विशेषणं दत्तम् । उक्तलक्षणेऽति-

व्याप्तिप्रसक्तेरेवाभावेन तद्ग्रन्थस्यासङ्गतत्वप्रसङ्गेन नेदं लक्षणं ग्रन्थकृत्सम्मतमिति चेन्न । तद्ग्रन्थस्याभिप्रायविशेषसत्त्वेन दोषाभावात् । तथा हि । साध्यत्वयोग्यत्वं न केवलमुक्तमानाविषयकत्वं किन्त्वसिद्धत्वमपि सिद्धस्य साध्यतायोगात् । तदभावोऽसिद्धत्व विशिष्टोक्तमानविषयत्वाभावाभावः । तस्योक्तमानविषयत्वरूपत्वमिव सिद्धत्वरूपत्वमपि सम्भवति विशेष्यवति विद्यमानस्य विशिष्टाभावस्य विशेषणाभावरूपत्वात् । तथा च सिद्धत्वरूपसाध्यत्वायोग्य त्वस्य साध्यसाधनभावयोग्यताप्रयोजकत्वे सम्भवेन विरोधरूपत्वं सम्भवतीति शङ्काग्रन्थार्थः । असिद्धत्वविशिष्टोक्तमानाविषयत्वस्य साध्यत्वयोग्यतारूपत्वेऽपि प्रकृतेऽसत्त्वग्राहकमानविषयत्वरूपस्यैव साध्यत्वयोग्यत्वाभावस्य विरोधलक्षणे निवेशेनैव सिद्धसाधनकेऽतिव्याप्त्याभाव इत्याशयः । न तु विरोधलक्षणे साकाङ्क्षत्वं देयमिति । अतो न विरोधः । ननु सिद्धसाधनताया विरोधभेदत्वं कुतो नाङ्गीक्रियते । न च स्वार्थानुमानेऽपि विरोधस्य दोषत्वेन सिद्धसाधनतायास्तत्र दोषत्वाभावेन न विरोधरूपत्वमिति वाच्यम् । दृष्टान्ते साध्यसाधनवैकल्ययोः स्वार्थानुमाने सम्भवाभावेऽपि विरोधरूपत्वमिव सिद्धसाधनताया दोषत्वात् । असङ्गतित्वेनैवोद्भावनीयत्वेन तेन रूपेण दोषत्वस्यैव युक्तत्वात् ॥ **आकाङ्क्षाविरह इति** । विषयतयेत्यर्थः । आकाङ्क्षाविषयत्वाभाव इति यावत् । अयमप्यर्थदोषः । तद्द्वारा वचनस्यापि । तथा च जिज्ञासिताभिधायकत्वं वचनदोषः । परार्थानुमानस्थलेऽसङ्गतिः । स्वार्थानुमानस्थलेऽपि तस्याजिज्ञासितत्वेऽन्यस्य जिज्ञासितत्वे वा व्याप्त्यादिज्ञानप्रयोजकमानसविचारोत्पत्त्यभावेनानुमित्युत्पत्तेः । अनुमित्युत्पादप्रयोजकसामग्रीवैकल्ये परम्परया प्रयोजकत्वाद्दोषत्वमिति । न च शिष्यादीन्प्रति कृपया तदज्ञाताभिधानस्याप्य सङ्गतत्वापत्तिरिति वाच्यम् । सामान्यरूपेण जिज्ञासासत्त्वात् । न च तर्हि सभायामपि हेतुपदनिर्वचनादि कुर्वतोऽसङ्गतिर्न स्यात् । हेतुपदनिर्वचनज्ञानस्याप्यसिद्धत्वेनोक्त रीत्येच्छाविषयत्वसम्भवादिति वाच्यम् । हेतूपस्थित्यनन्तरं कर्मकव्याप्त्याद्याकाङ्क्षाया एव जायमानत्वेन तदानीं प्रकृतानुपयुक्तसामान्यविषयकेच्छाया एवासम्भवात् । अत एव साध्यसिद्धेः कालान्तरीयेच्छाविषयत्वेऽपि तदानीमिच्छाविषयत्वाभावात्तत्साधकस्यासङ्गतत्वम् । न च तदानीमेव पुरुषान्तरस्य तद्विषये जिज्ञासासम्भवेनाजिज्ञासितत्वं न सम्भवतीति वाच्यम् । स्वबोध्यत्वेनाभि मततत्तत्पुरुषीयतत्कालीनजिज्ञासाविषयताशून्यार्थाभिधायित्वस्यैव तत्काले तं पुरुषं प्रत्यसङ्गतित्वात् । न च शिष्यादेर्बोधनाय गुरोः प्रवृत्तिकाले शिष्यस्यासिद्धज्ञानसामान्येऽपि कारणान्तरबलाद्यदेच्छाभावस्तदानीं तद्वाक्यस्यासङ्गतत्वापत्तिरिति वाच्यम् । तद्वाक्यजन्यबोधेच्छां विना तद्वाक्यश्रवणादौ प्रवृत्त्यसम्भवेन सामान्यरूपेण तद्वाक्यजन्यबोधस्येच्छाविषयत्वस्यावश्यकत्वात् । तदभावेऽसङ्गतत्वमिष्टमेव । विशेषरूपेण जिज्ञासासामग्री सामान्यरूपेण जिज्ञासायां प्रतिबन्धिका ।

अतो हेतूपस्थित्यनन्तरं तस्य हेतोर्गमकतोपयुक्तव्याप्त्याद्याकाङ्क्षैवोत्पद्यते । न हेतुपदनिर्वचनज्ञानादौ सामान्यरूपेणापीच्छा सम्भवत्यतो तत्प्रदर्शकवाक्यसङ्गतत्वमेवेति बोध्यम् । अस्तु वाऽन्यत्र यथा तथा प्रकृते कथायां वक्ष्यमाणसङ्गतिरुक्तरूपैव । कथायां तु न्यायप्राप्तत्वाज्जिज्ञासोत्पद्यत एव । तदभावेऽसङ्गतिरेव । वादकथायां मननादिस्थले च फलविशेषाकाङ्क्षया सिद्धसाधनस्थले तत्साध्यफलेच्छया युक्तिविशेषाधीनसिद्धविषयिण्यनुमितिराकाङ्क्षितैव नासङ्गतिरित्यादिकं स्वयमूह्यम् । न्यूनतां लक्षयति ॥ **अवश्यमिति** । वाक्यैकदेशस्य वचनं न्यूनमित्येवोक्तावध्याहारसापेक्षस्य सर्वस्यापि वाक्यस्य न्यूनत्वापत्तिः । तथा चाथातो ब्रह्मजिज्ञासेति सूत्रस्य न्यूनता स्यादतोऽवश्यवक्तव्यस्येति । तस्य पदस्योच्चारणाभावेऽपि कर्तुर्व्यापारेण प्रकरणादिना वोपस्थितिः सम्भवति तद्भिन्नस्येत्यर्थः । अथात इति सूत्रे तु कर्तव्यत्वे प्रयोजनादिमत्त्वरूपहेतुकथनादेव कर्तव्यपदाध्याहारस्य ज्ञातुं शक्यत्वेन न तत्र न्यून्यतेति भावः । तथा च यावत्पदसमुदायं विना स्वतात्पर्यज्ञानं न सम्भवति तावत्पदसमुदायाघटितत्वं न्यूनत्वमित्यर्थः । आधिक्यं लक्षयति ॥ **आकाङ्क्षितस्यैवेति** । स्वनिवर्त्याकाङ्क्षानिवर्तकस्वसमानकर्तृकवाक्यान्तरविशिष्टत्वमाधिक्यमित्यर्थः । प्रमेयधूमादित्यत्रैतद्वाक्यनिवर्त्ये हेत्वाकाङ्क्षानिवर्तकं यद्धूमादिति वाक्यं तत्सहितत्वाल्लक्षणसमन्वयः । तादृशवाक्यासत्त्वे तद्विशिष्टत्वं येन केनापि सम्बन्धेन सम्भवत्येव । अथवा समानकर्तृकत्वसम्बन्धेन तद्विशिष्टत्वमेव लक्षणं न तु समानकर्तृकत्वं पृथग्विशेषणमिति । यद्यपि प्रमेयधूमादित्येकमेव वाक्यं न तद्वाक्यभिन्नं धूमादिति वाक्यान्तरमस्ति तत्र प्रमेयपदमधिकमस्तीति चेत् । तस्योक्ताकाङ्क्षानिवर्तकत्वाभावादिति प्रतिभाति । तथाऽपि समुदायभेदस्य प्रत्येकवृत्तित्वेन प्रमेयधूमादिति समुदायघटकधूमादिति समुदायेऽप्यस्त्येवेति बोध्यम् । अनाकाङ्क्षितपदप्रयोगे त्वसङ्गतिरेव नाधिक्यमिति ।

**श्रीनि.**— ॥ **तद्द्वारेति** । दुष्टार्थप्रतिपादकवचनस्यापि तेन दोषेण दुष्टत्वादित्यर्थः ॥ **योग्यताभव इति** । साधनाभिमतस्यार्थस्य साधनाभिमतेनार्थेन सम्भावितप्रतीतिकस्यापि साध्यसाधनभावस्य बाध्यलक्षणयोग्यताभाव इत्यर्थः ॥ **आकाङ्क्षाविरह इति** । एकोपस्थितिप्रयुक्तजिज्ञासायोग्यताभाव इत्यर्थः ॥ **सान्निध्याभाव इति** । अविलम्बेनोच्चरितत्वं सन्निधिः । तदभावश्च द्विविधो भवति । अवश्यवक्तव्यैकदेशोच्चारणानन्तरं विलम्बेनोच्चारणमनुच्चारणं चेति । तत्र द्वितीयोऽयं सान्निध्याभाव इति भावः ।

**वि.**— ॥ **अथेति** । सप्रकारोपपत्तिनिरूपणानन्तरमित्यर्थः । उपपत्तिदोषा उच्यन्त इति शेषः । उपपत्तिदोषनिरूपणस्यासङ्गतत्वशङ्कावारणायोपपत्तिदोषनिरूपणोपयोगिप्रश्नबीजं दर्शयति ॥

**निर्दोषोपपत्तिरिति ।** यद्वाऽऽरम्भार्थोऽयमथशब्दः । तथा चाथोपपत्तिदोषनिरूपणमारभ्यत इत्यर्थः । तदारम्भस्यासङ्गतत्वशङ्कावारणाय तन्निरूपणोपयुक्तप्रश्नबीजमाह ॥ **निर्दोषोपपत्तिरिति ॥ के तत्रेति ।** निर्दोषपदार्थभूतनिर्दोषत्वज्ञानोपयुक्तज्ञानविषये दोषजाते उपपत्तेर्लिङ्गाभिमतस्य दोषाः । साधनरूपेणाक्षेपत्वापादका इत्यर्थः । उत्तरमाह ॥ **यत्सद्भाव इति ।** येषां सद्भाव इत्यर्थः । इत्यनन्तरमुपपत्तेरिति शेषः । यद्वा त उपपत्तिसम्बन्धिन इत्यर्थः । उपपत्तिसम्बन्धित्वमुपपत्तिनिष्ठत्वेनोपपत्तिसम्बन्धिपक्षदृष्टान्तगतत्वेन वेति प्रतिदृष्टान्तदोषयोरप्युपपत्तिसम्बन्धित्वादुपपत्तिदोष इति बोध्यम् । यत्सद्भावे लिङ्गाभिमानिनीं प्रमां न जनयति । ते उपपत्तिदोषा इत्येव लक्षणमभिमतम् । अन्यथाऽननुगमप्रसङ्गात् । एवमुक्तिस्तु लिङ्गस्य प्रमाजनकत्वाभावः कस्यचिद्दोषस्य ज्ञानोत्पत्तिप्रतिबन्धकतया कस्यचिद्दोष संशयापादकतया कस्यचिद्दोषस्य विपर्ययसम्पादकत्वेनेति ज्ञापनायेत्यवगन्तव्यम् । प्रत्यक्षागमव्यवच्छेदाय लिङ्गाभिमतमित्युक्तम् । वस्तुतो यल्लिङ्गं तस्य निर्दोषतया यत्सद्भाव इत्यस्यासम्भवादभिमतपदोपादानम् । तद्विभागमाह ॥ **ते द्विविधा इति ।** अर्थदोषवचनदोषभेदा इत्यर्थः । यद्यप्यनुमानदोष निरूपणदोषप्रस्तावे वचनदोषकथनमसङ्गतम् । तथाऽपि परोपदेशात्मकानुमानस्य प्रस्तुतत्वाद्वचनद्वारेणार्थदोषत्वस्य सत्त्वाच्च । न च दोषकथनं नासङ्गतमिति बोध्यम् । अत एव विष्णुतत्त्वनिर्णयटीकायाम् । अत एवार्थशब्दात्मकानुमानविभागप्रस्तावे तथा विभक्तदोषकथनं सङ्गतमित्युक्तम् । उपपत्तेः साक्षात्साधनदूषणाक्षमत्वापादकोऽर्थदोषः । तं विभज्य दर्शयति ॥ **तत्र साक्षादुपपत्तेरेव दोषाविति ।** तत्रार्थवचने दोषयोरुपपत्तेरेव लिङ्गाभिमतस्येव साक्षाद्दोषौ साक्षादुपपत्तिसम्बन्धिनावेव दोषौ । अर्थदोषाविति यावत् । एवंप्रकारेण साक्षाद्वचनदोषत्वं व्यावर्तयति । तद्द्वारा वचनस्यापि दोषावित्यनुवर्तते । द्वाराऽर्थद्वारेणेत्यर्थः । अर्थासाधुत्वे तद्वचनस्याप्यसाधुत्वादिति भावः । साक्षाद्वचनस्यासाधुत्वापादको वचनदोषः । तं विभज्य दर्शयति ॥ **वचनदोषाविति ॥ वचनद्वारेणार्थस्यापीति ।** दोषाविति शेषः वचनासाधुत्वे तदर्थस्याप्यसाधुत्वादिति भावः ॥ **तत्रेति ।** विरोधासङ्गतिन्यूनाः केषु योग्यतायाः संसर्गाबाधस्य विरोधाभावो विरोधा इत्यर्थः ॥ **आकाङ्क्षाविरह इति ।** आकाङ्क्षा जिज्ञासा तद्विषयराहित्यमसङ्गतिरित्यर्थः । अग्रे चोत्तरत्राकाङ्क्षा जिज्ञासा तद्विषयत्वादयः साकाङ्क्षा इति वक्ष्यति ॥ **अवश्यवक्तव्यस्येति ।** अवश्यवक्तव्यं परोपदेशात्मकं सम्पूर्णवचनमपि भवतीति तद्व्यावच्छेदाय मात्रपदोपादानम् । सिंहशार्दूलवृक्षादिमानयं पर्वतोऽग्निमान्धूमवत्त्वान् महानसवदिति वाक्यैकदेशस्यायां पर्वतोऽग्निमान्धूमवत्त्वान्महानसवदित्यस्य सम्पूर्णपरोपदेशस्य प्रयोगे न्यूनत्वपरिहारायोक्तमवश्यवक्तव्यस्येति । योग्यताऽऽकाङ्क्षाविरहरूपयोर्विरोधासङ्गत्योरिव न्यूनाख्यदोषस्यापि शब्दसाधारणत्व-

ज्ञापनाया सान्निध्याभावविशेष इति । सन्निधिरहितेषु चोलेषु तृषितं प्रति सन्ति सुरसरिति शीतानि जलानीत्यादौ वाक्ये न्यूनाधिकदोषस्याभावेन तस्य सान्निध्याभावत्वासम्भवेऽपि सन्निधिरहिते विलम्बोच्चारिते गामानयेत्यादिवाक्ये न्यूनाधिकदोषस्य सत्त्वात् तस्य सान्निध्याभावविशेषोक्तिरित्यनुसन्धेयम् । यद्यपि वचनरूपन्यूनस्य भावेन न सान्निध्याभाव विशेषत्वम् । तथाऽप्यवश्यवक्तव्यस्यैकदेशमात्रवचनं न्यूनमित्यस्यावश्यवक्तव्यस्यैकदेशावचन एव पर्यवसानात् । न्यूनस्य सान्निध्याभावविशेषत्वं युक्तमिति बोध्यम् । अत एव प्रमाणलक्षणटीकायाम् । अपेक्षितासम्पूर्तिर्न्यूनमित्युक्तम् । विष्णुतत्त्वनिर्णयटीकायामपि विवक्षितासम्पूर्तिर्न्यूनमित्युक्तम् । अत्राप्यवश्यवक्तव्यमन्यतमानापादनं न्यूनमिति वक्ष्यति ।। **आकाङ्क्षारहितस्यापीति** । सङ्गतस्यापीत्यर्थः । अत एव विष्णुतत्त्वनिर्णयटीकायाम् । सत्यां सङ्गतावधिकत्वमाधिक्यमित्युक्तम् । अन्येन वाक्यान्तरेण कृतं कार्यं पक्षहेतुत्वादिरूपं कार्यं यस्य तस्य वाक्यस्य वचनं प्रयोग आधिक्यमधिकमित्यर्थः । वाक्यान्तरेण कृतकार्यं हि वाक्याद्विविधं प्रकृतोपयुक्तं प्रकृतानुपयुक्तं चेति । आद्यमपि द्विविधम् । एकार्थं भिन्नार्थं चेति । आद्यं धूमवत्वादिति वाक्यम् । द्वितीयं तु धूमवत्त्वात्प्रकाशविशेषगुणवत्त्वादिति वाक्यम् । उभयवचनमधिकमेव । द्वितीयमपि द्विविधम् । प्रकृतान्वितं प्रकृतानन्वितं चेति । अत्राद्यमनित्यः शब्दः स चाकाश विशेषगुण इति वाक्यम् । द्वितीयं त्वनित्यः शब्दो घटो रूपवानिति वाक्यम् । तत्राद्यस्य वचनं प्रकृतानुपयुक्तान्वितवाक्योक्तिरूपार्थान्तरम् । द्वितीयस्य वचनमनन्वितवाक्य प्रयोगरूपापार्थकम् । उभयत्रातिव्याप्तिवारणायाकाङ्क्षितस्यापीत्युक्तम् । आकाङ्क्षितवाक्यस्य वचनमाधिक्यरहितं सम्पूर्णपरोपदेशात्मकवाक्यस्य प्रयोगेऽतिव्याप्तिस्तद्वारणार्थमन्येन कृतकार्यस्येत्युक्तम् । प्रत्यक्षेण कृतकार्यस्य धूमवत्त्वादित्यादिवाक्यस्याधिक्यवारणायान्येनेत्युक्तम् । अन्यपदस्य परत्वात्तेन तद्व्यवच्छेदः ।

## विरोधप्रकाराः

(२२) प्र.प.— **एते च विरोधादयो द्विविधाः । समयबन्धप्रश्नस्वपक्षसाधनपरपक्ष निराकरणात्मककथारूपसाधारणा अनुमाननिष्ठाश्च । तत्रानुमाननिष्ठास्तावदुच्यन्ते । त्रिविधोऽनुमानविरोधः । प्रतिज्ञाहेतुदृष्टान्तविरोधभेदेन । तत्र प्रमाणविरोधः स्ववचनविरोध इति द्विविधः प्रतिज्ञाविरोधः । प्रमाणविरोधोऽपि द्वेधा । प्रबलप्रमाणविरोधः समबलप्रमाणविरोधश्चेति । हीनबलस्यानेनैव बाधितस्याकिञ्चित्करत्वात् । प्राबल्यं च द्विविधम् । बहुत्वेन स्वभावेन च । स्वभावश्चोपजीव्यत्वं निरवकाशत्वमित्यादिरूपः । प्रत्यक्षादिविरोधभेदेन द्वावपि प्रत्येकं त्रिविधौ । समबलानुमान विरोधोऽपि द्वेधा । तेनैवानुमानेनानुमानान्तरेण चेति ।**

**स्ववचनविरोधोऽपि द्विविधः । अपसिद्धान्तो जातिरिति । तत्र पूर्वाचार्यैर्यत्प्रामाणिकतयाऽभ्युपगतं तद्विरुद्धाङ्गीकारोऽपसिद्धान्तः । पूर्वाचार्यवचनस्यापि स्वयमङ्गीकृतत्वेन स्ववचनत्वात् ।**

**जना.**— ॥ **अनुमाननिष्ठास्तावदिति** । उच्यन्त इति शेषः । ननु प्रमाणविरोधस्त्रेधेति वक्तव्यं हीनबलप्रमाणविरोधस्य तृतीयस्य सत्त्वादित्यत आह ॥ **हीनेति** । वाद्युपन्यस्तहेत्वपेक्षया हीनबलस्य तेनैव बाधिततयाऽनुमित्यप्रतिबन्धकतयाऽदोषत्वात्तद्विरोधो न गणनीय इति भावः । ननु यदि प्रमाणस्य स्वभावेन प्राबल्यं तदा हीनबलस्यापि प्राबल्यापत्तिः । तदीयस्वभावस्यापि स्वभावत्वादित्यतः स्वभावशब्दार्थमाह ॥ **उपजीव्यत्वमित्यादिना** । उपजीव्यत्वं यथा जीवेशाभेदपरवत् प्रतीयमानतत्त्वमस्यादिवाक्यं प्रति जीवेशभेदग्राहकप्रत्यक्षागमयोः । निरवकाशत्वं विषयान्तरपरतया नेतुमशक्यत्वम् । यथा तत्त्वमस्याद्यागमानामभेदपरतया योजयितुमशक्यत्वम् । आदिपदेन प्रत्यक्षजातिर्ग्राह्या ॥ **द्वावपीति** । प्रबलप्रमाणविरोधः समबलप्रमाणविरोधश्चेत्यर्थः । प्रबलप्रत्यक्षविरोध, प्रबलानुमानविरोध, प्रबलागमविरोध, समबलप्रत्यक्षविरोध, समबलानुमानविरोध, समबलागमविरोधभेदेनेत्यर्थः । नन्वपसिद्धान्तस्य कथं स्ववचनविरोधरूपत्वं स्वकीयवचनविरोधारूपत्वादित्यत आह ॥ **पूर्वेति** ।

**राघ.**— परोदीरितहेत्वाभासानामनुमानदोषेषु विरोधादिष्वन्तर्भावोक्त्यर्थं तद्विभागमाह ॥ **एतेचेति** । कथारूपसाधारणाः कथास्वरूपेऽप्युद्भावनीया इत्यर्थः । कीदृशी कथेत्यतस्तां विशिनष्टि ॥ **समयबन्धेति** । तत्तत्सिद्धान्तानुसारेणावयवादिप्रयोगः कार्य इत्यादिसमयबन्धः ॥ **तावदिति** । निरूप्यन्त इति शेषः ॥ **अकिञ्चित्करत्वादिति** । अतो न परिगणनीय इत्यर्थः । इत्यादिरूप इत्यादिपदेन जातिकृतप्राबल्यग्रहः ॥ **द्वावपीति** । प्रबलसमबलप्रमाणविरोधावपीत्यर्थः ॥ **तेनैवेति** । वादिप्रयुक्तहेतुनैवेत्यर्थः । ननूक्तरूपापसिद्धान्तस्य कथं स्ववचनविरोधितेत्यत आह ॥ **पूर्वाचार्यवचनस्यापीति** ।

**विज.**— शब्ददोषत्वोपपादनाय सन्निधीत्युक्तम् । दोषविषयं विवेचयन्नुपपत्तिदोषं विभजते ॥ **एत इत्यादिना** । हीनबलविरोधोऽपि कुतो नोक्त इत्यत आह ॥ **हीनेति** । नन्वपसिद्धान्तस्य कथं स्ववचनविरोधित्वं तस्य पूर्वाचार्यवचनविरोधत्वादित्यत आह ॥ **पूर्वेति** । स्वाभ्युपगतप्रमाणाभाव वचनस्य स्ववचनत्वमिति भावः ।

**वेदे.**— परनिरूपिताशेषनिग्रहस्थानानां विरोधादिष्वेवान्तर्भावं वक्तुं विरोधादिविभागमाह ॥ **एत इति** । अनुमाननिष्ठास्तावदित्यत्र विरोधादय इत्यनुवर्तते । सामान्यलक्षणस्य पूर्वमेवोक्तत्वादनुमान

निष्ठविरोधं परोदीरिताशेषहेत्वाभासान्तर्भावकथनसौकर्याय विभजते ॥ **त्रिविधेति** । साधारणोऽसाधारणश्च सम्भावित इति शेषः । कथं त्रैविध्यमित्यत आह ॥ **प्रतिज्ञेति** । अत्र प्रतिज्ञापदेन पक्षोऽप्युपलक्ष्यते । हेतुपदेन लिङ्गं च । दृष्टान्तपदेनोदाहरणमपि । विरोधस्योभयदूषणत्वात् । तत्र प्रतिज्ञाविरोधः साधारणोऽन्यावसाधारणौ । तेन प्रतिज्ञाविरोधप्रभेदभूतानामपसिद्धान्तादीनां कथमनुमानमात्रदोषत्वमित्यादिदूषणमलग्नकं वेदितव्यम् । प्रतिज्ञातार्थप्रतिस्पर्धिसद्भावः प्रतिज्ञाविरोध इति प्रतिज्ञाविरोधलक्षणस्य स्फुटत्वात्तदनुक्त्वा विभागमेवाह ॥ **तत्रेति** । यत्तु प्रमाणलक्षणटीकायां पक्षलक्षणराहित्यं प्रतिज्ञाविरोधलक्षणमुक्तम् । तदसाधारणप्रतिज्ञाविरोधाभिप्रायेणेत्यवगन्तव्यम् । हीनबलविरोधोऽपि कुतो नोक्तमत आह ॥ **हीनेति** । प्रामाण्यातिरिक्तम् । किं प्राबल्यं नाम यद्धीनबलं नास्तीत्यत आह ॥ **प्राबल्यं चेति** ।

**अभि.**— ॥ **एते च विरोधादय इति** । प्रतिज्ञाविरोधप्रतिज्ञाऽसङ्गति प्रतिज्ञान्यूनता प्रतिज्ञाधिक्यानि समयबन्धकथासाधारणानि हेतुदृष्टान्तविरोधादीनि केवलानुमाननिष्ठानीति विरोधादयो द्विविधा इत्यर्थः ॥ **अनुमाननिष्ठा इति** । साधारणासाधारणनिष्ठाविरोधादयः कथ्यन्त इत्यर्थः ॥ **प्रतिज्ञाहेतुदृष्टान्तेति** । प्रतिज्ञाहेतुदृष्टान्त विरोधादयोऽनुमानत्वाभिमतनिष्ठत्वाभावेऽप्यनुमानसामर्थ्यविघटकत्वादनुमानदोषत्वमिति बोध्यम् । अपसिद्धान्तः कथं स्ववचनविरोध इत्यत आह ॥ **पूर्वाचार्यवचनस्यापीति** ।

**आद.**— परोक्तदोषाणामत्रैवान्तर्भावं वक्तुं विरोधादीन्विभजति ॥ **विरोधादयो द्विविधा इति** ॥ **प्रमाणविरोध इति** । प्रमाणप्रयोज्यो विरोध इत्यर्थः ॥ **स्ववचनविरोध इति** । स्ववचनप्रयोज्यो विरोध इत्यर्थः । स्वप्रतिपाद्यविपरीतप्रतिपादकस्य प्रबलप्रमाणस्य सत्त्वेऽनेनैव स्वविषयेऽसत्त्वसिद्ध्याऽसत्त्वग्राहकमानाविषयत्वाभाव रूपविरोधस्तत्प्रयोज्यो भवति । समबलत्वेऽप्यहीन-बलमानान्तरं भवतीति तद्विषयत्वरूपविरोधप्रयोजकत्वं सम्भवति । एवं स्ववचनस्यापि स्वसमबलप्रमाणरूपत्वेन तत्सात्तायास्तादृशमानविषयत्वरूपविरोधप्रयोजकत्वं सम्भवतीति । एवं स्ववचनस्यापि स्वसमबलप्रमाणरूपत्वेन तत्सात्तायास्तादृशमानविषयत्वरूपविरोधप्रयोजकत्वं सम्भवतीति ध्येयम् । यद्यपि सभायां प्रमाणविरोधत्वेनैवोद्भाव्यत्वम् । तथाऽपि प्रबलप्रमाणविरोधो वादिविपर्ययानुमापकः । समबलप्रमाणविरोधस्तु प्रमाजननानुकूलशक्त्यभावज्ञापकः । स्ववचनविरोधस्त्वत्यन्ताज्ञानानुमापक इति फलभेदाच्छिष्याणां तज्ज्ञापनाय विभागः कृतः ।

**श्रीनि.**— ॥ **समयेति** । समयबन्धः । अत्र प्रसङ्गः कार्य इति नियमनं प्रश्नश्च स्वपक्षसाधनं परपक्षनिराकरणान्येतदात्मकानि कथायाः रूपाण्यङ्गानि तत्रानुमाने च साधारणानीत्यर्थः ॥ **अनुमाननिष्ठाश्चेति** । स्वार्थपरार्थसाधारणा इत्यर्थः ।

**वि.—** ननु बाधकानुमाने दोषाः परिगणितास्तत्कथमित्यतस्तेषामेतेष्वन्तर्भाव इति ज्ञापनाय विरोधादिस्वरूपं विवेचयति ॥ **एते च विरोधादय इति** । एते चानुमानदोषत्वेन सन्तीत्यर्थः । आदिपदेनासङ्गतिन्यूनाधिकानां ग्रहणम् ॥ **समयबन्धेति** । समयबन्धप्रश्नस्वपक्षसाधनपरपक्ष-निराकरणात्मकेष्वनुगता इत्यर्थः ॥ **अनुमाननिष्ठाश्चेति** । लिङ्गतद्वचनरूपानुमानसम्बन्धिनश्चेत्यर्थः । यद्वाऽनुमीयतेऽनेनेति व्युत्पत्त्याऽनुमित्युपयुक्तमिहानुमानेनोच्यते । तथा चानुमाननिष्ठा अनुमित्युप-योगिनिष्ठाश्चेत्यर्थः । प्रमाणलक्षणटीकायां प्रतिज्ञादिभेदेन साधनांशानां त्रैविध्यादित्युक्तत्वात् प्रतिज्ञात्रयमनुमित्युपयोगीति वक्ष्यमाणविरोधादीनामनुमाननिष्ठत्वमुपपन्नमित्यनुसन्धेयम् । परोदी-रितानुमानदोषाणां क्वान्तर्भाव इति जिज्ञासायामनुमाननिष्ठविरोधादिष्वित्याशयेन तत्स्वरूपं निरूपयति ॥ **तत्रानुमाननिष्ठास्तावदिति** । तत्रोभयविरोधादिष्वित्यर्थः । अनुमाननिष्ठा इत्येतत्पूर्ववद्व्याख्येयम् । विरोधादय इत्यनुवर्तते । तावद्विभागपूर्वकमुच्यन्त इति शेषः । तत्रानुमानविरोधविभागमाह ॥ **त्रिविध इति** । कथं त्रैविध्यमित्यत आह ॥ **प्रतिज्ञाहेतुदृष्टान्तविरोधभेदेनेति** । द्वन्द्वान्ते श्रूयमाणविरोधपदं प्रत्येकमभिसम्बध्यते । अत्र प्रतिज्ञापदेन पक्षोऽप्युपलक्ष्यते । हेतुपदेन लिंङ्गं च । तथा दृष्टान्ततद्वचनं च । विरोधस्योभयदूषणत्वात् । बाधप्रतिरोधौ प्रतिज्ञाविरोधान्तर्गतावित्याशयेन प्रतिज्ञाविरोधादि-विभागमाह ॥ **त्रिविधं तत्रेति** । प्रतिज्ञाहेतुदृष्टान्तविरोधेषु प्रतिज्ञाविरोध इत्यन्वयः । प्रमाणेन विरोधः प्रमाणविरोधः स्ववचनेन विरोधः स्ववचनविरोध इत्यर्थः । तत्र क्वान्तर्भूताविति जिज्ञासायां प्रमाणविरोध इत्याशयेन तद्विभागमाह ॥ **प्रमाणविरोधोऽपीति** । प्रतिज्ञाविरोधवत्प्रमाणविरोधः स द्विविध इत्यर्थः । ननु विविधाः प्रमाणविरोधा इति वक्तव्यम् । हीनविरोधस्यापि सत्त्वात् । कथं द्वावित्यत आह ॥ **हीनबलस्येति** । अनेनैव प्रबलेनैव बाधितस्य पराजितस्य साधनदूषणाक्षमत्वेन कस्येति यावत् । अकिञ्चित्करत्वात्स्वबाधके ज्ञानानुत्पादकत्वसंशयापादकत्वविपर्ययापादकत्वानामन्यत मस्याकरणादित्यर्थः । दुर्बलस्याकिञ्चित्करत्वेन तद्विरोधो न वक्तव्य इति भावः । ननु प्रामाण्याति-रिक्तं किं बलवत्त्वमित्यतस्तद्विभज्य दर्शयति ॥ **प्राबल्यं च द्विविधमिति** । किं तद्द्वैविध्यमित्यत आह ॥ **बहुत्वेन स्वभावेन चेति** । बहुत्वेन रूपेण स्वभावेन रूपेणैव द्विविधमिति पूर्वेणान्वयः । बहुत्वरूपं स्वभावलक्षणं चेति द्विविधं प्राबल्यमिति यावत् । स्वभावशब्दार्थः । ननु तर्हि बहूनां स्वभाव लक्षणबलवतश्च विरोधे उभयोरपि प्रबलत्वेनानिर्णयः स्यादिति चेन्न । स्वभावस्य ततोऽपि वलवत्त्वाङ्गीकारेण निर्णयोपपत्तेः । तदुक्तं विष्णुतत्त्वनिर्णये । ''तयोः स्वभावो बलवानुप-जीव्यादिकश्च स'' इति । ननु प्रत्यक्षादिप्रमाणत्रयविरोधः किं प्रमाणविरोधान्तर्भूतो न वा । आद्ये समबलप्रमाणविरोधान्तर्भावप्रसङ्गः । द्वितीये प्रबलप्रमाणाभावप्रसङ्ग इत्यत आह ॥ **प्रत्यक्षादि-**

**विरोधभेदेनेति** । आदिपदेनानुमानागमौ गृह्यते । द्वावपि प्रबलप्रमाणसमबलप्रमाण विरोधावित्यर्थः । द्वावपि प्रबलप्रमाणसमबलप्रमाणविरोधावित्यर्थः । प्रत्यक्षानुमानागमविरोधानामुभयत्रान्तर्भावान्नोक्त चोद्यावकाश इति बोध्यम् । तेनैव हेतुना विरोध इति मतमसदिति ज्ञापनाय तद्विभागमाह ॥ **स्वचनविरोधोऽपीति** । तेनैव हेतुना हेत्वन्तरेण चेत्यर्थः । विरोधेनेति शेषः । न चाद्योऽसम्भवी । एकस्मिन्पक्षे साध्याभावव्याप्ययोरिवैकस्मिह्नेतौ साध्यतदभावव्याप्योरभिमानतः सम्भवादिति । प्रतिज्ञाविरोध विशेषस्ववचन विरोधेऽपसिद्धान्तजात्योरन्तर्भाव ज्ञापनाय तद्विभागमाह ॥ **स्ववचन-विरोधोऽपीति** । अपसिद्धान्तः क इति जिज्ञासायामाह ॥ **तत्र पूर्वाचार्यैरिति** । तवापि सिद्धान्त-जात्योः पूर्वाचार्यैः सिद्धान्तप्रवर्तकैर्यत्प्रामाणिकतयाऽभ्युपगम्योक्तं तद्विरुद्धाङ्गीकारेऽपसिद्धान्त इत्यर्थः। ननु पूर्वाचार्यवचनमपि प्रमाणतया स्वाङ्गीकृतत्वेन स्ववचनमित्यपसिद्धान्तः स्ववचनविरोधभेदत्वं युक्तमिति भावः ।

**(२३) प्र.प.— स्ववचन एव व्याहतिर्जातिः । सा त्रिविधा । एककर्तृके वाक्ये पदयोरवान्तरवाक्ययोर्वा मिथो व्याघातः, स्वक्रियाविरोधः स्वन्यायविरोधश्चेति । हेतुविरोधोऽपि द्विविधः । असिद्धिरव्याप्तिश्चेति । समुचितस्थले लिङ्गस्याप्रमितिरसिद्धिः । अव्याप्तिस्त्रिविधा । लिङ्गस्य साध्येन तदभावेन च सम्बन्धः, साध्यसम्बन्धाभावे सति तदभावेनैव सम्बन्ध, उभयसम्बन्धाभावश्चेति । दृष्टान्तविरोधोऽपि द्विविधः । साध्यवैकल्यं साधनवैकल्यं चेति । हेत्वादौ स्ववचनविरोधोऽसिद्ध्यादिनैव सङ्गृहीत इति नोक्तः । एवमसङ्गतिन्यूनाधिक्यान्यपि प्रतिज्ञाहेतु-दृष्टान्तसम्बन्धभेदेन प्रत्येकं त्रिविधानि । एतेषामुदाहरणानि कथारूपसाधारणान्विरोधादींश्च परोदीरितनिग्रहस्थानानामेतेष्वेवान्तर्भावं वदन्तो दर्शयिष्यामः । न केवलमुपपत्तिदोषाणां विरोधादिभिः सङ्ग्रहः । किं नाम । नैय्यायिकनिरूपिताशेषनिग्रहस्थानानां वक्तृदोषाभ्यां संवादानुक्तिभ्यां युतेष्वेवान्तर्भावः । ततश्च विरोधासङ्गती न्यूनाधिके संवादानुक्ती इति षडेव निग्रहस्थानानि । विप्रतिपन्नप्रमेयाङ्गीकारः संवादः । परबोधनार्थस्यावश्यं वक्तव्यस्यावचन-मनुक्तिः । कथायामखण्डिताहङ्कारेण परेण परस्याहङ्कारखण्डनं पराजयो निग्रह इति चोच्यते । तन्निमित्तं निग्रहस्थानम् । अहङ्कारखण्डनं च स्वपक्षसाधनपरपक्षदूषणसङ्कल्पभ्रंशः । अत एव कथाबाह्यानि कथायामप्यपस्मारोन्मादादि दशापन्नानि झटिति संवरणेन तिरोहितोद्भावनावसराणि पुरस्स्फूर्तिकानधिकृतोद्भावितानि च व्यवच्छिन्नानि । परोक्तस्ववक्तव्ययोरज्ञानं विपरीतज्ञानं वा निग्रहः । तल्लिङ्गं निग्रहस्थानमिति वा ।**

**जना.——** ॥ **स्ववचन एवेति** । स्वोच्चारितस्वाभ्युपगतवचन एवेत्यर्थः । इदमपसिद्धान्तव्यावर्तनाय । नन्वसिद्धिर्यदि हेतुदोषस्तदाऽधोदेशे नदीपूरस्योर्ध्वदेशे पक्षेऽसिद्धतया साध्यसाधकत्वं न स्यादित्यत आह ॥ **समुचितेति** । यत्र स्थले लिङ्गस्य सत्त्वप्रमितिरनुमिति हेतुस्तत्समुचितस्थलमित्यर्थः । एवं च नदीपूरस्योर्ध्वदेशरूपपक्षेऽसिद्धत्वेऽपि नासिद्धिः । समुचितस्थलेऽधोदेशे विद्यमानत्वादिति भावः ॥ **उभयेति** । पक्षातिरिक्ते साध्यतदभावसम्बन्धाभाव इत्यर्थः । अत्र शङ्कासमाधाने अयमुभयसम्बन्धाभावादव्याप्तावन्तर्भूत इत्येतद्व्याख्यानावसरे प्रपञ्चयिष्यामः । तत्प्रपञ्चनानुसारेणैव द्वितीयतृतीयाव्याप्त्योर्भेदोऽपि धीमद्भिर्ज्ञेयः ॥ **साध्यवैकल्यमिति** । उभयवैकल्यं तु पृथक् दोषः । एकैकवैकल्येनैव दृष्टान्तस्य दुष्टत्वसिद्धावुभयवैकल्यस्य व्यर्थत्वात् । सम्भवमात्रेण पृथग्वचनेऽनेकान्तिककालातीत त्वमसिद्धकालातीतत्वमित्याद्यपि हेत्वाभासान्तरं स्यात् । या तु साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोध इति प्रमाणलक्षणव्याख्यावसरे टीकाकारीयोभयोर्वेति ग्राह्यमित्युक्तिः सा यथा मनोऽनित्यं मूर्तत्वात्परमाणुवत्कर्मवदित्यत्र क्रमेण साध्यवैकल्यं दोषस्तथा गगनवदित्यादांवुभय-वैकल्याख्यो दोषोऽस्तीत्यभिप्रेत्यैव । न तूभयवैकल्यत्वरूपेणैकदोषत्वमित्यभिप्रेत्य । अन्यथैकैकवैकल्येनैव दृष्टान्तस्य दुष्टत्वे समुदितकल्पनावैय्यर्थ्यादिति सुधाविरोधप्रसङ्गात् । अत एवोत्तरत्र वक्ष्यत्यन्यतरवैकल्येन दृष्टान्तस्य दुष्टत्वादुभयवैकल्यं पृथङ् न गणनीयमितीति दिक् । ननु यथा प्रतिज्ञाविरोधः प्रमाणविरोधवचनविरोधभेदेन द्विविधस्तथा हेतूदाहरणविरोधोऽपि किमिति न विभज्यत इत्यत आह ॥ **हेत्वादाविति** ॥ **एवमिति** । विरोधवदित्यर्थः ॥ **एतेष्वेवेति** । विरोधासङ्गत्यादिष्वित्यर्थः । प्रसङ्गादाह ॥ **न केवलमिति** । ननु पुरुषदोषयोः प्रतिज्ञाहानिनिरर्थकयोर्विरोधादि चतुष्टयेऽन्तर्भावयितुमशक्यत्वात्कथमेतेष्वेवेत्युक्तमित्यत आह ॥ **संवादानुक्तिभ्यामिति** । तथां च प्रतिज्ञाहानिनिरर्थकयोः संवादानुक्त्योरन्तर्भावो भविष्यतीति भावः ॥ **परेति** । अवक्तव्यावचनस्य सदनुमानवाक्येऽपि सत्त्वाद्वक्तव्यस्येत्युक्तम् । स्वकीयबोधार्थं स्वकीयवचनस्यावक्तव्यतयाऽसम्भववारणाय परबोधनार्थस्येति । ननु कानि तानि निग्रहस्थानानि येषामशेषाणामेतेष्वन्तर्भाव इत्युक्तमित्यतो निग्रहस्थानलक्षणं निरूपयितुं तद्घटकं निरूपयति ॥ **कथायामिति** । परेण वादिना । परस्य प्रतिवादिनः । पराजयहेतुर्निग्रहस्थानमिति नैयायिकग्रन्थान्तरविरोधपरिहारायाह ॥ **पराजयो निग्रह इति चेति** । तथा च पराजयनिग्रहपदयोः पर्यायत्वान्न विरोध इति भावः । एतदेवोक्तं वरदराजेन ।

**अखण्डिताहङ्कृतिना पराहङ्कारखण्डनम् ।**
**निग्रहस्तन्निमित्तस्य निग्रहस्थानतोच्यत ॥ इति ।**

**सङ्कल्पभ्रंश इति ।** परपक्षं दूषयिष्यामीति वा स्वपक्षं साधयिष्यामीति वोभयं साधयिष्यामीति वा यः सङ्कल्पस्तस्य भ्रंशोऽपारगमनमित्यर्थः । कथायामित्यस्य व्यावर्त्यमाह ॥ **अत एवेति ।** कथापदोपदानादेवेत्यर्थः । अखण्डिताहङ्कारेणेत्यस्य व्यावर्त्यमाह ॥ **अपस्मारेत्यादिना तिरोहितोद्भावनावसराणीत्यन्तेन ।** कथायामपीत्याधिक्योक्त्याऽपस्मारादिदशापन्नानां कथापदेन न व्यवच्छेद इति सूचयति । अपस्मारो व्याधिविशेषः । संवरणेनाभ्रपटलादिवच्चित्ताच्छादनविशेषेण । परेणेत्यस्य व्यावर्त्यमाह ॥ **पुरःस्फूर्तिकेति ।** स्फूर्तिमान्योऽनधिकृतो वादिप्रतिवादिभावेन प्राश्निकैरनियुक्तस्तदुद्भावितानीत्यर्थः । एवं निग्रहस्थानपदप्रवृत्तिनिमित्तानुसारेण लक्षणमभिधायाप्रतिपत्तिर्विप्रतिपत्तिश्च निग्रहस्थानमिति न्यूयसूत्रानुसारेण निग्रहस्थानस्य लक्षणान्तरमाह ॥ **परोक्तेति ।** अत्र यद्यप्यज्ञानविपरीतज्ञानोभयलिङ्गत्वस्य लक्षणत्वे सर्वत्र तदभावादव्याप्तिः । क्वचिदज्ञानलिङ्गत्वं क्वचिद्विपरीतज्ञानलिङ्गत्वमिति व्यवस्थाश्रयणेऽपि परस्परमव्याप्तिरेव । तथाऽपि तत्त्वाप्रतिपत्तिलिङ्गत्वमनुगतं लक्षणं द्रष्टव्यम् । ततश्च तत्त्वाप्रतिपत्तिलिङ्गं निग्रहस्थानमित्युक्तं भवति ।

**राघ.——** ॥ **स्ववचन एवेति ।** स्वकर्तृकवचन एव व्याहतिर्जातिरित्यर्थः । एवं प्रतिज्ञाविरोधं विभज्य क्रमप्राप्तं हेतुविरोधं विभजति ॥ **हेतुविरोध इति ।** हेतुपदेन तदर्थपरिग्रहः । अव्याप्तिर्व्याप्त्यभावः ॥ **उभयसम्बन्धाभावश्चेति ।** साध्यवति सपक्षे साध्याभाववति विपक्षे चावर्तमानम् । पक्षमात्रवर्तमानमिति यावत् । हेतुदृष्टान्तविरोधयोः प्रतिज्ञाविरोध इव स्ववचनविरोधः कुतो न गणित इत्यत आह ॥ **हेत्वादाविति ।** धूमवत्त्वे सति निर्धूमत्वादित्यसिद्ध्युक्त्या स्ववचनस्य तस्मिन्नेव हेतौ महानसवदित्युक्तौ साधनवैकल्येन स्ववचनविरोधः सङ्गृहीतः तस्मिन्नेव हेतौ व्याप्त्यभावेनाव्याप्त्युक्त्या स्ववचनविरोधो लब्ध इति नोक्त इत्यर्थः ॥ **एवं सङ्गतीत्यादि ।** गिरिरग्निमानित्युक्ते तरुशिलाद्यपि तत्रास्तीति प्रत्युक्तिरसङ्गतिः । हेतुरित्युक्ते हिनोतेस्तुन्प्रत्यये हेतुरिति रूपमिति प्रत्युक्तिरसङ्गतिरित्येवं ध्येयम् । न्यूनाधिक्ये तु व्यक्ते । एवमनुमाननिष्ठा दोषा उक्ताः । कथारूपसाधारणाश्चेति प्रतिज्ञातं कुतो न प्रदर्शितमित्यत आह ॥ **कथारूपसाधारणानिति ।** पुरुषदोषाणां निग्रहस्थानानां कथं विरोधादिष्वन्तर्भाव इत्यत आह ॥ **संवादेति ।** संवादानुक्त्योः स्वरूपमाह ॥ **विप्रतिपन्नेति ।** निग्रहस्थानानीत्युक्तनिग्रहस्थानशब्दार्थमाह ॥ **कथायामिति ।** विचारगोचरानेककर्तृकवाक्यप्रबन्धः कथा तस्यामित्यर्थः ॥ **सङ्कल्पेति ।** स्वपक्षसाधनपरपक्षदूषणयोर्यः सङ्कल्पस्तद्भ्रंश इत्यर्थः ॥ **अत एवेति ।** कथायामित्युक्तत्वादेव कथाबाह्यानि व्यवच्छिन्नानीत्यन्वयः । अत एवाखण्डिताहङ्कारेणेति विशेषणस्याखण्डितसाधनादिसङ्कल्पभ्रंशेनेत्यर्थकत्वादेव । कथायां प्रविष्टस्यापि वादिनोऽपस्मारोन्मादसभाकम्पादिदशायां प्रतिवादिनोक्तान्यननुभाषणादीनि व्यवच्छिन्नानि । तथा दूषणास्फूर्त्या

क्षणं तूष्णीं स्थित्वा पुनर्दूषणंस्फूर्तौ शीघ्रमप्रतिभातिरोहितस्य पुनः स्फूर्त्युद्भावनावसरे प्रतिवाद्युदितानि व्यवच्छिन्नानि । कथाऽनधिकृतः कथायामप्रविष्टो यस्तटस्थः प्रतिवादिनो दूषणोक्तेः पूर्वमेव दूषणस्फूर्तिमांस्तेनोद्भावितान्यपि न पराजयकारणानि । परेण प्रतिवादिनाऽहङ्कारखण्डनमित्युक्तत्वादेवेत्यर्थः । तत्त्वाप्रतिपत्तिलिङ्गं वा निग्रहस्थानमिति परोक्तलक्षणं तदपि व्यक्तमाह ॥ **परोक्तेति** । तल्लिङ्गं तज्ज्ञापकमित्यर्थः ।

**विज.**— ॥ **स्ववचन इति** । स्ववक्तृक एव वचन इत्यर्थः । व्याहतिः स्वकर्तृकव्यापारविरोधः । पूर्वादिव्यावृत्तमसिद्धपदार्थमाह ॥ **समुचितेति** । यद्वृत्तितया ज्ञानमनुमित्यनुकूलं तत्रेत्यर्थः । एवं दोषभेदमुक्त्वा परोक्तदोषान्तर्भावं वक्तुमाह ॥ **न केवलमिति** । प्रतिज्ञाहान्यादेरविज्ञातार्थादेश्च विरोधाद्यन्तर्भावासम्भवादाह ॥ **संवादेति** । प्रतिज्ञाहान्यादीनां तत्तदन्तर्भावस्तत्तत्प्रकरणे वक्ष्यते । संवादादिपदार्थमाह ॥ **विप्रतिपन्नेति** । युद्धादावतिप्रसङ्गवारणाय कथायामित्युक्तम् । अखण्डिताहङ्कारेणेति वस्तुस्वरूपकथनम् । ननु पराजयेऽप्यहन्त्वानपायादसम्भविलक्षणमित्यत आह ॥ **अहङ्कारेति** । एवं चान्येषामपि व्यावृत्तिरित्याह ॥ **अत एवेति** । आप्तेन प्रमादेन पर्वतोऽग्निमानिति वक्तव्ये ह्रदो वह्निमानित्युक्ते बाधे चोद्भाविते पर्वत इत्युक्ते प्रतिज्ञाहान्यादिना निग्रहः । कथाया एवाभावात् । अपस्मारादिना कथामध्य एवाप्रतिभादावपि न निग्रहस्थानता । स्वस्थस्यैवाप्रतिभादिनाऽहङ्कारखण्डनेन प्रतिवाद्यपेक्षाऽशक्तिज्ञानसम्भवात् । एवं हेतुसाध्यादिप्रयोगोपक्रमे व्यभिचारादिप्रतिसन्धाने प्रतिवादिदोषोक्तेः प्रागेव विशेषे झटिति स्वदोषगोपनेनोद्भावनावसरस्य तिरोधानेन व्यभिचारादिदोषोऽहङ्कारखण्डनाभावात् । दोषोक्तेः प्रागेव समाधानात् । एवं पराभिप्रायस्य ज्ञानात्पूर्वमेवोद्भावितानि पुरःस्फूर्तिकोद्भावितानि न निग्रहस्थानानि । अभिप्रायानवधारणेनानिग्राहकत्वात् । एवमनधिकृतोद्भावितानि यन्निग्रहो योऽधिकृतस्तद्व्यतिरेकेणोद्भावितानि । यथा पर्यनुयोज्योपेक्षणे मध्यस्थोऽधिकारी वादी स्वनिग्रह स्थानप्रकाशभियोद्भावयितुमशक्तेस्तत्र मध्यस्थभिन्नेन नोद्भावनीयं तत् । तद्व्यतिरिक्तं च वादिप्रतिवादिभ्यामुद्भावनीयम् । तदन्येनोद्भावितं न निग्रहस्थानम् । तावताऽपि परस्पराहङ्काराखण्डनादिति भावः । निग्रहस्थानलक्षणान्तरमाह ॥ **परेति** । कथायामिति शेषः । उभयान्यतरलिङ्गमित्यर्थः ।

**वेदे.**— ॥ **पदयोरवान्तरवाक्ययोर्वेति** । स्ववाक्यविरोध इत्याद्या जातिः सा पुनर्द्विधा पदयोरवान्तरवाक्ययोर्वा विरोधभेदेनेत्युक्तं भवति । व्याघातो विरोधः । व्याप्तिविशिष्टस्य लिङ्गस्य समुचितस्थले प्रतीत्यभावो हेतुविरोध इति तल्लक्षणं स्फुटतयोपेक्ष्य तद्विभागमाह ॥ **हेतुविरोध इति** ।

पक्षधर्मताया अवश्यकत्वादाह ॥ **समुचितस्थल इति** । अप्रमितिपदमज्ञानसिद्धिसङ्ग्रहाय । व्याप्तिसंवेदनस्थानत्वानुपपत्ति दृष्टान्तविरोध इति तल्लक्षणं शिष्यैरेवोह्यतामित्यभिप्रेत्य तद्विभागमाह ॥ **दृष्टान्तविरोध इति** । ननु स्ववचनविरोधस्य प्रतिज्ञायामिव हेत्वादावपि सम्भवाद्धेत्वादि विरोधप्रभेदत्वमपि कुतो न तस्येत्यत आह ॥ **हेत्वादाविति** । आदिपदेन दृष्टान्तवचनं गृह्यते । द्वितीयादिपदेन च साध्यवैकल्यादिसङ्ग्रहः । मूकत्वे सति वक्तृत्वादित्यादिरूपहेतावसिद्धिः । यथा डित्थोऽयं मूकत्वे सति वक्तेत्यादिरूपदृष्टान्तवचने च साधनादिवैकल्यं स्पष्टमेव प्रतीयत इति भावः । एवं विरोधस्यानुमाननिष्ठत्वं निरूप्येदानीमसङ्गत्यादीनामपि तदाह ॥ **एवमिति** । एतेषामनुमाननिष्ठानां विरोधादीनाम् । नन्वननुभाषणमतानुज्ञादीनां पुरुषदोषाणां कथमेतेष्वन्तर्भाव इत्यत उक्तं वक्तुर्दोषेत्यादि । अविज्ञातार्थस्यान्तर्भावसिद्ध्यर्थं परबोधनार्थस्येत्युक्तम् । अशेषनिग्रहस्थानानां विरोधादिष्वन्तर्भाव इत्युक्तम् । तत्कथमित्यपेक्षायां परोक्तनिग्रहस्थानस्वरूपं सपरिकरमनुवदन्यथा-योग्यमुक्तान्तर्भावं दर्शयति ॥ **कथायामित्यादिना** । पराजयनिमित्तं निग्रहस्थानमिति परलक्षण अभिप्रायानुसारेण पराजय इत्युक्त इति केचित् । वस्तुतस्तु पराहङ्कारखण्डनरूपनिग्रहहेतूनामपि प्रतिज्ञाहान्यादीनां कथं पराजयहेतुतेत्याशङ्कायां निग्रहहेतुत्वोक्त्यैव पराजयहेतुता लभ्यते । निग्रह-पराजयशब्दयोः पर्यायत्वादित्यभिप्रेत्याह ॥ **पराजय इति** । ननु पराजयेऽप्यहन्त्वानपायादसम्भवीदं लक्षणमित्यत आह ॥ **अहङ्कारेति** । कथायामित्यखण्डिताहङ्कारेणेति च पदद्वयकृत्यमाह ॥ **अत एवेत्यादिना** । अत्र कथायामिति विशेषणादेव कथाबाह्यानि व्यवच्छिन्नानीति सम्बन्धः । अखण्डिताहङ्कारेणेति च विशेषणात्कथायामप्यपस्मारोन्मादादिदशापन्नानि व्यवच्छिन्नानि । तेषां तात्कालिकातत्त्वज्ञानलिङ्गत्वेऽपि प्रतियोग्यपेक्षया तदभावात् । न चैवं प्रतियोगिनेत्येवास्तु किमखण्डिताहङ्कारेणेत्युक्तेति वाच्यम् । स्वस्याप्यहङ्कारखण्डने साम्यापत्त्या परपराजयासम्भवेन तथैव वक्तव्यत्वात् ॥ **झटिति संवरणेति** । झटिति शीघ्रं संवरणं समीचीनाङ्गीकरणमित्यर्थः इत्याहुः । संवरणं स्वदोषाच्छादनमित्यप्याहुः ॥ **तिरोहितेति** । तिरोहितो नाशित उद्भावनावसरो येषां तानीत्यर्थः । अयं भावः ।

**उक्तग्राह्याः केचिदन्येऽनुक्तग्राह्यास्तथा परे ।**
**उच्यमानदशा ग्राह्या इति कालस्त्रिधा मत ॥**

इति परेण निग्रहस्थानोद्भावनकाल स्त्रिविध उक्तः । तत्रोच्यमानकालोद्भावनीयमपशब्दादिकं प्रमादादुक्त्वा वादी झटिति संवरणं न कुर्यात्तदा प्रतिवादिना तस्मिन्काले तन्निग्रहस्थानं न वाच्यम् ।

वादिकृतझटितिसंवरणेन तदुद्भावनावसरस्य नाशितत्वात् । दोषोक्तेः प्रागेव समाधानादिति । एवमुदयनोक्तं निग्रहस्थानशब्दप्रवृत्तिनिमित्तं लक्षणमुक्त्वाऽप्रतिपत्तिर्विप्रतिपत्तिर्वा निग्रहस्थानमिति गौतमसूत्रानुसारेण लक्षणान्तरमाह ॥ **परोक्तेति** । अत्र तत्त्वाप्रतिपत्तिलिङ्गं निग्रहस्थानम् । तत्त्वाप्रतिपत्तिश्च द्विविधा । अज्ञानरूपाऽप्रतिपत्तिर्विपरीतज्ञानरूपा विप्रतिपत्तिश्चेत्यर्थो विवक्षितः । अन्यथाऽनुगताकारालाभात् । उभयानुगतत्वाप्रतिपत्तिस्ताभ्यां लक्ष्यत इति परोक्तेर्भवतीति लिङ्गामित्येतत्कथं सूत्रलब्धमिति चेत् । सा च परबुद्धेरप्रत्यक्षत्वात्स्वरूपतो न निग्रहस्थानं भवतीति स्वज्ञापकं भवतीति परैर्व्याकृतत्वात् । एवं सति प्रमाणलक्षणटीकाऽप्यनुकूलिता भवतीति द्रष्टव्यम् ।

**अभि.—** ॥ **सा त्रिविधेति** । यद्यपि स्वक्रियामात्रस्य न स्ववचनैकदेशत्वम् । धूमो न वह्निजन्य इत्युक्त्वा धूमार्थवह्न्युपादानाय प्रवृत्तस्य प्रवृत्तिलक्षणक्रियायाः स्ववचनत्वाभावात् । तथाऽप्यवचनात्मकक्रियाविरोधस्याजातित्वात् । जातेश्चाहं मूक इत्यादेः स्ववचनविरोधरूपत्वात्सा त्रिविधेत्युक्तम् । यद्यपि स्वन्यायेन स्ववचनं तथाऽपि स्वन्यायस्ववचनमूलत्वात्स्ववचनविरोध इत्युक्तम् ॥ **हेतुविरोधोऽपि द्विविध इति** । हेतुत्वेन प्रयोगयोग्यताविरहरूपहेतुविरोधाद्विविध इत्यर्थः ॥ **लिङ्गस्य साध्येनेति** । पर्वतोऽग्निमान्प्रमेयत्वादित्यत्रोभयसम्बन्धः शब्दोऽनित्यः कृतकत्वादित्यत्र साध्याभावेनैव सम्बन्धः । सर्वमभिधेयं प्रमेयत्वादित्यत्र सपक्षविपक्षयोरभावे उभयसम्बन्धग्रहणासम्भवादुभयसम्बन्धाभाव इति ज्ञेयम् ॥ **हेत्वादौ स्ववचनविरोध इति** । यद्यपि पर्वतोऽग्निमान्धूमत्वे सति निर्धूमत्वाद्यथा महानस इत्यादौ हेतौ दृष्टान्ते च स्ववचनविरोधोऽस्ति । तथाऽपि तस्य हेतावसिद्ध्युन्नायकत्वाद् दृष्टान्ते च साधनवैकल्योन्नायकत्वादसिद्ध्यादिग्रहणेनैव सङ्गृहीतप्राय इति नोक्त इति भावः । निग्रहस्थानहेतुमुपपादयितुं निग्रहस्य लक्षणमाह ॥ **कथायामिति** । परेण परस्याहङ्कारखण्डनमित्येव निग्रहलक्षणं परेणेत्युक्तपरत्वनिर्वचनाय कथायामितीत्यखण्डिताहङ्कारेणेति चोक्तम् । कथाप्रविष्टोऽखण्डिताहङ्कारः पर इति भावः । इदमेव निर्वचनं परस्येत्युक्तपरत्वस्यापि द्रष्टव्यम् ॥ **अत एवेति** । कथा समाप्त्यनन्तरमुद्भावितानां प्रतिज्ञाहान्यादीनां कथायामप्यपस्मारोन्मादादिदशाप्राप्तानां प्रतिमाहान्यादीनां झटिति संवरणेनातिरोहितोद्भावनासंवरणानां परःस्फूर्तिमता कथानाधिकृतेन पुरुषेणोद्भावितानां सङ्कल्पभ्रंशरूपाहङ्कारखण्डनहेतुत्वेऽपि विवक्षितपुरुषेण विवक्षितपुरुषस्याहङ्कारखण्डने हेतुत्वाभावादेतानि निग्रहस्थानाद्बहिष्कृतानीत्यर्थः ।

**आद.—** एवं यथा प्रकृतकार्यानुकूलशक्त्यभावज्ञापकस्य दोषत्वं तथाऽपकर्षप्रयोजकस्यापि दोषपदार्थत्वेन प्रबलप्रमाणविरोधादीनामपकर्षतारतम्यज्ञापकशक्तिविशेषाद्यनुमापकत्वमस्तीति ज्ञापनाय

तेन तेन रूपेण विभागः कृत इति हेतुविरोधं विभजते ॥ **हेत्विति** । प्रकृतसाध्यगमकतौपयिकरूपत्वं हेतुत्वम् । तच्च रूपं व्याप्तिः समुचितदेशे प्रतीतिरिति द्वयं तदभाव एव तद्योग्यताविरह इत्याशयेनाह ॥ **अव्याप्तिः समुचितदेशे प्रमित्यभावश्चेति** । देशस्य समुचितत्वं च व्याप्तिघटकसाध्यसम्बन्ध-रूपाधेयतानिरूपकत्वमेव । उद्भावनीयता च व्याप्त्यभावत्वेनैव सम्भवति । यद्रूपविशिष्टस्य गमकतोपयुक्तत्वं ज्ञातं तद्रूपविशिष्टाभावज्ञानस्यैवासाधकतासाधकत्वात् । व्याप्त्यभावप्रयोजकसाध्य-सम्बन्धाभावादिज्ञानानां व्याप्त्यभावधीद्वारैव गमकत्वाभावप्रयोजकत्वम् । अखण्डाभावरूपत्वा-त्तस्यैवासाधकत्वरूपप्रयोजकत्वान्न पदकृत्यचिन्ता कर्तव्या । एवमुक्तप्रमित्यभावस्याप्यसाधकता हेतुत्वं युज्यत एव । अत्र साध्यसम्बन्धविशिष्टत्वे सति साध्याभाव सम्बन्धाभावो व्याप्तिः । तदभावश्चेति विशिष्टाभावः । विशेषणवति विशिष्टाभावो विशेष्याभावरूपो व्यभिचार इत्युच्यते । विशेष्यवति विशिष्टाभावो विशेषणाभावरूपः । स च विरोध इत्युच्यते । उभयसम्बन्धाभावप्रयुक्तस्तूभया-भावरूपः । स च पक्षमात्रवृत्तिरसाधारण इत्युच्यते । अनध्यवसित इति चोच्यते । मतभेदेन वस्तुत उभयाभावस्त्वप्रसिद्ध इति चेत् । परमते सम्बन्धविशेषघटितोभयाभावस्य तत्सम्बन्धेनावृत्तौ प्रसिद्धि-सम्भवात् । वस्तुतो निश्चयविवक्षयोभयसम्बन्धाभावः सम्भवत्येव । यत्त्वसाधकतायां विशिष्टाभावत्वेन हेतुत्वाङ्गीकारे व्याप्यत्वासिद्धिः साध्याभावसम्बन्धमात्रस्यैव हेतुत्वसम्भवेनान्यपदवैयर्थ्याद्व्यभिचारा-वारकत्वादिति । तन्मन्दम् । व्याप्तिग्रहानुपयुक्तविशेषणघटितत्व एव व्याप्यत्वासिद्धेरवसरात् । व्यभिचारवारकस्यापि व्याप्तिग्रहोपयुक्तत्वेनैव सार्थकत्वात् । प्रकृते व्याप्तिग्रहौपयिकत्वस्योक्तत्वेन वैय्यर्थ्यशङ्काया अनवकाशात् । अन्यथाऽप्रयोजकशङ्कानिरासोपायाभावेन तस्याः प्रसरादिति शुद्ध-व्यभिचारत्वादिना हेतुत्वेऽप्युक्ताभावाभिन्नत्वानुसन्धानेनैवाप्रयोजकताशङ्का निराकर्तव्या । केचित्तु साध्याभावसम्बन्धत्वेनैवासाधकतायां हेतुता न तु साध्यसम्बन्धस्यापि हेतौ निवेशो वैय्यर्थ्यात् । न चाप्रयोजकता प्रकृतहेतौ व्याप्त्यभावप्रयोजकत्वेन साध्याभावसम्बन्धाङ्गीकारे साध्यव्याप्त्यभाव प्रसङ्गेना कारणकार्योत्पत्तिप्रसङ्ग इत्यनुकूलतर्कसम्भवात् । एवं साध्यसम्बन्धाभावस्यापि हेतुतेति वदन्ति । दृष्टान्तविरोधभेदमाह ॥ **दृष्टान्त इति** । ननु दृष्टान्ते साध्यसाधनवैकल्ययोः कथं हेतुदोषत्वम् । पर्वतो वह्निमान्धूमात् ह्रदवदित्यत्र दृष्टान्ते साध्यसाधनवैकल्यसत्त्वेऽपि हेतोरसाधकत्वादृष्टेः । साधकतोपयुक्त व्याप्त्याद्यघटकत्वेनासाधकतायामप्रयोजकत्वाच्च । न च माऽस्तु हेतुदोषत्वं निग्रहस्थानत्वं तु सङ्गच्छते । तादृशदृष्टान्तं वक्तुर्विपर्ययानुमापकत्वादिति वाच्यम् । अनुमाननिष्ठा विरोधादयो निरूप्यन्त इति प्रतिज्ञोक्तत्वेन तद्विरोधादिति चेन्न । अनयोरपि हेतुदोषत्वसम्भवात् । तथा हि । न ह्ययं दृष्टान्तो व्यसनितयोच्यते किन्तु हेतौ गमकतयौपयिकव्याप्त्याद्याकाङ्क्षायां तत्प्रदर्शनाय साध्यसाधनयोः सम्बन्ध-

प्रदर्शनाय । तथा च साध्यसाधनयोर्दृष्टान्तावृत्तित्वे तयोः सम्बन्धज्ञानासम्भवेन साध्यसम्बन्धित्वेन ज्ञातत्वेन हेतोर्व्याप्तिमत्त्वेन ज्ञानाभावेन साधकत्वासम्भवात् । दृष्टान्ते साध्यसाधनवैकल्यं नाम साध्यत्वेन निश्चिते साधनाभावः । साधनत्वेन निश्चिते साध्याभावः । तयोः सत्त्वे तज्ज्ञानकाले साध्यसम्बन्धधीर्न जायते । तथा च प्रयोगः । अयं हेतुरिदानीमसाधको व्याप्यत्वेनाज्ञातत्वात् सम्मतवत्। अयं हेतुर्व्याप्यत्वेनाज्ञातो व्याप्तिधीप्रयोजकसाध्यसम्बन्ध प्रकारकज्ञानाविषयत्वात् सम्मतवत्। अयं हेतुरिदानीं साध्यसम्बन्धप्रयोजकज्ञानाविषयस्तादृशज्ञान प्रयोजकत्वेनाभिमते दृष्टान्ते साध्यवैकल्यात्साधनवैकल्याद्वेति । तथा च व्याप्तिधीप्रयोजकसाध्यसम्बन्धाभावज्ञानस्य तात्कालिकस्य प्रयोजकज्ञानविषयत्वेन हेतुदोषत्वोपपत्तिरिति ध्येयम् । दृष्टान्ते साध्यसाधनवैकल्यसामान्यदोषत्वासम्भवेऽपि क्वचिद्धेतुदोषत्वसम्भवेन विभागो युक्त एवेति ॥ **हेत्वादाविति** । असिद्धिर्ह्रदो वह्निमान् धूमादित्यत्र प्रमाणविरोधः । द्रव्यं गुणातिरिक्तमव्यतिरिक्तत्वादित्यत्र स्ववचनविरोधः । समुचितदेशे हेतोरप्रमितिरूपविरोधस्य तत्प्रयोज्यत्वात् । एवमव्याप्तिरपि । पर्वतो वह्निमांस्तदव्याप्यघटादित्यत्र स्ववचनप्रयोज्या धूमवान्वह्नेरित्यादौ प्रमाणप्रयोज्या भवतीति ज्ञेयम् ॥ **एवमसङ्गतिन्यूनाधिक्यान्यपीति** । प्रतिज्ञासम्बन्धिन्यसङ्गतिः । चन्दनप्रभववह्नौ विप्रतिपत्तिदशायां पर्वतो वह्निमानिति प्रतिज्ञोक्तौ तत्र शुद्धवह्नेरजिज्ञासितत्वादसङ्गतिः । जिज्ञासितार्थप्रमानुकूलव्याप्तिप्रमित्यप्रयोजकत्वात् । अजिज्ञासितार्थप्रमित्यनुकूलव्याप्तिज्ञानहेतुत्वाच्च । हेतुदोषतायां च हेतुर्न जिज्ञासितसाध्यसाधकः । साध्यत्वेन निर्दिष्टस्याजिज्ञासितत्वादिति प्रयोगसम्भवात् । तज्जन्यानुमितिविषयत्वस्य जिज्ञासाविषयतानवच्छेदकावच्छिन्ने सम्भवादिति वा प्रयोगसम्भवात् । विशिष्टस्यातिरिक्तत्वेनोक्तस्य जिज्ञासाविषयत्वाभावात् । प्रतिज्ञासम्बन्धिन्यूनता च वह्निमानित्येवोक्ते तत्र पक्षानुपस्थित्या हेतोरज्ञानासिद्धिसम्पादकत्वात् । एवं सिद्धसाधनताऽप्यसङ्गतिरूपैव हेतुदोषता चोक्तरीत्या ध्येयम् । अर्थान्तरताऽन्यथासिद्धिरिति चेयमसङ्गतिरुच्यते । न च विप्रतिपत्त्या पक्षसाध्योपस्थितिर्नियतैवेति वाच्यम् । व्यवहितत्वेन प्रतिज्ञाकाले तन्नियमाभावात् । विप्रतिपत्तेरसार्वत्रिकत्वाच्च । विप्रतिपत्तेः कथाङ्गस्याकरे खण्डितत्वाद्वादिवाक्यजन्योपस्थितेरेवापेक्षितत्वाच्च । हेतुसम्बन्धिन्यूनता च हेतोरज्ञानासिद्धिसम्पादकतया दोषः । दृष्टान्तसम्बन्धिन्यूनता च प्रकृतानुमितिप्रयोजकव्याप्तिग्रहा विषयत्व रूपासाधकताहेतु स्फोरकत्वेन हेतुदोषः । प्रतिज्ञासम्बन्धाधिक्यं वह्निधूमान्यतरस्मिन्विप्रतिपत्तिवेलायां पर्वतो वह्निमानालोकादित्युक्त्वा पर्वतो धूमवानिति प्रतिज्ञायां सत्यां तत्रैव धूमसंयोगादिति हेतूक्तौ हेत्वाधिक्यं दृष्टान्तोक्तौ दृष्टान्ताधिक्यम् । यद्यपि हेतुदृष्टान्तोक्त्योर्धूमानुमिति मात्रप्रयोजकं हेतुतद्व्याप्तिग्रहप्रयोजनकत्वेन तयोश्चान्येनाकृतत्वान्नाधिक्यमिति प्रतिभाति । तथाऽपि तत्र द्वितीया

अनुमानस्य तदुपयुक्तस्य सर्वस्यापि वैय्यर्थ्यस्य सर्वसिद्धत्वादाधिक्यं युक्तमेव । कथं तर्ह्याधिक्यलक्षणं तत्रेति चेत् । प्रकृतहेत्वादिकार्यस्य प्रकृतहेत्वन्येनाकृतत्वेऽपि प्रकृतविप्रतिपत्तिप्रयोजक संशयेच्छयोर्निवृत्तिरूपकार्यस्य प्रकृतविचारमुख्यप्रयोजनत्वेन तस्य प्रयोजनस्यान्येन वह्न्यनुमित्यादिना कृतत्वादाधिक्यलक्षणसम्भवात् । धूमानुमापकहेतूक्त्यादेरपि परम्परया तादृशसंशयादिनिवृत्तेरेव फलत्वात्। धूमादालोकाच्चेति हेतुद्वयोक्तिस्थलेऽपि हेत्वाधिक्यं बोध्यम् । अस्य हेतुदोषतात्वयं हेतुः सफलानुमितिसाधको न भवति फलत्वेनाभिमतस्यान्येन जातत्वात् । यज्ज्ञन्यज्ञानस्य फलत्वेनाभिमतं यदन्यजातं तत्तत्फलोपधायकसिद्धिजनकं न भवति यथा सम्प्रतिपन्नमिति सामान्यव्याप्तिमूलकानुमानेनासाधकत्वसिद्धेः सम्भवात् । दृष्टान्ताधिक्यं तु सादृशानुमिति प्रयोजकज्ञानविषयत्वरूप हेतूपस्थापनद्वारा तादृश इति हेतुदोष इति ध्येयम् । हेत्वाधिक्याधिकं सर्वमपि हेतुदोष इत्यनुक्तत्वान्न कश्चित्क्षुद्रोपद्रवः ।। **षडेव निग्रहस्थानानीति** । ननु संवादस्यानुक्तावन्तर्भावः सम्भवति । अवश्यं वक्तव्यस्य वाद्युक्तेर्दूषणस्य मध्यस्थादीनामाकाङ्क्षितस्याकथनरूपत्वात् । अथवा जिज्ञासितस्यावचनमसङ्गतिरस्तु । तेनैव संवादानुक्त्योरपि सङ्ग्रहसम्भवाद्युक्तं पृथग्ग्रहणमिति चेत् । न चावश्यं वक्तव्यत्वं च कथासमाप्तिसाधनत्वमेव । संवादरूपोक्तिरपि कथासमाप्तिसाधनीभूतेति तत्र कथमनुक्तेरवकाश इति वाच्यम् । तथा सति कचटतपानां जबगडत्वादित्याद्युक्तेरपि कथासमाप्तिसाधनत्वेन तत्राप्यनुक्तेरवकाशाभावापातात् । अवश्यं वक्तव्यमित्युक्तेरुक्तार्थकत्वे मानाभावाच्चेति चेदत्रोच्यते । अवश्यं वक्तव्यमित्येतत्काले मध्यस्थस्य परिषदां च जिज्ञासित इत्येवार्थः प्रकृतोपयुक्तस्यान्यार्थस्यासम्भवात् । तादृशश्च संवादविषयोऽपि भवति । तेषां वादिप्रतिवादिनोः शक्तितदभावान्यतरजिज्ञासासत्त्वेन ज्ञानेच्छायाः फलेच्छात्वेन तस्याः साधनेच्छाप्रयोजकत्वात्तज्ज्ञान प्रयोजकशक्तितदभावान्यतरप्रयोजकयोरपि ज्ञापकयोरपि जिज्ञासाविषयत्वेनावश्यं वक्तव्यत्वसम्भवात् । संवादस्य च शक्त्यभावज्ञापकत्वेन तद्विषयस्यापि जिज्ञासितत्वात् । संवादवचनस्याप्यन्यतरवचनत्वेनाकाङ्क्षितत्वात् । ततश्चावश्यं वक्तव्यावचनाभावान्न तत्रानुक्तेरवकाश इति संवादस्य पृथग्वाच्यतैव । वस्तुतस्तु संवादो नाम विप्रतिपन्नप्रमेयाङ्गीकारः । तेन च दूषणानां परिहारो भवत्येव स्वपक्षस्यैव परित्यक्तत्वादेव । तथा च संवादस्यैव दोषता वाच्या । एतेन जिज्ञासितानुक्तिरसङ्गतिस्तयैवात्रापि निग्रहसम्भवेन न संवादस्य पृथक्स्थानत्वमिति निरस्तम् । जिज्ञासितानुक्तेरभावात् । न चैवं तर्हि वर्णमालोच्चारणस्याप्यन्यतर ज्ञापकोच्चारणत्वेन सामान्यरूपेण जिज्ञासितत्वसम्भवेन तत्स्थलेऽप्यनुक्तेरनवसरप्रसङ्ग इति वाच्यम् । उक्तेरेव जिज्ञासितत्वेन वर्णमालाया अबोधकत्वेनोक्तित्वाभावात् । तदुच्चारणस्याप्यनुक्त्युपस्थितिद्वारैवान्यतर ज्ञापकत्वेनानुक्तेरावश्यकत्वात् ।

संवादेन तत्पक्षपरित्यागेन तत्पक्षोक्तदोषाणां परिहृतत्वाच्च । तर्हि तद्दूषणेनैव कथापरिसमाप्तिरिति न पृथङ् निग्रहस्थानोक्त्यवकाशः । यदि दूषणपरिहारः कृत इत्यभिमानसत्वान्न कथापरिसमाप्तिरिति चेत् । तर्हि प्रतिज्ञान्तरस्थलेऽपि प्रतिज्ञान्तरकरणेन दूषणपरिहारो भवतीत्यभिमानसत्वान्न कथापरिसमाप्तिः स्यादिति चेन्न । वैषम्यात् । तथा हि । प्रतिज्ञान्तरविषयस्य तत्कथाप्रवृत्तिप्रयोजकविप्रतिपत्तिविषयता तु नास्त्येव किन्तु तत्सिद्धेः संशयान्तरनिवर्तकत्वमेव । अतः पूर्वसंशयस्य तत्पक्षदूषणेनैव निवृत्तत्वात् । प्रतिज्ञान्तरविषयसिद्ध्या पूर्वसंशयस्यानिवृत्तेः कथान्तरत्वं युक्तम् । इयमेव कथासमाप्तिर्नाम या स्वप्रवृत्तिप्रयोजक संशयादिनिवृत्तिः । प्रकृते वाद्युक्तपक्षाङ्गीकारेण न संशयान्तरनिवृत्तिः किन्तु तत्कथाप्रवृत्तिप्रयोजक संशयनिवृत्तिरेव फलमिति । कथापरिसमाप्तेरभावात् । तद्दूषणपरिहारायोद्योगस्य सत्त्वेन तत्र संवादहेतुभूतदूषणस्य तत्काले तत्साध्यसाधनाशक्तेरनुमापकत्वा सम्भवात् । अन्यतरस्य पराजयहेतोरेव निग्रहस्थानत्वम् । पराजयपदार्थश्च तत्साध्यसाधनाशक्तिविषयकानुमितिरेव । अन्यतरस्मिन्नुत्कर्षज्ञानमपि कथाफलं परन्तु निग्रहस्थानेनैकस्मिन्नपकर्षज्ञानेऽन्यस्योत्कर्षधीर्भवत्येव । तथा च फलपर्यन्तमेव कथाया अनुवृत्तेरेकस्य साध्यस्य साधने दूषणे वा कथाफलस्य तत्संशयनिवृत्तेः पराजयस्य च फलस्य च निष्पत्तेर्न प्रतिज्ञान्तरस्थले कथानुवृत्तिः । संवादस्थले तदभावान्न कथायाः समाप्तिः किन्त्वनुवृत्तिरेव । हेत्वन्तरस्थले तु यद्यपि तत्कथाप्रयोजकसाध्यसंशयस्यानुवृत्तिरस्ति । अतो न वादकथायां तन्निग्रहस्थानं तत्फलस्य तत्साध्यनिर्णयस्यानिष्पन्नत्वेन कथाया असमाप्तेः । जल्पवितण्डयोस्त्वन्यतरयोर्जयपराजयजिज्ञासयैव प्रवृत्तिरिति तन्निश्चयोत्तरं न कथानुवृत्तिः । तथा चोक्तहेतुपरित्यागे तद्धेतौ प्रतियोग्युक्तदूषणेनासाधकत्वानुमितेर्जायमानत्वेन तेनासाधके साधकत्वाभिमानरूपविपर्ययानुमापकत्वस्य तद्धेतूकरणस्य सम्भवात् । विपर्ययस्यैव पराजयपदार्थत्वात्तन्निश्चयोत्तरं प्रकृतसाध्यसंशयसत्त्वेऽपि न कथानुवृत्तिः फलस्य निष्पन्नत्वात् । न च प्रतिज्ञाहान्यादिस्थले प्रतियोग्युक्ततत्प्रतिज्ञादूषणस्यैव वादिपराजयहेतुत्वं सम्भवतीत्यतो न संवादस्य निग्रहस्थानत्वं स्वीकार्यमिति वाच्यम् । संवादवाक्यात्पूर्वं तद्दूषणस्य न पराजयज्ञापकत्वम् । तस्य तत्परिहारार्थमुद्योगसत्त्वादनुक्तेरभावात् । किन्तु तद्वाक्यश्रवणानन्तरं तेन वाक्येन परपक्षाङ्गीकारे ज्ञाते सति तेन स्वपक्षपरित्यागोऽनुमातव्यः । परित्यागस्य स्वपक्षसाधनविषयकेच्छाभावरूपत्वेन तस्याप्रत्यक्षत्त्वात्तेन तेन तदनुकूलज्ञानाभावोऽनुमेयः । तेन दूषणपरिहारज्ञानाभावेन दूषणस्य स्थिरज्ञानानन्तरं तेन च तत्र वादिनि विपर्ययः पश्चादनुमातव्यः । अन्यथा दूषणस्य प्रमितत्वरूपस्थिरत्वज्ञानाभावे हेतोरेवाप्रमितत्वेन परपराजयानुमानायोगात् । न च प्रतिवादि वाक्येनैव तन्निश्चयः । प्रतिवादिन्याश्वासायोगात् । उक्तं च प्रमाणलक्षणटीकायाम् । हानिमनुद्भाव्य

स्थापयितुमशक्यत्वादिति । तथा च संवादस्य प्रथममुपस्थितत्वादशक्तिज्ञानाभावादि रूपपराजयानुमापकत्वाच्च निग्रहस्थानत्वेन तदनुद्भावने पर्यनुयोज्योपेक्षणेन स्वस्यैव निग्रहः प्रसज्येत । अतः प्रथमोपस्थितपरित्यागे कारणाभावात्संवाद एव कथासमाप्तिहेतुः । प्रतिज्ञान्तरस्य हेत्वन्तरस्य वा न निग्रहस्थानत्वं सम्भवति । प्रकृतसाध्यसिद्ध्युपयुक्त प्रमेयान्तरसिद्धिप्रयोजक प्रतिज्ञान्तरहेत्वन्तर करणेऽपि पराजयादृष्टेर्व्यभिचारान्न प्रतिज्ञान्तरकारणात्पूर्वं प्रतिवाद्युक्तदूषणे स्थिरत्वज्ञानं प्रतिज्ञान्तरश्रवणानन्तरं तत्र तद्दूषणपरिहारकत्वादर्शनेन स्थिरत्वज्ञानं ततस्तेन दूषणेनोक्तविपर्ययरूप पराजयानुमितिर्वक्तव्या । अतः पूर्वदूषणस्यैव कथासमाप्तिहेतुत्वम् । न च प्रतिज्ञान्तरश्रवणानन्तरमसङ्गतेरपि स्फूर्त्या तस्या एव निग्रहस्थानत्वं सम्भवतीति न पूर्वदोषेणैव पूर्वकथासमाप्तिरिति वाच्यम् । असङ्गत्या तदुक्तौ प्रकृतोपयुक्तत्वभ्रम एवानुमीयते । पूर्वदूषणेन तु प्रकृतसाध्यसिद्ध्यनुकूल शक्त्यभावोऽनुमीयते । तत्र च प्रतिवाद्युक्तदूषणज्ञानमस्त्येव । तद्वाक्येन तत्परिहारज्ञानाभावे सति प्रतिज्ञान्तरकरणरूपहेतुनां तत्र प्रमात्वानुमितेरेव प्रथमतो जायते । तथा च तेनैव दूषणेन पराजयानुमितिर्युक्ता । असङ्गतिस्तु न प्रथमतो बुद्ध्यावारोहति । प्रतिज्ञान्तरविषयीभूतार्थसिद्ध्या पूर्वदूषणपरिहारासम्भवात् । किन्तु पूर्वदूषणपरिहारज्ञानाभावेन तत्र स्थिरत्वज्ञानोत्तरमेव । तथा च प्रथमत उपस्थितपूर्वदूषणज्ञानेनैव कथापरिसमाप्तिर्युक्ता । एवमसङ्गतिः सर्वत्र भवतीति न नियमः । किञ्च कथाप्रवृत्तिप्रयोजकमुख्यसंशयादिनिवृत्तेरेव मुख्यफलत्वेन तत्साधनीभूतस्यैव प्रथमं बुद्ध्यावारोहस्योचितत्वाच्च । तथा च प्रथमोपस्थिततद्दूषणं विनाऽसङ्गत्यादेरतादृशयस्य निग्रहस्थानत्वाङ्गीकारो न युक्तः । प्रतिज्ञाहानिस्थले तु संवादस्यैव प्रथमोपस्थितस्य पराजयनिमित्तत्वेन तत्परित्यागानुपपत्तेर्न पूर्वदूषणस्य कथासमाप्तिहेतुत्वम् । तदुपस्थितेर्व्यवहितत्वात् । अत एव न प्रतिज्ञाहानिस्तत्त्वेनोद्भावनीया । प्रथमोपस्थितसंवादपरित्यागे कारणाभावात् । तस्याः प्रतिज्ञातसाधनविषयकेच्छाभावरूपेण तस्याहङ्कारखण्डनपदार्थत्वेन तज्ज्ञापकत्वाच्च संवादस्य निग्रहस्थानत्वमावश्यकमेव । जिज्ञासितानुक्तिर्नासङ्गतिः किन्तु तद्भिन्नानुक्तिरेव । सा तु तत्त्वेनोद्भाव्या । तूर्ष्णींस्थितिकालोऽसङ्गत्युद्भावनस्य कैरप्यनङ्गीकाराज्जिज्ञासितहेतुमुक्त्वा तत्पदनिर्वचनकर्तुरसङ्गत्यभावप्रसङ्गात् । अतोऽजिज्ञासितोक्तिरेवासङ्गतिः । न्यूनता तु स्वाभिप्रायबोधकपदसमुदायाभावः । अनुक्तिस्तु तादृशपदसामान्याभाव इति तयोर्भेदः । न्यूनतास्थलेऽनुक्तिर्नोद्भावयितुं शक्या तदभावात् । अनुक्तिस्थले न्यूनताऽस्ति तथाऽपि नोद्भावनीया । पदसामान्याभावरूपानुक्तेरेव प्रथममुपस्थितत्वात् । तस्या हेतुत्वे समुदायपदवैय्यर्थ्याच्च । न चाखण्डाभावघटकतया सार्थक्यम् । समुदायत्वघटितबहुपदार्थज्ञानाधीनज्ञानत्वेन प्रतिपत्तिगौरवरूपदोषसत्त्वेन वक्तुर्निग्रहसम्पादकत्वेन दोषत्वात् । कथायां

हेतुवाक्ये समुदायपदं प्रयुञ्जत आधिक्येन निग्रहप्रसङ्गश्च । तस्माद्विरोधोऽसङ्गतिर्न्यूनताऽऽधिक्यं संवादोऽनुक्तिरिति षडेव निग्रहस्थानानि । अन्येषां पराजयनिमित्तत्वेऽपि सभायामनुद्भावनीयानीत्यर्थः। नैयायिकाभिमतानां निग्रहस्थानानामत्रैवान्तर्भावं वक्तुं तन्मतमनुवदति । तत्रादौ निग्रहस्थानसामान्य-लक्षणमाह ॥ **कथायामिति** । उपलक्षणमेतत् । परस्याशक्तिर्विपर्ययाज्ञानादीनि च पराजय इति ज्ञातव्यम् ॥ **अहङ्कारखण्डनं चेति** । सङ्कल्पभ्रंश इच्छाभावः । ननु स्वपक्षसाधनपरपक्षदूषण-सङ्कल्पस्येष्टसाधनविषयकेच्छारूपत्वेन तद्विषयकेच्छाऽनुवर्तत एव । परन्तु शक्त्यभावान्न विषय-सिद्धिः । तस्या एव तदिच्छानिवर्तकत्वं न तु विषय सिद्ध्यनुकूलशक्त्यभावस्य तावज्ज्ञानस्य वा पूर्वशक्त्यभावज्ञाने विवेकिनामिच्छैव नोदेति । तथा चोक्तसङ्कल्पभ्रंशनिमित्तत्वं निग्रहस्थानानां सम्भवति । न च सङ्कल्पो नेच्छारूपः किन्तु मनोवृत्तिविशेषः । अथवाऽहङ्कारो नाम गुणान्तरं वेति वाच्यम् । गुणानां चतुर्विंशतित्वनियमवादिनां नैयायिकानां मते गुणान्तरस्य वक्तुमशक्यत्वात् । तन्मते मनोवृत्तिरूपाहङ्कारदेरभावाच्चेति चेत् । तादृशशक्तिमत्त्वनिश्चयपूर्वकेच्छैव सङ्कल्पपदार्थो नेच्छामात्रम् । तादृशभ्रमनिवृत्तौ तु तादृशेच्छाया निवृत्तिर्भवत्येवातो न दोषः । तादृशनिश्चय एव वा सङ्कल्पः । तादृशेच्छासाध्यप्रत्यत्नः सङ्कल्प इति केचित् । अप्रतिपत्तिर्विप्रतिपत्तिर्वा निग्रहस्थानमिति गौतम-सूत्रानुसारेणाह ॥ **परोक्तेति** । अज्ञानविपर्ययज्ञानद्वारैवा शक्त्यादिज्ञापकत्वमिति भावः ।

**श्रीनि.**— ॥ **स्वक्रियाविरोध इति** । ननु स्वक्रियास्वन्यायविरोधयोः कथं स्ववचनव्याहतित्वम् । स्वक्रियास्वरीत्योः स्ववचनत्वासम्भवादिति चेन्न । स्ववचनलक्षणे क्रियाया एव स्वक्रियात्वेन स्ववचनाभिप्रेतन्यायस्यैव स्वन्यायत्वेनोक्ततया तद्विरोधयोः स्ववचनव्याहतित्वसम्भवात् ॥ **कथाया-मिति** । अनेकविद्वत्कर्तृकविचारगोचरो वाक्यप्रबन्धः कथा सा त्रिविधा । वादजल्पवितण्डाभेदात् । तत्त्वबुभुत्सुकथा वादः । स्वपक्षसाधनोपेतविजिगीषुकथा जल्पः । तद्रहितविजिगीषुकथा वितण्डा । अपस्मारो भूतावेश उन्मादो मद्यपानादिप्रयुक्तोन्मत्तता ॥ **पुरःस्फूर्तिरिति** । पुरतः स्फूर्तिर्यस्यासौ पुरःस्फूर्तिकः । स चासौ कथामनधिकृततदुद्भावितानीत्यर्थः ।

**वि.**— जातिर्नाम केति जिज्ञासायामाह ॥ **स्ववचन एवेति** । स्ववक्तृवचन एव व्याहतिर्मिथो विरोधो जातिरित्यर्थः । पूर्वाचार्यैः स्ववचनयोर्विरोधरूपापसिद्धान्तव्यवच्छेदायैवकारोपादानम् । साधर्म्यवैधर्म्योत्कर्षापकर्षसमादिपरोदीरितजातीनां जातित्रयेऽन्तर्भावज्ञापनाय जातिविभागमाह ॥ **सा त्रिविधेति** । एकवक्तृकवाक्यावान्तरवाक्ययोरन्यतरस्य मिथो व्याघातः परस्परं विरोध इत्यर्थः ॥ **स्वक्रियाविरोध इति** । स्वक्रियायाः स्ववचनविरोध इत्यर्थः । न च विरोधो मानस्वभावाभ्यामिति

प्रमाणलक्षणोक्तेः स्ववाक्येन विरोध एव स्ववचनविरोधः । तथा च स्वक्रियाविरोधस्य कथं स्ववचनविरोधभेदत्वं कथं स्ववचनेन स्ववचनव्याहतिरूपाया जातिस्तत्त्वमिति वाच्यम् । स्ववचन-क्रियाया विरोधः स्वक्रियाविरोधः । स्ववक्तृकवचने स्ववक्तृवचनप्रतियोगिकविरोधो जातिरिति चाभ्युपगमात्स्ववचनस्य प्रतियोगिकोटौ निवेशेनास्य स्ववचनविरोधप्रभेदत्वजातित्वयोः सम्भवात् । अत एव प्रमाणलक्षणटीकायां द्वितीयजातेरपीदमुदाहरणं जातिरिति । न मेयं मानसापेक्षमिति वदति प्रमाणं चाभिधत्तेऽतो मूकोऽहमिति । स्वक्रियाविरोध इत्यनेन स्ववचनं क्रियया विरोधस्य स्वक्रिया-विरोधत्वमुक्तम् ॥ **स्वन्यायविरोधश्चेति ।** इति पूर्वेणान्वयः । स्वन्यायेन स्ववचनन्यायेन स्ववचनमस्य विरोधश्चेत्यर्थः । एतेन स्वन्यायविरोधस्य कथं स्ववचनविरोधत्वं जातित्वं चेति चोद्यं निरस्तम् । स्ववचनस्यापि प्रतियोगिकोटौ निवेशाभ्युपगमात् । यद्वा स्वक्रियाविरोध इत्यस्य स्वक्रियाविरोधः स्ववचनेन विरोध इत्यर्थः । जातिलक्षणवाक्ये स्ववचनपदं स्वक्रियास्वन्याययोरप्युपलक्षणम् । तथा च स्ववचःस्वक्रियास्वन्यायेषु व्याहतिः स्ववचनप्रतियोगिको विरोधो जातिरित्यर्थः । स्वरूपासिद्ध्यादे-र्हेतुविरोधान्तर्भावज्ञापनाय हेतुविरोधविभागमाह ॥ **हेतुविरोधोऽपीति ।** अत्र हेतुपदं लिङ्गमात्रपरम् । प्रतिज्ञाविरोधवद्धेतुविरोधोऽपि स्वरूपासिद्धिर्व्याप्त्यभावश्चेति द्विविध इत्यर्थः । पक्षधर्मत्वप्रमित्य-भावोऽसिद्धिरिति भ्रान्तिवारणायासिद्धिशब्दार्थमाह ॥ **समुचितस्थल इति ।** यत्र प्रमितं लिङ्गं विवक्षितस्थले साध्यप्रमाञ्जनयति तदेव लिङ्गस्योचितस्थलं तस्मिन्नित्यर्थः । प्रत्यक्षसिद्धिसङ्ग्रहाय प्रमितिग्रहणं कृतम् । साधारणानैकान्तिकविरुद्धासाधारणानैकान्तिकानध्यवसितानामव्याप्तावन्तर्भाव-ज्ञापनाय हेतुविरोध विभागमाह ॥ **अव्याप्तिस्त्रिविधेति ।** तदभावेन च साध्याभावेन च सम्बन्धि-तदधिकरणवृत्तित्वरूपसाध्याभावसम्बन्धव्याप्त्यभाव इति वाच्यम् । साध्यसमानाधिकरणहेतुनिष्ठ-नियतसामानाधिकरण्य रूपसम्बन्धपर्यवसन्नाविनाभावव्याप्ति भङ्गप्रतिपादनपरमित्यङ्गीकारेणोक्त-चोद्यानवकाशात् ॥ **उभयसम्बन्धाभावश्चेति ।** इति त्रिवेधेति पूर्वेणान्वयः । लिङ्गस्येत्यनुवर्तते । साध्यसाध्याभावाभ्यां सहावस्थानरूपसम्बन्धाभाव इत्यर्थः । इदं पक्षातिरिक्तस्थल इत्यवगन्तव्यम् ॥ **दृष्टान्तविरोधोऽपीति ।** व्याप्तिग्रहणस्थलं दृष्टान्तस्तद्विरोधोऽपि हेतुविरोधवत्साध्यराहित्यं साधन-राहित्यं चेति द्विविध इत्यर्थः । ननु लिङ्गवचने हेतौ स्ववचनविरोधः कुतो नोक्त इत्यत आह ॥ **हेत्वादाविति ।** दृष्टान्तवचनमादिशब्दार्थः । असिद्ध्यादिनेत्यत्रादिपदेनाव्याप्तिसाध्यवैकल्यसाधन-वैकल्यान्युच्यन्ते । तथा च मूकत्वे सति वक्तृत्वादित्यादौ हेतावसिद्ध्यव्याप्तिभ्यां यथा मातृत्वे सति वन्ध्येति दृष्टान्तवचने साध्यवैकल्यसाधनवैकल्याभ्यां स्ववचनविरोधः सङ्गृहीतः क्रोडीकृत इति हेतोर्नोक्त इत्यर्थः । हेतुदृष्टान्तयोरर्थदोषोक्त्या स्ववचनविरोधस्तत्र सुज्ञान इति नोक्त इति भावः ।

यद्यपि माता वन्ध्येति प्रतिज्ञायामपि स्ववचनविरोधोऽपि सङ्गृहीत इति न वक्तव्यः । तथाऽपि स्ववचनविरोधः सापसिद्धान्तजातिभेदेन द्वैविध्यज्ञापनार्थं तदभिधानमिति बोध्यम् । अर्थान्तर-निग्रहस्थानमसङ्गत्यादावन्तर्भाव इति ज्ञापनायासङ्गत्यादि विभागमाह ।। **एवमसङ्गतीति ।** यथा विरोध इति ज्ञातेन दृष्टान्तसम्बन्धभेदेन त्रिविधानीत्यर्थः । अर्थवचनरूपानुमानदोषाणां प्रतिज्ञाविरोधादीना-मुदाहरणानि कानि के च कथारूपसाधारणविरोधादय इति जिज्ञासायामाह ।। **एतेषामिति ।** विरोधादींश्चासङ्गतिन्यूनाधिक्यान्यादिशब्दार्थः । ननु परोदीरितानामर्थवचनरूपानुमानदोषाणां विरोधासङ्गतिन्यूनाधिकैः सङ्गृहीतत्वादवाच्यत्वे परोदीरितनिग्रहस्थानानामेतेष्वन्तर्भावात्तानिपृथग्वक्त-व्यानीत्यत आह ।। **न केवलमुपपत्तिदोषाणामिति ।** दोषाणामिति । नन्वर्थवचनदोषेषु विरोधादिष्वर्थ वचनदोष रूपनिग्रहस्थानानामन्तर्भावसम्भवेऽपि वक्तृदोषात्मकनिग्रहस्थानानां तत्रान्तर्भाव इत्यत आह ।। **वक्तृदोषाभ्यामिति ।** तर्हि प्रधाननिग्रहस्थानानि कियन्तीति जिज्ञासायामाह ।। **ततश्चेति ।** यस्मात्परोदीरितनिग्रहस्थानानि विरोधादिष्वन्तर्भूतानि । ततस्तस्मादेव विरोधादीनि षडेव निग्रहस्थानानि च न न्यूनाधिकानीत्यर्थः । संवादानुक्ति स्वरूपजिज्ञासायां तत्स्वरूपमाह ।। **विप्रति-पन्नेति ।** अत्र विप्रतिपन्नप्रमेयाङ्गीकारस्यादोषत्वात्तद्व्यवच्छेदायेदं विशेषणम् ।। **परबोधनार्थस्येति ।** इदं च विशेषणमबोधकशब्दप्रयोगरूपनिरर्थकादिसङ्ग्रहार्थमुक्तम् । परबोधनोपयुक्तस्याप्यवक्तव्यस्य यद्वचनं प्रकृतानुपयुक्तान्वितोक्तिरर्थान्तरं तत्सङ्ग्रहार्थं वक्तव्यस्येति विशेषणम् । निग्रहस्थानलक्षणं वक्तुं निग्रहस्वरूपं निरूपयति ।। **कथायामिति ।** विचारगोचरानेकविद्वद्वाक्यविस्तरः कथा । तस्या-मखण्डिताहङ्कारेण वादिप्रतिवादिनोरन्यतरस्याहङ्कार खण्डनं पराजयनिग्रहपदाभ्यामुच्यत इत्यर्थः । पराजयनिमित्तं निग्रहस्थानमित्येतन्न लक्षणान्तरमिति ज्ञापनाय पराजयपदोपादानम् ।। **तन्निमित्त-मिति ।** पराजयापरनामकनिग्रहहेतुनिग्रहस्थानमित्यर्थः । नन्वहं धनी कुलीन इत्याद्यहङ्कारस्यानेन निवृत्तेः कथं तन्निमित्तं निग्रहस्थानमुच्यत इत्यत आह ।। **अहङ्कारखण्डनं चेति ।** अहङ्कारखण्डनं तु स्वसिद्धान्तसाधनं परसिद्धान्तदूषणं च करिष्यामीति तयोर्यः सङ्कल्पस्तस्य निवृत्तिरित्यर्थः । नन्वहङ्कारखण्डनरूपपराजय हेतुरूपनिग्रहस्थानमित्येवास्तु किं कथायामित्यादिविशेषणप्रक्षेपेणेत्यत-स्तद्व्यावर्त्यानाह ।। **अत एवेति ।** निग्रहस्थानलक्षणे कथायामित्यादिविशेषणोपादानमेवेत्यर्थः । अस्यामवच्छिन्नानीत्यनेनान्वयः । कथायामित्यनेन कथाबहिर्भूतानां सखिसब्रह्मचारिणां विनोदप्रसङ्गे प्राप्तानि प्रतिज्ञादीन्यखण्डिताहङ्कारेणेत्यनेन कथायामपस्मारोन्मादग्रहावेशवृश्चिकवेधाद्यवस्थायां प्राप्ता-न्यहङ्कारखण्डने निमित्तान्यप्रतिभादीनि । उन्मत्ताद्यभावेऽपि सभादर्शनप्रयुक्तबुद्धिक्षोभाद-विलम्बेनोत्तरापरिस्फूर्त्या क्षणमात्रं तु तूष्णीमवस्थानेन प्राप्तावकाशवन्त्यपि झटितिसंवरणेन शीघ्रं

तदाच्छादनेन प्रसिद्धोद्भावनावसरवन्त्यननु भाषणादीनि पुरःस्फूर्तिकैः प्रतिभाविशेषसम्पन्नैरनधिकृतैः कथाधिकारहितैर्वादिप्रतिवादि प्राश्निकव्यतिरिक्तैरुद्भावितानि प्रतिज्ञाहान्यादीनि च व्यावर्तितानीत्यर्थः। यद्यपि कथातिरिक्तविनोदप्रसङ्गेषु प्राप्तानां प्रतिज्ञाहान्यादीनां कथायामप्यपस्मारादिदशाप्राप्तानाम प्रतिभादीनां कथानधिकृतेन तटस्थेनोद्भावितानां प्रतिज्ञाहान्यादीनां चाहङ्कारखण्डन निमित्तत्वा-न्यव्यवच्छेद्यता तथाऽप्यखण्डिताहङ्कारेण वादिप्रतिवादिनोरन्यतरेणैके नापरस्याहङ्कारखण्डनरूप-पराजयोद्देशेन कथाप्रवृत्तेः। कथायामखण्डिताहङ्कारेणैकेन परस्याहङ्कारखण्डनात्मा यः पराजय-स्तान्निमित्तस्यैव दोषत्वात्। कथाबाह्यस्यान्यतर प्राप्तस्याहङ्कारखण्डनमितित्तस्य दोषत्वमेवेति युक्तमेव तस्य व्यवच्छेद्यत्वमित्यनुसन्धेयम्। तत्त्वाप्रतिपत्तिलिङ्गनिग्रहस्थानमिति लक्षणान्तरमभिप्रेत्याह ॥ **परोक्तस्ववक्तव्ययोरिति**। विपरीतज्ञानमर्थं वैपरीत्येन ज्ञानमयथार्थज्ञानमिति यावत्। विरोधासङ्गती न्यूनाधिके संवादानुक्तीति षडेव निग्रहस्थानानीत्युक्तम्।

## निग्रहस्थानानि

(२४) प्र.प.— **तानि च ॥ १ ॥ प्रतिज्ञाहानिः ॥ २ ॥ प्रतिज्ञान्तरम् ॥ ४ ॥ प्रतिज्ञा-विरोधः ॥ ४ ॥ प्रतिज्ञासन्न्यासः ॥ ९ ॥ हेत्वन्तरम् ॥ ६ ॥ अर्थान्तरम् ॥ ७ ॥ निरर्थकम् ॥ ८ ॥ अविज्ञातार्थम् ॥ ९ ॥ अपार्थकम् ॥ १० ॥ अप्राप्तकालम् ॥ ११ ॥ न्यूनम् ॥ १२ ॥ अधिकम् ॥ १३ ॥ पुनरुक्तम् ॥ १४ ॥ अननुभाषणम् ॥ १५ ॥ अज्ञानम् ॥ १६ ॥ अप्रतिभा ॥ १७ ॥ विक्षेपः ॥ १८ ॥ मतानुज्ञा ॥ १९ ॥ पर्यनुयोज्योपेक्षणम् ॥ २० ॥ निरनुयोज्यानु-योगः ॥ २१ ॥ अपसिद्धान्तः ॥ २२ ॥ हेत्वाभासश्चेति द्वाविंशतिः।**

**राघ.**— तानि निग्रहस्थानानि। वक्ष्यमाणबहुत्वापेक्षया बहुवचनम्।

**विज.**— परोक्तरीत्या तदुद्देश्यमाह ॥ **तानीति**।

**अभि.**— तानि चेति। परोदीरितानि चेत्यर्थः।

**वि.**— नैय्यायिकैरन्यथा परिगणितत्वात्कथमनुक्तनियम इत्याशङ्कावारणाय परोदिरित निग्रह-स्थानमात्रान्तर्भावं वक्तुं तदुक्तविभागमाह ॥ **तानि चेति**। नैय्यायिकोक्तानीत्यर्थः।

(२५) प्र.प.— **॥ १ ॥ प्रतिज्ञाहानिः ॥ तत्र येन यद्यथा साध्यत्वादिना निर्दिष्टं तेन तस्य तथा परित्यागः प्रतिज्ञाहानिः। यथा पर्वतोऽग्निमान्प्रमेयत्वादित्युक्तेऽनैकान्तिकत्वेन च प्रयुक्ते मा भूत्तर्हि पर्वतोऽग्निमानिति। अयन्तु संवाद एव।**

**जना.**— ॥ **तत्रेति** । तत्र कथायाम् । येन वादिना वा प्रतिवादिना वा । यत् पक्षहेतुदृष्टान्त दूषणादीनामन्यतमं प्रथमनिर्दिष्टं तस्य दूषणसमुन्मेषणे कथानिर्वाहमपश्यता तेन वादिना परित्यागः प्रतिज्ञाहानिरित्यर्थः । एतदेवाह वरदराजोऽपि । कथायां यच्च पक्षादि येन निर्दिष्टमादितः । तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरिष्यत इति । प्रतिज्ञाहानेरन्तर्भावमाह ॥ **अयमिति** ॥ **संवाद एवेति** । विप्रतिपन्नप्रमेयाङ्गीकाररूपत्वस्य स्पष्टत्वादिति भावः ।

**राघ.**— एतेषां क्रमाल्लक्षणोदाहरणानि वदन्नेव कानिचिन्निग्रहस्थानानि । केषाञ्चिन्निग्रह-स्थानत्वेऽपि स्वोक्तनिग्रहस्थानेषु यथासम्भवमन्तर्भाव इत्याह ॥ **तत्रेति** । तेषु मध्य इत्यर्थः ।

**विज.**— प्रतिज्ञाहानिं लक्षयति ॥ **तत्रेति** । उद्दिष्टेष्वित्यर्थः । येन निर्दिष्टं तेनेत्यनेन कथक-निर्दिष्टस्य चोक्त्या त्यागस्य तदीयत्वोक्त्या च कथाबाह्यभिन्नकर्तृकव्यावृत्तिः । यथा निर्दिष्टं तथा त्याग इत्यनेन शब्दानित्यत्वसाधने ध्वन्यंशे सिद्धसाधने वर्णात्मक इति पक्षविशेषणप्रक्षेपे प्रतिज्ञान्तरे ध्वन्यंशस्य पक्षस्य त्यागेन तत्रातिव्याप्तिः परिहृता । तत्र शब्देन पक्षनिर्देशे तेन रूपेण पक्षत्यागा-भावात् । झटिति संवरणे पूर्वोक्तत्यागेऽपि संवरणानवसर इति पूरणेऽतिप्रसङ्गपरिहारः ॥ **उदाहरति** ॥ **यथेति** । अस्यान्तर्भावमाह ॥ **अयमिति** । परित्याग इत्यर्थः ॥ **संवाद इति** । विप्रतिपन्नस्य पर्वतनिर्वह्नित्वरूप प्रमेयस्याङ्गीकारादिति भावः ।

**वेदे.**— ॥ **तत्रेति** । उद्दिष्टेष्वित्यर्थः । येन वादिना प्रतिवादिना वा । कथायामित्युपस्कर्तव्यम् । यत् पक्षहेतुदृष्टान्तानामन्यतमत् । यथा येन प्रकारेण तेन वाद्यादिना तस्य पक्षाद्यन्यतमस्य तथा तेन प्रकारेण । अत्र कथायामित्युक्त्या कथाबाह्यपक्षादित्यागे येन तेनेति समानार्थकर्तृकत्वोक्त्या भिन्न-कर्तृकत्यागे यत्तत्तस्येति प्रमेयैक्योक्त्या भिन्नप्रमेयत्यागे यथा तथेति प्रकारैक्योक्त्यैकस्यैव पक्षादेः प्रमेयस्यैक्येनैव पुंसा प्रकारान्तरेण च त्यागे चातिव्याप्तिः परिहृतेति ज्ञातव्यम् । प्रतिज्ञाहाने-र्बहुविधत्वेऽपि दिङ्मात्रप्रदर्शनायोदाहरति ॥ **यथेति** । एवमग्रेऽपि द्रष्टव्यम् । विस्तरस्तु प्रमाण-लक्षणटीकातोऽवगन्तव्यः । अयमिति त्यागपरामर्शः । विधेयलिङ्गत्वं वा ।

**अभि.**— ॥ **अयं तु संवाद एवेति** । ननु प्रतिज्ञान्तरं न निग्रहस्थानम् । एवं प्रतिज्ञाहानिरपि न निग्रहस्थानं न्यायसाम्यात् । तथा हि । पर्वतोऽग्निमान्प्रमेयत्वादित्युक्तेऽनैकान्ते चाभिहिते मा भूत्तर्हि पर्वतोऽग्निमानित्यभिधानं प्रतिज्ञाहानिरित्युदाहृतम् । अत्र वक्तव्यम् । किं पूर्वैव कथा प्रवर्तते । उत कथान्तरम् । नाद्यः । एकस्य साधनस्य दूषणस्य स्थितौ भङ्गे वा कथायाः परिसमाप्तत्वेन निग्रह-स्थानाभिधानायोगात् । न द्वितीयः । द्वितीयकथायां मा भूत्तर्हि पर्वतोऽग्निमानित्यग्निमत्त्वाभावस्यैव

प्रतिज्ञातत्वात् । तस्य च परित्यागाभावेन प्रतिज्ञाहान्यभिधानायोगात् । ततश्च निग्रह-स्थानत्व-मङ्गीकृत्यान्तर्भावकथनमयुक्तमिति चेत् । सत्यम् । परोक्तोदाहरणादेरप्रतिज्ञाहानेः प्रतिज्ञान्तरवन्निग्रह-स्थानत्वाभावः । तथाऽप्युदाहरणान्तर सद्भावान्निग्रहस्थानत्वमेव । इदमत्रोदाहरणम् । पर्वतोऽग्नि-मान्धूमवत्त्वादित्यभिहिते कथमस्य व्याप्तिरिति पृष्टे ब्रवीति । मा भूत्तर्हि पर्वतोऽग्निमानिति । अत्र साधनदूषणयोः स्थितेर्भङ्गस्य वाऽभावेन कथापरिसमाप्त्यभावात् । भवत्येव हि प्रतिज्ञाहानि-र्निग्रहस्थानमिति ।

**आद.**— ॥ **तत्रेति** ॥ **साध्यत्वादिनेति** । आदिपदेन हेत्वादीनां परिग्रहः । तेन पक्षे साधन-धर्मितद्विशेषणानां पक्षे दृष्टान्ते च हान्यादीनां द्वादशविधानामपि सङ्ग्रहः । एतेषां पृथक् पृथुग् उदाहरणानि प्रमाणलक्षणटीकायां द्रष्टव्यानि । त्यागस्तत्साधनसंकल्पाभावः । अन्यविधस्य त्यागस्य प्रकृतेऽसम्भवात् ॥ **अयं तु संवाद एवेति** । संवादज्ञाप्य इत्यर्थः । संवाद इति सप्तमी ज्ञायत इति शेष इति वा । त्यागस्य संवादरूपत्वासम्भवात् । एवमुत्तरत्रापि बोध्यम् । एवं च संवादस्य प्रथम-मुपस्थितत्वात्स एवोद्भाव्य इति भावः । यद्यपि यद्दूषणभयेन परित्यजति तद्दूषणस्य प्रथम-मुपस्थितत्वमस्तीति प्रतिभाति । तथाऽपि सद्विषयप्रतिज्ञाहान्यादौ तादृशदोषस्यैवासत्त्वेन तस्य हेतुत्वासम्भवः । असत्स्थलेऽपि पूर्वोक्तरीत्या स्थिरत्वज्ञानाभावात्स्वपक्षसाधनसङ्कल्पस्येच्छारूपत्वेन प्रतिज्ञाहानेस्तदभावरूपत्वेन परपराजयरूपत्वात् तस्य तल्लिङ्गत्वासम्भवाच्च संवादस्यैव निग्रह-स्थानत्वमिति भावः ।

**वि.**— कथं द्वाविंशतिनिग्रहस्थानानामन्तर्भाव इति जिज्ञासायां तल्लक्षणकथनपूर्वकमन्तर्भावमाह ॥ **तत्रेति** । द्वाविंशतिनिग्रहस्थानेष्वित्यर्थः । येन वादिना यत्पक्षहेतुदृष्टान्तदूषणान्यतमं यथा येन रूपेण साध्यत्वादिना निर्दिष्टपक्षवादिनोक्तं तेन वादिप्रतिवादिनोरन्यतरेण तस्य पक्षादेस्तथा निर्दिष्ट-प्रकारेण निर्वाहासम्भवे परित्यागः प्रतिज्ञाहानिरित्यर्थः । हेतुहान्यादेर्निग्रहस्थानान्तरत्व निवारणायादि पदोपादानम् । अनैकान्तिकेन प्रयुक्त इति व्यभिचारेण तस्मिन्हेतौ तथा दूषिते माऽस्त्वसौ हेतुर्धूमवत्त्व मस्त्वित्यादिरादि शब्दार्थः ॥ **अयं त्विति** । प्रतिज्ञाहानिरूपदोषस्तु संवाद एव न ततोऽतिरिक्त इत्यर्थः । मा भूत्पर्वतोऽग्निमानित्यङ्गीकारस्य विप्रतिपन्नप्रमेयत्वाङ्गीकारत्वादिति भावः ।

**(२६) प्र.प.— ॥ २ ॥ प्रतिज्ञान्तरम् । प्रथममविशिष्टतयोक्ते साध्यभागे पुनर्विशेषणप्रक्षेपः प्रतिज्ञान्तरम् । प्रतिज्ञोदाहरणे प्रयोज्यभागो निगमनं चेति साध्यभागः । यथा शब्दोऽनित्य इति प्रतिज्ञाते ध्वनिभिः सिद्धसाधनत्वोद्भावने वर्णात्मकः शब्दोऽनित्य इत्यादि । अत्र वक्तव्यम् । किं**

**पूर्वैव कथाऽनुवर्ततेऽथ कथान्तरम् । नाद्यः । एकस्य साधनस्य दूषणस्य वा स्थितौ भङ्गे वा कथायाः परिसमाप्तत्वात् । साधनान्तरोपन्यास (स्यावसराभावात्) स्य व्यर्थत्वात् । न चेदं पूर्वोक्तमेव । तथात्वे पूर्वदूषणेनैव दुष्टत्वप्रसङ्गात् । न द्वितीयः । तथा सति प्रथममेव विशिष्टस्योपात्तत्वेन प्रतिज्ञान्तराभावात् । वादे तु कथैक्येऽपि न निग्रहस्थानम् । शङ्कानिवृत्तिपर्यन्तं प्रतिवक्तव्यत्वात् । सत्यम् । निवृत्तयोरपि जल्पवितण्डयोः पुनर्विशेषणं प्रक्षिपतः को दोष इति चेत् । असङ्गत्यादिकमिति ब्रूमः । तदपि कथाबाह्यत्वान्न निग्रहस्थानम् ।**

**जना.—** कोऽयं साध्यभाग इत्यत आह ॥ **प्रतिज्ञेति** । उदाहरण इति सप्तम्यन्तपदम् । न तु प्रतिज्ञोदाहरणे इति द्वन्द्वः । एतदेवाह वरदराजोऽपि । अविशेषितपूर्वोक्तसाध्यांशे दूषिते पुनः । तद्विशेषणनिक्षेपः प्रतिज्ञान्तरमिष्यत इति । प्रतिज्ञान्तरं जल्पवितण्डयोर्निग्रहस्थानमुत वादेऽपीति विकल्पं हृदि निधायाद्यं द्वेधाविकल्पनीयमित्याह ॥ **अत्रेति** । प्रतिज्ञान्तरस्य निग्रहस्थानतावादिनं प्रतीति शेषः ॥ **पूर्वैव कथेति** । वर्णात्मक इति विशेषणप्रक्षेपकाल इति शेषः । जल्परूपा वितण्डारूपा वेत्यर्थः । कुतो नाद्य इत्यत आह ॥ **साधनान्तरोपन्यासस्य व्यर्थत्वादिति** । ननु पूर्वोपक्रान्तकथायां यद् ध्वनिभिस्सिद्धसाधनत्वं प्राप्तं तत्परिहारायैव साधनान्तरोपन्यासस्सार्थक इत्यत आह ॥ **एकस्येति** । अत्र स्थितिभङ्गपदे साधनदूषणपदाभ्यां प्रत्येकं सम्बध्येते । साधनस्य स्थितौ भङ्गे वा दूषणस्य स्थितौ भङ्गे वेति । साधनस्य स्थितावित्यत्र निष्प्रत्यूहं समाप्तत्व इत्यर्थः । दूषणस्य स्थितावित्यत्र सम्यग्लग्नत्व इत्यर्थः ॥ **साधनान्तरेति** । वर्णात्मक इति विशेषणरूपसाधनान्तरोपन्यासस्येत्यर्थः । एवं साधनान्तरोपन्यास वैय्यर्थ्यपरिहारायैव पूर्वोक्तैव कथाऽनुवर्तत इत्याद्यपक्षेऽवश्याभ्युपेये सति विशेषणान्तरप्रक्षेपस्यासङ्गतत्वमेव स्यान्न प्रतिज्ञान्तरत्वमिति भावः । अस्मदुक्तमाचार्याशयमजानानो यथा कथञ्चित्प्रत्युत्तरदानमात्रेण प्रकृतसङ्गतिरिति मन्वानो भ्रान्तश्शङ्कते ॥ **न चेदमिति** । इदं वर्णात्मकत्वविशेषणविशिष्टम् । पूर्वोक्तमेव शब्दो नित्य इत्यनेनैवोक्तमिति न चेत्यर्थः। इदं पूर्वोक्तमेवेति नैयायिकेन शङ्किते सत्याचार्यैः कथाया अविच्छेदायैवेत्थं मत्वेदं पूर्वोक्तमेवेति शङ्कितम् । वस्तुतस्तु नेदं सम्भवति । विशिष्टाविशिष्टसाध्ययोरेकत्वायोगात् । एकत्वे वा वर्णात्मक शब्दस्य शब्द इत्यनेन पौनरुक्त्यप्रसङ्गाच्चेति दूषणे सत्येवाहृदयं वाचामहृदयमेवोत्तरमिति न्यायेन दूषणान्तरमाह ॥ **तथात्व इति** ॥ **पूर्वदूषणेनेति** । सिद्धसाधनेनेत्यर्थः ॥ **वादेत्विति** । प्रतिवक्तव्यत्वादुत्तरस्य दातव्यत्वात् । ननु सिद्धसाधनत्वमात्रेण यदि कथा निवृत्ता तर्हि कथासमास्यनन्तरं विशेषणान्तरप्रक्षेपस्य कथं दूषणत्वमिति पृच्छति ॥ **निवृत्तयोरिति** । वादे तस्यादोषत्वाज्जल्पवितण्डयोरित्युक्तम् । जल्पवितण्डयोरेव प्रतिज्ञान्तरस्य दोषत्वमाह वरदराजोऽपि । विक्षेपः

प्रतिभाज्ञानं हेत्वन्तरमुपेक्षणम् । साध्यान्तरं मतानुज्ञा वादेऽनुद्भाव्यसप्तकम् । साध्यान्तरमिति प्रतिज्ञान्तरमुच्यते । प्रमादादिना सम्भवतामप्येषामनुद्भावनेनापि कथाप्रवृत्तौ तत्त्वनिर्णया-विधातादनुद्भाव्ये त इति ॥ **असङ्गत्यादिकमितीति** । कथायाः समाप्तत्वादाकाङ्क्षाविरहादिति भावः । नन्वेवं विशेणान्तरप्रक्षेपस्य निग्रहस्थानत्वं न स्यात् । कथाबाह्यत्वादित्याशङ्क्येष्टापत्त्या परिहरति ॥ **तदपीति** । निग्रहस्थानलक्षणे कथायामित्यनेन कथाबाह्यानां व्यावर्तितत्वादिति भावः ।

**राघ.**— ॥ **अत्रेति** । विशेषणप्रक्षेपणरूपप्रतिज्ञान्तर इत्यर्थः । स्थितौ भङ्गे वेति द्वयोः प्रत्येक-मन्वयः ॥ **पूर्वोक्तमेवेति** । पूर्वोक्तपक्षवचनरूपमेव नाधिकम् । येन कथान्तरप्रसक्तिरिति भावः ॥ **तथा सतीति** । कथान्तरे सतीत्यर्थः । विशिष्टस्य विशेषणयुक्तस्य । ननु जल्पवितण्डयोः कथाभेदेन प्रतिज्ञान्तरस्योक्तदिशा प्रसक्त्यभावेऽपि वादकथायां स्यादित्यत आह ॥ **वादे त्विति ॥ शङ्कानिवृत्ति पर्यन्तमिति** । तत्त्वनिर्णयफलकत्वात्तस्येति भावः । शङ्कते ॥ **सत्यमिति** । प्रागुक्तं सत्यं यथार्थ-मित्यर्थः । असङ्गतीत्यादीत्यादिपदेनाप्राप्तकालताग्रहः । पदयोर्विरोधे वाक्ययोर्विरोधे च क्रमादुदाहरणे ।

**विज.**— प्रतिज्ञान्तरं लक्षयति ॥ **प्रथममिति** । हेत्वन्तरव्यावर्तनाय साध्यभाग इति । तद्व्याचष्टे ॥ **प्रतिज्ञेति** । वह्निमानित्युदाहरणांश इत्यर्थः । उदाहरति ॥ **यथेति** । अस्य निग्रहस्थानत्वं दूषयितुमाह ॥ **अत्रेति ॥ न चेति** । हेतोः सत्त्वादिति भावः ॥ **पूर्वेति** । सिद्धसाधनेत्यर्थः ॥ **प्रथममिति** । कथान्तरे तस्यैव प्राथमिकत्वादित्यर्थः । ननु वादकथावसानस्य प्रतिज्ञान्तरेणाभावः । हेत्वाभास-निरनुयोज्यानुयोगयोरेव तथात्वात् । तथा च कथैक्येन प्रथमोत्पाद्यत्वाभावात्प्रति ज्ञान्तरनिग्रहस्थानता स्यादित्यत आह ॥ **वाद इति** । वादे तत्सत्त्वेऽपि न तस्य दोषत्वम् । तत्त्वनिर्णयफलत्वेन तन्मात्रेणापर्यवसानादिति । सुहृद्भावेन पृच्छति ॥ **सत्यमिति** । उत्तरयति ॥ **असङ्गतीति** । न चैवं सैव निग्रहस्थानमत आह ॥ **तदपीति** ।

**वेदे.**— हेत्वन्तरव्यावृत्तये साध्यभाग इत्युक्तम् । अस्य निग्रहस्थानत्वमेव नास्ति कुतोऽन्तर्भाव-चिन्तेत्याशयेनाह ॥ **अत्रेत्यादिना ॥ साधनान्तरेति** । हेत्वैक्येऽपि प्रतिज्ञान्तरकरणेन साधनान्तर-त्वमिति भावः ॥ **न चेदमिति** । हेत्वैक्यादिति भाव इत्याहुः । वस्तुतस्तु विशिष्टस्य विशेष्यादिनाऽ-भेदादेवमुक्तमिति द्रष्टव्यम् । अत एवाह ॥ **तथात्व इति ॥ प्रथममिति** । कथान्तरस्यैव प्राथमिक-त्वादिति भावः । ननु वादे कथैक्यसम्भवात्तन्नेदं निग्रहस्थानं भविष्यतीत्यत आह ॥ **वाद इति** । प्रतिज्ञान्तरमिति शेषः । तटस्थः पृच्छति ॥ **सत्यमिति** । एकवक्तृक इति भिन्नवक्तृकवाक्ये मिथो विरुद्धेति व्याप्तिवारणाय महावाक्येऽवान्तरवाक्यानामवान्तरवाक्ये च पदानां मिथो व्याघात इति विशब्दार्थ उक्तः । एकवक्तृकमिथोविरुद्धवाक्यत्वमेव लक्षणं द्रष्टव्यम् ।

**अभि.**— ।। **प्रथममविशिष्टतयोक्त इति** । अस्मिन्वाक्ये लक्ष्यपरं प्रतिज्ञान्तरमिति पदमुपलक्षणम् । उदाहरणान्तरं निगमनान्तरमित्यपि द्रष्टव्यम् । ततश्चानेन प्रतिज्ञायां पुनर्विशेषप्रक्षेपे प्रतिज्ञान्तरमुदाहरणेन प्रयोज्याभावेन पुनर्विशेषणप्रक्षेपे उदाहरणान्तरमिति निगमने विशेषणप्रक्षेपे निगमनान्तरमिति त्रीणि लक्षणान्युदितानि । एवमुत्तरत्रापि बोध्यम् । साधनान्तरोपन्यासस्यापि प्रयोगान्तरोपन्यासस्येत्यर्थः । एतेन विशेषणान्तरस्यैवोपात्तत्वेन साधनान्तरस्यानुपादानात्साधनान्तरनिरासोपपादनमसङ्गतमिति निरस्तम् ।। **न चेदमिति** । शब्दो नित्य इति प्राक् शब्दशब्देन वर्णात्मकः शब्द एव वादिना विवक्षितः । तद्यथा गामानयेत्युच्चारयन्नपि गोविशेषमभिप्रैति । परेण तु तदभिप्रायानवबोधेन सिद्धसाधनतोक्ता । पुनर्वादिना स्वाभिप्रायाविष्कारेणैव सिद्धसाधनतोद्धृतेति पुनः प्रतिवादिना प्रतिज्ञान्तरमवधातव्यमेव । न चैवमपि पूर्वोक्तार्थस्यैव प्रतिज्ञातत्वात्प्रतिज्ञान्तराभावः । प्रतिज्ञायाः प्रतिपक्षवचनरूपत्वेनार्थरूपत्वाभावादर्थैक्येऽपि शब्दभेदसद्भावात्प्रतिज्ञान्तरं निग्रहस्थानं भवत्येवेति वाच्यं नेत्यर्थः ।। **तथात्व इति** । वादिना प्रतिवादिनोक्तस्य सिद्धसाधनत्वस्योद्धारे पूर्वदोषेणैव कथायाः परिसमाप्तत्वादिति । अस्मदुक्तदूषणेनैव प्रतिज्ञान्तरस्य दुष्टत्वप्रसङ्गान्निग्रहस्थानाभासत्वप्रसङ्गादित्यर्थः । यद्यपि समयबन्धानुसारेण शब्दोऽनित्य इति प्रतिज्ञाय सिद्धसाधनत्वादेवेति भ्रान्तचित्त आह वर्णात्मकः शब्दो नित्य इति । तदा प्रतिज्ञान्तरमिति वक्तुं शक्यम् । तथाऽपि परपरिगणितार्थान्तरादसङ्कीर्णमुदाहरणं नास्तीत्यन्तर्भावानुक्तावनवसर एवोक्तः । शङ्कते ।। **सत्यमिति** ।

**आद.**— साध्यभाग इत्यस्यार्थमाह ।। **प्रतिज्ञेति** । उदाहरणे प्रयोज्यभागः स वह्निमानिति भागः ।। **कथायाः परिसमाप्तत्वादिति** । इदमधस्तादुक्तमेव । प्रमाणलक्षणटीकायां तु प्रतिज्ञान्तरस्यासङ्गतावन्तर्भावः । स त्वङ्गीकारवादेन । अत्र शिष्यज्ञापनाय वस्तुस्थितिरुक्ता । अतो न विरोधः । एवमुत्तरत्रापि विरोधाभावो ज्ञेयः ।

**श्रीनि.**— ।। **एकस्येति** । एकस्य साधनस्य स्थितौ भङ्गे वैकस्य दूषणस्य स्थितौ भङ्गे वा कथापरिसमाप्तिनियमात्प्रकृते च दूषणे स्थिते साधनभङ्गे कथायाः परिसमाप्तत्वादित्यर्थः । नन्वेवं प्रतिज्ञाहानिरपि दूषणं न स्यात् । तत्राप्यनैकान्त्योक्त्या पूर्वकथाया निवृत्तत्वात् द्वितीयकथायां वह्निमत्त्वाभावस्य प्रथमप्रतिज्ञानेन पूर्वोक्तपरित्यागाभावादिति चेत् । मा भूत्तर्हीत्यनेन पूर्वपरित्यागस्य स्फुटमवभासात् । अन्यथा निरग्निकः पर्वत इति वाक्यविन्यासापत्तेः । हेत्वनभिधानाच्च नेयं वह्न्यभावप्रतिज्ञा । प्रतिज्ञान्तरे तु कृतकत्वमेव पूर्वोक्तयोर्हेतुरिति ।। **प्रतिवक्तव्यत्वादिति** । प्रत्युत्तरस्य वक्तव्यत्वादित्यर्थः ।। **निवृत्तयोरिति** । समाप्तयोरित्यर्थः ।

वि.— ॥ **प्रथममविशिष्टतयोक्त इति** । विशेषणरहिततयाऽभिहिते साध्याभावे दूषिते पुनर्विशेषणदानमित्यर्थः ॥ **प्रतिज्ञेति** । द्व्यंशोऽनुमानप्रयोगः साध्यभागः साधनभागश्चेति । साध्यभागः प्रतिज्ञेत्यंश इति ज्ञातव्यम् । उदाहरणे प्रयोज्यभागो दृष्टान्तप्रतिपादकवचने साध्यप्रतिपादकांश इत्यर्थः ॥ **इत्यादीति** । अयं वह्निमान्सुरभिमिलितधूमवत्त्वादित्युक्ते विशेषणसामर्थ्येऽभिहिते स कृष्णागरुवह्निमानित्यादिरादिशब्दार्थः । अस्यान्तर्भावं वक्तुं पृच्छति ॥ **अत्र वक्तव्यमिति** । अतः पुनर्विशेषणप्रक्षेपे कृते पूर्वैवोपक्रान्तैव कथाऽनुवर्तते । किमुत कथान्तरं तदन्यैव कथेति वक्तव्यं प्रष्टव्यमित्यर्थः । आद्यपक्षे दोषमाह ॥ **नाद्य इति** । एकस्य साधकस्य स्वपक्षसाधकानुमानस्य स्थितावदूषितत्वे भङ्गे च दूषितत्वे चैकस्य दूषणस्य दूषणानुमानस्य स्थितास्थितापरिहार्यत्वे भङ्गे परिहारे चेत्यर्थः । नन्वेकस्य साधनस्य भङ्गेऽपि न कथापरिहारसमाप्तिस्तस्यामेव कथायां साधनान्तरोपन्यासस्त्ववदित्यत आह ॥ **साधनान्तरोपन्यासस्येति** । सिद्धसाधनेन यस्य साधनस्य भग्नतया वादिनो रजतत्वेन पराजयफलकथापरिसमास्योरावश्यकत्वात् । तस्यामेव कथायां साधनान्तरोपन्यासप्रसक्तिर्नास्तीति भावः ॥ **न चेदमिति** । वर्णात्मकमिति विशेषणं विशिष्टं साधनमित्यर्थः ॥ **पूर्वेति** । पूर्वेण प्रथममुक्तेन दूषणेनैव स्वपक्षसाधकानुमानस्य सिद्धसाधनेनैवोक्तविशेषणविशिष्टस्यापि साधनस्य दुष्टत्वापातादित्यर्थः । द्वितीयपक्षमपाकरोति ॥ **न द्वितीय इति** । तथा सति वर्णात्मकशब्द इत्यस्य कथान्तरत्वे पूर्वमेव वर्णात्मकत्वरूप विशेषणयुक्तस्योक्तत्वेनेत्यर्थः । ननु वादरूपकथायामेकस्य साधनस्य सिद्धसाधनोद्भावनेन भङ्गेऽपि पुनर्विशेषणप्रक्षेपेण तस्या एव कथायाः प्रसक्तिसद्भावात्कथाभेदाभावेन तत्र तत्र प्रतिज्ञान्तरमस्तु निग्रहस्थानमित्यत आह ॥ **वादे त्विति** । विनिर्णयफलककथायां तु सत्यपि कथैक्ये प्रतिज्ञान्तरं न निग्रहस्थानमित्यर्थः । तत्र हेतुमाह ॥ **शङ्कानिवृत्तिपर्यन्तमिति** । तत्त्वनिर्णयविरोधिसकलशङ्कोच्छेदपर्यन्तं वादिना प्रत्युत्तरस्य वक्तव्यत्वादित्यर्थः । कथान्तर इव वादे न प्रतिज्ञान्तरस्य निग्रहस्थानत्वेन तूष्णीम्भावापत्त्या तत्त्वनिर्णयप्रतिबन्धकसकलशङ्कोच्छेदपर्यन्तं प्रत्युत्तरमनुपपन्नं स्यादिति भावः ॥ **सत्यमिति** । जल्पवितण्डयोः पुनर्विशेषणप्रक्षेपस्य सङ्गतत्वादसङ्गतिदोष इति भावः । कथासमाप्तौ पुनर्विशेषणप्रक्षेपस्यासङ्गतत्वेनावक्तव्यतया पुनर्विशेषणप्रक्षेपे वक्तव्यस्य वचनरूपासक्तिरपि भवतीत्यनुक्तिरादिशब्दार्थः । ननु कथायाः परिसमाप्तत्वात्पुनर्विशेषणप्रक्षेपे कथमसङ्गत्यादिनिग्रह स्थानं स्यादित्यत आह ॥ **तदपीति** । तदपि प्रतिज्ञान्तरवदसङ्गत्यादिकमपि कथाबहिर्भूतत्वान्निग्रहस्थानं न भवतीत्यर्थः ।

**(२७) प्र.प.— ॥ ३ ॥ प्रतिज्ञाविरोधः । एकवक्तृके वाक्ये पदानामवान्तरवाक्यानां वा मिथो व्याघातः प्रतिज्ञाविरोधः । यथा मे माता वन्ध्येति । द्रव्यं गुणव्यतिरिक्तमव्यतिरिक्तत्वादिति । अयं च प्रथमजातित्वात्स्ववचनविरोध एव ।**

**जना.—** ॥ **एकेति** ॥ **अवान्तरेति** । हेतूदाहरणादिरूपावान्तरवाक्ययोरित्यर्थः । एतदेवाह वरदराजोऽपि ।

**पदयोर्वाक्ययोर्वाऽयमेकवक्तृकयोर्मिथः ।**
**व्याघातो निग्रहस्थानं स्यात्प्रतिज्ञाविरोधत** ॥ इति ।

अपसिद्धान्तव्यावर्तनार्थमेकवक्तृक इत्युक्तम् । शिष्टं सुबोधम् । तत्र प्रतिज्ञापदयोः परस्परविरोधमुदाहृत्य दर्शयति ॥ **यथा मे मातेति** । प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध इति न्यायसूत्रे प्रतिज्ञाहेतुपदाभ्यां प्रतियोगिद्वयमात्रमुपलक्ष्यते । लक्ष्यगतेन प्रतिज्ञापदेन चोक्तमात्रमुपलक्ष्यते । प्रतिज्ञाहेतुविरोध इति लक्ष्यनिर्देशे कर्तव्ये एकपदनिर्देशेनैकस्मिन्नप्यवयवे तदंशविरोधं सूचयतीति न्यायसूत्रव्याख्यानानुसारेण प्रतिज्ञाविरोधपदेनोपलक्षित इति नैयायिकमतं मनसि निधाय प्रतिज्ञाहेत्वोर्विरोधमुपपादयति ॥ **द्रव्यमिति** ॥ **प्रथमेति** । स्ववचनव्याहतिर्जातिरित्यभिधाय सा त्रिविधा । एकवक्तृके वाक्ये पदयोरवान्तरवाक्ययोर्वा मिथो व्याघातः स्वक्रियाविरोधः स्वन्यायविरोधश्चेति विभागादिति भावः ।

**राघ.—** यथा मे माता वन्ध्येत्यादिवाक्यादौ नेति निषेधो नञा निर्दिष्टमंनित्यमिति न भवतीति मे मातेति साधु ॥ **प्रथमेति** । पूर्वोक्तजातिविभागे प्रथमजातित्वादित्यर्थः ।

**विज.—** प्रतिज्ञाविरोधं लक्षयति ॥ **एकेति** । सवक्तृक एवेत्यर्थः । तेनापसिद्धान्ते न प्रसङ्गः । परस्परान्वितार्थकं स्वैकवक्तृकं वाक्यमिति फलितोऽर्थः । अस्यान्तर्भावमाह ॥ **अयं चेति** । अस्य व्याहतोत्तरत्वेन जातित्वात् । जातेश्च पूर्वं त्रैविध्योक्तेः । प्रथमजातिस्वरूप स्ववचनविरोधेऽन्तर्भाव इत्यर्थः ।

**वेदे.—** अवान्तरवाक्यगतपदयोर्मिथो विरोधमुदाहरति ॥ **यथा मे मातेति** । अवान्तर वाक्ययोर्मिथो विरोधमुदाहरति ॥ **द्रव्यमिति** । अन्तर्भावमाह ॥ **अयमिति** । प्रथमजातित्वादुक्त प्रथमजातिलक्षणाक्रान्तत्वात् ॥ **स्ववचनविरोध एवेति** । जातेश्च स्वचनविरोधप्रभेदरूपत्वादिति भावः ।

**अभि.—** ॥ **अयं च प्रथमजातित्वादिति** । अनेन स्ववचनविरोधस्योदाहरणं सूचितम् ।

**वि.**— प्रतिज्ञाविरोधं लक्षयति ॥ **एकवक्तृके वाक्य इति** । एक एव वक्ता वाक्यप्रणेता यस्य तत्तथा तस्मिन्नित्यर्थः । इदं विशेषणं पूर्वाचार्योक्तविरुद्धरूपापसिद्धान्तव्यवच्छेदायोक्तम् । पदावान्तर वाक्ययोरन्यतरस्य मिथो विरोध इति विवक्षितत्वान्न परस्पराव्याप्तिः । पदयोर्विरोधस्योदाहरणमाह ॥ **यथा मे मातेति** । वाक्ययोर्मिथो विरोधस्योदाहरणमाह ॥ **द्रव्यमिति** ॥ **अयं चेति** । प्रतिज्ञाविरोधरूपदोषस्त्वेककर्तृके वाक्ये पदयोरवान्तरवाक्ययोरन्यतरस्य मिथो विरोधरूपप्रथमजातित्वात्स्वचनविरोधो भवतीत्यर्थः ।

**(२८) प्र.प.— ॥ ४ ॥ प्रतिज्ञासन्न्यासः ॥ स्वोक्तापलापः प्रतिज्ञासन्न्यासः । यथाऽग्निरनुष्ण इत्युक्ते प्रत्यक्षविरोधे चाभिहिते ब्रवीति न मयाऽग्निरनुष्ण इत्यभिहित इति । सोऽपि प्रमाणविरोध एव । उक्तेः प्रमितत्वात् ।**

**जना.**— ॥ **स्वोक्तेति** । एतदेवोक्तं वरदराजेन । स्वयमुक्तापलापेन प्रतिज्ञान्यासनिग्रह इति ।

**वेदे.**— स्वोक्तेत्यत्रोक्तमिति भावे क्तः । तथा च स्वस्वोक्त्यपलाप इत्यर्थः । अत एवाह ॥ **उक्तेरिति** । साधकांश इति च प्रतिज्ञान्तरव्यावृत्त्यर्थम् ।

**अभि.**— ॥ **सोऽपि प्रमाणविरोध एवेति** । अनेन कथारूपसाधारणप्रमाणविरोधस्योदाहरणं सूचितम् ।

**आद.**— ॥ **सोऽपि प्रमाणविरोध एवेति** । न च प्रतिज्ञासन्न्यासत्वेनोद्भावनीयता कुतोनाङ्गीक्रियते । तेन रूपेण प्रथममनुपस्थितत्वादिति । तथा हि । यदि च सन्न्यास इत्यस्य नापलापोऽर्थः किन्तु न मयोक्तमित्युक्तिमात्रं तर्हि न तस्या उक्तेः पराजयहेतुत्वम् । वस्तुतो तथाऽवक्तुः केचिद्भ्रान्त्यैवैवमुक्तमित्युक्ते सति नोक्तं मयेति वाक्यस्यापि पराजयहेतुत्वप्रसङ्गात् । किन्तूक्तौ प्रमितायां तदपलापकर्तुर्वाक्यस्योक्तिग्राहकप्रमाणेनायोग्यताज्ञाने सति वस्तुतोक्तिसत्त्वेऽपि तत्र प्रमाणाभावे तत्रायोग्यताज्ञानं नोक्तमिति न सम्भवति । अतो ह्रदो वह्निमानिति प्रतिज्ञावाक्यस्येव वह्न्यभावग्राहक प्रमाणप्रयोज्ययोग्यताविरह रूपविरोधस्येव प्रकृतेऽप्युक्तिग्राहकप्रमाणविरोधस्यैव प्रथमं स्फूर्त्या तस्यैवोद्भावनीयताया उचितत्वात् । अयं स्वपक्षसाधनाशक्तेर्वा विपर्ययस्य वाऽनुमापक इति द्रष्टव्यम् ।

**वि.**— ॥ **स्वोक्तापलाप इति** । स्वेनोक्तस्य वचनस्यार्थस्य वाऽपलापोऽभाववचनमित्यर्थः । स्वेनानुक्तस्य यदभाववचनं तस्य प्रतिज्ञासन्न्यासत्वव्यवच्छेदाय स्वोक्तग्रहणं कृतम् । सोऽयं दोषः

प्रतिज्ञायाः प्रबलप्रमाणविरोध एव न ततोऽतिरिक्त इत्यर्थः ।। **उक्तेरिति** ।। **अग्निरनुष्ण इति** । स्ववचनस्येत्यर्थः । स्वोक्तापलापस्य प्रबलप्रमाणविरोध एव पर्यवसानादयं दोषः । प्रबलप्रमाणविरोध एवेति भावः ।

**(२९) प्र.प.— ।। ५ ।। हेत्वन्तरम् । प्रथममविशिष्टतयोक्ते साधकांशे पुनरधिकप्रक्षेपो हेत्वन्तरम् । हेतुरुदाहरणे प्रयोजकांश उपनयो दूषणं चेति साधकांशः । यथा शब्दो नित्य ऐन्द्रियकत्वादित्युक्ते सामान्येनानैकान्त्येऽभिहिते सामान्यवत्त्वे सतीत्यादि । एतत्प्रतिज्ञान्तर-निरासेनैव निरस्तम् । प्रतिज्ञाग्रहणस्योक्तोपलक्षणत्वेन पृथङ् न वक्तव्यं च । अनुपलक्षणत्वे तूदाहरणान्तरादिकमपि पृथग्वाच्यं स्यात् । प्रतिज्ञापदेन साध्यांश एवोपलक्ष्यत इति चेन्न । वैय्यर्थ्यात् । अन्यथा प्रतिज्ञाहान्यादावपि किं विभागो न क्रियत इति ।**

**जना.—** ।। **प्रथममिति** । साधकांशशब्देन साध्यसाधकधूमवत्त्वादिति हेतुमात्रप्रतीतेराह ।। **हेतुरिति** ।। **प्रयोजकांश इति** । यो यो धूमवानित्यादिहेत्वंश इत्यर्थः ।। **प्रतिज्ञान्तरनिरासेनेति** । एकस्य साधनस्य दूषणतयेत्याद्युक्तरीत्या हेत्वन्तरस्यापि जल्पवितण्डयोर्निग्रहस्थानत्वाभावात् । वादे तु शङ्कानिवृत्तिपर्यन्तं प्रतिवक्तव्यत्वादिव्युक्तन्यायस्यात्रापि साम्यादिति भावः । दूषणान्तरमाह ।। **प्रतिज्ञेति** ।। **उक्तोपलक्षणत्वेनेति** । उक्तमात्रोपलक्षणत्वेनेत्यर्थः । यद्यपि नैयायिकग्रन्थेषु हेत्वन्तर-लक्षणे प्रतिज्ञापदमेव नास्ति तथाऽपि प्रतिदृष्टान्तधर्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिरिति प्रतिज्ञाहानि-लक्षण सूत्रस्थप्रतिज्ञाग्रहणस्याक्तमात्रोप लक्षणत्ववत्प्रतिज्ञार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरमिति प्रतिज्ञान्तरलक्षणसूत्रस्थप्रतिज्ञापदस्योक्त मात्रोपलक्षणत्वाङ्गीकारे बाधकमाह ।। **अनुपलक्षणत्व इति** । प्रतिज्ञाग्रहणस्येत्यनुवर्तते ।। **पृथग्वाच्यमिति** । तथा च निग्रहस्थानानां द्वाविंशतित्वं भज्येतेति भावः ।। **अन्यथेति** । यदि वैय्यर्थ्येऽपि प्रतिज्ञापदं साध्यांशमात्रोपलक्षणं तदा तद्वदेव प्रतिज्ञाहानिलक्षणसूत्रगतप्रतिज्ञापदस्यापि साध्यांशमात्रोपलक्षणत्वसम्भवेन प्रतिज्ञाहानिर्हेतुहा-निरुदाहरणहानि रित्यादिविभागोपपत्तौ द्वाविंशत्वभङ्ग एवेति भावः ।

**राघ.—** ।। **दूषणं चेति** । इदमसाधकमसिद्धत्वादिति दूषणं चेत्यर्थः ।। **प्रतिज्ञान्तरनिरासे-नैवेति**। पूर्वकथानुवर्तते कथान्तरं वेत्यादिविकल्पो दूषणानि चात्राप्यनुसन्धेयानीत्यर्थः । अतो नास्यान्तर्भावो वाच्य इति भावः । निग्रहस्थानपरिगणनसूत्रे प्रतिज्ञान्तरमित्यत्र प्रतिज्ञापदेन हेतोरप्युपलक्षणे सति प्रतिज्ञान्तरं हेत्वन्तरमिति द्वयोरपि ग्रहणसम्भवे पुनर्हेत्वन्तरमिति न वक्तव्यम् ।। **उदाहरणान्तरादिकमिति** । उपनयान्तरं दूषणेऽपि हेतावधिकप्रक्षेपण दूषणान्तरमपीत्यादिपदार्थः

॥ **किं विभाग इति** । हेतुहानिर्हेतुसन्न्यास उदाहरणहानिरुदाहरणसन्न्यास इत्यादिरपि पृथग्वाच्यः स्यादित्यर्थः ।

**विज.**— ॥ **प्रथममिति** । न च प्रथममनुक्तसकलसाधकांशस्याभिधानेऽव्याप्तिः । प्रथम-विशिष्टोक्तेरभावादिति वाच्यम् । कथामध्ये प्रागनुक्तसाधकाभिधानमित्यर्थत्वात् । अस्य निग्रहस्थानत्वं तावद्दूषयति ॥ **एतदिति** । पूर्वकथायाः साधनदुष्टतया समाप्तेः साधकान्तरावसरासम्भवात् । कथान्तरत्वे प्रथममेवोक्तत्वाद्धेत्वन्तरत्वासम्भव इति न्यायेनेत्यर्थः । निग्रहस्थानत्वेऽपि चापार्थक्यं न सम्भवतीत्याह ॥ **प्रतिज्ञेति** । उपलक्षणत्वमेव विपक्षबाधकोक्त्योपपादयति ॥ **अनुपलक्षणत्व इत्यादिना** । उक्तहानित्वेन दोषत्वे विशेषापादनमनर्थकम् । प्रतिज्ञाहानित्वादिना दोषत्वे तेन रूपेण विभागप्रसङ्ग इत्यर्थः ।

**वेदे.**— ॥ **दूषणं चेति** । असाधकताहेतुरित्यर्थः ॥ **वैय्यर्थ्यादिति** । साध्यांशमात्रोपलक्षणस्य प्रयोजनविशेषानुपलम्भेन व्यर्थत्वादिति भावः ॥ **अन्यथेति** । यदि प्रतिज्ञापदेन साध्यांशमात्रमुपलक्ष्य हेत्वन्तरं पृथगुच्येत तदा प्रतिज्ञाहानिरित्यत्रापि प्रतिज्ञापदेन साध्यांशमात्रमुपलक्ष्य हेतुहान्यादिकमपि पृथग्वाच्यं स्यादित्यर्थः । आदिपदेन प्रतिज्ञाविरोध ग्रहणम् । तस्मात्तत्र यथा प्रतिज्ञापदेन हेत्वादि-कमुपलक्ष्य हेतुहान्यादिकं पृथङ् नोच्यते । तथा हेत्वन्तरमपि पृथङ् न वाच्यमिति भावः । अर्थान्तर-लक्षणे आधिक्येऽतिव्याप्तिवारणाय प्रकृतानुपयुक्तेति । अपार्थकव्यावृत्तयेऽन्वितेति च विशेषण-मुक्तमिति द्रष्टव्यम् ।

**अभि.**— ॥ **एतत्प्रतिज्ञान्तरनिरासेनैवेति** । किं पूर्वैव कथा प्रवर्तते उत कथान्तरमित्युक्त-न्यायेनेत्यर्थः ॥ **प्रतिज्ञाहान्यादावपीति** । प्रतिज्ञापदेन साध्यभागमात्रमुक्त्वा हेतुहानिः पृथगेव किं नोच्यत इत्यर्थः ।

**आद.**— ॥ **प्रथममिति** । एतत्प्रतिज्ञान्तरन्यायेन ॥ **निरस्तमिति** । एतत्तत्त्वं विवेचितमधस्तात् ॥ **प्रतिज्ञाहान्यादावपीति** । आदिपदेन प्रतिज्ञाविरोधो ग्राह्यः । तथा च हेतुहानिर्हेतुविरोध इत्येव-मुदाहरणादावपि विभागः कर्तव्यः स्यादिति भावः ।

**वि.**— ॥ **प्रथमविशिष्टतयोक्त इति** । पूर्वं दोषरहिततया निर्दिष्टे साधकभागे दूषिते पुनर्विशेषण प्रक्षेपप्रदानमित्यर्थः । प्रतिज्ञान्तरव्यावृत्त्यर्थं साधकांशविशेषणम् । साधकांशः क इति जिज्ञासायामाह ॥ **हेतुरिति** । उदाहरणे प्रयोजकांशो लिङ्गप्रतिपादको भाग इत्यर्थः ॥ **सामान्यवत्त्वे सतीत्यादि** ।

यदैन्द्रियकं तदनित्यं यथा घट इत्युक्ते न्यूनतोक्तौ सामान्यवत्त्वे सतीत्यादिरादिशब्दार्थः ॥ **एतदिति ।** हेत्वन्तरमपि प्रतिज्ञान्तरनिरासेनैव प्रतिज्ञान्तरनिराकरणप्रकारेणैव निरस्तं निग्रहस्थानत्वेन निराकृतमित्यर्थः । निर्दिष्टस्य साधकांशे पुनर्विशेषणप्रक्षेपे किं प्राचीनकथैवानुवर्तते उत कथान्तरम् । नाद्यः । एकस्य साधनस्य स्थितौ भङ्गे च कथायाः परिसमाप्तत्वादित्यादि प्रतिज्ञान्तरनिराकरणप्रकारोऽनुसन्धेयः । दूषणान्तरं चाह ॥ **प्रतिज्ञाग्रहणस्येति ।** प्रतिज्ञापदोपादानस्येत्यर्थः । प्रतिज्ञा गृह्यते ज्ञायतेऽनेनेति व्युत्पत्त्या ग्रहणपदप्रतिपादनरूपस्येत्यर्थः । अत एव प्रतिज्ञापदेनेति वक्ष्यति । प्रतिज्ञान्तरमित्यत्र प्रतिज्ञापदस्याजहत्स्वार्थलक्षणया हेत्वाद्यवयवपरत्वे हेत्वन्तरं पृथक् प्रतिज्ञान्तरं भिन्नं न वाच्यमित्यर्थः ॥ **अनुपलक्षणे त्विति ।** प्रतिज्ञाग्रहणस्येत्यनुवर्तते । हेत्वाद्यवयवान्तरालक्षकत्वे प्रतिज्ञारूपावयवमात्रपरत्व इति यावत् । उदाहरणादिकमपीत्यत्रोदाहरणादिकमादिशब्दार्थः ॥ **प्रतिज्ञापदेनेति ।** प्रतिज्ञान्तरमित्यत्र प्रतिज्ञापदेन साध्यांश एव प्रतिज्ञोदाहरणे प्रयोज्यभागः ॥ **निगमनं चेति ।** साध्याभागः स एवोपलक्ष्यते । अजहत्स्वार्थलक्षणया प्रतिपाद्यते न तु साधकांश इत्यर्थः ॥ **वैय्यर्थ्यादिति ।** साध्याभाग एव लक्ष्यत इति नियमस्य निष्प्रयोजनत्वादित्यर्थः । प्रतिज्ञापदस्य लक्षकत्वे आवश्यकत्वे सति नियामकाभावादुक्तनियमो व्यर्थ इति भावः । विपक्षे बाधकमाह ॥ **अन्यथेति ।** प्रतिज्ञान्तरमित्यत्र प्रतिज्ञापदेन साध्यांश एवोपलक्ष्यत्वेऽननुसाधकांश इति विभागः । किं क्रियते कुतो न क्रियत इत्यर्थः । तत्राप्युक्तविभागाङ्गीकारे तु हेतुहानिर्हेतुविरोधो हेतुसन्न्यास इति निग्रहस्थानानां पृथग्ग्रहणादिति दूषणमनुसन्धेयम् ॥ **इतीति ।** हेत्वन्तरस्य निग्रहस्थानान्तरस्य निराकरणपरिसमाप्तिरिति शब्दार्थः ।

**(३०) प्र.प.— ॥ ६ ॥ अर्थान्तरम् ॥ प्रकृतानुपयुक्तान्वितोक्तिरर्थान्तरम् । यथा शब्दः प्रमेयत्वादित्यत्र प्रमेयत्वं हेतुः । हेतुशब्दश्च हिनोतेः धातोः स्तुन् प्रत्यये कृते सति कृदन्तपदमित्यादि । इदमनाकाङ्क्षितत्वात् असङ्गतिरेव ।**

**जना.—** प्रकृतेति । अत्रान्वितेत्यनेनान्वितपदादिप्रयोगरूपस्यापार्थकस्य निरासः । शिष्टं सुबोधम् । एतदेवाह वरदराजोऽपि । प्रकृतानुपयुक्तोक्तिरर्थान्तरमिति स्थितिरिति । इत्यादीत्यादिपदेनानित्यः शब्दः । ऐन्द्रियकत्वात् । स चाकाशगुण इत्यादेर्ग्रहणम् । अत्र न्यूनादिसम्भवेऽपि तस्योक्तग्राह्यत्वादस्य चोच्यमानग्राह्यत्वादिदमेवोद्भाव्यम् । अन्यथाऽप्राप्तावसरस्यानुद्भावनेन निग्रहोपपत्तेरित्युक्तं प्रमाणलक्षणटीकायाम् ।

**राघ.— ॥ प्रकृतेति ।** अपार्थकेऽनतिव्याप्तयेऽन्वितेत्युक्तिः । उपयुक्तवचनेऽनतिव्याप्तये प्रकृतानुपयुक्तेत्युक्तिः ।

**विज.— ॥ प्रकृतेति** । अन्वितेत्यनेन निरर्थकापार्थकयोर्व्यवच्छेदः । परार्थान्वयबोधाजनकत्वेनान्वितोक्तिः स्वभावस्याविशेषात् । अस्यान्तर्भावमाह ॥ **इदमिति** । अत्रासङ्गतिरेव दोष इत्यर्थः।

**अभि.— ॥ इदमनाकाङ्क्षितत्वादिति** । अनेन कथारूपसाधारणासङ्गतेरुदाहरणं सूचितम् ।

**आद.— ॥ असङ्गतिरेवेति** । अयं भावः । प्रकृतानुपयुक्तान्वितोक्तित्वेन न हेतुना । तथा सत्यन्वितपदस्य वैय्यर्थ्यापत्तेः । प्रकृतानुपयुक्तोक्तिमात्रेण समयानभिज्ञत्वरूपपराजयानुमितेः सम्भवात् । अज्ञानविपर्ययादावन्वितोक्तेरप्रयोजकत्वात् । अनुपयुक्तत्वं च जिज्ञासानभिधायकमेवेति तेनैव रूपेणोद्भावनीयता न त्वर्थान्तरत्वेन । तथा सत्याधिक्येन निग्रहप्रसङ्गादिति वादिनोद्भावनासम्भवेऽपि पर्यनुयोज्योपेक्षणस्येव मध्यस्थेन प्राश्निकैर्वोद्भावनसम्भवात् । प्रतिवादिनाऽपि स्वसामान्य ज्ञानायाधिकविद्यत्वज्ञानाभावाय वोद्भावनीयत्वसम्भवात् । तथा च कथाफलस्याधिकविद्यत्वज्ञानस्यासम्भव एव । न चार्थान्तरोद्भावनेन कथायाः कथानिवृत्तेर्जायमानत्वात्तस्य कथं न निग्रहस्थानत्वमिति वाच्यम् । यतो दोषोद्भावनमात्रेण न कथापरिसमाप्तिः किन्तु यद्रूपावच्छिन्नमुद्भाव्यते तद्रूपावच्छिन्नप्रयोज्य विपर्ययाद्यनुमित्यैव । अन्यथा पुरःस्फूर्तिकानधिकृतोद्भावितस्यापि कथासमाप्तिहेतुत्वापत्तेः । न च वादिप्रतिवादिनोरन्यतरापेक्षयाऽन्यतरस्यापकर्षज्ञानप्रयोजकानुमितेरेव पराजयपदार्थः । तत्प्रयोजकस्यैव निग्रहस्थानत्वं कथं समाप्तिहेतुत्वं च । न चान्योद्भावितदोषस्य तादृशत्वं सम्भवतीति वाच्यम् । तर्हि प्रकृतेऽपि तादृशानुमितेरसम्भवात् । न चार्थान्तरप्रयोज्यानुमितिरुत्पद्यते किन्तु तद्घटकासङ्गतिप्रयोज्यैवेति तदभावान्न कथापरिसमाप्तिः । व्यर्थविशेषणघटितहेत्वाद्युक्तेः । स्वस्मिन्नप्यज्ञानाद्यनुमापकत्वेन स्वस्मिन्नुत्कर्षाज्ञापकत्वाच्च । तथा चाखण्डाहङ्कारकर्तृकपराहङ्कारखण्डनस्यैव परपराजयपदार्थत्वात्तद्धेतोरेव निग्रहस्थानत्वमिति नार्थान्तरस्य निग्रहस्थानत्वमिति ।

**श्रीनि.— ॥ स्तुत्प्रत्यय इति** । उपलक्षणमेतत् । सार्वधातुके गुणे च कृत इत्यपि द्रष्टव्यम् ।

**वि.— ॥ प्रकृतानुपयुक्तेति** । प्रकृतस्य प्रसक्तस्य साधनस्य दूषणस्य वाऽनुपयुक्तमसङ्गतमनन्वितं च । यत्तस्योक्तिरर्थान्तरमित्यर्थः । प्रकृतानुपयुक्तानन्वित शब्दप्रयोगेऽपार्थकेऽतिव्याप्तिपरिहारायान्वितपदोपादानम् । समीचीनपदव्यावृत्त्यर्थं प्रकृतानुपयुक्तेति विशेषणम् ॥ **कृदन्तपदमित्यादीति** । शब्दो नित्यः स चाकाशगुण इत्यादिरादिशब्दार्थः॥ **इदमिति** । अर्थान्तरमपि प्रकृतोपयोगाभावेन श्रोतुर्नाकाङ्क्षितत्वादाकाङ्क्षाभावरूपासङ्गतिरेव भवतीत्यर्थः । प्रकृतासङ्गतोक्तेनैवार्थान्तरस्य दोषत्वादर्थान्तरमसङ्गतिरिति भावः ।

**(३१) प्र.प.— ॥ ७ ॥ निरर्थकम् ॥ अवाचकपदप्रयोगो निरर्थकम् । यथा शब्दो नित्यः कचटतपानां जबगडदत्वादित्यादि । इदं त्वनुक्तिरेव ।**

**जना.— ॥ अवाचकेति ।** अत्र पदव्यावर्त्यानि स्पष्टानि । एतदप्युक्तं वरदराजेन । अवाचकप्रयोगे स्यान्निरर्थकसमुद्भव इति । इत्यादीत्यादिशब्देन लिङ्गविभक्तिविपर्यासः कृत्तद्धितसमासाख्यातविपर्यासः संस्कृतभाषयोपक्रम्य भाषान्तरेण वचनमित्यादेर्ग्रहणम् । कथञ्चिदज्ञापकत्वात्कथमेतन्निग्रहस्थानमिति चेन्मैवम् । न हि कथञ्चिज्ज्ञापकत्वं शब्दधर्मः । प्रकरणादिनैव तत्र ज्ञानोदयात् । भाषान्तरसङ्करोऽपि समसमयत्वाभावे निग्रहस्थानम् । अन्यथा ज्ञानसङ्गूहनार्थं स्वभाषया प्रत्यवतिष्ठमानं प्रति तदनभिज्ञस्योत्तराभावप्रसङ्गात् । इत्याशङ्क्य समाहितं प्रमाणलक्षणटीकायाम् । वरदराजेनैव माशङ्क्य मैवं मीमांसकादीनामपि वाचकावाचक विभागस्य सिद्धत्वात् । यस्याप्ययमसिद्धस्तस्यापि समानपदैर्वक्तव्यम् । अन्यथा स्वाज्ञानसंवरणार्थं स्वभाषया प्रत्यवतिष्ठमाने दाक्षिणात्ये तूष्णींभाववदाचरणमार्यस्येत्यज्ञानमेवावशिष्यत इति । न च दुर्ज्ञानं समानसमयत्वम् । परबुद्धेरप्रत्यक्षत्वादिति वाच्यम् । प्रथमत एवोभयसिद्धव्याकरणादि व्यवहाराङ्गीकारेण लिङ्गविपर्यासादीनां समानसमयत्वाभावनिश्चयोपपत्तेरिति समाहितम् ॥ **अनुक्तिरेवेति** । परबोधार्थं वक्तव्यस्य सद्धेतोरवचनादिति भावः ।

**राघ.— ॥ अनुक्तिरेवेति ।** परबोधनार्थमवश्यवक्तव्यस्यावचनरूपत्वादिति भावः ।

**विज.— ॥ अवाचकेति ।** पदार्थानुपस्थापकेत्यर्थः । न चैकाक्षरस्य स्वार्थोपस्थापकत्वेनासम्भवः । पदजन्यशाब्दबोधविषयान्वयप्रतियोग्यनुस्थापकमित्यर्थत्वात् ॥ **इदमिति** । अत्राप्यवश्यवक्तव्य हेत्वनुक्तेरनुक्तिरेव दोष इत्यर्थः ।

**वेदे.— ॥ अनुक्तिरेवेति ।** परबोधनार्थं वक्तव्यस्यावचनादिति भावः ।

**अभि.— ॥ अवाचकपदप्रयोग इति ।** अत्र पदशब्देन विभक्त्यन्ततया प्रतीयमानो वर्णसमुदाय उच्यते । तेन पदं न तर्ह्यवाचकं यद्यवाचकं न तर्हि पदमिदं वाचकं चेति विप्रतिषिद्धमिति परास्तम् ।

**आद.— ॥ इदं त्वनुक्तिरेवेति ।** न चात्र प्रथममुपस्थितस्यावाचकपदप्रयोक्तृत्वस्यैवोद्भावनं युक्तं न त्वनुक्तेस्तदभावादिति वाच्यम् । तस्य व्यभिचारित्वेन पराजयानुमापकत्वात् । वादिप्रतिवादिभ्यामपि पुरुषान्तरीयबोधाय प्रयोजनसत्त्वे तादृशपदप्रयोगसम्भवात् । तादृशशब्दानामप्यर्थविशेषे सङ्केतितत्वसम्भवेन तादृशसङ्केताभिज्ञपुरुषं प्रत्यर्थविशेषबोधकत्वसम्भवात् । सङ्केतेनाप्यर्थ-

विशेषबोधकत्वस्यावाचकत्वरूपत्वे तादृशावाचकत्वस्य सन्दिग्धत्वापत्तेः । अनाद्यनन्तकाले तत्पदं कुत्रापि न सङ्केतितमिति निश्चायकं नास्ति । पुरुषविशेषस्य बोधकत्वं तु वाचकेऽपि पदेऽपि सम्भवति। प्रकृतोपयुक्तार्थवाचकत्वरूपत्वे प्रयोजनोद्देशेन लाक्षणिक पदप्रयोक्तुर्निरूढलाक्षणिक-पदप्रयोक्तुश्च तद्दोषप्रसङ्गः । सर्वथा वाचकत्वरूपत्वे सर्वेषां वर्णानां स्वस्वरूपवाचकत्वेन सर्वथाऽ-वाचकत्वस्य कुत्राप्यसम्भवः । सर्वथाऽवाचकत्वाङ्गीकारे च पदत्वव्याघातश्च । स्वस्वरूपातिरिक्ता-वाचकत्वे तादृशवर्णमालाया एव यत्र हेतुता तत्र तद्वाचकतादृशवर्णमालाया इत्यादिहेतुवाक्यं प्रयोक्तु-र्निरर्थकत्वेन निग्रहप्रसङ्गः । एवं यस्य पुरुषस्य निरर्थकद्वित्रिवर्णप्रयोगो लौकिके वैदिके वाऽन्यथा व्यवहारस्यैवानिष्पत्तिः । विवक्षितहेतूक्त्यनन्तरं स्वभावादेव तादृशवर्णोच्चारयितुरपार्थकत्वरूपनिग्रह-प्रसङ्गः । तस्मात्परिषदादिनिष्ठतत्कालीन जिज्ञासितार्थाबोधक पदप्रयोगो निरर्थकमिति वक्तव्यम् । अनुक्तिश्च तादृशार्थबोधकत्वविशिष्टपदाभावः । तस्य विशिष्टाभावरूपत्वेन विशेष्यवति विशिष्टाभावस्य विशेषणाभावरूपत्वात् । पदप्रयोक्तरि विशिष्टाभावो पदेषु तदर्थबोधकत्वाभावरूप एवेति तदु-च्चरितपदेषु तादृशार्थबोधकत्वाभावस्य तत्रत्यपराजयानुमापकस्यानुक्तिरूपत्वमेवेति । न च तादृशार्थ-बोधक पदप्रयोक्तृत्वमपि पराजयहेतुः स्यादिति वाच्यम् । पदेषु तादृशार्थबोधकत्वाभावज्ञानं विना विशिष्टहेतूपस्थितेरसम्भवात् । पदेष्वबोधकत्वस्य प्रथममुपस्थितेरावश्यकत्वात्तस्यैवोद्भाव्यत्वात् । न च तादृशार्थबोधकपदप्रयोगस्य निरर्थकत्वे वह्निमान्घटादित्यस्यानिरर्थकत्वप्रसङ्गः । घटस्य जिज्ञासितत्वा भावे तद्बोधकत्वेऽपि घटपदस्य जिज्ञासितार्थाबोधकत्वादिति वाच्यम् । गमकत्वरूपसामान्यधर्मेण सर्वस्यापि जिज्ञासितत्वात् । तत्र घटादौ व्याप्त्याद्यभावस्योद्भावनीयत्वात् । तर्हि जबगडदत्वा-दित्यत्रापि तत्पदवाच्यायास्तादृशानुपूर्व्या अपि सामान्यरूपेण जिज्ञासितत्वसम्भवेन न निरर्थकत्वोक्ति र्युक्तेति वाच्यम् । उत्सर्गतोऽर्थप्रकरणे प्रयुक्तस्य शब्दस्य स्वस्वरूपतात्पर्यकत्वाभावस्य दृष्टत्वेन तस्य हेतुत्वेन बोधतात्पर्याभावनिश्चयकाल एव तादृशदोषप्रसक्तेः । तत्सत्त्वकाले तु तद्दोषप्रसक्तिर्नास्त्येव । अत एव नासङ्गति प्रसक्तिः । न च हेतोरनुक्त्या न्यूनतैव स्यादिति वाच्यम् । पञ्चम्यन्तपदसत्त्वेन तस्य हेतुबोधकत्वेन भासमानत्वात् । न्यूनताया उद्भावनासम्भवान्निरर्थकत्वस्यैव प्रथममुपस्थितत्वाच्च ।

**वि.— ॥ अवाचकपदप्रयोग इति** । अबोधकशब्दप्रयोगो निरर्थकमित्यर्थः । अबोधकश्च शब्दो द्विविध इति ज्ञापनाय पदादीत्युक्तम् । अबोधकपदसमूहरूपवाक्यमादिशब्दार्थः । वाचकपदादि प्रयोगरूपापार्थक व्यवच्छेदाय वाचकपदोपादानम् ॥ **इत्यादीति** । लिङ्गविभक्तिविपर्यासादिरादि-शब्दार्थः ॥ **इदं त्वनुक्तिरेवेति** । परबोधनार्थं वक्तव्यस्यानुक्तौ पर्यवसानादस्यानुक्तित्वमिति भावः ।

**(३२) प्र.प.— ॥ ८ ॥ अविज्ञातार्थम् । त्रिवारमुक्तेऽपि परिषत्प्रतिवादिभ्यामविज्ञातार्थ-वाचकपदमविज्ञातार्थम् । यथा कश्यपतनयाधृतिहेतुरयं त्रिनयनतनयासनसमाननामधेययुक्त इत्यादि । तद्ध्वजवत्त्वादित्यादि । इदमप्यनुक्तिरेव ।**

**जना.— ॥ त्रिवारमिति ।** अत्र त्रिवारमिति लोकप्रमितमर्यादयोक्तम् । वस्तुतस्तु यावद्वारमुक्ते परिषत्प्रतिवादिनोरन्वयबोध उत्पत्तुमर्हति तावद्वारम् । तदपि न लक्षणशरीरानुप्रवेशेन । किन्तु सकृदुच्चारणमात्रेण विज्ञातार्थस्य कथं दोषत्वमिति शङ्कानिरासार्थम् । लक्षणं तु तत्काले परिषद-विज्ञातमहावाक्यार्थसंसर्गबोधकपदप्रयोगोऽविज्ञातार्थमिति विवक्षितम् । तत्काले परिषदविज्ञातो यो महावाक्यार्थभूतः संसर्गस्तद्बोधकपदप्रयोगत्वमित्यर्थः । प्रतिवादीति विशेषणमपि न लक्षण-शरीरान्तर्गतम् । परिषद्ग्रहणेनैव तत्प्रयोजनसिद्धेः । अत्र तत्काल इत्यनेन कालान्तरे कश्यप-तनयेत्यादेरेव बहुपर्यालोचनया महावाक्यार्थबोधसम्भवेनासम्भवनिरासः । ननु कश्यपेत्यादेः परिषदं प्रति तात्पर्यविषयसंसर्गबोधस्तदानीं नास्तीति कृत्वा बोधकत्वलक्षणस्यासम्भव इति चेन्न । संसर्ग-बोधकपदेन संसर्गबोधजननस्वरूपयोग्यत्वस्य विवक्षितत्वात् । तच्च वाद्युपदेशेनान्यपुरुषस्य परिषदो वा कालान्तरे बह्वालोचनयोपपद्यत इति नासम्भवः । एतावत्कुसृष्टियुतं संसर्गबोधकपदं किमर्थमिति चेन्न । कचटतपानां जबगडदत्वादित्यत्रातिव्याप्तिनिरासकत्वात् । तन्निरासार्थं पदार्थबोधकत्व-मेवोच्यतामिति चेन्न । कुण्डमजाजिनमित्याद्यपार्थकोदाहरणेऽति व्याप्त्यापत्तेरिति । परिषद्ग्रहणं तु तत्काल एव दैवादागतातिनिपुणपरिषदादिबहिर्भूतपुरुषविशेषस्य तद्वाक्यादन्वयबोधमादायासम्भव-वारणायेति । तदुक्तं वरदराजेन ।

**त्रिर्यदन्तरमुक्तेऽपि प्राश्निकैः प्रतिवादिना ।**
**वाक्यमज्ञायमानार्थमविज्ञातार्थमुच्यत इति ॥**

अविज्ञातार्थमुदाहृत्य दर्शयति ॥ **यथेत्यादिना ।** कश्यपतनया भूमिस्तद्धृतेर्भूमिधारणस्य हेतुः पर्वत इत्यर्थः । त्रिनयनस्य तनयः षण्मुखस्तस्यासनं मयूरस्तत्समाननामधेयो वह्निस्तेन युक्त इत्यर्थः ।

**शिखावलिश्शिखी केकी मेघनादानुलास्यपि ।**
**लोहिताश्वो वायुसखश्शिखावानाशुशुक्षणिः ॥**

इत्युभयत्राभिधानात् । तथा च पर्वतो वह्निमानित्यर्थः । इत्यादीत्यादिशब्देन प्रमाणलक्षण-टीकारीत्या वरदराजीयरीत्या स्वतन्त्रमात्रसिद्धस्य स्फ्यकपालपुरोडाशादेर्निर्णायकाभावेन संशयक्रान्तस्य श्वेतो धावतीत्यादेश्च ग्रहणम् । अन्तर्भावमाह ॥ **इदमिति ।**

**राघ.**— त्रिवारमुक्तेऽपि । वादिनेति योज्यम् । कश्यपतनया पृथिवी तस्या धृतिहेतुर्धारणहेतुः पर्वत इति यावत् । त्रिनयनतनयो रुद्रपुत्रः स्कन्दः । तस्यासनं मयूरापरपर्यायवाच्यः शिखी तत्समान नामधेयः शिखीति नामवान्वह्निरिति यावत् । तेन युक्त इत्यर्थः ॥ **अनुक्तिरेवेति** । परबोधनार्थत्वाभावादिति भावः ।

**विज.**— ॥ **त्रिवारमिति** ॥ **वाचकेति** । अन्वयबोधजकेत्यर्थः । तेन निरर्थकापार्थक व्यावृत्तिः। त्रिवारमित्यनेन सकृदुक्ताविज्ञातार्थव्यावृत्तिः । प्रतिवादिपदं तु परिषदा ज्ञाते प्रतिवादिना ज्ञातेऽप्यविज्ञातार्थत्वनिरसनाय । वस्तुतस्तु प्रतिवादिपदमनपेक्षितम् । परिषदबोधे प्रतिवादिबोधस्यासम्भावितत्वात् । प्रतिवादिमात्रबोधस्यानुपयोगाच्च । स्वबोधस्य स्वनिष्ठत्वेन तदाविष्करणासम्भवात् । अज्ञाननिरासाय परिषदेति । ननु वाचकत्वं पूर्वोक्तं तदाऽन्यदा वा । तदाऽपि प्रतिवादिनो मध्यस्थस्य वा । नाद्यः । तत्काले उभयोरपि बोधाभावात् । न द्वितीयः । अन्यदाऽपि बोधाभावेऽनिग्रहस्थानत्वप्रसङ्गादिति चेन्न । मध्यस्थबोधजननयोग्यत्वस्य तदर्थत्वात् । तच्च गृहीतसङ्गतिकान्वितत्वमिति । कश्यपस्य तनया पृथिवी तद्धारणं तद्धेतुः पृथिवीधरः पर्वत इत्यर्थः ॥ **इदमिति** । परबोधनार्थत्वाभावेनेति भावः ।

**वेदे.**— ॥ **त्रिवारेति** । नियमस्यानवधानादिशङ्कानिवारणाय प्राश्निकैरपेक्षणात् । सकृदुक्ताविज्ञातार्थव्यावृत्त्यर्थं त्रिवारमित्युक्तम् । अज्ञाननिरासाय परिषत्पदम् । प्रतिवादिविज्ञाते परिषदविज्ञाते परपराजयनिमित्तेऽतिव्याप्तिवारणाय प्रतिवादिपदं द्रष्टव्यम् । वाचकेत्युपलक्षणम् । अन्वितेत्यपि द्रष्टव्यम् । ताभ्यां च क्रमेण निरर्थकापार्थकोभयव्यावृत्तिः । कश्यपतनया भूस्तद्धृतिर्धारणं तद्धेतुस्तद्धर्ता भूधर इत्यर्थः । त्रिनयनो रुद्रस्तस्य तनयः षण्मुखस्तदासनं मयूरस्तेन समानं साधारणं शिखीति नामधेयं यस्य वह्नेस्तेन युक्त इत्यर्थः ॥ **अनुक्तिरेवेति** । परबोधनार्थत्वाभावादिति भावः ।

**अभि.**— ॥ **कश्यपतनयेति** । कश्यपतनया भूस्तस्या धृतिर्धारणं तद्धेतुस्तत्कारणं भूधर इत्यर्थः। त्रिनयनो रुद्रस्तस्य तनयः षण्मुखस्तदासनं मयूरस्तेन समानं साधारणं शिखीति नामधेयं यस्य वह्नेस्तेन युत इत्यर्थः ।

**आद.**— ॥ **त्रिवारमिति** । अविज्ञातार्थपदप्रयोगोऽविज्ञातोऽर्थो यस्य पदस्य तादृशपदप्रयोग इत्यर्थः । परिषत्प्रतिवादिनां तत्काले बोधाजनकपदप्रयोगेति यावत् । कश्यपतनया भूस्तद्धृतिर्भूधर इत्यर्थः । त्रिनयनतनयः स्कन्दस्तदासनं मयूरस्तत्समाननामधेययुक्तस्तद्वाचक शिखिपदवाच्य इत्यर्थः। अग्निरिति यावत् । तद्ध्वजो धूमः ॥ **इदमप्यनुक्तिरेवेति** । पूर्ववत्पदनिष्ठार्थबोधकत्वाभाव रूपानुक्तिरेवोद्भावनीयेति भावः ।

**श्रीनि.— ॥ परिषदिति ।** प्राश्निकेत्यर्थः । विवदमानयोर्वादि प्रतिवादिनोर्गुणदोषावधारणादिकं तत्प्रयोजनमिति द्रष्टव्यम् ।

**वि.— ॥ त्रिबारमुक्तेऽपीति ।** वादिना त्रिवारमुक्तेऽपि प्राश्निकप्रतिवादिभ्यामविज्ञातार्थकं वाक्यमविज्ञातार्थं नाम निग्रहस्थानमित्यर्थः । वादिनोक्तस्य परोपदेशात्मकस्यानुमानस्यानवधानादि-शङ्कावारणाय पुनर्वचनं त्वात नियमश्च प्राश्निकैरपेक्ष्यते । ततःपरं वादिप्रयुक्तवाक्यार्थज्ञानं च दोषत्व-निश्चायकम् । ततश्च वादिना त्रिवारमुक्तस्य परिषदाऽविज्ञातार्थस्य वाक्यस्य प्रयोगोऽविज्ञातार्थं नाम निग्रहस्थानं न भवतीति तद्व्यवच्छेदाय परिषत्पदोपादानम् । परिषदाऽविज्ञातार्थस्याविज्ञातार्थत्व-वारणाय प्रतिवादिपदोपादानम् । अबोधकपदसमूहात्मक वाक्यप्रयोगरूपनिरर्थकव्यवच्छेदाय वाचक-पदोपादानम् ॥ **इत्यादीति ।** कुमारवाहनसमाननामधेयकार्य विशेषवत्त्वादित्यादिरादिशब्दार्थः ॥ **इदमप्यनुक्तिरेवेति ।** परबोधनार्थं वक्तव्यस्यानुक्तावस्य पर्यवसानादविज्ञातर्थमनुक्त्यन्तर्गतमेवेति भावः।

**(३३) प्र.प.— ॥ ९ ॥ अपार्थकम् । अनन्वितवाचकपदादिप्रयोगोऽपार्थकम् । यथा कुण्डमजाजिनं दशदाडिमानि षडपूपा इत्यादि । इदं च स्फुटमसङ्गतम् ।**

**जना.—** ॥ अनन्वितेति । अनन्विता ये पदार्थास्तद्वाचकपदादिप्रयोग इत्यर्थः । आदिपदेन वाक्यपरिग्रहः । अत्रानन्वितवाचकपदाभ्यामर्थान्तरनिरर्थकयोर्निरासः । अर्थान्तरग्रस्तवाक्यस्य पदार्थ-वाचकत्वेनान्वितार्थवाचकत्वाभावात् । निरर्थकस्य च पदार्थवाचकत्वाभावात् । एतदेवाह वरदराजः । पदजातं वाक्यजातमनन्वितपदार्थकमिति । उदाहृत्य दर्शयति ॥ यथेति । इत्यादीत्यादिपदेन व्यवधानान्वयस्यौदनं सरसि भुक्त्वा स्नातो यातीत्यादेः, सम्भवत्सर्वान्वयनिरासे सत्यसम्भव-दन्वयस्य, नित्या वेदा अनादिः संसारोऽकर्तृकं क्षित्यादिकं जगद्वैचित्र्यं च निर्हेतुकमित्यादेश्च सङ्ग्रहः।

**राघ.— ॥ अनन्वितेति ।** एतच्चार्थान्तरव्यावृत्त्यर्थम् । निरर्थकनिरासाय वाचकेति ।

**विज.— ॥ अनन्वितेति ।** निरर्थकव्यावर्तनाय वाचकेति । अर्थान्तरवारणायानन्वितपदार्थोप-स्थापकेत्यर्थः ॥ **इदं चेति ।** आकाङ्क्षाविरहादिति भावः ।

**वेदे.— अनन्वितवाचकपदाभ्यां क्रमेणार्थान्तरनिरर्थकव्यावृत्तिः ।** आदिपदेन वाक्यपद-प्रयोगसङ्ग्रहः ॥ **स्फुटमिति ।** आकाङ्क्षाविरहादिति भावः ।

**अभि.— ॥ अनन्वितवाचकपदादिप्रयोग इति ।** आदिपदेनानन्वितावान्तर वाक्यं गृह्यते ।

**आद.**— ॥ **इदं च स्फुटमसङ्गतमिति** । न चात्राप्यनुक्तिरेव प्रतिवाद्यादिजिज्ञासिताया अन्वितोक्तेरभावादिति वाच्यम् । जिज्ञासितार्थस्य बोधकत्वात् । न हि विभिन्नविभक्तिमत्पदेनार्थोपस्थितिर्न भवति । किन्त्वपेक्षितविभक्त्यभावात्परस्परमनन्वितत्वेन वाक्यस्यैकार्थकत्वं न सम्भवति । अतो नानुक्तिर्वक्तुं शक्या । किन्त्वनाकाङ्क्षितस्यानन्वितस्योक्तेरसङ्गतिरेवोद्भावनीयेति ।

**वि.**— ॥ **अनन्वितेति** । आदिपदेनानन्वितं वाक्यं गृह्यते । अनन्वितपदबोधकशब्दप्रयोगोऽपार्थकमित्येव लक्षणवाक्यं विवक्षितम् । बोधकशब्दस्तु पदवाक्यभेदेन द्विविध इति ज्ञापनाय पदादिपदोपादानम् । अवाचकपदादिप्रयोगरूपनिरर्थकव्यवच्छेदाय वाचकपदग्रहणं कृतम् ॥ **इत्यादीनि** । ओदनं स्नातो ग्रामं सरसि गत्वाऽश्नातीत्यादिरादिशब्दार्थः ॥ **इदं च स्फुटमसङ्गतमिति** । कुण्डमजाजिनमित्यादि पदानामाकाङ्क्षादि विरहस्य स्फुटत्वादपार्थकं स्फुटं स्पष्टमसङ्गतमित्यर्थः ।

(३४) प्र.प.— ॥ १० ॥ **अप्राप्तकालम् । क्रमविपर्यासोऽप्राप्तकालम् । यथा कृतकत्वादनित्यः शब्द इत्यादि । इदं किञ्चिन्न निग्रहस्थानम् । प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमित्यादि संव्यवहारात् । निग्रहस्थानं त्वसङ्गतिरेव ।**

**जना.**— अप्राप्तकालं लक्षयति ॥ **क्रमेति** । विवक्षितेति वादांशवाक्यवादिनामिति च शेषः । यदाह वरदराजः ।

**विवक्षितं क्रमं वादवादांशावयवादिकम् ।**
**विपर्यस्तं तदिति चेत्प्राप्तैवाप्राप्तकालता** ॥ इति ।

प्रमाणलक्षणटीकायामपि विवक्षितक्रमविपर्यासोऽप्राप्तकालमित्युक्तम् । कौ पुनर्वादादिक्रमतद्विपर्यासाविति चेदत्रोक्तं प्रमाणलक्षणटीकायां वरदराजीये च । अयं हि वादजल्पयोः क्रमः । सभ्यादिसङ्ग्रहपुरःसरं कथानियमबन्धे कृते वादिना प्रमाणमभिधायाभासोद्धारः कर्तव्यः । प्रतिवादिनाऽपि वादिसाधनमनूद्य दूषयित्वा स्वपक्षे प्रमाणमभिधायाभासोद्धारः कर्तव्यः । तत्र यदि वादी साधनमुक्त्वा कथानियमबन्धमिच्छति तदाऽऽरम्भविपर्यासः । यदाऽऽभासोद्धारानन्तरं साधनं प्रयुङ्क्ते तदा वादांशविपर्यासः । प्रतिवादी च यदा स्वपक्षे साधनमभिधाय परपक्षं दूषयति तदा वादविपर्यासः। धूमवत्त्वात्पर्वतोऽग्निमानित्यादिरवयवविपर्यासः । अग्निमान्पर्वत इत्यवयवांशविपर्यासः । एवं वादजल्पयोः पञ्चविधो विपर्यासः । वितण्डायां तु प्रतिवादिनः साधनाभावाद्बाधविपर्यासाभावेन चत्वार एव विपर्यासा इति । अयं क्रमविपर्यासोऽप्राप्तकालमित्येवोक्ते लिङ्गविभक्तिवर्णविपर्यासात्मके

निरर्थकेऽतिव्याप्तिः । अतो वादवादांशेत्यादि । अत्रोपलक्षणतयैकमवयवविपर्यासमुदाहृत्य दर्शयति ॥ **यथेति ।** इत्यादीत्यादि शब्देनाग्निमान्पर्वत इत्याद्यवयवांशविपर्यासस्य ग्रहणम् । विपर्ययेण प्रयोगेऽप्यर्थप्रतीतेः सम्भवात् । अपशब्दतन्नियमकथायामेवैतन्निग्रहस्थानं न सर्वकथास्विति नैयायिकैकदेश भूषणकारमतमाश्रित्यापाततोऽस्य निग्रहस्थानत्वमेव नेत्याह ॥ **इदमिति ।** किञ्चित्कथारम्भ विपर्यासा दीनां पञ्चानां मध्ये न किञ्चिदपि निग्रहस्थानमित्यर्थः । कुत इत्यत आह ॥ **प्रवृत्तीति ।** अनुपक्षिप्ते वादिसाधने निराश्रयदोषोद्भावनासम्भवात् । कथारम्भवादांशविपर्ययोर्निग्रहस्थानत्व- मेवोपक्षिप्तम् । दूष्यमदूषयित्वा प्रतिवादिनः स्वपक्षसाधनानर्हत्वेन वादविपर्यासोऽपि निग्रहस्थानमेव । अवयव-तदंशयोः क्रमावश्यम्भावस्य प्रथमाध्याय एव चर्चितत्वादवयवतदंश विपर्यासावपि निग्रहस्थाने । अर्थ प्रतीतिसम्भावनामात्रेण प्रयोगाङ्गीरे तत्प्रमादिवादभूतदिवेदिवेत्यादीनामपि प्रसङ्ग इत्युदयनाद्युक्त-बाधकेनास्य निग्रहस्थानत्वमङ्गीकृत्यन्तर्भावमाह ॥ **निग्रहस्थानं त्विति ।** निग्रहस्थानं चेदपीत्यर्थः । असङ्गतिरेवेति । अनाकाङ्क्षिताभिधानत्वस्य स्पष्टत्वादिति भावः ।

**राघ.—— ॥ न निग्रहस्थानमिति ।** पराजयाहेतुरित्यर्थः । तत्र हेतुःप्रवृत्तीत्यादि । प्रवृत्ति-सामर्थ्यात्समर्थप्रवृत्तिजनकत्वादर्थवत्सदर्थविषयकं प्रमाणमित्यर्थः । न्यायसूत्रे प्रतिज्ञाहेत्वोर्व्यत्यासेन तथाम्नायस्य क्रियार्थत्वादानर्थक्यमिति जैमिनिसूत्रे । ईक्षतेर्नाशब्दमिति व्याससूत्रादौ च व्यत्यासेन निर्देशेन संतामेव व्यवहारादित्यर्थः । क्वचित्संव्यवहारादिति पाठः । नन्वेवमादेरनिग्रहस्थानत्वे प्रमाण लक्षणग्रन्थोक्तदिशाऽऽभासोद्धारानन्तरं साधनमुपन्यस्यति । संवादविपर्यास इत्यादेरपि निग्रह-स्थानत्वमस्तीत्यत आह ॥ **निग्रहस्थानं त्विति ।**

**विज.—— ॥ क्रमेति ।** कथासम्प्रदायागतक्रमेत्यर्थः । अस्य निग्रहस्थानत्वं दूषयति ॥ **इदमिति ॥ प्रवृत्तीति ।** प्रमाणप्रमेयादिसूत्रेण प्रमाणादिपदार्थानां प्रतिपाद्यते उक्ते प्रमाणस्य प्रतिपाद्यतां प्रयोजकयोजनवत्त्वोपपादनार्थं प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमिति भाष्ये न्याय-भाष्यकृतोपलक्षितेन हेतोः प्रथमप्रयोगेण सम्प्रदायनियम एवासिद्ध इति तद्विपर्यासो न दोष इति भावः । किं तर्ह्यत्र निग्रहस्थानमित्यत आह ॥ **निग्रहेति ।** साध्यानुक्तौ हेत्वाकाङ्क्षाविरहादिति भावः।

**वेदे.—— ॥ क्रमेति ।कथायां विवक्षितक्रमेत्यर्थः ।** अयमिह वादजल्पयोर्विवक्षितक्रमः । सभ्यादिसङ्ग्रहपुरःसरं कथानियमबन्धे कृते वादिना प्रमाणत्वात्स्वपक्षे प्रमाणमभिधायाभासोद्धारः कर्तव्य इति प्रतिवादिनाऽपि वादिसाधनमनूद्य दूषयित्वा स्वपक्षे प्रमाणमभिधायाभासोद्धारः कर्तव्य इति । तत्र यदि वादी साधनमुक्त्वा कथानिबन्धमिच्छति तदाऽऽरम्भविपर्यासः । यदाभासोद्धारानन्तरं

साधनं प्रयुङ्क्ते तदा वादांशविपर्यासः । प्रतिवादी च यदा स्वपक्षसाधनमभिधाय परपक्षं दूषयति तदा वादविपर्यासः । धूमवत्त्वात्पर्वतोऽग्निमानित्याद्यवयवविपर्यासः । अग्निमान्पर्वत इत्याद्यवयवांशविपर्यासः । वितण्डायां तु प्रतिवादिनः स्वपक्षसाधनाभावाद्वादविपर्यासाभाव इति । तत्रोपलक्षणत्वेनावयवविपर्यासमेवोदाहरति ॥ **यथेति** । उक्तविपर्यासेष्ववयवांशविपर्यासरूपं किञ्चिन्निग्रहस्थानमेव न भवत्यतोऽन्तर्भावमेव नार्हति । अवशिष्टं तु भवति निग्रहस्थानम् । तच्चासङ्गत्यन्तर्भूतमित्याह ॥ **इदमित्यादिना** ॥ **अर्थवदिति** । अर्थाव्यभिचारीत्यर्थः । आदिपदेनानित्यः शब्दइत्याद्यभियुक्तप्रयोगसङ्ग्रहः । उक्तरीत्याऽवयवप्रयोगे नियमाभावादिति भावः ॥ **असङ्गतिरेवेति** । समयबन्धानुसारेणैवाकाङ्क्षोदयेन तद्विपर्यासेनाकाङ्क्षिताभिधानत्वेनासङ्गतित्वमिति भावः ।

**अभि.**— ॥ **क्रमेति** । विवक्षितक्रमविपर्यास इत्यर्थः । अयं हि वादजल्पयोः क्रमः । सभ्यादिसङ्ग्रहपुरःसरं कथानियमम्बन्धे कृते वादिना प्रमाणमभिधाय आभासोद्धारः करणीय इति वादिनाऽपि वादिसाधनमनूद्य दूषयित्वा स्वपक्षे प्रमाणमभिधायोद्धारः करणीय इति । तत्र यदि वादी साधनमुक्त्वा कथानियमबन्धमिच्छति तदाऽऽरम्भविपर्यासः । यदि मया वक्ष्यमाणस्य हेतोरसिद्ध्यादिकं नास्तीत्याभासोद्धारानन्तरं साधनं प्रयुङ्क्ते तदा वादांशविपर्यासः । प्रतिवादी च यदा स्वपक्षे साधनं विधाय परपक्षं दूषयति तदा वादविपर्यासः । धूमवत्त्वात्पर्वतोऽग्निमानित्याद्य वयवविपर्यासः । अग्निमान्पर्वत इत्याद्यवयवांशविपर्यासः । वितण्डायां तु प्रतिवादिनः साधनाभावान्न वादविपर्यास इति ॥ **इदं किञ्चिदिति** । अवयवविपर्यासत्वेनावयवांश विपर्यासत्वेन चोदाहृतम् । किञ्चिदिदं न निग्रहस्थानमित्यर्थः ॥ **निग्रहस्थानं त्विति** । यदारम्भविपर्यासादिकं निग्रहस्थानं तदसङ्गतावन्तर्भूतमित्यर्थः ।

**आद.**— ॥ **क्रमविपर्यासोऽप्राप्तकालमिति** । अयमिह क्रमः सभ्यादिसङ्ग्रहपुरःसरं कथानियमबन्धे कृते वादिना प्रमाणमभिधायाभासोद्धारः कर्तव्य इति प्रतिवादिना साधनमनूद्य दूषयित्वा स्वपक्षे प्रमाणमभिधायाभासोद्धारः करणीय इति । तत्र यदि वादी साधनमुक्त्वा नियमबन्धमिच्छति तदाऽऽरम्भविपर्यासः । यद्याभासोद्धारानन्तरं साधनं प्रयुङ्क्ते तदा वादांशविपर्यासः । स्वपक्षे साधनमनभिधाय परपक्षं दूषयति तदा वादविपर्यासः । धूमत्वात्पर्वतोऽग्निमानित्यवयवविपर्यासः । अग्निमान्पर्वत इत्यवयवांशविपर्यासः । वितण्डायां तु प्रतिवादिनः साधनाभावाद्वादविपर्यासाभाव इति ॥ **इदं किञ्चिदिति** । अवयवविपर्यासस्तदंशविपर्यासो वादविपर्यासश्चेति त्रयं न निग्रहस्थानमित्यर्थः । अवयवनियमस्य खण्डितत्वात् । विपर्यासस्य स्वपक्षसाधनपरपक्ष निराकरणविषयेऽज्ञानासाधकत्वाच्च । नन्वारम्भविपर्यासस्तावन्निग्रहस्थानं भवत्येव । कथानियमात्पूर्वं साधनस्यानाकाङ्क्षितत्वात् ।

अवयवस्थाननिरासाय कथानियमस्यैवाकाङ्क्षितत्वात् । एवं वादांशविपर्यासोऽपि । वादिना स्वपक्षोक्त्यनन्तरं तत्र प्रथमतः प्रमाणाकाङ्क्षाया जायमानत्वात् । अन्यथाऽप्रमितार्थसिद्ध्यर्थं पुरःस्फूर्तिकानां प्रमितत्वेन प्रतीयमानानामाभासानामुद्धारस्याशक्यत्वात् । कथानियमे कृते चोक्तविपर्यासत्रयस्यापि दूषणत्वं सम्भवति । कथाविशेषे उक्तक्रमनियमस्यापि कृतत्वसम्भवात् । एवं च यादृशकथायां क्रमनियमोऽपि बन्धितस्तत्र नियमबन्धानुसारेणैवाकाङ्क्षाया उदयात् । तादृशाकाङ्क्षानिवर्तनानुकूलत्वात् प्रत्युतानाकाङ्क्षिताभिधानरूपत्वाच्च तदुक्तेरित्यत आह ॥ **निग्रहस्थानत्वं त्वसङ्गतिरेवेति** । न हि क्रमविपर्यासत्वेन हेतुता किन्त्वनाकाङ्क्षिताभिधानत्वेन रूपेणैवेत्यसङ्गतिरेवेत्यर्थः । नन्वसङ्गतिस्थलेऽपि वादिप्रतिवादिनोरन्यतरस्य स्वपक्षसाधनाद्यज्ञानानुमानसम्भवेन कथं निग्रहस्थानत्वं स्वपक्षसाधनोत्तरं यत्किञ्चिदुक्तेः सत्त्वेऽपि स्वपक्षसाधनस्यैव हेतूक्त्यादिना सिद्धेरिति चेत् । इत्थम् । वाक्यसामान्यस्य परार्थत्वेन वाक्यस्य तदाकाङ्क्षिताभिधायकत्वमावश्यकम् । अन्यथा वैय्यर्थ्यादनुपादेयत्वापत्तेः । प्रवृत्ति सामान्यं प्रतीष्टसाधनज्ञानस्यानिष्टनिवर्तकत्वज्ञानस्य वा कारणत्वस्य क्लृप्तत्वात् । परज्ञानसाधनवाक्यविशेषे इष्टसाधनताज्ञानोत्तरं तदर्थं प्रवृत्तिः स्यात् । तच्च तज्ज्ञाने इष्टसाधनताज्ञान एव सम्भवति नान्यथेति । स्ववाक्यसाध्यज्ञाने परेष्टत्वज्ञानस्यापेक्षितत्वेनानाकाङ्क्षिते आकाङ्क्षितत्वरूपभ्रमानुमापकत्वं सम्भवति । तदभावेऽपि प्रवृत्तौ वाक्योच्चारणे क्लृप्तकारणाभावेनाक्लृप्तस्य मौर्ख्यादिरेव दोषस्य तत् प्रवृत्तिकारणस्य सिद्धिर्भवति । अकारणकार्यस्यानुपपत्तेरित्यसङ्गतेर्दोषता युज्यते । न चासङ्गतिस्थले आकाङ्क्षितानुक्तिरेव दोषोऽस्तु । तथा चास्य पृथङ् निग्रहस्थानत्वं न युज्यत इति चेन्न । उक्तेः सत्त्वेनानुक्तेः प्रथममनुपस्थितेः । आकाङ्क्षितोक्त्यनन्तरमनाकाङ्क्षितस्थले त्वसङ्गतिरेवोद्भाव्याऽनुक्तेरसम्भवादिति द्रष्टव्यम् ।

**श्रीनि.—** ॥ **प्रवृत्तिसामर्थ्यादिति** । फलवत्प्रवृत्तिजनकत्वादित्यर्थः । अत्र हेतोरेव प्रथमतो ग्रहणादिति भावः ।

**वि.—** ॥ **क्रमविपर्यास इति** । अयं हि वादजल्पयोः क्रमः सभ्यादिसङ्ग्रहपुरःसरं कथानियमबन्धे कृते वादिना प्रमाणमभिधायाभासोद्धारः कर्तव्यः । प्रतिवादिना वादिसाधनमनूद्य दूषयित्वा स्वपक्षे साधनमभिधायाभासोद्धारः कर्तव्यः । तत्र यदि वादी स्वपक्षसाधनमभिधाय कथानियमबन्धमिच्छति तदाऽऽरम्भविपर्यासः । यदाऽस्योद्धारानन्तरं साधनं प्रयुङ्क्ते तदा वादांशविपर्यासः । प्रतिवादी यदि स्वपक्षे साधनमभिधाय परपक्षं दूषयति तदा वादविपर्यासः । यदा प्रतिज्ञा हेतूदाहरणानां वैपरीत्येन प्रयोगमिच्छति तदाऽवयवविपर्यासः । वितण्डायां तु प्रतिवादिनः स्वपक्ष-

साधनाभावाद्वादविपर्यासाभाव इत्यवगन्तव्यम् । तथा चारम्भादिक्रमवैपरीत्य प्राप्तमप्राप्तकालमित्यर्थः ॥ **यथेति** । कृतकत्वादिति हेतोः प्रथमं प्रयोगादवयवविपर्यासः ॥ **अनित्य इति** । साध्यवचनस्य प्रथमं प्रयोगादवयवांशविपर्यासश्च प्रदर्शितो भवति । आरम्भविपर्यासादिरादिशब्दार्थः ॥ **इदं किञ्चिदिति** । इदमप्राप्तकालं किञ्चिदवयवविपर्यासादिरूपं न निग्रहस्थानमित्यर्थः । तत्र हेतुमाह ॥ **प्रवृत्तिसामर्थ्यादिति** । आदिपदेनात एव प्रमाणम् इत्यादेर्ग्रहणं कृतम् । शास्त्रेष्वेवमविगीतव्यवहारान्न तन्निग्रहहस्थानम् ॥ **असङ्गतिरेवेति** । आरम्भविपर्यासादिरूपं निग्रहस्थानं त्वनाकाङ्क्षिताभिधान रूपत्वादसङ्गतिरेवेत्यर्थः ।

(३५) प्र.प.— ॥ ११ ॥ **न्यूनम् । अवश्योपादेयानामन्यतमानुपादनं न्यूनम् । यथा पर्वतोऽग्निमान्महानसवदित्यादि । एतन्न्यूनमेव ।**

**जान.**— अत्रात्मसिद्धान्त सिद्धानामित्यवश्योपादेयानामित्यस्य विशेषणमुपस्कर्तव्यम् । अन्यथा नैयायिकं प्रत्यवयवद्वयं प्रयुञ्जानस्य सौगतस्य न्यूनतापत्तेः । अवश्योपादेयानां कथारम्भादीनां मध्य इत्यर्थः । तदुक्तं वरदाराजेन ।

**आत्मसिद्धान्तसिद्धेषु वादांशावयवादिषु ।**
**एकस्यावचने प्राहुरन्यूनं न्यूननिग्रह ॥**

इति न्यूनस्य सिद्धान्तविरुद्धाचरण रूपत्वात्सिद्धान्तविरुद्धाभ्युपगमरूपादपसिद्धान्ताद्भेदो द्रष्टव्यः ।

**विज.**— ॥ **अवश्येति** । स्वस्वसिद्धान्तावश्योपादेयेत्यर्थः । तेन त्र्यवयवादिप्रयोगे मीमांसकादेर्न न्यूनताप्रसङ्गः ॥ **यथेति** । नैयायिकमतेनैतत् ॥ **एतदिति** । परबोधनार्थस्य स्वेनावश्यवक्तव्यस्यानुक्तेरिति भावः ।

**अभि.**— ॥ **एतन्न्यूनमेवेति** । यत्त्वया न्यूनत्वेनोक्तं तत्तथैवेत्यर्थः। एवमुत्तरत्रापि खण्डनं द्रष्टव्यम् ।

**वि.**— ॥ **अवश्योपादेयानामिति** । अवश्योपादेयानां प्रतिज्ञाद्यवयवानामन्यतमवचनमित्यर्थः ॥ **इत्यादीति** । धूमवत्त्वान्महानसवदित्यादिरादिशब्दार्थः ॥ **एतदिति** । उक्तानुपादानमस्मदुक्तन्यूनाख्यनिग्रहस्थानमेव न ततोऽतिरिक्तमित्यर्थः ।

(३६) प्र.प.— ॥ १२ ॥ **अधिकम् । अन्वितोपयुक्तापुनरुक्त कृतकार्यप्रयोगोऽधिकम् । यथा पर्वतोऽग्निमान्धूमवत्त्वात्प्रकाशविशेष वत्त्वाच्चेत्यादि । एतदधिकमेव ।**

**जना.— ॥ अन्वितेति** । एतदेवोक्तं वरदराजेन ।

**अन्वितस्योपयुक्तस्य पुनरुक्तेतरस्य च ।**
**कृतकार्यकरस्योक्तिरधिकं तत्प्रचक्षत ॥** इति ।

अत्रान्वितेत्यपार्थकस्य निरासः । उपयुक्तेत्यर्थान्तरस्य । पुनरुक्तेतरस्येति पुनरुक्तस्य । कृतकार्येति स्वरूपकथनार्थम् । अधिकविधानार्थं यत्रानुवादस्तद्व्यावृत्त्यर्थं वा ।

**राघ.— ॥ अन्वितेति** । अपार्थकेऽर्थान्तरे पुनरुक्तेऽसाधुप्रयोगे चानतिव्याप्तये क्रमाद्विशेषणानि ।

**विज.— ॥ अन्वितेति** । अपार्थकार्थान्तरपुनरुक्तपरिहाराय विशेषणानि । कृतकार्यत्वमन्येन कृतकार्यत्वम् । तदधिकत्वोपपादनायोक्तम् ।

**वेदे.— ॥ अन्वितेति** । अत्रापार्थकार्थान्तरपुनरुक्ति सदुक्तिपरिहाराय क्रमेण विशेषणानि ।

**अभि.— ॥ एतदधिकमेवेति** । एतदधिकलक्षणेऽपुनरुक्तपदस्यानुपादेयत्वात्पुनरुक्तमधिकान्तर्भूतमेवेत्यर्थः । एतेनाधिकलक्षणेऽपुनरुक्तेति विशेषणस्य प्रविष्टत्वात्पुनरुक्तमधिकमिति व्याहतमिति परास्तम् ।

**वि.— ॥ अन्वितेति** । अन्येन कृतकार्यमनुमित्युपयोगिपक्षादिज्ञानरूपकार्यं यस्य तत्तथा । यस्य कृतकार्यस्य वाक्यस्य प्रयोगोऽधिकमित्युक्ते धूमवत्त्वादिति पुनरुक्तेऽतिव्याप्तिस्तद्वारणाय अपुनरुक्तेति विशेषणम् । अपुनरुक्तस्य कृतकार्यस्य प्रयोगोऽधिकमित्युक्ते प्रकृतानुपयुक्तस्यापुनरुक्तस्य कृतकार्यस्य वर्णात्मकः शब्दोऽनित्यः स च चक्षुरिन्द्रियग्राह्य इति वाक्यस्य प्रयोगोऽर्थान्तरेऽति व्याप्तिस्तन्निवृत्त्यर्थमुपयुक्तेति विशेषणम् । उपयुक्तापुनरुक्तकृतकार्यप्रयोगोऽधिकमित्युक्तौ देवदत्तो ग्रामं गत्वा सरसि स्नात्वौदनमत्ति देवदत्त ओदनं स्नातो ग्रामं सरसि गत्वाऽश्नातीत्यनन्वितपदप्रतिज्ञा प्रयोगेऽपार्थकेऽतिव्याप्तिः । न चेदं पुनरुक्तमपार्थकलक्षणस्यात्रातिव्याप्त्यापातात् । अत उक्तापार्थकेऽतिव्याप्तिस्तद्वारणायान्वितपदोपादानम् । समीचीनप्रयोगेऽतिव्याप्तिवारणाय कृतकार्यपदोपादानम् ॥ **इत्यादीति** । धूमवत्त्वादित्यादिरादिशब्दार्थः ॥ **एतदधिकमेवेति** । अन्वितोपयुक्तापुनरुक्तकृतकार्यप्रयोगरूपाधिकमस्मदुक्तकृतकार्यवचनरूपाधिकमेवेत्यर्थः ।

**(३७) प्र.प. — ॥ १३ ॥ पुनरुक्तम् । प्रतीतार्थस्य पुनः स्ववचनेन प्रयोजनं विनाऽभिधानं पुनरुक्तम् । यथा पर्वतोऽग्निमान्पर्वतोऽग्निमानित्यादि । एतदधिकमेव ।**

**जना.**— ॥ **प्रतीतार्थस्येति** । एतदप्युक्तं वरदराजेन ।

**शब्दादाक्षेपतो वाऽपि प्रतीतस्यैव कीर्तनम् ।**
**प्रयोजन विनाभूतं पुनरुक्तिरिति स्थितिरिति ।**

अत प्रतीतार्थस्येत्यविज्ञातार्थस्य निरासः । प्रयोजनं विनेति सप्रयोजनपुनर्वचनरूपस्यानुवादस्य निरासः ।

**विज.**— ॥ **स्वेति** । स्ववचनेन प्रतीतार्थस्येत्यन्वयः ।

**वेदे.**— स्ववचनेन प्रतीतार्थस्येति सम्बन्धः । निगमनेऽतिव्याप्तिवारणाय प्रयोजनं विनेति ।

**वि.**— ॥ **प्रतीतार्थस्येति** । स्ववचनेन ज्ञातस्य पक्षादेरर्थस्य पुनः स्ववाक्येन प्रयोजनमन्तरेण वचनं पुनरुक्तमित्यर्थः । अप्रयोजनं पुनर्वचनमनुवादः । यथा निगमने पक्षस्य तद्व्यवच्छेदार्थं प्रयोजनं विनेति विशेषणम् । स्ववचनेनाप्रतीतार्थस्य पक्षादेः स्वातिरिक्तवचनेनाभिधानस्य पुनरुक्तत्ववारणाय प्रतीतिपदम् । स्ववचनेनाप्रतीतार्थस्य पक्षादेः स्वातिरिक्तवचनेनाभिधानस्य पुनरुक्तत्वनिरासाय स्ववचनपदोपादानम् । गिरिर्वह्निमानित्यादिरादिशब्दार्थः ॥ **एतदधिकमेवेति** । अन्येन कृतकार्यस्य वचनरूपत्वादस्येति भावः ।

**(३८) प्र.प.— ॥ १४ ॥ अननुभाषणम् । वादिनोक्तस्य प्राश्निकैर्विज्ञातार्थस्य वादिना परिषदा वा पुनरनूद्य दत्तस्योच्चारणयोग्यस्य स्वाज्ञानमनाविष्कुर्वता कथामविच्छिन्दता यद-प्रत्युच्चारणं तदननुभाषणम् । तत्पञ्चविधम् । यत्तदित्याद्यनुवादो दूष्यैकदेशानुवादः केवलं दूषणोक्तिरन्यथानुवादस्तूष्णीं भावश्चेति । तत्राद्यत्रयं न्यूनम् । चतुर्थमसङ्गतम् । पञ्चममनुक्तिः ।**

**जना.**— ॥ **वादिनेति** । अनाविष्कुर्वताऽप्रकटयता ॥ **अप्रत्युच्चारणमिति** । नञः पर्युदासवृत्त्या प्रत्युत्तरविरोधिवचनमित्यर्थः । तदुक्तं वरदराजेन ।

**ज्ञातार्थं प्राश्निकैर्वाक्यैस्त्रिरुक्तं नानुभाषते ।**
**योऽनुद्भाव्य स्वमज्ञानं तस्यैवाननुभाषणमिति ।**

अत्र प्राश्निकैर्विज्ञातार्थस्येत्य विज्ञातार्थनिरासः । अज्ञानमनाविष्कुर्वतेत्यज्ञाननिरासः । कथा-मविच्छिन्दतेति विक्षेपनिरासः । इति विशेषणानि तु निग्रहस्थानत्वोपपादकानि । न च पञ्चममज्ञान-मप्रतिभा वा । ज्ञातार्थस्य स्फुरदुत्तरस्यापि सभाक्षोभादिना तूष्णींभावोपपत्तेः । तथा चाननुभाषणमेव निर्णीतं नान्यदिति भावः।

**राघ.**— ॥ **वादिनोक्तस्येति** । अनुक्तिनिमित्ताप्रत्युच्चारणव्यावृत्तये वादिनोक्तस्येत्युक्तम् । अविज्ञातार्थकस्य मनोव्यासङ्गनिमित्ताप्रत्युच्चारणस्याति तीव्रोच्चारितस्याज्ञाननिग्रहस्थानस्य विक्षेपस्य च व्यावृत्तये क्रमात्प्राश्निकैर्विज्ञातार्थकस्येत्यादि षष्ठ्यन्तानि त्रीणि तृतीयान्ते द्वे चेति पञ्च विशेषणानि ।

**विज.**— ॥ **वादिनेति** । प्राश्निकैरित्यनेनाविज्ञातार्थव्यवच्छेदः । वादिना परिषदेत्युच्चारणेऽति दोषत्वोपपादनाय । स्वाज्ञानमित्यनेनाज्ञानस्य कथामित्यनेन विक्षेपस्य निरासः । अन्तर्भावविशेषं वक्तुं तद्भेदमाह ॥ **तदिति** ॥ **तत्रेति** । विशेष्यानुवादस्यैव वक्तव्यत्वेन यदित्यनुवादस्य सकल दूष्यानुवादस्यावश्यकत्वेनैकदेशानुवादस्य दूषणार्थं दूष्यानुवादस्यावश्यकत्वे केवलदूषणोक्तेश्च न्यूनत्वम् । अन्यथाऽनुवादे आकाङ्क्षाविरहः । तूष्णींभावेऽनुक्तेरेव दोष इत्यर्थः ।

**वेदे.**— **प्राश्निकैरित्यनेनाविज्ञातार्थव्यवच्छेदः** । वादिनेति परिषदेत्युच्चारणेति च दोषत्वोपपादनाय स्वरूपकथनं न व्यावर्तकम् । स्वाज्ञानमनाविष्कुर्वतेत्यनेनाज्ञानस्य व्यवच्छेदः । तत्राज्ञानाविष्करणस्य वक्ष्यमाणत्वात् । कथामविच्छिन्देत्यनेन विक्षेपस्य निरासः । अन्तर्भावकथनसौकर्याय तद्विभागमाह ॥ **तदिति** ।

**अभि.**— ॥ **वादिनोक्तस्येति** । यदप्रत्युच्चारणं तदननुभाषणमित्येतावन्मात्रोक्तौ कथाबाह्योक्तस्याप्रत्युच्चारणस्याननुभाषणत्वं विज्ञायेत । तन्मा विज्ञायीति वादिनोक्तस्येत्युक्तम् । वादिनोक्तस्याप्रत्युच्चारणं त्वपार्थकाप्रत्युच्चारणे गतम् । अतः प्राश्निकैर्विज्ञातार्थस्येत्युक्तम् । तावदप्यनूद्य दत्तस्याप्रत्युच्चारणे गतम् । अतो वादिना परिषदावापुनरनूद्य दत्तस्येत्युक्तम् । तावताऽप्यनूद्यांशस्याप्रत्युच्चारणे गतम् । अत उच्चारणयोग्यस्येत्युक्तम् । तदर्थस्तु दूषणायानुवादयोग्यत्वम् । कथमन्योऽपि छिन्नं वदतीति विक्षेपेऽतिव्याप्तिवारणायाज्ञानेऽति व्याप्तिवारणाय ज्ञानमनाविष्कुर्वतेति ।

**आद.**— अन्तर्भावसौकर्यायाननुभाषणं निरूपयति ॥ **वादिनेति** ॥ **आद्यत्रयं न्यूनमेवेति** । स्वस्मिन्प्रकृतार्थज्ञानानुमापकयावत्पदोच्चारणाभावस्यैव न्यूनतापदार्थत्वेन यत्तदित्यनुवादस्य तज्ज्ञानाभावेऽपि सम्भवेन न्यूनतैवेत्यर्थः ॥ **चतुर्थमसङ्गतमिति** । न चान्यथावादत्वेन निग्रहस्थानत्वं कुतो नास्तीति चेत् । तदुक्तवाक्यात्प्रतिवाद्यर्थ प्रतिपादकवाक्यप्रयोगस्यैवान्यथानुवादरूपत्वेन दूषणोक्त्यादेरपि तादृशत्वेन तस्य निग्रहाप्रयोजकत्वात् । अनुवादार्थं प्रवृत्तपुरुषकर्तृकत्वस्यापि हेतुविशेषत्वेन दूषणोक्त्यादेर्वारणेऽप्यसङ्गतेरेव प्रथममुपस्थितेः सैव निग्रहस्थानमनुवादार्थप्रवृत्तेरनुमेयत्वात् । तद्वाक्यार्थमजिज्ञासितत्वस्य मध्यस्थादीनामध्यक्ष सिद्धत्वादिति ।

**श्रीनि.**— ॥ **यत्तदिति** । वाद्युक्तस्य यत्तच्छब्दाभ्यामेवानुवाद इत्यर्थः ॥ **दूष्यैकदेश इति** । दूष्यमध्ये एकदेश इत्यर्थः । केवलमुवादं विना । अन्यथा वाद्युक्त्यपेक्षया ।

**वि.**— ॥ **वादिनोक्तस्येति** । अप्रत्युच्चारणमनूद्य प्रत्युत्तरानुक्तिरित्यर्थः । अविज्ञातार्थव्यवच्छेदाय प्राश्निकैर्विज्ञातार्थस्येति विशेषणम् । वादिना परिषदा वाऽनूद्य दत्तस्येत्येतदुच्चारणयोग्यस्य तस्योपपादकम् । वादिप्राश्निकयोरन्यतरेणाननूदितत्वेनोच्चारणयोग्यस्य वादिनोक्तस्य यत्प्रत्युच्चारणं तद्व्यवच्छेदायोच्चारणयोग्येति विशेषणम् । स्वज्ञानमनाविष्कृतमित्येतदज्ञानव्यावृत्त्यर्थमुक्तम् । विक्षेपव्यावृत्त्यर्थं कथायामविच्छिन्दतेति विशेषणमुपात्तम् । अननुभाषणस्य सर्वस्यैकत्रान्तर्भावाभावादनेकेष्वन्तर्भाव उक्तः । तद्विभागमाह ॥ **तत्पञ्चविधमिति** । यत्तदित्याद्यनुवादो यत्तदितिरूपोऽनुवाद इत्यर्थः । शब्दो नित्य इत्यादिनाऽनुवाद आदिपदव्यावृत्त्यर्थम् । दूष्यैकदेशानुवादो दूष्यैकदेशमात्रस्यानुवाद इत्यर्थः । केवलं दूषणोक्तिर्दूष्यानुवादमन्तरेण दूषणाभिधानमित्यर्थः ॥ **तत्राद्यत्रयमिति** । तत्र पञ्चसु प्रकारेषु यत्तदित्यनुवादः । केवलं दूषणोक्तिरित्याद्य यमवश्यवक्तव्यावचनरूपानुक्तिरित्यर्थवाद्युक्तस्य दूषणार्थं प्रतिवादिनाद्यनुक्तानुवादस्यैव कार्यतया प्रकारान्तरेणानुवादस्य प्रकृतोपयोगाभावादसङ्गतत्वमिति बोध्यम् ॥ **पञ्चममनुक्तिरिति** । तूष्णींभावो वक्तव्यस्यावचनरूपानुक्तिरित्यर्थः ।

**(३९) प्र.प.— ॥ १९ ॥ अज्ञानम् । वादिना त्रिवारमभिहितस्य परिषदा विज्ञातार्थस्य वाक्यस्यार्थाप्रतिपत्तिरज्ञानम् ।**

**जना.**— ॥ **वादिनेति** । अत्र परिषदा विज्ञातार्थस्येत्यज्ञातार्थनिरासः । अर्थाप्रतिपत्तिः प्रतिवादिन इति शेषः । तदुक्तं वरदराजेन ।

**ज्ञापिते वादिवाक्यार्थे प्राश्निकैस्तत्र चेत्परः ।**
**स्वाज्ञानमुद्भावयति तदाऽज्ञानेन निग्रह इति ।**

**राघ.**— अज्ञानाप्रतिभाविक्षेपाणां त्रयाणां क्रमेण लक्षणानि वदन्नन्तर्भावमाह ॥ **वादिनेति** । अविज्ञातार्थव्यावृत्तये परिषदा विज्ञातार्थस्येत्युक्तिः ।

**विज.**— ॥ **वादिनेति** । परिषदेत्यविज्ञातार्थनिरासः । वादिनेति दोषत्वोपपादकम् । स्पष्टमन्यत् ।

**वेदे.**— वादिनाऽसकृद् द्विवारं चोक्ते तदर्थाप्रतीतेरदूषणत्वात्तत्रातिव्याप्तिपरिहाराय त्रिवारमभिहितस्येत्युक्तम् । परिषदेत्यविज्ञातार्थनिषेधः ।

**अभि.—— ॥ वादिना त्रिरभिहितस्येति ।** वादिना त्रिरभिहितस्य परिषदा विज्ञातार्थस्य वाक्यार्थाप्रतिपत्तिः । अर्थाप्रतिपत्तिप्रतिपादकारोपणमज्ञानमित्यर्थः । तद्यथा वादिना त्रिरभिहितस्य परिषदा विज्ञातार्थस्य वाक्यार्थाप्रतिपादकत्वभ्रमेण दुष्टत्वं ज्ञापयन्नाह । न मयाऽस्यार्थो ज्ञायत इति । एतेनार्थाप्रतिपत्तेर्निग्रहत्वेन तल्लिङ्गस्यैव निग्रहस्थानत्वादर्थाप्रतिपत्त्यात्मकमज्ञाननिग्रहस्थानमिति परास्तम् ।

**वि.——** अज्ञाताप्रतिभाविक्षेपाणामेकत्रान्तर्भावं वक्तुं त्रयाणां लक्षणमाह ॥ **वादिना त्रिवारमभिहितस्येति ।** एतच्च विशेषणं त्रिवारमुक्तेः प्राश्निकैरपेक्षितत्वाद्वादिना त्रिवारमनुक्तस्य वचनस्य या प्रतिवादिनाऽर्थाप्रतिपत्तिस्तद्व्यवच्छेदाय त्रिवारमुक्तेऽपि परिषदाऽप्यविदितार्थस्य वाक्यस्याविज्ञातार्थतया तद्व्यवच्छेदाय परिषदा विज्ञातार्थस्येति विशेषणम् ।

**(४०) प्र.प.—— ॥ १६ ॥ अप्रतिभा । वादिनोक्तस्य प्रत्युत्तराप्रतिपत्तिरप्रतिभा ।**

**जना. ॥ वादिनोक्तस्येति ।** स्वेनानूदितस्येति शेषः । तदुक्तं वरदराजेन ।

**वाद्युक्तस्यानूदितस्य प्रतिवादी यदोत्तरम् ।**
**प्रतिपन्नं न शक्नोति तदा तस्याप्रभा भवेदिति ।**

अत्र स्वेनानूदितस्येत्यननु भाषणनिरासः ।

**वेदे.—— ॥ अप्रतिपत्तिरिति ।** अप्रतिपत्त्युद्भावनमित्यर्थः । अन्यथाऽननुभाषणेऽतिव्याप्तेः । अत एव स्वाज्ञानमुद्भावयति तदाज्ञानेन निग्रह इत्यपर आह । प्रमाणलक्षणटीकायामपि तच्चाविष्कारेण ज्ञातव्यमित्यादिपदेनेदमेवमभिहितम् । अप्रतिभालक्षणेऽनूदितस्येत्यपि ग्राह्यम् । अन्यथाऽननुभाषणेऽतिव्याप्तेः । उक्तं च तथा प्रमाणलक्षणटीकायाम् ।

**अभि.—— ॥ वादिनोक्तस्येति ।** अत्राप्रतिपत्तिशब्देनाप्रतिपत्तिज्ञापकमुच्यते । तद्यथा वादिना साधने उक्ते तदनूद्य तूष्णींभावः । अनूद्य तूष्णींभावोऽप्रतिभा । अननूद्य तूष्णींभावोऽननुभाषणमिति भेदः । एतेनाप्रतिभायानिग्रहत्वेनानिग्रहस्थानत्वमयुक्तमिति परास्तम् । अप्रतिपत्तिज्ञापकस्यैव निग्रहस्थानत्वेनाभिमतत्वात् ।

**(४१) प्र.प.—— ॥ १७ ॥ विक्षेपः । केनचिद्व्याजेन कथाविच्छेदो विक्षेपः । यथा कथामारभ्याहाद्य मे महत्प्रयोजनमस्ति तस्मिन्नवसिते वक्ष्यामीति । एतत्त्रयमनुक्तिरेव ।**

**जना.—— ॥ केनचिदिति ।** व्याजकथनेनेत्यर्थः । अन्यथाऽप्रतिभाद्यभेदापत्तेः । तदुक्तं वरदराजेन ।

**कथामभ्युपगम्यैव कथाच्छेदाय कस्यचित् ।**
**व्याजस्य वचने प्राहुर्विक्षेपं नाम निग्रहमिति ।**

अवसिते समाप्ते सति । अन्तर्भावमाह ।। **एतदिति** । त्रयमज्ञानमप्रतिभा विक्षेप इति त्रयमित्यर्थः ।। **अनुक्तिरेवेति** । परबोधनार्थमवश्यवक्तव्यस्यानुक्तिरूपत्वादिति भावः ।

**राघ.—** तृतीयं व्यनक्ति ।। **कथामारभ्येत्यादिना** । अवसिते समाप्ते ।

**विज.—** ।। **एतदिति** । त्रयेऽप्यनुक्तिरेव दोष इत्यर्थः । उत्तरस्यावश्यवक्तव्यत्वादिति भावः ।

**वेदे.—** व्याजेन व्याजवचनेन । अत्रापि कथामुपक्रम्येति वक्तव्यम् । अन्यथा कथोपक्रमाभावकालीने व्याजवचनेऽतिप्रसक्तेरिति बोध्यम् । अत एवाह ।। **यथा कथामारभ्याहेति** ।। **परोऽपि कथामभ्युपगम्यैवेति** ।। **अनुक्तिरेवेति** । यत्किञ्चिदुक्तावपि वक्तव्यस्यावचनादिति भावः ।

**आद.—** ।। **एतत्त्रयमनुक्तिरेवेति** । अज्ञानाप्रतिभयोरनुमेयत्वेन प्रथमतस्तज्ज्ञानासम्भवेनोद्भावनायोगात् । केनचिल्लिङ्गेन तयोरनुमाने तु तल्लिङ्गस्यैव निग्रहस्थानत्वम् । तयोरेव पराजयपदार्थत्वेन तत्सिद्ध्यैव पराजयस्य कथाफलस्य सिद्ध्या कथापरिसमाप्तेस्ताभ्यां पराजयान्तरानुमानस्यानवसरान्न तत्र निग्रहस्थानत्वसम्भवः । अन्यथा मया पराजितमित्युक्तेऽपि पराजयज्ञानेन तत्कारणीभूततद्वाक्यस्यापि निग्रहस्थानत्वप्रसङ्गः । एवं पुरःस्फूर्तिकानधिकृतोद्भावितस्यापि निग्रहस्थानत्वप्रसङ्गः । पराजयस्य प्रतियोगिप्रयोज्यत्वज्ञापकत्वाभावेन न निग्रहस्थानत्वमिति चेत् । अत्रापि तदुक्तेरतादृशत्वान्न निग्रहस्थानत्वमिति भावः । विक्षेपस्थलेऽपि कथाविच्छेदकर्तृत्वं न पराजयहेतुः । तथा सत्युक्तस्योत्तरमुक्त्वा विच्छेदकर्तुरपि पराजयप्रसङ्गात् किन्तूत्तरमनुक्त्वा । तथा चावश्यकस्य विशेषणतया प्रथमोपस्थितायामनुक्तेरेव निग्रहस्थानत्वमिति भावः । ननु सर्वत्राप्यनुक्तेरेव दोषत्वं न विरोधादीनाम् । अन्यथा प्रतिवादिना विरोधाद्युद्भावने तत्परिहारायोद्योगे सत्यप्यन्यतरयोः पराजय प्रसङ्गः । अतस्तूष्णींभावस्थल एव दोष इति वक्तव्यम् । तथा चानुक्त्यैव दोषे दार्ढ्यज्ञानम् । ततः स्थिरत्वेन ज्ञातेन दूषणेन पराजयानुमितिर्वक्तव्या । तथाऽनुक्तेः पूर्वपूर्वमुपस्थितत्वात्तस्या एव दोषत्वमुचितम् । यत्र च तद्दूषणाङ्गीकारस्तत्र संवाद एवेति द्वयमेव निग्रहस्थानं स्यादिति चेत् । उद्भावितस्य दोषस्य विप्रतिपन्नत्वे खल्वेतत् । यत्र तु प्रमाणविरोधोदयेन विप्रतिपन्ना मध्यस्थादिभिर्निश्चितास्तत्र तद्दोषैरेव पराजयानुमितिः । एवं व्यभिचारादौ विप्रतिपत्तिदशायां व्यभिचारादीनां स्थापनं क्रियते तदा नानुक्तेरवसरः । दोषोक्त्यनन्तरमपि तत्प्रकारगोचरोक्तेः सत्त्वात् । अतो विरोधादीनां दोषत्वं युक्तमेवेति ।

**श्रीनि.**— ॥ **अवसित इति** । समाप्त इत्यर्थः ।

**वि.**— विक्षेपलक्षणे केनचिद्व्याजेनेति विशेषणं जयपराजयाभ्यां कथाविच्छेदव्यावृत्त्यर्थमुक्तम् ॥ **एतत्त्रयमनुक्तिरेवेति** । एतदज्ञानादित्रयं वक्तव्यानुक्तिरूपाऽनुक्तिरेव । न ततोऽतिरिक्तनिग्रहस्थानमित्यर्थः ।

**(४२) प्र.प.— ॥ १८ ॥ मतानुज्ञा । इष्टापादनं मतानुज्ञा । यथा केनचित्स्वस्य चोरत्वमभ्युपेत्य त्वं चोरः पुरुषत्वादित्युक्ते तर्हि तवापि चोरत्वं प्रसज्येतेति । इयमसङ्गतिरेव ।**

**जना.**— ॥ **इष्टापादनमिति** । परस्येति शेषः । तदुक्तं वरदराजेन

**अनिष्टभ्रमतोऽन्येषामिष्टमापादयेद्यदि ।**
**मतानुज्ञेति तस्य स्यान्निग्रहस्थानमुद्भटम्** ॥ इति ।

अन्तर्भावयति ॥ **इयमिति** ॥ **असङ्गतिरेवेति** । तवापि चोरत्वं प्रसज्येतेत्यापादनस्यानाकाङ्क्षिताभिधानरूपत्वादिति भावः ।

**राघ.**—॥ **इयमसङ्गतिरेवेति** । तर्केऽनिष्टापादनस्य सङ्गतत्वेनेष्टापादनस्यानाकाङ्क्षितत्वादिति भावः।

**विज.**— ॥ **इष्टेति** । कथायामिति शेषः ॥ **इयमिति** । अनिष्टापादनस्यैवाकाङ्क्षितत्वात्तदभावेऽसङ्गतिरेव दोष इत्यर्थः ।

**वेदे.**— ॥ **इष्टापादनमिति** । कथायामित्युपस्कर्तव्यम् । अत्रानिष्टभ्रमत इति पूरणीयम् । तच्चेष्टस्यापादनासम्भवेनासम्भववारणाय तथा चोक्तमनिष्टभ्रमतोऽन्येषामिति ॥ **असङ्गतिरेवेति** । अनिष्टापादनस्यैव सङ्गतत्वादिति भावः ।

**अभि.**— ॥ **प्रसज्येत इति** । तं प्रत्यापादनमिति शेषः ॥ **इयमसङ्गतिरेवेति** । अनिष्टापादनस्यैव सङ्गतित्वादिति भावः ।

**आद.**— ॥ **इष्टापादनं मतानुज्ञेति द्वयं चासङ्गतिरेवेति** । इष्टापादनस्याजिज्ञासितोक्तित्वादिति भावः । उक्तदूषणस्यैव जिज्ञासितत्वात् । इष्टस्याजिज्ञासितत्वात् । अजिज्ञासितोक्तिरिति वा ॥ **असङ्गतिरेवेति** । अनिष्टोक्तेरेव जिज्ञासितत्वेनेष्टापत्तिरूपोक्तेरजिज्ञासितत्वात् । न चेष्टापत्तित्वेनापि पराजयहेतुताऽस्त्विति वाच्यम् । तथा सत्यप्रयोजकत्वात् । न हीष्टापत्तिकर्तृत्वं वाद्यादिनिष्ठविपर्ययादौ साक्षात्प्रयोजकम् । इष्टेऽप्यनिष्टत्वभ्रमो यदा वादिप्रतिवादिनोरस्ति तदा तादृशेष्टापादनकर्तुः पराजया-

दृष्टेः । प्रतिवादिन एव निवृत्तिदर्शनाच्च । न चेष्टत्वेन ज्ञातं यत्तदापादनकर्तृत्वमेव तथेति वाच्यम् । तादृशस्यापादनं कृत्वा पश्चात्तस्यानिष्टत्वं व्यवस्थापयितुः पराजयादर्शनात् । यथा वेदापौरुषेयत्वा-नङ्गीकारे धर्माद्यसिद्धिमापाद्य चार्वाकेणापत्तौ कृतायां तदनङ्गीकारस्यानिष्टत्वं व्यवस्थापयताम् । तथा च यत्काले यद्रूपावच्छिन्नं यस्य पुरुषस्य जिज्ञासितं तद्रूपावच्छिन्नत्वेन ज्ञातं तं प्रति बोधनीयं नान्यत्। अन्यथा वैय्यर्थ्यापत्तेः । तथा चेष्टापत्तिस्थले इष्टस्य तत्काले जिज्ञासितत्वेनाज्ञातत्वात्तदा पराजयहेतुत्वं वक्तव्यम् । अजिज्ञासितत्वं च जिज्ञासितत्वेनाज्ञातत्वमेवेति । अजिज्ञासितत्वेन ज्ञातोक्तिरसङ्गतिः । तस्या एव पराजयहेतुरिति । न चानिष्टत्वं नाम स्वपक्षविरोधित्वम् । तद्भिन्नत्व-मेवेष्टत्वं तदापत्तिकर्तृत्वमेव साक्षात्पराजयहेतुर्भवत्येव । अविरोधिनि विरोधित्वभ्रमं विना तदापादना-योगादिति वाच्यम् । तादृशभ्रमाभावेऽपि विरोधित्वमुत्पादयामीति स्वपाण्डित्याभिमानेन तदापादन सम्भवात् । यदा प्रतिवाद्यादीनां प्रतिवाद्युक्तपक्षे न दूषणे जिज्ञासा किन्तु वादिसाधनविषये। तद्दाढ्याय प्रमेयान्तराकाङ्क्षा । तदा प्रतिवाद्युक्तपक्षे दूषणं वक्तुरपि दोषदर्शनात् । तस्मादन्वय व्यति-रेकाभ्यामजिज्ञासितोक्तेरेव पराजयनिमित्तत्वम् । तस्मादिष्टापत्तेरसङ्गतत्वेनैव दोषत्वमिति ज्ञातव्यम् ।

**वि.—— ॥ इष्टापादनमिति ॥ इयमसङ्गतिरेवेति ।** इष्टापादनमिति वाद्युक्तदूषणस्यैवाकाङ्क्षि-तत्वादिष्टापादनस्यादूषणतयेष्टापादनरूपा मतानुज्ञाऽऽकाङ्क्षितत्वाभाव रूपाऽसङ्गतिरेवेति बोध्यम् ।

**(४३) प्र.प.—— ॥ १९ ॥ पर्यनुयोज्योपेक्षणम् । अवश्योद्भाव्यतया प्राप्तनिग्रहस्थानानुद्भावनं पर्यनुयोज्योपेक्षणम् । इदमप्यनुक्तान्तर्गतम् ।**

**जना.—— ॥ अवश्येति ।** तदुक्तं वरदराजेन । अवश्योद्भाव्यमापन्नकालं निग्रहमागतम् । अनुद्भावयतः पर्यनुयोज्योपेक्षणं भवेदिति ।

**राघ.—— ॥ अनुद्भावनमिति ।** अल्पत्वादिबुद्ध्येति भावः ।

**विज.—— ॥ अवश्येति ।** वादे न्यूनादेरनुद्भाव्यस्य प्राप्तस्यानुद्भावनेऽतिप्रसङ्गपरिहारायेदमिति । निग्रहस्थानस्यावश्यवक्तव्यत्वं लक्षणान्तर्भावमिति भावः ।

**वेदे.—— ॥ अवश्योद्भाव्येति ।** पर्यनुयोज्योपेक्षणव्यतिरिक्तनिग्रहप्राप्तौ तदनुद्भावनमेव निग्रहहेतुर्न तु पर्यनुयोज्योपेक्षणानुद्भावनमपि साम्यापादकत्वादिति परैरङ्गीकृतत्वेन पर्यनुयोज्योपेक्षणानुद्भावनस्यो-द्भावनयोग्यताभावेन तदनुद्भावनेऽतिव्याप्तिनिरासायोद्भाव्येत्युक्तम् । तथाऽप्यनेकदोषसम्पाते यदाधिक्यभयेनैकमेवोद्भाव्यते तदा तदितरानुद्भावनेऽतिव्याप्तिनिरासायावश्येति । तत्र चोद्भावितेतरेषा-मुद्भावनयोग्यतारूपोद्भाव्यत्वे सत्त्वेऽप्यन्यतमोद्भावनेनैव परपराजयस्य जातत्वान्न तावताऽ-

वश्योद्भाव्यत्वमिति भावः । वादे न्यूनादेरुद्भाव्यतया प्राप्तस्यानुद्भावनेऽतिप्रसङ्गपरिहारायेदमित्यप्याहुः। एवमपि झटितिसंवरणेन तिरोहितोद्भावनावसराणामपशब्दादीनामनुद्भावनेऽतिव्याप्तिपरिहाराय प्राप्तेति प्राप्तकालेत्यर्थः । न च तदुद्भावनायोग्यतैव नेति वाच्यम् । तत्र झटिति संवरणेनोद्भावनावसरस्याप-गमनोद्भावनविषयतावच्छेदकनिरर्थकत्वादिरूपयोग्यतानुगमात् । एवं चोक्तस्थले उद्भाव्यत्वसत्त्वेन तन्नियतप्राप्तेरवश्यम्भावेऽपि प्राप्तकालत्वाभावान्नातिव्याप्तेरिति ध्येयम् ।

**अभि.—** ॥ **अवश्योद्भाव्यतयेति** । अप्राप्तिनिग्रहस्थानानुद्भावनेऽतिप्रसङ्गवारणायोद्भाव्यतया प्राप्तेति विशेषणम् । निग्रहस्थानप्राप्तावाधिक्यभिया यत्रैकमुद्भाव्यमन्यं नोद्भाव्यमिति तत्रातिप्रसङ्ग-वारणायावश्येति ।

**आद.—** ॥ **इदमनुक्तावन्तर्गतमिति** । परचित्तवृत्त्युपेक्षणमनुक्त्यैव ज्ञेयमिति प्रथमोपस्थितत्वा-त्सैवोद्भावनीयेत्यर्थः ।

**वि.—** ॥ **अवश्योद्भाव्यतयेति** । अवश्यवक्तव्यतया प्राप्तनिग्रहस्थानानामवचनमित्यर्थः ॥ **इदमपीति** । इदं पर्यनुयोज्योपेक्षणम् । अवश्यवक्तव्यानुक्तिरूपाऽनुक्तावन्तर्भूतमित्यर्थः ।

**(४४) प्र.प.— ॥ २० ॥ निरनुयोज्यानुयोगः । अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं निरनुयोज्यानुयोगः । स चतुर्विधः । (१) छलम् (२) जातिः (३) हान्याद्याभासः (४) अप्राप्तकाले ग्रहणं चुति । (१) तत्र परोक्तस्य तदभिप्रेतार्थान्तरं परिकल्प्य तद्दूषणेन परोक्तभङ्गः छलम् । यथा गृष्टिविवक्षया गामानयेत्युक्ते पृथिवीविवक्षया गवानयनमशक्यमिति । एतदसङ्गतम् । विवक्षितदूषणस्यैवाकाङ्क्षितत्वात् । छलवाक्यस्याप्यर्थान्तरं परिकल्प्य गवानयनमित्यनन्वितमिति दूषणसम्भवेन स्वन्यायविरोधेऽप्यन्तर्भवति छलम् ।**

**जना.— ॥ २० ॥ अतन्निग्रहेति** । तन्निग्रहोद्भावनमात्रस्य सदुत्तरेऽपि सत्त्वेन तत्रातिव्याप्ति-वारणायातन्निग्रहप्राप्ताविति । तदुक्तं वरदराजेन-

**अतन्निग्रहसम्प्राप्तौ तन्निग्रहनिमित्ततः ।**
**निगृण्हतो निग्रहः स्यादचोद्यस्यानुयोगत ॥ इति ।**

निरनुयोज्यानुयोगस्यान्तर्भावं वक्तुं तं विभजते ॥ **स इति** । (१) गृष्टिविवक्षया धेनुविवक्षया ॥ **गामानयेत्युक्त इति** । केनचिद्वादिनेति शेषः ॥ **पृथिवीविवक्षयेति** । गोशब्दस्य धेनुपृथिव्योरुभयोरपि

शक्तत्वादिति भावः ॥ **अशक्यमिति** । अन्येन प्रतिवादिना परोक्तभङ्ग इति शेषः । अन्तर्भावमाह ॥ **एतदिति** ॥ **छलवाक्यस्येति** । गवानयनमशक्यमिति वाक्यस्येत्यर्थः ॥ **अर्थान्तरमिति** । गवेति तृतीयान्तं नयनमिति च पदद्वयं विभज्य नेत्ररूपमर्थान्तरं परिकल्प्येत्यर्थः ।

**राघ.**— ॥ २० ॥ **अतन्निग्रहेति** । यो निग्रहो यन्निग्रहस्थानमुद्भाव्यते तस्याप्राप्तावपि तस्योद्भावनं निरनुयोज्यानुयोग इत्यर्थः । निग्रहशब्दोऽत्र निगृह्यते पराजीयतेऽनेनेति निग्रहस्थानपरः । (१) ॥ **गृष्टीति** । "एकवारप्रसूता गौर्गृष्टिरित्यभिधीयत" इत्युक्तेः सकृत्प्रसूता गौर्गृष्टिः । छलोत्तर-वादिना वादिवाक्यस्य तदनभिप्रेतार्थान्तरं परिकल्प्य यथा दूष्यते तथा छलवादिवाक्यस्यापि तदनभि-प्रेतार्थान्तरं परिकल्प्य दूषयितुं शक्यत इति प्रागुक्तस्वन्यायविरोधरूपतृतीयजातावन्तर्भवति छलोत्तर-मित्याह ॥ **छलवाक्यस्यापीति** । षष्ठीतत्पुरुषाश्रयेण गवानयनमशक्यमित्युक्तछलवाक्येऽपि गवेति तृतीयान्तं नयनमिति चक्षुर्वाचकमित्यर्थमुपेत्यानन्वितमेतत्पदकदम्बकमिति दूषणसम्भवादिति भावः ।

**विज.**— ॥ २० ॥ **हान्यादीति** । अनापतितनिग्रहायोग इत्यर्थः ॥ **अप्राप्तेति** । अनवसरो निग्रहस्थानोद्भावनमित्यर्थः । (१) ॥ **तत्रेति** । कल्पितदूष्यं दूषणं छलमित्यर्थः । एतस्यासङ्गतौ स्वन्यायविरोधरूपस्ववचनविरोधे चान्तर्भावमुपपादयति ॥ **एतदिति** ।

**वेदे.**— ॥ २० ॥ **अतन्निग्रहेति** । सर्वथा निग्रहस्थानाप्राप्तौ निग्रहस्थानान्तरप्राप्तावप्युद्भाव्य-माननिग्रहस्थानाप्राप्तौ चेत्यर्थः । (१) एकवारप्रसूता गौर्गृष्टिः । छलमसङ्गतमिति मूलानुसारेणाह ॥ **एतदसङ्गतमिति** । अन्यच्चेति मूलमनुसृत्याह ॥ **छलवाक्यस्यापीति** ।

**अभि.**— ॥ २० ॥ **अतन्निग्रहप्राप्ताविति** । अत्र निग्रहपदेन निग्रहस्थानमुच्यते । स चासौ निग्रहस्तन्निग्रहप्राप्तिर्न तन्निग्रहप्राप्तिरतन्निग्रहप्राप्तिरिति विग्रहः । उद्भाव्यमाननिग्रहस्थानाप्राप्तौ तन्निग्रहस्थानोद्भावनं निरनुयोज्यानुयोग इत्यर्थः । तन्निग्रहाप्राप्तिश्च सर्वथा वोद्भावनकाले वा विवक्षितेति न काप्यतिव्याप्तिरिति बोध्यम् ॥ **स चतुर्विध इति** । ननु निरनुयोज्यानुयोगो हान्याद्याभास एव । अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं निरनुयोज्यानुयोगः । प्रतिज्ञाहान्याद्यप्राप्तावपि भ्रान्त्यादिना तदुद्भावनं हान्याद्याभास इति लक्षणसाम्यात् । ततश्च निरनुयोज्यानुयोगस्त्रिविध इति वक्तव्य इति चेत् । सत्यम् । निरनुयोज्यानुयोगत्वं हान्याद्याभासत्वं च समनियतम् । तथाऽपि हान्याद्याभासत्वं छलजात्यप्राप्तग्रहणासङ्कीर्णोऽपि ध्येयम्\। सद्भाववद्भवति विभाजकोपाधिः । (१) ॥ **गृष्टिविवक्ष-येति** । परोक्तमात्रं खण्डयामीति वदन्तं प्रति सभ्यसभापतिभिर्मिलित्वा दैवात्स्वप्रयोजनाया

केनचिद्गामानयेत्युक्तं वाक्यं खण्डयेति समयबन्धे कृते यदाऽयं दूषयति तदेदमुदाहरणं बोध्यम् । एतेन समयबन्धानन्तरं गामानयेति प्रयोगे निमित्ताभावेन प्रयोगाभावात्कथञ्चित्प्रयोगे वा तद्-दूषणस्यासङ्गतत्वाच्छलोदाहरणत्वेनैतदभिधानमयुक्तमिति परास्तम् । एकवारं प्रसूता गौर्गृष्टि-स्तद्विवक्षया गामानयेत्युक्ते पृथिवीविक्षामारोप्य गवानयनमशक्यमिति वाचोभङ्ग्या प्रमाणविरोधरूपं निग्रहस्थानमाहेत्यर्थः ॥ **एतदसङ्गतमिति** । एवं वादिनोऽसङ्गतिरूपदूषणेनैव दूषयितुं शक्यत्वेन छलमिति दूषणान्तरं न कल्पनीयमिति भावः ॥ **छलवाक्यस्यापीति** । न केवलं छलवाक्यमसङ्गत्या दूषणीयमपि तु स्वन्यायविरोदेऽन्तर्भवति स्वरीतिविरुद्धत्वेनापि दूषयितुं शक्यमित्यर्थः । तत्कथमित्यत उक्तम् ॥ **छलवाक्यस्यापीति** । इदमुक्तं भवति । छलवादिनस्तवदनभिप्रेतदूषणेनापि पराजयोऽभि-मतः । अभिप्रायान्तरं कल्पयित्वा दूषितत्वात् । एवं च स्वरीत्यैव स्वस्य पराजयो भवति । गवानय-नमशक्यमिति तद्वाक्यस्यापि गवेति तृतीयान्तस्य नयनमशक्यमित्यनेनान्वयानुपपत्तिरिति दूषण-सम्भवात् । अयमेव हि स्वन्यायविरोधः । यत्स्वाभ्युपगतप्रकारप्रतिबन्धा स्वाभ्युपगतप्रमेयभङ्गः ।

**आद.**— ॥ **विवक्षितदूषणस्यैवेति** । न च वाक्यात्प्रतीयमानार्थखण्डनमात्रेण तत्पराजयः । अन्यथा तत्तात्पर्यविषयीभूतार्थखण्डनेऽपि पराजयो न स्यात् । वादिना ममात्रार्थे तात्पर्यं नास्तीति वक्तुं शक्यत्वात् । तथा च वादिना नानार्थकवाक्यप्रयोगे कृते तस्योत्तराभावप्रसङ्ग इति वाच्यम् । प्रकरणादिज्ञापकसत्त्वे तद्विषयीभूतार्थस्यैव खण्डनीयत्वात् । तदभावे विकल्पमुखेन दोषस्य वक्तव्य-त्वात् । तात्पर्यविषयीभूतार्थादन्यार्थदूषकत्वं न पराजयहेतुः । विकल्पमुखेन दूषणं वक्तुः पराजयादृष्टे-र्विकल्पमकृत्वाऽपि हेतुविशेषणेऽपि वादिवाक्यात्प्रतीतार्थ सामान्यस्यादूष्यत्वमिति समयबन्धस्थले दूषयितुः पराजयादृष्टेः। तादृशसमयबन्धाभावेऽपि यदा मध्यस्थेनैवान्तरं प्रतीत्य तत्पक्षे दोषो नास्ती-त्युक्तौ तत्पक्षं दूषयतः पराजयप्रसङ्गः । तस्मादजिज्ञासितोक्तिरूपासङ्गतिरेवेति सुष्ठूक्तमिति बोध्यम् ।

**श्रीनि.**— (१) ॥ **गवानयनमिति** । भावे तृतीयान्तं पदम् । नयनं नेत्रम् । अतो नान्वय इत्यर्थः ॥ **स्वन्यायविरोधेऽपीति** । तद्वाक्यन्यायेन तद्वाक्यविरोधो हि स्वन्यायविरोधः । पराभि-प्रेतादर्थान्तरं परिकल्प्यमानेन परोक्तदूषणं च तद्वाक्यन्यायस्तेन गवानयनमिति तद्वाक्यस्य विरोधा-दिति भावः ।

**वि.**— ॥ **अतन्निग्रहप्राप्ताविति** । अस्योद्भाव्यमानस्य निगृह्यतेऽनेनेति व्युत्पत्त्या निग्रह-स्थानस्याप्राप्तौ तस्य निग्रहस्थानस्योद्भावनमनभिधानमित्यर्थः । निरनुयोज्यानुयोगस्य सर्वत्रैक-त्रान्तर्भावाभावात्तस्यानेकेष्वन्तर्भावकथनाय तल्लक्षणं कथयति ॥ **तत्रेति** । उक्तप्रकारचतुष्टये परोक्त-

वाक्यस्य पराभिप्रायविषयादर्थान्तरं परिकल्प्य तस्य दूषणेन परोक्तस्य भङ्गो निराकरणं छलमित्यर्थः । पराभिप्रेतार्थदूषणेन पराभिहितवाक्यभङ्गस्य तद्दूषणाय छलत्ववारणाय तदभिप्रेतार्थान्तरं परिकल्प्येत्युक्तम् ॥ १ ॥ **गृष्टिविवक्षयेति** । एकवारप्रसूतगोविवक्षयेत्यर्थः ॥ **विवक्षितदूषणस्यैवेति** । अभिप्रेतार्थदूषणस्यैवेत्यर्थः । छलस्य तृतीयजातावन्तर्भावमाह ॥ **छलवाक्यस्यापीति** । पृथिवीविवक्षयोक्तस्य गवानयनं न शक्यमिति छलवाक्यस्याप्यर्थान्तरं छलवाद्यभिप्रेतार्थान्तरं जलानयनरूपार्थान्तरं परिकल्प्य गवानयनं न शक्यमिति लक्षणवाक्यमनन्वितमसम्बद्धमयुक्तमिति दूषणसम्भवेन स्वन्यायविरोधेऽपि छलमन्तर्भवतीत्यर्थः । यद्वा गवानयनमशक्यं न वाच्यमित्यनन्वितमसम्बद्धमिति दूषणसम्भवेनेत्यर्थः ।

## जातयः

**(४९) प्र.प.— ॥ २० ॥ (२) जातिः । सिद्धमपि दूषणासमर्थमुत्तरं जातिः । असामर्थ्यं च द्विविधम् । साधारणमसाधारणं च । तत्र साधारणं स्वव्याहतिः । असाधारणं तु युक्ताङ्गहीनत्वमयुक्ताङ्गाधिकत्वमविषयवृत्तित्वं चेति । सा च साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्य विशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमभेदाच्चतुर्विंशतिधा । तत्र वादिना स्थापनाय हेतौ प्रयुक्तेऽनभ्युपेतयुक्ताङ्गेन प्रतिपक्षोद्भावनं प्रतिधर्मसमाजातिः । सा च प्रत्यक्षाभासादिभेदेन बहुविधा ।**

**(४९) जाना.— ॥ सिद्धमपीति** । तदुक्तं वरदराजेन ।

**प्रयुक्ते स्थापनाहेतौ दूषणाशक्तमुत्तरम् ।**
**जातिमाहुरथान्ये तु स्वव्याघातकमुत्तरम् ॥ इति ।**

सिद्धमपि वक्तुर्विवक्षितार्थानुसारेण प्रवृत्तमपीत्यर्थः । इदं छलेऽतिव्याप्तिवारणाय । दूषणासमर्थमिति सदुत्तरेऽतिव्याप्तिवारणाय । विषयव्याप्त्यर्थमसामर्थ्यं विभजते ॥ **असामर्थ्यं चेति ॥ साधारणमिति** । जातीनामिति शेषः । असाधारणमित्यत्र स्वन्यायविरोधस्येति शेषः । युक्ताङ्गहीनत्वं युक्तानि व्याप्त्याद्यङ्गानि तद्राहित्यमित्यर्थः । अयुक्ताङ्गानि सिद्धार्थत्वादीनि । तैरधिकत्वमित्यर्थः । विभजते ॥ **सा चेति** । द्वन्द्वान्ते श्रूयमाणः समशब्दः प्रत्येकमभिसम्बध्यते । जात्युत्तराभिधात्रोर्वादिप्रतिवादिनोः साम्यापादकत्वात्सर्वत्र समशब्दप्रयोगः । यद्यपि जातिलक्षणगतोत्तरपदापेक्षया निर्देशश्चेत्समशब्दस्य नपुंसकलिङ्गतैवोचिता । जातिशब्दापेक्षया निर्देशश्चेत्स्त्रीलिङ्गता स्यात् । तथाऽपि

स्वपक्षसाधनपरपक्षदूषणाभ्यां विभागेन प्रत्यवस्थाने प्रतिषेधभागेन जातित्वमिति सूचयितुं प्रतिषेधशब्दापेक्षया पुल्लिङ्गनिर्देश इति वरदराजीयटीकायां हरिदीक्षितेनोक्तम् ॥ **चतुर्विंशतिधेति** । इदं चतुर्विंशतित्वकथनं प्रतिधर्मसमजात्यवान्तरभेदसाहित्यविवक्षया द्रष्टव्यम् । तदविवक्षया तु प्रतिधर्मसमजात्या सार्धं त्रयोविंशतित्वमेवेति द्रष्टव्यम् । अत एव प्रमाणलक्षणटीकायां ताश्च प्रतिधर्मोत्कर्षापकर्षेत्यादिना त्रयोविंशतिधेत्येव विभक्तम् । तदुक्तं वरदराजेन ।

**साधर्म्यवैधर्म्यसमौ तद्भेदावेव सूचितौ ।**
**अवान्तरभिदाः सन्ति सर्वत्रेति प्रसिद्धय ॥** इति ।

अत एव साधर्म्यवैधर्म्यसमयोः प्रतिधर्मसमजात्यवान्तरभेदत्वख्यापनायोभयसाधारण्यायानुद्दिष्टाया अपि तस्या लक्षणमाह ॥ **तत्रेति** । उद्दिष्टजातीनां मध्य इत्यर्थः ॥ **अनभ्युपेतयुक्ताङ्गेनेति** । अनङ्गीकृतोचिताङ्गवतेत्यर्थः । उचिताङ्गानि व्याप्त्यादीनि । प्रतिप्रमाणेन विरोधिप्रमाणेनेत्यर्थः । अत्रानभ्युपेतयुक्ताङ्गेनेति विशेषणेन वस्तुत उचिताङ्गाभावेऽप्यभ्युपेतयुक्ताङ्गवतः सदुत्तरप्रकरणसमस्य व्यवच्छेदः । वक्ष्यमाणप्रकरणसमजाति व्यवच्छेदायोक्तं प्रतिपक्षेति । तत्र बाधेन प्रत्यवस्थानस्य वक्ष्यमाणत्वान्नातिव्याप्तिः । साधर्म्यवैधर्म्यसमयोः प्रतिधर्म प्रभेदत्वं वक्तुं तां विभजते ॥ **सा चेति** ॥ **प्रत्यक्षाभासादिभेदेनेति** । तेन यत्प्रत्यवस्थानं तद्भेदेनेत्यर्थः ।

**राघ.**— स्वोक्तेष्वन्तर्भावयितुं जातिसामान्यलक्षणतद्विभागादीनाह ॥ **सिद्धमपीति** । छलव्यावृत्त्यर्थं सिद्धमपीति विशेषणम् । जातिवादिना हि महानससाधर्म्याद् धूमवत्त्वाद्गिरिरग्निमांश्चेत्तर्हि ह्रदसाधर्म्याद्द्रव्यत्वादनग्निकोऽपि स्यात् । तथा च धूमवत्त्वहेतुरसाधकः । सत्प्रतिपक्षत्वादित्युक्तो हेतुः सिद्धः छलवादिना गामानयेति वादिवाक्यं नाभिमतार्थसाधकम् । अशक्यार्थबोधकत्वादित्युक्तो हेतुर्वाद्यनभिमतार्थकल्पनालब्धत्वादसिद्धः । अतोऽनेन तद्व्यावृत्तिः । अन्यविशेषणं तु सदुत्तरव्युदासाय ॥ **साधारणमिति** । यावन्तो जात्यवान्तरभेदास्तावत्सर्वानुगतमित्यर्थः । असाधारणमेकैकमात्र निष्ठमित्यर्थः । तद्विभज्याह ॥ **असाधारणं त्विति** । सामर्थ्यमित्यनुषङ्गः । सदुत्तरे यद्योग्यमङ्गं व्याप्त्यादि तद्राहित्यमयोग्याङ्गाधिक्यमनुचितविषयवृत्तित्वमिति त्रिविधमिति शेषः ॥ **सा चेति** । जातिरित्यर्थः । न तु जातित्वम् । समशब्दस्य प्रत्येकं साधर्म्यसमवैधर्म्यसम इत्यादिरूपेणान्वयः । न्यूयसूत्रे प्रतिधर्मसमेति पठितव्यम् । साधर्म्यवैधर्म्येति प्रतिधर्मसमावान्तरभेदनिर्देशेन पाठो जात्यन्तरेऽप्यवान्तरभेदोऽस्तीति ज्ञापनायेत्युक्त्वा तत्रैव प्रतिधर्मसमं लक्षयित्वा तद्विभागस्य तदभियुक्तैर्दर्शितत्वात् । तदनुरोधेन लक्षणविभागाद्याह ॥ **तत्रेत्यादिना** । तेषु मध्य इत्यर्थः ।

तदुत्तरव्युदासायानभ्युपेतयुक्ताङ्गेनेत्युक्तिः । बाधोद्भावनरूप प्रकरणसमजातिनिरासाय प्रतिपक्षोद्भावन-मित्युक्तिः । अनभ्युपेतयुक्ताङ्गेनेत्यस्य विवरणेनानुवादो व्याप्तिहीनेनेति ।

**विज.——** ॥ **सिद्धमपीति** । अकल्पितदूष्यमित्यर्थः । तेन छलनिरासः । दूषणासमर्थमित्यनेन सदुत्तरनिरासः । असामर्थ्यमसदुत्तरत्वप्रयोजकम् । युक्ताङ्गतव्याप्त्यादिराहित्यमयुक्ताङ्गसाध्यप्राप्त्यादि । अविषयोऽन्यव्यभिचाराद्यधीनासाधकत्वस्य सद्धेतुस्तद्वृत्तित्वम् । तदेतज्जातिशेषे ऊह्यम् । जातिभेदमाह ॥ **सेति** । साधर्म्यवैधर्म्यसमयोः प्रतिधर्मसमाभेदत्वेऽपि जातीनामवान्तरसूचनाय प्रत्येकमुक्तिः । प्रतिधर्मसमां लक्षयति ॥ **तत्रेति** । उद्दिष्टास्वित्यर्थः । प्रकरणसमव्युदासायानभ्युपगमेति । तत्र व्याप्त्याद्यभिमानोऽस्तीति तद्व्यावृत्तिः ॥ **सा चेति** । प्रत्यक्षाभासादिना प्रतिरोधेनेत्यर्थः ।

**वेदे.——** ॥ **सिद्धमपीति** । पक्षधर्मत्वोपेतमित्यर्थः । तेन छलव्यावृत्तिः । छलवादिविवक्षित-हेतोरसिद्धत्वात् । तथा हि । आढ्योऽयं नवकम्बलवत्त्वादिति प्रयुक्ते कुतोऽस्य नवकम्बल इति वदतश्छलवादिनो नेदं साध्यसाधकमसिद्धत्वादिति हि विवक्षितम् । तत्रासिद्धत्वादिति हेतोर्व्याप्तौ सत्यामपि पक्षभूते वादिहेतावसिद्धिः । अविवक्षितस्यैव सङ्ख्याविशेषस्य हेतुवाक्यार्थत्वेन कल्पनात् । जातिवाद्यभिमतहेतौ च व्याप्त्यभावेऽपि पक्षधर्मत्वमस्ति । वादिना हेतौ प्रयुक्ते नेदं साध्यसाधकं युक्ताङ्गानपेक्षप्रतिप्रमाणविरुद्धत्वादिजातिवादिहेतोर्वादिसाधननिष्ठत्वात् । अतो नासम्भव इत्यकल्पित-दूषणमित्यर्थः। तेन छलनिरास इत्यन्ये ॥ **असामर्थ्यमिति** । उत्तरस्येति शेषः । साधारणं सर्वजात्यनु-गतम् । असाधारणं न सर्वजात्यनुगतम् । युक्ताङ्गं व्याप्त्यादि । अयुक्ताङ्गं व्यभिचारादि ॥ **अविषय-वृत्तित्वमिति** । अनुचितस्थलसञ्चाराभ्युपगम इत्यर्थः । एतच्चोत्तरत्रोदाहरणप्रदर्शनावसर एव स्फुटं भविष्यति । जातिविभागमाह ॥ **सा चेति** । द्वन्द्वान्ते निर्दिष्टः समशब्दः प्रत्येकमभिसम्बध्यते । यद्यपि साधर्म्यवैधर्म्यसमौ प्रतिधर्मसमावान्तररूपभेदौ । अतः प्रतिधर्मसमैव जातिरत्रोद्देशमर्हति । तथाऽपि सर्वजातीनामवान्तरभेदवत्त्वसूचनाय प्रतिधर्मसमोद्देश एवात्र तदवान्तरभेदरूपसाधर्म्य-वैधर्म्यसमोद्देशमुखेन तात्पर्यतो विवक्षित इति द्रष्टव्यम् । अत एव प्रतिधर्मसममेव लक्षयति ॥ **तत्रेत्यादिना** । तत्रोद्दिष्यास्वित्यर्थः । निराश्रयस्य प्रतिपक्षोद्भावनस्यासम्भवपरिहाराय वादिना स्थापनाहेतौ प्रयुक्त इत्युक्तम् । सदुत्तरप्रकरणसमव्यवच्छेदायानभ्युपेतयुक्ताङ्गेनेत्युक्तम् । तत्रावश्या-भ्युपगन्तव्यानां तत्तत्प्रमाणाङ्गानां वास्तवसत्त्वाभावेऽप्याभिमानिकं तदस्ति । अत्र त्वाभिमानिकमपि तत्सत्त्वं नेति भावः । प्रत्यक्षादिनाऽपि प्रतिपक्षचोदनसङ्ग्रहाय सामान्यतः प्रमाणेनेत्युक्तम् । प्रमाण-त्वेनाभिमतेनेत्यर्थः । अयुक्ताङ्गहीनस्य वास्तवप्रामाण्यासम्भवात् । प्रकरणसमजातिव्यवच्छेदाय

प्रतिपक्षेत्युपात्तम् । तत्र बाधोद्भावनस्य वक्ष्यमाणत्वात् । ननु साधर्म्यवैधर्म्यसमयोः स्वतन्त्रजातितैव किं न स्यात् । किं पूर्वं मुखतोऽनुद्दिष्टप्रतिधर्मसमावान्तरभेदरूपताङ्गीकारेणेत्यत आह ॥ **सा चेति** ॥ **प्रत्यक्षाभासादिभेदेनेति** । प्रत्यक्षाभासादिना प्रतिपक्षोद्भावनभेदेनेत्यर्थः । इदमुक्तं भवति । यदि साधर्म्यवैधर्म्यसमयोः प्रतिधर्मसमावान्तरभेदरूपता न स्यात्तदाऽनङ्गीकृतयुक्ताङ्गेन प्रत्यक्षशब्दाभासादिना प्रतिपक्षचोदनस्य जात्यन्तरानन्तर्भावात्पृथग्जातित्वं स्यादतोऽस्य सङ्ग्रहाय प्रतिधर्मसमैव स्वतन्त्रजातिः साधर्म्यसमादिकं तु तदवान्तरभेद इत्येवोचितमिति ।

**अभि.—** ॥ **सिद्धमपीति** । सिद्धस्यापि दूषणासमर्थस्य दूषणतया प्रतिवचनं जातिरित्यर्थः । दूषणासमर्थस्याभिधानं तु छलवाक्येऽपि गतम् । अतः सिद्धस्येत्युक्तम् । छलवाक्योक्तदूषणस्याप्यसिद्धत्वात्तद्व्युदासो भवति । सिद्धस्योत्तरत्वं त्वनैकान्त्यादिप्रतिवचनेऽप्राप्तकाले च गतम् । अतो दूषणासमर्थस्येत्युक्तम् । प्रतिवचनविशेषणं तु पर्वतोऽग्निमान्प्रमेयत्वादिति वादिवचनेऽतिव्याप्तिवारणायाप्राप्तकाले ग्रहणस्य दूषणसमर्थत्वेन दूषणासमर्थत्वाभावात् । न तत्रातिव्याप्तिः॥ **असामर्थ्यमिति** । उत्तरस्येति शेषः ॥ **युक्ताङ्गहीनत्वमिति** । साधर्म्यवैधर्म्यमात्रं प्रयोजकं किं व्याप्त्यादिनेति व्याप्त्यादियुक्ताङ्गानङ्गीकार इत्यर्थः ॥ **अयुक्ताङ्गाधिकत्वमिति** । पक्षवद्दृष्टान्तस्याप्यसिद्धार्थसाधनत्वं विवक्षितमित्ययुक्त एवाङ्गस्वीकार इत्यर्थः । एतेनायुक्तं चेन्नाङ्गमङ्गं चेन्नायुक्तमित्ययुक्ताङ्गादिकत्वमिति रिक्तं वच इति परास्तम् ॥ **अविषयवृत्तित्वं चेति** । अविषये हेत्वधिकरणत्वायोग्ये हेतुसत्त्वस्यावश्याभ्युपगम इत्यर्थः । तद्यथा पर्वतस्योत्पत्तेः प्राग्घेतुसत्त्वस्यावश्यकत्वमभ्युपगम्य तदभावेन भागासिद्ध्युद्भावनमित्यादि ।

**आद.—** जातिलक्षणमाह ॥ **सिद्धमपीति** । यद्यपि जातेर्दूषणासमर्थोत्तरत्वरूपजातित्वे पराजयलिङ्गत्वं सम्भवति । तथाऽपि येन व्याहत्यादिना तदुक्तदूषणाभिमतस्य दूषणासामर्थ्यं ज्ञायते तस्यैव प्रथमोपस्थितस्य तल्लिङ्गत्वं सम्भवतीति तदेव निग्रहस्थानं न जातिः । तच्च ज्ञापकं क्वचिद्व्याहतिः क्वचिदव्याप्त्यादिकमिति न पृथक्त्वमिति ज्ञापयितुं परनिरूपितजातिं सप्रपञ्चमाह ॥ **असामर्थ्यं चेत्यादिना** । जातेः सप्ताङ्गानि । सिद्धत्वं व्याहतिर्युक्ताङ्गहीनत्वमयुक्ताङ्गाधिक्य मविषयवृत्तित्वमुत्थानबीजं दोषरूपफलं चेति तत्र तत्र प्रदर्शयिष्यामः । सर्वत्र जातौ सप्तभिर्भाव्यमिति न नियमः । अविषयवृत्तत्वादिकमौत्सर्गिकमुत्थानबीजं फलं व्याहतिरुत्थाङ्गहीनत्वं सिद्धत्वं च शिष्टं तु काचित्कमिति । अत्र तु साधर्म्यवैधर्म्यसमयोः साहचर्यमात्रस्याङ्गत्वकल्पनेनायुक्ताङ्गाधिक्यं व्याप्तिहीनत्वाद्युक्ताङ्गराहित्यम् । वह्न्यभावसाधने बाधितविषयत्वादावविषयवृत्तित्वम् । द्रव्यत्वादिहेतोः पक्षे

सिद्धत्वासिद्धत्वम् । युक्ताङ्गहीन प्रतिप्रमाणोपालम्भः । उत्थानबीजं सत्प्रतिपक्षारोपः । फलं द्रव्यत्वादिः । सत्प्रतिपक्षत्वेनाभिमतो हेतुर्न साध्याभावसाधकः । द्रव्यत्वादिति प्रयोगसम्भवात् । धूमवत्त्वं न वह्निसाधकं सत्प्रतिपक्षितत्वादिति हेतुर्जातिवादिनोऽभिमतः । स न स्वसाधकः पदार्थत्वात् सम्मतवदिति प्रमाणविरोधः । अङ्गत्वेनाभिमतस्य सहचरितस्य पदार्थत्वे सत्त्वाद्व्याप्त्यादेरुभयत्राप्यभावात्स्वन्यायविरोध इत्यर्थः । एवमेवोत्तरत्रापि द्रष्टव्यम् । प्रमाणलक्षणटीकायामुक्तत्वादत्र नोच्यते । यत्र च स्पष्टमनुक्तिस्तत्रोच्यते ।

**वि.—** जातिलक्षणमाह ॥ **सिद्धमपीति ।** पक्षे विद्यमानमपि दूषणाशक्तमुत्तरं जातिरित्यर्थः । छलोत्तरव्यवच्छेदाय सिद्धमपीत्युक्तम् । आढ्योऽयं नवकम्बलवत्त्वादिति केनचिदुक्ते नवशब्दस्य सङ्ख्याविशेषपरत्वं परिकल्प्य कुतोऽस्य नवकम्बलाः प्रत्यक्षविरोधादिति छलवादी दूषयति । तस्य हि नेदं साध्यासाधकमसिद्धत्वादिति विवक्षितम् । तत्रासिद्धत्वादिति छलोत्तरात्मको हेतुर्वादिहेतौ नवकम्बलवत्त्वे पक्षेऽसिद्ध एव । तथा च सिद्धमिति विशेषणेन तद्व्यावच्छेदो भवतीत्यनुसन्धेयम् । सदुत्तरहेत्वाभासव्यवच्छेदार्थं दूषणसमर्थमिति विशेषणम् । दूषणासमर्थमुत्तरं जातिरित्युक्तम् । तत्रासामर्थ्यं किमिति जिज्ञासायां विभागकथनपूर्वकं तत्स्वरूपं निरूपयति ॥ **असामर्थ्यं चेति ।** साधारणं सकलजात्यनुगतमित्यर्थः । असाधारणं तत्तन्मात्रवृत्तीत्यर्थः । स्वव्याहतिः स्वव्याघातः । स्ववचनविरोध इति यावत् ॥ **असाधारणं त्विति ।** त्रिविधमिति शेषः । युक्ताङ्गहीनत्वं युक्ताङ्गरहितत्वमित्यर्थः । अयुक्ताङ्गाधिकत्वमयुक्तमनुपयुक्तमङ्गमुपकारकमधिकं यस्य तत्तथा तस्य भावस्तत्वम् । अनुपयुक्ताङ्गोपेतत्वमिति यावत् । अविषयवृत्तित्वमविषयेष्वयोग्यार्थेषु वर्तमानत्वमित्यर्थः । परोदीरितजातीनां स्वोक्तजातित्रयान्तर्भावकथनाय परोदीरितजातिविभागमाह ॥ **सा चेति ।** द्वन्द्वान्ते श्रूयमाणः समशब्दः प्रत्येकमभिसम्बध्यते । निग्रहस्थानं यथा बहुविधमेवं जातिरपि साधर्म्यसमादिभेदेन चतुर्विंशतिप्रकारेत्यर्थः । साधर्म्यवैधर्म्यसमौ प्रतिधर्मसमजातिभेदावेव न तूत्कर्षसमादिवत्प्रधानजाती इति ज्ञापयितुं प्रतिधर्मसमजातिं लक्षयति ॥ **तत्रेति ।** प्रधानजातिष्वित्यर्थः । वादिना स्थापनाहेतोरेप्रयुक्ते स्वपक्षसाधनार्थलिङ्गेऽभिहिते तस्यानभ्युपेतयुक्ताङ्गेनानङ्गीकृतामुपयुक्तां यस्य तत्तथा तेन प्रतिप्रमाणेन विरोधप्रमाणेन प्रतिपक्षोद्भावनमिति विशेषणम् । अङ्गीकृतानधिकबलेन प्रतिप्रमाणेन बाधोद्भावनरूपत्वात्प्रकरणसमजातेरनेन व्यवच्छेदः । वादिना स्थापनाहेतौ प्रयुक्त इत्येतत्प्रतिप्रमाणेन प्रतिपक्षोद्भावनप्रसक्तार्थमुपात्तं तत्तु लक्षणशरीरप्रवेशाभिप्रायेण । साधर्म्यवैधर्म्यसमयोरेतज्जातिप्रभेदत्वकथनाय तद्विभागमाह ॥ **सा चेति ।** उक्ताङ्गहीनं प्रतिप्रमाणं प्रत्यक्षाभासानुमानाभासादिभेदेन चतुर्विधम् । तथा च प्रत्यक्षाभासानुमानाभासादीनां चतुर्विधत्वेन निमित्तेन प्रत्यक्षाभासादिना प्रतिप्रमाणेन प्रतिपक्षोद्भावनरूपा सा च प्रतिधर्मसमजातिश्च बहुविधा चतुर्विधेत्यर्थः ।

**(४६) प्र.प.— ॥ २० ॥ (२) (१) साधर्म्यसमः । तत्र व्याप्तिहीनेनानुमानेन यत्प्रतिपक्षचोदनं तद् द्विविधम् । साधर्म्येण वैधर्म्येण च । तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः प्रतिषेधः । यथा यदि महानससाधर्म्याद्धूमवत्त्वादग्निमान्पर्वत इष्यते तर्हि ह्रदसाधर्म्याद् द्रव्यत्वादनग्निरपि किं नेष्यत इति ।**

**जना.—** नन्वत्र साधर्म्यासमादिशब्दानां जातिपरत्वात्कथं पुल्लिङ्गत्वमित्याशङ्क्य प्रतिषेधपदं विशेष्यमध्याहृत्य तदपेक्षया पुल्लिङ्गत्वमिति प्राग्घृदि निहितमधुनोद्धोषयति ॥ **साधर्म्यसमः प्रतिषेध इति** । तमुदाहृत्य दर्शयति ॥ **यथेत्यादिनाऽनग्निः किं नेष्यत इत्यन्तेन** । अत्राजातिनिरूपणसमाप्ति यथेत्यादि तत्तज्ज्ञात्युदाहरणात्प्राग्वादिना स्थापनाहेतौ प्रत्युक्तमिति प्रायेणानुवर्तते ।

**राघ.—** जातेर्विशेष्यत्वेन साधर्म्यसमेति वाच्ये कथं पुल्लिङ्गप्रयोग इत्यत उक्तम् ॥ **प्रतिषेध इति** । जातिपर्यायः प्रतिषेधशब्दः । साधर्म्यसमरूपः परहेतुप्रतिषेध इत्यर्थः । इतीतिपदस्य तथा च त्वदीयं धूमवत्त्वानुमानमसाधकं द्रव्यत्वेन सत्प्रतिपक्षत्वादिति शेषपूरणं कृत्वेति प्रतिषेध इति पूर्वेणान्वयो बोध्यः ।

**अभि.—** ननु साधर्म्यवैधर्म्येति परिगणनमयुक्तम् । प्रतिधर्मसमजातेः परित्यागादित्यतः साधर्म्य वैधर्म्ययोस्तदवान्तरत्वादनयोः सङ्ग्रहेण तत्सङ्ग्रहः कृतप्राय इति तल्लक्षणाभिधानपूर्वकमनयोस्तदेकदेशत्वमाह ॥ **तत्रेत्यादिना** । इदं रजतं न भवति कालात्ययापदिष्टत्वादित्यनुमानेऽभिहितेऽबाधितत्वं न प्रत्यक्षाङ्गमित्यङ्गीकृत्येदं रजतमिति प्रत्यक्षाभासेन बाधचोदनं प्रत्यक्षाभासोदाहरणमनाप्तवाक्येन बाधचोदनमागमाभासोदाहरणमिति बोध्यम् ॥ **साधर्म्येति** । प्रतिषेधशब्दोऽत्र जातिशब्दपर्यायः । ततश्च साधर्म्येण प्रतिपक्षवचनं साधर्म्यसमजातिरित्यर्थः । यथा यदि महानससाधर्म्यादिति । नन्विदं साधनमुतापादनम् । नाद्यः । यदितर्हिशब्दवैय्यर्थ्यात् । इष्यत इति पदद्वयस्य किंशब्दस्य नञश्च वैय्यर्थ्यापातात् । न द्वितीयः । व्याघातेन विपर्यये व्याघातात् । न चानेन तर्केण पर्वतस्याग्निमत्त्वं दूष्यते येनोक्तदोषः स्यात् । किं नाम महानसामाधर्म्यस्याग्निसाधनत्वं दूष्यते । यदि महानससाधर्म्यमग्निमत्त्वनिर्णायकं स्यात्तर्हि ह्रदसाधर्म्यं निरग्निकत्वनिश्चायकं स्यादविशेषादिति । न चैवं सति विपर्ययपर्यवसाने व्याघातो भवति । न च ह्रदसाधर्म्यं निरग्निकत्वनिश्चायकं तस्मान्महानससाधर्म्यमपि नाग्निमत्वसाधकमिति विपर्ययपर्यवसानस्याविसद्धत्वादिति वाच्यम् । पर्वतस्याग्निमत्वसाधन दूषणयोः समयबन्धात्पर्वतस्याग्निमत्त्वमदूषयित्वा महानससाधर्म्यस्याग्निसाधकत्वनिराकरणत्वायोगात् । प्रतिपक्षादिदूषणमनभिधाय साधकत्वनिराकरणायोगाच्च । प्रतिप्रमाणेन प्रतिपक्षाद्भावनमिति

लक्षणविरोधाच्च । यदि महानससाधर्म्यमग्निमत्वनिर्णायकं स्यात्तर्हि ह्रदसाधर्म्यमग्निमत्त्वसाधकं स्यात् । अविशेषादित्युक्तप्रसङ्गादिति चेन्मैवम् । न ब्रूमो वयमिदमनुमानमिति येन यद्यादिशब्दवैयर्थ्यं स्यात् । नापि तर्क इति ब्रूमः । येन विपर्ययपर्यवसाने व्याघातः स्यात् । किन्नामानया वचोभङ्ग्या वादिप्रतिवादिनोरनुमानं सूच्यत इति । तथाहि । यदि महानससाधर्म्याद्धूमवत्त्वात् पर्वतोऽग्निमानिष्यत इत्यनुवादेन पर्वतोऽग्निमान्धूमवत्त्वान्महानसवदिति वाद्यनुमानं सूचितम् । ह्रदसाधर्म्यादित्युत्तरवाक्येन पर्वतोऽग्निमान्द्रव्यत्वाद् ध्रदवदिति प्रतिवाद्यनुमानं सूचितमिति न किञ्चिदनुपपन्नम् । एवमुत्तरत्रापि द्रष्टव्यम् । एतेन धूमाग्न्योर्व्याप्तेरनङ्गीकृतत्वेन महानससाधर्म्येण वह्नेः साधनादन्यथाऽनुवादः परानभिप्रेतस्य साधर्म्यमात्रेण वह्निसाधने तात्पर्यस्य कल्पनाच्छलत्वप्रसङ्गश्चेत्यपि परास्तम् । अनयोर्जात्योर्युक्ताङ्गहीनप्रतिप्रमाणोपन्यासे पाक्षिकजयबुद्धिरुत्थानबीजम् । एतेन सम्भावितसमानविद्ययोरेव कथाधि कारेण जातिवादिनः कथाप्रवेशायोगाज्जातिनिरूपणमप्रयोजकमिति परास्तम् । समानविद्यस्यापि निश्चितपराभवाद्वरः पाक्षिकपराभव इति मन्यमानस्य जातिवादित्वोपपत्तेः । सत्प्रतिपक्षत्वमारोप्यम् । वादिनः सत्प्रतिपक्षत्वभ्रमोत्पादः फलमित्यूह्यम् । प्रमाणलक्षणटीकायां त्वेकदेशीयमतानुसारेणोत्थान बीजाद्यनुवादः कृत इति बोध्यम् ।

**आद.**— अन्तर्भावमाह ॥ **प्रतिषेध इति ।**

**श्रीनि.**— ॥ **साधर्म्येणेति** । समानो धर्मो येषां ते सधर्माणस्तेषां भावः साधर्म्यम् । तेन समानधर्मेणेत्यर्थः ॥ **वैधर्म्येणेति** । विरुद्धो धर्मो येषां ते विधर्माणस्तेषां भावो वैधर्म्यं तेन विरुद्धधर्मेणेत्यर्थः ॥ **प्रत्यवस्थानमिति** । वादिसाधननिराकरणं प्रतिपक्षोद्भावनमिति यावत् ॥ **प्रतिषेध इति**। जातिरित्यर्थः ॥ **तर्हि ह्रदसाधर्म्यादिति** । तथा च पर्वतो निरग्निको निरग्निकसाधनधर्मवत्त्वादिति सत्प्रतिपक्षं धूमवत्त्वादिति भावः ।

**वि.**— ॥ **तत्रेति** । चतुर्विधायां तस्यां व्याप्तिहीनेनानुमानेन व्याप्तिरूपयुक्ताङ्गहीनेनानुमानाभासेन यत्प्रतिरोधोद्भावनं तद् द्विविधमित्यर्थः । द्वे विधे दर्शयति ॥ **साधर्म्येण वैधर्म्येण चेति** । साधर्म्येण प्रतिपक्षोद्भावनं वैधर्म्येण प्रतिपक्षोद्भावनं चेति द्विविधमिति पूर्वेणान्वयः । साधर्म्यवैधर्म्य समजातिभेदेन द्विविधमिति हृदयम् । तयोर्लक्षणमाह ॥ **तत्रेति** । साधर्म्येण समाना धर्मा यस्य समानधर्मा तस्य भावः साधर्म्यं तेनेत्यर्थः । अनभ्युपेतयुक्ताङ्गेनेत्यपि वक्तव्यम् । प्रत्यवस्थानं प्रतिपक्षचोदनमित्यर्थः । साधर्म्यसमः प्रतिषेधः । साधर्म्यसमाख्या स्वपक्षं प्रतिषेधति निराकरोति प्रतिषेधो जातिरित्यर्थः । वैधर्म्यसमव्यावृत्त्यर्थं साधर्म्येणेति विशेषणम् । प्रकरणसमजातिव्यवच्छेदाय सत्प्रतिपक्षचोदनविशेषणम् । सदुत्तरप्रकरणनिरासार्थमनभ्युपेतयुक्ताङ्गेति विशेषणम् ।

**(४७) प्र.प.— ॥ २० ॥ (२) (२) वैधर्म्यसमः ॥ वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः प्रतिषेधः । यथा यदि ह्रदवैधर्म्याद्धूमवत्त्वात्पर्वतोऽग्निमानिष्यते तर्हि महानसवैधर्म्यात्पर्वतत्वादनग्निः किं नेष्यत इति । अत्र व्याप्तिलक्षणयुक्ताङ्गराहित्यमेव प्रथममुद्भाव्यम् । न तु जातित्वम् । परचित्तवर्तिनो व्याप्त्यनभ्युपगमस्याद्यापि ज्ञातुमशक्यत्वात् । यदा तु परो ब्रूयात्साधर्म्यवैधर्म्यमात्रं प्रयोजकं किं व्याप्त्येति । तदा वक्तव्यम् । एवं सति नेदं साधकं सत्प्रतिपक्षितत्वादिति । त्वदनुमानस्यापि व्याप्तिहीनेन साधर्म्येण वैधर्म्येण वा प्रतिपक्षसम्भवाद्व्याघात इति । तथा च प्रतिषेधे स्वन्यायविरोधात्मकतृतीयजातावन्तर्भावः (भवति) ।**

**जना. — ॥ तथा च प्रतिषेध इति ।** व्याप्त्यभावेऽपि प्रतिषेधे क्रियमाणे सतीति शेषः । अन्तर्भाव इति प्रतिषेधकस्योत्तरस्येति शेषः ।

**राघ.—** जात्युत्तरस्य निरासप्रकारमाह ॥ **अत्रेति ।** परोक्तनिषेध इत्यर्थः ॥ **न तु जातित्वमिति ।** स्वव्याहतिरूपं साधारणमसामर्थ्यमित्यर्थः । कुत इत्यत आह ॥ **परचित्तेति ॥ अद्यापीति ।** एवं प्रत्यवस्थानवेलायामपीत्यर्थः ॥ **तदा वक्तव्यमिति ।** जातिवादिनं प्रति वक्तव्यमित्यर्थः । तदाह ॥ **एवं सतीति ।** व्याप्तेरप्रयोजकत्वे सतीत्यर्थः ॥ साधर्म्येण वैधर्म्येण वेति । यदि सत्प्रतिपक्षान्तरसाधर्म्यात्सत्प्रतिपक्षत्वादिदमसाधकं तर्हि सद्धेतुसाधर्म्यात्पक्षम्यन्तपदोक्तत्वाद्धूमवत्त्वं साधकम् । असिद्धहेतुवैधर्म्यात्पक्षवृत्तित्वात्साधकं किं न स्यादित्यपि वक्तुं शक्यत्वाद्व्याघात इत्युत्तरं वक्तव्यमित्यर्थः । आदावेव व्याघातोक्तौ तु मया व्याप्तिरङ्गीक्रियत इति जातिवादिनोक्ते सति स्वव्याघातं वदन् छलेन जीयेतातो न प्रथमतो व्याघातो वक्तव्य इत्युक्तम् । एतज्जातेरन्तर्भावमाह ॥ **तथा चेति ।** स्वव्याघाते सति नेदं साधकमित्युक्तप्रतिषेधे प्रतिषेधविषये तद्रीत्या तद्वचनस्य प्रतिषेधे कृते वा स्ववचनस्वक्रियास्वन्यायविरोध इति प्रागुक्ततृतीयजातावन्तर्भवतीयं जातिरित्यर्थः ।

**विज.—** यथेत्यादि सुगमम् । असाधारणं दुष्टबीजमाह ॥ **अत्रेति ।** साधारणमाह ॥ **यदा त्वित्यादिना ।** अस्याः स्वोक्तं जात्यन्तर्भावमाह ॥ **तथा चेति ।**

**वेदे.— ॥ प्रतिपक्षसम्भवादिति ।** यदि प्रसिद्धसत्प्रतिपक्षसाधर्म्यात् सत्प्रतिपक्षत्वादसाधकस्तर्हि साधकधूमादिसाधर्म्याद्धर्मवत्त्वात्साधकोऽपि किं न स्यादिति साधर्म्येण यदि धूमादिवैधर्म्यात् सत्प्रतिपक्षत्वादसाधकता तर्हि प्रसिद्धसत्प्रतिपक्षवैधर्म्यात्तत्साधकताऽपि किं न स्यादिति वैधर्म्येण प्रत्यवस्थानसम्भवादित्यर्थः । अन्तर्भावमाह ॥ **तथा चेति ।** स्थापनां गते स्वन्यायविरोधे द्वितीयाद्युत्तरकक्षाभाविपरोक्तजातेरन्तर्भावासम्भवादाह ॥ **प्रतिषेध इति ।** परानिराकरणोत्तररूप इत्यर्थः ।

अत एव दूषणासमर्थमुत्तरं जातिरित्युक्तम् । प्राप्तायामिति शेषः । अथवा प्रतिषेधे तृतीयजाताविति सामानाधिकरण्यम् । तथा च परप्रतिषेधरूपा स्वन्यायविधात्मिकाऽस्मदुक्ततृतीय जातिमत्युत्तर इत्यर्थः । बहुव्रीहिणोक्तार्थलाभात् । अत एव प्रमाणलक्षणटीकायां प्रतिषेधात्मकतृतीयजातावित्युक्तम् ।

**अभि.—** ॥ **तदा वक्तव्यमिति** । पर्वतो न वह्निमान्द्रव्यत्वात् ह्रदवदिति परानुमानस्य स्वन्यायविरोधं वक्तुमुपोद्धातसङ्गत्या नेदं साधनं सत्प्रतिपक्षत्वादित्यनुमानस्य स्वन्यायविरोधः प्रदर्शित इति बोध्यम् । एतेन जात्युत्तरस्य द्रव्यत्वादित्यस्य स्वन्यायविरोधमनभिधायासाधकतानुमानस्य स्वन्यायविरोधाभिधानमयुक्तमिति परास्तम् । यदर्थमुपोद्धातस्तदिदानीमाह ॥ **तथा चेति** । व्याप्ते-रङ्गत्वमङ्गीकृत्य स्वदूषणोद्धारे तत्तद्रीतिप्रतिबन्द्या जात्युत्तरस्य विरोधो भवतीति स्वन्यायविरोधात्मक-तृतीयजातावन्तर्भवतीत्यर्थः । प्रमाणलक्षणटीकायां त्वसाधकानुमानं जात्युत्तरमित्येकदेशिमतानुवादः कृत इति बोध्यम् ।

**आद.—** प्रतिषेधे विरोधे विरोधस्य नानात्वात्कीदृशे विरोधे इत्याकाङ्क्षायामाह ॥ **तृतीय जाताविति** । स्वन्यायविरोधरूपजातावित्यर्थः । मानलक्षणटीकायां स्वन्यायविरोधस्य तृतीय-जातित्वस्योक्तत्वात् ।

**श्रीनि.—** ॥ **तर्हि महानसवैधर्म्यादिति** । तथा च पर्वतो निरग्निकः साग्निकविरुद्धधर्मवत्त्वादिति प्रतिपक्षधूमवत्त्वमिति भावः ॥ **अत्रेति** । प्रतिवाद्युक्तवचन इत्यर्थः । एवमग्रेऽपि ॥ **एवं सति नेदमिति** । प्रतिवादिना वाद्युक्तरीत्या प्रतिपक्षमुद्भाव्येदं धूमवत्त्वं साध्यसाधकं न भवति । सत्प्रतिपक्षत्वात् । शब्दनित्यत्वसाधकं श्रावणत्वादिति वादिसाधनस्यासाधकत्वं साधनीयम् । तत्रापि प्रतिपक्षचोदनं सम्भवति । तथा हि । यदि श्रावणत्वसाधर्म्यात् सत्प्रतिपक्षत्वाद्धूमवत्त्वं साध्यासाधकं स्यात्तर्ह्यभिधेयत्वसाधकप्रमेयत्वसाधर्म्याद्धर्मत्वात्साध्यासाधकं श्रावणत्वादिति । वादिसाधनस्या-साधकत्वं साधनीयम् । तत्रापि प्रतिपक्षचोदनं सम्भवति । तथा हि । यदि श्रावणत्वसाधर्म्यात् सत्प्रतिपक्षत्वाद्धूमवत्त्वं साध्यासाधकं स्यात्तर्ह्यभिधेयत्वसाधकप्रमेयत्व साधर्म्यवैधर्म्यमात्रेण प्रतिपक्ष सम्भवे किं व्याप्त्येति त्वयैवोक्तत्वादिति । तथा च साधर्म्यवैधर्म्यं प्रतिपक्षप्रयोजकमिति तद्वाक्यन्यायेन नेदं साधकं सत्प्रतिपक्षत्वादिति तद्वाक्यस्योक्तरीत्या विरोधः प्राप्त इति व्याघात इत्यर्थः ॥ **अन्तर्भाव इति** । तद्वाक्यन्यायेन तद्विरोधस्यैव स्वन्यायविरोधादिति भावः ।

**वि.—** ॥ **वैधर्म्येति** । विगतो व्यावृत्तो धर्मो यस्य स विधर्मा तस्य भावो वैधर्म्यं तेन प्रत्यवस्थानं प्रतिपक्षचोदनमित्यर्थः । अनभ्युपेतयुक्ताङ्गेनेत्यपि वक्तव्यम् । साधर्म्यसमाजातिलक्षण

इवास्मिल्लक्षणेऽपि विशेषणान्तरव्यवच्छेदोऽनुसन्धेयः । महानसवैधर्म्यादिभिर्महानस व्यावृत्तधर्मादित्यर्थः । प्रतिधर्मसमाया अनयोश्च तृतीयजातावन्तर्भावकथनायोपोद्घातमाह ॥ **अत्रेति** । जातिवाद्युक्त योर्द्रव्यत्वपर्वततत्वयोर्व्याप्तिरूपयुक्ताङ्गहीनमसाधारणं दृष्टत्वमूलमेव पूर्वं वाच्यम् । न तु जातित्वस्वव्याघातकोत्तरत्वमित्यर्थः । तत्र हेतुमाह ॥ **परचित्तवर्तिन इति** । प्रतिवादिमनोगतस्येत्यर्थः ॥ **आद्यापीति** । तद्वाक्यश्रवणात्प्रागित्यर्थः ॥ **यदा त्विति** । साधर्म्यमात्रं वैधर्म्यमात्रं वा प्रयोजकं द्रव्यत्वस्य साध्यसाधकतायां साधर्म्यं पक्षसपक्षसाधारणधर्मत्वमेव प्रयोजकं तन्त्रम् । पर्वततत्वस्य साध्यसाधकतायां साधर्म्यं विपक्षवृत्तिधर्मवृत्ति धर्मवत्त्वमेव तन्त्रम् ॥ **किं व्याप्त्येति** । यदा तु परो वादी ब्रूयात्तदा वक्तव्यं वादिना वक्तव्यमित्यर्थः । किं वक्तव्यमिति जिज्ञासायामाह ॥ **एवं सतीति** । व्याप्तेरनुमानाङ्गत्वानङ्गीकार इत्यर्थः । इदं वादिसाधनं धूमवत्त्वं न साधकं स्वसाध्यसाधकं न सत्प्रतिपक्षत्वात् । अनभ्युपेतयुक्ताङ्गेन साधर्म्येण वैधर्म्येण वा प्रतिवादिरुद्धत्वादिति त्वदनुमानस्य व्याप्तिहीनेन व्याप्त्यभ्युपगमरहितेन साधर्म्येण सद्धेतुसाधर्म्येण पदार्थत्वेन वैधर्म्येण वाऽसद्धेतुस्वरूपासिद्धिवैधर्म्येण पक्षवृत्तित्वेन वा प्रतिपक्षसम्भवादिदं धूमवत्त्वं स्वसाध्यसाधकं पदार्थत्वात्पक्षवृत्तित्वाद्वेति प्रतिरोधसम्भवाद्व्याघातः स्वव्याहतिरित्यर्थः ॥ **व्याघात इतीति** । इति शब्दस्येति वक्तव्यमिति पूर्वेणान्वयः । किमतो यद्येवमित्यत आह ॥ **तथा चेति** । प्रतिषेधे प्रतिषेधरूपायां स्ववचनन्यायेन स्ववचनस्य विरोधरूपतृतीयजातौ प्रतिधर्मसमायास्तद्विशेषयोः साधर्म्यवैधर्म्य संसर्गयोश्चान्तर्भाव इत्यर्थः ॥ **अन्तर्भाव इति** । इतिशब्दः साधर्म्यसमाप्त्यन्तर्भाव कथनपरिसमाप्तौ वर्तते ।

**(४८) प्र.प.— ॥ २० ॥ (३) ॥ उत्कर्षसमः ॥ वादिसाधनसामर्थ्येन साध्यस्येव व्याप्तिं विना कस्यचिदनिष्टधर्मस्य दृष्टान्तात्पक्ष उत्कर्ष उत्कर्षसमः । यदि धूमवत्त्वान्महानसवदग्निमान् पर्वतस्तर्हि तत एव तद्वदेव स्थाल्यादिमानपि स्यादिति । अत्रापि व्याप्तिवैकल्यात्तर्काभासोऽयमित्युत्तरं वक्तव्यम् । साहचर्यमात्रेण तर्कस्य प्रवृत्तेः किं व्याप्त्येति वदतः स्वन्यायविरोधेन व्याघात इति ।**

**जना.—** ॥ वादिसाधनेति । साध्यस्येत्यनन्तरं वादिसामर्थ्येनेत्यावर्तते । व्याप्तिं विनेति सत्तर्कव्यावृत्त्यर्थम् । दृष्टान्तात्पक्ष उत्कर्षो दृष्टान्ते यथाऽस्ति तथा पक्षेऽपि स्यादित्यापादनमित्यर्थः । तदुक्तं वरदराजेन ।

**कस्याप्यनिष्टधर्मस्य वादिसाधनशक्तितः ।**
**दृष्टान्तात्पक्ष उत्कर्ष उत्कर्षसम उच्यत** ॥ इति ।

असाधारणसाधारणसामर्थ्ये दर्शयति ॥ **अत्रापीत्यादिना** ।

**राघ.—** वादिसाधनसामर्थ्येनेत्येतत्साध्यस्येत्यत्रैव कस्यचिदवशिष्टधर्मस्येत्यादावप्यन्वेति । उत्कर्षः सद्भावापादनं वाद्युक्तहेतुना पक्षे साध्यस्य दृष्टान्तादुत्कर्षो यथा तथा तेनैव हेतुना दृष्टान्तात् पक्षेऽनिष्टधर्मस्योत्कर्षः सत्त्वापादनमित्यर्थः । हेत्वन्तरेण कस्यचिद्धर्मस्य पक्षे सत्त्वापादनरूपविशेष-समव्यावृत्तये वादिसाधनसामर्थ्येनेत्युक्तम् । सदुत्तरव्युदासाय व्याप्तिं विनेति । तत एव धूमवत्त्वादेव । तद्वदेव महानसवदेवेत्यर्थः ॥ **अत्रापीति** । एतज्ज्ञात्युत्तरेऽपीत्यर्थः । इत्युत्तरं वक्तव्यमित्यन्वयः ॥ **साहचर्येति** । आपाद्यापादकयोरिति योज्यम् । इति वदतो जातिवादिनो व्याघात इत्युत्तरं वक्तव्य-मित्यनुषङ्गः । कथमित्यत उक्तम् ॥ **स्वन्यायविरोधेनेति** । धूमवत्त्वानुमानमसाधकं मदुक्ततर्क-विरुद्धत्वात् । तर्कविरुद्धनित्यत्वासाधककृतकत्वरूपानुमानान्तरवदिति जातिवादिनोक्ते प्रतिषेधानु-मानेऽपि तर्कविरुद्धत्वरूपत्वदुक्तहेतुना नित्यत्वासाधककृतकत्ववदसाधकत्वमिव तर्कविरुद्धत्वहेतुनैव दृष्टान्तभूतकृतकत्ववदमूर्तवृत्तित्वमपि धूमवत्त्वे स्यादिति स्वोक्तन्यायेनैव व्याप्तिहीनतर्केण जातिवाद्य-निष्टापादनसम्भवादेवं रूपस्वन्यायविरोधेनेत्यर्थः । एतेनेयमपि जातिरस्मदुक्ततृतीयजात्यन्तर्गतेति सूचितम् । एवमग्रेऽपि ।

**विज.—** ॥ **वादीति** । उत्कर्षापादनं साध्यस्यैवेति स्वरूपकथनम् । प्रकरणसमपरिहाराय व्याप्तिं विनेति । दृष्टान्तादिति स्वरूपकथनम् । साधर्म्यसमपरिहाराय वादीति ॥ **पक्ष इति** । पक्ष इति स्वरूपकथनम् । एवं च साहचर्यमात्रप्रयुक्तगम्यगमकत्वयोः साध्यसाधनयोरन्यतरेण पक्षदृष्टान्तयो-रन्यतरत्वानिष्ठधर्मापादनमुत्कर्षसम इति पर्यवसितं ज्ञेयम् । तथा च साध्येन यत्रोत्कर्षापादनं तस्यान्यजात्यन्तर्गतस्य सङ्ग्रहः । दृष्टान्तेऽनिष्टधर्मप्रसञ्जनस्य च सङ्ग्रहः ।

**वेदे.—** ॥ **वादिसाधनेति** । अत्र विशेषणसमव्यवच्छेदाय वादिसाधनसामर्थ्येनेत्युक्तम् । तत्र च हेत्वन्तरेणोत्कर्षं वक्ष्यति । तदुत्तरव्यावृत्त्यै व्याप्तिं विनेति । शिष्टं स्वरूपकथनायैवेति द्रष्टव्यम् ॥ **अत्रेति** । तथा च युक्ताङ्गहानिरिति भावः ॥ **स्वन्यायेति** । तथा च तृतीय जात्यन्तर्भाव इति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ।

**अभि.—** ॥ **वादिसाधनसामर्थ्येनेति** । वादिनो यत्साधनं तत्सामर्थ्येन पक्षधर्मताबलेन साध्यस्येव दृष्टान्ते साधनसहचरितस्य व्याप्तिं विनाऽयं कस्यचिदनिष्टधर्मस्य पक्षे उत्कर्ष उत्कर्षसम इत्यर्थः । अविशेषसमाद्भेदोपपादनाय वादिसाधनसामर्थ्येनेति । प्रकरणसमहेत्वाभासं व्यावर्तयितुं व्याप्तिं विनेति । साध्यसमव्यावृत्तये दृष्टान्तापेक्षयोत्कर्ष इत्यर्थः । पर्वतो वह्निमान्प्रमेयत्वान्महानस-वदित्युक्ते तत एव तद्वदेव द्रव्यमपि स्यादित्युत्कर्षसमाभासं व्यावर्तयितुं कस्यचिदनिष्टधर्मस्येत्युक्तम् ।

जात्युत्थानबीजसूचनाय साध्यस्येवेति । अनेन पक्षेऽविद्यमानस्य दृष्टान्ते वादिहेतुसहचरितस्य धर्मस्य साधने पाक्षिकजयबुद्धिरुत्थानबीजमुक्तं भवति । पर्वतोऽग्निमान्धूमवत्त्वादिति प्रयोगे धूमवत्त्वे वह्निनेष्टस्थाल्यादिना सहचरितं महानसे उपलब्धमिति स्थाल्यादिसहकृतमेव पर्वते वह्निं साधयेत् । न वाद्यभिमतं केवलवह्निमिति विशेषप्रमाणविरुद्धत्वमारोप्यम् । ततो भ्रान्त्युत्पादः फलमित्यूह्यम् । यथा यदि धूमवत्त्वान्महानसवदिति । नन्विदमपि किं साधनानुमानमुतापादनम् । नाद्यः । यदि तर्हीत्यादि-शब्दवैय्यर्थ्यापातात् । व्याप्तिवैकल्यात्तर्काभासोऽयमित्युत्तरग्रन्थविरोधाच्च । द्वितीयेऽपि वक्तव्यम् । किं धूमवत्त्वमापादकमुत धूमवत्त्वान्महानसवदनग्निमान्पर्वत इति विशिष्टम् । नाद्यः । यदि धूमवान्स्यात्तर्हि स्थाल्यादिमान्स्यादित्येतावता पूर्णत्वेन शेषवैयर्थ्यप्रसङ्गात् । विपर्यये पर्यवसानायोगाच्च । धूमवान् स्यादिति वक्तव्येन पञ्चम्यन्ते प्रयोगानुपपत्तेश्च । न द्वितीयः । यदि वादिसामर्थ्येनेत्यस्य रिक्तत्वा-पातात् । न हीदं वादिसाधनं येनात्र तत्सामर्थ्यं स्यात् । आपाद्यापादकयोः साहचर्याभावेन साहचर्य-मात्रेण तर्कस्य प्रवृत्तेरित्युत्तरग्रन्थविरोधाच्च । आपाद्ये तत एव तद्वदेवेत्यस्य वैय्यर्थ्यापाताच्चेति चेन्मैवम् । न ब्रूमो वयमिदं साधनानुमानमिति । येन यद्यादिशब्दवैय्यर्थ्यं स्यात् । नापि तर्क इति । येनोक्तदोषः स्यात् । किं नाम धूमवत्त्वान्महानसवदग्निमान्पर्वत इति वादिसाधनमनूद्य तर्हीत्यादिना तस्य दूषणमुच्यत इति । न चास्मिन्पक्षे यद्यादिशब्दवैय्यर्थ्यमिति वाच्यम् । यदीदमुच्यते तर्हीदमुच्यते इत्यनुवादः । प्रत्युत्तरज्ञापनार्थत्वात् । न च व्याप्तिवैकल्यात्तर्काभासोऽयमित्युत्तर ग्रन्थविरोध इति वाच्यम् । वादविशेषस्य जल्प इति नामवद् दुष्टप्रमितिसाधनानुमानस्य प्रयोगप्रकारः पर्वतो न केवलं वह्निमान् । अपि तु स्थाल्यादिमानपि स्यात् । धूमवत्त्वान्महानसवदिति ॥ **अत्रापीति** । परचित्त-वर्तिनो व्याप्त्यनभ्युपगमस्याद्यापि ज्ञातुमशक्यत्वात् । व्याप्तिराहित्यमेव प्रथममुद्भाव्यम् ॥ **स्वन्याय-विरोधेनेति** । जातिवादिना स्वाभ्युपगतप्रमेयान्तरं विहाय व्याप्तेः क्वचिदङ्गीकृतत्वेन तत्प्रतिबन्दी-विरोधइत्यर्थः ।

**आद.**— उत्कर्षसमं लक्षयति ॥ **वादीति** ॥ **साहचर्यमात्रेणेति** । किं व्याप्त्येति शतशः समानाधिकरणयोरपि व्यभिचारस्य बहुस्थलेषु दर्शनाद्व्याप्तिनिश्चयः कथमपि न सम्भवतीत्यभिमानः । साहचर्यमात्रेण साधयतीति भ्रम उत्थानबीजं विशेषविरुद्धत्वमारोप्यम् । विशेषविरुद्धत्वं नाम विवक्षितसाध्यस्य सहचरितविशेषस्य साधनयोग्यत्वाभाव इत्यर्थः । प्रतितर्कप्रयोज्यप्रकृतसाध्यमात्र साधनानुकूलशक्त्यभाव इति यावत् ।

**श्रीनि.**— ॥ **तर्हि तत एवेति** । तथा च तर्कपराहतं धूमवत्त्वमिति भावः ॥ **उत्कर्ष इति** । तद्वत्त्वापादनमित्यर्थः ॥ **स्वन्यायविरोधेनेति** । प्रतिवादिना ह्युक्तरीत्या तर्कपराहतिमभिधाय धूमो न

साध्यसाधकस्तर्कपराहतत्वाज्जगन्मिथ्यात्वसाधकदृश्यत्ववत् । तद्धि यदि जगन्मिथ्या स्यात्तर्हि तदन्तर्गतमनुमानमपि मिथ्या स्यादिति तर्कपराहतमिति वादिसाधनस्यासाधकत्वं साधनीयम्। तत्रापि तर्कपराहतिरायाति। तथा हि। यदि तर्कपराहतत्वाद्दृश्यत्ववद्धूमः साध्यसाधको न स्यात्तर्हि तत एव तद्वदेव दृश्यत्ववानपि स्यात्। न चात्र व्याप्त्यभाव इति वाच्यम्। साहचर्यमात्रेण तर्कप्रवृत्तेर्न व्याप्त्या प्रयोजनमिति त्वयैवोक्तत्वादिति । तथा च साहचर्यमात्रेण तर्कप्रवृत्तिरिति तद्वाक्यन्यायेन धूमो न साध्यसाधकस्तर्कपराहतत्वादिति तद्वाक्यस्यविरोधात्स्वन्याय विरोधान्तर्भाव इति भावः ।

**वि.—** ॥ **वादिसाधनसामर्थ्येनेति** । वादिप्रयुक्तलिङ्गबलेन । वादिप्रयुक्तहेतुनेति यावत् । अनिष्टधर्मस्य पक्षेऽनङ्गीकृतस्य धर्मस्येत्यर्थः । दृष्टान्तात्पक्षे उत्कर्षो नाम दृष्टान्त इव पक्षे सद्भावापादनमित्यर्थः । दृष्टान्तगतस्य पक्षेऽविद्यमानस्य कस्यचिद्धर्मस्य हेत्वन्तरेण पक्षे सद्भावापादनरूपाया अविशेषसमाया व्यावृत्त्यर्थं वादिसाधनसामर्थ्येनेति विशेषणमुपात्तम् । व्याप्तिमङ्गीकृत्य वादिसाधनबलेनाविष्टधर्मस्य दृष्टान्तवत्पक्षे सद्भावापादनस्य सदुत्तरत्वेन तद्व्यावृत्त्यर्थं व्याप्तिं विनेति विशेषणम् ॥ **अत्रापीति** । जातिवाद्युक्तेऽनिष्टस्थाल्याद्यापादके धूमवत्त्वेऽपिव्याप्तिवैकल्यासम्पाद्येन स्थाल्यादिमत्त्वेन व्याप्तिराहित्यादयं तर्काभास इति दूषणं वक्तव्यमित्यर्थः ॥ **साहचर्यमात्रेणेति** । आपाद्यापादकयोः सामानाधिकरण्येनैव प्रवृत्तेः तर्कप्रवृत्तिसम्भवात्किं व्याप्त्येति वदतोऽव्यभिचरितत्वविशिष्टसाहचर्येण किं प्रयोजनमिति वदतो जातिवादिनः स्वन्यायविरोधेन स्वोक्तन्यायेन स्ववचनस्य विरोधेन स्वव्याघातो भवतीत्यर्थः। इयमपि जातिः स्वन्यायविरोधात्मकतृतीयजातावन्तर्गतैवेति हृदयम्। कथमत्र स्वन्यायविरोध इति चेत्। इत्थम्। सहचारमात्रेणानिष्टप्रसङ्गरूपतर्कप्रवृत्तिमभ्युपेत्य तर्कविरोधाद्वाद्यनुमानं दूषयतो जातिवादिनो नेदं धूमवत्त्वं स्वसाध्यसाधकं विरुद्धत्वान्नित्यत्वासाधककृतकत्ववदिति विवक्षितम् । अत्रापि दृष्टान्तभूते नित्यत्वसाधके कृतकत्वे विरुद्धत्वरूपप्रतिषेधहेतुरसाधकत्वेनैवामूर्तावृत्तित्वेनापि सहचरितो दृष्ट इत्यनिष्टस्य मूर्तवृत्तित्वस्यापि त्वदुक्तसाधनेन विरुद्धत्वेन पक्षे धूमवत्त्वे सहचारमात्रेणापादन सम्भवात्स्वन्यायविरोधो भवतीति।

**(४९) प्र.प. — ॥ २० ॥ (२) (४) ॥ अपकर्षसमः ॥ पक्षादिष्टधर्मापकर्षणमपकर्षसम इत्येके । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते तर्हि तत एव तद्वदेव शब्दः श्रावणोऽपि मा भूदिति। अत्र वक्तव्यम्। किमिदं साधनमुतापादनमिति। नाद्यः। अर्थान्तरत्वेन निरनुयोज्यानु-योगत्वाभावात्। द्वितीये तूत्कर्षसम एवायम्। न हि भावोत्कर्षोऽभावोत्कर्ष इत्येतावता भेदः**

**सम्भवति । उदयनस्तु दृष्टान्ते साध्येन साधनेन वा सहचरितस्य कस्यचिद्धर्मस्य निवृत्त्या पक्षे तयोरन्यतराभावसाधनमपकर्षसम इत्याह । यथा महानसेऽग्निमत्त्वेन धूमवत्त्वेन वा सहदृष्टस्य स्थाल्यादिमत्त्वस्य पर्वतेऽभावात्तयारोप्यभावः । तत्र साध्याभावसाधने सत्प्रतिपक्षत्वं बाधो वाऽऽरोप्यः । साधनाभावसाधने त्वसिद्धिरिति । इदमप्यसत् । साध्याभावसाधने साधर्म्यसम-प्रकरणसमाभ्यां भेदाभावप्रसङ्गात् । तस्माद्व्याप्त्यनपेक्षया पक्षे साधनाभावसाधनमेवापकर्षसमः । तत्र व्याप्त्यभावः साधनग्राहकप्रमाणविरोधश्चेत्युत्तरं वाच्यम् । साहचर्यमेव प्रयोजकं किं व्याप्त्यादिनेति ब्रुवाणं प्रति स्वन्यायविरोध इति ।**

**जना.—** अपकर्षसमस्य निष्कृष्टलक्षणं वक्तुं नैयायिकैकदेश्युक्तलक्षणमनूद्य दूषयति ॥ **पक्षादित्यादिना भेदः सम्भवतीत्यन्तेन ।** इष्टधर्मापकर्षणमिष्टस्य धर्मस्य व्यावर्तनमित्यर्थः । दूषयति ॥ **अत्रेति ॥ वक्तव्यमिति ।** श्रावणो मा भूदिति साधनमपकर्षसम इत्यर्थो वा तथाऽऽ-पादनमपकर्षसम इत्यर्थो वेति विकल्पनीयमित्यर्थः ॥ **अर्थान्तरत्वेनेति ।** शब्दानित्यत्वसाधनबाधना-नुपयुक्तत्वादिति भावः ॥ **निरनुयोज्यानुयोगत्वाभावादिति ।** तथा च व्यापकनिरनुयोज्यानु-योगत्वाभावेन तद्व्याप्यं जातित्वं सुतरां न सम्भवतीति भावः ॥ **उत्कर्षसम एवायमिति ।** तल्लक्षणसद्भावादिति भावः । ननु पक्षे दृष्टान्तनिष्ठधर्मापादनमुत्कर्षसमः । तत्कथं पक्षे दृष्टान्त-धर्माभावापादनस्योत्कर्षसमाभेद इत्यत आह ॥ **न हीति ।** दृष्टान्तनिष्ठधर्मस्य पक्ष आपादनमुत्कर्षः । स चापाद्यमानो धर्मो भावोऽभावो वाऽस्तु । एवं च श्रावणो न स्यादित्यापादनस्याप्युत्कर्षसमत्वं दुष्परिहरमिति भावः । उदयनोक्तमप्युत्कर्षसमलक्षणं दूषयितुमनुवदति ॥ **उदयनस्त्विति ।** सहचरितस्येत्यनन्तरं साध्यसाधनव्यापकत्वेनारोपितस्येति शेषः । अन्यथा तन्निवृत्त्या पक्षे साध्य-साधनयोरन्यतराभावसाधनायोगात् । अत एवाह वरदराजः ।

**व्यावृत्ते व्यापकाभासे पक्षतो लिङ्गसाध्ययोः ।**
**आकर्षोऽन्यतरस्य स्यादपकर्षसमः स्फुट ॥** इति ।

**अन्यतराभावसाधनमिति ।** न त्वन्यतराभावापादनम् । येनोत्कर्षसमाभेदः स्यादिति भावः ॥ **यथेति ।** अनेन न पर्वतो वह्निमान्न वा धूमवान् स्थाल्यादिशून्यत्वादित्यनुमानद्वयं सूचितं भवति । साध्यसाधनाभावसाधनयोः कुत्र दूषणे पर्यवसानमित्यत आह ॥ **तत्रेति ॥ सत्प्रतिपक्षत्वमिति ।** स्थापनाप्रतिपक्षहेत्वोः समबलत्वाभिमानोऽस्ति चेदिति शेषः ॥ **बाधो वेति ।** अधिकबलत्वाभिमान-सत्त्व इति शेषः । दूषयति ॥ **इदमपीति ॥ साधर्म्यसमप्रकरणसमाभ्यामिति ।** यथाक्रमं समाधिक-

बलत्वाभिमानदशायामिति शेषः । यद्यपि तुल्यत्वमभ्युपेत्यैव परहेतोः स्वहेतुना । "**बाधेन** प्रत्यवस्थानं प्रक्रिया सम इष्यते । साधर्म्येण प्रत्यवस्थानं साधर्म्यसम" इति वरदराजरीत्या लक्षणभेदसत्त्वात्ताभ्यामस्याभेदः सम्भवति । तथाऽपि साध्याभावसाधकत्वरूपदुष्टत्वमूलमादाय साधर्म्यसमप्रकरणसमाभ्यामस्यैकजातित्वसम्भवे वैजात्यमात्रेण भेदकलक्षणकल्पनमनुचितम् । यत्किञ्चिदवान्तरवैलक्षण्यमात्रेण जातिभेदाङ्गीकारे साधर्म्यवैधर्म्यसमयोः प्रतिधर्मसमान्तर्भावो न स्यादित्याचार्याणामाशयः । अत एव तुल्यन्यायतयैतमेवाशयं स्फुटीकरिष्यत्याचार्यः प्रकरणसमप्रस्तावे । यथा प्रतिदृष्टान्तसमादावन्यतरचोदनेनैकजातित्वं तथा साधर्म्यसमादिनाप्येकजातित्वमसम्भवेन पृथक्करणानुपपत्तिरिति । एवमेव साध्यसमाच्च भेदाभाव इत्याद्यग्रिमग्रन्थेषु तत्र तत्र शङ्कासमाधाने द्रष्टव्ये। स्वयं निष्कृष्टलक्षणमाह ॥ **तस्मादिति** ॥ **व्याप्त्यनपेक्षयेति** । इदं सदुत्तरे साधनाभाव साधनेऽतिव्याप्तिनिरासाय । साधनमेवापकर्षसम इत्यवश्यं वाच्यं नैयायिकैरिति शेषः । सम्भवदुक्तिकस्यैवान्तर्भाव्यत्वादस्माभिरेवं निष्कृष्टमिति भावः । असामर्थ्यद्वयं वक्तुमुत्तरकथाप्रवृत्तिप्रकारमाह ॥ **तत्रेति** ॥ **व्याप्त्यभाव इति** । साधनीभूतव्यापकाभासव्यावृत्तेः साधनव्यावृत्त्या सहेति शेषः ॥ **स्वन्यायविरोध इति** । धूमवत्त्वमसाधकं स्वरूपासिद्धत्वात् । शब्दानित्यत्वसाधकचाक्षुषत्ववदिति प्रतिषेदहेतावपि चाक्षुषत्वेऽसिद्धत्वेन साधकं रूपवृत्तित्वमुपलब्धमिति धूमवत्त्वात्तद्व्यावर्तमानमसाधकत्वमपि व्यावर्तयेदिति स्वन्यायविरोध इति भावः ।

**राघ.— ॥ पक्षादिष्टधर्मेति** । वादिसाधनसामर्थ्येनेति योज्यम् । तत एव तद्वदेवेत्यग्रेऽभिधानात् । नेदं लक्षणं युक्तमित्याह ॥ **अत्र वक्तव्यमिति** । एतल्लक्षणकजातिविषये साधनमापादनं वेदमिति वक्तव्यमित्यर्थः ॥ **अर्थान्तरत्वे (नेति)ऽपीति** । प्रकृतानुपयुक्तान्वितोक्तिरूपत्वाज्जातीनां च निरनुयोज्यानुयोगरूपनिग्रहस्थानप्रभेदत्वादित्यर्थः ॥ **उदयनस्त्विति** । आहेत्यन्वयः । व्यापकधर्मनिवृत्त्या व्याप्याभावसाधनस्य सदुत्तरत्वेन तद्व्यावृत्तये सहचरितस्येत्येवोक्तम् ॥ **आरोप्य इति** । जातिवादिनेति योज्यम् ॥ **असिद्धिरिति** । आरोप्येत्यनुषङ्गः ॥ **साधर्म्यसमप्रकरणसमाभ्यामिति** । सत्प्रतिपक्षत्वारोपे साधर्म्यसमः । बाधारोपे प्रकरणसम इति विवेकः ॥ **व्याप्त्यनपेक्षयेति** । दृष्टान्ते साधनेन सहचारमात्रवतः कस्यचिद्धर्मस्य निवृत्त्या पक्षे साधनाभावसाधनमित्यर्थः । एवकारेण साध्याभावसाधनं व्यावर्तयति । उदाहरणमत्र महानसे धूमवत्त्वेन सहचरितस्य स्थाल्यादेरभावेन पर्वते धूमवत्त्वाभावः । असिद्धिरारोप्येति स्पष्टमिति नोक्तम् ॥ **तत्रेति** । उक्तजात्युत्तर इत्यर्थः ॥ **किं व्याप्त्यादिनेति** । किं प्रमाणविरोधेन चेत्यादिपदार्थः । तृतीयजातावन्तर्भावं सूचयंस्तदनन्तरमुत्तरप्रकारमाह ॥ **इति ब्रुवाणं प्रतिस्वन्यायेत्यादि** । नेदं धूमवत्त्वं साध्यसाधकम् । असिद्धत्वाच्छब्दानित्यत्वासाधकचाक्षुषत्ववदिति

जातिवादिनोक्ते सति स्थापनावादिना दृष्टान्तीकृते चाक्षुषत्वेऽसिद्धत्वेन सहदृष्टस्य जातिवृत्तित्वस्य त्वया पक्षीकृते धूमवत्त्वेऽभावेनासिद्धत्वस्याप्यभाव इति त्वदुक्तो हेतुरसिद्ध इति स्वन्यायेन जातिवादिनोक्त-न्यायेन तस्य विरोध इत्युत्तरं वाच्यमित्यर्थः ।

**विज.**— पूर्ववद्दोषमाह ।। **अत्रेति** । पराभिमतापकर्षलक्षणं दूषयितुमनुवदति ।। **नाद्य इति** । जातेश्च निरनुयोज्यानुयोगभेदत्वादिति ।। **द्वितीय इति** । अश्रावणरूपाभावोत्कर्षादिति भावः । साध्याभावसाधनांशे दूषणमाह ।। **इदमपीति** । स्वयं लक्षणमाह ।। **तस्मादिति** ।

**वेदे.**— ।। **निरनुयोज्यानुयोगत्वाभावादिति** । जातेश्च निरनुयोज्यानुयोगप्रभेदरूपत्वादिति भावः ।। **भेदाभावप्रसङ्गादिति** । यदि सत्प्रतिपक्षत्वमारोप्यं तदा साधर्म्यसमाभेदप्रसङ्गः । यदा तु बाध आरोप्यस्तदा प्रकरणसमाभेदप्रसङ्ग इति विवेकः । तर्ह्यपकर्षसमजातिरेव किं नास्तीत्यतस्तस्य लक्षणमाह ।। **तस्मादिति** । तदुत्तरव्यावृत्त्यै व्याप्त्यनपेक्षयेति । अत्रापि युक्ताङ्गहानिमाह ।। **व्याप्त्यभाव इति** ।। **साधनग्राहकेति** । तथा च तदभावसाधनेऽविषयवृत्तित्वं चेति भावः ।

**अभि.**— ।। **पक्षादिष्टधर्मापकर्षणमिति** । अनिष्टधर्मापकर्षणेऽपकर्षसमाभासेऽतिव्याप्तिं वारयितुमिष्टेति । दृष्टान्तादिष्टधर्मापकर्षणं व्यावर्तयितुं पक्षादिति ।। **उदयनस्त्विति** । यद्यपि दृष्टान्ते साध्यसहचरितसाधनसहचरित एव । यत्र क्वापि साधनसहचरितः साध्यसहचरित इति नियमात्साध्येन वा साधनेन वेति विकल्पाभिधानमयुक्तम् । तथाऽपि साध्यसहचरिततया दृष्टस्य साधनसहचरितत्वेन दर्शननियमाभावात् । दर्शनविकल्पाभिप्रायेण साध्येन वा साधनेन वा सहचरितस्येत्युक्तम् । अत एवाग्निमत्त्वेन वा सहदृष्टस्येत्युक्तम् ।। **साधर्म्यसमप्रकरणसमाभ्यां भेदाभावप्रसङ्गादिति** । व्याप्ते-रनङ्गत्वाभिमाने साधर्म्यसमाद्भेदाभावः । अङ्गत्वाभिमाने तु प्रकरणसमाद्भेदाभाव इति विवेकः ।। **तत्र व्याप्त्यभाव इति** । परचित्तवर्तिनो व्याप्त्यबाधितविषयत्वयोरङ्गत्वानभ्युपगमस्य ज्ञातुमशक्यत्वेन प्रथमं व्याप्त्यभावः । साधनग्राहकप्रमाणविरोधश्चेत्युत्तरं वाच्यम् । न तु जातित्वमित्यर्थः । व्याप्त्यादि-मनपेक्ष्यापि साधनाभावसाधने पाक्षिकजयबुद्धिरुत्थानबीजम् ।। **इति ब्रुवाणं प्रतीति** । एवं ब्रुवाणस्य जातित्वं न वक्तव्यम् । किन्नाम स्वन्यायविरोध एव वक्तव्यः । न त्वपकर्षसमः । वृथा प्रभेद-कल्पनायोगादिति भावः । स्वन्यायविरोधप्रकारस्तु प्रतिवादिना स्वाभ्युपगतप्रमेयान्तरसाधकस्य हेतोर्व्याप्तिहीनेन व्याप्त्यनुमानेन भावसाधनसम्भवेनासिद्धिं वारयितुं व्याप्तिहीनत्वसाधनग्राहकप्रमाण-विरोधयोर्दूषणत्वाङ्गीकारात् । तत्प्रतिबन्ध्या तयोर्दूषणत्वस्यावर्जनीयत्वादिति द्रष्टव्यः ।

**आद.**— ॥ **निरनुयोज्यानुयोगत्वाभावादिति** । जातेस्तत्प्रभेदत्वादिति भावः॥ **उदयनस्त्विति** । सहचरितस्य कस्यचिद्धर्मस्येत्यनन्तरं व्यापकत्वं परित्यज्य तदिति पूरणीयम् । मानलक्षणटीकायां तथैवोक्तत्वादिति । सत्प्रतिपक्षारोपे साधर्म्यसमाभेदो बाधारोपे प्रकरणसमाभेद इति विवेकः ।

**श्रीनि.**— एके एकदेशिनः । एवमग्रेऽपि ॥ **अर्थान्तरत्वेनेति** । अश्रावणत्वसाध्यस्य कृतकत्वानुमानदूषणानुपयोगादिति भावः ॥ **द्वितीये त्विति** । तथात्वे तर्कपराहतिकथनेन प्रकृतोपयोग इति तुशब्दार्थः ॥ **उत्कर्षसम एवेति** । तत्राप्युक्तरीत्या तर्कपराहतिकथनादिति भावः । ननु तत्र स्थाल्यादिमत्त्वरूपभावधर्मोत्कर्षोऽत्र त्वश्रावणत्वरूपाभावधर्मस्येत्यतो भेद इत्यत आह ॥ **न हीति** ॥ **व्याप्त्यनपेक्षयेति** । दृष्टान्ते साधनेन सहचरितस्य कस्यचिद्धर्मस्य निवृत्त्येत्यनुवर्तते ॥ **साधनग्राहकेति** । धूमग्राहकप्रत्यक्षेत्यर्थः ॥ **स्वन्यायविरोध इति** । प्रतिवादिना ह्युक्तरीत्या साधनाभावे प्रसाध्य धूमः साध्यसाधको न स्वरूपासिद्धत्वाच्छब्दानित्यत्वसाधकचाक्षुषत्ववदिति वादिसाधनस्यासाधकत्वं साधनीयम् । तत्रापि स्वरूपासिद्ध्युद्भावनं सम्भवति । तथा हि । दृष्टान्ते चाक्षुषत्वे स्वरूपासिद्धत्वेन सहचरितस्य चाक्षुषत्वस्य निवृत्त्या धूमेऽपि स्वरूपासिद्धस्यापि निवृत्तिः । न तत्र व्याप्त्यभाव इति वाच्यम् । साहचर्यमात्रं प्रयोजकं न व्याप्तिरिति त्वयैवोक्तत्वादिति । तथा च साहचर्यमात्रेण साधनाभावसाधनमिति तद्वाक्यन्यायेन नायं साधकोऽसिद्धत्वादिति तद्वाक्यस्य विरोधात्स्वन्यायविरोधान्तर्भाव इति भावः ।

**वि.**— ॥ **पक्षादिष्टधर्मापकर्षणमिति** । वादिसामर्थ्येनेति वक्तव्यम् । अन्यथा हेत्वन्तरेणाविशेषापादनरूपविशेषसमजातितो भेदाभावप्रसङ्गात् । इष्टस्य पक्षेऽभ्युपगतस्य धर्मस्य पक्षादाकर्षणं पक्षे तदभावापादनमित्यर्थः ॥ **अत्रेति** । कृतकत्वादेव शब्दः श्रावणोऽपि न स्यादिति जातिवादिनोक्तौ वादिना प्रष्टव्यमित्यर्थः । किमिदं प्रष्टव्यमिति जिज्ञासायामाह ॥ **किमिदमिति** । इदं तर्हि तत एव तद्वदेव शब्दः श्रावणोऽपि मा भूदिति वादिनोक्तमित्यर्थः । साधनं साधनानुमानमुतापादनं तर्को वेति वक्तव्यमिति पूर्वेणान्वयः ॥ **अर्थान्तरत्वेनेति** । शब्दस्यानित्यत्वे साधिते तदश्रावणत्वसाधनस्य प्रकृतानुपयुक्तोक्तित्वेन निरनुयोज्यानुयोगरूपजातित्वाभावादित्यर्थः । जातिर्निरनुयोज्यानुयोग प्रभेदत्वेनोक्तापकर्षसमजातेरर्थान्तरतया निग्रहस्थानत्वेन जातित्वमेव न स्यादिति भावः ॥ **द्वितीयेत्विति** ॥ **इदमापादनमिति** । द्वितीये तु पक्षेऽयं वादिसाधनसामर्थ्येन पक्षेऽश्रावणत्वापादनरूपोऽपकर्षसम उत्कर्षसम एव । वादिसाधनसामर्थ्येन दृष्टान्तगतस्याश्रावणत्वस्य पक्षेऽसत्त्वापादनरूपादुत्कर्षसम एव न ततोऽतिरिक्त इत्यर्थः । ननु वादिसाधनसामर्थ्येन दृष्टान्तात्पक्षेऽनिष्टस्य

भावरूपधर्मस्योत्कर्ष उत्कर्षसमः । वादिसाधनसामर्थ्येनानिष्टस्याभावरूपे धर्मस्य दृष्टान्तात्पक्षे उत्कर्षस्त्वपकर्षसम इत्यनयोरस्ति भेद इत्यत आह ॥ **न हीति** । अभावस्योत्कर्षोऽभावोत्कर्ष इत्येतावता वैचित्र्येणान्वययोर्भेदो न हि सम्भवतीत्यर्थः । अन्यथा भावे द्रव्याद्यनेकवैचित्र्यसद्भावाद-भावेऽन्योन्याभावत्वाद्यनेकवैचित्र्य सद्भावादुत्कर्ष समाया अपकर्षसमायाश्चानेकजातितापातादिति भावः ॥ **उदयनस्त्विति** । अस्याहेत्यन्वयः ॥ **दृष्टान्त इति** । साध्येन साधनेन वा सहचरितस्य साध्यसाधनयोरन्यतरेण सहचरितस्येत्यर्थः । साध्यसाधनान्यतरव्यापकनिवृत्त्या पक्षे साध्यसाधन-योरन्यतराभावसाधने सदुत्तरेऽतिव्याप्तिपरिहाराय सहचरितस्य धर्मस्य निवृत्तत्वेति विशेषणम् । दृष्टान्तपदं दृष्टान्ते साध्यसाधनयोः सत्त्वसम्भवेनोपात्तम् । न तु लक्षणशरीरप्रवेशाभिप्रायेण । परस्पराव्याप्तिपरिहारायान्यतरपदम् । तत्रेति । साध्याभावसाधनाभावयोर्मध्य इत्यर्थः ॥ **इदमप्य-सदिति।** उदयनोक्तलक्षणमपि दुष्टमित्यर्थः । साध्याभावसाधनपक्षे साधर्म्यसमप्रकरणसमाभ्या-मागमनमभ्युपेतयुक्ताङ्गेन प्रतिपक्षचोदनं साधर्म्यसममधिकबलेन बाधचोदनं प्रकरणसमस्ताभ्यां भेदा-भावादित्यर्थः । साधर्म्यसमे प्रकरणसमेऽप्यतिव्याप्तेरुदय नोक्तापकर्षसमलक्षणं वाऽसदिति भावः ॥ **तस्मादिति** । पूर्वोक्तापकर्षसमलक्षणस्य दुष्टत्वादित्यर्थः । व्याप्त्यनपेक्षया साधनव्याप्त्यनपेक्षा-रहितयेत्यर्थः । कस्यचिद्धर्मस्य निवृत्त्यनुवर्तने । एतेनेत्यनेन साध्याभावसाधनं व्यावर्तयति । विपक्षा-भावसाधनाभावस्यादोषत्वात् । तद्व्यावृत्त्यर्थं पक्षपदोपादानम् । साधनव्यापकनिवृत्त्या पक्षे साधना-भावसाधने सद्दूषणेऽतिव्याप्तिवारणाय व्याप्त्यनपेक्षयेति विशेषणम् । व्याप्तिरहितयेत्युक्तावपि तद्व्यवच्छेदो भवति । तथाऽपि रहितसाधनसहचरितस्य कस्यचिद्धर्मस्य निवृत्याऽतिव्याप्तिसत्त्वाभि-मानेन तथा परोक्षसाधनाभावसाधनस्य सद्दूषणत्वात् । तद्व्यवच्छेदाय व्याप्त्यपेक्षरहितयेत्युक्तम् । व्याप्त्यपेक्षा व्याप्त्यङ्गीकारस्ततः स्वविशेषणेन तद्व्यवच्छेदः ॥ **तत्रेति** । व्याप्त्यनपेक्षया कस्य-चिन्निवृत्त्या पक्षे साधनाभावसाधने कृते त्वित्यर्थः । व्याप्त्यभावः कस्यचिन्निवृत्तेः साधनाभावेन व्याप्त्यभावः । साधनग्राहकप्रमाणविरोधश्च पक्षे साधनसद्भावावेदकप्रमाण विरोधश्चेत्युत्तरं दूषणं वक्तव्यमित्यर्थः ॥ **साहचर्यमेवेति** । कस्यचिद्धर्मस्य निवृत्तेः साधनाभावेन साहचर्यमेव प्रयोजकमेव साधनाभावसाधने नियामकम् । किं व्याप्त्यादिना । अव्यभिचरितत्वविशिष्टसाहचर्येणादिशब्दोक्त-प्रमाणविरोधेन च किं न किमपीति वदतो जातिवादिनः स्वन्यायविरोधो भवतीत्यर्थः । कथमत्र स्वन्यायविरोधः । इत्थम् । वादिसाधनं धूमवत्त्वं न स्वसाध्यसाधकमसिद्धत्वाच्छब्दानित्यत्वसाधक-चाक्षुषत्ववदिति हि जातिवादिनो विवक्षितम् । अत्र दृष्टान्तभूते चाक्षुषत्वेऽसिद्धत्वेन सहचरितस्य जातित्वस्य पक्षे धूमवत्त्वे निवृत्त्याऽसिद्धत्वरूपभाव साधनाभावसाधनसम्भवात्स्वोक्तरीत्या स्ववचनस्य विरोधो भवतीत्यपकर्षसमः स्वन्यायविरोध इति ।

**(५०) प्र.प.— ॥ २० ॥ (२) (५) ॥ वर्ण्यसमः ॥ पक्षवद्दृष्टान्तस्यापि साध्यत्वचोदनं वर्ण्यसम इत्येके । तदसत् । दृष्टान्ते साध्यसाधनविप्रतिपत्त्या चोदने सदुत्तरत्वात् । एवमेव चोदनस्य निर्बीजतयाऽसम्भवदुक्तिकत्वात् । एवं तेनैव हेतुना साध्यत्वचोदनमपि निर्बीजम् । पक्षे हेतुः साध्येन सहचरित उपलब्धो दृष्टान्तस्यापि तदापादयतीत्येवं चोदनायामुत्कर्षसम एव । पक्षे दृष्टान्ते चोत्कर्षणमित्येतावता भेदेऽतिप्रसङ्गः । साध्यसमाच्च भेदाभावः । तस्मात्पक्षमात्र विवक्षितासिद्धार्थत्वादिरूपवद्धेतुमत्त्वतदभावयोर्दृष्टान्तस्य साध्यत्वापादनं वर्ण्यसम इत्युदयनः । यथाऽसिद्धार्थं धूमवत्त्वं पर्वत इव महानसेऽस्ति चेत्सोऽपि साध्यवत्तया साध्यः स्यात् । न चेत्साधनवत्तया साध्यः स्यादिति । अत्रापि हेतुस्वरूपस्य सद्भावमात्रेण दृष्टान्तत्वोपपत्तौ रूपविशेषचिन्ता व्यर्थेति वाच्यम् । तदावश्यकत्वाभ्युपगमे तु स्वन्यायविरोध इति ।**

जना.— साध्यत्वचोदनं साध्यवत्तया साधनीयत्वचोदनमित्यर्थः । दृष्टान्ते साध्यसाधन-विप्रतिपत्त्या साध्यसाधनवत्तया साध्यत्वचोदनं वर्ण्यसमो वेति विप्रतिपत्त्यभावेऽपि तथा चोदनं वेति विकल्प्याद्यं निराह ॥ **दृष्टान्त इति** । द्वितीयं निराह ॥ **एवमेवेति** । विप्रतिपत्त्यभावेऽपीत्यर्थः । स्थापनावादिप्रयुक्तेनैव हेतुना पक्षवद्दृष्टान्तस्यापि साध्यत्वचोदनं वर्ण्यसम इति लक्षणान्तरं निराकरोति ॥ **एवमिति** । पूर्वोक्तविकल्पेनेत्यर्थः । बीजमाशङ्क्य निराकरोति ॥ **पक्ष इति** । ननु दृष्टान्तगत-धर्मोत्कर्षणाभावात्कथमुत्कर्षसमत्वमित्यत आह ॥ **पक्ष इति** ॥ **अतिप्रसङ्ग इति** । तत्रापि चाक्षुष एव पक्षे दृष्टान्तत्वं तन्निष्ठधर्मोत्कर्षणमुत्कर्षसमो न त्वचाक्षुष इत्याद्यतिप्रसङ्ग इति भावः ॥ **तस्मादिति** । इतरलक्षणानां दुष्टत्वादित्यर्थः । पक्षमात्रे विवक्षितानीति सप्तमीतत्पुरुषः । असिद्धार्थत्वादीत्यादि-शब्देनारब्धसाध्यज्ञापनशक्तिमत्त्वं व्याप्तिग्राहकप्रमाणशून्यत्वं संशयसामान्यविषयत्वं स्वरूपभेदश्चेति चत्वारिरूपाणि गृह्यन्ते । तदुक्तं वरदराजेन ।

**असिद्धार्थत्वमारभ्य साध्यज्ञापनशक्तता ।**
**व्याप्तिप्रमाणशून्यत्वं संशयैकार्थता तथा ।**

स्वरूपभेदश्चेत्येतत्पक्षमात्रविवक्षितम् । हेतुरूपं स्वपक्षे तु तादृग्रूपविपर्यय इति । वर्ण्यसममुदाहृत्य दर्शयति ॥ **यथेत्यादिना** । असिद्धोऽर्थो विषयो वह्निलक्षणो यस्य तदसिद्धार्थमित्यर्थः ॥ **न चेदिति** । असिद्धार्थं धूमवत्त्वमित्यनुवर्तते । एतदेवोक्तं वरदराजेन ।

**हेतोस्तु यादृशं रूपं पक्षमात्रविवक्षितम् ।**
**तद्रूपहेतुना साध्यः सपक्षोऽप्यन्यथा पुनः ।**
**भवेत्साधनवैकल्यमिति वर्ण्यसमोदय ॥** इति ।

असामर्थ्यद्वयं वक्तुमुत्तरकथाप्रवृत्तिप्रकारमाह ॥ **अत्रापीति ॥ रूपविशेषचिन्तेति ।** असिद्धार्थत्वादिरूपविशेष चिन्तेत्यर्थः ॥ **स्वन्यायविरोध इति ।** नायं दृष्टान्तः साधनागङ्गम् । साध्यविकलत्वात्सम्मतवदिति त्वदीयदृष्टान्तेऽपि साध्यविकलत्वस्य वक्तुं शक्यत्वात्स्वन्यायविरोध इत्यर्थः ।

**राघ.—** साध्यत्वचोदनं साध्यसाधनवत्त्वेन साध्यत्वापादनम् । साध्यवत्त्वेन साध्यत्वापादनं वेत्यर्थः । विवादे सति साध्यत्वापादनं वा तदभावे वा । आद्य आह ॥ **दृष्टान्त इति ।** अन्त्य आह ॥ **एवमेवेति ।** विवादाभावेऽपीत्यर्थः । परोक्तधूमवत्त्वादिहेतुरेव बीजमित्यत आह ॥ **एवं तेनैवेति ।** सबीजतामाशङ्कते ॥ **पक्षे हेतुरिति ॥ तदापादयतीति ।** साध्यत्वमापादयतीत्यपि चोदनायामित्यर्थः ॥ **अतिप्रसङ्ग इति ।** दृष्टान्तहेतुपक्षाणां साध्यत्वापादनरूपाया वक्ष्यमाणसाध्यसमजातेरपि दृष्टान्तादिभेदेन भेदप्रसङ्ग इत्यर्थः ॥ **साध्यसम(मा)श्चेति ।** चशब्दो भेदाभावश्चेति भिन्नक्रमे । तत्रापि दृष्टान्तादेः साध्यत्वापादनस्य वक्ष्यमाणत्वादिति भावः ॥ **पक्षमात्र इति ।** आदिपदेनासिद्धार्थकत्वमारब्धकार्यज्ञापनशक्तिमत्त्वं व्याप्तिग्राहकप्रमाणशून्यत्वं सन्दिग्धविषयकत्वमित्यादिरूपवत्त्वं विवक्षितम् । तादृशरूपयुक्तहेतोर्दृष्टान्ते सत्त्वासत्त्वाभ्यां दृष्टान्तस्य साध्यवत्त्वेन साधनवत्त्वेन वा साध्यत्वापादनमित्यर्थः ॥ **सोऽपि साध्यवत्तयेति ।** असिद्धार्थकत्वं नामानिश्चितसाध्यधर्मकत्वं तादृशरूपविशिष्टहेतोर्दृष्टान्ते सत्त्वेन कथं न साध्यवत्तया साध्येत । अन्यथा दृष्टान्तानुपपत्तेरिति भावः ॥ **न चेदिति ।** तादृशधूमवत्त्वमित्यनुषङ्गः । अन्यथा साधनविकलः स्यादिति भावः । अत्र जातौ । दृष्टान्ते साध्यवैकल्यं साधनवैकल्यं वाऽऽरोप्यमिति भावः । प्रत्युत्तरप्रकारमाह ॥ **अत्रेति ।** एतज्जात्युत्तरविषय इति वाच्यमित्यन्वयः ॥ **स्वन्यायविरोध इति ।** जातिवादिना हि साध्यवैकल्यारोपपक्षे धूमवत्त्वं न साध्यसाधकम् । साध्यरहितवृत्तित्वात् । शब्दानित्यत्वासाधकप्रमेयत्ववदिति प्रतिषेधे कृते सति साध्यरहितवृत्तित्वहेतुरपि त्वदभिमतपक्षमात्र विवक्षितसिद्धार्थत्वादिरूप विशिष्टे दृष्टान्तेऽस्ति चेत्सोऽपि साध्यवत्तया साध्येत । अन्यथा साध्यविकलो दृष्टान्तः स्यात् । न चेत्साधनवत्तया साध्येत । अन्यथा साधनहीनो दृष्टान्तः स्यादिति वक्तुं शक्यत्वात्स्वन्याय विरोध इत्यर्थः । स्वव्याघात इति वक्तव्येऽप्येवमुक्तिरन्तर्भावसूचनाय । एवं सर्वत्र विज्ञेयम् ।

**विज.— ॥ साध्यत्वेति ।** साध्यसाधनवत्तया साध्यपादनमित्यर्थः । तेनैव हेतुना साध्यत्वापादनं लक्षणमिति दूषयति ॥ **एवं तेनैवेति ॥ पक्ष इति ।** सङ्ग्राहकं लक्षणं प्रागेवोक्तमिति भावः ॥ **साध्येति ।** दृष्टान्तस्यापि साध्यत्वापादनमिति मते एतत् ॥ **तस्मादिति ।** पक्षमात्रवृत्तिहेतुस्वरूपस्य विवक्षितरूपमसिद्धार्थत्वादितद्वान्यो हेतुस्तद्वत्त्वतदभावाभ्यां साध्यसाधनवत्तया दृष्टान्तस्य

साधनत्वापादानमित्यर्थः । साध्यमसिद्धं तत्त्वमनिश्चितसाध्यवद्धर्मिवृत्तित्वमिति यावत् । तथाऽऽरब्ध-साध्या ज्ञापनशक्तत्वं सिषाधयिषितसाध्यज्ञापनशक्तत्वं व्याप्तिप्रमाशून्यत्वं पक्षीयसाध्यसाधनाधि-करण्यस्य निश्चेतुमशक्यत्वादपरं रूपम् । तथा संशयसमानविषयत्वसंशयविषय एवानुमितिजनकत्वं तथा भेदः पक्षीयसाधनव्यक्तिविशेषणमिति पक्षवृत्तिरूपहेतुरूपाणि । एतद्विपरीतदृष्टान्तहेतुरूपपञ्चक-मयुक्ताङ्गाधिकत्वमत्राह ।। **अत्रापीति** । दृष्टान्तगतहेतावसिद्धार्थत्वस्यायुक्तस्यैवाभ्युपगमोऽत्रेति भावः ।

**वेदे.**— ।। **साध्यत्वचोदनमिति** । साध्यसाधनवत्तया साध्यत्वापादनमित्यर्थः । अस्मिन्नेव लक्षणे तेनैव हेतुनेति विवक्षितमिति केनचिदुक्तम् । तन्मतं दूषयति ।। **एवं तेनैवेति** ।। सहचारलक्षणं बीजशङ्कयाऽऽह ।। **पक्ष इति** ।। **उत्कर्षसम एवेति** । पक्षदृष्टान्तयोरन्यतरस्मादन्यतरस्मिन्नुत्कर्ष एवोत्कर्षसमलक्षणत्वेन विवक्षितो न त्वदुक्त इति भावः । अत एवाह ।। **पक्ष इति** ।। **साध्य-समाचेति** । एतन्मते साध्यवद्दृष्टान्तस्यापि साध्यत्वचोदनं साध्यसम इति तल्लक्षणस्याभिप्रेतत्वा-त्तदभेदप्रसङ्ग इति भावः ।। **पक्षमात्रेति** । साध्यस्य प्रमाणान्तरेण निश्चितत्वेनासिद्धार्थत्वमेकं पक्षीयहेतो रूपं हेतुर्हि पक्षे साध्यज्ञापनाय प्रवृत्तिशक्तिर्भवतीत्यारब्धसाध्यज्ञापनशक्तित्वाख्यं द्वितीयम् । पक्षीयसाध्यस्य पूर्वमज्ञातत्वेन तन्निरूपितव्याप्तेः पक्षीयहेतुवृत्तितया ज्ञातुमशक्यत्वाद्व्याप्ति-ग्राहकप्रमाणशून्यत्वाभिमतं तृतीयम् । सन्दिग्धे न्यायप्रवृत्तेः पक्षीयहेतोः संशयसमानविषयत्वारब्धं चतुर्थं पक्षीयहेतुस्वरूपविशेषरूपं पञ्चममित्येतानि पक्षमात्रविवक्षितरूपाणि । एवं च पक्षमात्रे हेतोर्विवक्षितानि यान्यसिद्धार्थत्वादीनि रूपाणि तद्वान्यो हेतुस्तद्वत्त्वतदभावाभ्यां दृष्टान्तस्य साध्यसाधनवत्तया साध्यत्वापादनं वर्ण्यसम इत्यर्थः । उपलक्षणत्वेनैकं रूपं पुरस्कृत्योदाहरति ।। **यथेति** ।। **एवमग्रेऽपि** ।

**अभि.**— ।। **असम्भवदुक्तिकत्वादिति** । उत्थानबीजाभावेन वादिन एवंविधवचनायोगात् । न तु दूषणाय वर्ण्यसमः प्रकल्पनीय इति भावः । अस्मिन्नेव लक्षणे तेनैव हेतुनेति विशेषणं प्रक्षिप्य पक्षवद्दृष्टान्तस्यापि तेनैव हेतुना साध्यत्वचोदनं वर्ण्यसम इति कश्चित् । तन्मतं दूषयति ।। **एवं तेनैवेति** । ननु दृष्टान्तात्पक्षे उत्पर्षाभावात्कथमयमुत्कर्षसम इत्यत आह ।। **पक्ष इति** । वादिसाधन-सामर्थ्येन साध्यस्येव कस्यचित्काप्युत्कर्ष उत्कर्षसम इति । तल्लक्षणं प्रणेयमिति भावः ।। **साध्य-समाचेति** । साध्यवद्दृष्टान्तस्यापि साध्यत्वचोदनं साध्यसम इति । त्वदुक्तलक्षणस्य तत्रापि भावादिति ।। **तस्मात्पक्षमात्रेति** । स्वयमेव दृष्टान्ते पक्षमात्रविवक्षितसिद्धार्थत्वादिरूपवद्धेतुमत्त्वमस्ति न वेति विकल्प्य वादिनः पक्षस्वीकारमनपेक्ष्यैव पक्षद्वयेऽपि दृष्टान्तस्य साधनवैकल्येन साध्यत्वापादानम-

दृष्टान्तत्वसाधनं वर्ण्यसम इत्युदयनो वक्तीत्यर्थः । एतेन विलक्षपूर्वकं वाद्यङ्गीकारस्य दूषितत्वा-दृष्टान्तस्यादृष्टान्तत्वसाधनं न जात्युत्तरमिति परास्तम् । तथाऽपि प्रतिवादिना पृष्टेन स्वेनैव रूप-विशेषस्याङ्गीकृतत्वाद्रूपविशेषचिन्ता व्यर्थेति वक्तुमनवकाश इति परास्तम् । वाद्यङ्गीकारमनपेक्ष्यैव प्रतिवादिनैव दूषितत्वादसिद्धार्थधूमवत्त्वं महानसेऽस्तीति चेत् । साध्यवैकल्यापत्त्या तत्परिहाराय साध्यं साधनीयं साध्यसाधने च हेतुविकलत्वान्नायं दृष्टान्त इति भावः । एतेन रूपविशेषणा-वच्छिन्नहेतुमत्त्वस्य दृष्टान्तत्वविघातकत्वेन परेण दृष्टान्तत्वोपपत्त्यर्थं तदनङ्गीकारात् । हेतुस्वरूप-सद्भावमात्रेण दृष्टान्तोपपत्ताविति तदावश्यकत्वाभ्युपगम इति चायुक्तमिति परास्तम् । परेण रूप-विशेषावच्छिन्नहेतुमत्त्वस्य दृष्टान्तत्वप्रयोजकत्वमङ्गीकृत्य त्वत्पक्षे दृष्टान्ते हेत्वङ्गीकारे साध्य-वैकल्यापत्त्या त्वया हेतोरेवानङ्गीकर्तुं शक्यते ततश्च साधनवैकल्यान्नायं दृष्टान्त इति साधना-भावपर्यवसानेनैव दृष्टान्तदूषणाङ्गीकारात् ।। **यथाऽसिद्धार्थमिति** । आद्ये कथं स्वरूपासिद्धिः । तत्सत्त्वस्य तद्विरोधित्वादित्यत आह ।। **यथाऽसिद्धार्थमिति** । महानस इव सिद्धार्थं धूमवत्त्व-मस्तीत्यङ्गीक्रियते चेत् । सिद्धसाधनता स्यात् । न च तदिष्टमिति साध्यं सन्दिग्धासिद्धमिति वाच्यम् । तथा च साधनासम्भवात्पक्षस्य साध्यवत्तया साधनायोग्यत्वमिति भावः ।। **न चेदिति** । स्वरूपा-सिद्धत्वं स्पष्टमिति भावः । दृष्टान्तगतहेतोरसिद्धत्वादिकमावश्यकमित्यङ्गीकृत्यावस्थाने पाक्षिक-जयबुद्धिरुत्थानबीजं साधनवैकल्यमारोप्यं वादिनः । तद्भ्रमोत्पादः फलम् ।। **न चेदिति** । अस्मिन्पक्षे साधनवैकल्यं स्फुटमिति भावः । रूपविशेषचिन्ता व्यर्थेति । दृष्टान्ते रूपविशेषसत्त्वाग्रहो व्यर्थ इत्यर्थः । एतेन रूपविशेषसत्त्वमनपेक्षितमिति वक्तव्यत्वेन चिन्ता व्यर्थेति वचनमयुक्तमिति परास्तम् ।। **स्वन्यायविरोध इति** । पक्षे स्वयमेव परेण स्वाभ्युपगतसाधकानुमानदृष्टान्ते साधनवैकल्यपरिहाराय रूपविशेषस्यानपेक्षितत्वाङ्गीकारात्तत्प्रतिबन्दीविरोध इत्यर्थः ।

**आद.**— ।। **एवमेवेति** । असङ्गतेरेव प्रथममुपस्थितेर्जात्युत्तरोद्भावनस्यासम्भवादिति भावः । उत्थानबीजाभावाज्जात्युत्तरत्वमपि न सम्भवतीत्याह ।। **तेनैव हेतुनेति** ।। **निर्बीजमिति** । साधनाङ्ग-त्वेनाभिमानविषयधर्मशून्यत्वाद्धेतोः । न च केवलहेतोरेव साधकत्वमित्यभिमान एवोत्थान-बीज-मास्त्विति वाच्यम् । तथा सति पदार्थसामान्यस्यैव साधकत्वापत्त्या हेतुविशेषोपादनस्या-सम्भवात् । असम्भवदुक्तिकमूर्खादेरपि कथकत्वयोग्यत्वप्रसङ्गात् ।। **अतिप्रसङ्ग इति** । पक्षसमेषु तत्तद्रूपावच्छिन्ने-षूत्कर्षसम्भवात्तेषामप्यन्यत्वसम्भवादुक्तसङ्ख्याव्याहत्यापत्तेरिति भावः । न च पक्षसमेषु साध्यत्वा-पादने इष्टापत्तिरिति वाच्यम् । प्रकृतानुमितिविषयत्वरूपसाध्यत्वाभावेनेष्टापत्तेरयोगात् । ननु साध्य-वत्पक्षे साध्यवत्प्रयोजकत्वेन दृष्टस्य हेतोर्दृष्टान्तेऽपि सत्त्वात्साध्यत्वमापद्यते न केवलं सामानाधि-

करण्यमात्रेण । अतो नोत्कर्षसमाभेदः । उत्थानबीजस्य प्रयोजकसत्त्वाभिमानस्य भिन्नत्वादित्यत आह ॥ **साध्यसमाचेति** । आपादनविशेष्यभेदमात्रेण भेदे चोक्तरीत्याऽतिप्रसङ्ग इति प्रसङ्ग इति भावः। प्राचीनटीकायां तु पक्षवद्दृष्टान्तस्यापि साध्यत्वापादनं साध्यसम इति तल्लक्षणस्योक्तत्वात्साध्यसमाभेदप्रसङ्ग इत्यर्थ इत्युक्तम् ॥ **पक्षमात्रविवक्षितेति** । असिद्धार्थत्वमारब्धसाध्यज्ञापनशक्तिमत्त्वं व्याप्तिग्राहकप्रमाणशून्यत्वं संशयसमानविषयत्वं स्वरूपत्वं चेत्येतानि पक्षमात्रविवक्षितानि रूपाणि ।

**श्रीनि.**— ॥ **सदुत्तरत्वादिति** । व्याहत्यभावादिति भावः । एवमग्रेऽपि ॥ **एवमेवेति** । विप्रतिपत्त्यभावेऽपीत्यर्थः ॥ **निर्बीजतयेति** । उत्थानकारणशून्यतया साध्यत्वोक्तेरेवोत्थानायोगादित्यर्थः । ननु तत्र दृष्टान्तात्पक्षे उत्कर्षोऽत्र तु पक्षाद्दृष्टान्त इति भेद इत्यत आह ॥ **पक्ष इति** ॥ **अतिप्रसङ्गादिति** । वैधर्म्यदृष्टान्ते उत्कर्षस्यापि पृथग्गणनाप्रसङ्ग इति भावः ॥ **असिद्धार्थमिति** । असिद्धोऽनिश्चितो वह्निलक्षणोऽर्थो विषयो यस्य तत्तथोक्तम् ॥ **सोऽपीति** । असिद्धार्थधूमत्वे महानसस्य निश्चितसाध्यकत्वाभावेन तदर्थं स वह्निमत्त्वेन रूपेण साधनीयः । अन्यथा साध्यवैकल्यापातादिति भावः ॥ **स्वन्यायविरोध इति** । प्रतिवादिना ह्युक्तरीत्या साध्यसाधनवैकल्ये आपाद्य दृष्टान्तत्वाभिमतो महानसः साधनाङ्गं न भवति । साध्यसाधनविकलत्वान्महानसवदिति वाद्युक्तदृष्टान्तस्यानङ्गत्वं साधनीयम् । अत्रापि दृष्टान्तस्यानङ्गत्वं वक्तुं शक्यम् । तथा हि । असिद्धार्थं साध्यसाधनविकलत्वं महानस इव ह्रदेऽस्ति चेत्तर्हि सोऽपि साध्यवत्तया साध्यः स्यात् । अन्यथा साधनवैकल्यापातात् । न चेत्साधनवत्तया साध्यः स्यात् । अन्यथा साधनवैकल्यापातात् । न च हेतुस्वरूपसद्भावमात्रेण दृष्टान्तोपपत्तौ रूपविशेषचिन्ता व्यर्थेति वाच्यम् । रूपविशेषचिन्ताया अप्यावश्यकत्वस्य त्वयैवोक्तत्वादिति । तथा च रूपविशेषचिन्ताऽऽवश्यकीति तद्वाक्यन्यायेन नायं दृष्टान्तः साधनाङ्गमित्यादितद्वाक्यस्य विरोधात्स्वन्यायविरोधान्तर्भाव इति भावः ।

**वि.**— ॥ **पक्षवदिति** । पक्षवत्साध्यत्वचोदनं साध्यसाधनवत्त्वसम्पादनमित्यर्थः ॥ **दृष्टान्त इति** । पक्षवद्दृष्टान्ते साध्यसाधनयोर्विप्रतिपत्त्या चोदने साध्यत्वापादने कृते तस्य तदुत्तरत्वादित्यर्थः । विप्रतिपत्त्या चोदनस्य सदुत्तरत्वात् जातित्वस्यैवाभावेन वर्णसमरूपजातिविशेषत्वं सुतरां न सम्भवतीति भावः ॥ **एवमेवेति** । विप्रतिपत्त्या विना च दृष्टान्ते साद्यत्वापादनत्वस्य निर्बीजतयोत्थानकारणशून्यतयाऽसम्भावितोक्तिकत्वादित्यर्थः । तार्किकेण लक्ष्यं लक्षणमुत्थानं पातना चास्पदौ फलम् । फलमित्यङ्गमेतासामपि जातीनां समास्यङ्गकथनात् । सप्ताङ्गेषूत्थानबीजं जात्यङ्गमिति तद्रहितं साध्यत्वचोदनमसम्भवदुक्तित्वान्न जात्यन्तरमिति भावः ॥ **तेनैव हेतुनेति** । पक्षसाध्य-

साधनार्थं वादिना यो हेतुः प्रयुक्तस्तेनैव हेतुना दृष्टान्तस्य साध्यत्वोद्भावनमपि निर्बीजम् । उत्थानकारणशून्यमित्यर्थः । रासभादेरिवास्यापि हेतोः साध्यत्वयोरनेन कारणत्वमविशेषादिति भावः। वादिप्रयुक्तहेतुः पक्षे साध्यत्वेन सहचरितादृष्टेस्तेनासौ साध्यत्वापादने निमित्तं भविष्यतीति शङ्कते ॥ **पक्षहेतुरिति ॥ तदापादयतीति** । साध्यत्वमापादयतीत्यर्थः । साध्यत्वेन साहचर्यदर्शनं तत्रैव हेतुना साध्यत्वापादने कृते तदापादनमुत्कर्षसम एव न तु वर्णसम इत्यर्थः । वादिसाधनसामर्थ्येन तत्सहचरितस्य कस्यचिदनिष्टस्यापादनमुत्कर्षसमो भवति । वादिसामर्थ्येन दृष्टान्ते साध्यत्वापादनस्यापि तद्रूपत्वात् । उत्कर्षसमत्ववर्ण्यसमत्वयोर्भेदाङ्गीकारेऽतिप्रसङ्गश्चेति भावः । ननु तेनैव हेतुना दृष्टान्तगतधर्मस्य पक्षे उत्कर्षमुत्कर्षसमस्तेनैव हेतुना पक्षगतधर्मस्य दृष्टान्ते चेति पक्षे उत्कर्षं चेत्येतावता वैचित्र्येण भेदे उत्कर्षसमवर्ण्यसमयोरङ्गीकारेऽतिप्रसङ्गः । दृष्टान्तहेतुपक्षाणां साध्यत्वापादनरूपायाः साध्यसमजातिदृष्टान्तादिभेदेन भेदप्रसङ्गः साध्यसमाच्च भेदाभावस्तत्रातिव्याप्तिश्चेत्यर्थः। तेनैव हेतुना दृष्टान्तसाध्यत्वचोदनत्वस्य वर्ण्यसमलक्षणदृष्टान्तहेतुपक्षाणां साध्यत्वापादनरूपें साध्यसमे स्वतस्तद्भेदाभावे इत्यवगन्तव्यम् ॥ **तस्मादिति** । पूर्वोक्तलक्षणस्य दुष्टत्वात्पक्षमात्रे हेतोर्विवक्षितान्यभिमतानि यान्यसिद्धत्वादीनि रूपाण्यङ्गानि तद्वान्यो हेतुस्तत्सत्त्वासत्त्वयोर्दृष्टान्तस्य साध्यत्वापादनं साध्यसाधनवत्तया साध्यत्वापादनं वर्ण्यसम इत्युदयन आहेत्यर्थः । असिद्धत्वादीत्यत्रारब्धसाध्यज्ञापनशक्तित्वं व्याप्तिग्राहकप्रमाण शून्यत्वं संशयसमानाविषयत्वं संशयसमानविशेषविषयश्चेत्येतान्यादिपदोक्तानि हेतुसत्त्वासत्त्वयोरित्येवोक्तौ हेतुसत्त्वे दृष्टान्तस्य साध्यवत्तया साध्यत्वापादनस्य निर्बीजतयाऽसम्भवदुक्तिकत्वात् । दृष्टान्तस्य साध्यत्वोद्भावनसम्भवार्थं पक्षमात्रविवक्षितरूपवदिति विशेषणम् ॥ **महानसवदिति** । चेच्छब्दो यद्यर्थे । महानसे यद्यस्तीत्यर्थः ॥ **सोऽपीति** । तर्हि महानसोऽपीत्यर्थः ॥ **अत्रापीति** । एवमापादनेऽपीत्यर्थः । रूपविशेषचिन्ता दृष्टान्तगतहेतावसिद्धार्थत्वरूपविशेषाणां चिन्ता सत्त्वासत्त्वविचारो व्यर्थो निष्प्रयोजनो विवेक्तव्यमुत्तरवाच्यमित्यर्थः ॥ **तदावश्यकत्वाभ्युपगमेत्विति** । तस्य रूपविशेषचिन्ताया दृष्टान्तगतं हेत्ववश्यकार्यत्वाङ्गीकारे तु स्वन्यायविरोधो भवतीत्यर्थः । कथं स्वन्यायविरोध इति चेत् । इत्थम् । वादिसाधनं धूमवत्त्वं न स्वसाध्यसाधकम् । साध्यरहितवृत्तित्वाच्छब्दानित्यत्वसाधकप्रमेयत्ववदित्यादि जात्युत्तरस्यापि दृष्टान्तगतहेतौ स्वरूपविशेषचिन्ताया दूषणसम्भवात्स्वन्यायेन स्ववचनविरोधो भवतीतीयं जातिः स्वन्यायविरोधात्मकतृतीयजातावन्तर्भवतीति ।

**(५१) प्र.प.— ॥ २० ॥ (२) (६) अवर्ण्यसमः । दृष्टान्तवत्पक्षस्याप्यसाध्यत्वचोदनमवर्ण्यसम इत्येके । अत्रापि सिद्धत्वाभिमानेन चोदने सदुत्तरम् । अन्यथा निर्बीजत्वम् ।**

**साधनसाहचर्यबलेनापादने तूत्कर्षसम एव । तस्माद्दृष्टान्तमात्रविवक्षितसिद्धार्थत्वादिरूप-वद्धेतु-मत्त्वतदभावयोः पक्षस्यासाध्यत्वचोदनमवर्ण्यसम इत्युदयनः । यथा सिद्धार्थं धूमवत्त्वं महानस इव पर्वते वर्तते चेत्साध्यस्य सिद्धत्वादसाध्यत्वम् । न चेदुपायाभावादसाध्यत्वमिति । अस्यापि पूर्व-वदन्तर्भावो वाच्य इति ।**

जना.— ॥ **साधनसाहचर्यबलेनेति** । साधनस्यासाध्यत्वेन साकं दृष्टान्ते साहचर्यबलेनेत्यर्थः ॥ **असाध्यत्वमिति** । स्यादिति शेषः ॥ **न चेदिति** । धूमवत्त्वमित्यनुवर्तते ॥ **असाध्यत्वमिति** । पर्वतस्येति शेषः । एतदेवाह वरदराजः ।

> **सपक्षवृत्तिनो हेतोर्यादृग्रूपं विवक्षितम् ।**
> **पक्षेऽपि तादृगेव स्यादन्यथा हेत्वसिद्धता ।**
> **सपक्षवत्तदा साध्य इत्यवर्ण्यसमाकृति** ॥ इति ॥

**पूर्ववदिति** । वर्ण्यसमवदित्यर्थः ॥ **अन्तर्भाव इति** । स्वन्यायधिरोधान्तर्भाव इत्यर्थः । अन्तर्भाव-प्रकारस्तु नायं पक्षः साधनाङ्गम् । असिद्धहेतुकत्वात्सम्मतवदिति प्रतिषेधानुमानेऽपि पक्षस्या-साध्यत्वापातादिति ।

राघ.— ॥ **अन्यथेति** । सिद्धत्वाभिमानाभावेऽपि तदापादन इत्यर्थः ॥ **साधनेति** । दृष्टान्ते साधनस्य निश्चितसाध्यसाहचर्यमुपलब्धमिति तद्बलेन पक्षस्यासाध्यतापादन इत्यर्थः ॥ **उत्कर्षसम एवेति** । वादिसाधनबलेन दृष्टान्तात्कस्यचिदनिष्टधर्मस्य पक्ष उत्कर्षणरूपत्वादुत्कर्षसम एवायमित्यर्थः ॥ **सिद्धार्थत्वादीति** । निश्चितार्थकत्वमारब्धसाध्यज्ञापनशक्तिहीनत्वं व्याप्ति ग्राहकमानवत्त्वमित्यादि-रूपवद्धेतुमत्त्वतदभावयोर्निमित्तयोरित्यर्थः ॥ **अस्यापीति** । दृष्टान्ते प्रमितस्य हेतोः पक्षधर्मतामात्रेण साध्यसाधनसम्भवात्किं दृष्टान्तमात्रविवक्षितरूपचिन्तयेत्युत्तरं वाच्यम् । तदावश्यकत्वोक्तौ तु धूम-वत्त्वमसाधकं सिद्धविषयकत्वादसिद्धत्वाद्वा वह्निरनुष्णो जलत्वादिति वदिति जातिवादिनोक्ते प्रतिषेधानुमानेऽपि दृष्टान्ते विवक्षितसिद्धार्थकत्वादिरूपवद्धेतुः पक्षेऽस्ति चेदसाधकत्वेन धूमवत्त्व-मसाध्यं स्यात् । न चेदुपायाभावादसाध्यं स्यादिति स्वोक्तन्यायेन स्वस्य विरोध इति स्वन्याय-विरोधेऽन्तर्भावो वाच्य इत्यर्थः ।

**विज.**— ॥ **अस्यापीति** । अयुक्ताङ्गाधिकत्वं स्वन्यायविरोधेऽन्तर्भावश्च वाच्य इत्यर्थः ।

**वेदे.**— अत्रापि युक्ताङ्गाधिकत्वमाह ॥ **अत्रापीति** ॥ **दृष्टान्तमात्रेति** । पूर्वं वैपरीत्येन सिद्धार्थत्वप्रवृत्तसाध्यज्ञापनाय शक्तित्वाभावः । व्याप्तिग्राहकप्रमाणवत्त्वं निश्चयसमानविषयत्वं रूप विशेषश्चेत्येतानि हेतोर्दृष्टान्तमात्र विवक्षितानि रूपाणि द्रष्टव्यानि ॥ **अस्यापीति** । अयुक्ताङ्गाधिकत्वकथनपुरःसरमुद्भाव्योऽन्तर्भावश्च वाच्य इत्यर्थः ।

**विज.**— ॥ **अस्यापीति** । अयुक्ताङ्गाधिकत्वं स्वन्यायविरोधेऽन्तर्भावश्च वाच्य इत्यर्थः ।

**वेदे.**— अत्रापि युक्ताङ्गाधिकत्वमाह ॥ **अत्रापीति** ॥ **दृष्टान्तमात्रेति** । पूर्वं वैपरीत्येन सिद्धार्थत्वप्रवृत्तसाध्यज्ञापनाय शक्तित्वाभावः । व्याप्तिग्राहकप्रमाणवत्त्वं निश्चयसमानविषयत्वं रूपविशेषश्चेत्येतानि हेतोर्दृष्टान्तमात्रविवक्षितानि रूपाणि द्रष्टव्यानि ॥ **अस्यापीति** । अयुक्ताङ्गाधिकत्वकथनपुरः सरमुद्भाव्योऽन्तर्भावश्च वाच्य इत्यर्थः ।

**अभि.**— ॥ **तस्माद् दृष्टान्तमात्रेति** । पक्षे स्वयमेव दृष्टान्तमात्रविवक्षितसिद्धार्थत्वादिरूपवद्धेतुमत्त्वमस्तीति न वेति विकल्पवादिनः पक्षस्वीकारमनपेक्ष्यैव पक्षद्वयेऽप्यसाध्यत्वचोदनमवर्ण्यसम इत्युदयनो वक्तीत्यर्थः । नन्वाद्यपक्षे कथं साधनवैकल्यम् । साधनसत्त्वपक्षस्य तद्वैकल्यविरुद्धत्वादित्यत आहाद्ये कथं स्वरूपासिद्धिः । तत्सत्त्वस्य तद्विरोधत्वादत आह ॥ **यथा सिद्धार्थमिति** । महानस इव सिद्धार्थं धूमवत्त्वमस्तीत्यङ्गीक्रियते चेत्सिद्धसाधनता स्यात् । न च तदिष्टमिति साध्यं सन्दिग्धासिद्धमिति वाच्यम् । तथा च साधनासम्भवात्पक्षस्य साध्यवत्तया साधनायोग्यत्वमिति भावः ॥ **न चेदिति** । स्वरूपासिद्धत्वं स्पष्टमिति भावः । दृष्टान्ते विवक्षितरूपवद्धेतुमत्त्वाभावेन प्रत्यवस्थाने पाक्षिकजयबुद्धिरुत्थानबीजं स्वरूपासिद्धत्वमारोप्यम् । परस्य तद्भ्रान्त्युत्पादः फलम् ॥ **अस्यापीति** । अत्रापि हेतुस्वरूपसद्भावमात्रेण साधनत्वोपपत्तौ रूपविशेषचिन्ता व्यर्थेति वाच्यम् । तदावश्यकत्वाभ्युपगमे तु स्वन्यायविरोध इत्यन्तर्भावो वाच्य इत्यर्थः ।

**आद.**— ॥ **दृष्टान्तमात्रेति** । सिद्धार्थत्वं प्रवृत्तसाध्यज्ञापनशक्तिमत्त्वाभावः । व्याप्तिग्राहकप्रमाणवत्त्वं निश्चयसमानविषयत्वं स्वरूपं चेत्येतानि सपक्षमात्रवृत्तिरूपाणि ॥ **अस्यापीति** । स्वन्यायविरोध इत्यर्थः । अत्रापादकविशिष्टहेत्वभावस्य सिद्धत्वाद्वादिनः सिद्धत्वम् । अपकर्षसमायां तु व्यापकनिवृत्तिर्नापादिका येन सिद्धिः स्यात्किन्तु तत्त्वेन स्वाभिमतस्य निवृत्तिः साक्षिसिद्धैवेति भावः । उत्तरस्य वचनरूपत्वात्तस्योच्चारणेनैव सिद्धेर्युक्तित्वेनाभिमतस्य सिद्धत्वमेव । अङ्गं तत्प्रतिपादकत्वमुत्तरस्येति ज्ञातव्यम् ।

**श्रीनि.— ॥ अन्तर्भावो वाच्य इति ।** हेतुसद्भावमात्रेण पक्षत्वाद्युपपत्तौ रूपविशेषचिन्ता व्यर्था। तदावश्यकत्वाभ्युपगमे तु स्वन्यायविरोध इत्यन्तर्भावो वाच्य इत्यर्थः । अयमाशयः । अत्र हि प्रतिवादिनाऽऽद्ये सन्दिग्धसाध्यत्वाभावेन पर्वतस्यापक्षत्वं द्वितीये स्वरूपासिद्धिरित्युभयथाऽपि हेतोः पक्षधर्मत्वाभावमापाद्य नायं धूमः साध्यसाधकः पक्षधर्मताशून्यत्वाच्चाक्षुषत्ववदिति वादिसाधनस्या-साधकत्वं साधनीयम्। अयं दोषोऽत्रापि प्राप्नोति। तथा हि। सिद्धार्थत्वं पक्षधर्मताशून्यत्वं चाक्षुषत्व इव धूमेऽप्यस्ति न वा। अस्ति चेत्साध्यस्य सिद्धत्वादसाध्यत्वम्। द्वितीये उपायादसाध्यत्वम्। न च हेतुस्वरूपसद्भावमात्रेण पक्षत्वाद्युपपत्तौ रूपविशेषचिन्ता व्यर्थेति वाच्यम् । तस्यावश्यकत्वस्य त्वयैवोक्तत्वादिति । तथा च स्वरूपविशेषचिन्ताया आवश्यकत्वमिति तद्वाक्यन्यायेनैवायं धूमः साधनाङ्गमित्यादितद्वाक्यस्य विरोधात्स्वन्यायविरोधान्तर्भाव इति भावः ।

**वि.— ॥ असाध्यत्वचोदनमिति ।** साध्यवत्तयाऽन्यसाध्यत्वापादनमित्यर्थः ॥ **अत्रापीति ।** एवमापादनेऽपि सिद्धत्वाभिमानेन दृष्टान्त इव पक्षे साध्यत्वस्य निश्चितत्वदृष्ट्या चोदनेऽसाध्यत्वापादने सदुत्तरत्वम्। एवम्भूतापादनस्य सिद्धसाधनत्वोद्भावने पर्यवसानात्समीचीनदूषणत्वमित्यर्थः। तथा च नास्यासदुत्तरत्वरूपजातित्वमित्यर्थः ॥ **अन्यथेति ।** सिद्धत्वाभिमानेन विना पक्षस्यासाध्यत्वचोदन इत्यर्थः । निर्बीजत्वमुत्थानकारणशून्यत्वमित्यर्थः । तथा च कारणशून्यत्वादसम्भवदुक्तिकमिदं न जात्युत्तरमिति भावः ॥ **साधनसाहचर्यबलेनापादने त्विति ।** साधनस्य वादिहेतोः साहचर्यबलेन दृष्टान्ते साध्यत्वसकलज्ञानसामर्थ्येनापादने तु दृष्टान्तवत्पक्षस्याप्यसाध्यत्वचोदने तूत्कर्षसम एव न ततोऽतिरिक्तजातिरित्यर्थः। वादिसाधनसामर्थ्येन दृष्टान्तात्कस्यचिदनिष्टधर्मस्य पक्षे उत्कर्ष उत्कर्षसमः। अस्यापि तथात्वान्न ततोऽतिरिक्तत्वमिति भावः ॥ **तस्मादिति ।** केचित्पक्षोक्तस्यालक्षणस्या-युक्तत्वादित्यर्थः । दृष्टान्तमात्रविवक्षितसिद्धार्थत्वादिरूपवद्धेतुमत्त्व तदभावयोर्दृष्टान्तमात्रे विवक्षितानि सिद्धार्थत्वादीनि सिद्धार्थत्वमारब्धसाध्यज्ञापनशक्तिमत्त्वाभावो व्याप्तिग्राहकप्रमाणं निश्चयसमानविषयत्वं रूपभेदश्चैवमेवमात्मकानि यान्यङ्गानि तद्वतो हेतोः पक्षे सत्त्वासत्त्वयोः पक्षस्यासाध्यत्वचोदनं साध्यवत्तयाऽसाध्यत्वापादनमवर्ण्यसम इत्युदयनमतम् । पक्षे हेतुसत्त्वासत्त्वयोः पक्षस्यासाध्यत्वा-पादनस्य निर्बीजतयाऽसम्भवदुक्तिकत्वात्। तदसाध्यत्वोक्तिसम्भावनार्थं दृष्टान्तमात्रं विवक्षितरूपवदिति हेतुविशेषणम् । कुत्रास्यान्तर्भाव इति जिज्ञासायामाह ॥ **अस्यापीति ।** उदयनोक्तवर्णसमस्यापि पूर्ववदुदयनोक्तवर्ण्यसमवत्स्वन्याय विरोधात्मकतृतीयजातावन्तर्भावो वक्तव्य इत्यर्थः । उक्तरीत्या व्याप्यस्यासाध्यत्वमापादयतो जातिवादिनो नेदं धूमवत्त्वं साध्यसाधकं सिद्धसाधनत्वादसिद्धत्वाद्वा-सम्मतवदिति विवक्षितम् । अस्य प्रतिषेधहेतोरपि पक्षे दृष्टान्तमात्ररूपवद्धेतुसत्त्वासत्त्वयोः पक्षस्या-साध्यत्वापादन सम्भवादवर्ण्यसमजातेः स्वन्यायविरोधरूपतृतीयजातावन्तर्भाव इत्यनुसन्धेयम्।

**(५२) प्र.प.— ॥ २० ॥ (२) (७) विकल्पसमः । धर्माणां धर्मान्तरव्यभिचारदर्शनेन साधनस्यापि साध्यव्यभिचारचोदनं विकल्पसमः । यथा कृतकत्वाविशेषेऽपि किञ्चिन्मूर्तं दृष्टं घटादि किञ्चिदमूर्तं रूपादि तथा कृतकमपि किञ्चिन्नित्यं किञ्चिदनित्यं किं न स्यादिति । अत्र शङ्कामात्रं चेत्सदुत्तरमेव । उपाध्यभावादिना समाधेयं धर्मान्तरव्यभिचारेणास्यापि व्यभिचार साधनं चेद्धर्मान्तरव्यभिचारो हेतुर्वा स्याद्दृष्टान्तो वा । आद्ये व्याप्त्यभावो वक्तव्यः । द्वितीये हेत्वभावान्न्यूनम् । हेतोरनङ्गत्वादिहेत्वङ्गीकारे प्रतिदृष्टान्तसमसाङ्कर्यम् । धर्मत्वादिहेत्वङ्गीकारे व्याप्त्यभाव एव । तदनङ्गीकारे तु स्वन्यायविरोध इति ।**

**जना.— ॥ धर्माणामिति** । हेतूकृतानां तदतिरिक्तानां वा केषाञ्चिद्धर्माणामिति भावः ॥ **मूर्तमिति** । परिच्छिन्नपरिमाणोपेतमित्यर्थः ॥ **अमूर्तमिति** । परिच्छिन्नपरिमाणयोगरहितमित्यर्थः । एतदेवाह वरदराजोऽपि ।

**धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः ।**
**हेतोश्च व्यभिचारोक्तिर्विकल्पसमजातित ॥** इति ।

असामर्थ्यद्वयं दर्शयितुमुत्तरकथाप्रकारमाह ॥ **उपाध्यभावादिनेति** । आदिशब्देन विपक्षे बाधकस्तर्को गृह्यते ॥ **हेतुर्वा स्यादिति** । कृतकत्वमनित्यत्वव्यभिचारि मूर्तत्वव्यभिचारित्वादिति हेतुरित्यर्थः ॥ **दृष्टान्तो वेति** । कृतकत्वमनित्यत्वव्यभिचारि यथा मूर्तत्वव्यभिचारीति दृष्टान्तो वेत्यर्थः । **व्याप्त्यभाव इति** । यत्र मूर्तत्वव्यभिचारित्वं तत्रानित्यत्व व्यभिचारित्वमिति व्याप्त्यभाव इत्यर्थः ॥ **प्रतिदृष्टान्तेति** । अनङ्गत्वधिया हेतोः प्रतिदृष्टान्तमात्रतः । प्रत्यवस्थानमाचख्युः प्रतिदृष्टान्तलक्षणमिति तल्लक्षणादिति भावः ॥ **तदनङ्गीकार इति** । व्याप्तेरङ्गत्वानङ्गीकार इत्यर्थः ॥ **स्वन्यायविरोध इति** । कृतकत्वं न साध्यसाधकम् । अनैकान्त्यादिति हेतोरपि धर्मत्वादिहेतुना साध्यव्यभिचारापत्त्या व्याघात इत्यर्थः ।

**राघ.— ॥ धर्माणामिति** । धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतो हेतोः स्वव्यभिचारोक्तिर्विकल्पसमजातितेत्युक्तदिशा धर्मस्येति वाच्ये बहुवचनोक्तेरयमर्थः । हेतुभूतधर्मस्य धर्मान्तरेण धर्मान्तरस्य साध्यधर्मेण धर्मान्तरस्य धर्मान्तरेण वा व्यभिचारदर्शनेनेति ध्येयम् । एतच्च सदुत्तरव्यावृत्त्यर्थमुक्तम् । तत्राद्यमात्रस्योदाहरणमाह ॥ **यथा कृतकत्वेति** । यथा कृतकत्वं मूर्तत्वामूर्तत्वधर्माभ्यां रूपादौ घटादौ व्यभिचरिततया दृश्यते । तथा नित्यत्वानित्यत्वे च धर्मौ स्थलभेदेन व्यभिचरेदेवं च शब्दोऽनित्यः कृतकत्वादित्यत्र शब्देऽनित्यत्वमपि किं न व्यभिचरेदित्यर्थः । उपाध्य-

भावादिनेत्यादिपदेनानुकूलतर्कग्रहः ॥ **हेतुर्वा स्यादिति** । कृतकत्वस्य मूर्तत्वादि धर्मान्तरव्यभिचाराद्धेतोरनित्यत्वव्यभिचारोऽपि स्यादिति साधनं वा तद्व्यभिचारवदनित्यत्वव्यभिचारोऽपीति दृष्टान्तेन साधनं वेत्यर्थः ॥ **प्रतिदृष्टान्तेति** । प्रतिदृष्टान्तमात्रेण प्रत्यवस्थानरूपत्वेन तल्लक्षणस्य वक्ष्यमाणत्वादिति भावः ॥ **धर्मत्वादीति** । कृतकत्वमनित्यत्वव्यभिचारिधर्मत्वात् । वस्तुत्वाद्वा । अनित्यत्वव्यभिचार्यमूर्तत्ववदिति हेत्वङ्गीकारे व्याप्तिरूपयुक्ताङ्गहीनत्वं वाच्यमित्यर्थः । तदनङ्गीकारे व्याप्त्यनङ्गीकारे त्वित्यर्थः । कृतकत्वं न साध्यसाधकम् । व्यभिचारित्वात् । वह्न्यसाधकप्रमेयत्वहेतुवदिति जातिवाद्युक्तप्रतिषेधानुमानेऽपि प्रमेयत्वस्य घटत्वादिधर्मव्यभिचारात् । त्वदुक्तव्यभिचारित्वादित्युक्त हेतुरप्यसाधनरूप साध्यव्यभिचारी स्यादिति स्वन्यायेनैव स्वस्य विरोध इत्यर्थः ।

**विज.**— ॥ **न्यूनमिति** । हेत्वनुक्तेरिति भावः ॥ **प्रतिदृष्टान्तेति** । प्रतिदृष्टान्तेनैव प्रत्यवस्थानादिति भावः ॥ **साध्यवदिति** । पक्षवदित्यर्थः ।

**वेदे.**— ॥ **धर्माणामिति** । अत्र व्यभिचारदर्शनेनेत्यस्यायमर्थः । साधनस्य धर्मान्तरेण धर्मान्तरस्य साध्यधर्मेण धर्मान्तरस्य धर्मान्तरेण वा व्यभिचारदर्शनेनेति । अत्रोपाधिव्यभिचारदर्शनेन साधनस्य साध्यव्यभिचारस्वन्यायविरोधचोदनेन सदुत्तरेऽतिव्याप्तिपरिहाराय व्यभिचारदर्शनेनेत्यन्तम् । तथा चानुपाधिरूपयत्किञ्चिद्धर्मव्यभिचारदर्शनहेतुकं हेतोः साध्यव्यभिचारचोदनं विकल्पसमजातिरित्युक्तं भवति । उक्तक्षणत्वेन साधनस्य धर्मान्तरेण व्यभिचारदर्शनेन साध्यव्यभिचारचोदनमुदाहरति ॥ **यथेति** ॥ **धर्मान्तरव्यभिचारेणेति** । उक्तव्यभिचारत्रयेणेत्यर्थः ॥ **प्रतिदृष्टान्तेति** । तत्रापि प्रतिदृष्टान्तेनैव प्रत्यवस्थानादिति भावः ।

**अभि.**— ॥ **धर्माणामिति** । धर्मान्तरस्य धर्मान्तरेण व्यभिचारं प्रदर्श्य साध्यसाधनयोर्व्यभिचारचोदने पाक्षिकजयबुद्धिहेतुर्व्याप्यत्वासिद्धत्वमारोप्यम् ॥ **सदुत्तरमेवेति** । प्रष्टव्यप्रश्न एव न जातिरित्यर्थः । एतेन शङ्काया अनुत्तरत्वाच्छङ्कामात्रं चेत्सदुत्तरमेवेत्युक्तमयुक्तमिति परास्तम् । प्रश्नत्वेऽपि कुतो न जातित्वमित्यत आह ॥ **उपाध्यभावादिनेति** । पराजयहेतुत्वाभावान्निग्रहस्थानत्वमेव नास्ति । कुतो जात्युत्तरमिति भावः ॥ **धर्मान्तरव्यभिचारेणेति** । व्यभिचारदर्शनेनेत्यर्थः । धर्मान्तरव्यभिचारदर्शनेनास्यापि व्यभिचारसाधनं चेद्वक्तव्यमित्यर्थः । किं वक्तव्यमित्यत आह ॥ **धर्मान्तरव्यभिचार इति** । लक्षणपर्यालोचनया धर्मान्तरव्यभिचारस्य हेतुत्वं तावद्गम्यते । अधोदेशे नदीपूरदर्शनेनोर्ध्वदेशवृष्ट्यनुमानमिति वाक्यान्नदीपूरस्य हेतुत्वावगतिदर्शनात् । तथा दृष्टान्तत्वमपि गम्यते । देवदत्तदर्शनेन यज्ञदत्तं ज्ञातवानित्यादिवाक्याद्देवदत्तस्य दृष्टान्तत्वावगतिदर्शनात् । न च

निर्णायकादर्शनमिति सन्देहसद्भावप्रश्नः । लक्षणवाक्यलब्धव्यभिचारस्य दृष्टान्तत्वं न महानसादिवन्मुख्यम् । अपि तु साध्योपस्थितिहेतुविषयत्वमात्ररूपं पारिभाषिकम् । एतेन धर्मान्तरव्यभिचारस्य लक्षणपर्यालोचनया हेतुत्वनिर्णयेन संशयभावात्प्रश्नोऽनुपपन्न इति परास्तम् । लक्षणपर्यालोचनयैवोक्तदिशा संशयलाभात् । तथोदाहरणवाक्ये किञ्चित्पदोक्तयोर्मूर्तामूर्तयोर्यथा तथाशब्दसमभिव्याहारेण दृष्टान्तत्वमात्र प्रसक्तिसद्भावेऽपि न धर्मान्तरव्यभिचारस्य तत्प्रसक्तिः । यथातथाशब्दसमभिव्याहाराभावात् । अनित्यत्वव्यभिचाररूपसाध्यनिश्चयस्य तत्राभावाच्चेति परास्तम् । लक्षणवाक्येन पारिभाषिकदृष्टान्तत्वलाभाङ्गीकारेण मुख्यदृष्टान्तत्वलाभ इत्यनङ्गीकारात् । अत एव साध्यसाधनवैकल्यादि दृष्टान्तदोषो नाभिहितः ॥ **व्याप्त्यभाव इति** । आदौ व्याप्त्यभाव एव वक्तव्यो न जातित्वम् । परचित्तवर्तिनो व्याप्त्यनभ्युपगमस्याद्यापि ज्ञातुमशक्यत्वादिति भावः ॥ **हेतोरनङ्गत्व इति** । तदा जातित्वं वक्तव्यम् । किं नाम प्रतिदृष्टान्तसम एव वक्तव्यः । न तु विकल्पसम इति प्रभेदान्तरं कल्पनीयमिति भावः ॥ **स्वन्यायविरोध इति** । स्वाभिमतप्रमेयान्तरं निर्वाहव्याप्तेः परेणाङ्गीकारात्तत्प्रतिबन्दीविरोध इत्यर्थः ।

**श्रीनि.—** ॥ **धर्मत्वादिहेतुत्वाङ्गीकार इति** । अनित्यत्वं कृतकत्वव्यापकं न भवति । धर्मत्वान्मूर्तत्ववदिति साधन इत्यर्थः ॥ **स्वन्यायविरोध इति** । प्रतिवादिना ह्युक्तरीत्या कृतकत्वस्यानित्यत्वव्यभिचारित्वमभिधाय नेदं कृतकत्वं साध्यसाधकमनैकान्तिकत्वात् । धूमसाधनवह्निवदिति वादिसाधनस्यासाधकत्वं साधनीयम् । तत्रापि व्यभिचारो वक्तुं शक्यते । तथा हि । अनैकान्तिकत्वाविशेषेऽपि किञ्चिद्द्रव्यं दृष्टम् । वह्न्यादि किञ्चिद्द्रव्यं प्रमेयत्वादि । तथाऽनैकान्तिकमपि किञ्चित्साध्यसाधकं किञ्चिदसाधकं किं न स्यात् । एवं च धर्मत्वासाध्यसाधकत्व मनैकान्तिकत्वाव्यापकमेव । न चात्र व्याप्तिर्नास्तीति वाच्यम् । तदनावश्यकत्वस्य त्वयैवोक्तत्वादिति । तथा च धर्मान्तरव्यभिचार एव प्रयोजकः किं व्याप्त्येति तद्वाक्यन्यायेन नेदं कृतकत्वं साधनाङ्गमित्यादितद्वाक्यस्यविरोधात् स्वन्याय विरोधान्तर्भाव इति भावः ।

**वि.—** ॥ **धर्माणां धर्मान्तरव्यभिचारदर्शनेनेति** । अत्र षष्ठ्यन्तधर्मपदहेतुरूपधर्मपरम् । धर्मान्तरपरं च रूपहेतुरूपधर्मस्य धर्मान्तरेण वा धर्मान्तरस्य साधर्म्येण वा धर्मान्तरस्य धर्मान्तरेण वा व्यभिचारदर्शनेन हेतोरपि साध्यव्यभिचारचोदनं विकल्पसमजातिरित्यर्थः । सद्दूषणानैकान्तिकोद्भावनव्यवच्छेदाय तृतीयान्तं विशेषणम् । तत्र हेतोर्धर्मान्तरव्यभिचारदर्शनेन साध्यव्यभिचारचोदनस्योदाहरणमाह ॥ **यथा कृतकत्वाविशेषेऽपीति** ॥ **अत्र शङ्कामात्रं चेदिति** । चेच्छब्दो यद्यर्थे । अत्र

धर्माणां धर्मान्तरव्यभिचारदर्शनेन साधनस्य साध्यव्यभिचारचोदने कृते तच्चोदनं यदि हेतोः साध्यव्यभिचारशङ्कामात्रं तर्ह्युत्तरमेव न जात्युत्तरमित्यर्थः । मात्रपदं व्यभिचारसाधननिवृत्तिपरम् । ननु यदीदं सदुत्तरं तर्हि सदनुमानजातमुष्णं स्यात् । एतादृशशङ्कायाः सर्वत्र सम्भवादित्यत आह ॥ **उपाध्यभावादिनेति** । व्यभिचारस्योपाधिव्याप्तत्वात् कृतकत्वस्यानित्यत्वरूपसाध्यसम्बन्ध उपाध्यभावेन वाऽऽदिपदोक्तानुकूलतर्केण वा तत्परिहरणीयमित्यर्थः ॥ **धर्मान्तरव्यभिचारेणास्यापीति** । सम्बन्धसामान्ये षष्ठी । कृतकत्वरूपसाधनस्य मूर्तत्वरूपसाधर्म्यान्तरव्यभिचारेणाम्यानित्यत्वरूपसाध्यस्यापि व्यभिचारसाधनं नित्यत्वरूपसाध्यसम्बन्धिव्यभिचारसाधनं यदि क्रियते तहात शेषः । धर्मान्तरस्य व्यभिचारो धर्मान्तरनिरूपकहेतुर्वा स्यात् दृष्टान्तो वा स्यादिति योज्यम् । आद्ये धर्मान्तरव्यभिचारो हेतुरिति पक्षे धूमे महानसत्वरूपधर्मान्तरव्यभिचारस्य साध्याव्यभिचारेण साध्येन व्याभिचाराद् व्याप्त्यभावो वाच्य इत्यर्थः ॥ **द्वितीय इति** । धर्मान्तरव्यभिचारो दृष्टान्त इति । पक्षे हेत्वभावान्न्यूनं वाच्यमिति योज्यम् । हेतोरनङ्गीकारे प्रतिदृष्टान्तसमसाङ्कर्यमिति प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसम इत्यनेन चोक्तस्य प्रतिदृष्टान्तसमलक्षणस्यामूर्तत्वरूपधर्मान्तरेण व्यभिचारः । तथा साध्यानित्यत्वेन व्यभिचारसाधने धर्मवत्त्वादिति हेत्वङ्गीकारे धर्मवत्त्वस्य पटत्वादौ साध्यानित्यत्वव्यभिचारदर्शनाद्व्याप्त्यभाव एव वक्तव्यम् । न तु स्वन्यायविरोध इत्यर्थः । परचित्तवर्तिनो व्याप्त्यनङ्गीकारस्य प्राकृतज्ञानस्याशक्यत्वादिति भावः ॥ **तदनङ्गीकार इति** । तस्याव्याप्तेः साधनाङ्गतयाऽनङ्गीकाराभिधानं स्वन्यायविरोधो भवतीत्यर्थः । नेदं कृतकत्वं स्वसाध्यसाधकं साध्यव्यभिचारित्वादनित्यत्वसाधनसाधकप्रमेयत्ववदिति । तस्य प्रतिषेधहेतोर्धर्मान्तरेण केवलान्वयिधर्मत्वेना नित्यत्वसाधके गुणवत्त्वादौ व्यभिचारदर्शनेन साध्यासाधक व्यभिचारचोदनत्वसम्भवात्स्वोक्तन्यायेन स्वविवक्षितप्रतिषेधहेतु दूषणस्यापि सुवचत्वादियं जातिः स्वन्यायविरोध इत्यवगन्तव्यम् ।

**(५३) प्र.प.— ॥ २० ॥ (२) (८) ॥ साध्यसमः ॥ साध्यवद्दृष्टान्तस्यापि साध्यत्वचोदनं साध्यसम इत्येके । तदसत् । विप्रतिपत्त्या चोदने सदुत्तरत्वात् । एवमेव चोदनेऽसम्भवदुक्तिकत्वात् । तेनैव हेतुना साध्यत्वापादनेऽप्येवमेव । वर्ण्यसमवद्वीजोपपादने तु तदभेदः । तस्मात् क्रोडीकृत धर्म्यादिविषयस्य लिङ्गस्य धर्म्यादावप्रयोजकत्वे साध्येऽपि तथात्वप्रसङ्गात्तेनैव हेतुना धर्म्यादेरपि साध्यत्वापादनं साध्यसम इत्युदयनः । व्याप्तिपक्षधर्मवत्तयैव प्रयोजकत्वोपपत्तेस्तत्सिद्ध तामात्रेण साधनाङ्गत्वसम्भवात्तेनैव हेतुना साधनमित्युत्तरं वाच्यम् । तदनङ्गीकारे तु स्वन्यायविरोध इति ।**

**जना.—** ॥ **साध्यवदिति** । पक्षवदित्यर्थः । तस्यापि साध्यवत्तया साधयितुं योग्यत्वात् । साधयितुं योग्यं साध्यमिति व्युत्पत्तेः । साध्यत्वचोदनं साध्यत्वेन रूपेण साधनीयत्वापादनमित्यर्थः ॥ **विप्रतिपत्त्येति** । दृष्टान्ते साध्यसद्भावसन्देहेनेत्यर्थः ॥ **एवमेवेति** । विप्रतिपत्त्यभावेनेत्यर्थः । लक्षणान्तरमाशङ्क्य निराकरोति ॥ **तेनेति** । यो हेतुः साध्यविषये साधकत्वेनोपलब्धस्तेनैवेत्यर्थः ॥ **एवमेवेति** । असम्भवदुक्तिकमेव । उत्थानबीजाभावादिति भावः । बीजमाशङ्क्य निराकरोति ॥ **वर्ण्यसमवदिति** । पक्षे हेतुः साध्येन सहचरित उपलब्धो दृष्टान्तस्यापि तदापादयतीत्येवं रूपबीजोपपादन इत्यर्थः । वर्ण्यसमव्यावर्तकबीजकथनपूर्वकमुदयनोक्तलक्षणमाह ॥ **तस्मादिति** ॥ **धर्म्यादीति** । धर्मी साध्याश्रयः । आदिशब्देन साध्यहेतुदृष्टान्तानां ग्रहणम् । क्रोडीकृतोऽनपोढः स्वविषयाभावादत्याजितो धर्मी साध्यदृष्टान्तलिङ्गरूपोपनयो यस्य तस्य लिङ्गस्येत्यर्थः । अनुमितिकाले लिङ्गसाध्यतदाश्रयेति त्रयज्ञानजननसमर्थस्य व्याप्तिज्ञाने चात्यक्तदृष्टान्तलिङ्गस्येत्यर्थः । अत एवोक्तं प्रमाणलक्षणटीकायाम् । अत्र विशिष्टसाधकत्वाभिमानं उत्थानहेतुरिति । उक्तं वरदराजेन क्रोडीकृतलिङ्गधर्मी लिङ्गाविषयानुमितिजनकत्वलिङ्गस्य न हि लिङ्गधर्मिणावपोद्य साध्यमात्रप्रतीतिर्लिङ्गाज्जायत इति । टीकायां तस्मादनित्य एवायं शब्द इत्यनुमितिरूपे विशिष्टज्ञाने लिङ्गधर्मिणोरपि विषयत्वेनोल्लेखादिति भाव इति व्याख्यातम् ॥ **धर्म्यादाविति** । पक्षदृष्टान्तहेतुष्वित्यर्थः ॥ **साध्येऽपीति** । पक्षीयतया सिषाधयिषिते धर्म इत्यर्थः । साध्येऽपि तथात्वप्रसङ्गादित्यनेन विशिष्टसाधकत्वाभिमान उत्थानबीजमित्युक्तं भवति । साध्येऽपीत्यपिशब्देन सिद्धानामपीत्यभिप्रेतम् ॥ **साध्यत्वापादानमिति** । पक्षादिस्वरूपाणामेव साध्यत्वापादनमित्यर्थः । न तु वर्ण्यसम इव साध्यवत्त्वेन साधनीयत्वापादनमित्यर्थः । तदुक्तं वरदराजेन

**दृष्टान्तहेतुपक्षाणां सिद्धानामपि साध्यवत् ।**
**साध्यत्वापादनं तस्माल्लिङ्गात् साध्यसमो भवेत् ॥** इति ।

पक्षादिस्वरूपाणां तेनैव हेतुना साधने आश्रयासिद्धिस्वरूपासिद्ध्यापत्तिरिति भावः । एवं च वादिना पर्वतो वह्निमान्धूमवत्त्वादिति स्थापनाहेतौ प्रयुक्ते धूमवत्त्वहेतुर्न वह्निसाधक आश्रयासिद्धत्वादित्यादि प्रतिषेधहेतुः सूचितो भवति । असामर्थ्यं दर्शयितुमुत्तरकथाप्रकारमाह ॥ **व्याप्तीति** । तत्सिद्धतामात्रेण तेषां पक्षादीनां येन केनचित्प्रमाणेन सिद्धिमात्रेणेत्यर्थः । साधनं पक्षादीनामिति शेषः ॥ **स्वन्यायविरोध इति** । अयं हेतुरसाधनाङ्गमाश्रयासिद्धत्वादिति प्रतिषेधहेतावप्येवं वक्तुं शक्यत्वादिति भावः ॥

**राघ.**— ॥ **एवमेवेति** । विवादाभावेऽपि चोदन इत्यर्थः ॥ **एवमेवेति** । **असम्भवदुक्तिकत्वमेवेत्यर्थः** । **बीजाभावादिति भावः** ॥ **वर्ण्यसमवदिति** । धूमवत्त्वं पक्षे साध्यत्वेन सहचरितं दृष्टमिति दृष्टान्तस्य साध्यत्वमापादयतीत्येवं बीजोपादनमित्यर्थः ॥ **क्रोडीकृतेति** । क्रोडः सूकरवृन्दयोरित्युक्तेरनुमानप्रयोगे समूहीकृतपक्षे हेतुदृष्टान्तविषयकस्य हेतोः पर्वतादि (सा) धर्म्यादिसिद्धावप्रयोजकत्वे साध्यविषयेऽपि तत्प्रसङ्गाभिया तेनैव लिङ्गेन तेषामपि साध्यत्वापादनमित्यर्थः । अन्यथाऽऽश्रयासिद्ध्यादि प्रसङ्गादिति भावः ॥ **सिद्धतामात्रेणेति** । मानान्तर (प्रमितत्व) सिद्धमात्रेणेत्यर्थः ॥ **तदनङ्गीकार इति** । मानान्तरसिद्धतामात्रेण धर्म्यादिः साधनाङ्गताऽनङ्गीकारे वादिनोक्तं धूमवत्त्वादिकं न साध्यसाधकम् । आश्रयासिद्ध्यादिदुष्टत्वात् । सम्मतवदिति जातिवादिनोक्ते प्रतिषेधेऽप्येवं वक्तुं शक्यत्वात्स्वन्यायविरोध इत्यर्थः । नवमदशमजातीक्रमेण युगपल्लक्षयति ॥ **साधनस्येति** ॥ **कृतिज्ञप्तीति** । उत्पत्तिज्ञप्तीत्यर्थः ॥ **सत्तैवेति** । विद्यमानेनैवेत्यर्थः । अतः प्राप्तिर्नोपेयेति प्राप्तिरूपविशेषणाभावाद्विशेषणासिद्धिरारोप्येति भावः । अप्राप्तिसमं व्यनक्ति ॥ **अप्राप्येति** । जातिद्वयेऽप्युत्तरोक्तिप्रकारमाह ॥ **अत्रेति** । जातिद्वये इत्युत्तरं वाच्येत्यन्वयः ॥ **सामर्थ्येति** । जनकत्वशक्तिरूपप्राप्तीत्यर्थः ॥ **एतदनङ्गीकृत्येति** । उक्तरूपप्राप्तिद्वयमनङ्गीकृत्येत्यर्थः । स्वरूपप्राप्त्यादीत्यादिपदेन विषयविषयिभावग्रहः ॥ **स्वन्यायेनेति** । धूमवत्त्वं न साध्यानुमितिजननक्षमं प्रागुक्तदिशा विशेषणासिद्धत्वादप्राप्य साधनेऽतिप्रसङ्गत्वात्सम्मतवदिति जातिवाद्युक्तप्रतिषेधेऽप्येवं सुवचत्वात् स्वन्यायेन व्याघात इत्यर्थः ।

**विज.**— ॥ **साध्यवदिति** । साध्यसाधनान्यतरवत्तया साध्यत्वेत्यर्थः ॥ **वर्ण्येति** । असिद्धार्थत्वादिरूपपुरस्कारेण साध्यत्वापादने वर्ण्यसमाभेदप्रसङ्ग इत्यर्थः ॥ **क्रोडीकृतेति** । विशेषण विशेष्यभावापन्नेत्यर्थः । तद्विषयत्वं तद्विषयकानुमित्यनुकूलत्वं व्याप्तीत्यनेन तेनैव सिद्धरूपा युक्ताङ्गाधिक्योक्तिः।

**वेदे.**— **साध्यवत्पक्षवत्** । साध्यत्वचोदनमित्येतदुक्तार्थः ॥ **असम्भवदुक्तिकत्वादिति** । बीजाभावादिति भावः । ननु नात्र बीजभावः पक्षमात्रविवक्षितरूपवद्धेतुमत्त्वादिना दृष्टान्तस्याप्यसाध्यत्वचोदनस्यात्राविवक्षितत्वात् । अन्यथा साधनवैकल्याद्यापत्तेरिति बीजोपपादनादित्यत आह ॥ **वर्ण्यसमवदिति** ॥ **क्रोडीकृतेति** । तस्मात्पर्वतोऽग्निमानिति विशेषणविशेष्यभावापन्नधर्मिलिङ्गलिङ्गिविषयकानुमितिरूपजननस्वभावस्येत्यर्थः ॥ **धर्म्यादाविति** । अत्रादिपदेन लिङ्गादिकं गृह्यते । प्रमाणान्तरे सिद्धस्यापीत्यर्थः । वर्ण्यसमव्यावृत्तये तेनैव हेतुनेति । अत्र तेनैव हेतुना धर्म्यादिरपि साध्यत्वापादनमेव लक्षणं शिष्टमेतज्जात्युत्थानप्रकारप्रदर्शनाय । इत्थमिह जातिवादिनोऽभिमानः ।

लिङ्गधर्मिणौ सिद्धावनुमानाङ्गे भवतस्तत्सिद्धिश्च न प्रमाणान्तरादुद्भूता लिङ्गस्य तत्राप्रयोजकत्वे साध्येऽप्यप्रयोजकत्वापत्तेः । क्रोडीकृतधर्मिलिङ्गलिङ्गि विषयानुमितिजनकत्वाल्लिङ्गस्य न हि लिङ्ग-धर्मिणावपोह्यसाध्यमात्रप्रतीतिलिङ्गाज्जायतेऽतस्तेनैव हेतुना धर्म्यादेरपि साधनमावश्यकमिति ॥ **व्याप्तीति** । न तु धर्म्यादिसाधकत्वेनापीत्यर्थः । अनेन युक्ताङ्गाधिकत्वमुक्तम् ।

**अभि.—** ॥ **साध्यवद् दृष्टान्तस्यापीति** । पर्वतवन्महानसस्य धर्मितया साध्यत्वापादनं वर्ण्यसमः । वह्निवद्धर्मतया महानसस्य साध्यत्वाचोदनं साध्यसम इति भेदः ॥ **विप्रतिपत्त्येति** । महानसस्य सत्त्वासत्त्वप्रतिपत्त्या चोदनेऽसदुत्तरत्वादित्यर्थः । तेनैव हेतुना साध्यवद्दृष्टान्तस्य साध्यत्वचोदनं साध्यसम इति कश्चित् । तन्मतं दूषयति ॥ **तेनैव हेतुनेति** ॥ **एवमेवेति** । विप्रति-पत्त्या चोदनेऽसदुत्तरत्वमेव । एवमेव चोदनेऽसम्भवदुक्तिकत्वमेवेत्यर्थः । एतेनैवमेव चोदनेऽसम्भव-दुक्तिकत्वादित्युक्तदूषणपरिहारोपायत्वाभावात्तेनैव हेतुनेति कक्षानवकाशः । ततस्तदनुवादेन दूषणा-द्याभिधानं परास्तम् ॥ **पर्ण्यसमवदिति** । पक्षहेतुः साध्यत्वेन सहचरित उपलब्धो दृष्टान्तस्य तदापादयतीति वर्ण्यसमवद्बीजोपपादनमित्यर्थः । धर्मितया साध्यत्वापादनं वर्ण्यसमः । धर्मतया साध्यत्वापादनं साध्यसम इत्येतावता भेदेऽतिप्रसङ्ग इति भावः ॥ **तस्मात्क्रोडीकृतेति** । अत्र तेनैव हेतुना धर्म्यादेरपि साध्येऽपि तत्त्वाप्रसङ्गादित्युत्थानबीजाभिधानम् । एवं हि जातिवादो मन्येत । प्रसिद्धा एव लिङ्गधर्मिसपक्षा अनुमानाङ्गानिभवन्ति । न च तेषां प्रसिद्धिर्मानान्तरेण युक्ता । लिङ्गस्य तत्राप्रयोजक साध्यत्वापादनं साध्यसम इत्येव लक्षणम् । क्रोडीकृतधर्म्यादिविषयस्य लिङ्गस्य धर्म्यादावप्रयोजकत्वे साध्येऽप्यप्रयोजकत्वप्रसङ्गात् । न हि लिङ्गधर्मिसपक्षानपोह्य साध्यमात्र-प्रतीतिर्लिङ्गाज्जायते । किं नाम महानसो धूमवान्पर्वतो वह्निमानिति । लिङ्गधर्मिसपक्षैः सहैव साध्य-प्रतीतिरुपजायते । ततश्च सर्वत्रापि लिङ्गस्य प्रयोजकत्वं वाच्यम् । न च तदस्तीति साध्येऽप्यप्रयोजको हेतुरित्यभिधानं पाक्षिकजयहेतुरिति । स्वरूपासिद्ध्यादिकमारोप्यम् ॥ **तत्सिद्धितामात्रेणेति** । तेषां सिद्धितामात्रेणेत्यर्थः ॥ **स्वन्यायविरोध इति** । जातिवादिनैव स्वाभ्युपगतप्रमेय साधकानुमान-निर्वाहाय तेनैव लिङ्गेन धर्म्यादि सिद्धेरनङ्गत्वाभ्युपगमात्प्रतिबन्दीविरोध इत्यर्थः ।

**आद.—** ॥ **क्रोडीकृतेति** । साध्यविशिष्टस्य धर्मिणो ज्ञानाजनकत्वेनाभिमतस्येत्यर्थः । धर्म्यादौ शुद्धधर्मिज्ञाने । आदिपदेन साध्यदृष्टान्तयोर्ग्रहणम् । दृष्टान्तस्यापि साध्यविशिष्टत्वात्तत्राप्रयोजकत्वे पक्षरूपविशिष्टज्ञानेऽपि प्रयोजकं न स्यादिति भावः ।

**श्रीनि.—** ॥ **स्वन्यायविरोध इति** । प्रतिवादिना ह्युक्तरीत्या धर्म्यादेः साध्यत्वमापाद्य धूमः साधको न भवति । असिद्धाश्रयत्वाद्भविष्यन्मैत्रीपुत्रश्यामत्वसाधकमैत्रीतनयत्ववदिति वादि साधनस्या

साधकत्वं साधनीयम् । तत्राप्ययं दोष आयाति । तथा हि । यदि क्रोडीकृतधर्म्यादिविषया-सिद्धाश्रयत्वं धर्म्यादावप्रयोजकं स्यात्तर्हि साध्येऽपि तथा स्यादतस्तेन धूमोऽपि साधनीयः । एवं चासिद्धाश्रयो हेतुः । न च व्याप्तिपक्षधर्मतयैव प्रयोजकत्वोपपत्तेः सिद्धतामात्रेण साधनाङ्गत्वो-पपत्तेस्तेनैव हेतुना साधनं व्यर्थमिति वाच्यम् । तेनैव हेतुना धर्म्यादिसाधनावश्यकत्वस्य त्वयैवोक्त-त्वादिति । तथा च तेनैव हेतुना धर्म्यादिसाधनमावश्यकमिति तद्वाक्यन्यायेन धूमः साधको न भवतीत्यादि तद्वाक्यस्य विरोधात्स्वन्यायविरोधान्तर्भाव इति भावः ।

**वि.— ॥ साध्यवदिति ।** व्यापकवत्तया साध्यत्वात्पक्षः साध्यस्तद्वदित्यर्थः । साध्यत्वचोदनं व्यापकवत्तया साध्यत्वानुपादानमित्यर्थः । पक्ष इव दृष्टान्तेऽपि विप्रतिपत्त्या साध्यसन्देहेन चोदने साध्यत्वापादनेऽसदुत्तरत्वमित्यर्थः । दृष्टान्ते साध्यसन्देहेन चोदनेऽस्य सन्दिग्धसाध्यवैकल्यरूप दृष्टान्तदोषोद्भावनपर्यवसायित्वाभावः ॥ **एवमेवेति ।** विप्रतिपत्त्या विना चोदन इत्यर्थः । निर्बीज-तयेति शेषः ॥ **तेनैवेति ।** पक्षे साध्यसाधनाया वादिनो यो हेतुः प्रयुक्तस्तेनैव हेतुना दृष्टान्ते साध्यत्वापादनेऽप्येवमेव निर्बीजतयाऽसम्भवदुक्तिकमेवेत्यर्थः । वादिहेतोः साध्यत्वसाधकतायां बीजस्य व्याप्तेरभावात्तेन हेतुना साध्यत्वचोदनस्याप्यसम्भवदुक्तिकत्वमेवेति भावः ॥ **वर्ण्य-समवद्बीजोपपादने त्विति ।** वर्ण्यसमजातिवदस्यापि जातेः पक्षे साध्यत्वसहचरितत्वरूपस्योत्थान-बीजस्योपपादने तु तदभेदो वर्ण्यसमाभेदः स्यादित्यर्थः । तेनैव हेतुना पक्षवद्दृष्टान्तस्यापि साध्यत्व-चोदनं वर्ण्यसम इत्यनेनोक्तस्य वर्ण्यसमलक्षणस्योक्तस्य साध्यसमलक्षणस्यैकत्वादस्यास्तदभेद इति भावः ॥ **तस्मादिति ।** पूर्वोक्तलक्षणस्यायुक्तत्वात् क्रोडीकृताः स्वीकृता मिलिता इति यावत् । धर्मो पक्षः । आदिपदोक्तौ साध्येते तौ विषयौ यस्य तस्य हेतोर्धर्म्यादौ पक्षे आदिपदोक्तौ हेतौ च विषयेऽप्रयोजकत्वे साध्येऽपि साध्यविषयेऽपि तथात्वप्रसङ्गादसाधकत्वप्रसङ्गात्तेनैव हेतुना प्रयुक्तेनैव हेतुना धर्म्यादिरपि धर्मिणः पक्षस्यादिपदोक्तस्य हेतोः साध्यत्वापादनं साध्यसम इत्युदयन आहेत्यर्थः। लिङ्गोपहितलैङ्गिकतानपेक्षे हेतुसाध्यविशिष्टस्य पक्षस्यानुमितौ भानाल्लिङ्गस्य पक्षसाध्यविषयकत्व-वत्स्वविषयकत्वमस्तीत्यवगन्तव्यम् । तत्र तेनैव हेतुनेत्यारभ्यालक्षणोक्तिः । क्रोडीकृतधर्म्यादि-विषयकस्येत्यादि तु जात्युत्थानप्रदर्शनायोक्तमिति बोध्यम् ॥ **प्रयोजकत्वोपपत्तेरिति ।** साध्य-साधकत्वोपपत्तेरित्यर्थः । सिद्धत्वमात्रेण लिङ्गधर्मिणोः प्रमितत्वमात्रेण साधनाङ्गत्वे सम्भवात् साध्यसाधनोपयोगित्वोपपत्तेः । तेनैव हेतुना साधनं धर्मिलिङ्गसाधनं व्यर्थं निष्प्रयोजनमिति । अत एवमापादने उत्तरं वाच्यमित्यर्थः ॥ **तदनङ्गीकारे त्विति ।** सिद्धत्वमात्रेण साधनत्वाङ्गीकारे स्वन्यायविरोधो भवतीत्यर्थः । तेनैव हेतुना धर्म्यसिद्ध्यभावा याऽसिद्धिरारोप्या हेत्वसिद्धौ तु

स्वरूपासिद्धिरारोप्या च । तथा च वादिना साधनं कृतकत्वं न साध्यसाधकमाश्रयासिद्धत्वात् । स्वरूपासिद्धत्वाच्च । सम्मतवदिति जातिवादिनो विवक्षितम् । तथा च जात्युत्तरस्य प्रतिषेधहेतोरपि स्वोक्तन्यायेन दूषणसम्भवात्स्वन्यायविरोध इति ज्ञातव्यम् ।

**(५४) प्र.प. — ॥ २० ॥ (२) (९-१०) ॥ प्राप्तिसमः ॥ अप्राप्तिसमः ॥ साधनस्य साध्यप्राप्तिपक्षनिरासेन तस्य साधनत्वभङ्गः प्राप्तिसमः । अप्राप्तिपक्षनिरासेन तद्भङ्गोऽप्राप्तिसमः । कृतिज्ञप्तिसाधारणमिदं जातिद्वयम् । यथा धूमज्ञानमग्निज्ञानं प्राप्य जनयति चेत्सतैव प्राप्तिरिति तस्य प्राक् सिद्धत्वान्नोत्पादकम् । तथा धूमज्ञानमग्निं प्राप्य ज्ञापयति चेत्तर्ह्यन्यस्याः प्राप्तेरसम्भवाद्विषयविषयिभावे वक्तव्ये धूमज्ञान एवाग्नेः स्फुरणान्न तज्ज्ञापकत्वमिति प्राप्तिसमः । अप्राप्योत्पादकत्वं ज्ञापकत्वं चेत्तन्न । क्वाप्यदर्शनात् । न ह्यप्राप्याग्निः काष्ठं दहति । नापि प्रकाश्यमप्राप्य प्रदीपः प्रकाशयति । अतिप्रसङ्गश्चान्यथेत्यप्राप्तिसमः । अत्र कृतौ सामर्थ्यलक्षण प्राप्तिसद्भावेनातिप्रसङ्गाभावात्स्वरूपप्राप्तिरनपेक्षितैव । ज्ञप्तावपि तद्व्याप्तलिङ्गविषयत्व रूपप्राप्तिसद्भावेनातिप्रसङ्गाभावाद्विषयविषयिभावोऽनपेक्षित एवेत्युत्तरं वाच्यम् । एतदनङ्गीकृत्य स्वरूपप्राप्त्यादिकमपेक्षमाणस्य स्वन्यायेन व्याघात इति ।**

जना.— ॥ **कृतिज्ञप्तीति** । उत्पत्तिज्ञप्तीत्यर्थः । अत्र कृतौ प्राप्तिसममुदाहृत्य दर्शयति ॥ **यथेति**। ज्ञप्तौ प्राप्तिसममुदाहृत्य दर्शयति ॥ **तथेति** । कृतिज्ञप्त्योरप्राप्तिसममुदाहृत्य दर्शयति ॥ **अप्राप्येति** । अप्राप्तौ कृत्यसम्भवमुदाहृत्य दर्शयति ॥ **न हीति** । अप्राप्तौ ज्ञप्त्यसम्भवमुदाहृत्य दर्शयति ॥ **नापीति** । एतदेवाह वरदराजः ।

**प्राप्य साध्यं साधयति हेतुश्चेत्प्राप्तिकर्मणः ।**
**साध्यस्य पूर्वं सिद्धिः स्यादिति प्राप्तिसमोदयः ।**
**अप्राप्य साधये साध्यं हेतुः सर्वं च साधयेत् ।**

अप्राप्तेरविशिष्टत्वादित्य प्राप्तिसमस्थितिरिति । कृतिज्ञप्तिपक्षयोर्जातिद्वयस्य स्वव्याहतिं दर्शयति ॥ **अत्रेत्यादिना** । शक्तिलक्षणप्राप्तीत्यर्थः ॥ **स्वरूपप्राप्तिरिति** । कार्यकारणस्वरूपयोः संयोगादिलक्षणप्राप्तिरित्यर्थः ॥ **अनपेक्षितैवेति** । अस्येत्युत्तरं वाच्यमित्युत्तरेणान्वयः । ज्ञप्तिपक्षे देयमुत्तरमाह ॥ **ज्ञप्ताविति** । लिङ्गज्ञानं यद्वस्तु ज्ञापयति तद्व्याप्त्येत्यर्थः ॥ **अतिप्रसङ्गाभावादिति** । अप्राप्य ज्ञापकत्वे सर्वं ज्ञापयेदित्यतिप्रसङ्गाभावादित्यर्थः ॥ **स्वरूपप्राप्त्यादिकमिति** । संयोगादिकमित्यर्थः ॥ **व्याघात इति** । प्रतिषेधहेतावपि प्रतिषेध्यं प्राप्याप्राप्य वेत्यादेः साम्याद्व्याघात इत्यर्थः ।

**राघ.—** इयमपि जातिः कृतिज्ञप्तिसाधारणीत्युपपादयति ॥ **यथेत्यादिना ।** एतज्जातिविषय इति वाच्यमित्यन्वयः । सिद्धविषयत्वेन प्रमितविषयत्वेनावस्थितिसम्भवादित्यर्थः ॥ **स्वन्यायेनेति ।** धूमवत्त्वमसाधकम् । अनवस्थारूपतर्कपराहतत्वात्सम्मतवदिति जातिवादिनोक्ते प्रतिषेधेऽपि धूमवत्त्वस्योत्पादकज्ञापकपरम्परयाऽनवस्थायाः सुवचत्वादिति भावः ।

**विज.—** ॥ **अप्राप्तीति ।** असम्बन्धेत्यर्थः ॥ **कृतीति ।** उत्पत्तीत्यर्थः । अप्राप्तिसमप्रकारमाह ॥ **अप्राप्येति ॥ अत्रेति ।** शक्तिरूपसम्बन्धः स च कार्यानिरूप्य इति तत्सम्बन्धत्वम् ॥ **लिङ्गेति ।** लिङ्गजन्यज्ञानविषयरूपेत्यर्थः ॥ **विषयविषयीति ।** लिङ्गज्ञानेन सहेत्यर्थः । तथा चायुक्ताङ्गाधिकत्वमिति भावः ।

**वेदे.—** ॥ **प्राप्तीति ।** सम्बन्धस्येत्यर्थः ॥ **अन्यस्या इति ।** ज्ञानेनार्थस्य संयोगादिरूपायाः प्राप्तेरसम्भवादित्यर्थः ॥ **सामर्थ्येति ।** शक्तिरूपेत्यर्थः ॥ **अनपेक्षितैवेति ।** अनेनाप्ययुक्ताङ्गाधिकत्वमुक्तं द्रष्टव्यम् । एवमुत्तरत्रापि मूलक्षयादिति भावः । तथा च युक्ताङ्गहानिरिति भावः ।

**अभि.—** ॥ **साधनस्येति ।** धूमज्ञानं वह्निज्ञानं प्राप्य जनयति । उताप्राप्येति स्वयं विकल्प्य पराभ्युपगममनपेक्ष्य प्रतिपक्षं निरस्य प्राप्तिपक्षं परिशेष्य तद्दूषणेन साधनत्वभङ्गः प्राप्तिसमेत्यर्थः । एवं ज्ञप्तावपि बोध्यम् ॥ **अप्राप्तिपक्षेति ।** धूमज्ञानं वह्निज्ञानं प्राप्य जनयत्युताप्राप्येति स्वयमेव विकल्प्य पराभ्युपगममनपेक्ष्य प्राप्तिपक्षं निरस्याप्राप्तिपक्षं परिशेष्य तद्दूषणेन साधनत्वप्रसङ्गोऽप्राप्तिसम इत्यर्थः । एवं ज्ञप्तावपि बोध्यम् । धूमज्ञानमग्निज्ञानमप्राप्य जनयत्युत प्राप्येति । तथा धूमज्ञानमग्निज्ञानमप्राप्य जनयत्युत तदप्राप्येति विकल्पौ मनसि निधाय विकल्पद्वयेऽप्याद्यपक्षयोर्दूषणमूह्यमिति भावेन परिशिष्टपक्षे दूषणमाह ॥ **यथा धूमज्ञानमित्यादिना ।** आद्यपक्षौ दूषयितुमनुवदति ॥ **अप्राप्योत्पादकत्वमिति ॥ न ह्यप्राप्येति ।** अत्राग्निमिति द्वितीयान्त एव पाठः । न त्वग्निरिति प्रथमान्तः पाठः । दहधातुरग्निपरः । ततश्चैवं योजना । काष्ठमग्निं प्राप्याग्निं जनयतीति । एतेनाग्नेः कार्यभूतदाहप्राप्तेरेव वक्तव्यत्वेन काष्ठप्राप्तिकथनमयुक्तमिति परास्तम् । यद्यपि कारणीभूतोऽग्निर्भिन्नः कार्यभूतोऽप्यग्निर्भिन्नः । तथाऽपि तदाच्छादनेन परव्यामोहनायेदमुक्तमिति ध्येयम् ॥ **अतिप्रसङ्गश्चेति ।** अप्राप्यस्यैवोत्पादकत्वज्ञापकत्वाङ्गीकारेऽतिप्रसङ्ग इत्यर्थः । अतिदेशेनाप्राप्तिसमोदाहरणमाह ॥ **इत्यप्राप्तिसम इति ।** अप्राप्तिसमोऽप्येवमेव ज्ञेय इत्यर्थः । तत्प्रकारस्तु धूमज्ञानमग्निज्ञानं प्राप्योत्पादयति । उताप्राप्येति । नाद्यः । सत्तया विना प्राप्तेरसम्भवात् । प्राप्त्यङ्गीकारे सत्त्वप्राप्त्या जनकत्वाभावप्रसङ्गात्तस्मादप्राप्तिरेव वक्तव्या । तथा सत्यतिप्रसङ्गाज्जनकत्वहानिः । यदि

धूमज्ञानमप्राप्य वह्निज्ञानं जनयेत्तर्हि घटादि ज्ञानमपि जनयेदविशेषात् । न च तदस्तीति न वह्निज्ञानमपि जनयतीति । एवं ज्ञप्तावप्युदाहरणं ज्ञेयम् । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा प्राप्तिसमोदाहरणेऽप्राप्तिपक्षनिरासाभावात् । अप्राप्तिसमोदाहरणेऽप्राप्योत्पादकत्वज्ञापकत्वयोः परिशेषत्वेन तत्र क्वाप्यदर्शनादित्युक्त्ययोगः । सम्भावितस्यैव परिशेष्यत्वेन न क्वाप्यदृष्टत्वस्य परिशेषकरणायोगात् । अप्राप्तिपक्षं दूषयित्वा प्राप्तिपक्षं परिशेष्य दूषणे पाक्षिकजयबुद्धिः प्राप्तिसमोत्थानहेतुः । साधनस्य साध्यात्पूर्वभावित्वमङ्गम् । तदभाव एवारोप्यः । प्राप्तिपक्षं दूषयित्वाऽप्राप्तिपक्षं परिशेष्य तद्दूषणे पाक्षिकजयबुद्धिरप्राप्तिसमोत्थानहेतुः । अतिप्रसङ्ग आरोप्यः ।। **कृतौ सामर्थ्येति** । उपलक्षणं चैतत् । अनुत्पादकत्वे सामर्थ्याभाव एव प्रयोजकः । अतः सामर्थ्यविधुरस्य जनकत्वाङ्गीकार एव ह्यतिप्रसङ्गो वक्तव्यः । समर्थस्य कार्यमप्राप्तस्य जनकत्वाङ्गीकारेऽतिप्रसङ्गाभावाज्जनकत्वहानिरित्युत्तरं वाच्यमिति ग्राह्यम् । प्राप्त्यादिकमपेक्ष्यमाणस्येत्यादिशब्दादप्राप्तेरिति प्रसञ्जकत्वं गृह्यते ।। **स्वन्यायविरोध इति** । परेण स्वानुमाने स्वरूपप्राप्तेरनपेक्षणात्प्राप्तिसमोदाहरणेन प्रतिबन्दीविरोधः । स्वानुमाननिर्वाहप्राप्तेर्नाति प्रसञ्जकत्वमित्यङ्गीकारात् । अप्राप्तिसमोदाहरणे तत्प्रतिबन्दीविरोध इत्यर्थः ।

**आद.**— ।। **सतैवेति** । सदसतोः सम्बन्धायोगादिति भावः ।। **सामर्थ्यलक्षणप्राप्तिरिति** । तज्जननानुकूलशक्तिमत्त्वमित्यर्थः । तादृशशक्तेर्न विषयसत्तापेक्षा किन्तु तद्विषयकत्वमपेक्षितम् । तच्च ज्ञानस्येव शक्तेरप्यसद्विषयकत्वं सम्भवतीति भावः ।

**श्रीनि.**— ।। **दहतीति** । दग्धं करोतीत्यर्थः । तथा च दाहाख्यं विशिष्टं वह्निकार्यम् । तत्र दाहवह्निसम्बन्धाभावेऽपि काष्ठस्य वह्निसम्बन्धोऽस्ति । एवं च वह्नेः स्वकार्यसम्बन्धजनकत्वं प्राप्तम् । न चैवं धूमज्ञाने वक्तुं शक्यम् । धूमज्ञानकार्यत्वाभिमते वह्निज्ञानरूपविशेषवह्निना ज्ञानेन वोक्तरीत्या धूमज्ञानस्य सम्बन्धाभावादिति भावः ।। **स्वन्यायेन व्याघात इति** । प्रतिवादिनाह्युक्तरीत्याऽऽद्ये साध्यात्पूर्वं सिद्धिरूपसाधनविशेषणाभावाद् द्वितीये साध्यप्रसिद्धिरूपसाधनविशेषणाभावादित्युभयत्रापि साधनविशेषणासिद्धिमारोप्य धूमो न साधकोऽसिद्धिविशेषणकत्वादिति साधकस्यासाधकत्वं साधनीयम् । तत्राप्येवं वक्तुं शक्यम् । तथा हि । असिद्धिविशेषणकत्वज्ञानमसाधकत्वज्ञानं प्राप्य जनयति चेत् । सतैव प्राप्तिरिति प्राक् सिद्धत्वान्नोत्पादकत्वम् । अप्राप्यं चेदतिप्रसङ्गः । एवं ज्ञप्तावपि । न च सामर्थ्यादि लक्षणप्राप्त्यैवाति प्रसङ्गपरिहारोपपत्त्या न स्वरूपप्राप्तिरपेक्षितेति वाच्यम् । तदावश्यकत्वस्य त्वयैवोक्तत्वादिति । तथा च स्वरूपप्राप्तिरावश्यकीति तद्वाक्यन्यायेन धूमो न साधक इत्यादि तद्वाक्यस्य विरोधात्स्वन्याय विरोधान्तर्भाव इति भावः ।

**वि.— ॥ साधनस्येति ।** लिङ्गज्ञानरूपकारणस्य साध्यस्य साध्यज्ञानस्य वह्न्यादिरूपसाध्यस्य वा प्राप्तिसम्बन्ध इति यः पक्षस्तस्य निराकरणेन साधनत्वस्य कारणत्वस्य भङ्गो निराकरणं प्राप्तिसम इत्यर्थः । अप्राप्तिसमव्यावृत्त्यर्थं तृतीयान्तं विशेषणम् ॥ **अप्राप्तिपक्षनिरासेनेति ।** साध्याप्राप्ति-पक्षनिरासेनेत्यर्थः । साधनस्येत्यनुवर्तते । तद्भङ्गः साधनत्वस्य भङ्ग इत्यर्थः । प्राप्तिसमव्यावृत्त्यर्थं तृतीयान्तं विशेषणम् ॥ **कृतिज्ञप्तिसाधारणमिति ।** कृतिरुत्पत्तिरित्यर्थः । उत्पत्तिसाधारणं व्याप्तिसमं निरूपयति ॥ **यथेति ।** चेच्छब्दो यद्यर्थे । तर्हीति शेषः । यदि धूमज्ञानं वह्निज्ञानं प्राप्य सम्बध्योत्पादयति तर्हि सता विद्यमानेनैव प्राप्तिर्भवतीति हेतोस्तस्य वह्नित्वज्ञानस्य प्राक् प्राप्तेः प्राक्सिद्धत्वाद्विद्यमानत्वान्नोत्पादकत्वमित्यर्थः । धूमज्ञानस्येति शेषः । ज्ञप्तिसाधारणं प्राप्तिसममाह ॥ **तथेति ।** कृतिज्ञप्तिसाधारणमप्राप्तसमं युगपदेव दर्शयति ॥ **अप्राप्येति ।** धूमज्ञानस्येति शेषः । अग्निज्ञानमग्निनेत्यनुवर्तते । धूमज्ञानस्याग्निज्ञानमग्निं प्राप्योत्पादकत्वज्ञापकत्वमभ्युपगतम् । तर्हि क्वाप्यदर्शनादप्राप्योत्पादकत्वज्ञापकत्वयोः कुत्राप्यनुपलम्भादित्यर्थः । अनुत्पादकत्वज्ञापकत्वं चेति शेषः । अदर्शनमुपपादयति ॥ **न हीति ॥ अतिप्रसङ्गश्चान्यथेति ।** अन्यथाऽप्राप्योत् उपादकत्वज्ञापकत्वयोरङ्गीकारेऽतिप्रसङ्गः । धूमज्ञानस्य घटज्ञानोत्पादकत्वघटज्ञपकव्युत्पत्तिरूपाति-प्रसङ्गश्च स्यादित्यर्थः । अस्येत्युत्तरं वाच्यमित्यनेनान्वयः । कृतौ वह्निज्ञानं प्राप्तेन धूमज्ञानेन वह्नि-ज्ञानोत्पत्तिर्भवतीति पक्षे सामर्थ्यलक्षणप्राप्तिसद्भावेन धूमज्ञानस्य वह्निज्ञानजननसामर्थ्यरूपसम्बन्ध-सद्भावेनातिप्रसङ्गाभावात् । स्वरूपप्राप्तिः सता वह्निज्ञानप्राप्तिर्निर्पेक्षितैवेत्यर्थः ॥ **ज्ञप्ताविति ॥** वह्निज्ञस्येन धूमज्ञानेन वह्निज्ञानं भवतीति पक्ष इत्यर्थः । तद्व्याप्त्येत्यत्र तच्छब्दो वह्निपरः ॥ **एतदिति ।** उक्तसम्बन्धरूप प्राप्तिद्वयमनभ्युपेत्य स्वरूपप्राप्त्यादिकं सता स्वकार्यसवह्निज्ञानस्वरूपेण प्राप्तिमादि-शब्दोक्तां स्वज्ञाप्यवह्निविषयकत्वरूपप्राप्तिं धूमज्ञानस्याङ्गीकुर्वतः स्वन्यायव्याप्यतो विरोधो भवतीत्यर्थः । साध्यप्राप्तिहेतोर्विशेषणं च तज्जातिवाद्युक्तरीत्याऽत्र नास्तीति विशेषणासिद्धिरारोप्या । तथा च वादिसाधनं स्वसाध्यसाधकं न विशेषणसिद्धत्वात्सम्मतवदिति जातिवादिनो विवक्षितम् । अस्य प्रतिषेधो हेतोरपि प्राप्तिनिरासेन च साधनत्वनिराकरणासम्भवात् स्वन्याय विरोधान्तर्गत-मुक्तमप्राप्तिद्वयमिति बोध्यम् ।

**(५५) प्र.प. — ॥ २० ॥ (२) (११) ॥ प्रसङ्गसमः ॥ अनवस्थाभास प्रसञ्जनं प्रसङ्गसमः ॥ यथा पर्वतस्योत्पादकं वाच्यम् । तस्यापीत्यनवस्था । एवं पर्वतस्य ज्ञापकं वाच्यं तस्यापीत्य-नवस्थेति । अत्र सिद्धविषयत्वेनावस्थानसम्भवेन मूलक्षयाभावाददोषत्वमिति वाच्यम् । तदनङ्गीकारे तु स्वन्यायविरोध इति ।**

**जना.—** ॥ **अनवस्थाभासेति** । सदुत्तरानवस्थाप्रसञ्जनव्यावृत्त्यर्थमाभासपदम् । कृतिज्ञप्तिसाधारणीयं जातिरित्यभिप्रेत्याह ॥ **एवमिति** ॥ **इत्यनवस्थेति** । तथा च वादिहेतोरनवस्थालक्षणतर्कपराहतिर्दूषणमिति भावः । तदुक्तं वरदराजेन ।

**सिद्धे दृष्टान्तहेत्वादौ साधनप्रश्नपूर्वकम् ।**
**अनवस्थाभासवाचः प्रसङ्गसमजातिता** ॥ इति ।

स्वव्याहतिं दर्शयितुमुत्तरकथाप्रकारमाह ॥ **अत्रेति** ॥ **सिद्धविषयत्वेनेति** । पर्वतादिकारणपरम्परायाः प्रत्यक्षादिसिद्धत्वादित्यर्थः ॥ **मूलक्षयाभावादिति** । प्रतीतपर्वतादिलक्षणकार्यविलोपाभावादित्यर्थः । अनवस्थितासिद्धकारणापेक्षायां प्रतीति कार्यविलोपलक्षणानवस्थाया एव दोषत्वादिति भावः ॥ **स्वन्यायविरोध इति** । न हि हेतुस्साधकोऽनवस्थालक्षणप्रति कूलतर्कपराहतत्वादिति प्रतिषेधकानुमानेऽप्येवमनवस्थाया वक्तुं शक्यत्वादिति भावः ।

**विज.—** ॥ **अत्रेति** । प्रमाणसिद्धतया युक्ताङ्गहानिरित्यर्थः ।

**अभि.—** ॥ **अनवस्थाभासप्रसञ्जनमिति** । सिद्धानामपि दृष्टान्तहेतुपक्षाणां किमस्य कारणं किमत्र प्रसङ्गसम इत्यर्थः । तदुक्तम् ।

**सिद्धे दृष्टान्तहेत्वादौ साधनं प्रश्नपूर्वकम् ।**
**अनवस्थाभासवाचः प्रसङ्गसमजातिता** ॥ इति ।

कृतौ तावत्कारणपरम्परापेक्षामुखेन सत्त्वापादनं जयहेतुबुद्धिरुत्थानहेतुः पक्षादेः स्वरूपासिद्धिरारोप्या । ज्ञप्तेर्निश्चितत्वस्याप्यनिश्चितत्वाभिधानं जयहेतुरिति बुद्धिरुत्थानहेतुर्हेत्वादीनामज्ञानासिद्धिरारोप्येति ॥ **सिद्धविषयत्वेनेति** । मूलक्षयकरत्वस्य परचित्तवर्तिनोऽनवस्थाङ्गीकारस्य ज्ञातुमशक्यत्वात्पर्वतादिकारणाङ्गीकारस्य सिद्धविषयत्वेन परमाण्वादाववस्थासम्भवेन मूलक्षयाभावादनवस्था न दोष इत्येवोत्तरं बीजं न तु जातित्वमित्यर्थः ॥ **तदनङ्गीकार इति** । मूलक्षयकरत्वस्यानवस्थाङ्गतानङ्गीकारे परेण स्वानुमानस्यैवं विधतर्कविरोधपरिहाराय मूलक्षयकरत्वस्य तर्काङ्गत्वाभ्युपगमात्तत् प्रतिबन्दीविरोध इत्यर्थः ।

**श्रीनि.—** ॥ **स्वन्यायविरोध इति** । प्रतिवादिना ह्युक्तरीत्याऽनवस्थापादकतर्कपराहतमारोप्य न धूमः साध्यसाधकस्तर्कपराहतत्वादिति वादिसाधनस्य साधकत्वं साधनीयम् । तत्राप्येवं वक्तुं शक्यम् ।

तथा हि । धूमस्य किञ्चिदुत्पादकं वाच्यम् । तस्यापि तथा । एवं ज्ञप्तावपि । न च सिद्धविषयत्वेन मूलक्षयाभाव इति वाच्यम् । अवस्थानाभाव एवानवस्थाप्रयोजको न मूलक्षयोऽपीति त्वयैवाभ्युपगमादिति । तथा चानवस्थानाभाव एव प्रयोजक इति तद्वाक्यन्यायेन न धूम इत्यादि तद्वाक्यस्य-विरोधात्स्वन्याय विरोधान्तर्भाव इति भावः ।

**वि.—** ॥ **अनवस्थाभासप्रसञ्जनमिति** । अनवस्थापादनरूपसद्दोषनिरासायाभासपदम् । इयमपि जातिः कृतिज्ञप्त्यै साधारणीति ज्ञापयितुमुत्पादकत्वज्ञापकत्वपक्षयोरनवस्थाभासं दर्शयति । यथेति ॥ **अत्रेति** । उत्पादकज्ञापकपरम्परापेक्षयाऽनवस्थापादक इत्यर्थः ॥ **तस्येति** । वाच्य-मित्युत्तरेणान्वयः । सिद्धविषयत्वेनोक्तपरम्परायाः प्रमितपदार्थविषकत्वेनाप्रमितानेकपदार्थ सम्बन्धि-त्वेनेति यावत् । अवस्थासम्भवेऽवस्थायाः स्थितेः सत्त्वस्योपपत्तौ मूलक्षयाभावादीशकार्य विरोधा-भावाददोषत्वेनेत्युत्तरं वक्तव्यमित्यर्थः ॥ **तदनङ्गीकारे त्विति** । प्रमितपदार्थसम्बन्धपरम्पराया अदोषत्वानभ्युपगमे स्वार्थविरोधो भवतीत्यर्थः । पक्षोत्पादकपरम्परापेक्षयाऽनवस्थापदेनाश्रया-सिद्धिरारोप्या । परम्परापेक्षयाऽनवस्थापदेन त्वज्ञानासिद्धिरारोप्या । तथा च वादिसाधनं स्वसाध्य-साधकं न । आश्रयासिद्धत्वादज्ञानासिद्धत्वाद्वा सम्मतवदिति जातिवादिनो विवक्षितम् । अस्य प्रतिषेधहेतोरपि धर्माद्युत्पादकज्ञापकपरम्परापेक्षयाऽनवस्थाभासप्रसञ्जनसम्भवादियं जातिः स्वन्याय-विरोध इत्यवगन्तव्यम् ।

(५६) प्र.प.— ॥ २० ॥ (२) (१२) **प्रतिदृष्टान्तसमः । प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसम इत्येके । तदसत् । साधर्म्यसमादावपि तद्भावात् । यथा शब्दोऽनित्य ऐन्द्रिय-कत्वादित्युक्ते वदति । यदि घटदृष्टान्तेनैन्द्रियकत्वादनित्यस्तर्हि सामान्यदृष्टान्तेन नित्यः किं न स्यादिति । व्यभिचारचोदनाभिप्रायेण प्रवृत्तेर्न साधर्म्यसमादिसाङ्कर्यमिति चेन्न । अस्य सदुत्तर-त्वात् । तस्माद्धेतुनिरपेक्षेण प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधयोरन्यतरोद्भावनं प्रतिदृष्टान्तसम इत्युदयनः । यथा यदि महानसदृष्टान्ते नाग्निमानिष्यते तर्हि ह्रददृष्टान्तेनानग्निकोऽस्त्वित्यादि । अत्र न्यूनत्वं वाच्यम् । हेतोरनङ्गत्वाभिमाने तु स्वन्यायविरोध इति ।**

जना.— ॥ **प्रतिदृष्टान्तेनेति** । विरोधदृष्टान्तेनेत्यर्थः । साधर्म्यसमादीत्यादिशब्देन प्रकरणसमस्य ग्रहणम् ॥ **अस्येति** । व्यभिचारचोदनस्येत्यर्थः ॥ **तस्मादिति** । प्राचीनलक्षणस्य दुष्टत्वादित्यर्थः । साधर्म्यसमव्यावर्त्यमाह ॥ **हेतुनिरपेक्षेणेति** ॥ **अनग्निकोऽस्त्विति** । अनग्निक एवास्त्वित्यर्थः । आदिशब्दादनग्निकोऽप्यस्त्वित्यर्थः ॥ **तस्मादिति** । प्राचीनलक्षणस्य दुष्टत्वादित्यर्थः । साधर्म्य-

समव्यावर्त्यमाह ॥ **हेतुनिरपेक्षेणेति** ॥ **अनग्निकोऽस्त्विति** । अनग्निक एवास्त्वित्यर्थः । आदिशब्दादनग्निकोऽप्यस्त्वित्यर्थः । तथा च वादिहेतुर्बाधितसाध्यकः सत्प्रतिपक्षितो वेति भावः । स्वव्याहृतिं वक्तुमुत्तरकथाप्रकारमाह ॥ **अत्रेति** ॥ **न्यूनत्वमिति** । अवश्योपादेयस्य हेतोरनुपादानादिति भावः ॥ **स्वन्यायविरोध इति** । प्रतिदृष्टान्तो बाधकः प्रतिरोधको वा न भवति गर्दभवदिति हेत्वनङ्गतावादिनं प्रति दृष्टान्तमात्रस्य वक्तुं शक्यत्वादिति भावः ।

**राघ.**— ॥ **प्रतिदृष्टान्तेनेति** । वाद्युक्तसाध्यरहितदृष्टान्तेन प्रत्यवस्थानं वादिसाधनदूषणाभिधानमित्यर्थः । साधर्म्यसमादावित्यादिपदेन वैधर्म्यसमग्रहः । उदाहरणमुखेन साधर्म्यसमान्तर्गतिं व्यनक्ति ॥ **यथाशब्द इत्यादिना** ॥ **वदतीति** । जातिवादीति शेषः । शङ्कते ॥ **व्यभिचारेति** । साधर्म्यसमादौ तु प्रतिपक्षाभिप्रायेण प्रवृत्तेर्न तेन साङ्कर्यमिति भावः । मात्रपदव्यावर्त्य हेतुनिरपेक्षेणेति । अनग्निकोऽस्त्वित्यादीत्यादिपदेनानग्निक एवेति बाधचोदनग्रहः । उत्तरोक्तिप्रकारमाह ॥ **अत्रेति** । युक्ताङ्गहीनत्वरूपं न्यूनत्वमित्यर्थः ॥ **स्वन्यायेति** । त्वदुक्तं धूमवत्त्वमसाधकम्'। सत्प्रतिपक्षत्वाद्बाधितत्वात्सम्मतवदिति जातिवाद्युक्तप्रतिषेधानुमानेऽपि यदि वह्न्यौष्ण्यानुमानरूपबाधितसत्प्रतिपक्षदृष्टान्तेनासाधकं धूमवत्त्वं तर्हि सद्धेतुदृष्टान्तेन साधकं वाऽसाधकमेव वाऽस्त्वित्यपि सुवचत्वात्स्वन्यायविरोध इत्यर्थः ।

**विज.**— ॥ **साधर्म्येति** । हेत्वपेक्षप्रतिदृष्टान्तेन प्रत्यवस्थान एतत् ॥ **अत्र न्यूनमिति** । तथा चायुक्ताङ्गहानिर्हेतोरनुक्तेरित्यर्थः ॥ **भागासिद्धिरिति** । कालविशेषावच्छिन्न एव वृत्तेरिति भावः ॥ **अत्रेति** । तथा चायुक्ताङ्गाधिकत्वं प्राक्कालीनवृत्तेरनुपयुक्ताया एवाभ्युपगमादिति भावः ।

**वेदे.**— ॥ **प्रतिदृष्टान्तेनेति** । हेत्वपेक्षेणेति शेषः । तेन वक्ष्यमाणसाधर्म्यसमातिव्याप्तिर्घटित इति ध्येयम् । नन्वत्र प्रतिरोधचोदनाभिप्रायो भवत्साधर्म्यसमं साकर्ड्यम् । न चैवं किन्तु व्यभिचारचोदनैवाभिप्रेताऽतो न तत्साङ्कर्यमित्याशङ्कते ॥ **अत्रेति** ॥ **न्यूनत्वमिति** । ततश्च युक्ताङ्गहानिरिति भावः ।

**अभि.**— ॥ **अस्य सदुत्तरत्वादिति** । व्यभिचारचोदनस्य सदुत्तरत्वेन जात्युत्तरत्वाभावात्तद्विशेषणं प्रतिदृष्टान्तस्य समत्वकल्पनमयुक्तमित्यर्थः ॥ **तस्मादिति** । साधर्म्यसमादावतिव्याप्तिवारणाय हेतुनिरपेक्षेणेति । हेतुनिरपेक्षया बाधाद्युद्भावने पाक्षिकजयबुद्धिरुत्थानबीजम् । बाधप्रतिरोधावारोप्यौ । यथा यदि महानसदृष्टान्तेनेति यदि वादिनेष्यत इत्यन्तेन परोक्तानुवादः । तर्हीत्यादिनाऽनग्निकोऽस्त्वित्यन्तेन पर्वतोऽग्निमान्न भवति । ह्रदवदिति प्रयोगप्रकारः सूचितः । एतेन

हृददृष्टान्तेनानग्निकोऽस्त्वित्येतावतैवोदाहरणप्रदर्शनस्य जातित्वादितरांशवैय्यर्थ्यमिति परास्तम्। अत्र न्यूनत्वमिति पराभिमतस्य हेतोरनगङ्गत्वस्याद्याप्यसिद्धत्वान्न्यूनमेव प्रथमं वाच्यं न जातित्वमित्यर्थः ॥ **हेतोरनङ्गत्वाभिधान इति** । प्रतिवादिनाऽप्यन्नमिष्टसाधनमन्नत्वादिति स्वानुमानहेतुनिरपेक्षेण प्रतिदृष्टान्तेन बाधप्रतिरोधौ वारयितुं हेतोरनङ्गत्वस्याङ्गीकृतत्वात् प्रतिबन्दीविरोध इत्यर्थः।

**श्रीनि.—** ॥ **स्वन्यायविरोध इति**। प्रतिवादिना ह्युक्तरीत्या बाधादिकमुद्भाव्य धूमो न साधको बाधितत्वादग्न्यनुष्णत्वसाधकपदार्थत्ववदिति वादिसाधनस्यासाधकत्वं साधनीयम्। तत्राप्येवं वक्तुं शक्यते। तथा हि। यदि पदार्थत्वदृष्टान्तेन धूमो न साधकः स्यात्तर्हि कृतकत्वदृष्टान्तेन साधकोऽपि किं न स्यात्। न चात्र हेतुत्वाभाव इति वाच्यम्। तस्य त्वयैवानङ्गीकारादिति। तथा च दृष्टान्त एव साधको न हेतुरिति तद्वाक्यन्यायेन धूमो न साधक इत्यादि तद्वाक्यस्य विरोधात्स्वन्याय विरोधान्तर्भाव इति भावः।

**वि.—** ॥ **प्रतिदृष्टान्तेति** । वाद्युक्तसाध्यरहितो हि प्रतिदृष्टान्तस्तेन प्रत्यवस्थानं वादि साधनदूषणमित्यर्थः ॥ **साधर्म्यसमादावपीति** । साधर्म्यसमादावपि प्रतिदृष्टान्तेन प्रतिपक्षोद्भावने साधर्म्यसमादिपदोक्तवैधर्म्यसमे तद्भावस्तस्य प्रतिदृष्टान्तेन प्रत्यवस्थानरूपत्वस्य सत्त्वादित्यर्थः। प्रतिदृष्टान्तेन प्रत्यवस्थानमित्यनेन प्रतिदृष्टान्ते व्यभिचारोद्भावनेन प्रत्यवस्थान् विवक्षितम्। अतो न साधर्म्यसमादावतिव्याप्तिरित्यभिप्रेत्य शङ्कते ॥ **किं न स्यादितीति**। न साधर्म्यसमादिसाङ्कर्यमिति साधर्म्यवैधर्म्यसमयोः सत्प्रतिपक्षचोदनरूपत्वान्न तदभेद इति बोध्यम् ॥ **तस्मादिति**। प्रतिदृष्टान्त-मात्रेणेत्यादिवाक्यमेव लक्षणोक्तिः । मात्रपदव्यावर्त्यज्ञापनाय हेतुनिरपेक्षेणेत्युक्तम् । सत्प्रति-पक्षोद्भावनरूपे साधर्म्यसमादावतिव्याप्तिवारणार्थं मात्रपदम् । परस्पराव्याप्तिपरिहारायान्यतरपदो-पादानम् । प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधोद्भावनप्रकारं दर्शयति ॥ **यथेति** ॥ **अनग्निकोऽ-स्त्वित्यादीति** । अनग्निक एवास्त्वित्यादिपदार्थः । प्रतिदृष्टान्तस्य दृष्टान्तसमबलत्वाभिमानेना-नग्निकोऽस्त्वित्युद्भावनं प्रतिरोधोद्भावनं प्रतिदृष्टान्तस्य दृष्टान्तप्राबल्याभि मानेनानग्निकोऽस्त्वित्युद्भावनं बाधोद्भावनमिति विवेकोऽत्रानुसन्धेयः ॥ **अत्रेति**। हेतुनिरपेक्षेण प्रतिदृष्टान्तेन बाधाद्युद्भावने न्यूनत्व-मुत्तरं वाच्यमित्यर्थः। हेतोरनुक्ते न्यूनत्वमिति भावः ॥ **हेतोरिति**। लिङ्गस्य साधनानङ्गत्वाभिमाने स्वन्यायविरोधो भवतीत्यर्थः। वादिसाधनं स्वसाध्यसाधकं न बाधितत्वात्सत्प्रतिपक्षत्वाद्वा तम्मत-वदिति जातिवादिनो विवक्षितम् । अस्य प्रतिषेधहेतोरपि प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधयो-रन्यतरोद्भावनसम्भवात्प्रतिदृष्टान्तसमः स्वन्यायविरोधेऽन्तर्भवतीति ज्ञेयम्।

**(५७) प्र.प.— ॥ २० ॥ (२) (१३) ॥ अनुत्पत्तिसमः । पक्षादीनां प्रागुत्पत्तेर्हेतुवृत्त्य भावेनासिद्ध्युद्भावनमनुत्पत्तिसमः । यथा पर्वतस्योत्पत्तेः प्राक् तत्र धूमवत्त्वं न वृत्तमिति भागासिद्धमित्यादि । अत्रानुत्पन्नस्य पर्वतत्वाभावेनापक्षत्वात्तत्र वृत्त्यभावो न दोषायेति वाच्यम् । न चेदेवं तदा स्वन्यायविरोध इति ।**

**जना.— ॥ पक्षादीनामिति ।** असिद्ध्युद्भावनमाश्रयासिद्धिभागासिद्ध्योरुद्भावनमित्यर्थः । तदेवाह वरदराजः ।

**अनुत्पन्ने साधनाङ्गे हेतुवृत्तेरभावतः ।**
**भागासिद्धिप्रसङ्गः स्यादनुत्पत्तिसमो मत ॥** इति ।

भागासिद्धमित्यादीत्यादिशब्देनाश्रयासिद्धस्य ग्रहणम् । स्वव्याहतिं वक्तुमुत्तरकथामाह ॥ **अत्रेत्यादिना ॥ स्वन्यायविरोध इति ।** जात्युत्तरेऽप्येवं वक्तुं शक्यत्वात्स्वव्याहत इति भावः ।

**राघ.— ॥ पक्षादीनामिति ।** लिङ्गसाध्यदृष्टान्ता आदिपदार्थाः । भागासिद्धमित्यादीत्यादिपदेन हेतूत्पत्तेः प्राक् पक्षवृत्तित्वाभावेन पक्षधर्मतासिद्धिर्दृष्टान्तोत्पत्तेः पूर्वं तत्र हेत्वादेरभावेन साधनवैकल्यादीति गृह्यते ॥ **स्वन्यायेति ।** वादिसाधनं धूमवत्त्वमसाधकम् । भागासिद्धत्वात् । ह्रदपर्वतौ वह्निमन्तौ धूमवत्त्वादिति भागासिद्धहेतुवदिति जातिवाद्युक्तप्रतिषेधेऽपि धूमवत्त्वरूपपक्षोत्पत्तेः प्राग् भागासिद्धत्वहेतोरभावात्त्वदुक्तोऽपि हेतुर्भागासिद्ध इति सुवचत्वात्स्वन्यायविरोधान्तर्भावोऽस्येत्यर्थः।

**वेदे.— ॥ पक्षादीनामिति ।** एतच्च सदुत्तरेऽसिद्ध्युद्भावनेऽतिव्याप्तिवारणाय ॥ **तत्र वृत्त्यभाव इति ।** तथा च विषयवृत्तित्वं हेतुवृत्तेरुत्पन्न एव हि पक्षो विषयो न त्वनुत्पन्नोऽपीति भावः । अनुत्पन्नस्यानङ्गत्वादयुक्ताङ्गादिकत्वं वा ।

**अभि.— ॥ पक्षादीनामिति ।** साधनाङ्गानां पक्षहेतुदृष्टान्तानामुत्पत्तेः प्राक् हेतुवृत्त्यभावेन भागासिद्धिस्वरूपासिद्धिव्याप्यत्वा सिद्धीनामुद्भावनमनुत्पत्तिसम इत्यर्थः । अनुत्पन्नस्य पक्षादित्वमनङ्गीकृत्या सिद्धिचोदनं पाक्षिकजयहेतुबुद्धिरुत्थानबीजम् । असिद्धिरारोप्या ॥ **स्वन्याय विरोध इति ।** परेणापि स्वानुमानेऽसिद्धतापरिहारायानुत्पन्नस्यापक्षत्वाङ्गीकारात्तत्प्रतिबन्धीविरोध इत्यर्थः ।

**श्रीनि.— ॥ स्वन्यायविरोध इति ।** प्रतिवादिना ह्युक्तरीत्या भागासिद्धिमभिधाय धूमो न साधको भागासिद्धत्वादिति वादिसाधनस्यासाधुत्वं साधनीयम् । तत्राप्येवं वक्तुं शक्यम् । तथा हि । धूमोत्पत्तेः प्राक् भागासिद्धत्वं न वृत्तमिति भागासिद्धम् । न चानुत्पन्नस्य धूमत्वेनापक्षत्वात्तत्र हेतुवृत्त्यभावो न

दोष इति वाच्यम् । तद्दोषस्य त्वयैवोक्तत्वादिति । तथाचानुत्पन्नपक्षावृत्तित्वेन भागासिद्धत्वमिति तद्वाक्यन्यायेन धूमो न साधक इत्यादि *तद्वाक्यविरोधात्स्वन्यायविरोधान्तर्भाव* इति भावः ।

**वि.—— ॥ पक्षादीनामिति** । आदिपदेन *लिङ्गसाध्यदृष्टान्ता गृह्यन्ते । प्रागुत्पत्तेरुत्पत्तेः प्राक्* हेतुवृत्त्यभावेन पक्षदृष्टान्तयोः सत्त्वाभावेनासिद्ध्युद्भावनं पक्षदृष्टान्तयोर्हेत्वभावोद्भावनमित्यर्थः ॥ **तत्र धूमवत्त्वं न वृत्तमितीति** । पर्वतधूमवत्त्वं न स्थितमित्यर्थः ॥ **इत्यादीति** । धूमस्योत्पत्तेः प्राक् पर्वतेऽसत्त्वेन भागासिद्धिरित्यादिकमादिशब्दार्थः ॥ **अत्रेति** । एवं भागासिद्ध्युद्भावनमित्यर्थः । अस्येति वाच्यमित्युत्तरेणान्वयः । इति वाच्यमित्युत्तरेणान्वय इति वाच्यमित्युत्तरं वक्तव्यमित्यर्थः ॥ **न चेदमिति** । चेच्छब्दो यच्छब्दार्थः । यद्युक्तरीत्या तत्र हेतोरसत्त्वं न दोषस्तर्हि स्वन्यायविरोधो भवतीत्यर्थः । नेदं वादिना साधनं स्वसाध्यसाधकं भागासिद्धत्वात्सम्मतवदिति जातिवादिनो विवक्षितम् । अस्य जातिवादिहेतोरप्युक्तन्यायेन दूषणसम्भवादुत्पत्तिसमः स्वन्यायविरोधो भवतीति ज्ञातव्यम् ।

(५८) प्र.प.—— ॥ २० ॥ (२) (१४) **संशयसमः ॥ सत्यपि निर्णयकारणे साधारण-धर्मादिमात्रेण संशयापादनं संशयसमः । यथा यदि धूमवत्त्वादग्निमत्त्वनिश्चयस्तर्हि ह्रदमहा-नससाधारणेन द्रव्यत्वेन तत्संशयः किं न स्यादिति । तत्र निर्णायकाभावसहकृतस्यैव समान-धर्मादेः संशयकारणत्वादत्र निर्णायकसद्भावादसंशय इति वाच्यम् । निर्णायकं न संशय-प्रतिबन्धकमिति वदतः स्वन्यायविरोध इति ।**

**जना.—— ॥ सत्यपीति** । साधारणधर्ममात्रेणेत्यस्यैव विवरणं सत्यपि निर्णयकारण इति । मात्रपदेन सदुत्तरसंशयापादनव्यवच्छेदः । एतदेवोक्तं वरदराजेन ।

**सन्देहहेतुसद्भावात्सति निर्णयकारणे ।**
**संशयस्य प्रसङ्गो यः स संशयसमो भवेत्** ॥ इति ।

तथा च वादिहेतोः संशयकारणेन सत्प्रतिपक्षितत्वान्न साध्यसाधकत्वमिति भावः । स्वव्याहतिं वक्तुमुत्तरकथामाह ॥ **तत्रेत्यादिना** ॥ **स्वन्यायेति** । प्रतिषेधहेतावपि दूषकादूषकसमानधर्मेण प्रमेयत्वेनादूषकत्वसंशयापादकत्व सम्भवात्स्वव्याघात इति भावः ।

**राघ.—— ॥ साधारणधर्मादिमात्रेणेति** । मात्रपदव्यावर्त्यो निर्णायकाभाव इति सूचनाय सत्यपि निर्णयकारण इति । आदिपदेनासाधारणधर्मादिग्रहः ॥ **स्वन्यायेति** । धूमवत्त्वमसाधकं द्रव्यत्वरूप-साधारणधर्मेण सत्प्रतिपक्षत्वात्सम्मतवदिति जातिवाद्युक्तप्रतिषेधेऽपि यदि सत्प्रति पक्षत्वाद-

साधकत्वनिश्चयस्तर्हि सत्प्रतिपक्षासत्प्रतिपक्षसाधारणेन हेतुत्वधर्मेणासाधकत्वसंशयोऽपि किं न स्यादिति स्वन्यायविरोध इत्यर्थः ।

**वेदे.— ॥ संशयसम इति ।** विशेषादर्शनसमवहितं समानधर्मादिना संशयापादने सदुत्तरेऽति-व्याप्तिपरिहाराय मात्रपदं तद्व्यवच्छेद्यप्रदर्शनायैव पूर्वं सत्यन्तं लक्षणान्तर्गतम् ।

**अभि.— ॥ सत्यपि निर्णयकारण इति ।** वाद्युपन्यस्तप्रमाणनिराकरणमेतत् । वादिनो निर्णयकारणोपन्यासेऽपि समानधर्मादिमात्रेण संशयापादनं संशयसम इत्यर्थः । उदाहरति ॥ **यथेति ।** पर्वतोऽग्निमान्धूमवत्त्वादिति वादिनोक्ते प्रतिवादी वदति । यदि सत्यपि प्रतिबन्धके निर्णायक प्रमाण-सद्भावमात्रेण निर्णयः स्यात्तर्हि संशयसामग्री सद्भावात्संशयोऽपि स्यादिति । अत्र संशयसामग्र्या निर्णायकप्रमाणप्रतिबन्धकत्वाङ्गीकारेण पाक्षिकबुद्धिरुत्थानहेतुः । निश्चयसामग्र्याः संशयसामग्री-प्रतिरुद्धत्वमारोप्यम् ॥ **असंशय इति ।** प्रतिबन्धकीभूता संशयसामग्र्येव नास्तीति वाच्यमिति भावः ॥ **निर्णायकमिति ।** निर्णायकं न संशयसामग्रीप्रतिबन्धकम् । ततश्च संशयकारणसद्भावान्निश्चयसामग्र्याः प्रतिबन्धो दुर्वार इति भावः ॥ **स्वन्यायविरोध इति ।** स्वाभ्युपगतनिर्णायकप्रमाणस्य निश्चय-जननदशायां संशयप्रसङ्गं वारयितुं निश्चयसामग्र्याः संशयसामग्रीप्रतिबन्धकत्वस्याङ्गीकृतत्वात् प्रतिबन्दी न विरोध इत्यर्थः ।

**श्रीनि.— ॥ स्वन्यायविरोध इति ।** प्रतिवादिना ह्युक्तरीत्या सत्प्रतिपक्षमारोप्य धूमो न साधकः सत्प्रतिपक्षत्वादिति वादिसाधनस्यासाधकत्वं साधनीयम् । तत्राप्येवं वक्तुं शक्यम् । तथा हि। यदि सत्प्रतिपक्षादिसाधकत्वनिश्चयस्तर्हि श्रावणत्वप्रमेयत्वसाधर्म्येण साधकत्वसंशयः किं न स्यात् । न चात्र निर्णायकसद्भावान्न संशय इति वाच्यम् । निर्णायकं न संशयप्रतिबन्धकमिति त्वयैवाङ्गीकारात् । तथा च निर्णायकं न संशयप्रतिबन्धकमिति तद्वाक्यन्यायेन धूमो न साधक इति तद्वाक्यस्य विरोधात्स्वन्यायविरोधान्तर्भाव इति भावः ।

**वि.— ॥ सत्यपि निर्णयकारण इति ।** समानधर्मादिमात्रेणेत्यादिकमेव लक्षणकथनम् । मात्रपदव्यावर्त्यो निर्णायकाभाव इति ज्ञापयितुं निर्णयकारणे सत्यपीत्युक्तम् । आदिपदेनासाधारणधर्म विप्रतिपत्त्योर्ग्रहणं कृतम् । असति निर्णयकारणे संशयापादनस्य सदूषणत्वात् । तद्व्यवच्छेदाय मात्रपदम् ॥ **तत्रेति ।** एवं संशयापादन इति वाच्य इत्यर्थः । अन्वय इत्यनन्तरमुत्तरपदं योज्यम् ॥ **स्वन्यायविरोध इति ।** विपक्षसाधर्म्येण संशयापादने सत्प्रतिपक्षत्वमारोप्यम् । एवं च वादिसाधनं न

स्वसाध्यसाधकं सत्प्रतिपक्षत्वात्सम्मतवदिति जातिवादिनो विवक्षितम् । अस्य हेतोरपि स्वोक्तन्यायेन दूषणसम्भवात्संशयसमः स्वन्यायविरोधो भवतीत्यवगन्तव्यम् ।

(५९) प्र.प.— ॥ २० ॥ (२) (१५) ॥ **प्रकरणसमः ॥ प्रत्यनुमानेन प्रत्यवस्थानं प्रकरण-सम इत्येके । यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदिति । अत्र प्रत्यनुमानस्याङ्गसाकल्याभिमाने सदुत्तरमेव । अन्यथा साधर्म्यसमाद्यन्तर्भावः । तस्मादङ्गीकृता-नधिकबलेन बाधचोदनं प्रकरणसम इत्युदयनः ।** एतदप्ययुक्तम् । **यथा प्रतिदृष्टान्तसमादावन्यतर-चोदनेनैकजातित्वं तथा साधर्म्यसमादिनाऽप्येकजातित्वसम्भवेन पृथक्करणानुपपत्तिः ।** (तदुद्धा) **उद्धारस्तु तद्वदेव ।**

**जना.— ॥ प्रत्यनुमानेनेति ।** विरोध्यनुमानेनेत्यर्थः । प्रत्यनुमाने प्रतिवादिनोऽङ्गसाकल्याभि-मानोऽस्ति न वेति विकल्प्याद्यं निराह ॥ **अत्रेति ॥ अङ्गसाकल्याभिमान इति ।** प्रतिवादिन इति शेषः । द्वितीयं निराकरोति ॥ **अन्यथेति ॥ साधर्म्यसमादीति ।** अनभ्युपेतयुक्ताङ्गेन प्रतिप्रमाणेन प्रत्यवस्थानरूपत्वात्साधर्म्यसमादेरित्यर्थः । आदिशब्देन वैधम्यसमस्य ग्रहणम् ॥ **तस्मादिति ।** प्राचीनलक्षणस्य दुष्टत्वादित्यर्थः ॥ **अङ्गीकृतानधिकबलेनेति ।** एतत्सदुत्तरबाधचोदनेऽतिव्याप्ति-निरासाय । एतदेवोक्तं वरदराजेन ।

**तुल्यत्वमभ्युपेत्यैव परहेतोः स्वहेतुना ।**
**बाधेन प्रत्यवस्थानं प्रकरण सम इष्यत ॥** इति ।

अस्य साधर्म्यसमाद्यपेक्षयाऽऽधिक्यमेव नास्तीति निराकरोति ॥ **एतदपीति ।** एकजातित्वं त्वयाऽङ्गीकृतमिति शेषः ॥ **एकजातित्वसम्भवेनेति ।** प्रकरणसमस्येति शेषः । यदि महानसदृष्टान्तेन पर्वतोऽग्निमानिष्यते तर्हि ह्रददृष्टान्तेनानग्निक एवास्तु । अनग्निकोऽपि किं न स्यादिति बाधप्रति-रोधचोदनयोर्भिन्नरूपयोरपि बाधप्रतिरोधान्यतरोद्भावनत्वरूपेण क्रोडीकरणाद्यथैकजातित्वं त्वयाङ्गीकृतं तथा प्रकरणसमं साधर्म्यसमादिकं च तेनैव रूपेण क्रोडीकृत्यैकजातित्वमङ्गीकुरुष्वेति भावः ॥ **तद्वदेवेति ।** नेदं साधकम् । बाधितसाध्यकत्वादिति प्रतिषेधकानुमानेऽप्यनधिकबलेन धर्मत्वादिना । बाधस्य वक्तुं शक्यत्वाद्व्याघात इति भावः ।

**राघ.— ॥ साधर्म्यसमाद्यन्तर्भाव इति ।** वैधर्म्यसम आदिपदार्थः ॥ **अङ्गीकृतानधिक-बलेनेति ।** प्रत्यनुमानेनेत्यनुषङ्गः ॥ **यथा प्रतिदृष्टान्तसमादाविति ।** आदिपदेनापकर्षसमग्रहः । तत्र

प्रतिदृष्टान्तसमे बाधचोदने प्रतिरोधचोदने चैकजातित्वम् । न तु तत्र भेदः । अपकर्षसमे च दृष्टान्ते साध्येन साधनेन वा सह दृष्टस्य स्थाल्यादेः पर्वते निवृत्त्या साध्याभावचोदने साधनाभावचोदने चैकजातित्वम् । तथा साधर्म्यसमादावपि प्रतिपक्षचोदने बाधचोदने चैकजातित्वं स्यात् । साधर्म्यसमादौ प्रतिपक्षचोदनमिह तु बाधचोदनमित्येतावता भेदे प्रतिदृष्टान्तादावपि भेदः स्यादित्यर्थः । तथाऽपि जातित्वानपायात् । तत्र प्रत्युत्तरोक्तिप्रकारः कथमित्यत आह ॥ **तदुद्धार इति** । अधिकबलत्वरूपयुक्ताङ्गहीनत्वान्नेदं बाधकं भवितुमर्हतीति वाच्यम् । अधिकबलत्वं न बाधकत्वे तन्त्रमिति वदता नेदं वादिसाधनं साधकं बाधितविषयत्वादित्युक्तप्रतिषेधेऽपि हेतुत्वात्साधकमेव धूमवत्त्वादिसाधनमिति सुवचत्वात्स्वन्यायविरोध इत्यर्थः ।

**विज.—** ॥ **अत्रेति** । निर्णायकाभावरूपाङ्गत्याग इति भावः ॥ **अन्यथेति** । व्याप्त्यपुरस्कारे ।

**वेदे.—** ॥ **अत्रेति** । तथा च युक्ताङ्गनिर्णायकाभावरूपयुक्ताङ्गत्याग इति भावः ॥ **अन्यथेति** । व्याप्त्याद्यङ्गसाकल्याभिमानाभाव इत्यर्थः ॥ **अन्यतरचोदनेनेत्यादि** । अयं भावः । यथा प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधचोदनयोर्न भिन्नजातिता । किन्तु तदन्यतरेण प्रत्यवस्थानमेकैव जातिस्तथा साधर्म्यसमजातिलक्षणमेवानभ्युपेतयुक्ताङ्गेनानुमानेन बाधप्रतिरोधान्यतरेण प्रत्यवस्थानमित्यभिधायेयमपि जातिर्न पृथग्गणनीया । अन्यथा प्रतिदृष्टान्तमात्रेण बाधचोदनमपि तन्मात्रेण प्रतिपक्षचोदनाद्भिद्येतेति । आदिपदेन सामान्यतया प्रतिधर्मसमग्रहणम् ॥ **तद्वदेवेति** । साधर्म्यसमादिवदेवेत्यर्थः । ततश्चैवमुत्थानक्रमः । बाधकत्वेऽधिकबलवत्त्वस्याङ्गत्वात्तस्य चानभ्युपगमाद्युक्ताङ्गत्याग इति वाच्यम् । तदनङ्गत्वे तु स्थापनायैव जातेर्बाधप्राप्तेः स्वन्यायविरोध इति ।

**अभि.—** ॥ **सदुत्तरमेवेति** । दूषणसमर्थत्वान्न जात्युत्तरमिति भावः ॥ **तस्मादनङ्गीकृतेति** । अत्रानधिकबलप्रमाणोपन्यासे पाक्षिकजयबुद्धिरुत्थानबीजम् । बाध आरोप्यः । यथा प्रतिदृष्टान्तसमादाविति हेतुनिरपेक्षेण प्रतिदृष्टान्तमात्रेण बाधप्रतिरोधयोरन्यतरोद्भावनं प्रतिदृष्टान्तसमलक्षणं कृत्वा बाधप्रतिरोधयोरेव प्रतिजातित्वमङ्गीक्रियते । तथा साधर्म्येण बाधप्रतिरोधयोरन्यतरोद्भावनं साधर्म्यसमलक्षणं कृत्वा साधर्म्यप्रकरणसमयोरेकजातित्वं वाच्यमित्यर्थः ॥ **उद्धारस्त्विति** । एतदुद्धारस्तु साधर्म्यसमजात्युद्धारवदेवेत्यर्थः । तथा हि । बाधप्रयोजकस्याधिकबलवत्त्वस्याप्रयोजकतायाः पराभ्युपगतायाः प्रथमं ज्ञातुमशक्यत्वादधिकबलवत्त्वाभावान्न बाधकत्वमित्युत्तरं वाच्यम् । तदनङ्गीकारे स्वन्यायविरोध इति ।

**श्रीनि.—— ॥ स्वन्यायविरोध इति ।** प्रतिवादिना ह्युक्तरीत्या साध्यसाधकयोरन्योन्यसापेक्षत्वेनान्योन्याश्रयमापाद्य धूमो न साधकस्तर्कपराहतत्वादिति वादिसाधनस्यासाधकत्वं साधनीयम्। तत्राप्येवं वक्तुं शक्यम् । तथा हि । न तावत्तर्कपराहतत्वरूपसाधनमसाधकरूपसाध्यात्पूर्वम् । साध्याभावे तन्निरूपितसाध्यत्वायोगात् । नापि पश्चात् । साधनाभावे साध्यत्वायोगात् । नापि द्वयोर्यौगपद्यम् । अविशेषणसाध्यसाधनभावायोगात् । न च कृतौ पूर्वभाविन इत्याद्युक्तरीत्या परिहारो वक्तव्यः । तत्प्रकारस्य त्वयाऽनङ्गीकारात् । तथा च न तत्साधनं साध्यात्पूर्वमित्यादि तद्वाक्यन्यायेन धूमो न साधक इत्यादि तद्वाक्यस्य विरोधात्स्वन्याय विरोधान्तर्भाव इति भावः ।

**वि.—— ॥ प्रत्यनुमानेनेति ।** साध्यविपरीतसाधकहेतुना प्रत्यवस्थानं वादिसाधनदूषणमित्यर्थः ॥ **अङ्गसाकल्याभिमान इति ।** पक्षाद्यङ्गानां साकल्यमङ्गसाकल्यमस्तीत्यभिमाने सतीत्यर्थः ॥ **अन्यथेति ।** सकलाङ्गोपेतत्वाभिमानाभाव इत्यर्थः । साधर्म्यसमान्तर्भावः स्यादिति शेषः । वैधर्म्यसम आदिशब्दार्थः । अनभ्युपेतयुक्ताङ्गेन साधर्म्येण प्रतिपक्षचोदने साधर्म्यसमेऽनभ्युपेतयुक्ताङ्गेन वैधर्म्येण प्रतिपक्षचोदने वैधर्म्यसमे चोक्तप्रकरणसमलक्षणस्य सत्त्वात्तत्रान्तर्भाव इति हृदयम् ॥ **तस्मादिति ।** उक्तलक्षणस्यातिव्याप्तत्वादित्यर्थः । सदुक्तकालात्ययापादिष्टव्यवच्छेदायाङ्गीकृताधिकबलेनेति ॥ **एतदप्ययुक्तमिति ।** एकदेश्युक्तलक्षणवदुदयनोक्तलक्षणं चायुक्तमित्यर्थः । तदुपपादयति ॥ **यथेति ।** प्रतिदृष्टान्तमात्रेण बाधितप्रतिरोधयोरन्यतरोऽन्यतरोद्भावनेन प्रतिदृष्टान्तसमे दृष्टान्ते साध्येन साधनेन वा सहचरितस्य धर्मस्य पक्षे निवृत्त्या साध्यसाधनयोरन्यतराभावचोदनरूपे आदिपदोपात्तापकर्षसमे चान्यतराचोदनेनान्यतराचोदनमिति विशेषणेनैकजातित्वम् । बाधप्रतिरोधचोदनयोः पक्षेः साध्याभावसाधनाभावचोदनयोश्चान्यतरचोदनेन विशेषणेन साधर्म्यसमेनादिपदोपात्तेनैव वैधर्म्यसमेन चास्यैकजातित्वसम्भवेन ततः पृथक्करणायोग इत्यर्थः । अनभ्युपेतयुक्ताङ्गेन साधर्म्येण बाधप्रतिरोधनयोरन्यतरचोदनं साधर्म्यसम इति साधर्म्यसमलक्षणकथने अनभ्युपेतयुक्ताङ्गेनैव धर्म्ये बाधनप्रतिरोधनयोरन्यतरचोदनं साधर्म्यसम इति । वैधर्म्यसमलक्षणकथने चास्याप्यन्यतरचोदने विशेषणेन सङ्गृहीतत्वात्ततः पृथक्करणमयुक्तम् । नियामकाभावात् । अन्यथा प्रतिदृष्टान्तसमादावपि पृथक्करणापातादिति हृदयम् । नन्वस्य जात्युत्तरस्य साधर्म्यसमाद्यभेदस्तथाऽपि प्रकरणसमजात्युत्तरोद्धारः कथमिति जिज्ञासायामाह ॥ **तद्वदेवेति ।** प्रकरणसमजात्युत्तरस्य परिहारस्तु तद्वदेव साधर्म्यादिवदेवेत्यर्थः । तत्राधिकबलत्वरूपयुक्ताङ्गहीनत्वचोदनं बाधकमित्युत्तरं वाच्यम् । यद्यधिकबलत्वं न बाधके तन्त्रं किन्तु विरोधविषयत्वमेवेति परो ब्रूयात् । तर्ह्यनभ्युपेतानधिकबलेन प्रत्यनुमानेन जातिवादिहेतोरपि बाधचोदनसम्भवात्स्वव्याहति स्तदुद्धारप्रकार इत्यनुसन्धेयम् ।

**(६०) प्र.प.— ॥ २० ॥ (२) (१६) ॥ अहेतुसमः ॥ हेतोः साध्यापेक्षया पूर्वापरसह भावनिरासेनाहेतुत्वचोदनमहेतुसमः । यथा न तावत्सर्वसाधनं साध्यपूर्वम् । साध्याभावे तन्निरूप्य साधनत्वायोगात् । नापि साधनं पश्चाद्भावि । साधनाभावे साध्यायोगात् । नापि द्वयोर्यौगपद्यम् । अविशेषेण साध्यसाधनभावायोगादिति । अत्र कृतौ पूर्वभाविनः साधनत्वम् । साधनशक्तेः परानपेक्ष्यत्वात् तद्व्यवहारस्य बुद्धिस्थेनैव साध्येनोपपत्तेः । ज्ञप्तौ तु यथायथं पक्ष त्रयमपि । ज्ञातत्वाज्ञातत्वाभ्यां विशेष इत्युत्तरं वाच्यम् । तदनङ्गीकारे तु स्वन्यायविरोध इति ।**

**जना.— ॥ हेतोरिति ।** साध्यापेक्षयेत्येतदन्तरं पूर्वापरसहभावान्विकल्प्येति शेषः । एतदेवाह वरदराजः ।

**हेतोर्विकल्प्य साध्यार्थपूर्वापरसहोदयम् ।**
**त्रिधापि तस्य हेतुत्वभङ्गोऽहेतुसमो भवेत् ॥** इति ।

अत्राहेतुत्वचोदनमहेतुसम इत्येवोक्तेऽनैकान्त्यादिना हेतुत्वचोदने सदुत्तरेऽतिव्याप्तिः । तद्वारणाय हेतोरित्यादि । सर्वमुदाहृत्य दर्शयति ॥ **यथेति ॥ साध्याभाव इति** । पूर्वकाल इति शेषः ॥ **साधनत्वायोगादिति** । पूर्वभावनिरूपकसाध्याभावे तद्घटितसाधनं न युज्यत इत्यर्थः । तथा च साधने सति साध्यं साध्ये सति साधनमित्यन्योन्याश्रय इति भावः ॥ **पश्चादिति** । साध्यापेक्षयेति शेषः ॥ **साधनाभाव इति** । साध्यात्पूर्वमिति शेषः । तथा च पुनरन्योन्याश्रय इति भावः । स्वव्याहतिं वक्तुमुत्तरकथाप्रवृत्तिप्रकारमाह ॥ **अत्रेत्यादिना** । साधनस्य साध्यापेक्षया पूर्वापरसहभावः किमुत्पत्तौ विकल्प्य त उत ज्ञप्तौ वेति विकल्प्योत्पत्तिपक्षवादिना प्रतिवादिनं प्रत्युत्तरदानप्रकारमाह ॥ **कृताविति** । उत्पत्तावित्यर्थः । अत्र यदुक्तं प्राक् प्रतिवादिना साध्याभावे तन्निरूपितसाधनत्वायोगादिति तत्र साधनशक्तिः साध्यापेक्षयेत्यभिमतमुत साधनव्यवहारः साध्यापेक्षयेति विकल्प्याद्यं निराचष्टे ॥ **साधनशक्तेरिति** । द्वितीयं पराकरोति ॥ **तद्व्यवहारस्येति** । किमुत्पत्तौ ज्ञप्तौ वेत्यत्र द्वितीयपक्षे वादिनोत्तरदानप्रकारमाह ॥ **ज्ञप्ताविति** । यथायथं विशिष्टमेघोन्नत्यादेर्वृष्ट्याद्यपेक्षया पूर्वभावित्वं धूमादेर्वह्न्याद्यपेक्षया पश्चाद्भावो रसादेरूपाद्यपेक्षया सहभाव इत्यर्थः । सहभावपक्षे प्रतिवादिना यदुक्तमविशेषेण साध्यसाधनत्वायोगादिति तत्र देयमुत्तरमाह ॥ **ज्ञातत्वेति** । निश्चितत्वानिश्चितत्वाभ्यामित्यर्थः । विशेषो निश्चितं साधनमनिश्चितं साध्यमित्येवंरूप इत्यर्थः ॥ **स्वन्यायेति** । प्रतिषेधहेतुरपि किं प्रतिषेध्यापेक्षया पूर्वभावीत्यादेर्वक्तुं शक्यत्वाद्व्याघात इत्यर्थः ।

**राघ.— ॥ पूर्वापरसहभावेति** । पूर्वभावपश्चाद्भावसहभावेत्यर्थः ॥ **साध्यायोगादिति** । साध्यत्वयोगादित्यर्थः । तथा च पश्चाद्भाविनस्तन्निरूपितसाधनत्वं दूरापास्तमिति भावः । उत्तरोक्ति-

प्रकारमाह ॥ **अत्र कृतावित्यादिना ।** पूर्वापरभावादिनिरासेन साधनत्वभङ्गः किं साध्यस्योत्पत्तावुत ज्ञप्तौ । तत्राद्यस्योत्तरं कृतावित्यादिना । साध्याभावे कथं साधनतेत्यत आह ॥ **साधनशक्तेरिति ।** अन्त्य आह ॥ **ज्ञप्तौ त्विति ।** यथायथमित्यव्ययीभावः ॥ **पक्षत्रयमिति ।** कारणं पूर्वभावि सदेव कार्यं ज्ञापयति । कार्यं तु पश्चाद्भावि सदेव कारणं ज्ञापयति । रसस्तु रूपसहभूतः सन्नेव रूपं ज्ञापयतीति यथायथमित्युक्तम् । ननु सहभावाविशेषात्कस्यचिज्ज्ञापकत्वमन्यस्य ज्ञाप्यत्वमिति विशेषः । कथमित्यत आह ॥ **ज्ञातत्वेति ॥ स्वन्यायेति ।** वादिसाधनमसाधकं तस्य साध्यापेक्षया पूर्वापरसहभावानुपपत्तिरूपतर्कपराहतत्वादिति जातिवाद्युक्तप्रतिषेध हेतावप्यसाधकत्वरूपसाध्यापेक्षया पूर्वापरसहभावनिरासेन साधनभञ्जनस्य सुकरत्वात्स्वन्यायविरोध इति भावः ।

**विज.**— ॥ **साधनशक्तेरिति ।** शक्तिसत्त्वं साध्यानपेक्षम् ॥ **साध्यज्ञानेनैवेति ।** साध्यसत्त्वं तत्रानुपयोगि । ज्ञप्तौ तु प्रागसदादेरपि हेतुत्वं तज्ज्ञानमेव परमपेक्षितमित्युक्ताङ्गाधिकत्वमिति भावः ।

**वेदे.**— उत्थानबीजमाह ॥ **अत्रेति ।** अत्रेत्यस्य वाच्यमित्यनेनान्वयः ॥ **शक्तेरिति ।** शक्तिलक्षणव्यापारस्येत्यर्थः । अत एव प्रमाणलक्षणटीकायां व्यापारेष्वन्यानपेक्षणादित्युक्तम् ।

**अभि.**— ॥ **हेतोरिति ।** अत्र कृतौ साधनशक्तेः परापेक्षत्वाङ्गीकारेण प्रत्यवस्थानं ज्ञापयितुं ज्ञातत्वाज्ञातत्वाभ्यां विशेषमनङ्गीकृत्यावस्थानं पाक्षिकजयहेतुरिति बुद्धिरुत्थानबीजम् । साधनासिद्धिरारोप्या ॥ **स्वन्यायविरोध इति ।** स्वाभ्युपगतवियदादिघटकारणस्य साधनशक्तेरधीनतया स्वानुमानस्य साधनतानिर्वाहाय ज्ञातत्वाज्ञातत्वाभ्यां विशेषस्यान्यत्राङ्गीकृतत्वेन तत्प्रतिबन्दीविरोध इत्यर्थः ।

**श्रीनि.**— ॥ **स्वन्यायविरोध इति ।** प्रतिवादिना ह्युक्तरीया साध्यवैकल्यमारोप्य महानसो दृष्टान्तः साध्यविकलत्वाद् ध्रदवदिति महानसस्यादृष्टान्तत्वं साधनीयम् । तत्राप्येवं वक्तुं शक्यम् । तथा हि । महनसो दृष्टान्त इत्युक्तेऽर्थादापद्यतेऽन्यः सर्वोऽपि दृष्टान्त इति । तथा च साध्यविकलो दृष्टान्तः । न चानुपपद्यमानाभावान्नेयमर्थापत्तिरिति वाच्यम् । उक्तविपरीताक्षेपमात्रमर्थापत्तिरिति त्वयैवाभ्युपगमादिति । तथाचोक्तविपरीतेत्यादि तद्वाक्यन्यायेन महानसो न दृष्टान्त इत्यादि तद्वाक्यस्य विरोधात्स्वन्यायविरोधान्तर्भाव इति भावः ।

**वि.**— ॥ **हेतोः साध्यापेक्षयेति ।** पूर्वापरसहभावनिरासेन पूर्वस्य पूर्वं विद्यमानत्वस्येत्यर्थः । अपरस्यापरत्वस्य पश्चाद्भावत्वस्येत्यर्थः । सहभावस्य यौगपद्यस्य निराकरणेनेत्यर्थः । सद्दूषणेनाहेतुत्वचोदनस्य परिहारायेदं विशेषणम् । पक्षत्रयं क्रमेण निदर्शयति ॥ **यथेति ।** न तावत्साधनं

साध्यात्पूर्वं साध्यात्पूर्वभावीत्यर्थः ॥ **साध्याभाव इति** । साध्याभावे साध्य निरूपकसंयोगासम्भवात्साध्यनिरूपक साधनत्वमपि न सम्भवति । निरूप्यभावे निरूपकासत्त्वस्य सत्त्वादिति शङ्कितुरभिप्रायः ॥ **नापि साधनमिति** । साध्यादित्यनुवर्तते । पश्चाद्भावीत्यर्थः ॥ **साध्यायोगादिति** । साध्यत्वायोगादित्यर्थः । पूर्ववत्साधनाभावे तन्निरूपितसाध्यत्वं न सम्भवतीति परस्य हृदयम् ॥ **अविशेषणेति** । नियामकाभावेनेत्यर्थः ॥ **अत्रेति** । एवं न हेतुत्वचोदन इत्यर्थः । अस्येत्युत्तरं वाक्यमित्येवान्वयः । पक्षत्रयनिरासेनासाधनत्वं किं साध्योत्पत्तावुद्भाव्यते उत तज्ज्ञप्ताविति विकल्पं हृदि निधायोत्पत्तिपक्षे पूर्वभाविनो हेतुत्वमङ्गीकृत्य तत्रोपपत्तिमाह ॥ **कृताविति** । उत्पत्तावित्यर्थः । साधनं सम्भवतीति शेषः । तत्रोत्पत्तिमाह ॥ **साधनशक्तेरिति** । साधनस्य कारणस्य शक्तेः कार्यजननसामर्थ्यस्य कार्यस्वरूपपरापेक्षाशून्यत्वादित्यर्थः । उत्पाद्यस्योत्पादकसामर्थ्ये हेतुत्वात् साधनशक्तेः परानपेक्षत्वमिति ज्ञेयम् । नन्वस्त्वैतत्साधनमिति व्यवहारस्य तत्सापेक्षत्वमित्यत आह ॥ **तद्व्यवहारस्येति** । तत्साधनमिदमिति व्यवहारस्य साध्यबुद्ध्यैव सम्भवादित्यर्थः । एवकारेण साध्यस्वरूपसापेक्षत्वं व्यावर्तयति । ज्ञप्तिपक्षे पक्षत्रयमभ्युपेत्य समाधत्ते ॥ **ज्ञप्ताविति** । यथायथं स्वरूपम् । यथासम्भवमिति यावत् । पक्षत्रयमपि सम्भवतीति शेषः । इदमुक्तं भवति । यत्र कारणं कार्यस्य ज्ञापकं भवति । तत्र ज्ञापकं साध्यापेक्षया पूर्वभाव्येव भवति । यत्र कार्यं कारणस्य ज्ञापकं तत्र साधनसाध्यात्पश्चाद्भाव्ये च यत्र कारणेन रसादिनाऽकारणं रूपादिकं ज्ञायते । तत्र हेतुसाध्ययोर्यौगपद्यमेवेति यथासम्भवं पक्षत्रयं सम्भवतीति भावः । यौगपद्येऽविशेषे कथं तयोरनुमेयानुमापकभाव इत्यत आह ॥ **ज्ञातत्वाज्ञातत्वाभ्यां विशेष इति** ॥ **अनङ्गीकारे त्विति** । उक्तिपरिहारस्यानभ्युपगमे स्वन्यायविरोधो भवतीत्यर्थः । साधनस्य साध्यात्पूर्वभावपश्चाद्भावनिरासेनाहेतुत्वचोदने प्रतितर्कपराहतत्वमुक्तं भवति । तथा च साधनं स्वसाध्यसाधकं न प्रतितर्कपराहतत्वात्सम्मतवदिति जातिवादिनो विवक्षितम् । अस्यापीति हेतोः स्वोक्तरीत्या दूषणसम्भवादहेतुसमः स्वन्यायविरोधो भवतीत्यनुसन्धेयम् ।

**(६१) प्र.प. — ॥ २० ॥ (२) (१७) ॥ अर्थापत्तिसमः ॥ अर्थापत्त्याभासेन प्रत्यवस्थानमर्थापत्तिसमः । यथा पर्वतोऽग्निमानित्युक्तेऽर्थादापद्यतेऽन्यदनग्निमदितीत्यादि । तथा च साध्यविकलो दृष्टान्त इति । अत्रानुपपद्यमानदर्शनादुपपादके बुद्धिरर्थापत्तिः । न चात्रानुपपद्यमानं किञ्चिदस्ति । अतो नायं प्रसङ्ग इति वाच्यम् । उक्तविपरीताक्षेपमात्रमर्थापत्तिरित्यङ्गीकारे तु स्वन्यायविरोध इति । उपपत्तिसमवद्बीजाभावान्नेदं जात्युत्तरम् ।**

**जना.**— ॥ **अर्थापत्तीति** । सदुत्तरस्यार्थापत्त्या प्रत्यवस्थानस्य व्यावृत्त्यर्थमाभासेनेत्युक्तम् । एतदेवाह वरदराजः ।

**व्याप्तिं विना वादिवाक्यादर्थाक्षेपाभिमानतः ।**
**विपरीतसमारोपमर्थापत्तिसमं विदुः** ॥ इति ।

स्वव्याघातं वक्तुमुत्तरकथाप्रवृत्तिप्रकारमाह ॥ **अत्रेत्यादिना** ॥ **न चात्रेति** । पर्वतेऽग्निमत्त्वस्य महानसानग्निमत्त्वं विनाऽनुपपत्त्यभावादिति भावः ॥ **स्वन्यायेति** । धूमवत्त्वमसाधकमित्युक्तेऽन्यत्सर्वं साधकमिति । तथा च दृष्टान्तः साध्यविकल इति प्रतिषेधानुमानेऽपि वक्तुं शक्यत्वाद्व्याघात इत्यर्थः ।

**राघ.**— ॥ **अर्थापत्तीति** । व्याप्तिहीनार्थदर्शनेनार्थान्तरकल्पनमर्थापत्त्याभासः । तेन दूषणाभिधानमित्यर्थः ॥ **इत्यादीति** । यथा महानसो धूमवानग्निमांश्चेत्युक्तेऽर्थादापन्नोऽन्यो निर्धूमोऽनग्निकश्चेति। तथा च पर्वतस्तदुभयहीनः स्यादित्यादिरादिपदार्थः । अनुपपद्यमानत्वरूपयुक्ताङ्गहीनत्वमुत्तरं वाच्यमिति भावेनाह ॥ **अत्रेत्यादिना** ॥ **स्वन्यायेति** । वादिसाधनमसाधकम् । साध्यविकलदृष्टान्तकत्वात्सम्मतवदिति जातिवाद्युक्तप्रतिषेधहेतावपीद मसाधकमित्युक्त्याऽर्थादन्यत् साधकमित्युक्तं स्यात् । तथा च वादिदृष्टान्तः साध्यविकल इत्यपि सुवचत्वात्स्वन्यायविरोध इति भावः । वादिसाधनेन पक्षदृष्टान्तयोरविशेषापादनरूपोत्कर्षसमनिरासाय तदितरेणेत्युक्तम् । साधनभिन्नेनेत्यर्थः । अविशेषापादने बीजोक्त्यर्थं साधनप्रतिबन्धेति ।

**वि.**— ॥ **अत्रानुपपद्यमानेति** । तथा चायुक्ताङ्गहानिः । अनुपपद्यमानत्वत्यागादिति भावः ।

**अभि.**— ॥ **अर्थापत्त्येति** । अत्रानुपपद्यमानदर्शनं विनाऽपि प्रत्यवस्थानं पाक्षिकजयहेतुरिति बुद्धिरुत्थानबीजम् । साध्यवैकल्यमारोप्यम् ॥ **अत्रानुपपद्यमानेति** । प्रथमस्यात्रेतिशब्दस्येति वाच्यमित्यनेन सम्बन्धः । परचित्तवर्तिनः कल्पकस्यानुपपद्यमानत्वं कल्प्यस्य तदुपपादकत्वं च नावश्यकमित्यभिमानस्याद्यापि ज्ञातुमशक्यत्वान्नायं प्रसङ्ग इत्युत्तरं वाच्यम् । न जातित्वमित्यर्थः ॥ **उक्तविपरीताक्षेपमात्रमिति** । यत्र यदुच्यते तदन्यत्र तदभावकल्पनमेवार्थापत्तिः । न त्वनुपपद्यमानदर्शनात्तदुपपादके बुद्धिरित्यङ्गीकारे स्वन्यायविरोध इत्यर्थः ।

**आद.**— ॥ **अर्थापत्तिसम इति** । अत्राग्निमत्त्वविधेरेवाक्षेपकत्वाभिमानसिद्धत्वं ज्ञेयम् ।

**श्रीनि.**— ॥ **स्वन्यायविरोध इति** । प्रतिवादिना ह्युक्तरीत्या तर्कपराहतिमापाद्य न धूमः साधकस्तर्कपराहतत्वात् दृश्यत्ववदिति वादिसाध्यसाधकत्वं साधनीयम् । तत्राप्येवं वक्तुं शक्यम् । तथा हि ।

यदि तर्कपराहतत्वाद्धूमदृश्यत्वयोरसाधकत्वविशेषस्तदा सर्वपदार्थानां वस्तुत्वादनित्यत्वाविशेषः स्यात्। न च व्याप्त्यादिसदसद्भावाभ्यां विशेषान्न प्रतिबन्दीग्रहणमिति वाच्यम्। विशेषेऽपि प्रतिबन्दीग्रहणस्य त्वयैवाङ्गीकारादिति। तथा च विशेषसद्भावेऽपि प्रतिबन्दीग्रहणमिति तद्वाक्यन्यायेन धूम इत्यादितद्वाक्यस्य विरोधात्स्वन्यायविरोधान्तर्भाव इति भावः।

॥ इति श्रीबिदरहळ्ळी श्रीनिवासनिर्मिता प्रमाणपद्धतित्यक्तवाक्यार्थचन्द्रिका समाप्ता ॥

**वि.— ॥ अर्थापत्त्याभासेनेति ।** व्याप्तिपरहितार्थदर्शनानन्तरकल्पनमर्थापत्त्याभासेन प्रत्यवस्थानं वादिसाधनदूषणमित्यर्थः। सदर्थापत्त्या प्रत्यवस्थानव्यावृत्यर्थमाभासपदम्। यथाऽत्र महानसे धूमवानग्निमांश्चेत्युक्तेऽर्थादापद्यते। अन्यधूमाग्निरहितमिति पक्षः साध्यहेतुरहितः स्यादित्यादिरादि-शब्दार्थः। अर्थापत्त्याभासस्तेन प्रत्यवस्थाने कृते इत्यर्थः। अस्येत्युत्तरं वाच्यमित्यनेनान्वयः। न चात्रेति। अत्र पर्वतोऽग्निमानित्यत्रेत्यर्थः। नायं प्रसङ्गोऽनिष्टप्रसङ्ग इत्यर्थः॥ **उक्तविपरीता-क्षेपमात्रमिति** । मात्रपदेनानुपपद्यमानार्थदर्शनं व्यापकतयेति। तथाचानुपपद्यमानार्थदर्शनं विना युक्तविरुद्धार्थकल्पनमर्थापत्तिरित्यङ्गीकारे स्वन्यायविरोधो भवतीत्यर्थः। अत्र वादिसाधनं स्वसाध्यसाधकं न साध्यविकलदृष्टान्तत्वात्सम्मतवदिति जातिवादिनो विवक्षितम्। अस्यापि हेतोरुक्तरीत्या दूषणसम्भवादर्थापत्तिसमः स्वन्यायविरोधो भवतीत्यर्थः।

**(६२) प्र.प.— ॥ २० ॥ (२) (१८) ॥ अविशेषसमः ॥ साधनप्रतिबन्या तदितरधर्मेण तद्वतां सर्वपदार्थानामविशेषापादनमविशेषसमः। यथा यदि धूमवत्त्वात्पर्वत महानसयोरग्निमत्त्वाविशेषः। तदा सर्वभावानां सत्त्वादनित्यत्वाविशेषप्रसङ्ग इति। अत्र व्याप्त्यादिसदसद्भावाभ्यां विशेपान्न प्रतिबन्दीग्रहणमित्युत्तरं वाच्यम्। तदनङ्गीकारेण प्रवृत्तस्य स्वन्यायविरोध इति।**

**जना.— ॥ साधनप्रतिबन्येति ।** उत्कर्षसमव्यावृत्त्यर्थं तदितरधर्मेणेति पदम्। तद्वतां साधनेतरधर्मवतामित्यर्थः। एतदेवोक्तं वरदराजेन।

**धर्मेणैकेन केषाञ्चिदविशेषप्रसञ्जनम्।**
**साधनप्रतिबन्या यत्सोऽविशेषसमो मत ॥** इति।

**सर्वभावानामिति** । सर्वपदार्थानामित्यर्थः॥ **अविशेषप्रसङ्ग इति** । तथा च तर्कपराहतो वादिहेतुरिति भावः। स्वव्याहतिं वक्तुमुत्तरकथाप्रवृत्तिमाह॥ **अत्रेत्यादिना वाच्यमित्यन्तेन ॥ तदनङ्गीकारेणेति** । व्याप्तिसदसद्भावाभ्यां विशेषमङ्गीकुर्वाणस्येत्यर्थः॥ **स्वन्यायेति** । प्रतिषेधहेतावपि पदार्थत्वाविशेषादसाधकत्वापत्तेरिति भावः।

**राघ.**— ॥ **अनित्यत्वाविशेषप्रसङ्ग इति** । तथा च वाद्युक्तहेतुरप्रयोजक इति भावः ॥ **स्वन्यायेति** । वादिसाधनमसाधकमप्रयोजकत्वादप्रयोजकहेत्वाभासवदिति जातिवाद्युक्तप्रतिषेधहेतावपि यद्यप्रयोजकत्वाद्धेतोः पक्षदृष्टान्तयोरसाधकत्वाविशेषस्तर्हि प्रमेयत्वाविशेषात्सर्वं नित्यं स्यादित्यपि सुवचत्वात्स्वन्यायविरोध इत्यर्थः ।

**वेदे.**— ॥ **उत्तरं वाच्यमिति** । तथा च कृतौ ज्ञप्तौ च पूर्वं साध्यसत्त्वमनुपयोगि किन्तु तज्ज्ञानमेवातो युक्ताङ्गाधिकत्वमेवेति भावः ॥ **अत्रेति** । तथा च युक्ताङ्गहानिरिति द्रष्टव्यम् । उत्कर्षसमव्यवच्छेदाय तदितरधर्मेणेति । वादिसाधनव्यतिरेकधर्मेणेत्यर्थः ।

**अभि.**— ॥ **साधनप्रतिबन्द्येति** । साधनप्रतिबन्द्या साधनेतरधर्मेण तद्वतां सर्वापाद्यानां तत्सहचरितधर्मवत्तयाऽविशेषापादनमविशेषसम इत्यर्थः । विद्यमानमपि व्याप्तिसदसद्भावाभ्यां विशेष-मनादृत्य प्रतिबन्द्या प्रत्यवस्थानं पाक्षिकजयहेतुरुत्थानबीजम् । असाधकमारोप्यम् ॥ **स्वन्यायेति** । अन्नमिष्टसाधनमन्नत्वादित्यनुमाने यद्यन्नमिष्टसाधनं स्यात्तर्हि सत्त्वात्सर्वभावानामनित्यत्वं स्यादित्यति प्रसङ्गपरिहाराय व्याप्तिसदसद्भावाभ्यां विशेषस्य परेणाङ्गीकृतत्वात्प्रतिबन्दीविरोध इत्यर्थः ।

**वि.**— ॥ **साधनप्रतिबन्द्येति** । साधनेन पक्षदृष्टान्तयोरविशेषापादनरूपे उत्कर्षसमेऽति-व्याप्तिवारणाय तदितरे साधने व्यतिरिक्तेनेत्युक्ततदितरधर्मेण साधनेतरधर्मवतामविशेषापादने बीज-प्रदर्शनार्थसाधने प्रतिबन्द्येत्युक्तम् । न तु तद्विशेषणं लक्षणशरीरप्रविष्टम् ॥ **अत्रेति** । एवमविशेषा-पादने कृत इत्यर्थः । अस्या इत्युत्तरं वाच्यमित्युत्तरेणान्वयः । व्याप्त्यादि सदसद्भावाभ्यामबाधित-विषयत्वादिरादिशब्दार्थः । साध्यवदितरधर्मेण व्याप्त्या बाधितविषयत्वादिसद्भावासद्भावाभ्यां विशेषा-द्वैलक्षण्यात् साधनप्रतिबन्द्युपपादनं सम्भवतीत्युत्तरं वक्तव्यमित्यर्थः ॥ **तदनङ्गीकारेण प्रवृत्तस्येति** । तस्य व्याप्त्यादेरनङ्गीकारेण प्रतिबन्दीग्रहणेन प्रवृत्तस्य स्वन्यायविरोधो भवतीत्यर्थः । अत्र वादिसाधनं स्वसाध्यसाधकं न अप्रयोजकत्वात्सम्मतवदिति जातिवादिनो विवक्षितम् । अस्यापि हेतोरुक्तन्यायेन निराकरणसम्भवादविशेषसमः स्वन्यायविरोधान्तर्गत इति ज्ञेयम् ।

**(६३) प्र.प. — ॥ २० ॥ (२) (१९) ॥ उपपत्तिसमः ॥ उभयहेतूपपत्त्या प्रत्यवस्थान-मुपपत्तिसम इत्येके । यथा यदि शब्दस्यानित्यत्वोपपादकं कृतकत्वमस्तीत्यनित्यत्वमिष्यते तर्हि नित्यत्वोपपादक मस्पर्शत्वमस्तीति नित्यत्वमपि किं नेष्यत इति । एतदसत् । साधर्म्यसमाद्यभेदात् । तस्मान्मत्पक्षेऽपि किमपि साधनं भविष्यतीति सामान्यतः प्रत्यवस्थानमुपपत्तिसम इत्युदयनः । इदमप्यसत् । केवलाया एवमुक्तेर्निर्बीजत्वात् । प्रमाणोपपादने तूपपादकस्य साधुत्वे सदुत्तरत्वात् । असाधुत्वे तस्यैवोद्भाव्यत्वेनाजातित्वात् ।**

**जना.**— ॥ **उभयेति** । उभयस्मिन्वादिसाध्ये तदभावे च हेतूपपत्त्येत्यर्थः । एके प्राञ्चो नैयायिका इत्यर्थः ॥ **साधर्म्येति** । अस्यापि प्रतिप्रमाणेन प्रत्यवस्थानरूपत्वादिति भावः । आदिपदेन वैधर्म्यसमपरिग्रहः ॥ **तस्मादिति** । प्राचीनलक्षणस्य दुष्टत्वादित्यर्थः । साधर्म्यसमादिव्यावृत्त्यर्थं सामान्यत इत्युक्तम् । एतदेवोक्तं वरदराजेन ।

**अस्मत्पक्षेऽपि किमपि प्रमाणमुपपद्यते ।**
**त्वत्पक्षवदिति प्राप्तिरुपपत्तिसमो मत** ॥ इति ।

सामान्यतः प्रत्यवस्थानमुपपत्तिसम इत्यत्र प्रत्यवस्थानं किं प्रमाणमूलकमुतातन्मूलकम् । आद्येऽपि मूलभूतं प्रमाणं किं साध्वसाधु वेति चतुर्धा विकल्प्य क्रमेण निराचष्टे ॥ **केवलाया इत्यादिना** । केवलायाः प्रमाणामूलाया इत्यर्थः ॥ **तस्यैवेति** । असाधुत्वस्यैवेत्यर्थः ॥ **अजातित्वादिति** । तथा चोत्पत्तिसमाख्यं जात्यन्तरमेव नास्तीति भावः ।

**राघ.**— ॥ **उभयेति** । उभयस्मिन्पक्षद्वये हेत्वोरुपपादनेन वादिसाधनदूषणमित्यर्थः ॥ **केवलाया इति** । साधकोक्तिरहिताया इत्यर्थः ।

**वेदे.**— पक्षत्वादिति हेतुसत्त्वान्न निर्बीजतेत्यत आह ॥ **प्रमाणेति** । उपपादकस्य हेतोः ॥ **तस्यैवेति** । उपपादकासाधुत्वस्यैवेत्यर्थः । यदा येन दोषेण साध्यत्वं तदा तस्यैवेत्यर्थः ।

**अभि.**— ॥ **उभयहेतूपपत्त्येति** । पक्षे वादिप्रतिवादिहेत्वोः सत्त्वाद्वादिनाऽत्रैकहेतुमुपादाय साधने कृते साधनान्तरमुपादाय प्रतिवादिनः प्रत्यवस्थानमुपपत्तिसम इत्यर्थः । एतेन प्रत्यवस्थानैकहेतुमूलत्वादुभयहेतूपपत्त्येत्येतदुक्तमयुक्तमिति परास्तम् । अतो लक्षणोदाहरणयोर्वैषम्यमिति परास्तम् ॥ **साधर्म्यसमाद्यभेद इति** । घटसाधर्म्यात्कृतकत्वाद्यद्य नित्यत्वमिष्यते तर्ह्याकाशसाधर्म्यादस्पर्शत्वादनित्यत्वमपि किं नेष्यत इत्यभिप्राये साधर्म्यसमाभेदः । आकाशवैधर्म्यात्कृतकत्वाद्यद्यनित्यत्वमुच्यते तर्हि घटवैधर्म्यादस्पर्शरूपत्वान्नित्यः किं नेष्यत इति प्रयोगाभिप्राये वैधर्म्यसमाभेद इत्यर्थः ॥ **तस्मान्मत्पक्ष इति** । उदाहरणन्तु शब्दो नित्यः कृतकत्वादित्युक्ते ब्रवीति । यद्यनित्यत्वे प्रमाणं कार्यत्वमस्तीत्यनित्यत्वमिष्यते तर्हि नित्यत्वपक्षे किमपि प्रमाणं भविष्यति । ततश्च बाधः प्रतिरोधो वेति ॥ **केवलाया एवमुक्तेरिति** । हेतुमनुपन्यस्य मत्पक्षे किमपि प्रमाणं भविष्यतीत्येवमुक्ते पाक्षिकजयाशां प्रत्यप्रयोजकत्वादित्यर्थः । ननु मत्पक्षेऽपि किमपि प्रमाणं भवतीति न सामान्यतः प्रत्यवस्थानम् । अपि तु मत्पक्षः केनचित्प्रमाणेनोपेतो महाजनपरिगृहीतत्वादिति सामान्यतः

प्रत्यवस्थानम् । अतो निर्बीजमित्यत आह ॥ **प्रमाणोपपादने त्विति** । प्रमाणोपपादनपूर्वकं सामान्यतः प्रत्यवस्थाने तस्योपन्यस्तप्रमाणस्य साधुत्वे सदुत्तरत्वमेव । शिष्टाचारत्वलिङ्गेन मङ्गलेऽपि सामान्यतो वेदोपदिष्टत्वदर्शनात् । उपदिष्टहेतुसाधुत्वे यत्प्रयुक्तमसाधुत्वं तदेव दूषणं वक्तव्यम् । न तूपपत्तिसमत्वमित्यर्थः । एतेन सामान्यतः प्रत्यवस्थानस्यैवोपपत्ति समलक्षणत्वेनोक्तत्वात् प्रमाणोपपादनप्रसक्त्यभावात्तन्निराकरणमयुक्तमिति परास्तम् ।

**वि.—** ॥ **उभयहेतूपपत्त्येति** । उभयस्मिन्पक्षद्वये हेत्वोरुपपादने वादिसाधननिराकरणमित्यर्थः ॥ **नित्यत्वोपपादकं स्पर्शत्वमस्तीति** । नित्यत्वसाधकं स्पर्शवत्त्वमस्तीत्यर्थः ॥ **साधर्म्यसमाद्यभेदादिति** । वैधर्म्यसम आदिशब्दार्थः । अनभ्युपेतयुक्ताङ्गेन साधर्म्यचोदनेऽनभ्युपेतयुक्ताङ्गेन वैधर्म्येण प्रतिपक्षचोदने वैधर्म्यसमे चोक्तलक्षणसद्भावादस्य तदैक्यमिति बोध्यम् ॥ **तस्मादिति** । उक्तलक्षणस्यायोगादित्यर्थः । साध्यतेऽनेनेति व्युत्पत्त्या साधनं साधकमित्यर्थः । उदयन आहेति शेषः ॥ **केवलाया इति** । साधकोपन्यासरहितायाः । एवमुक्तेरस्मत्पक्षे किमपि साधनं भविष्यतीत्युक्ते निर्बीजत्वादुत्थानकारणशून्यत्वादित्यर्थः । असाधकेऽपीदं साधकमित्यभिमानो हि जात्युत्थानबीजं साधकानुपलम्भेनैव मुक्तनिर्बीजतया न जात्युत्तरमिति भावः । अस्त्येव जात्युत्थानबीजं प्रतिपक्षसाधकोपलम्भ इति वक्तव्यं तं प्रत्याह ॥ **प्रमाणोपपादने त्विति** । प्रमाणस्य प्रतिपक्षसाधनस्योपपादने उपपादकस्य साधुत्वेऽभ्युपेतयुक्ताङ्गत्वे सदुत्तरत्वान्न जातित्वमित्यर्थः । असाधुत्वेऽनभ्युपेतयुक्ताङ्गत्वे तस्यैवोद्भाव्यत्वेनासाधोः प्रतिपक्षसाधकजात्युत्तरस्यैवोद्भाव्यत्वेनाजातित्वादस्मत्पक्षे किमपि साधनं भविष्यतीत्यस्य जातित्वाभावादित्यर्थः । एवकारेणास्मत्पक्षे किमपि साधनं भविष्यतीत्यस्यैवोद्भाव्यत्वं व्यावर्तयति । अस्मत्पक्षे किमपि साधनं भविष्यतीत्यस्य प्रतिपक्षसाधकत्वेनाकिञ्चित्करत्वात् । अनुद्भाव्य तेन न जातित्वम् । उद्भावना हि तस्यैव जात्युत्तरत्वादिति हृदयम् ।

(६३) प्र.प.— ॥ २० ॥ (२) (२०) ॥ उपलब्धिसमः ॥ **निर्दिष्टहेत्वभावेऽपि साध्योपलब्ध्या हेतोरप्रयोजकत्वाभिधानमुपलब्धिसम इत्येके । यथा क्वचिद्धूमवत्वाभावेऽप्यग्निमत्वोपलब्धेरप्रयोजकं धूमवत्त्वमिति । उत्थानबीजाभावान्नेदं जात्युत्तरम् । किन्तु हान्याद्याभास एव । तस्माद्वादिवाक्यस्यावधारणे तात्पर्यमारोप्यावधारणं विकल्प्य दूषणमुपलब्धिसम इत्युदयनः। यथा पर्वतोऽग्निमानित्युक्ते किं पर्वत एवाग्निमानुत पर्वतोऽग्निमानेवेति । नाद्यः । महानसादेरप्यग्निमत्त्वात् । न द्वितीयः । कदाचिदनग्निमत्त्वादित्यादि । इदमप्यसत् । तात्पर्यान्तरारोपेण सामान्यछलत्वात् । विकल्पेनोत्थानान्नेति चेन्न । अवधारणस्यैव विकल्पेनावधारणतात्पर्यारोपा-**

**परिहारात्। व्यवच्छेदवाक्यार्थरुचीनामवधारणं स्थितमेवेति चेन्न। तेषामप्यतद्व्यावृत्त्यङ्गीकारेणैवं-विधावधारणस्यानिष्टत्वात्।**

**जना.—** ॥ **निर्दिष्टेति** । साध्यस्य हेतुं प्रत्यप्रयोजकत्वापादनस्य सदुत्तरत्वात्तद्व्यावृत्त्यर्थं हेतोरित्युक्तम्। एके जरन्नैयायिका इत्यर्थः। क्वचिदयःपिण्डादावित्यर्थः। अप्रयोजकं वह्निमत्त्वं प्रतीति शेषः ॥ **उत्थानेति**। धूमं विना वह्न्युपलब्धिस्तु वह्नेर्धूमवत्त्वं प्रत्यप्रयोजकत्वोद्भावने बीजम्। न तु धूमस्याग्निमत्त्वं प्रत्यप्रयोजकत्वोद्भावन इति भावः ॥ **हानाद्याभास इति**। अप्रयोजकत्वस्य प्राप्तावपि तदुद्भावनादिति भावः ॥ **तस्मादिति**। अवधारणमेवकारमित्यर्थः। अवधारणं विकल्प्य दूषणमुपलब्धिसम इत्येवोक्ते यत्रैवकारो वादिनोच्चारितस्तत्र तद्विकल्प्य दूषणेऽतिव्याप्तिः। तद्वारणाय तात्पर्यमारोप्येत्यन्तम्। एतदेवोक्तं वरदराजेन।

**अवधारणतात्पर्यं वादिवाक्ये विकल्पयत्।**
**तद्बाधात्प्रत्यवस्थानमुपलब्धिसमो हि स** ॥ इति।

**महानसादेरपीति**। तथा च पर्वत एवाग्निमानिति प्रतिज्ञाया बाध इति भावः ॥ **कदाचिदिति**। एवं च प्रतिज्ञाया अंशतो बाध इति भावः। उपलब्धिसमस्य जातित्वमेव नास्तीति दूषयति ॥ **इदमित्यादिना सामान्यछलत्वादिति**। वाक्छलं सामान्यछलमुपचारछलमिति त्रिविधछलमध्ये सामान्यछलत्वादित्यर्थः। तात्पर्यान्तरेण प्रत्युक्तस्य तु शब्दतात्पर्यान्तरकल्पनेन दूषणं सामान्यछल-मिति तल्लक्षणयोगादिति भावः ॥ **विकल्पेनेति**। पर्वत एवाग्निमान्पर्वतोऽग्निमानेवेति विकल्पेनेत्यर्थः ॥ **नेति चेदिति**। छलत्वमिति शेषः ॥ **अवधारणस्येति**। एवकारस्येत्यर्थः ॥ **अवधारणतात्पर्येति**। विकल्परूपधर्मांशविकल्पेन छलत्वाभावेऽपि धर्मिभूतावधशरणांशे तात्पर्यारोपाच्छलत्वं दुष्परिहरमिति भावः। अवधारणतात्पर्यारोपो नाम नास्तीत्याशयेन शङ्कते ॥ **व्यवच्छेदेति**। व्यवच्छेद इतर-व्यावृत्तिः। तद्घटितवाक्यार्थे रुचिमतां पुंसामित्यर्थः। स्थितमनुच्चारणेऽपि सिद्धमित्यर्थः। त्रीन्घटानानयेत्यत्रावधारणानुच्चारणेऽपि त्रीनेवेति सिद्धत्वादिति भावः ॥ **अतद्व्यावृत्तीति**। न द्वौ न चतुर इत्येवेतरव्यवच्छेदाङ्गीकारेणेत्यर्थः ॥ **एवं विधेति**। पर्वत एवाग्निमान्पर्वतोऽग्निमानेवेत्येवं-विधावधारणस्येत्यर्थः। अनिष्टत्वादतात्पर्यविषयत्वादित्यर्थः।

**राघ.—** ॥ **निर्दिष्टेति**। वाद्युक्तहेतोरसत्त्वेऽपीत्यर्थः ॥ **उत्थानबीजाभावादिति**। हेत्वभाववति साध्योपलम्भस्य साध्यं विनाऽप्यस्तु हेतुरित्यप्रयोजकत्वोद्भावनं प्रत्यनिमित्तत्वेनान्यस्याप्रयोजकत्वो-

द्भावनबीजस्याभावेनोत्थानबीजाङ्गवैकल्यान्नेदं जात्युत्तरमित्यर्थः । एवमुद्भावनस्याजातित्वे क्वान्तर्भाव इति प्रष्टारं प्रत्याह ॥ **किन्तु हान्याद्याभास एवेति ।** छलं जातिर्हान्याद्याभास इति प्रागुक्त-निरनुयोज्यानुयोगप्रभेदहान्याद्याभासेऽप्रयोजकत्वाप्राप्तौ तदुद्भावनरूपत्वादप्रयोजकत्वाभास इति तत्रान्तर्भूयत इत्यर्थः ॥ **अवधारण इति ।** एवकार इत्यर्थः ॥ **इत्यादीति ।** यो धूमवानसावग्निमान्यथा महानस इति दृष्टान्तेऽप्यग्निमानेवेति वा महानस एवाग्निमानिति वा विकल्प्य दूषणाभिधानमादिपदार्थः ॥ **समान्यछलत्वादिति ।** तदुक्तपदानां वाक्यस्य वाऽर्थान्तरकल्पनाद्बहिरेवावधारणतात्पर्यकल्पनात् । सामान्यछलत्वादित्युक्तिः । लक्षणटीकायां वाक्छलं सामान्यछलमुपचारछलं त्रिविधमित्युक्त्वैवमेव सामान्यछलस्वरूपोक्ते वादिनोऽवधारणतात्पर्यं सिद्धमेव नारोप्यमिति शङ्क्ते । व्यवच्छेदवाक्यार्थ-रुचीनामिति बहुव्रीहिः । इतरव्यावृत्तिरूपवाक्यार्थरुचिमतां पुंसामित्यर्थः ॥ **अतद्व्यावृत्तीति ।** अनग्निमत्त्वव्यावृत्त्यङ्गीकारेणैवं विधस्य त्वदुक्तप्रकारस्यावधारणस्यानिष्टत्वादित्यर्थः ॥ **नेति ।** पर्वतो निर्वह्नित्वव्यावृत्तिपरत्वेऽपि न पूर्वोक्तावधारणस्य सार्वत्रिकमिति तात्पर्यारोपोऽपरिहार्य इत्यर्थः ।

**वेदे.—** ॥ **निर्दिष्टेति ।** निर्दिष्टहेतुभिन्नहेतुप्रयोज्यसाध्योपलब्ध्योपलब्ध्येत्यर्थः ॥ **अग्निमत्त्वोप-लब्धेरिति ।** आलोकादिनेति शेषः ॥ **उत्थानबीजेति ।** अयं भावः । वादिना धूमवत्त्वादिति प्रयुक्ते यदि वक्ष्यमाण इव धूमत्वादेव वह्निमानित्यवधारणे तात्पर्यं प्रकल्प्य प्रतिवादी वदति त्वन्निर्दिष्ट-हेत्वभावेऽप्यालोकविशेषादिना वह्न्युपलम्भादवधारण विशिष्टत्वदीयहेतोरप्रयोजकत्वमिति । तदा परवाक्यस्यावधारणे तात्पर्यावश्यम्भावरूपमुत्थानबीजं युक्तं स्यात् । अवधारणतात्पर्यकल्पनाभावे त्वालोकादिप्रयुक्तवह्न्युपलम्भमात्रेण धूममात्रस्य वह्निप्रयोजकत्वं वादिनोक्तमिति ॥ **हान्याद्याभास इति ।** अप्रयोजकत्वाभावेऽपि प्रयोजकान्तरदर्शनजन्यतद्भ्रमेण तदापादनमिति भावः॥ **व्यवच्छेदेति ।** पदार्थसंसर्गस्य न वाक्यार्थत्वं किन्त्वतद्व्यावृत्तेरेव दण्डस्यास्तीत्युक्तेऽदण्डिव्यावृत्तसत्ताप्रतीतिरित्ये-तेषां हृदयम् । तथा चैतन्मतेऽवधारणस्य व्यवच्छेदस्यारोपाभावान्न छलत्वमिति भावः ॥ **नेति ।** तेषामपि मते वह्निमानित्युक्ते वह्निव्यावृत्तिलाभेऽपि पूर्वविकल्पतावधारणार्थस्यानङ्गीकारेण तत्र तात्पर्यारोपेऽवश्यंवाच्ये पुनः छलत्वमेवेति भावः ।

**अभि.—** उदयनग्रन्थमनुवदति ॥ **निर्दिष्टहेत्वभावेऽपीति** ॥ उत्थानबीजाभावादिति । यद्यपि साधनं विनाऽपि साध्यस्य दर्शनादप्रयोजकत्वं साधकमिति प्रत्यवस्थानं पाक्षिकजयहेतुरिति बुद्धि-रुत्थानबीजं सम्भवति । तथाऽप्युदयनेनोत्थानबीजाभावेनेदं जात्युत्तरमित्युक्तत्वात्तथाऽनुवादः कृत इति बोध्यम् ॥ **हान्याद्याभास एवेति ।** अप्रयोजकत्वस्यानैकान्तिकविशेषत्वादनैकान्तिकाप्राप्तावपि भ्रान्त्या

तदुपन्यासाद्धान्याभास इत्यर्थः ॥ **तस्माद्वादिवाक्यस्येति** । पर्वतोऽग्निमानिति वादिवाक्यस्यावधारणे तात्पर्यं प्रकल्प्य किं पर्वत एवाग्निमानुत पर्वतोऽग्निमानेवेति विकल्प्य पराङ्गीकारमनपेक्ष्य स्वयमेव दूषणाभिधानमुपलब्धिसम इत्यर्थः ॥ **अवधारणे तात्पर्यमारोप्य तद्दूषणे पाक्षिकजयबुद्धिरुत्थान-बीजम्** । बाध आरोप्यः । व्यवच्छेदवाक्यार्थरुचीनां बौद्धादीनामित्यर्थः ।

**आद.—** ॥ **उत्थानबीजाभावादिति** । ननु प्रयोजकत्वस्य कारणत्वसमशीलत्वादन्वय व्यतिरेकज्ञानापेक्षत्वेन प्रकृते व्यतिरेकाभावात्प्रयोजकत्वासम्भव इति शङ्कायां व्यतिरेकाभावरूपोत्थान बीजं सम्भवतीति चेन्न । अग्निमत्त्वसामान्यं प्रति धूमवत्त्वस्य प्रयोजकत्वमित्यङ्गीकारे सति व्यभिचारान्न प्रयोजकता सम्भवतीत्युक्तेः सदुत्तरत्वेन जातित्वाभावात् । धूमवत्त्वस्याग्निमत्त्वसामान्यं प्रति प्रयोजकत्वस्यानभिप्रेतत्वाच्च । न च सामान्यधर्मावच्छिन्ननिरूपितव्यभिचारज्ञानस्य तद्विशेष-धर्मावच्छिन्न निरूपितप्रयोजकत्वग्रहं प्रति प्रतिबन्धकत्वाभिमान एवोत्थानबीजमस्त्विति वाच्यम् । अनुभव विरुद्धत्वेन तादृशाभिमानासम्भवात् । अन्यथा मूर्खत्वापत्त्या सभाप्रवेशानुपपत्तेः । अन्यथै-तादृशशङ्काया निरवधिकत्वेन तत्प्रयोज्यजातेरप्यनङ्गत्वापत्तेः । यथा घटवति वह्निर्न पर्वत इत्येवं वह्निमत्त्वं जलव्याप्तं प्रतियोग्यभावयोर्न विरोध इत्यादिनिर्मूलाभिमानिनां तन्निमित्तकोत्तराणां चानन्तत्वात्सामान्यधर्मावच्छिन्ने व्यभिचारज्ञानेन विशेषधर्मावच्छिन्नव्यभिचारः शङ्क्यत इति चेत्तर्हि शङ्कामात्रस्य सदुत्तरत्वात् । निश्चयाङ्गीकारे च विकल्पसमसाङ्कर्यापातात् । धर्मान्तरस्य धर्मान्तरेण व्यभिचारदर्शनेनान्यत्रापि व्यभिचारचोदनरूपत्वाद्धूमवत्त्वादेवेत्यवधारणे तात्पर्याङ्गीकारे उत्तर-मतान्तर्भावः । तत्र छलत्वापत्तिरिति दोष उक्त एव ॥ **छलत्वादिति** । वाद्यादितात्पर्यविषयीभूतार्थे दूषणोक्तिरूपरूपत्वाभावादित्यर्थः ॥ **अतद्व्यावृत्त्यङ्गीकारणेति** । यद्धर्मवत्त्वमुच्यते तत्र तद-नधिकरणभिन्नत्वाङ्गीकारेणेत्यर्थः ।

**वि.—** ॥ **निर्दिष्टहेत्वभावेऽपीति** । वादिप्रयुक्तहेत्वोरसत्त्वेऽपि साध्योपलम्भेनेत्यर्थः ॥ **उत्थानबीजाभावादिति** । हेत्वभाववति संशयोपलम्भस्य साध्यं विनाऽप्यस्तु हेतुरित्यत्र प्रयोजकत्वा-भावादुक्ताप्रयोजकत्वोद्भावनमप्रयोजकत्वशङ्कोत्थानबीजरहितत्वान्न जात्युत्तरमिति भावः । तर्हि क्वान्तर्भूतमेतदिति पृच्छन्तं प्रत्याह ॥ **किन्तु हान्याद्याभास एवेति** । हानाद्यप्राप्तावपि हान्याद्युद्भावनं हान्याद्याभासः । तथा च प्रयोजकत्वाप्राप्तावप्रयोजकत्वोद्भावनमप्रयोजकत्वाभास एवेतीदं निरनु-योज्यानुयोगप्रभेदरूपहान्याद्याभास एव न तु प्रभेदरूपा जातिरित्यर्थः ॥ **तस्मादिति** । उदयन आहेति शेषः । अवधारण एवकारार्थ इत्यर्थः । सावधारणवाक्याप्रयोगेऽवधारणार्थं विकल्प्य दूषणस्य

सदुत्तरत्वात्तद्व्यवच्छेदायावधारणे तात्पर्यं परिकल्प्येत्युक्तम् ॥ **इत्यादीति** । यो धूमवानसौ वह्निमान्यथा महानस इत्युक्ते किं महानसे धूमाग्नी अन्ययोगव्यवच्छेदेनास्तां किंवाऽयोगव्यवच्छेदेन । नाद्यः । पर्वतादेरपि धूमादिमत्त्वात् । न द्वितीयः । महानसस्य कदाचिद्धूमाग्निरहितत्वादित्यादि रादिशब्दार्थः ॥ **इदमप्यसदिति** । एकदेश्युक्तोपलब्धिसमलक्षणमप्ययुक्तमित्यर्थः । तत्र हेतुजिज्ञासायामाह ॥ **तात्पर्यान्तरारोपेणेति** । वक्तृतात्पर्यान्तरिके तात्पर्यकल्पनेन कारणेन सामान्यछलत्वात्तात्पर्यवैपरीत्येन कल्पितार्थबोधनं सामान्यछलत्वादित्यर्थः । तात्पर्यान्तरारोपेण दूषणस्यास्य सामान्यछलत्वान्न जात्युत्तरत्वमिति भावः । विकल्पमुखेन दूषणप्रवृत्तेनास्य छलत्वमिति शङ्कते ॥ **विकल्पेनेति** । तात्पर्यान्तरारोपमन्तरेण विकल्पस्यैवानवकाशात्तात्पर्यारोपेण प्रवृत्तस्य दूषणस्य छलत्वं दुष्परिहर-मित्यभिप्रेत्य परिहरति ॥ **नेति** । तात्पर्यारोपेणेदं दूषणं न प्रवृत्तमित्यभिप्रेत्य शङ्कते ॥ **व्यवच्छेद-वाक्यार्थरुचीनामिति** । इतरव्यावृत्तिरूपव्याप्याङ्गीकार वतामवधारणेन सदेव न त्वारोप्यमित्यर्थः ॥ **तेषामपीति** । व्यवच्छेदवाक्यार्थरुचीनामन्यापोहापरनामकातद्व्यावृत्तेर्वाक्यार्थत्वाङ्गीकारेणैवं विधा-वधारणस्यायोगान्ययोग व्यवच्छेदस्यानभिमतत्वादित्यर्थः । यद्येप्येवंविधावधारणस्य परेषामभिमत-त्वेऽप्युदयनोक्त लक्षणमयुक्तम् । तत्पक्षेऽवधारणे तात्पर्यसत्त्वेन तदारोपायोगादारोपघटितलक्षण-कथनायोगात् । तथाऽप्येवंविधावधारणाभ्युपगमः परेषां नास्तीति ज्ञापनमुखेनास्योक्तछलत्व-निग्रहायैवमुपलब्धिरिति मन्तव्यम् ।

**(६४) प्र.प.— ॥ २० ॥ (२) (२१) ॥ अनुपलब्धिसमः ॥ उपलब्ध्यादिविषयिधर्माणां स्वात्मनि वृत्त्यवृत्त्या तत्त्वव्याघातापादनमनुपलब्धिसमः । यथोपलब्धिः स्वात्मनि वर्तते चेदुप-लब्धत्वाद् घटादिवदनुपलब्धिः । न वर्तते चेत्तथाऽपि तद्वदेवेत्यादि । अत्र विषयापेक्षयोप-लब्धित्वस्य स्वात्मनि वृत्त्यवृत्तिभ्यां न निवृत्तिरिति वक्तव्यम् । तदनङ्गीकारे स्वन्यायविरोधः स्वक्रियाविरोधो वेति ।**

**जना.—** ॥ **उपलब्धीति** । अत्र विषयः साध्यधर्मः । लिङ्गजन्यानुमितिविषयत्वात् । सोऽस्यास्तीति विषयी पक्षस्तद्धर्माणामित्यर्थः ॥ **तत्त्वेति** । उपलब्धित्वेत्यर्थः । तत्त्वव्याघाता-पादनमात्रस्य प्रकारान्तरेण सदुत्तरेणापि सम्भवात्तद्व्यावृत्तये स्वात्मनीत्यादि । एतदप्युक्तं वरदराजेन ।

**स्वस्मिन्विषयिधर्माणां तत्तद्रूपप्रकल्पनात् ।**
**विपर्ययप्रसङ्गः स्याज्जातिश्चानुपलब्धित** ॥ इति ।

**यथेति** । यथेत्यनन्तरमिदं वस्त्वस्ति । उपलब्धत्वादिति वादिना हेतौ प्रयुक्त इति शेषः । अनुपलब्धिरुपलब्धिर्न स्यादित्यर्थः । तद्वदेव घटादिवदेवेत्यर्थः । तथा चोपलब्धत्वादिति हेतुरसिद्ध इति भावः । स्वव्याहतिं **दर्शयितुमुत्तरकथाप्रवृत्तिप्रकारमाह ॥ अत्रेत्यादिना ।**

**राघ.— ॥ उपलब्ध्यादीति** । इच्छाकृत्यादिरादिपदार्थः । विषयिधर्माणामर्थविषयधर्माणामित्यर्थः। वृत्त्यवृत्त्यनिमित्तेनोपलब्धित्वादिव्याघातापादनमित्यर्थः । स्वात्मनि स्वात्मविषयेऽनुपलब्धिरुपलब्धिर्न भवतीत्यर्थः ॥ **तथाऽपीति** । स्वविषये न वर्तते इति पक्षेऽपि । तद्वदेव घटवदेव । घटो यथा स्वविषये स्वयं न वर्तत इति कृत्वोपलब्धिर्न भवति तथोपलब्धिरपि स्वस्मिन्स्वयं न वर्तत इत्यनुपलब्धिः स्यादित्यर्थः । इत्यादीत्यादिपदेनेच्छादावप्येवं ध्येयमिति गृह्यते ॥ **तदनङ्गीकार इति ।** विषयापेक्षयोपलब्धित्वादेः कदाऽप्यनपाय इत्यस्यानङ्गीकार इत्यर्थः ॥ **स्वान्यायेति** । उपलब्धित्वादिति वाद्युक्तं साधनं न साधकमसिद्धत्वात्सम्मतवदिति । जातिवाद्युक्तप्रतिषेधेऽप्यसिद्धिः स्वात्मनि वर्तते न वा । आद्येऽसिद्धत्वमेव नासिद्धत्वम् । न वर्तत इति चेदसिद्धवदेव नासिद्धत्वमिति । उभयथाऽप्युपलब्धित्वस्यासिद्धिविषयत्वरूपासिद्धत्वं नेति वक्तुं सुवचत्वात्स्वन्यायविरोधः । तथोपलब्धिं निराकुर्वन्नुपलब्ध्यर्थं वाक्यं प्रयुङ्क्ते इति स्वक्रियाविरोधो वेत्यर्थः ।

**विज.—** स्वयं लक्षणमाह ॥ **उपलब्ध्यादीति ॥ तत्त्वेति ।** उपलब्धित्वादीत्यर्थः ॥ **स्वात्मनीति ।**

**वेदे.— ॥ विषयिधर्माणामिति** । विषयनिरूप्यधर्माणामित्यर्थः ॥ **तत्त्वेति** । उपलब्धित्वादित्यर्थः ॥ **स्वात्मनीति** । उपलब्ध्यादावित्यर्थः । स्वात्मनीति विषयसप्तमी ॥ **न वर्तत इति ।** स्वविषये उपलब्धिरूपेण वर्तमानघटादिवदुपलब्धिर्न स्यादस्वविषयकत्वादित्यर्थः । इत्यादीत्यनेनानुपलब्ध्यादिविषयिधर्मान्तरपुरस्कारेणाप्येतज्जातिप्रवृत्तिं गृण्हाति । तत्प्रकारश्च प्रमाणलक्षणटीकादौ द्रष्टव्यः ॥ **अत्रेति** । स्वात्मनि वृत्त्यवृत्तिभ्यामुक्तरीत्या चापेक्षयोपलब्धित्वनिवृत्तावपि न विषयापेक्षयोपलब्धितानिवृत्तिः । विषये तस्य वृत्त्या तत्त्वोपपत्तेः । तथा च स्वात्मवृत्तेरयुक्तताया अप्येवाङ्गीकृतत्वेनायुक्ताङ्गाधिकत्वमिति भावः ॥ **तदनङ्गीकार इति ।** विषयापेक्षयाऽप्युपलब्धित्वस्यानङ्गीकार इत्यर्थः । इदमत्राकूतम् । जातिवादिप्रमेयमप्युपलब्धित्वादस्तीत्यङ्गीकर्तव्यम् । तथा च तत्राप्युपलब्धेः स्वात्मनि वृत्त्यवृत्तिभ्यामभाव एव चासिद्धिरिति स्वन्यायविरोधः ।

**अभि.— ॥ उपलब्ध्यादिविषयिधर्माणामिति** । उपलब्धीच्छादिसविषयधर्माणां स्वात्मविषयकत्वाभ्यां तत्त्वव्याघातः स्यादिति साधनमुपलब्धिसम इत्यर्थः ॥ **न वर्तते चेदिति** । यथा

स्वात्मन्यनुपलब्धिर्घटादिर्न क्वाप्युपलब्धिरेवमुपलब्धिरपि स्वविषयेऽनुपलब्धिविषयत्वान्न क्वाप्युपलब्धिः स्यात् । न हि यः स्वात्मानं विषयीकर्तुं न शक्नोति सः परात्मानं विषयीकर्तुं शक्नोतीति भावः । एवं विकल्प्य दूषणाभिधाने पाक्षिकजयबुद्धिरुत्थानबीजम् । इदमस्त्युपलब्धित्वादिति वादिहेतोरसिद्धि-रारोप्या ॥ **अत्र विषयापेक्षयेति ।** यः स्वात्मनि यद्रूपो न भवतीति सोऽन्यत्रापि तद्रूपो न भवति । पराग्रहस्याद्यापि ज्ञातुमशक्यत्वादुपलब्धेः स्वात्मनि वृत्त्यवृत्तिभ्यां न तत्त्वनिवृत्तिरित्येवोत्तरं वाच्यम् । न जातित्वमित्यर्थः ॥ **तदङ्गीकार इति ।** जातिवादिना स्वोपलब्धेः स्वात्मनि वृत्त्यभावेऽप्यन्यत्रोप-लब्धित्वाङ्गीकारात्तत्प्रतिबन्दीविरोधो वोत्पद्यमानघटादिविषयकत्वासिद्धये घटादिशब्दोच्चारण रूप-स्वक्रियाविरोधो वा वाच्य इत्यर्थः ।

**आद.—— ॥ अत्रेति ।** अत्रैवमापादनीयमुपलब्धेरुपलब्धिविषयत्वे उपलब्धित्वं न स्यात् । यत्रोपलब्धिविषयत्वं तत्रोपलब्धिभेदो यथा घटे उपलब्धिमात्रस्य पक्षत्वान्न व्यभिचारः । तथा च यत्रोपलब्धेर्यत्र हेतुत्वादिकमभिप्रेतं तत्रासिद्ध्यादिकम् । यत्र च नोपलब्धिस्तत्राज्ञानासिद्ध्यादिक-मिति । अथवोपलब्धित्वे मानाभावादनुपलब्धित्वम् । तथा चेदमस्त्युपलब्धित्वादित्यादावुपलब्धित्व-हेतोरसिद्धिरिति । अत्र नायं हेतुः साधकोऽसिद्धत्वादिति दूषणानुमानेऽपि हेतुभूतासिद्धावसिद्धमस्ति न वा । यद्यसिद्धमस्ति तर्ह्यसिद्धभिन्नः स्यात् । यस्त्वसिद्धत्वाश्रयः सोऽसिद्धत्वभिन्नो यथा घट इति व्याप्तेः । अन्यथाऽऽत्माश्रयप्रसङ्गात् । असिद्धिसामान्यस्य पक्षत्वान्न व्यभिचारः । तथा चासिद्धत्व-मसिद्धं यदि नास्ति तर्हि धूमादिवदसिद्धं न स्यात्पूर्ववदेव व्याप्तिः । तथा च धूमादिवदसिद्ध्यद-सिद्धमिति वक्तुं शक्यत्वात्स्वन्यायविरोध उपलब्ध्यभावमङ्गीकरोति । एतत्प्रमेयोपलब्धये शब्दप्रयोगं च करोति । अतः शब्दप्रयोगरूपस्वक्रियाविरोध इत्यर्थः । अनुपलब्धिस्थले तु मानलक्षणटीकोक्तरीत्या ज्ञेयम् । तथा हि । अनुपलब्धिः स्वात्मनि वर्तते न वा । तेन रूपेणास्तीति चेत्प्रमेयवदसती स्यात् । नास्ति चेद्घटादिवन्नानुपलब्धिः स्यात् । यत्र यत्रानुपलब्ध्यभावस्तत्रानुपलब्धिभेद इति व्याप्तिरभि-मता । अत्रोभयत्रापि सदसत्त्वान्यतरपक्षस्योपलब्ध्यनुपलब्धिभेदाभावे बाधकाभावेन व्याप्तिग्राहक-प्रमाणाभावान्नोक्तव्याप्तिर्युक्तेति वक्तव्यम् । प्रमाणविरोधाभावादेर्व्याप्तिनिश्चयानङ्गत्वे प्रकृतेऽप्यसिद्धि-स्तत्त्वेन स्वात्मन्यस्ति न वा । आद्ये शशविषाणादिवदसती स्यात् । द्वितीये धूमादिवन्नासिद्धिः स्यात् । तथा चासिद्ध्यभावादसिद्धत्वमसिद्धमिति वक्तुं शक्तिमत्त्वात्स्वन्यायविरोधः । अत्र क्वचि-द्विषयिधर्मिभिन्ने तदुपलब्धिरुत्थानबीजं तस्योक्तिभेदसामानाधिकरण्यदर्शनरूपत्वेन व्याप्तिनिश्चायक-त्वाभिमानेन जातिप्रवृत्तेः । व्यभिचारनिर्णयाभावस्य प्रमाणविरोधाभावस्य व्याप्तिनिश्चयाङ्गत्वा-नङ्गीकाराद्युक्ताङ्गहीनत्वम् । अधिकं तट्टीकायामनुसन्धेयम् ।

**वि.—** ॥ **उपलब्ध्यादिविषयिधर्माणामिति** । अनुपलब्धीच्छादिरादिशब्दार्थः । विषयिधर्माणां स्वविषयधर्माणामित्यर्थः । स्वात्मनि वृत्त्यवृत्त्योः स्वस्मिन्नसत्त्वासत्त्वयोस्तत्र पक्षो यो व्याघातापादनं स्वरूपव्याहतिप्रसञ्जनमित्यर्थः । लक्ष्यं लक्षणनिर्दिष्टं दर्शयति ॥ **उपलब्धत्वादिति** । उपलब्धत्वादिदमस्तीत्युक्तमिति योज्यम् । स्वात्मनि विषयसप्तमीयं वर्तते । उपलब्धिरूपेणास्ति चेदित्यर्थः । तर्हीति शेषः । उपलब्धिर्घटवत्स्वस्मिन्नप्युपलब्धिरूपा चेत् घटवदुपलब्धिर्न स्यादिति शङ्कितुर्हृदयम् ॥ **न वर्तते चेदिति** । उपलब्धिरुपलब्धिरूपेण स्वस्मिन्नस्तीत्यङ्गीकारश्च । तथाऽपि तस्मिन्पक्षेऽपि तद्वदेव घटवदेव स्यादित्यर्थः । स्वस्मिन्ननुपलब्धिरूपेणावर्तमानस्य घटस्योपलब्धित्वाभाववत्ताऽदृश्युपलब्धिरपि तद्वदुपलब्धिर्न स्यादिति हृदयम् ॥ **इत्यादीति** । अनुपलब्धेर्नास्ति घट इत्युक्तेऽनुपलब्धिः स्वस्मिन्ननुलपब्धिरूपा न वा । आद्ये घटवदनुपलब्धितया नानुपलब्धिः स्यात् । द्वितीयेऽपि घटवन्नानुपलब्धिः स्यादित्यादिरादिशब्दार्थः ॥ **अत्रेति** । एवं स्वरूपहान्यापादन इत्युत्तरं वक्तव्यमिति सम्बन्धः । विषयापेक्षयोपलब्धित्वस्यार्थप्रकाशकत्वस्येत्यर्थः ॥ **तदनङ्गीकार इति** । तस्या उपलब्धेः स्वात्मनि सत्त्वासत्त्वाभ्यां स्वविषयापेक्षयाऽर्थप्रकाशत्वरूपोपलब्धित्वस्य निवृत्तिरित्यस्यार्थस्यानभ्युपगमे स्वन्यायविरोधस्वक्रियाविरोधौ भवत इत्यर्थः । अत्र वादिसाधनमुपलब्धित्वं न स्वसाध्यसाधकमसिद्धत्वात्सम्मतवदिति परस्य विवक्षितम् । अत्राप्यसिद्धत्वादित्युक्तेऽसिद्धिरुपलब्धित्व इव स्वस्मिन्नसिद्धिरूपा न वेति विकल्प्याद्ये उपलब्धिवसिद्धत्वान्नासिद्धिः स्यात् । द्वितीयेऽपि तद्वदेव नासिद्धिः स्यादिति दूषणसम्भवादस्य स्वन्यायविरोधत्वमुपलब्धिं निराकुर्वन्नुपलब्धिसम्पादनाय वाक्यं प्रयुङ्क्त इति स्वक्रियाविरोधं चेत्यस्योभयत्रान्तर्भाव इति बोध्यम् ॥

**(६६) प्र.प.— ॥ नित्यसमः ॥ विशेषणधर्मस्य तदतद्रूपताविकल्पेन धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमः । यथा शब्दोऽनित्य इत्युक्तेऽनित्यत्वं नित्यमनित्यं वा । आद्ये धर्मिणो नित्यत्वापातः । द्वितीये तन्नाशे पुनः शब्दस्य नित्यत्वापत्तिरित्यादि । अत्र स्वपक्षे निर्वाहान्तरविवक्षया परपक्षे दौर्घट्यापादने तात्पर्यं चेत्सदुत्तरमेव । विशिष्टस्वरूपनिराकरणं चेत्तदादौ निर्वाहो वाच्यः । तदनभ्युपगमेन प्रवृत्तस्य स्वन्यायस्वक्रियाविरोधाविति ।**

**जना.—** स्वपक्षे **स्वस्य** प्रतिवादिनः पक्षे । शब्दनित्यत्व इत्यर्थः । परपक्षे शब्दानित्यत्वपक्ष इत्यर्थः ॥ **विशिष्टेति** । अनित्यत्वविशिष्टशब्दस्वरूपेत्यर्थः ॥ **निर्वाहोवाच्य इति** । शब्दनित्यत्ववादिनेति शेषः ॥ **स्वन्यायेति** । एवं धर्मधर्मिभावनिरासे शब्दादेर्नित्यत्वं भिन्नमभिन्नं वेति जातेरेवानुत्थानात्स्वन्यायविरोध इत्यर्थः ॥ **स्वक्रियेति** । उक्तविकल्पेन धर्मधर्मिभावस्यालीकत्वेन कृतकत्वहेतुरसाधकस्तर्कपराहतत्वादिति प्रतिषेधहेतुप्रयोगरूपस्वक्रियाविरोध इत्यर्थः ।

**राघ.**— विशेषणधर्मस्य साध्यधर्मस्येत्यर्थः । धर्मिणो विशेषस्य ॥ **धर्मिणोऽपि नित्यत्वापात इति** । नित्यधर्माश्रयस्यानित्यत्वायोगादिति भावः । इत्यादीत्यादिपदेन नित्यत्वं शब्दाद्भिन्नमभिन्नं वा। आद्येऽनवस्थापत्त्या भिन्नानित्यत्ववैशिष्ट्यभङ्गः । शब्दस्य तदभिन्नत्वे तु न सुतरां तद्वैशिष्ट्य-मित्यादिग्रहः । तथैव वरदराजोक्तेः ॥ **अत्रेति** । नित्यधर्म इत्यस्य दौर्घट्यापादान इत्यन्तेनान्वयः । स्वपक्षे नित्यत्वपक्ष इत्यर्थः ॥ **विशिष्टस्वरूपेति** । विशिष्टपदार्थमात्र (त्वेन) खण्डनतात्पर्यं चेदित्यर्थः ॥ **तदादाविति** । तदा तस्मिन्पक्षेऽनित्यत्वस्य ध्वंसप्रतियोगित्वरूपतया तस्य नित्यत्वेऽपि नित्यधर्माश्रयस्य नित्यत्वमिति न नियमः । जात्याश्रयस्य घटादेरनित्यत्वदृष्टेरित्यादिरूपेण जातिवादि विकल्पितकोट्योरन्यतरकोटेरादौ व्याघातोक्तेः पूर्वं निर्वाहो वाच्य इत्यर्थः ॥ **तदनभ्युपगमेनेति** । उक्तनिर्वाहानभ्युपगमेन दूषणे प्रवृत्तस्येत्यर्थः ॥ **स्वन्यायेति** । वादिसाधनं कृतकत्वं न साध्यसाधकं तर्कपराहतत्वादिति जातिवाद्युक्तप्रतिषेधहेतावपि साध्यसाधकत्वं धर्मितो भिन्नमभिन्नं वा । आद्येऽ-नवस्थापत्त्या भिन्नसाध्यासाधकत्वाभावः । द्वितीये धर्मधर्मिभावायोगेन कृतकत्वं नासाधकत्ववदित्यपि सुवचत्वात्स्वन्यायविरोधः । विशिष्टवस्तुमात्रमपाकुर्वन्स्वाभिमतासाधकत्वरूपसाध्यवैशिष्ट्यसाधनाय प्रवर्तत इति स्वक्रियाविरोधश्चेत्यर्थः ।

**विज.**— ॥ **स्वस्वरूपेति** । उपलब्धिश्चेदुपलब्धिविषयत्वेन घटादितुल्यत्वम् । स्वस्वरूपेऽ-नुपलब्धित्वेऽभिव्यक्तावपीत्यर्थः ।

**वेदे.**— विषयापेक्षयाऽप्युपलब्धितानिरासे चैतद्विषयकोपलब्धिजननाय शब्दप्रयोगरूपस्वक्रिया-विरोधोऽपि न हि सम्भवति । उपलब्धिः स्वातिरिक्तार्थेऽपि नोपलब्धिरिति वदति । तादृशार्थोपलब्धये शब्दव्यवहारं च करोतीति स्वरूपेणैतज्जातिप्रवृत्तिप्रकारमुदाहरति ॥ **यथेति** ॥ **आद्य इति** । न हि धर्मो नित्यो धर्मो चानित्य इति युज्यत इति भावः ॥ **नित्यत्वापत्तेरिति** । अनित्यत्वनाशे नित्यत्वा-पत्तेरावश्यकत्वादिति भावः । स यथा । अनित्यत्वं शब्दाद्भिन्नमभिन्नं वा आद्येऽनवस्था । द्वितीयेऽन्यतरमात्रावशेष इत्यादि । आदिपदेन वैरूप्येणाप्येतज्जातिप्रवृत्तिप्रकारं सङ्गृह्णाति ॥ **सदुत्तरमेवेति** । स्वव्याहतेरभावादिति भावः ॥ **विशिष्टस्वरूपेणेति** । वैरूप्येण प्रवृत्तावुक्तरीत्याऽस्या जातेर्विशिष्टस्वरूपमात्रे स्वरूपनिराकरणेऽपि प्रयोगसम्भवादिति भावः । अत एवाह परः । उप-लक्षणं नामैतत् । नित्यसमेत्यन्वर्थसंज्ञा तूपरञ्जकधर्मसम एवेति । ततश्च नित्यानित्यभिन्नाभिन्ने कार्या-कार्ये श्रितानाश्रितसत्यासत्यसन्दिग्धासन्दिग्धे इत्याद्या विकल्पक्रमाः सङ्गृहीता भवन्तीति ॥ **निर्वाह इति** । तर्कस्य व्याप्त्याद्यभावाद्युक्ताङ्गहानिरिति वक्तव्यमित्यर्थः । तदनभ्युपगमे च निर्वाह-

प्रकारानभ्युपगमे । धर्मधर्मिभावमात्रापलापेन जातेरप्यनुत्थानात्स्वन्यायविरोधः । विशिष्टं नास्तीति वाक्यार्थस्यापि विशिष्टरूपत्वेन स्वक्रियाविरोधश्चेति भावः ।

**अभि.— ॥ धर्मिण इति** । धर्म्यभावे धर्मायोगात्तन्निर्वाहाय प्रथमं धर्मिणो नित्यत्वं वाच्यम् । तस्मिन्सति नानित्यतावैशिष्ट्यं विरुद्धत्वादिति भावः ॥ **द्वितीये तन्नाश इति** । अनित्यत्वमनित्यत्वमिति वदता धर्मिणो नित्यत्वं वाच्यम् । परस्परविरुद्धयोरन्यतरप्राप्तिं विनाऽन्यतरनिवृत्त्ययोगात् । तस्मिन्सत्यनित्यः शब्द इति रिक्तं वचः स्यादिति भावः । साध्यधर्मस्य तदतद्रूपताविकल्पेन प्रत्यवस्थानं पाक्षिकजयहेतुरुत्थानबीजम् । बाधितविषयत्वमारोप्यम् ॥ **अत्र स्वपक्ष इति** । अनित्यत्वमनित्यत्वमेव किं नाम धर्मिणा सहैव नश्यति । न चैवं सति तन्नाशे धर्मिणो नित्यत्वं प्राप्नोति । सत्येव धर्मिणि परस्परविरुद्धयोरेकस्य निवृत्तावपरस्य प्राप्तिरिति नियमादिति स्वमनसि समाधानं कृत्वा वादिपक्षे दौर्घट्यव्युत्पादनमात्रे तात्पर्यं चेत्सदुत्तरमेवेत्यर्थः ॥ विशिष्टस्वरूपेति । परचित्तवर्तिनो निर्वाहानभ्युपगमस्याद्यापि ज्ञातुमशक्यत्वात्प्रागुक्तदिशा निर्वाह एव वाच्यो न जातित्वमित्यर्थः ॥ **तदनभ्युपगमेनेति** । अभिप्रायाविष्करेण तु जातित्वं वक्तव्यम् । किं नाम जातिवादिना स्वाभ्युपगमघटाद्यनित्यतानिर्वाहाय पूर्वोक्तनिर्वाहस्याभ्युपगमात्तत्प्रतिबन्दीविरोध इत्यर्थः । तथा शब्दोत्पादनाय स्वानुष्ठीयभेरीताडनादिक्रियाविरोधः । नित्यस्योत्पादनायोगेन तदुत्पादनक्रियाया नित्यत्वविरोधादिति स्वन्यायविरोधः स्वक्रियाविरोधः स्वेच्छया वक्तव्य इत्यर्थः।

**वि.— ॥ विशेषणधर्मस्य तदतद्रूपताविकल्पेनेति** । विशेषणरूपसाध्यसमस्य तद्रूपस्य तद्रूपत्वाभावविकल्पेन धर्मिणस्तद्विशिष्टत्वनिराकरणमित्यर्थः । प्रमाणबाधेन तद्विशिष्टत्वभङ्गवारणाय विशेषणस्य तदतद्रूपताविकल्पेनेति विशेषलक्षणं लक्ष्ये दर्शयति ॥ **यथेति ॥ धर्मिणो नित्यत्वापात इति** । निराश्रयस्य सत्त्वायोगादिति भावः । तन्नाशेऽनित्यत्वस्य नाश इत्यर्थः ॥ **शब्दस्य नित्यत्वोपपत्तिरिति** । नित्यत्वविरुद्धस्यानित्यत्वाभावे नित्यत्वस्यावश्यम्भावाद्धर्मिणो नित्यत्वा पत्तिरिति भावः ॥ **इत्यादीति** । अनित्यत्वं शब्दाद्भिन्नमभिन्नं वा । आद्येऽनवस्थाप्रसङ्गाद्भिन्नानित्यत्वभङ्गः । द्वितीये तस्य वृत्तित्वाभावाद्भङ्ग्यन्तरेण शब्दस्यानित्यत्वं नास्तीत्यापात इत्यादिरादिशब्दार्थः ॥ **अत्रेति** । एवं धर्मिणः शब्दस्यानित्यत्वविशिष्टत्वभङ्गापादने कृते तदापादनं सदुत्तरमेव न जातिरिति वाच्यमित्यर्थः । स्वपक्षे शब्दनित्यत्वपक्षे निर्वाहान्तरविवक्षया नित्यत्वं नित्यमनित्यं चेति विकल्प्याद्यदूषणस्य परिहारं वक्ष्यामीत्याशयेन परपक्षे शब्दानित्यत्वपक्षे दौर्घट्यापादनेऽयुक्तत्वप्रसञ्जन इत्यर्थः । एतदापादनं सदुत्तरमेव न जातिरिति वाच्यमित्यर्थः ॥ **तदनभ्युपगमेन प्रवृत्तस्येति** । क्वचिदपि पक्षे निर्वाहा-

नङ्गीकारेण दूषणे प्रवृत्तस्य तु स्वन्यायविरोधस्वक्रियाविरोधौ स्यातामित्यर्थः । अत्र वादिसाधनं कृतकत्वं साध्यसाधकं न प्रतितर्कपराहतत्वादिति परस्य विवक्षितम् । असाध्यसाधकत्वं भिन्नमभिन्नं वा । आद्येऽनवस्थाप्रसङ्गात् । भिन्नस्य तस्य तत्राभावः । द्वितीये तत्र साध्यसाधकत्वाभावेन तद्विरोध साधकत्वप्राप्तेः साध्यसाधकत्वभङ्ग इत्यादिरूपेण परदूषणस्यापि दूषणसम्भवादस्य स्वन्यायविरोधत्वं शिष्टमात्रं निराकुर्वन्साध्यसाधकत्वविशिष्टस्य साधनाय प्रवर्तत इति स्वक्रियाविरोधत्वं चेत्यभ्युपगतत्वादस्यान्तर्भाव इत्यनुसन्धेयम् ।

**(६७) प्र.प.— ॥ अनित्यसमः ॥ वादिसाधनप्रतिबन्या धर्मान्तरेण तद्वतां साध्यधर्मवत्त्वापादनमनित्यसमः । यथा यदि कृतकत्वाच्छब्दोऽनित्यः स्यात्तर्हि सत्त्वात्सर्वमनित्यं स्यादिति । इयमप्यविशेषसमलक्षणेनैव सङ्गृहीतत्वान्न पृथग्वाच्यैव ।**

**जना.— ॥ वादीति** । उत्कर्षसमव्यावृत्त्यर्थं धर्मान्तरेणेत्युक्तम् । एतदेवाह वरदराजः ।

**साधर्म्यादिर्विपक्षस्य सपक्षत्वप्रसञ्जनम् ।**
**साधनप्रतिबन्या यत्स ह्यनित्यसमो मत ॥** इति ।

**इयमिति** । साधनप्रतिबन्या तदितरधर्मेण तद्वतां सर्वपदार्थानामविशेषापादनत्वरूपविशेषसमलक्षणस्य सामान्यरूपतया तेनैव साध्यधर्मवत्त्वापादनरूपानित्यसमस्य विशेषस्य सङ्गृहीतत्वात् पृथङ् न वाच्येत्यर्थः । सामान्यविशेषापादनत्वाभ्यामेव जात्यन्तरत्वाभ्युपगमे जात्यानन्त्यं स्यादिति भावः ।

**राघ.—** सत्प्रतिपक्षत्वव्युदासाय साधनप्रतिबन्येति ॥ **इयमपीति** । यथा प्रकरणसमजातिः साधर्म्यसमलक्षणेन सङ्गृहीता तथेयमप्यनित्यत्वाविशेषापादनरूपत्वात्तल्लक्षणेनैव सङ्गृहीतेत्यर्थः । प्रयत्नानन्तरीयकत्वात्प्रयत्नानन्तरभावित्वादिति वादिनोक्ते प्रतिवादी वदति । प्रयत्नानन्तरीयकत्वमित्यादि ॥

**इति जातीनामन्तर्भावोक्तिः ।**

**विज.— ॥ इयमपीति** । तथा च जातित्वसिद्धत्वाभावादिति भावः ।

**वेदे.— ॥ न वाच्येति** । अविशेषसमायां पक्षादेरपि विशेषमात्रापादनमिह तु विपक्षस्य सपक्षत्वापादने तात्पर्यमिति तात्पर्यभेदमुक्त्वा तृतीयहान्याद्याभासकल्पनया जातिभेदकल्पनायामतिप्रसङ्ग इति भावः ।

**अभि.**— ॥ **वादिसाधनेति** । व्याप्तिसदसद्भावाभ्यां विशेषमनादृत्य प्रत्यवस्थानं पाक्षिक-जयहेतुरिति बुद्धिरुत्थानबीजम् । असाधकत्वमारोप्यम् ।

**वि.**— ॥ **वादिसाधनप्रतिबन्ध्येति** । सत्प्रतिपक्षेऽतिव्याप्तिवारणायेदं विशेषणम् । इदमप्यविशेष्य लक्षणैव सङ्गृहीतत्वादिति यथा प्रकरणसमा जातिः साधर्म्यसमजातिलक्षणेन गृहीता यथार्थविशेषसमा जातिरपि साधनप्रतिबन्ध्या । तदितरधर्मेण तद्वतां सर्वपदार्थानां सविशेषापादनत्वेनाविशेषणं समजाति लक्षणेन साधनप्रतिबन्ध्या तदितरधर्मेण तद्वतां सर्वपदार्थानां साध्यरूपधर्मविशेषधर्मवत्त्वस्यापि सङ्गृहीतत्वात्स्वाश्रयान्तःपातित्वेन कृतत्वोत्तरः पृथङ् न वक्तव्य एवेत्यर्थः ।

(६८) प्र.प.— ॥ **कार्यसमः** ॥ **हेतोः सन्दिग्धासिद्ध्या प्रत्यवस्थानं कार्यसम इति केचित् । यथा शब्दो नित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वमुत्पाद्यत्वेन व्यङ्ग्यत्वेन वेति सन्दिह्यत इति । इदमप्यन्यथासिद्ध्युद्भावनत्वात्सदुत्तरमेव । तस्मात्पक्षादीनामन्यतमस्या- सिद्धि-मुद्भाव्य तत्साधकत्वेन स्वयमुत्प्रेक्षितस्य दूषणेन वादिसाधनभङ्गः कार्यसम इत्युदयनः । यथा शब्दो नित्यः कार्यत्वादित्युक्ते कार्यत्वमसिद्धम् । तत्साधनं च प्रयत्नानन्तरीयकत्वं वाच्यम् । तच्चान्यथासिद्धमिति । इदमप्यनभिप्रेततात्पर्यारोपाच्छलमेवेति ।**

**जना.**— ॥ **केचिदिति** । जरन्नैयायिका इत्यर्थः ॥ **अन्यथासिद्धीति** । हेतोरिति शेषः ॥ **उत्प्रेक्षितस्येति** । हेतोरिति शेषः । एतदप्युक्तं वरदराजेन ।

**असिद्धतां वादिहेतोरुक्त्वा तं साधयेत्स्वयम् ।**
**तद्दूषणान्मूलहेतुभङ्ग कार्यसमो भवेत् ॥** इति ॥

**अन्यथासिद्धमिति** । तथा चासिद्धो हेतुरिति भावः ॥ **छलमेवेति** । सामान्यछलमेवेत्यभिप्रायः ।

**अभि.**— ॥ **तस्मात्पक्षादीनामिति** । स्वोत्प्रेक्षितहेतुदूषणं पाक्षिकजयहेतुरिति बुद्धिरुत्थानबीजम् । अङ्गासिद्धिरारोप्या ।

**आद.**— ॥ **कार्यसम इति** । अत्र व्यवहर्तव्यं च द्वैतदर्शनमुत्थानबीजमित्युक्तम् । प्रमाण-लक्षणटीकायां द्वैतभेदः सदसत्त्वदर्शनमिति तदर्थः । एवं च सर्वत्रापि व्यवहारविषये सत्त्वनिश्चया-योगेन प्रमाणावश्यं वक्तव्यमेव । कुत्रापि सत्त्वनिश्चयाभावात् । प्रमाणं च प्रसिद्धमेव भवेदिति स्वयं तत्कल्पयतीति भावः । अन्ये तु । कथायां वक्तव्यहेतौ साधकत्वेनाभिमतप्रमाणसिद्ध्यसिद्धिरूप-

भेददर्शनम् । अथवा प्रकृते हेतुसाधकत्वेनाभिमते साधकत्वासाधकत्वरूपवैलक्षण्यदर्शनमित्याहुः ॥ **इदमपीति** । असिद्धिरेव दोषत्वेनोद्भावनीयत्वम् । तत्परिहारो वादिना वक्तव्यः । तथा च सिद्धोक्त्यैवाकाङ्क्षाया निवृत्तत्वादधिकस्य तत्प्रमाणोक्त्यादेरसङ्गतत्वादसङ्गतावन्तर्भाव इति वक्तव्यम् । तथाऽपि छलस्यासङ्गतिरूपत्वाच्छलोक्तावसङ्गतिरुक्तैव भवति । तदभिमतनिरनुयोज्यप्रभेदरूपछलत्वेनास्य जातित्वेन ग्रहणमनुपपन्नतरमिति तस्याकौशल्यप्रदर्शनाय तथोक्तमिति ध्येयम् । स्वन्यायविरोधस्त्विति तस्याभिप्रायान्तरं कल्पयित्वा तस्य दूषणोक्तिसम्भवात् । तथाऽप्यभिप्रायान्तरस्यासिद्धत्वेन सिद्धत्वरूपजात्यङ्गहीनत्वान्न जातित्वमित्याशयः ।

**वि.—** ॥ **हेतोः सन्दिग्धासिद्धयेति** ॥ **प्रयत्नानन्तरीयकत्वादिति** । प्रयत्नानन्तरभावित्वादित्यर्थः ॥ **इदमपीति** । यथा प्रयत्नानुमानेन प्रत्यवस्थानं प्रकरणसम इत्येतत्सदुत्तरम् । यथा सन्दिग्धासिद्ध्या प्रत्यवस्थानमन्यथासिद्ध्युद्भावनत्वात्साध्येन वाऽन्येनापि सह हेतुसत्त्वोद्भावनत्वात्साध्येन वाऽन्येनापि सह हेतुसत्त्वोद्भावनत्वात्सदुत्तरमेव न जात्युत्तरमित्यर्थः ॥ **पक्षादीनामिति** । साधनादिशब्द आदिशब्दार्थः ॥ **तत्साधकत्वेन स्वयमुत्प्रेक्षितस्य दूषणेनेति** । एतद्विशेषणं वाद्यभिमतस्य पक्षादिसाधकस्य दूषणेन पक्षादीनामन्यतरस्यासिद्ध्युद्भावनेन वादिसाधनभङ्गस्य सदुत्तरस्य व्यवच्छेदायेदमपीति । उपलब्धिसमवत्कार्यसमरूपं जात्युत्तरमप्यनभिमतारोपाद्वक्तुरनभिप्रेते पक्षादन्यतमस्य साधके तात्पर्यारोपात्कारणाच्छलमेव नान्यदित्यर्थः । अनभिप्रेतार्थदूषणेन वादिसाधनभङ्गः छलः । इदमपि तादृशत्वात्तत्रान्तर्गतमिति भावः । इतिशब्दो जात्यन्तर्भावकथनपरिसमाप्तौ वर्तते ।

**(६९) प्र.प.— ॥ २० ॥ (३) ॥ हान्याद्याभासः ॥ प्रतिज्ञाहान्याद्यप्राप्तावपि भ्रान्त्यादिना तदुद्भावनं हान्याद्याभासः । स प्रमाणविरोध एव । हान्याद्याभासस्य प्राश्निकादिभिः प्रमितत्वात् ।**

**जना.—** एवं चतुर्धा विभक्ते निरनुयोज्यानुयोगे छलजाती स्वन्यायविरोधादावन्तर्भावयित्वा हान्याद्याभासद्वयमन्तर्भावयति ॥ **प्रतिज्ञेत्यादिना** । सदुत्तरप्रतिज्ञाहान्युद्भावननिरासायाप्राप्तावपीत्यन्तम् । विक्षेपव्यावृत्यर्थं भ्रान्त्यादिनेति ।

**राघ.—** क्रमप्राप्तं तृतीयं निरनुयोज्यानुयोगप्रभेदं लक्षयित्वा स्वोक्तेऽन्तर्भावयति ॥ **प्रतिज्ञाहान्यादीति** । प्रतिज्ञान्तरादिरादिपदार्थः ॥ **भ्रान्त्यादिनेति** । परव्यामोहनमादिपदार्थः ।

**विज.—** एवं छलजाती निरूप्य निरनुयोज्यानुयोगप्रभेदमुक्त्वा तृतीयं हान्याद्याभासरूपं तद्भेदमाह ॥ **प्रतिज्ञेति** ॥ **भ्रान्त्यादिनेति** । इदं चानेकविकल्पस्फुरणेन विकल्पयतोऽनिष्टविकल्पत्यागेन

प्रतिज्ञाहानिः । प्रकरणाद्यापन्नविशेषणाविष्करणेन प्रतिज्ञान्तरम् । नञः प्रयोगमात्रेण विरोध इत्यादिपरग्रन्थानुसारेण द्रष्टव्यम् । तस्यान्तर्भावमाह ॥ **स इति ।**

**अभि.— ॥ प्रतिज्ञाहान्यप्राप्तावपीति ।** उदाहरणानि तु विमतं मिथ्या दृश्यत्वादिति वादिनोक्ते प्रतिवादिना किमिदं मिथ्यात्वमसत्त्वमनिर्वचनीयत्वं वेत्युक्ते वादी वदति । अनिर्वचनीयत्वं वदता प्रतिज्ञातस्यासत्त्वस्य त्यागात्प्रतिज्ञाहानिरिति । अयं हान्याद्याभासः । अत्रैवोदाहरणेऽसत्त्वमिति प्रतिज्ञायानिर्वचनीयत्वं वेति प्रतिज्ञान्तरस्य कृतत्वात्प्रतिज्ञान्तरमिति यद्वादिवचनं तत्प्रतिज्ञान्तराभासः। वादिना पर्वतोऽग्निमान्धूमवत्त्वादित्युक्ते प्रतिवाद्याह । प्रतिज्ञाविरोध इति । अयं तदवभासः । धेनु-विवक्षया सास्नादिमान्गौरिति वादिनोक्ते प्रतिवाद्याह । पृथिव्यां सास्नादिमत्त्वस्य प्रमाणबाधितत्वाद-सम्भवीदं लक्षणमिति । वाद्याह । न मया पृथिव्याः सास्नादिमत्त्वं लक्षणमिति । प्रतिवाद्याह । प्रतिज्ञासन्न्यास इति । अयं प्रतिज्ञासन्न्यासाभासः । शब्दोऽनित्यो भावत्वे सति कृतकत्वादिति वादिनोक्ते भावत्वे सतीति विशेषणान्न ध्वंसे व्यभिचार इति वादिनोक्ते प्रतिवादी वदति । हेत्वन्तरमिति । अयं तदाभासः । वादिना वह्निसाधनाय धूमवत्त्वादिहेतुं प्रयुज्य यो धूमवानसावग्नि-मानिति व्याप्तौ चोदितायां प्रतिवाद्याह । अर्थान्तरमिति । अयं तदाभासः । वादिना कपालादिशब्दे प्रयुक्तेऽर्थापरिज्ञानात्प्रतिवाद्याह । निरर्थक इति । अयं तदाभासः । वादिना विमतं सत्यं प्रमाण-दृष्टत्वादिति त्रिवारमभिहितस्य परिषदविज्ञातार्थस्यार्थाप्रतिपत्त्या प्रतिवाद्यविज्ञातार्थमाह । अयं तदा-भासः । वादिनाऽन्वितवाचकपदप्रयोगेऽप्यननुसाधने प्रतिवाद्याह । अपार्थकमिति । अयं तदाभासः । पर्वतोऽग्निमान्धूमवत्त्वादिति वादिनोक्ते सभाक्षोभादिना धूमवान्पर्वत इत्युक्तमिति सम्भ्रान्तचित्त आह ॥ **अप्राप्तकाल इति ।** अयं तदाभासः । वादिना समग्रानुमानप्रयोगे आह न्यूनमिति । अयं तदाभासः। वादिना पर्वतोऽग्निमान्धूमवत्त्वादिति प्रयोगे पार्श्वस्थेन प्रकाशविशेषत्वादिति हेत्वन्तरे प्रयुक्ते भ्रान्त आह । अधिकमिति । अयं तदाभासः । वादिना सकृदुक्त्वा पुनर्वक्तव्यमिति सभ्यादिभि र्नियुक्तः पुनस्तमेवार्थं यदा ब्रवीति तदा प्रतिवादी पुनरुक्तमित्याह । अयं तदाभासः । यदा वादि-नोक्तस्योच्चारणायोग्यत्वात्प्रतिवादी न प्रत्युच्चारणं करोति तदा वाद्याह । अननुभाषणमिति । अयं तदाभासः । वादिनोक्तस्य केनाप्यविज्ञातार्थस्यार्थं स्वार्थं प्रतिवादी न जानाति तदा वाद्याह । अज्ञानमिति । अयं तदाभासः । वादिनोक्तस्य प्रत्युत्तराभिधानवेलायां स्वेदादिना व्यासङ्गे सत्याह । अप्रतिभेति । अयं तदाभासः । कथामारभ्य गृहदाहाद्यनिष्टं श्रुत्वाऽऽह । अद्य मे महत्प्रयोजनमस्तीति तस्मिन्नवसिते वक्ष्यामीति । अपर आह । विक्षेपेति । अयं तदाभासः । अनिष्टापादने कृते परवञ्चनायेष्टत्वान्न मतानुज्ञेत्याह । अयं तदाभासः । पर्वतोऽग्निमान्धूमवत्त्वादिति प्रतिवादिना

तूष्णींस्थिते वाद्याह । मदीयहेतोर्व्यभिचारस्य त्वयाऽनुद्भावितत्वात्पर्यनुयोज्योपेक्षणमिति । अयं तदाभासः । हान्याद्याभासस्य निरनुयोज्यानुयोगैकदेशत्वान्निरनुयोज्यानुयोगाभासः किन्तु तदेकदेशादिछलजात्यप्राप्तकाले ग्रहणं नामाभासः । छलजात्यप्राप्तकाले ग्रहणानामप्राप्तौ तदुद्भावनं तदाभासः । पूर्वाचार्योक्ताभिधाने परव्यामोहनायापसिद्धान्तमित्याह । अयं तदाभासः । सद्धेतुप्रयोगे व्यामोहनाय हेत्वाभास इत्याह । अयं तदाभासः ॥ **उद्भावनकालमिति** । यद्यपि निग्रहप्राप्तिरस्ति तथाऽपि तस्मिन्काले प्राप्त्यभावान्निरनुयोज्यानुयोगलक्षणस्यात्रानुगमो द्रष्टव्यः ।

**आद.—** ॥ **स प्रमाणविरोध एवेति** । अयमाशयः । उक्तस्थलेऽभावत्वेन नोद्भावनीयता किन्तु प्रमाणविरोधत्वेन । तस्यैव प्रथमत उपस्थितत्वात् । तस्यानुपस्थितौ तद्वाक्यादौ प्रतिज्ञाहान्याद्याभासत्वज्ञानानुदयादिति ।

**वि.—** निरनुयोज्यानुयोगांशयोश्छलजात्योरन्तर्भावमभिधाय तदंशस्य हानाद्याभासस्य स्वोक्तान्तर्भावं वक्तुं तत्स्वरूपमाह ॥ **प्रतिज्ञाहान्याद्यप्राप्तावपीति** । प्रतिज्ञान्तरादिरादिशब्दार्थः । भ्रान्त्यादिना । आदिपदेन व्यामोहनं गृह्यते । भ्रान्त्या परव्यामोहनिमित्तेन वेत्यर्थः । तदुद्भावनं हान्यादेरुद्भावनमित्यर्थः । प्रतिज्ञाहान्यादिव्यवच्छेदाय हान्याद्यप्राप्ताविति विशेषणम् । भ्रान्त्यादिनेति तु स्वरूपकथनपरम् ।

**(७०) प्र.प.—** ॥ **अप्राप्तकाले ग्रहणम् । उद्भावनकालमप्राप्यातिक्रम्य वा निग्रहस्थानोद्भावनमप्राप्तकाले ग्रहणम् । तदसङ्गतमेवेति ।**

**जना.—** ॥ **अप्राप्येति** । उद्भावनकालात्प्रागेवेत्यर्थः ॥ **असङ्गतमेवेति** । तत्काले दूषणोद्भावनस्यानाकाङ्क्षितत्वादिति भावः ।

**राघ.—** प्रागुक्तमन्तिममपि तत्प्रभेदं लक्षयित्वाऽन्तर्भावयति ॥ **उद्भावनेति** । असङ्गतमेवेति । उद्भावनकाल एवोद्भावनस्याकाङ्क्षितत्वेनान्यदोद्भावनमसङ्गतावन्तर्भवतीत्यर्थः ।

**विज.—** अप्राप्तग्रहणाख्यं भेदमाह ॥ **उद्भावनेति** । तस्यान्तर्भावमाह ॥ **तदिति** । अनवसरे निग्रहस्थानोद्भावनाकाङ्क्षाविरहादिति भावः ।

**वेदे.—** चतुर्थं निरनुयोज्यानुयोगप्रभेदमाह ॥ **उद्भावनकालमिति** । निग्रहोद्भावनकालस्त्रिविधः पूर्वमेवोक्तः । अस्याप्यन्तर्भावमाह ॥ **तदिति** । निग्रहस्थानोद्भावनोचितकाल एव तदुद्भावनस्याकाङ्क्षितत्वेन तमप्राप्यातिक्रम्य वा तदुद्भावनस्यानाकाङ्क्षितत्वादिति भावः ।

**आद.**— ॥ **उद्भावनकालमिति** ॥ **असङ्गतमेवेति** । तत्र दोषोद्भावनमात्रस्य पराजयहेतुत्वाद्दृष्टेः कालातिक्रमस्यैव वाच्यम् । कालश्च प्रतिवाद्युक्तार्थविशेषप्रतीतिः । तदानीमेव तत्र दोषस्याकाङ्क्षितत्वेन यस्मिन्काले जिज्ञासा तदधिकरणकालातिक्रम एव वाच्यः । तथा च यदा जिज्ञासा नास्ति तत्कालीनोद्भावनस्याजिज्ञासिताभिधानरूपत्वेनासङ्गतित्वमेव । तस्य कालातिक्रमे नोद्भावनीयता सम्भवति । कालातिक्रम इत्यस्य तादृशकालध्वंसाधिकरणे काले उक्तत्वादित्यर्थो वाच्यः । तथा सति जिज्ञासाधिकरणकालेऽपि तदधिकरणक्षणादिध्वंसाधिकरणत्वेन तदानीमुद्भावयतोऽपि पराजयप्रसङ्गः । अतस्तादृशजिज्ञासाभावाधिकरणकाल एवोक्तत्वादिति हेतुर्वाच्यः । अजिज्ञासिताभिधानं च तदेव सामान्यतोऽजिज्ञासितत्वस्य कुत्राप्यसम्भवात् ।

**वि.**— अप्राप्तकाले ग्रहणस्य निरनुयोज्यानुयोगभेदस्य स्वोक्तान्तर्भावकथनाय तत्स्वरूपमाह ॥ **उद्भावनकालमप्राप्येति** । निग्रहस्थानोद्भावनकालमप्राप्येत्यर्थः । उद्भावनकालातिरिक्तकाले निग्रह-स्थानोद्भावनकालमिति लक्षणमात्रं विवक्षितम् । अतिरिक्तकालस्तूद्भावनकालात्पूर्वकालः । उत्तर-कालश्चेति ज्ञापयितुमेवमुक्तिरिति ॥ **एतदसङ्गतमेवेति** । उद्भावनकाल एव निग्रहस्थानोद्भावनस्य सङ्गतत्वादन्यत्तदोद्भावनमनाकाङ्क्षिताभिधानत्वादसङ्गतं नान्यदित्यर्थः । निरनुयोज्यानुयोगान्तर्भाव-कथनपरिसमाप्ताविति शब्दः ।

**(७१) प्र.प.— ॥ अपसिद्धान्तः ॥ अपसिद्धान्तस्तु स्ववचनविरोध एव । यथा प्राभाकर-स्येश्वराभ्युपगमः ।**

**जना.**— ॥ **स्ववचनविरोध एवेति** । पूर्वाचार्यवाक्यस्यापि स्वयमभ्युपगतत्वेन स्ववचनत्वादिति भावः ॥ **प्राभाकरस्येति** । तस्य निरीश्वरवादित्वादिति भावः ।

**राघ.**— एवं प्रतिज्ञाहान्यादिनिग्रहस्थाननिर्देशकन्यायसूत्रे निर्दिष्टानां निरनुयोज्यानुयोगान्तानां विंशतिनिग्रहस्थानानां सप्रभेदं स्वरूपमन्तर्भावं चाभिधाय क्रमप्राप्तमेकविंशमपसिद्धान्तमपि प्राङ्नि-रूपितस्वरूपं स्ववचनविरोधप्रभेदतयोक्त्याऽर्थात्तत्रान्तर्भावं प्राप्तमपीहान्तर्भावप्रस्तावत्स्पष्टत्वायान्त-र्भावयति ॥ **अपसिद्धान्तस्त्विति** ।

**विज.**— अपसिद्धान्तरूपं निग्रहस्थानमन्तर्भावयति ॥ **अपसिद्धान्तस्त्विति** ।

**वेदे.**— एवं निरनुयोज्यानुयोगस्य प्रभेदस्यान्तर्भावं निरूप्येदानीं क्रमप्राप्तस्यापसिद्धान्तरूप-निग्रहस्थानस्य लक्षणस्य पूर्वमेवोक्तत्वादन्तर्भावमेवाह ॥ **अपसिद्धान्तस्त्विति** । पूर्वाचार्यवचनस्यापि स्वयमङ्गीकृतत्वेन स्ववचनत्वादिति भावः ।

**आद.—— ॥ अपसिद्धान्तस्त्विति ।** स्ववचनविरोध इत्यस्य स्वस्मिंस्तदर्थाङ्गीकारज्ञापकवचनविरोध इत्यर्थः । न तु स्वकर्तृकवचनविरोधः । तथा च पूर्वाचार्यवचनस्यापि तादृशत्वेन स्ववचनविरोधरूपत्वमिति ज्ञेयम् । न च स्वाचार्यवचनविरोध एवापसिद्धान्तः । तस्य तेनैव रूपेणोद्भावनीयत्वमस्त्विति वाच्यम् । तथा सति ख्यात्याद्यर्थं परसिद्धान्तमवलम्ब्य कथायां प्रवृत्तस्य निग्रहस्थानत्वाभावप्रसङ्गात् । तत्सिद्धान्तकर्तुस्तदाचार्यत्वा- भावादाभिमानिकं तदस्तीति वाच्यम् । तत्पक्षसाधनमात्रेण फलोपपत्तौ तत्काले तदभिमानाङ्गीकारे प्रयोजनाभावात् । तत्सिद्धान्तविरुद्धं न वक्तव्यमिति समयबन्धमात्रेण कथाफलोपपत्तौ तत्कालेऽभिमानाङ्गीकारे प्रयोजनाभावात् तत्सिद्धान्तविरुद्धं न वक्तव्यमिति समयबन्धमात्रेण कथाप्रवृत्तिसम्भवात् । मम तु तत्सिद्धान्तसिद्धप्रमेयाङ्गीकाराभिमानस्य तदानीं सत्त्वं विना प्रवृत्त्ययोगात्तादृशाभिमानस्य तदानीमावश्यकत्वेनाभिमानाङ्गीकारानुमापकत्वं तदाचार्यवचसां भवतीत्यपसिद्धान्तस्य दोषत्वं सम्भवतीति ध्येयम् ।

**वि.——** अपसिद्धान्तस्य स्ववचनविरोधप्रभेदत्वे स्वोक्तत्वेऽपि परोदीरिताशेषनिग्रहस्थानान्तर्भावकथनप्रकरणत्वात्तस्यान्तर्भावमाह ॥ **अपसिद्धान्तस्त्विति ।** लक्षणस्य प्रागेवोक्तत्वादत्रानुक्तिरिति बोध्यम् ।

## हेत्वाभासाः

**(७२) प्र.प. ॥ हेत्वाभासः ॥ पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति हेतोः पञ्चरूपाणि । तत्रान्वयव्यतिरेकिणः पञ्चापि विवक्षितानि । इतरयोस्तु चत्वारि । केवलान्वयिनो विपक्षाभावेन ततो व्यावृत्त्यभावात् । केवलव्यतिरेकिणः सपक्षाभावेन तत्र सत्त्वानुपपत्तेः । तत्र विवक्षितरूपेषु कतिपयसहिताः कतिपयरहिता हेत्वाभासाः । ते चासिद्धविरुद्धानेकान्तिकानध्यवसित- कालात्ययापदिष्टसत्प्रतिपक्षप्रकरणसमाः । तत्र व्याप्तस्य पक्षधर्मत्वप्रमितिः सिद्धिः । तदभावोऽसिद्धः । तद्वानसिद्धः । स चतुर्विधः । व्याप्यत्वासिद्ध आश्रयसिद्धः पक्षधर्मत्वासिद्ध एतत्प्रमित्यसिद्धश्चेति । तत्र व्याप्यत्वासिद्धो द्विविधः । साध्यसम्बन्धरहितः सोपाधिकसम्बन्धश्चेति । आद्यो यथा । सर्वं क्षणिकं सत्त्वादिति । अयमुभयसम्बन्धाभावादव्याप्तावन्तर्भूतः । द्वितीयो यथा । वैधी हिसाऽधर्मसाधनम् । हिंसात्वाद्ब्रह्महिंसावदिति । हिंसात्वपापसाधनयोः सम्बन्धे निषिद्धत्वस्योपाधेः सत्त्वात् ।**

**जना.——** जरन्नैयायिकमतमाह ॥ **ते चेति ।** असिद्धं निरूपयितुं तद्घटकीभूतामसिद्धिं निरूपयति ॥ **तत्रेति ॥ साध्यसम्बन्धेति ।** साध्यस्यालीकत्वेन निमित्तेनेत्यर्थः । अतो नास्याविरुद्धेन साङ्कर्यमिति

ध्येयम् । आद्यं व्याप्यत्वासिद्धमसिद्धस्त्रिविधेत्यादिना स्वेन विभक्तायामव्याप्तावन्तर्भावयति ॥ **अयमिति ॥ उभयसम्बन्धाभावादिति** । पक्षातिरिक्ते साध्यतदभावसम्बन्धाभावादित्यर्थः ।

**राघ.**— सूत्रक्रमप्राप्तद्वाविंशहेत्वाभासलक्षणं विवक्षुरुपोद्घातमाह ॥ **पक्षधर्मत्वमित्यादिना** । पक्षादेर्लक्षणं प्रागुक्तमिति भावः । इदानीं लक्षणमाह ॥ **तत्र विवक्षितेति** । तत्रेत्यस्यैवं सतीति वा त्रिविधानुमानेष्विति वाऽर्थः । उक्तानुमानत्रये यत्र यावन्ति विवक्षितानि तेषु कतिपयसहिताः कतिपयरहिता इत्यर्थः । हेतुवदवभासनत्वघटनाय कतिपयसहिता इत्युक्तम् । तान्परत्या परिगणयति ॥ **ते चेति** । तेषां लक्षणान्यवान्तरभेदांश्चोक्त्वा यथायोगमुक्तेष्वन्तर्भावमाह ॥ **तत्र व्याप्तस्येत्यादिना** ॥ **तद्वानिति** । व्याप्तिपक्षधर्मतावत्त्वेन प्रमितिहीन इत्यर्थः ॥ **स चतुर्विध इति** । वह्निव्याप्य-धूमवान्पर्वत इत्येवंरूपसिद्ध्यभावत्वं च व्याप्त्यभावेनाश्रयाभावेन वा पक्षधर्मत्वाभावेन वा व्याप्त्यादि-त्रयस्य प्रमित्यभावेन वेति भावेनाह ॥ **व्याप्यत्वासिद्ध इत्यादिना ॥ एतत्प्रमितीति** । व्याप्त्यादेः प्रमित्यसिद्धश्चेत्यर्थः । अज्ञानासिद्ध इति यावत् ॥ **साध्यसम्बन्धेति** । व्याप्तिग्रहस्थलरूपदृष्टान्त-हीनतया साध्यसम्बन्धरहित इत्यर्थः ॥ **अयमिति** । साध्यसम्बन्धहीनासिद्धः प्रागुक्तेऽव्याप्तिरूपहेतु-विरोधावान्तरभेदे साध्यतदभावरूपोभयसम्बन्धाभावरूपेऽन्तर्भूत इत्यर्थः । ब्रह्महिंसावदितीत्य-नन्तरमत्र हेतुसाध्ययोः सम्बन्धः सोपाधिक इति शेषः ।

**विज.**— ॥ **अपसिद्धान्तस्त्विति** । स्ववचनपदार्थः प्रागुक्तः । हेत्वाभासरूपनिग्रहस्थानलक्षणं वक्तुमाह ॥ **पक्षेति ॥ तत्रेति** । अनुमित्यनुकूलरहित इति लक्षणार्थः । तच्चान्वयादौ यथायोगं द्रष्टव्यम् । अतः परमाद्वितीयप्रकरणसमाप्तिः स्फुटो ग्रन्थः क्वचिद्व्याख्यायते ॥ **अयमुभयसम्बन्धेति** । पराभिमतलाक्षणिकत्वासिद्धेरिति भावः ।

**वेदे.**— क्रमागतहेत्वाभासरूपनिग्रहस्थानान्तर्भावकथनाय तावल्लक्षणं वक्तुमुपोद्घातेन किञ्चिदाह ॥ **तत्रेत्यादिना** । इदानीं लक्षणमाह ॥ **तत्रेति** । तेष्वित्यर्थः ॥ **विवक्षितरूपेष्विति** । यथायोग्यं चतुर्षु पञ्चसु वेत्यर्थः । घटादिनिरासायाद्यं विशेषणम् । सद्धेतुव्यावृत्त्यै द्वितीयमिति बोध्यम् ॥ **तद्वानिति** । व्याप्तस्य पक्षधर्मत्वप्रमित्यभाववानित्यर्थः । अयं च विशिष्टाभावः । क्वचिद्व्याप्त्यभावेन क्वचित्पक्षाभावेन क्वापि हेत्वभावेन क्वचित्प्रतीत्यभावेन चतुर्विधोऽपि लक्ष्येऽनुगत इति ध्येयम् ॥ **उभयसम्बन्धाभावादिति** । यद्यप्यत्र क्षणिके क्षण एव साध्यसम्बन्धोऽस्ति । तथाऽपि सर्वस्यापि पक्षत्वेन अस्यापि तदन्तःप्रवेशे पक्षातिरिक्ते साध्यतदभावसम्बन्धाभाव इति द्रष्टव्यम् ।

**अभि.—** ॥ **विवक्षितरूपेष्विति** । कतिपयरहिता इत्येव लक्षणम् । कतिपयसहिता इति स्पष्टार्थमुक्तम् ॥ **उभयसम्बन्धाभावादिति** । उभयसम्बन्धाभावप्रयुक्ता या व्याप्तिस्तत्रान्तर्भूत इत्यर्थः। तृतीयव्याप्तिरिति यावत् ॥ **सोपाधिकस्येति** । सोपाधिकस्य नोपाधिना दूषणे नाभासत्वमपि त्वव्याप्त्या वा समबलप्रमाणविरोधेन वाऽऽभासत्वमिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ।

**आद.—** किञ्चैकस्यैव तत्प्रमेयाङ्गीकारानङ्गीकारयोर्व्याहतत्वेन तज्ज्ञापकयोर्वचनयोरपि व्याहतत्वेन दुष्टत्वं वाच्यम् । तथा केवलाचार्यवचनत्वमात्रस्याङ्गीकारज्ञापकत्वाभावेन तत्त्वेन नापसिद्धान्तशरीरे निवेश उचितः । वादकथायां तु गुरुक्तस्य दोषकथनाभावादिति विभावनीयम् । अनुमिति प्रतिबन्धक-यथार्थज्ञानविषयत्वं नवीनाभिमतम् । तं हेत्वाभाससामान्यलक्षणत्वेनाङ्गीकर्तुमुचितम् । अव्याप्ति-ग्रस्तत्वेन सार्वत्रिकव्यवहाराहेतुत्वात् । तथा हि निर्वह्निवह्निमानित्यादिस्थलीयवह्न्यभाववद्वह्न्य-भावरूपबाधादौ प्रतिबध्यज्ञानाप्रसिद्ध्योक्तलक्षणासम्भवात् । यद्यपि तादृशस्थले तस्य हेतोर्हेत्वा-भासत्वासम्भवेऽपि तादृशन्यायप्रयोक्तुर्व्याघातेन निग्रहः सम्भवति । तथाऽपि तत्र हेत्वाभासत्वस्य सर्वसम्मतस्यानुपपत्तिरिति । अतो हेतुसाध्यभेदेन दोषाणामपि भिन्नत्वाद्यादृशस्थले प्रतिबध्यज्ञाना-प्रसिद्धिस्तादृशबाधान्यतमत्वं लक्षणम् । यत्र तु प्रतिबध्यज्ञानाप्रसिद्धिस्तत्रत्यदोषाणामेवेदं लक्षणमिति वाच्यम् । एवं चैकोक्त्या सर्वत्र प्रसिद्धदोषबोधो न सम्भवति । यद्रूपावच्छिन्नविषयतानिरूपकानु-मितिसामान्ये प्रकृतपक्षे प्रकृतसाध्यावगाहित्वाभावस्तत्त्वं बाधत्वमित्युक्तावुदासीनपदार्थसामान्येऽति-व्याप्तिः । तादृशानुमितेरेवाप्रसिद्धत्वेनानुमितिसामान्येऽप्युक्ताभावसत्त्वात् । अतस्तद्विहायप्राचीनाभि-मतं लक्षणत्वेनाङ्गीकर्तुमुचितमित्याशयेनाह ॥ **सपक्षे सत्त्वमिति** । हेत्वाभास इत्यत्र हेतुवदवभासत इति व्युत्पत्त्या हेतुसादृश्यप्रकारकज्ञानविषयत्वमित्यर्थः प्रतीयते । तथा च हेतुसादृश्यं पदात्प्रतीतं सादृश्यं च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । तथा च सद्धेतुभिन्नत्वमेवात्र लक्षणम् । अन्यस्य प्रयोजनाभावात् । सति प्रयोजने निवेश्यतां वा नात्राग्रहः । पञ्चरूपत्वं सद्धेतुत्वं तद्भिन्नत्वं च पञ्चरूपाभाववत्त्वमेवेति वक्तुं पञ्चरूपाणि तावदाह ॥ **पक्षधर्मत्वमिति** ॥ **विवक्षितरूपेष्विति** । हेतुसादृश्यहेत्वाभासपदशक्यतावच्छेदककोटिप्रविष्टत्वेन तत्सादृश्यतद्गतभूयोधर्मवत्त्वं विनाऽसम्भवा-त्सादृश्योपपादनायाह ॥ **कतिपयसहिता इति** । तथा च यादृशहेतौ यावन्तिपञ्चसु मध्येऽपेक्षितानि तावद्रूपाभाववत्त्वमिति लक्षणं पर्यवसितम् । तेन केवलान्वयिनि विपक्षस्यैवाभावेन तद्वृत्तित्वा-प्रसिद्धावपि न दोषः । तयोः पञ्चरूपवत्त्वस्यानपेक्षितत्वात् । विपक्षादिसत्त्वस्थल एव पञ्चरूपत्व-स्यापेक्षितत्वात् । यज्जातीययावन्तो धर्माः प्रकृतानुमिति जनकतायामुपयुक्तास्तज्जातीयत्वेनाभिमत-हेतोस्तावद्धर्मकूटराहित्यमित्येकोक्त्या सर्वस्थलीयदोषाणां बुद्धिस्थत्वं सम्भवतीति भावः । न च

वह्निमान्धूमादित्यादौ बाधाप्रसिद्ध्या सत्प्रतिपक्षाप्रसिद्ध्या बाधितत्वादेरप्यप्रसिद्ध्याऽबाधितत्वमप्रसिद्धम् । सर्वस्थलीयबाधेषु बाधत्वमखण्डजातिर्येनानुगत बाधत्वावच्छिन्नप्रतियोगिताकाभावो निवेशयितुं शक्येत । तथा सति वन्ह्यभाववान्पर्वत इत्यत्र वह्निमत्पर्वतस्य तज्ज्ञानस्य वा बाधत्वेन तस्यैकज्ञानविषयत्वादिसम्बन्धेन प्रकृतहेतौ सत्त्वसम्भवेनाबाधितत्वस्य पुनः प्रसिद्ध्यापत्तेः । किन्तु तत्तत्स्थलीयबाधाभिन्नभिन्ना एव निर्वाच्याः । तथा च सद्धेतुस्थले बाधाप्रसिद्धिः । भ्रमरूपबाधप्रसिद्धावपि तद्विशिष्टत्वस्यैव हेतौ सत्त्वादिति वाच्यम् । स्वजन्यानुमितित्वेनाभिमतं यज्ज्ञानं तद्विपरीतज्ञानसामान्यनिष्ठप्रमात्वाभावकत्वस्याबाधितत्वरूपत्वात् । तादृशविपरीतानुमितिजनकपरामर्शसामान्यनिष्ठभ्रमत्वकत्वस्य प्रमात्वाभावकत्वस्य वाऽसत्प्रतिपक्षितत्वरूपत्वेन प्रसिद्धत्वात् ॥ **सर्वं क्षणिकं सत्त्वादितीति** । अर्थक्रियाकारित्वादित्यर्थः । तेन तत्तत्क्षणविशिष्टेषु क्षणिकेषु सत्त्वात्कथं साध्यसम्बन्धाभाव इति शङ्कानवकाशः । तादृशविशिष्टेष्वर्थक्रियाकारित्वाभावात् । वस्तुतस्तु नैयायिकमते क्षणद्वयावस्थान एव क्षणिकत्वव्यवहारविषयत्वादेकक्षणमात्रावस्थायित्वं कुत्रापि नास्तीत्युदाहरणत्वं सम्भवतीति ध्येयम् । न च साध्याप्रसिद्धिः । स्ववृत्तित्वस्वोत्तरकालवृत्तित्वोभयसम्बन्धेन क्षणस्यैव साध्यत्वाद्दिनाद्यात्मककालप्रतियोगिकोक्तसम्बन्धस्यापि दिनमात्रवृत्तिपदार्थे प्रसिद्धत्वात् ।

**वि.—** परोदीरितहेत्वाभासानां स्वोक्तानुमानदोषेष्वन्तर्भावकथनाय हेत्वाभासलक्षणं वक्तुमुपोद्घातमाह ॥ **पक्षधर्मत्वमिति** । पक्षादीनां लक्षणं प्रागुक्तमत्रानुसन्धेयम् । पक्षधर्मत्वं पक्षे विद्यमानत्वमित्यर्थः । विपक्षाद्व्यावृत्तिर्विपक्षे सत्त्वाभाव इत्यर्थः । अबाधितविषयत्वं तदभावनिश्चायकं प्रमाणं बाधस्तद्वान्बाधितो धृतांशविषयकत्वमित्यर्थः । असत्प्रतिपक्षत्वं सन्विद्यमानः प्रतिपक्षः साध्यविपरीतसाध्यकत्वं हेत्वन्तरं यस्य तत्सत्प्रतिपक्षं तन्न भवतीत्येतन्न च सम्बध्यते । पञ्चापि रूपाणीत्यनुवर्तते । सत्प्रतिपक्षं तस्य भावस्तत्त्वमित्यर्थः । हेतोः पञ्चरूपाणि रूपाण्यङ्गानि हेतोः साध्यसाधकतायामुपयुक्तानीति यावत् ॥ **तत्रेति** । बुद्धिसन्निहितत्वेन प्रकृते हेतुत्रयमित्यर्थः । इदमन्वयव्यतिरेकिण इत्यनेन च सम्बध्यते । यद्वा तत्र हेतुरूपेष्वित्यर्थः । अस्मिन्पक्षे इदं पदं पञ्चापीत्यनेन चत्वारीत्यनेन च सम्बध्यते । पञ्चापि रूपाणीत्यनुवर्तते । विवक्षितान्यङ्गीकृतानीत्यर्थः । अपिः सम्भावनार्थः । तर्हीतरयोः कतीति जिज्ञासायामाह ॥ **इतरयोस्त्विति** । अन्वयव्यतिरेकिव्यतिरिक्तयोः केवलान्वयिकेवलव्यतिरेकिणोरित्यर्थः । चत्वारि रूपाणि विवक्षितानीत्यनुवर्तते ॥ **तत्रेति** । यस्य हेतोर्यावन्ति रूपाण्यभिमतानि तावत्सु रूपेषु कतिपयरहिता इत्येव लक्षणोक्तिः । कतिपयसहिता इति विशेषणं हेत्वाभासेषु हेतुपदप्रयोगसम्भवनार्थं स्वरूपकथनपरम् ॥ **अयमुभय-**

**सम्बन्धाभावादिति** । साध्यतदभावसम्बन्धाभावादित्यर्थः । स व्याप्त्यन्तर्गतः । अव्याप्तिस्त्रिविधा । लिङ्गस्य साध्यतदभावाभ्यां सम्बन्धः ॥ **उभयसम्बन्धाभावादिति** । तत्रास्य हेतोरव्याप्तिविशेषोभय-सम्बन्धाभावादयं व्याप्यत्वासिद्धोऽव्याप्त्यन्तर्गत इत्यर्थः । सामान्यं विना विशेषायोगादिति भावः ।

**(७३) प्र.प.— साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । निषिद्धत्वं च साध्यमधर्म-साधनत्वं व्याप्नोति । यत्राधर्मसाधनत्वं तत्र निषिद्धत्वमिति नियमात् । न व्याप्नोति च साधन-त्वाभिप्रेतं हिंसात्वम् । पक्षे हिंसात्वसद्भावेऽपि निषिद्धत्वस्याभावात् । अयं तु विप्रतिपत्तेः प्रागव्याप्त्युन्नायकः । वैधहिंसायाः साधनाव्यापकत्वान्निवर्तमानं निषिद्धत्वं साध्यव्यापकत्वा-न्निवर्तयद्धिंसात्वस्य साध्याभावसम्बन्धमापादयतीति । विप्रतिपत्त्युत्तरकालस्तु प्रतिपक्षोन्नायको भवति । साधनाव्यापकत्वात्पक्षाद्व्यावर्तमान उपाधिः साध्यव्यापकत्वात्तद्व्यावर्तयति । ततश्चोपाध्य भावः साध्याभावसाधने हेतुर्भवति । वैधहिंसाऽधर्मसाधनं न भवति । अनिषिद्धत्वात् । भोजन-वदिति । तथा च सोपाधिकस्याव्याप्तौ प्रतिज्ञायाः समबलविरोधे चान्तर्भावः ।**

**जना.**— ॥ **न व्याप्नोतीति** । निषिद्धत्वमिति प्रथमान्तमनुवर्तते । हिंसात्वमिति द्वितीया ॥ **पक्ष इति** । वैधहिंसायामित्यर्थः । ननु सोपाधिकसाध्यसम्बन्धस्य कथं व्याप्तिविरह इत्याशङ्कां परिहर्तु-मुपाधेरनुमानदूषकत्वप्रकारमाह ॥ **अयमिति** । उपाधिरित्यर्थः । विप्रतिपत्तेः पक्षे साध्यसंशयात् । इदं च क्वाचित्काभिप्रायेण । अस्मन्मते सन्देहस्यानुमित्यङ्गत्वानङ्गीकारात् । वस्तुतस्त्वनुमानप्रवृत्तेः प्राग्व्याप्तिग्रहवेलायामिति तात्पर्यम् । उक्तं च तर्कताण्डवे । उपाधिश्चानुमानप्रवृत्तेः प्राग्व्याप्तिग्रह-वेलायामव्याप्तेरेवोन्नायको भवतीति । अव्याप्तेरुन्नायको व्याप्तिविरहानुमापक इत्यर्थः । अव्याप्त्युन्नयन-प्रकारमाह ॥ **वैधेति** । वैधहिंसाया निवर्तमानमिति सम्बन्धः ॥ **विप्रतिपत्तीति** । अनुमानप्रवृत्ति-प्राक्काल इत्यर्थः । प्रतिपक्षोन्नयनप्रकारमाह ॥ **साधनेति** ॥ **पक्षाद्व्यावर्तमान इति** । इदमपि क्वाचित् काभिप्रायेण । क्वचिदुपाधेः पक्षेऽपि वृत्तेरिति ध्येयम् । हेतुर्भवतीत्युक्तं हेतुभवनप्रकारमाह ॥ **वैधेति** ।

**राघ.**— कथं तस्योपाधित्वमित्यत उपाधिलक्षणोक्तिपूर्वं निषिद्धत्वे तल्लक्षणं दर्शयति ॥ **साध्य-व्यापकत्वे सतीति** । व्याप्तेः कर्म व्याप्यं व्याप्तेः कर्तृ व्यापकमिति प्रागुक्तेराह ॥ **निषिद्धत्वं चेति** । सोपाधिको दशाविशेष एव व्याप्यत्वासिद्धो न सर्वदेति भावेनाह ॥ **अयं त्विति** । उपाधिरित्यर्थः ॥ **विप्रतिपत्तेः प्रागिति** । पक्षे साध्यवत्त्वतदभावकोटिकविवादात्पूर्वमनुमानप्रयोगात्प्रागित्यर्थः । व्याप्तिग्रहवेलायामिति यावत् । तदानीमुपस्थितो व्याप्त्यभावोन्नायकोऽनुमापक इत्यर्थः । कथमित्यतो व्यनक्ति ॥ **वैधहिंसाया इति** । पञ्चमीयम् । यागीयहिंसात इत्यर्थः । व्यावर्तमानत्वहेतुः

साधनाव्यापकत्वादिति । एवमग्रेऽपि ॥ **विप्रतिपत्त्युत्तरकालस्त्विति** । बहुव्रीहिरनुमानप्रयोगोत्तरकाले उपस्थित उपाधिरित्यर्थः । प्रतिपक्षानुमापकत्वं व्यनक्ति ॥ **साधनेति** । तत्साध्यं व्यावर्तयतीत्यर्थः ॥ **ततश्चेति** । स्वव्यावृत्त्या साध्यव्यावर्तनाद्धेतोरुपाध्यभावः साध्याभावे हेतुर्भवतीत्यर्थः । कथमित्यतः प्रयोगं व्यनक्ति ॥ **वैधेति** ॥ **तथा चेति** । दशाभेदेन दोषद्वयोन्नायकत्वे सतीत्यर्थः ॥ **अव्याप्ता-विति** । साध्यतदभावरूपोभयसम्बन्धलक्षणाव्याप्तावित्यर्थः ।

**विज.—** ॥ **अयं तु विप्रतिपत्तेरिति** । पक्षेऽधर्मसाधनत्वानिश्चयेन साध्यसम्बन्धाभावो हेतौ निश्चित इति भावः ॥ **तथा च सोपाधिकस्येति** । उपाधेः प्रतिपक्षोन्नायकत्वे समबलविरोधेऽन्तर्भाव इत्यर्थः ।

**वेदे.—** ॥ **विप्रतिपत्तेः प्रागिति** । पक्षादिप्रविभागात्प्राग्व्याप्तिग्रहणवेलायामुपस्थित इत्यर्थः ।

**आद.—** ॥ **साध्यव्यापकत्वे सतीति** । अत्र साध्यव्यापकत्वं चतुर्विधम् । शुद्धसाध्यव्यापकत्वं पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं साधनावच्छिन्नसाध्यव्यापकत्वमुदासीनधर्मावच्छिन्नसाध्यव्यापकत्वं चेति । तत्राद्यस्योदाहरणं दर्शितमेव । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र पक्षधर्मावच्छिन्न-साध्यव्यापकत्वमुद्भूतरूपत्वस्य पक्षधर्मश्च मानसावेद्यद्रव्यत्वम् । आत्मनि रूपादौ व्यभिचारेण तद्विशिष्टसाध्यस्य व्यापकं भवति । उद्भूतरूपं यत्र यत्र मानसवेद्यत्वे सति प्रत्यक्षविषयत्वं तत्रोद्भूत-रूपत्वमिति व्याप्तेः सत्त्वात् । आत्मनि रूपादौ च विशिष्टसाध्याभावाद्द्वायोश्च पक्षत्वात्तत्र व्यभिचार-चोदनासम्भवात् । अस्य दोषत्वं च तादृशधर्मविशिष्टे साधनाव्यापकताभङ्गे सति सम्भवति नान्यथा । उपाधेर्विशिष्टसाध्यं प्रति व्यापकत्वेनोपाध्यभावः स्वाधिकारे विशिष्टसाध्याभावमेव साधयेन्न तु शुद्धसाध्याभावम् । व्यापकाभावस्य स्वप्रतियोगितावच्छेदकावच्छिन्नव्याप्यतावच्छेदकावच्छिन्नाभाव-साधकत्वात् । प्रकृतोपाधेः शुद्धसाध्यतावच्छिन्नं प्रत्यव्यापकत्वात् । तथा च साधनवत्युपाध्यभावेन विशिष्टाभावसिद्धावपि विशेषणीभूतपक्षधर्माभावसिद्ध्याऽपि विशिष्टाभावसिद्ध्युपपत्त्या साधनवति साध्याभावासिद्ध्या व्यभिचाराभावाद्यनुन्नायकत्वाद्दोषत्वासम्भवात् । यथा पर्वतो वह्निमान्धूमादि-त्यादावपि पक्षधर्मपर्वतत्वादिविशिष्टवह्निव्यापकत्वं पाषाणमयत्वादेर्वर्तते महानसादौ साधनाव्यापकत्वं च । तथाऽपि महानसादौ पर्वतीयत्वविशिष्टवन्ह्यभावस्योपाध्यभावेन सिद्धावपि शुद्धवन्ह्यभावासिद्ध्या न व्यभिचाराद्यनुन्नायकत्वमिति न दोषः । तादृशधर्मवति साधनव्यापकताभङ्गे तु साधनवति विशिष्टाभावेऽपि सः साध्याभावमादायैव पर्यवस्यति । न विशेषणाभावमादाय । विशेषणीभूतधर्मस्य प्रमितत्वेन तदभावस्य बाधितत्वेन बाधितार्थमादाय पर्यवसानायोगात् साधनावच्छिन्नसाध्यव्यापको यथा ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वमुपाधिः प्रागभावे व्यभिचारात् किन्तु जन्यत्वरूपसाधन-

विशिष्ट एव । तत्र शुद्धसाधनाव्यापकत्वमेवेति तत्रोक्तशङ्काया अप्रसरात् । तत्रैव मेयत्वहेता-वत्यन्ताभावे पक्षे जन्यत्वमुदासीनो धर्मः पक्षावृत्तित्वादसाधनत्वाच्च । अत्र तु पूर्वोक्तयुक्त्या जन्यत्व-साधनाव्यापकत्वं बोध्यम् ॥ **तथा च सोपाधिकस्येति** । यथा व्याप्त्यादीनामुद्भावनीयता बाधादीनां विरोधत्वेनोद्भावनीयता तथोपपादितमधस्तात् । अत्रेदं बोध्यम् । अनुमिति प्रतिबन्धकतानतिरिक्त-वृत्तिविषयितानिरूपकविशिष्टत्वं न दोषपदार्थः । असाधारण्यादीनां दोषपदार्थत्वाभावप्रसङ्गात् । पक्षधर्मताज्ञानविशिष्टयद्रूपावच्छिन्नविषयता व्यापिकाऽनुमिति प्रतिबन्धकतेत्येवं क्रमेण निवेशे ह्रदो वह्निमान् जलादित्यादौ वन्ह्यभाववज्जलवद्ध्रदादावतिव्याप्तेः । न च तेषामनित्यदोषत्वमङ्गीक्रियत एवेति नातिव्याप्तिरिति वाच्यम् । विचारासहत्वात् । तथा हि । किमिदमनित्यदोषत्वम् । कालविशेषे दुष्ट इति व्यवहारजनकत्वं वा दोषपदबोध्यत्वसत्त्वेऽपि नश्यमानत्वं वा । तदुभयमपि न सम्भवति । तथा हि । सर्वस्यापि दोषत्वेनाभिमतस्य ज्ञानकाल एव दुष्ट इति व्यवहारजनकत्वाद्विभागानुपपत्तेः । न च स्वावच्छिन्नविषयकानाहार्याप्रामाण्य ग्रहानास्कन्दितनिश्चयसत्त्वेऽपि कदाचिद्व्यवहाराजनकत्व-मेवानित्यत्वमिति चेत् । बाधादिदोषज्ञानेऽपि प्रयोजनाद्यनुसन्धानाभावादिना व्यवहारानुत्पत्तिसम्भवेन बाधस्याप्यनित्यत्वापत्तेः । न च तत्स्वरूपयोग्यत्वम् । तच्च प्रतिबन्धकतावच्छेदकतात्पर्याप्तिमद्धर्म-वज्ज्ञानविषयत्वम् । यादृशविशिष्टज्ञानविषयकज्ञानविशिष्टस्वज्ञानस्य प्रतिबन्धकत्वं तादृशविशिष्टज्ञाना-समानकालीनस्वज्ञानस्यापि प्रतिबन्धकत्वं तत्त्वं वा निर्दोषत्वम् । तथा च बाधादेः कदाचिद्व्यवहारा-जनकत्वेऽपि नित्यत्वमक्षतमिति चेत् । असाधारण्यस्यापि प्रतिबन्धकतावच्छेदकतात्पर्याप्ति-मद्धर्मवज्ज्ञानविषयत्वेन नित्यत्वापातात् । न चासाधारण्यज्ञानमात्रस्य न तादृशपर्याप्तिमद्धर्मवत्त्वमिति चेत् । तर्हि तज्ज्ञानस्य प्रतिबन्धकत्वानुपपत्तेः । न च ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकता-श्रयज्ञानविषयत्वमेव नित्यत्वमिति चेत् । तथाऽपि बाधादेरपि तदनुपपत्तेः । तथा हि । बाधादि-ज्ञानस्याप्यप्रामाण्यग्रहकालेऽप्रतिबन्धकत्वेनाप्रामाण्यज्ञानाभाववैशिष्ट्यस्य प्रतिबन्धकतावच्छेदककोटौ निवेशेऽप्रामाण्यज्ञानानां नानाविधत्वेन केषाञ्चिदनुगमायोग्यानामनुगमासम्भवेनैकाभावनिवेशासम्भवेन तत्तज्ज्ञानाभावकूटनिवेशेऽतिगौरवेण प्रामाण्यनिश्चयस्यैव विषयतासामानाधिकरण्यकालिकैतत्त्रितय सम्बन्धेन निवेशे लाघवेन तथैव प्रतिबन्धकताया वाच्यत्वेन बाधज्ञानादिनिष्ठप्रतिबन्धकताया अपि ज्ञानवैशिष्ट्यावच्छिन्नत्वात् । न च प्रामाण्यनिश्चयस्य सर्वत्रासम्भवः । यत्र प्रामाण्यस्य न भानं तत्र ज्ञानप्रत्यक्षे सति ज्ञानत्वरूपसाधारणधर्मज्ञानसत्त्वेन तत्संशयस्यावर्जनीयत्वेन तदनास्कन्दितत्वा-सम्भवेन भवत्पक्षेऽपि प्रतिबन्धकत्वासम्भवात् । न च ज्ञानत्वरूपसाधारणधर्मज्ञानेऽपि प्रामाण्या-प्रामाण्यकोट्यनुपस्थित्या न संशय इति वाच्यम् । कोट्युपस्थितिं प्रत्यपि साधारणधर्मज्ञानस्यैव

कारणत्वेन तत्सत्त्वे तदभावे बीजाभावात् । न च येन साधारणधर्मत्वेन न ज्ञातं ज्ञानत्वं तस्य ज्ञानत्वज्ञानेऽपि साधारणधर्मत्वेन ज्ञानाभावान्न कोट्युपस्थितिरिति वाच्यम् । तादृशपुरुषस्यैवाभावात्। सर्वस्यापि पुरुषस्य किञ्चिद्विषये भ्रमसम्भवेन तत्राप्रामाण्यस्याप्यनुभूतत्वप्रसङ्गात् । एवं प्रामाण्यस्यापि प्रमायां ज्ञानत्वसामानाधिकरण्यस्याप्यनुभूतत्वात् । तदभावे निश्चयाधीनप्रवृत्त्यनुपपत्तेः। बालस्यापि स्तनपानादाविष्टसाधनताज्ञाने प्रामाण्यस्यानुभूतत्वेन तत्सामानाधिकरण्यस्यापि ज्ञानत्वे ज्ञानात् । न च ज्ञानज्ञानेऽपि तत्र साधारणत्वज्ञानेऽपि यत्र दोषविशेषेणोद्बोधकाभावेन वा न साधारणधर्मत्वस्मृतिर्न त कोट्युपस्थितिरिति वाच्यम् । प्रामाण्याप्रामाण्यान्यतरभानं विना ज्ञानज्ञानसिद्ध्युत्तरकालीनत्वादस्याः कल्पनायास्तस्या एवासिद्धेः । न च सुषुप्त्यवहितपूर्वक्षणवृत्तिज्ञानस्याप्रत्यक्षत्वेन तत्र प्रामाण्याप्रामाण्योभयभानमपि न सम्भवतीति तत्र प्रामाण्यनिश्चयविशिष्टत्वं न सम्भवतीति तज्ज्ञाने प्रतिबन्धकत्वाभावप्रसङ्ग इति वाच्यम् । इष्टापत्तेः । तदुत्तरत्र ज्ञानानुत्पत्तेर्विजातीयात्ममनःसंयोगाभावादेवोपपत्तेः । तज्ज्ञानस्य प्रतिबन्धकत्वकल्पने बीजाभावात् । न च सर्वत्र ज्ञाने प्रामाण्यज्ञानस्य संशयात्मकस्य निश्चयात्मकस्य वाऽङ्गीकारे मानाभावः । ज्ञानप्रत्यक्षसामग्र्या एव प्रामाण्यज्ञानसामग्रीत्वेन तस्याः सत्त्वेन तस्य संशयात्मकस्य निश्चयात्मकस्य वाऽऽवश्यकत्वात् । न च तत्रैव मानाभावः । प्रामाण्यस्य विषयतारूपत्वेन विषयतादिभानं विना ज्ञानभानस्यानुभवविरुद्धत्वेन विषयताभाने ज्ञानभानसामग्र्या अपेक्षितत्वेन प्रयोजकत्वेन क्लृप्तत्वेन तदभिन्नप्रामाण्यभानेऽपि प्रयोजकताकल्पनस्योचितत्वात् । तदन्यस्य प्रयोजकताकल्पने मानाभावात् । अप्रामाण्यग्रहानास्कन्दितत्वस्य प्रतिबन्धकतावच्छेदककोटौ निवेशेऽप्रामाण्यज्ञानेऽप्यप्रामाण्यनिश्चयानास्कन्दितत्वनिवेशस्यावश्यकत्वेनानन्त्येन तावदभावानां प्रतियोगिज्ञानासम्भवेन तद्घटितप्रतिबन्धकतावच्छेदकधर्मवैशिष्ट्यस्य दुर्ज्ञेयत्वापातेन ज्ञानविशेषे प्रतिबन्धकत्वज्ञानाभावप्रसङ्गात् । न चेष्टापत्तिः । अनुभवविरोधात् । प्रतिबन्धकतायाः प्रतिबध्यज्ञानानुत्पत्तिमात्रानुमेयत्वे संसारकारणीभूतविपरीतज्ञानानुत्पादाय शास्त्रकारणां प्रवृत्त्ययोगः । शास्त्रजन्यज्ञाने प्रतिबन्धकत्वनिश्चयायोगात् । मन्मते तु शास्त्रोक्तयुक्त्यादिसंवादेन शास्त्रजन्यज्ञाने प्रामाण्यनिश्चयसम्भवेन प्रतिबन्धकत्वनिश्चयसम्भवेन निश्चयाधीनप्रवृत्तिसम्भवः । एतेन यादृशज्ञानविशिष्टस्य स्वज्ञानस्यानुमितिप्रतिबन्धकत्वं तादृशज्ञानाभावकालेऽपि प्रतिबन्धकज्ञानविषयत्वं नित्यदोषत्वमित्यपि परास्तम् । अप्राण्यनिश्चयाभावकाले बाधग्रहस्याप्रतिबन्धकत्वेन नित्यत्वानुपपत्तेः । न द्वितीयः । वह्न्यभाववद्ध्रदरूपबाधादेरपि नाशप्रतियोगित्वात् । अस्तु वा नित्यानित्यत्वव्यवस्था येन केनापि प्रकारेण । तथाऽपिज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताश्रयज्ञानविषयासाधारण्यस्य दोषत्वाङ्गीकारे किमपराद्धम् ।

हेतुमत्पक्षेण यथाश्रुतलक्षणस्यासाधारण्येऽप्यभावात् । परिष्कारे तु हेतुमत्पक्षसाधारणं यथा भवति तथा परिष्कर्तुं शक्यत एव । तथा हि यत्किञ्चिद्विशिष्टविषयकनिश्चयविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापिका प्रकृतानुमिति प्रतिबन्धकता तद्रूपावच्छिन्नत्वं बाधादौ यस्य कस्यचिद्विशिष्टस्य ग्रहणेऽपि लक्षणसमन्वयो भवति । शुद्धबाधविषयताया एव व्यापकत्वात् । प्रतिबन्धकताया असाधारण्ये तु हेतुमत्पक्षरूपविशिष्टविषयकज्ञानविशिष्टसाधारण्यविषयतायाः प्रतिबन्धकतानतिरिक्तवृत्तित्वाल्लक्षणसमन्वयः । यादृशविशिष्टग्रहणे स्वविषयताया अनतिरिक्तवृत्तित्वमुपपादयितुं शक्यते । तस्यैव यत्किञ्चिद्विशिष्टपदेन धर्तव्यत्वात् । सद्धेतुस्थले पाषाणमयत्वविशिष्टपर्वतादौ यत्किञ्चिद्विशिष्टपदेन ध्रियमाणविशिष्टस्याप्रसिद्धचैवातिव्याप्त्यभावात् । द्वितीयज्ञानस्य नियमेन भ्रमत्वात् । न च धूमादिहेतुकस्थले वन्ह्यभाववज्जलवति जलवद्ध्रदे चातिव्याप्तिरिति वाच्यम् । तयोरपि लक्ष्यत्वाङ्गीकारस्यैवोचितत्वात् । एवं च विशिष्टद्वयाघटितत्वनिवेशोऽप्यनर्थकः । विशिष्टान्तराघटितत्वनिवेशेनैवातिव्याप्तिवारणात् । विशिष्टान्तराघटितत्वं च यादृशप्रतिबन्धकतामादाय लक्षणसमन्वयः क्रियते तत्प्रतिबन्धकतानिरूपितप्रतिबद्धयतावच्छेदकावच्छिन्नप्रतिबद्धयतानिरूपितप्रतिबन्धकता यत्किञ्चिद्रूपावच्छिन्नविषयताशालिनिश्चयविशिष्टस्वावच्छिन्नाविषयप्रतीति विषयतावच्छेदकयद्रूपावच्छिन्नविषयताकनिश्चयत्वव्यापिका तत्तद्रूपावच्छिन्नाविषयकप्रतीति विषयतावच्छेदकावच्छिन्नत्वमेवेति । एवं च स्वसङ्केतमात्रमूलकत्वेनानादरणीयमेव तत्प्रक्रियादिकमिति । किञ्च दोषनिरूपणं न व्यसनितया क्रियते किन्तु प्रामाण्यनिश्चयाय । ज्ञानकरणेषु दुष्टत्वज्ञाने सति निर्दुष्टकरणजन्यत्वेन ज्ञानप्रामाण्यमनुमातव्यम् । अप्रामाण्यज्ञानं वा निवर्तते । निर्दुष्टत्वज्ञानं च दोषज्ञानाधीनमिति । तथा च लोके यद्रूपावच्छिन्नाभावज्ञानात्तज्जन्यज्ञाने प्रामाण्यं निश्चित्य प्रवर्तते । यद्रूपावच्छिन्नज्ञानादप्रामाण्यं निश्चित्य निवर्तते दुष्ट इति दोष इति च व्यवहरति तद्रूपावच्छिन्नमेव दोषपदार्थत्वेन निरूपणीयं परीक्षकैर्न तु स्वसङ्केतमात्रज्ञानाय । व्यर्थत्वात् । लोकास्तु जन्यज्ञानस्य प्रतिबन्धकसत्त्वमात्रेण न दुष्ट इति व्यवहरन्ति । तथा सति मणिसत्ताकाले वह्निर्दुष्ट इति व्यवहारापत्तेः । धूमादिजन्यवन्ह्याद्यनुमितेरसिद्धयादिरूपप्रतिबन्धकसत्त्वाद्धूमो दुष्ट इति व्यवहारापत्तेश्च । न च स्वरसतो लोकास्तथा व्यवहरन्ति किन्तु स निर्दुष्ट एव किन्तु प्रतिबन्धसद्भावान्न कार्यनिष्पत्तिरिति वदन्ति । एवं सद्धेतुस्थले बाधभ्रमेण भवदुक्तज्ञानद्वयादिना वाऽनुत्पत्तावपि न प्रेक्षावन्तो हेतोर्दुष्टत्वान्नानुमितिरिति वदन्ति किन्तु तत्पुरुषीयभ्रमादिवशात्तत्कालेऽनुमित्यनुत्पन्नावपि हेतुर्निर्दुष्ट एव वदन्ति । प्रकृते हेतौ प्रमात्मकानुमितिजननस्वरूपयोग्यत्वाभावज्ञाने सति दुष्ट इति व्यवहरन्ति । योग्यता च स्वाभाविकी शक्तिर्वाच्या व्याप्तिपक्षधर्मतादिमत्त्वं वा नाबाधितत्वासत्प्रतिपक्षि-

तत्वयोर्योग्यताशरीरे निवेशः । व्याप्तिपक्षधर्मतादिमति हेतौ बाधितत्वासत्प्रतिपक्षितत्वयोः सर्वथाऽसम्भवात् । व्याप्तिपक्षधर्माभ्यामेव तयोरपि सिद्धेः । तथा सति तादृशयोग्यताभावस्य वा तत्प्रमापकत्वस्य वा दोषलक्षणत्वं वक्तुं युक्तमिति नोक्तलक्षणस्य दोषपदार्थत्वं वा युक्तम् । बाधादेर्हेतुदोषत्वं च प्रागुपदर्शितं दोषपदार्थश्चोक्त एवेति ।

**वि.— ॥ साध्यव्यापकत्वे सतीति** । धूमानुमाने महानसत्वादेरुपाधिनिरासायेदं विशेषणम् । तत्रैवाभिधेयत्वादेरुपाधिव्यवच्छेदाय द्वितीयं विशेषणम् ॥ **अयं तु विप्रतिपत्तेः प्रागिति** । अयमुपाधिः साध्यतदभावकोटिकविप्रतिपत्तेः प्रागव्याप्तेर्व्याप्त्यभावस्योन्नायकोऽनुमापक इत्यर्थः । हिशब्द उक्तार्थस्यान्योन्यप्रसिद्धतां सूचयति । कथमव्याप्त्यनुमापक इति जिज्ञासायां हिंसात्वं न साध्यव्याप्तं साध्यव्यापकाव्याप्यत्वादित्यनुमानमभिप्रेत्याह ॥ **वैधहिंसाया इति** । वैधहिंसायाः सकाशान्निवर्तमानमित्यन्वयः । तत्र हेतुः ॥ **साधनाव्यापकत्वादिति** । तन्निवर्तयद्वैधहिंसायाः साध्यं नियोजयदित्यर्थः । अत्र हेतुः ॥ **साध्यव्यापकत्वादिति** । आपादयति प्रतिपादयतीत्यर्थः । व्यापकनिवृत्तेर्व्याप्यनिवृत्तौ तन्त्रत्वादिति भावः । ननु विप्रतिपत्तेः प्रागपि सत्प्रतिपक्षोन्नायक एवास्तूपाधिरिति चेन्न । विप्रतिपत्तेः प्राक् पक्षपरिग्रहाभावात् । प्रतिपक्षावसराभावेन तदुपनायकत्वादिति ॥ **विप्रतिपत्युत्तरकालस्त्विति** । विप्रतिपत्त्युत्तरकाले तु पक्षपरिग्रहेण प्रतिपक्षावकाशात्तदनुमापकत्वं युक्तमिति भावः । प्रतिपक्षोन्नायकत्वमुपपादयति ॥ **साधनाव्यापकत्वादिति** । यद्यप्युपाधिः पक्षाद्व्यावर्तमानः पक्षेऽवर्तमान इत्यत्र न साधनाव्यापकत्वं हेतुः पक्षादन्यत्रोपाधेः साधनाव्यापकत्वे तेन पक्षे उपाध्यसिद्धेः । तथाऽप्यन्यत्र साध्यव्यतिरेकस्य विप्रतिपत्तौ तत्र स्फुटव्यभिचारेणोपाधिविचारानवकाशात् । विप्रतिपत्तौ तु तस्यापि पक्षत्वेन तत्रोपाधेः साधनाव्यापकत्वेन पक्ष एवासिद्धिरुपपन्नेति तद्व्यावर्तयति । तत्साध्यं वियोजयतीत्यर्थः । उपाधेः प्रतिपक्षोन्नायकत्वे साध्याभावे लिङ्गं वाच्यम् । तत्किमिति जिज्ञासायामाह ॥ **ततश्चेति** । तस्मादेवोपाधेः साध्यव्यापकत्वादेवेत्यर्थः । व्यापकाभावस्य व्याप्याभावनियतत्वात्तस्य हेतुत्वं युक्तमिति बोध्यम् । प्रतिपक्षप्रयोगप्रकारमाह ॥ **वैधहिंसेति** । ननु विप्रतिपत्त्युत्तरकालेऽप्यव्याप्त्युन्नायक एवास्तु । उपाधेरेकेन रूपेण दूषकतासम्भवे वैरूप्यकल्पनायोगादिति चेन्न । पक्षे साध्याभावसाधकोपाधिव्यतिरेकोऽस्तीति ज्ञानमन्तरेणाव्याप्तिज्ञानासम्भवात् । प्रथमोपस्थितप्रतिपक्षोन्नायकतयैवोपाधेर्दूषकतासिद्धेरव्याप्त्युन्नायकत्वकल्पनाभावेन वैरूप्यस्य सत्यत्वादिति । अस्त्वेवं तथाऽपि सोपाधिके व्याप्यत्वासिद्धेः क्वान्तर्भाव इति जिज्ञासायामाह ॥ **तथा चेति** ।

**(७४) प्र.प.— आश्रयासिद्धोऽपि द्विविधः । असदाश्रयः सिद्धसाधनश्चेति । आद्यो यथा । शशविषाणं तीक्ष्णम् । विषाणत्वादिति । प्रमाणविरोधाद्यसङ्कीर्णोदाहरणाभावादयं हेत्वाभास एव**

न भवति । द्वितीयो यथा । ईश्वरवादिनं प्रति क्षित्यादिकं सकर्तृकं कार्यत्वादिति । अयमसङ्गतावन्तर्भवति । अनाकाङ्क्षितसाधनाय प्रवृत्तत्वात् ।

विज.—॥ **प्रमाणविरोधादिति** । शशविषाणतत्तैक्ष्ण्ययोरभावस्य प्रमाणत्वेनावधारणादिति भावः।

वेदे.—॥ **प्रमाणविरोधादिति** । शशविषाणतत्तैक्ष्ण्ययोरभावस्य प्रमाणत्वेनावधारणादिति भावः ।

अभि.— ॥ **प्रमाणविरोधाद्यसङ्कीर्णोदाहरणाभावादिति** । शशविषाणमसदप्रामाणिकत्वादिति सङ्कीर्णोदाहरणस्य सांव्यावहारिकत्वेन दुष्टत्वात् । दुष्टस्य च शशविषाणं तीक्ष्णं विषाणित्वादित्यनुमानस्य प्रमाणविरोधादीना सङ्कीर्णत्वेन तेनैव दुष्टत्वसम्भवादसदाश्रयो हेत्वाभास एव न भवतीति भावः ॥ **ईश्वरवादिनं प्रतीति** । सन्दिग्धस्यैव पक्षत्वात्सिद्धाश्रयस्यापक्षवृत्तित्वादाश्रयासिद्धत्वमिति भावः ।

आद.— ॥ **हेत्वाभास एव न भवतीति** । ननु कथं न हेत्वाभासत्वम् । रूपपञ्चकमध्ये पक्षे सत्त्वस्याभावात्सपक्षत्वादीनां सत्त्वादुक्तलक्षणवत्त्वाद्धेतुवदवभासमानत्वाच्चेति चेन्न । हेत्वाभासत्वेनोद्भावनीयो न भवतीत्यर्थकत्वेन दोषाभावात् । यद्वा तेन रूपेणोद्भाव्यतेति शङ्काविषय एव न भवतीत्यर्थः । तथा हि । प्रमाणविरोधादिज्ञानं विना हेत्वाभासत्वं ज्ञातुं शक्यते । प्रमाणविरोधादिना पक्षेऽसत्त्वज्ञानोत्तरमेव हेत्वाभासत्वज्ञानं भवेत् । तथा च प्रथमोपस्थितपरित्यागे निमित्ताभावात्स एवोद्भावनीयो न तु पश्चाज्ज्ञायमानं हेत्वाभासत्वमित्यर्थः । अत एवासङ्कीर्णोदाहरणाभावादित्युक्तम् । प्रमाणविरोधादीनामेव प्रथममुपस्थितेः । न कदाऽपि हेत्वाभासत्वस्य प्रथममुपस्थितिः सम्भवतीत्युद्भावनीयत्वेन बुद्धिस्थ एव न भवतीति तदभिप्रायः । एवमुत्तरत्रापि बोध्यम् ।

वि.— ॥ **आश्रयासिद्धोऽपीति** । व्याप्यत्वासिद्धवदाश्रयासिद्धश्च द्विविध इत्यर्थः ॥ **असदाश्रय इति** । पक्षीकृताकारेणासदाश्रय इत्यर्थः । तथा च सुवर्णमयोऽद्रिरग्निमानित्यस्यापि सङ्ग्रहो भवति । अत एव यथा शशविषाणमित्यनेनात्यन्तासदाश्रयमुदाहृत्यादिपदोपादानं कृतमुपपद्यते ॥ **प्रमाणविरोधाद्यसङ्कीर्णोदाहरणाभावादिति** । स्वरूपासिद्धेरादिशब्दार्थः । प्रमाणबाधस्वरूपासिद्धव्यावृत्तोदाहरणाभावादयमाश्रयो हेत्वाभास एव न भवतीत्यर्थः । असतः पक्षत्वे विशेष्याभावेन साध्यविशिष्टस्य प्रतिज्ञातार्थस्याभावात्प्रमाणहेतोस्तत्राभावात् । स्वरूपासिद्धत्वेन चासदाश्रयस्य हेतोर्दुष्टतया सिद्धत्वेनादुष्टत्वे कल्पकाभावात् । अन्यथा वन्ध्यासुतो न वक्ताऽचेतनत्वादिति यथार्थता स्यात् । तस्मादाश्रयो हेतुर्नाश्रयासिद्धत्वेन हेत्वाभास इति भावः ॥ **अयमसङ्गताविति** । स च सिद्धसाधनरूप आश्रयासिद्ध आकाङ्क्षाभावरूपासङ्गतावन्तर्भवतीत्यर्थः ।

(७५) **प्र.प.— पक्षधर्मत्वासिद्धोऽनेकविधः । यथा शब्दोऽनित्यश्चाक्षुषत्वादित्यादि । तत्र व्यधिकरणासिद्धो न दूषणमित्युक्तमेव । व्यर्थविशेषणासिद्धोव्यर्थविशेष्यासिद्धश्चाधिक्येऽन्तर्भवतः । भूरियं शशविषाणोल्लिखिता भूत्वादित्यप्रसिद्धविशेषणासिद्धिस्तु दोषान्तरासङ्कीर्णोदाहरणाभावान्न हेत्वाभासः । इतरः पक्षधर्मत्वासिद्धोऽसिद्धावन्तर्भवति । एतत्प्रमित्यासिद्धो यथा । धूमबाष्पाविवेके धूमवत्त्वादिति । अस्याप्यसिद्धिरेव । पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति । अयमपि साध्यसम्बन्धाभावे सति तदभावसम्बन्धित्वादव्याप्तः ।**

✓**जना.—** ननु व्यधिकरणासिद्धस्य कुत्रान्तर्भाव इत्याशङ्क्य तस्य दोषत्वमेव नेत्याह ॥ **तत्रेति ।** पक्षधर्मत्वासिद्धादीनां मध्य इत्यर्थः ॥ **इत्युक्तमेवेति ।** न तु पक्षधर्मतानियम इति पूर्वग्रन्थ इत्यर्थः ॥ **इतर इति ।** शशविषाणमयोऽग्निमान्धूमवत्त्वादित्यादिरित्यर्थः ॥ **असिद्धावन्तर्भवतीति ।** समुचित-देशेऽवृत्तित्वादिति भावः ।

**राघ.—** ॥ **पक्षधर्मत्वासिद्धोऽनेकविध इति ।** स्वरूपासिद्धव्यधिकरणासिद्ध विशेषणा-सिद्धविशेष्यासिद्धाप्रसिद्धविशेषणासिद्धभेदेनानेकविध इत्यर्थः । तान्क्रमेणोदाहृत्यान्तर्भावयोग्य-मन्तर्भावयति ॥ **यथेत्यादिना ।** चाक्षुषत्वादित्यादि । स्वरूपासिद्धस्येतर इत्यादिनाऽन्तर्भावं वक्ष्यति ॥ **तत्रेति ।** असिद्धेषु मध्य इत्यर्थः ॥ **उक्तमेवेति ।** साध्यव्यधिकरणानामपि व्याप्त्युपपादनप्रस्तावे उक्तमित्यर्थः ॥ **व्यर्थेति ।** शब्दो नित्यः सामान्यवत्त्वे सति कृतकत्वात् । कृतकत्वे सति सामान्य-वत्त्वादित्यनयोर्व्यर्थविशेषणत्वादिनाऽसिद्धत्वेन व्यवह्रियमाणौ आधिक्याख्यनिग्रहस्थाने प्रागुक्तेऽन्त-र्भूतावित्यर्थः ॥ **इतर इति ।** व्यधिकरणासिद्धादिरूपपक्षधर्मत्वासिद्धादन्यः स्वरूपासिद्ध इत्यर्थः । प्राग्विभक्तं चतुर्थमुदाहृत्यान्तर्भावयति ॥ **एतत्प्रमितीति** ॥ **अस्यापीति ।** एतत्प्रमित्यसिद्ध-स्याध्यासिद्धिरेव दोषो नान्य इत्यर्थः । असिद्धस्यान्तर्भावोक्तिः ॥

**विज.—** ॥ **तत्र व्यधिकरणासिद्धो न दूषणमित्युक्तमिति ।** न तु पक्षधर्मतानियम इत्यत्रेत्यर्थः । उपरि सविता भूमेरालोकवत्त्वादित्यादावनुमितेरप्रत्यूहत्वादिति भावः ॥ **इतर इति ।** समुचितदेशा-वृत्तिरित्यर्थः ।

**वेदे.—** तृतीयमसिद्धिभेदमाह ॥ **पक्षधर्मत्वासिद्ध इति ।** चाक्षुषत्वादीत्यादिपदेन विशेषण-विशेष्यासिद्धव्यधिकरणासिद्धव्यर्थविशेषणविशेष्यासिद्धाप्रसिद्धविशेषणासिद्धानां ग्रहणम् ॥ **तत्र व्यधिकरणेति ।** न तु पक्षधर्मतानियम इत्यत्रेत्यर्थः । तत्र हि भिन्नदेशकालयोरप्यूर्ध्वदेशवृष्टि-

नदीपूरयोर्हेतुहेतुमद्भावस्य सांव्यावहारिकत्वदर्शनादित्युक्तमिति भावः ॥ **दोषान्तरेति** । प्रमाण-विरोधाव्याप्त्यसङ्कीर्णोदाहरणाभावादित्यर्थः ॥ **इतरः पक्षधर्मतासिद्ध इति** । विशेषणविशेष्या-सिद्धिमानित्यर्थः । विशेषणविशेष्ययोरसिद्धौ । विशिष्टरूपलिङ्गस्याप्यसिद्धिरेवेति भावः । चतुर्थमसिद्धं दर्शयति ॥ **प्रमितीति** ॥ **धूमबाष्पेति** । धूमवति धूमसन्देहदशायामित्यर्थः ॥ **अयमपीति** । समुचित-स्थले लिङ्गस्याप्रमितेरसिद्धलक्षणत्वेनोक्तत्वादित्यर्थः । व्यतिरेक्यनुमानव्यावृत्त्यै साध्यासाधक इति । असिद्धानैकान्तिकव्यवच्छेदायोत्तरभागः ।

**अभि.**— ॥ **अनेकविध इति** । स्वरूपासिद्धः (१) व्यधिकरणासिद्धः (२) व्यर्थविशेषणा-सिद्धः (३) व्यर्थविशेष्यासिद्धः (४) विशेष्यासिद्धः (५) विशेषणासिद्धः (६) भागासिद्धः (७) अप्रसिद्धविशेषणासिद्धः (८) इत्यनेकविध इत्यर्थः ॥ **व्यधिकरणासिद्ध इति** । ऊर्ध्वदेशो वृष्टिमान् । अधोदेशे नदीपूरादिति । व्यधिकरणासिद्धेरव्याप्त्याद्यसङ्कीर्णमुदाहरणम् । तत्तावद्दुष्टमेव सांव्यवहारिक-त्वात् । यत्तु शब्दो नित्यो घटस्य कृतकत्वादिति सङ्कीर्णमुदाहरणम् । तदव्याप्त्यैव दुष्टमिति । व्यधिकरणासिद्धो न दूषणमित्युक्तप्रायमेवेत्यर्थः ॥ **दोषान्तरासङ्कीर्णेति** । अप्रसिद्धविशेषणा-सिद्धोदाहरणे व्याप्त्यादिदूषणान्तरं नियतमेवेति भावः ॥ **धूमबाष्पेति** । धूमवति किमयं धूम इति बाष्प इति सन्देहदशायां प्रयुक्तो न स्वरूपासिद्धो नाज्ञातासिद्धः किन्तु प्रमाविरहात्प्रमित्यसिद्धः । अयमप्यसिद्धिरेवेति । समुचितस्थले + लिङ्गस्याप्रमितेरसिद्धत्वादसिद्धिर्भवत्येवेत्यर्थः ॥ **पक्षविपक्ष-योरेवेति** । पक्षविपक्षयोर्वर्तमानः सपक्षे विद्यमानो विरुद्ध इत्यर्थः । न चेदं साध्यसाधकम् । सपक्षावृत्तित्वे सति पक्षविपक्षवृत्तित्वादित्यनुमाने विशेषणवैय्यर्थ्यमिति न वाच्यम् । विरुद्धत्वादित्य-खण्डोपाधेरेव हेतुतया विवक्षितत्वेन विशेषणैवय्यर्थ्यशङ्कानवकाशात् । अन्यथा प्रमेयत्वादिग्वण्डो-पाधावविभज्य वैय्यर्थ्यशङ्काप्रसङ्गः ।

**आद.**— ॥ **आधिक्येऽन्तर्भवत इति** । नन्वन्येन कृतकार्यस्य पुनर्वचनमाधिक्यम् । न च व्यर्थविशेषणस्थले पुनः प्रयोजनं विनोक्तिरस्ति । प्रमेयधूमादित्यादेरेकपदत्वात् । व्यर्थविशेषणस्य पूर्वमुक्तत्वाच्चेति चेन्मैवम् । प्रमेयधूमपदस्य शुद्धधूमपदापेक्षया भिन्नत्वेन तेन कृतकार्यत्वात्प्रमेय-धूमपदस्याधिक्यलक्षणसम्भवात् । पदस्य सकृदुच्चरितत्वेऽपि प्रमेयपदधूमपदयोः शक्तिग्रहस्य प्रमेय-धूमरूपविशिष्टोपस्थितावावश्यकत्वेन तत्र धूमपदजन्यधूमोपस्थितेः प्राथमिकत्वात् । विशिष्टज्ञाने-विशेषणविशेष्योपस्थित्योः कारणत्वात् । तथा च धूमज्ञानेन कृतकार्यस्य विशिष्टज्ञानस्य प्रयोजको-च्चारणविषयत्वादाधिक्यान्तर्गतिः । वस्तुतस्तु स्वनिवर्त्याकाङ्क्षानिवर्तकपदान्तरविशिक्यष्टत्वस्यैवाधि-पदार्थत्वेन तच्च प्रकृते सम्भवतीत्याशयः ।

**वि.— ॥ पक्षधर्मत्वासिद्धोऽनेकविध इति** । स्वरूपासिद्धिभागा- सिद्ध्यधिकरणासिद्ध्य-प्रसिद्धविशेषणासिद्धिभेदेनानेकप्रकार इत्यर्थः ॥ **चाक्षुषत्वादित्यादीति** । रूपशब्दौ च नित्यौ चाक्षुषत्वादित्यादिरादिशब्दार्थः ॥ **तत्रेति** । स्वरूपासिद्धादिष्वित्यर्थः । उक्तमेव साध्यव्यधिकरण-स्यापि हेतोर्व्याप्तिः पक्षधर्मतानियमाभावस्य नोक्तत्वाद्व्यधिकरणासिद्धो न दोष इत्युक्तमेवेति बोध्यम् । यद्यप्येवं सत्ययं पर्वतोऽग्निमान्महानसस्य धूमवत्त्वादित्यादेरपि साधकत्वप्रसङ्गो दोषः । तथाऽपि महानसेत्यस्यैव वैय्यर्थ्यादस्याधिका नैव दुष्टता । किञ्च यत्र यत्र धूमस्तत्र तत्राग्निरिति व्याप्तेः सामानाधिकरण्यगर्भत्वादन्यगतधूमस्यान्यगतेन वन्हिना व्याप्तेरभावाद्दुष्टत्वमिति नातिप्रसङ्ग इति ध्येयम् ॥ **आधिक्येऽन्तर्भवत इति** । अपेक्षिताधिकाभिधानरूपत्वादुभयस्याधिक्येऽन्तर्भाव इति भावः ॥ **दोषान्तरासङ्कीर्णोदाहरणाभावादिति** । प्रमाणबाधाव्याप्त्यादिरूपदोषद्वयरहितोदाहरणाभावा-दित्यर्थः । त्रिदोषस्याप्रसिद्धत्वे साध्यरूपविशेषणाभावेन साध्यविशिष्टस्य प्रतिज्ञार्थस्य बाधितत्वा-द्व्याप्त्यभावाद्वाऽस्य दुष्टत्वेनाप्रसिद्धविशेषणत्वेनास्य दुष्टत्वकल्पकाभावेन रूपेणायं हेत्वाभास इति भावः ॥ **इतरः पक्षधर्मत्वासिद्धाविति** । व्यधिकरणासिद्ध्यादिरूपपक्षधर्मत्वासिद्धादन्यस्वस्वरूपा-सिद्धभागासिद्धरूपपक्षधर्मत्वासिद्ध इत्यर्थः ॥ **अस्यापीति** । एतत्प्रमित्यसिद्धस्याप्यसिद्धिरेव दोषो नातिरिक्त इत्यर्थः ॥ **पक्षविपक्षयोरिति** । साधारणानैकान्तिकव्यवच्छेदायैवेत्युक्तम् । विपक्षे वर्तमानो हेतुर्विरुद्ध इत्येवोक्तौ नित्यः शब्दो घटत्वादिति स्वरूपासिद्धिविशेषणेऽतिव्याप्तिस्तद्वारणाय पक्षपदो-पादानम् । यद्वा विपक्ष एव वर्तमानो हेतुर्विरुद्ध इत्येव लक्षणोक्तिः । उक्तस्वरूपासिद्धविशेषणस्यापि साध्याभावेनैव सम्बन्धाद्विरुद्धत्वस्यापि सम्भवात् । पक्षपदमेव कारणव्यावृत्त्या सपक्ष एवेति सूचयितुमुपात्तमिति ज्ञेयम् ॥ **अयमिति** । विरुद्धो हेतुरव्याप्तिविशेषात्साध्याभावेनैव सम्बन्धादव्याप्तो व्याप्तिरहित इत्यर्थः । सामान्यं विना विशेषायोगादिति भावः ।

**(७६) प्र.प.— पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः । यथा शब्दो नित्यः प्रमेयत्वादिति । अयमपि साध्यतदभावसम्भन्धित्वादव्याप्त एव । साध्यसाधकः पक्ष एवं वर्तमानो हेतुरनध्य-वसितः । स त्रिविधः । तत्र सपक्षविपक्षरहितो यथा । सर्वमनित्यं सत्त्वादिति । उभयवान्यथा । भूर्नित्या गन्धवत्त्वादिति । सपक्षवान्विपक्षरहितो यथा । शब्दोऽभिधेयः शब्दत्वादिति । अयं व्याप्यत्वासिद्धत्वान्न पृथग्घेत्वाभास इत्येके । अन्ये तु सपक्षविपक्षरहितो व्याप्यत्वासिद्धः । सति सपक्षे पक्षमात्रवृत्तिः सपक्षवान्विपक्षरहितश्च द्वावनैकान्तिकेऽन्तर्भवत इत्याहुः । तथा हि । सव्यभिचारोऽनैकान्तिकः । व्यभिचारोऽन्वयतो व्यतिरेकतश्च । तत्रान्वयस्य भूमिः पक्षः सपक्षश्च । तदतिरेकेण विपक्षेऽपि वर्तमानः साधारणानैकान्तिकः । व्यतिरेकस्य भूमिर्विपक्षः**

**सपक्षैकदेशोऽपि । तत्र सर्वस्मिन्नपि सपक्षेऽवर्तमानोऽसाधारणानैकान्तिक इति । सर्वथाऽव्याप्त्या-वन्तर्भवति । उभयसम्बन्धाभावात् । व्यतिरेकव्याप्तिसम्भवादयं न हेत्वाभास इत्येके । अपरे तु सत्यपि सपक्षे तत्रावर्तमानस्य किं व्याप्तिरेव नास्त्युत केवलव्यतिरेकिवदस्तीति सन्देहाव-स्कन्दनाद्धेत्वाभासत्वमित्याहुः ।**

**जना.**— ॥ **अयमिति** । त्रिविधोऽप्यनध्यवसित इत्यर्थः ॥ **एक इति** । नैयायिकैकदेशिन इत्यर्थः । अन्वयतो वर्तमानात् । व्यतिरेकतोऽवर्तमानादित्यर्थः । वर्तमानावर्तमानस्थलेदर्शयन्नाभ्या-मनैकान्तिकभेदं च दर्शयन्नैयायिकैकदेशी त्रयाणामध्यनध्यवसितानामनैकान्तिकेऽन्तर्भावमाह ॥ **तत्रे-त्यादिनाऽसाधारणानैकान्तिक इत्यन्तेन** ॥ **सपक्षैकदेशोऽपीति** । यथा धूमानुमानेऽयःपिण्ड इत्यर्थः ॥ **तत्र सर्वस्मिन्निति** । सर्वस्मिन्सपक्ष इत्यर्थः । सद्धेतुधूमवत्त्वादिव्यावृत्त्यर्थं सर्वस्मिन्नित्युक्तम् । धूमवत्त्वादेश्चायः पिण्डादाववृत्तित्वेऽपि महानसादाववृत्तित्वाभावान्नासाधारणानैकान्तिकत्वमिति भावः । स्वयमन्तर्भावमाह ॥ **सर्वथेति** । पूर्वोक्तप्रकारद्वयेन स्वयं वक्ष्यमाणोभयसम्बन्धाभावेन चैवं सर्वथेत्यर्थः । नन्वव्याप्तिस्त्रिविधेत्यादिना प्रागुक्तत्रिविधाव्याप्तिमध्ये क्वान्तर्भावोऽस्येत्यत आह ॥ **उभयसम्बन्धाभावादिति** । पक्षातिरिक्ते साध्यतदभावोभयसम्बन्धाभावादित्यर्थः । पक्षातिरिक्ते उभयसम्बन्धाभावश्चतुर्धा । पक्षातिरिक्तस्यैवाभावाद्वा पक्षातिरिक्ते साध्यसत्त्वेऽपि तत्र हेतोरभावाद्वा साध्याभावस्याप्रसिद्धत्वाद्वा साध्यस्यैवाप्रसिद्धत्वाद्वा । आद्यो यथा सर्वमनित्यं सत्त्वादिति । द्वितीयो यथा भूर्नित्या गन्धवत्त्वादिति । तृतीयो यथा शब्दोऽभिधेयः शब्दत्वादिति । तुरीयो यथा सर्वं क्षणिकं सत्त्वादिति । अत एवोक्तमधस्तादाचार्यैः । तत्र व्याप्यत्वासिद्धो द्विविधः । साध्यसम्बन्धरहितः सोपाधिकश्चेति । आद्यो यथा सर्वं क्षणिकं सत्त्वादिति । अयमुभयसम्बन्धाभावादव्याप्त्यावन्तर्भूत इतीति ॥ **व्यतिरेकं व्याप्तिसम्भवादिति** । एक इत्यस्वरसोद्भावनम् । तद्बीजं तु व्यातिरेकव्याप्तेः प्रागुक्तानध्यवसितेऽप्यभावात् । तृतीयानध्यवसिते साध्यव्यतिरेकस्यैवाप्रसिद्धेश्चेति ॥ **उत केवल-व्यतिरेकिवदिति** । व्याप्तिसद्भावमात्रेऽयं दृष्टान्तः । न तु सत्यपि सपक्षे तत्रावर्तमानस्येत्यत्र । विपक्षाभावस्योभयथाऽपि सम्भवादिति भावः । सन्देहावस्कन्दनात् सन्देहविषयीभवनादित्यर्थः । एवं चैतादृशसंशयस्य व्याप्तिग्रहप्रतिबन्धकतयाऽनुमिति तत्करणान्यतरसाक्षात्प्रतिबन्धकज्ञानविषयत्व-रूपहेत्वाभासलक्षणमिति भावः ।

**राघ.**— नित्यः शब्दः पटत्वादिति स्वरूपासिद्धावनतिव्याप्तये पक्षेत्युक्तिः । अनध्यवसित-व्युदासाय विपक्ष इति । साधारणानैकान्तिकव्यवच्छेदायैवकारः । प्रागुक्ताव्याप्तिप्रभेदेऽन्तर्भावमाह ॥

**अयमिति** । विरुद्धव्युदासाय सपक्षवृत्तिरिति । असिद्धव्युदासाय पक्षवृत्तिरिति । सद्धेतावनतिव्याप्तये विपक्षवृत्तिरिति ॥ **साध्यासाधक इति** । एतच्च केवलव्यतिरेकिव्यवच्छेदायोक्तम् । असिद्धानैकान्तिकयोर्व्यावृत्तये पक्षे इति । एवेति चोक्तम् । त्रिविध इत्युक्तत्रिविधस्वरूपं क्रमेण वदन्नुदाहरणोक्त्या व्यनक्ति ॥ **सपक्षेत्यादिना** ॥ **अयमिति** । त्रिविधोऽप्यनध्यवसित इत्यर्थः । नन्वनैकान्तिकं हि स्वोचितस्थलादन्यत्रापि वर्तमानं पक्षमात्रवृत्तिहेतुः कथमनैकान्तिकेऽन्तर्भवतीत्यतोऽन्वये तदभावेऽपि व्यतिरेके कथितरूपमनैकान्तिकत्वमस्तीति प्रतिज्ञापूर्वमुपपादयति ॥ **तथा हीत्यादिना** । स्वस्थानमनतिक्रम्यान्यत्र वृत्तिर्व्यभिचारः स व्यभिचारोऽनैकान्तिक उच्यत इत्यर्थः ॥ **तत्रेति** । स्थलद्वयमध्ये । सर्वस्मिन्नपि सपक्षेऽवर्तमानः सर्वसपक्षे वर्तमानव्यतिरेकवानित्यर्थः । पक्षैकदेशं स्वस्थानमतिलङ्घ्य सर्वत्र सपक्षे व्यतिरेकवत्त्वादयमसाधारणानैकान्तिक इत्येवाहुरित्यर्थः ॥ **सर्वथेति** । अनध्यवसितत्वेन पृथग्घेत्वाभासत्वे वा व्याप्यत्वासिद्धत्वे वाऽसाधारणानैकान्तिकत्वे वा सर्वप्रकारेणाव्याप्तावेवान्तर्भवतीत्यर्थः ॥ **तत्र हेतुरुभयेति** । साध्यतदभावरूपोभयसम्बन्धाभावादित्यर्थः ॥ **अयमिति** । पक्षमात्रवृत्तिहेतुरित्यर्थः ।

**विज.—** ॥ **व्यतिरेकव्याप्तिसम्भवादिति** । भूर्नित्येत्यादावित्यर्थः ॥ **अपरे त्विति** । तथा च व्याप्तिनिश्चयदशायामाभासत्वमिति भावः ।

**वेदे.—** ॥ **व्याप्यत्वासिद्धत्वादिति** । आद्ये सपक्षस्यैवाभावेन द्वितीयतृतीययोः सपक्षत्वेऽपि तत्र हेतुवृत्त्यभावेन च व्याप्तेस्तत्र दर्शयितुमशक्यत्वादिति भावः ॥ **व्यभिचार इति** । स्वभूमिमतिक्रम्यान्यत्र सत्त्वमित्यर्थः ॥ **अन्वयत इति** । अन्वयमुखेन व्यतिरेकमुखेन चेत्यर्थः । अन्वयस्य हेत्वन्वयस्य व्यतिरेकस्य हेतुव्यतिरेकस्य । यस्य हेतोरन्वयः स्वभूमिमतिक्रम्यान्यत्रास्ति स साधारणानैकान्तिकः । यस्य हेतोर्व्यतिरेकः स्वभूमिमतीत्यान्यत्र वर्तते सोऽसाधारणानैकान्तिक इति प्रघट्टिकार्थः ॥ **सर्वथेति** । आद्यस्य व्याप्यत्वासिद्ध्यन्तर्भावेऽन्त्ययोश्च साधारणानैकान्तिकयोरन्तर्भावेऽपीत्यर्थः । अव्याप्तेऽस्मदभिमतहेतुविरोधप्रभेदरूपे ॥ **अयमिति** । असाधारणानैकान्तिक इत्यर्थः । गन्धवत्त्वस्य नित्यत्वानित्यत्वरूपधर्मद्वयाभावव्यापकाभावप्रतियोगित्वेन सत्प्रतिपक्षतया नैकमात्रानुमित्यनुकूलव्याप्तिनिश्चयस्तत्र सम्भवतीत्यस्वरसमुद्गिरन्नेक इत्याह ॥ **सन्देहेति** । तथाऽप्यव्याप्तेऽन्तर्भाव इति भावः । तेजोन्तरे व्यभिचारपरिहाराय सर्वमित्युक्तम् ।

**अभि.—** ननु साध्याभाववद्गामित्वाभावात्पक्षमात्रवर्तिनोरध्यवसितयोः कथमनैकान्तिकेऽन्तर्भाव इत्यत आह ॥ **सव्यभिचार इति** । न साध्याभाववद्गामित्वं व्यभिचार इति भावः ।

आद.— ॥ **साध्यासाधक इति** । हेतोर्दुष्टत्वज्ञानेन प्रकृतसाध्यासाधकत्वमनुमेयम् । तस्यैव दोषशरीरघटकत्वाङ्गीकारे दोषोद्भावनस्य वैय्यर्थ्यापत्तेः । अतो न तस्य दोषत्वशङ्कास्पदमिति भावेन शिष्टानां तदुक्तिज्ञानाय तन्निराकरणमतानामेवोपन्यासः कृत इत्यवधेयम् ।

वि.— ॥ **सद्धेतुव्यावृत्त्यर्थमयमपीति** । अनैकान्तिको हेतुरव्याप्तिविशेषात्साध्यान्तराभाव-सम्बन्धित्वादव्याप्त एव न ततोऽतिरिक्त इत्यर्थः । विशेषस्य सामान्यनियतत्वादिति भावः ॥ **साध्या-साधक इति** । केवलव्यतिरेकिव्यावृत्त्यर्थमिदं विशेषणम् । असिद्धत्वव्यावृत्त्यर्थं पक्षपदम् । अनैकान्तिकव्युदासायैवेत्युक्तम् ॥ **सव्यभिचारोऽनैकान्तिक इति** । स्वस्थानमिति लक्ष्यादन्यत्र वृत्तिर्व्यभिचारस्तेन सहितः सव्यभिचार इत्यर्थः । नन्वसाधारणानैकान्तिकस्यान्यत्र वृत्तेरभावात्कथं सव्यभिचारत्वमित्यत आह ॥ **व्यतिरेकतश्चेति** । स्वस्थानमतिक्रम्यात्र वृत्तेरभावात्कथं सव्यभिचारत्व-मित्यत आह ॥ **व्यतिरेकतश्चेति** । स्वस्थानमतिक्रम्यान्यत्र वृत्तिरूपो व्यभिचारस्त्वन्वयतोऽन्वयेन व्यतिरेकतो व्यतिरेकेण च भवतीत्यर्थः । हेतोरन्यस्य व्यतिरेकस्य वा स्वस्थानमिति लक्ष्यादन्यत्र वृत्तिरेव व्यभिचारोऽत्राभिप्रेत इति नोक्तचोद्यावकाश इति ज्ञेयम् । हेत्वन्वयव्यतिरेकयोः स्थानं किमिति जिज्ञासायामाह ॥ **तत्रेति** । तयोर्मध्य इत्यर्थः । तत्रान्वयेन व्यभिचारी साधारणानैकान्तिक इत्याह ॥ **तदिति** ॥ **क्रमेति** । पक्षसपक्षातिक्रमेण विपक्षे वर्तमानो विपक्षेऽन्वयवानित्यर्थः ॥ **तत्र सर्वस्मिन्नपीति** । तत्र सपक्षविपक्षयोर्मध्ये सर्वस्मिन्नपि सपक्षे वर्तमानो व्यतिरेकवानित्यर्थः । साधन व्यतिरेकस्य स्वस्थानं स्वपक्षैकदेशमुल्लङ्घ्यान्यत्र सत्त्वादयमपि सव्यभिचार इति भावः । इति शब्द-स्याहुरिति पूर्वेणान्वयः ॥ **सर्वथेति** । सर्वेण प्रकारेणानध्यवसितत्वेऽप्यनैकान्तिकत्वेऽपीति यावत् । उभयसम्बन्धाभावात् साध्यतदभावसम्बन्धाभावादित्यर्थः ॥ **सत्यपि सपक्ष इति** । गन्धवत्त्वेना-नित्यत्वसाधकत्वस्यापि व्यतिरेकव्याप्तेर्वक्तुं शक्यत्वेनासति सपक्षे पक्षमात्रवृत्तिहेतोर्व्यतिरेकव्याप्तिसन्देह एवेति ज्ञेयम् ।

**(७७) प्र.प.— प्रमाणबाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः । यथा सर्वं तेजोऽनुष्णं द्रव्यत्वादिति । अत्र धर्मिग्राहकेण साध्यप्रतियोगिग्राहकेण चोपजीव्येन प्रत्यक्षेण पक्षो बाधितः । चक्षू रूपग्राहकं न भवति इन्द्रियत्वादिति धर्मिग्राहकानुमानेन (बाधितः) । ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वादित्यागमबाधितः । अयं प्रतिज्ञायाः प्रबलप्रमाणविरोध एव । समबल-प्रमाणविरुद्धः सत्प्रतिपक्षः । यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शवत्त्वादिति । वायुर्न प्रत्यक्षः रूपरहितद्रव्यत्वादित्यनेन प्रतिरुद्धत्वात् । अयं प्रतिज्ञायाः समबलप्रमाणविरोध एव ।**

**जना.—** ।। **प्रमाणेति** । प्रमाणबाधितसाध्यक इत्यर्थः । विभक्तधना भ्रातरः पीतजला गाव इतिवदुत्तरपदलोपेन विभक्ता भ्रातरः पीता गाव इतिवत् साध्यपदलोपो द्रष्टव्यः । यथा श्रुतेऽनुपपत्तेरित्थं व्याख्यातम् ।। **धर्मिग्राहकेणेति** । धर्मिभूततेजोग्राहकेणेत्यर्थः ।। **साध्यप्रतियोगीति** । साध्यमनुष्णत्वमुष्णत्वाभावः । तत्प्रतियोगि यदुष्णत्वं तद्ग्राहकेणेत्यर्थः ।। **पक्ष इति** । अत्र पक्षपदेन तदेकदेशसाध्यधर्मो लक्ष्यते ।। **धर्मिग्राहकेति** । धर्मि चक्षुः । तद्ग्राहकेण देवदत्तस्य रूपापरोक्षग्राहकेण तदन्वयव्यतिरेकानुविधायित्वादित्यनुमानेनेत्यर्थः ।। **आगमेति** । न सुरां पिबेदित्यागमेत्यर्थः ।। **अयमिति** । कालात्ययापदिष्ट इत्यर्थः । क्रमप्राप्तं सत्प्रतिपक्षं लक्षयति ।। **समेति** ।

**राघ.—** ।। **प्रमाणबाधित इति** । प्रमाणेन निश्चितसाध्याभाववतीत्यर्थः । सद्धेतुव्यावृत्तय एतद्विशेषणम् । प्रमाणबाधितत्वं च पूर्वोक्तदिशा प्रत्यक्षादित्रयेणेति क्रमेणोदाहृत्य दर्शयति ।। **यथेत्यादिना** । तेजोऽनुष्णमित्येवोक्ते तेजोऽन्तरे त्वचौष्ण्यग्रहणसम्भवेन चक्षुर्गृहीते पक्षीकृते कस्मिंश्चित्तेजसि धर्मिग्राहकेण वा साध्यप्रतियोगिग्राहकेण वा बाधाभावात्सर्वं तेज इत्युक्तम् । एवं पक्षीभूत एव तेजस्यौष्ण्यस्य त्वचा ग्रहणेनोक्तरूपद्विविधप्रत्यक्षबाधोक्तिर्युक्तेति भावः ।। **पक्षो बाधित इति** । निश्चितसाध्याभावधर्मिभूतं तेजोजातमित्यर्थः । बाधकत्वे हेतुरुपजीव्येनेति । तत्र हेतुद्वयं धर्मिग्राहकेणेत्यादि । इन्द्रियत्वादितीत्यनन्तरमत्रेति पक्षो बाधित इति च पदत्रयानुषङ्गः । एवमग्रेऽप्यत्रेति पक्ष इति च पदद्वयानुषङ्गः ।। **धर्मीति** । रूपज्ञानं करणसाध्यं क्रियात्वादिति सामान्यपरिशेषाभ्यां चक्षुषो धर्मिणो ग्रहणाद्येनानुमानेन चक्षुषः सिद्धिस्तेनैव रूपग्राहकत्वेन सिद्धेस्तदनुमानेमबाधित इत्यर्थः ।। **आगमेति** । ब्राह्मणो न सुरां पिबेदित्यागमेनेत्यर्थः । आगमस्य निर्दोषतया बलवत्त्वादिति भावः । सत्प्रतिपक्षस्य लक्षणोदाहरणपूर्वमन्तर्भावमाह ।। **समबलेति** । स्पर्शवत्त्वादित्यनन्तरमयं हेतुरित्यनुषङ्गः । तस्य समबलप्रमाणविरोध एवेत्यन्वयः ।

**विज.—** ।। **अत्रेति** । तेजोरूपपक्षग्राहकत्वं चौष्ण्यग्राहकप्रत्यक्षेण नाविशिष्टग्रहादिति भावः ।। **चक्षुरिति** । रूपग्राहकत्वेनैव तत्सिद्धेरिति भावः ।

**वेदे.—** ।। **प्रत्यक्षेणेति** । स्पार्शनप्रत्यक्षेणेत्यर्थः ।। **पक्ष इति** । विशेषणबाधे विशिष्टबाधादिति भावः ।। **चक्षुरिति** । रूपग्राहकत्वेनैव तत्सिद्धेरिति भावः ।। **अयमिति** । त्रिविधोऽपि कालात्ययापदिष्ट इत्यर्थः।

**अभि.—** ।। **समबलप्रमाणेति** । समबलतया प्रमाणतयाऽभिमानेन प्रतिरुद्धः सत्प्रतिपक्ष इत्यर्थः। अत्र प्रतिरुद्धत्वमेव लक्षणमितस्तदुपपादनाय साधन इति । दूषणतया प्रवेशाभावेनेति शेषः ।

मूकोऽहं वक्ता वचनसमर्थत्वादिति तत्साधने प्राप्तस्य स्वक्रियाविरोधस्य तथा प्रयत्नान्तरव्यङ्ग्यत्वेन घटादीनामनित्यत्वं प्रसाध्यम् । यदा साधयति वर्णा नित्या विभुत्वादिति । तन्न । प्राप्तस्वन्याय-विरोधस्य च साधने दूषणतया प्रवेशाभावेन हेत्वाभासान्तर्भावादित्यर्थः ।

**वि.—** ॥ **प्रमाणबाधित इति** । प्रमाणेन साध्यरहिततया निश्चित इति वा प्रबलप्रमाणविरुद्ध इति वाऽर्थः । सद्धेतुव्यावृत्त्यर्थं प्रमाणबाधितपदम् । धर्मिग्राहकानुमानेन पक्षो बाधित इत्यनुवर्तते ॥ **द्रव्यत्वादीति** । अत्रेति शेषः । आगमबाधितः पक्ष इत्यनुवर्तते । अयमपि कालात्ययापदिष्टः । प्रबलप्रमाणविरोध एवान्तर्भवतीति शेषः । यद्वा प्रबलप्रमाणविरोध एव भवतीत्यर्थः ॥ **समबल-प्रमाणविरुद्ध इति** । समपदं प्रमाणबाधितहेतुव्यवच्छेदाय ॥ **स्पर्शवत्त्वादिति** । इतीत्यनन्तरं हेतुः सत्प्रतिपक्ष इति शेषः । तस्य सत्प्रतिपक्षत्वे हेतुमाह ॥ **वायुरिति** ।

**(७८) प्र.प.— ॥ २२ ॥ स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः । यथा विमतं मिथ्या दृश्यत्वादिति । सत्यत्वेऽप्यस्य वक्तुं शक्यत्वात् । अयं त्वसम्भवीति केचिदाहुः । तदसत् । सत्प्रतिपक्षवदभिमानतः सम्भवात् । अयमपि प्रतिज्ञायाः समबलविरोध एवेति पक्षाभासहेत्वा-भासान्तर्भूतत्वान्न पृथग्वाच्या इत्याहुः । तदसत् । प्रतिज्ञामात्रेणैव स्फुरणात् । साधने स्वक्रिया-विरोधस्वन्यायविरोधयोर्हेत्वाभासानन्तर्भावाच्च । स्वक्रियाविरोधो यथा । अहं मूक इति । स्वन्यायविरोधो यथा । प्रमेयं प्रमाणानपेक्षमिति ।**

**जना.—** ॥ **स्वपरेति** । वादिप्रतिवादीत्यर्थः ॥ **त्रिरूप इति** । पक्षवृत्तित्वसपक्षवृत्तित्वविपक्ष-व्यावृत्तिमानित्यर्थः । नन्वेकस्यैव दृश्यत्वस्य कथं स्वपरपक्षसिद्ध्योर्हेतुत्वम् । विरोधादित्यत आह ॥ **सत्यत्वेऽपीति** । सत्यत्वसाधनदशायां यः सपक्षस्तस्य मिथ्यात्वसाधनदशायां विपक्षत्वावश्यम्भावेन मिथ्यात्ववादिपक्षे दृश्यत्वहेतुर्न सम्भवति । एवं सत्यत्ववादिपक्ष इत्यसम्भवतीति भावः ॥ **अभिमानत इति** । वास्तवत्रिरूपत्वाभावेन तत्तद्वादिनस्त्रिरूपाभिमानमात्रेणैकस्य त्रिरूपत्वं भविष्यतीति भावः । अभिमानतस्त्रिरूपत्वानङ्गीकारे प्रतिबन्ध्यभिप्रायेण त्रिरूपत्वदृष्टान्तमाह ॥ **सत्प्रतिपक्षवदिति** । आहुरित्यतः प्राक् नैयायिका इति शेषः । पक्षे आ भासन्त इति पक्षाभासाः । बाधादय इत्यर्थः ॥ **हेत्वाभासेति** । बाधितसाध्यके पक्षे विद्यमानस्य हेतोर्व्यभिचारावश्यम्भावादिति भावः ॥ **प्रतिज्ञामात्रेणैवेति** । यो यदनन्तरं ज्ञातः सन्ननुमितिप्रतिबन्धकः स तस्य दोषः । अन्यथा प्रतिज्ञाहान्यादिकमपि हेतुहान्यादिकं स्यादिति भावः । किञ्च यत्र साध्यस्य प्रबलप्रमाणविरोधस्थले हेतूपन्यासस्तत्रैव पक्षाभासानां हेत्वाभासत्वमस्त्वित्याक्षेपः । यत्र हेतूपन्यास एव नास्ति तत्रेयं शङ्का

नावतरतीत्याह ॥ **साधन इति** । नायं साधनशब्दः साधयतीति व्युत्पत्त्या कार्यकर्तृसाधनः । किन्तु कृतकत्वेन घटानित्यत्वसाधने सिद्धसाधनतेत्यादाविव भावसाधनः । सर्वं वाक्यं सावधारणमिति न्यायेन केवलप्रतिज्ञानिर्देशस्थल इत्यर्थः ॥ **स्वक्रियाविरोधस्वन्यायविरोधयोरिति** । तयोरपि पक्षे आ भासन्त इति व्युत्पत्त्या पूर्ववाक्ये प्रस्ततत्वादिति भावः ॥ **हेत्वाभासानन्तर्भावादिति** । हेत्वाभासत्वशङ्कानवकाशादिति भावः । अस्मदुक्तमेवार्थं हृदि निधाय अहं मूकः पुरुषत्वान्मूकान्तरवदिति सहेतुकस्वक्रियाविरोधस्योदाहर्तुं शक्यत्वेऽपि हेतुप्रयोगं विनैव स्वक्रियाविरोधस्वन्यायविरोधावुदाहृत्य दर्शयति ॥ **स्वक्रियेत्यादिना** । प्राञ्चः साधन इत्यादिवाक्यं प्रकारान्तरेणावतार्य व्याचक्षते । तथा हि । वादिनिषेधात्मकप्रतिवाद्युत्तरगतस्वक्रियाविरोधादेर्हेत्वाभासनन्तर्भावेऽपि जात्यन्तर्भावान्न तदर्थं पक्षाभासाः पृथग्वाच्या इत्यत उक्तं साधन इति । प्रतिषेधे स्वन्यायविरोधादेर्जातित्वस्यान्यत्रान्तर्भावात्पार्थक्यमावश्यकमिति । अन्ये प्राञ्चस्तु तदेव वाक्यमन्यथाऽवतार्य व्याचक्षते । तथा हि । ननूक्तविरोधयोस्तर्करूपानुमाने दोषत्वाभावात्प्रत्युतानुकूलत्वदर्शनादनन्तर्भावो न दोषायेत्युक्तं साधन इति । यद्वा दूषणान्तरमाह ॥ **साधन इति** । स्थापनानुमान इत्यर्थः । अत्र स्वक्रियाविरोधस्वन्यायविरोधयोरनन्तर्भावाच्चेत्यन्वय इति । या तु टीकाकारीयाऽदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् । ज्ञायते साक्षिणैवाद्धा मानबाधेन तद्भवेदित्यनुव्याख्यानवाक्यस्य प्रत्यक्षबाधेनानुमानस्य व्यभिचारो भवतीति व्याख्या सा व्याप्तिग्राहिका । प्रतिज्ञाभावात् । अनुमितिदशायां तु बाधो विषयापसरणेन प्रतिज्ञादोष एव । अन्यथा प्रमाणविरुद्धार्थप्रतिज्ञाविरोधः । प्रतिज्ञार्थविरुद्धता । लिङ्गराहित्यमव्याप्तिरिति बाधप्रतिरोधयोरसिद्धयादिना सहहेतुदोषत्वात् । वर्तमानहेतोरविषयवृत्तित्वं नाम दोषोऽस्तीत्यभिप्रेत्यैव । न तु बाधादिदोषविषय इत्यभिप्रेत्यैवेति न तद्विरोधोऽस्येति ॥ **प्रमेयमिति** । प्रमाणासापेक्षप्रतीतिकमित्यर्थः ।

**राघ.**— ॥ **स्वपरेति** । स्वपक्षसिद्धौ परपक्षसिद्धौ च पक्षधर्मत्वसपक्षे सत्त्वविपक्षव्यावृत्तत्वाख्यत्रिरूप इत्यर्थः ॥ **दृश्यत्वादितीति** । स्तुहिरित्यनुषङ्गः ॥ **अस्येति** । दृश्यत्वहेतोरित्यर्थः । अयं तु पक्षद्वये त्रिरूपो हेतुस्त्वसम्भवी । मिथ्यात्वप्रयोगे यौ सपक्षविपक्षौ शुक्तिरूप्यब्रह्मस्वरूपौ तौ सत्यत्वप्रयोगे विपक्षसपक्षावित्यस्य योगादिति । एवं रूपहेत्वाभासो नास्त्येवेत्याहुरित्यर्थः ॥ **सत्प्रतिपक्षवदिति** । परस्परप्रतिरुद्धहेत्वोः साध्यतदभावव्याप्यत्वरूपं समबलत्वं यथाऽऽभिमानिकं तथाऽऽभिमानिकसपक्षत्वादेः सम्भवादिति भावः ॥ **अयमपीति** ॥ **प्रकरणसमोऽपीत्यर्थः** । इतिशब्दो हेतुदोषोक्तिसमाप्तौ । परोक्तहेत्वाभासान् लक्षणोदाहरणपूर्वकं स्पष्टीकुर्वता तेषु केषाञ्चित्प्रमाणविरोधः स्ववचनविरोध इति प्रतिज्ञाविरोधो द्विविध इत्यादिना प्रागुक्तेषु प्रबलप्रमाणसमबलविरोध-

सिद्धार्थत्वरूपार्थदोषेष्वपसिद्धान्तस्ववचनस्वक्रियास्वन्यायविरोधरूपवचनविरोधेष्वन्तर्भावः। केषाञ्चिद्धेतुदोषेष्वन्तर्भाव उक्तः । तत्र प्रतिज्ञादोषेऽन्तर्भावविषये विप्रतिपत्तिमुद्भाव्य निरस्यति ॥ **पक्षाभासा इति** । प्रमाणबाधितत्वादिरूपाः पक्षाभासा इत्यर्थः ॥ **इत्याहुरिति** । अत एव न्यायसूत्रे हेत्वाभासाश्चेत्येवोक्तिरिति भावः । विस्तरस्तु तर्कताण्डवे ध्येयः । प्रमाणबाधादीनां कथञ्चिद्धेत्वाभासान्तर्भावसम्भावनायामपि हेत्वादौ स्ववचनविरोधोऽसिद्ध्यादिनैव सङ्गृहीत इति प्रागुक्तदिशा तस्य हेत्वाभासान्तर्भावेऽपि स्ववचनविरोधप्रभेदस्वक्रियाविरोधादेर्नार्थदोषरूपहेत्वाभासान्तर्भावो युक्त इत्याह ॥ **साधन इति** । साधनानुमान इत्यर्थः । जातिप्रस्तावोक्तरीत्या प्रतिषेधानुमाने स्वक्रियाविरोधादेर्हेतुदोषत्वसम्भवात् । तद्व्यवच्छेदाय साधन इत्युक्तम् । स्ववचनविरोधस्य प्रतिज्ञाविरोधरूपनिग्रहस्थानोदाहरणेन स्पष्टीकृतत्वं मत्वा स्वक्रियाविरोधादेः प्रातिस्विकोदाहरणेन स्पष्टयति ॥ **स्वक्रियेति** । प्रमेयं प्रमाणानपेक्षमिति वादिनोक्ते सति प्रमेयं प्रमाणानपेक्षमिति प्रमेयं यथा प्रमाणानपेक्षम् । अन्यथा तत्प्रतिज्ञावैय्यर्थ्यात्तन्न्यायेन त्वत्पक्षीकृतं प्रमेयं प्रमाणानपेक्षमिति सुवचत्वात्स्वन्यायविरोध इत्यर्थः ।

**विज.—** ॥ **असम्भवीति** । साध्याभावनिरूपितव्याप्तेरेकत्र विरोधेनासत्त्वादित्यर्थः । ननु पक्षाभासस्यानुमिति प्रतिबन्धकत्वं वदता तस्य हेत्वाभासत्वमवश्यमभ्युपेयम् । अनुमितेर्हेत्वाभासमात्रप्रतिबद्धत्वनियमादित्यत आह ॥ **साधने स्वक्रियेति** । तथा च तयोरेव नियमभङ्ग इति भावः ।

**वेदे.—** ॥ **असम्भवीति** । एकस्य हेतोः साध्ये तदभावे च त्रिरूपत्वं न सम्भवतीति विरोधादिति तेषां भावः । **दूषणान्तरमाह** ॥ **साधन इतीति** । तथा च स्वक्रियाविरोधादिसङ्ग्रहायैव पक्षाभासः पृथग्वक्तव्य इति भावः । ननु वादिप्रतिषेधात्मके प्रतिवाद्युत्तरगतस्वक्रियाविरोधादेर्हेत्वाभासानन्तर्भावेऽपि जात्यन्तर्भावसम्भवान्न तदर्थं पक्षाभासः पृथग्वाच्य इत्यत उक्तं साधन इति । प्रतिषेधे स्वन्यायविरोधादेर्जातित्वेऽपि स्थापनायां प्राप्तस्य तस्यान्यत्रानन्तर्भावात्पार्थक्यमावश्यकमिति भावः । केचित्तु । ननु पक्षाभासस्यानुमिति प्रतिबन्धकत्वं वदता तस्य हेत्वाभासत्वस्यावश्यमभ्युपेयम्। अनुमितेर्हेत्वाभासमात्रप्रतिबन्धकत्वनियमादित्यत आह ॥ **साधन इति** । पक्षाभासो हेत्वाभासो भवितुमर्हति । अनुमिति प्रतिबन्धकत्वात्साध्याभासवदिति साधन इत्यर्थः । तथा च तयोरेव नियमभङ्ग इति भाव इत्याहुः ।

**अभि.—** ॥ **प्रमेयं प्रमाणानपेक्षमिति** । वादिना स्वाभिमते वन्ह्यादिसिद्ध्ये प्रमाणाभिधानात् तत्प्रतिबन्ध्या विप्रतिपन्नप्रमेयस्यापि प्रमाणसापेक्षतापत्त्या प्रमेयं प्रमाणानपेक्षमिति वचनस्य तत्प्रतिबन्दीविरोध इत्यर्थः ।

**आद.— ॥ साधन इति ।** विप्रतिपत्त्युत्तरमेव स्वपक्षसाधनाय प्रवृत्तवादिवाक्य इत्यर्थः । इदं च हेत्वाभासत्वाभावेऽपि तथा वक्तुर्जात्याख्यनिग्रहस्थानेन पराजयः सम्भवतीति न प्रतिज्ञाभासस्य पृथक्त्वमावश्यकमिति शङ्कानिरासाय दूषणासमर्थोत्तरस्यैव जातिरूपत्वेन प्राथमिकवाक्यस्योत्तरत्वाभावेन हेत्वाभासत्वाभावेन प्रतिज्ञासत्त्वमेवोद्भावनीयमिति भावः । ननु कथं न हेत्वाभासत्वाभावो हेतोर्बाधितत्वसम्भवादिति वाच्यम् । बाधस्य साक्षादनुमिति प्रतिबन्धकत्वेऽपि हेतुनिष्ठत्वाभावेन हेतुदोषत्वाभावादित्याशयात् । स्वक्रियास्वन्यायविरोधस्यैव प्राथमिकत्वेन तदुद्भावनस्यैवोचितत्वाच्च । मूकत्वमुच्चारणानुकूलशक्त्यभावः । स च न प्रत्यक्षः । शक्तेरतीन्द्रियत्वात् । किन्तु वचनेनानुमेयः । वचनं च प्रत्यक्षसिद्धमिति वचनरूपक्रियाद्वारा प्रत्यक्षविरोध उपपादनीय इति वचनरूपस्वक्रियाविरोध एव वाच्य इति । एवं स्वन्यायविरोधस्थलेऽपि बोध्यम् ।

**वि.— ॥ स्वपक्षपरपक्षसिद्धावपीति ।** स्वपक्षपरपक्षसाधनेऽपि त्रिरूपः पक्षधर्मत्वादिरूपत्रयोपेतमित्यर्थः ॥ **अयमसम्भवीति ।** अयं प्रकरणसमो हेतुः । असम्भवी पक्षद्वये रूपत्रयोपेतत्वायोगादयुक्त इत्यर्थः ॥ **सत्प्रतिपक्षवदिति ।** सत्प्रतिपक्षस्थले साध्याभावाव्यापकयोराभिमानिक सत्त्ववत्प्रकरणसमेऽप्यभिमानतस्त्रिरूपोपेतत्वादित्यर्थः । ननु तर्हि क्वान्तर्भूत इति जिज्ञासायामाह ॥ **अयमपीति ।** सत्प्रतिपक्षः प्रकरणसमश्चेत्यर्थः । ननु हेतुदोषाणां कालात्ययापदिष्टसत्प्रतिपक्षप्रकरणसमानां कथं प्रतिज्ञादोषान्तर्भाव इति चेन्न । हेतूपस्थितेः प्राक् प्रतिज्ञायामेव तेषां स्फुरणात्प्रतिज्ञादोषस्यैवोचितत्वात् । यो हि यन्निष्ठतया ज्ञातानुमितिप्रतिबन्धकः स तस्यैव दोषः । प्रतिज्ञाहेतुहान्यादित्वप्रसङ्गात् । नित्यो वर्ण इति तार्किकप्रयुक्तप्रतिज्ञाश्रितोऽपसिद्धान्तः । माता वन्ध्या मूकोऽहमिति प्रतिज्ञाश्रितौ स्ववचनविरोधस्वक्रियाविरोधौ च । हेत्वाभासावनन्तर्भावाच्च । तस्माद्बाधादेः प्रतिज्ञामात्र एव स्फुरणात्सत्प्रतिज्ञातार्थविरुद्धार्थग्राहित्वाच्च प्रतिज्ञादोषत्वमेवेत्यनुसन्धेयम् । पक्षाभासाः पक्षदोषा हेतुदोषान्तर्गतत्वात् हेतुदोषेभ्यः पृथङ् न वक्तव्या इत्याहुरित्यर्थः ॥ **प्रतिज्ञामात्रेणैवेति ।** प्रमाणविरोधादेर्लिङ्गोक्तिरहितप्रतिज्ञायां स्फुरणादित्यर्थः । दूषणान्तरमाह ॥ **साधने इति ।** अपीति शेषः । लिङ्गवचनेऽपीत्यर्थः । स्वक्रियाविरोधस्वन्यायविरोधयोरित्येतत्स्ववचनविरोधस्याप्युपलक्षणम् । हेतावपि प्रतीयमानस्वक्रियाविरोधादीनां हेतुदोषान्तर्भावस्तदा प्रतिज्ञायामेव प्रतीयमानानां स्वक्रियाविरोधादीनां तत्रान्तर्भाव इति किमु वक्तव्यमिति भावः । तस्मात्प्रतिज्ञायाः परिभासमानस्वक्रियाविरोधस्वन्यायविरोधप्रमाणविरोधव्यर्थविशेषणासिद्धार्थत्वादीनां प्रतिज्ञादोषत्वमेव न हेतुदोषत्वम् । अन्यथा तेषां प्रतीयमानाव्याप्यसिद्धिविरुद्धत्वादीनां पक्षदोषान्तर्भाव इत्यापातादिति युक्तमेव पक्षदोषाणां पृथग्वाच्यत्वमिति ।

(७९) प्र.प.— ॥ २२ ॥ एवमुदाहरणाभासानपि हेत्वाभासेऽन्तर्भावयन्तस्तेषां न पृथग्वाच्यतामाहुः । तथा हि । उदाहरणलक्षणरहिता उदाहरणवदवभासमाना उदाहरणाभासाः । तत्र साधर्म्योदाहरणे साध्यविकलो यथा । मनोऽनित्यं मूर्तत्वात् । यन्मूर्तं तदनित्यम् । यथा परमाणुरिति । साधनविकलो यथा यथा कर्मेति । उभयविकलो यथा । यथाऽऽकाश इति । आश्रयहीनो यथा । यथा शशविषाणमिति । अव्याप्त्यभिधानं यथा । यथा घटवदिति । विपरीतव्याप्त्यभिधानं यथा । यदनित्यं तन्मूर्तम् । यथा घट इति । वैधर्म्योदाहरणे साध्याव्यावृत्तो यथा । यदनित्यं न भवति तन्मूर्तं न भवति । यथा कर्मेति । साधनाव्यावृत्तो यथा । यथा परमाणुरिति । उभयाव्यावृत्तो यथा । यथा घट इति । आश्रयहीनः पूर्ववत् । अव्याप्त्यभिधानं यथा । यथाऽऽकाश इति । विपरीतं व्याप्त्यभिधानं यथा । यन्मूर्तं न भवति तदनित्यं न भवति । यथाऽऽकाश इति । अत्र वैधर्म्योदाहरणस्यानुपयुक्तत्वात्तदाभासकथनमनुपयुक्तम् । अव्याप्त्यभिधानं तु न दोषो न्यूनं वा । विपरीतव्याप्त्यभिधानमप्यसङ्गतम् । आश्रयहीनत्वं चाश्रयासिद्धवददूषणम् । अन्यतरवैकल्येनैव दृष्टत्वादुभयवैकल्यं न पृथग्गणनीयम् । तस्मात्साध्यवैकल्यं साधनवैकल्यं च द्वयमेव दृष्टान्तदूषणम् । तत्र साध्यवैकल्ये दृष्टान्तो विपक्षो भवति । तत्र वर्तमानं साधनमनैकान्तिकं विरुद्धं बा भवति । साधनवैकल्ये व्याप्यत्वासिद्धिरिति । दृष्टान्तदोषो हेत्वाभासेऽन्तर्भवतीति चेन्न । दृष्टान्तोक्त्यनन्तरं प्रतिभासात् । सपक्षान्तरे वर्तमानस्य साधनस्य दृष्टान्तीकृते सपक्षेऽवृत्तौ हेत्वाभासत्वानुपपत्तेश्च । तत्राप्यनुपदर्शितव्याप्तिकत्वेन व्याप्यत्वासिद्ध इति चेन्न । तथाऽप्यर्थदोषाभावादिति ॥

॥ इति श्रीमज्जयतीर्थपूज्यचरणविरचितप्रमाणपद्धतावनुमानपरिच्छेदः समान्तः ॥

**जना.**— ॥ **एवमिति** । अत्राहुरित्यतः प्राक् नैयायिका इति शेषः । उदाहरणाभासान् उदाहरणवदवभासमानान् । साध्यविकलादीनित्यर्थः । नैयायिकोदाहृतोदाहरणाभासानुदाहरति ॥ **तत्रेत्यादिना यथाऽऽकाश इत्यन्तेन** ॥ **मूर्तत्वादिति** । इयत्तावच्छिन्नपरिमाणवत्वादित्यर्थः ॥ **यथा कर्मेति** । कर्माणि परिमाणरूपगुणाभावात्साधनवैकल्यमिति भावः ॥ **यथाऽऽकाश इति** । परिमाणलक्षणगुणसत्त्वेऽपि परिच्छिन्नगुणाभावात्साधनवैकल्यं बोध्यम् ॥ **विपरीतेति** । साध्यपुरःसरमित्यर्थः ॥ **साध्याव्यावृत्त इति** । साध्याभावरहित इत्यर्थः ॥ **पूर्ववदिति** । यथा शशविषाणमितिवदित्यर्थः ॥ **विपरीतेति** ॥ साधनाभावपुरः सरमित्यर्थः । अत्र केषाञ्चिदुदाहरणाभासानां दोषत्वमेव नास्ति । कतिपयानां दोषत्वेऽप्यस्मदुक्तविरोधादिषट्क एवान्तर्भावः । अतः साध्यसाधन-

वैकल्ये एव दृष्टान्तदूषणे इत्याह ॥ **अत्रेत्यादिना द्वयमेव दृष्टान्तदूषणमित्यन्तेन** ॥ **वैधर्म्योदाहरणस्येति** । व्यतिरेकव्याप्तेरनुपयुक्ततया तत्प्रदर्शकवैधर्म्योदाहरणस्याप्यनुपयुक्तत्वादिति भावः ॥ **द्वयमेव दृष्टान्तदूषणमिति** । दूषणमिति श्रुत्वा लब्धावकाशो नैयायिकश्चोदयति ॥ **तत्रेत्यादिना** ॥ **विरुद्धं वेति** । दृष्टान्तादस्मिन्नपि साध्यवत्त्वव्यावृत्ताविति शेषः । एतदेवोक्तं वरदराजेन ।

**साधारणे विरुद्धो वा दृष्टान्ते साध्यवर्जिते ।**
**असाधारणता हेतोस्तस्मिन्साधनवर्जिते ।**
**व्याप्त्यसिद्धिरभावे स्यादाश्रयस्य तयोरपि** ॥ इति ।

**दृष्टान्तोक्त्यनन्तरमिति** । यो यन्निष्ठतया ज्ञातः सन्ननुमितिप्रतिबन्धकः स तस्य दोष इति व्याप्तेरिति भावः । साधनवैकल्ये व्याप्यत्वासिद्धिरित्यत्र दूषणमाह ॥ **सपक्षान्तर इति** । अवृत्ताविति पदच्छेदः । तादृशस्थलं च पर्वतोऽग्निमान्धूमवत्त्वादयोगोलकवदिति बोध्यम् । भ्रान्तः शङ्कते ॥ **तत्रापीति** । तप्तायःपिण्डादिसपक्षैकदेश इत्यर्थः ॥ **तथाऽपीति** । तप्तायःपिण्डादिसपक्षैकदेशे व्याप्तेरप्रदर्शनेऽपीत्यर्थः ॥ **अर्थदोषेति** । महानसवदिति वक्तव्येऽयःपिण्डवदित्युक्तेः पुरुषदोषत्वेनार्थदोषत्वाभावादित्यर्थः । अर्थदोषस्यैव हेत्वाभासत्वादिति भावः ॥

**इति जनार्दनभट्टाचार्यविरचिते प्रमाणपद्धतिटिप्पणो जयतीर्थविजयनाम्नि द्वितीयप्रकरणम्** ॥

**राघ.—** पूर्वं दृष्टान्तविरोधो द्विविधः साध्यवैकल्यं साधनवैकल्यं चेत्युक्तं तत्साधयितुमाह ॥ **एवमिति** । पक्षाभासा यथा एवमित्यर्थः । सामान्यलक्षणं तावदाह ॥ **उदाहरणेति** । सम्यग्व्याप्तिप्रदर्शनपूर्वकं दृष्टान्तवचनस्वरूपोदाहरणलक्षणरहिता इत्यर्थः । ते चान्वयव्यतिरेकोदाहरणभेदेन द्वादश विधा इति भावेनान्वयोदाहरणषाड्विध्यं तावत्क्रमेण दर्शयति ॥ **तत्रेत्यादिना** । तत्र तेषूदाहरणाभासेषु व्यतिरेकोदाहरणे तद्दर्शयति ॥ **वैधर्म्योदाहरण इत्यादिना** । प्रागुक्तप्रयोग इति योज्यम् ॥ **पूर्ववदिति** । यथा शशविषाणमिति ज्ञेयमित्यर्थः ॥ **अनुपयुक्तत्वादिति** । केवलव्यतिरेकिखण्डनप्रस्तावे व्यतिरेकव्याप्तेरनुमित्यनङ्गत्वस्योक्तत्वादिति भावः ॥ **न दोष इति** । व्युत्पन्नस्य घटवदित्युक्त्यैव व्याप्तिस्मृतिसम्भवादिति भावः । अव्युत्पन्नं प्रति कथमित्यतोऽभ्युपेत्यवादेनाह ॥ **न्यूनं वेति** ॥ **असङ्गतमिति** । अनाकाङ्क्षिताभिधानरूपत्वादसङ्गतावन्तर्भवतीत्यर्थः ॥ **आश्रयासिद्धवदिति** । असङ्कीर्णोदाहरणाभावादिति भावः । साध्यसाधनवैकल्ययोर्दोषत्वमुपपादयति ॥ **तत्र साध्यवैकल्य इति** । तत्र तयोर्मध्ये ॥ **विरुद्धमिति** । सर्वसपक्षस्यापि साध्यहीनत्वे विरुद्धं सम्भवतीत्यर्थः । यद्वा साध्यहीनसपक्षे वर्तमानं

साध्यवति सपक्षान्तरेऽवर्तमानं पक्षत्रयवृत्तित्वादनैकान्तिकम् । साध्यवति पक्षान्तरेऽवर्तमानं साध्यहीनसपक्ष एव वर्तमानमित्यर्थः । इतिशब्दो दोषतोपपादनसमाप्तौ । यद्वा तर्कताण्डवोक्तरीत्या साध्यवैकल्य इत्यारभ्यैव शङ्का । इतिशब्दो हेत्वर्थः । इति हेतोर्दृष्टान्तदोषो हेत्वाभासेऽन्तर्भवतीति चेदिति । बाधकान्तरमाह ॥ **सपक्षान्तरेति** । पर्वतोऽग्निमान्धूमवत्त्वादयोगोलकवदित्यत्र धूमवत्त्व-साधनस्य महानसादौ साध्यवति वर्तमानस्य परेण दृष्टान्तीकृतेऽयोगोलकेऽसत्त्वेऽपि व्याप्यत्वा-सिद्धत्वरूपहेत्वाभासत्वायोगाच्चेत्यर्थः ॥ **तथाऽपीति** । पुरुषदोषत्वेऽपि धूमादिरूपार्थस्य व्याप्यत्वा-सिद्धत्वरूपदोषाभावादिति ॥

**इति श्रीप्रमाणपद्धतिभावदीपे राघवेन्द्रयतिकृतेऽनुमानप्रकरणं समाप्तम् ॥**

**विज.— ॥ तथाऽप्यर्थदोषाभावादिति** । वस्तुतो हेतोरदोषत्वादित्यर्थः ॥

**इति श्रीमज्जयतीर्थपूज्यचरणविरचितायाः प्रमाणपद्धतेष्टीकायां विजयीन्द्रतीर्थविरचितायां द्वितीयप्रकरणव्याख्या समाप्ता ॥**

**वेदे.— अव्याप्त्यभिधानं न दोष इति** । अवयवनियमाभावादिति भावः । अभ्युपेत्याह ॥ **न्यूनं वेति । तथाऽप्यर्थदोषाभावादिति** । वस्तुतस्तु तत्र हेतोरदृष्टान्तत्वात्तद्दोष एव वाच्यः । तथा चासङ्कीर्णतया दोषत्वात्तत्पार्थक्यं सिद्धमेवेति भावः ॥

**इति श्रीवेदेशतीर्थविरचितश्रीमज्जयतीर्थकृतप्रमाणपद्धतेर्भावविवरणेऽनुमानपरिच्छेदः समाप्तः ।**

**अभि.—** स्वन्यायैकदेशमतं दूषयितुमनुवदति ॥ **एवमुदाहरणाभासादिति** । अत्रोदाहरणा-भासादीनां हेत्वाभासेष्वन्तर्भावो नाम हेत्वाभासोपन्यासेनैव जयसम्भवादुदाहरणाभासानां दूषण-तयाऽनुपादानमेव न त्वर्थापत्त्यादीनामनुमानैकदेशत्वमिवोदाहरणाभासानां हेत्वाभासैकदेशत्वमिति बोध्यम् । एतेन हेत्वाभासस्य हेत्वभिमतनिष्ठत्वाद्दृष्टान्तनिष्ठसाध्यवैकल्यादि प्रयुक्तोदाहरणाभासस्य हेत्वाभासान्तर्भावकथनमयुक्तमिति परास्तम् । अन्तर्भावनिरूपणार्थमुदाहरणाभासाननुवदति ॥ **तथा हीत्यादिना** । यन्मूर्तं न भवति तदनित्यं न भवति । यथाऽऽकाश इत्यन्तेन । उदाहरणाभासज्ञानस्य लक्षणज्ञानाधीनत्वाल्लक्षणमाह ॥ **उदाहरणलक्षणरहिता इति** । उदाहरणाभासो द्विविधः । साधर्म्यो-दाहरणाभासो वैधर्म्योदाहरणाभासश्चेति । तत्राद्यः षड्विधः । साध्यविकलः साधनविकल उभय-विकल आश्रयहीनो व्याप्त्यभिधानविकलो विपरीतव्याप्त्यभिधानश्चेति । द्वितीयोऽपि षड्विधः ।

साध्याव्यावृत्तः साधनाव्यावृत्त, उभयाव्यावृत्त, आश्रयाहीनो, व्याप्त्यभिधानविकलो, विपरीत-व्याप्त्यभिधानश्चेति ग्राह्यम् । आद्यनुदाहरति ॥ **तत्र साधर्म्योदाहरण इति ।** साधर्म्योदाहरणाभासे साध्यविकलो यथा दृष्टान्तस्य साध्यवैकल्यप्रयुक्तः साधर्म्योदाहरणाभासः कथमित्यर्थः । उदाहरण-स्यानुमानप्रयोगसापेक्षत्वात्तदनुमानं तावदाह ॥ **मनोऽनित्यमिति ।** अत्र यन्मूर्तं तदनित्यं यथा परमाणुरिति । दृष्टान्तस्य साध्यवैकल्यप्रयुक्तोऽयमुदाहरणाभास इत्यर्थः ॥ **साधनविकल इति ।** साधनवैकल्यप्रयुक्तोदाहरणाभासः कथमित्यर्थः ॥ **यथा कर्मेति ।** यन्मूर्तं तदनित्यमिति वर्तते ॥ **आश्रयहीन इति ।** असदाश्रयप्रतिपादकः कथमित्यर्थः ॥ **यथा शशविषाणमितीति ।** अत्रापि यन्मूर्तं तदनित्यमिति वर्तते । यद्यप्यत्रोभयवैकल्यमस्ति । तथाऽपि पुरः स्फूर्तिकत्वादसदाश्रयत्वमेवोक्तम् ॥ **घटवदितीति ।** यन्मूर्तं तदनित्यमिति नानुवर्तते ततश्चायं व्याप्त्यभिधानविकलः ॥ **वैधर्म्योदाहरण इति ।** दृष्टान्तस्य साध्यव्यावृत्तिप्रयुक्तो वैधर्म्योदाहरणाभासः कथमित्यर्थः । साधनव्यावृत्तो यथेत्यादिव्याख्यानं पूर्ववत् । एवं सपरिकरमुदाहरणाभासाननूद्य तत्र कतिपयस्य हेत्वाभासान्तर्भावं वक्तुमितरेषां केषाञ्चिदवक्तव्यतैव केषाञ्चिदनाभासत्वमन्येषामन्यत्रान्तर्भाव इत्याह ॥ **वैधर्म्योदाहरण-स्येत्यादिना ॥ द्वयमेव दृष्टान्तदूषणमिति ।** उदाहरणस्याभासप्रयोजकमिति शेषः । अथेदानीं दृष्टान्तगतसाध्यवैकल्यसाधनवैकल्यप्रयुक्तोदाहरणाभासस्य तत्प्रयुक्तहेत्वाभासोद्भावनेनैव गतार्थत्वरूपं पारिभाषिकं हेत्वाभासान्तर्भावमाह ॥ **तत्र साध्यवैकल्य इति ।** दृष्टान्ते साध्यविकले सति तत्र विद्यमानहेतुरनैकान्तिको वा विरुद्धो वा । दृष्टान्ते साधनविकले सति हेतुरसिद्धो भवतीति तत्प्रयुक्तोदाहरणाभासः । तत्प्रयुक्तहेत्वाभासोद्भावनेनैव गतार्थता भवतीत्यर्थः । दूष्यांशं निषेधति ॥ **दृष्टान्तदोष इति ।** चेच्छब्दो यद्यर्थे । दृष्टान्तदोषप्रयुक्तोदाहरणाभासो हेत्वाभासोद्भावनेन गत इति यत्तन्नेत्यर्थः । एतेन पृथग्वाच्यतामाहुरिति प्रागभिहितत्वात्तन्नेति वक्तव्यमिति चेन्नेत्यसङ्गतमिति परास्तम् । चेच्छब्दस्य यद्यर्थत्वेनेति यदाहुस्तन्नेत्यर्थस्यैव लाभात् । एतेनैवोदाहरणाभासान्हेत्वा-भासेऽन्तर्भावयन्त इत्युपक्रम्योपसंहारे दृष्टान्तदोषे हेत्वाभासेऽन्तर्भवतीत्यभिधानमयुक्तमिति परास्तम् । दृष्टान्तदोषशब्देन दृष्टान्तदोषप्रयुक्तोदाहरणाभासस्यैव विवक्षितत्वात् ॥

**इति श्रीमत्सत्यनिधितीर्थश्रीमच्चरणाराधकश्रीसत्यनाथयतिविरचित प्रमाणपद्धति व्याख्यानेऽभिनवामृतेऽनुमानपरिच्छेदः समाप्तः ॥**

**आद.— अर्थदोषाभावादिति ।** व्याप्तेरुभयवादिसम्मतत्वे तज्ज्ञानासिद्धेरप्यभावाद्व्याप्यत्वासिद्धत्वेन तत्रोद्भावनासम्भवादिति भावः ॥

**इति श्रीमट्टीकाकृत्पादविरचित प्रमाणपद्धतिभावप्रकाशाक श्रीमद्व्याघ्रपुरवासिवासुदेवाचार्यशिष्यश्रीनिवासाचार्यशिष्यनरसिंहविरचिता दर्शनामग्रन्थेऽनुमिति परिच्छेदः समाप्तः ॥**

**वि.— ॥ उदाहरणलक्षणरहिता इति ।** सम्यग्व्याप्तिप्रदर्शनपूर्वकदृष्टान्तवचनमुदाहरणम् । तद्रहिता इत्यर्थः । उदाहरणपदवता समानां तत उदाहरणपदप्रयोगसम्भावनार्थं स्वरूपकथनपरमेव । आश्रयाहीनः॥ **पूर्ववदिति ।** आश्रयाहीनो दृष्टान्तः । पूर्ववदाश्रयहीनान्वयदृष्टान्तवदित्यर्थः ॥ **अत्रेति ।** उदाहरणाभासेषु तदाभासकथनं न युक्तमित्यन्वयः । तत्र हेतुवैधर्म्योदाहरणकथनमेवासङ्गतमिति तदाभासकथनं सुतरामनुपयुक्तमित्यर्थः ॥ **अव्याप्त्यभिधानं तु न दोष इति ।** अनुमानमुद्राभिज्ञस्य दृष्टान्तोक्तिमात्रेण व्याप्तिस्मृतेस्तन्न दोष इति भावः । तस्य दोषत्वमभ्युपेत्याह ॥ **न्यूनं वेति ।** अव्यवक्तव्यस्यावचनरूपस्येति भावः ॥ **असङ्गतमिति ।** अनाकाङ्क्षिताभिधानत्वादस्यासङ्गतत्वमिति भावः ॥ **आश्रयाहीनत्वं चेति ।** आश्रयासिद्धस्येवास्यापि साधनवैकल्यरूपदृष्टान्तदोषासङ्कीर्णोदाहरणाभावाददोषत्वमिति भावः ॥ **अन्यतरवैकल्येनैवेति ।** साध्यसाधनयोरन्यतरवैकल्येन साध्यवैकल्येन वा साधनवैकल्येन वा दृष्टान्तस्य दुष्टत्वादाधिक्येनोभयवैकल्यं पृथग्दोषान्तरत्वेन न गणनीयमित्यर्थः । अन्यथाऽनैकान्तिककालातीतोऽसिद्धकालातीतश्चेत्याद्येष्वपि हेत्वाभासान्तरं गणनीयमित्यापातादिति भावः ॥ **विरुद्धं वेति ।** सता व्यावृत्तत्वे विरुद्धमिति बोध्यम् ॥ **दृष्टान्तोक्त्यनन्तरं प्रतिभासादिति ।** प्रतिभासानुसारेणैव दोषस्योद्भाव्यत्वेन साधनवैकल्यादेर्दृष्टान्तदोषत्वमेव । अन्यथा बाधे पक्षस्यैव विपक्षत्वात्तत्र हेतोर्वृत्तौ व्यभिचारः । अवृत्तौ च स्वरूपासिद्धिरिति बाधस्यापि पृथग्दोषत्वाभावप्रसङ्गादिति ज्ञातव्यम् । दूषणान्तरमाह ॥ **सपक्षान्तरे वर्तमानस्येति ।** महानसादौ दृष्टान्तेन वर्तमानस्य धूमादेर्हेतोर्दृष्टान्तीकृते ह्रदादौ सपक्षेऽसत्त्वेऽपि व्याप्यत्वासिद्धरूपहेत्वाभासत्वासम्भवाच्चेत्यर्थः ॥ **अनुपदर्शितव्याप्तिकत्वेनेति ।** यथा च व्याप्तिज्ञानाभावेन व्याप्यत्वासिद्धिरिति हृदयम् ॥ **तथाऽप्यर्थदोषाभावादिति ।** अनुपदर्शितव्याप्तिकत्वेऽप्यर्थस्य हेतोर्व्याप्यत्वरूपदोषादित्यर्थः । अनुपदर्शितव्याप्तिकत्वं हेतोरर्थस्य न दोषः । व्याप्त्यप्रदर्शनेऽपि धूमस्य वह्निव्याप्त्यक्षतेः । वादिप्रतिवादिनोः परस्परमनाश्वासात् यथा महाह्रद इति दृष्टान्तवचनस्याप्तवाक्यतया व्याप्तिबोधाजनकत्वात् । गृहीतव्याप्तेस्तत्स्मारकत्वेनागृहीतव्याप्ते-

स्तज्जिज्ञासाजनकत्वेनोपयोगो वाच्यः । तथा चानुमानमुद्राभिज्ञस्य यथा महानस इत्यनेनैव यथा महाह्रद इत्यनेनापि व्याप्तिस्मृत्यादेर्जायमानत्वाद्व्याप्तिज्ञानाक्षतेश्च । किन्त्वनुमानप्रयोक्ता व्याप्तेः प्रदर्शनाय तत्त्वात्तदनुपदर्शनम् । उपलक्षणं चैतत् । यथा महानस इति दृष्टान्ताभिधानेऽनुपदर्शितव्याप्तिकत्वाभावाच्चेत्यपि द्रष्टव्यम् । तथा सति निर्दिष्टदृष्टान्तपरित्यागो दोषः स्यादिति चेत् । किं तावता दृष्टान्तदोषस्य हेत्वाभासान्तर्भावस्य स्थितत्वान्न दृष्टान्तपरित्यागस्य पुरुषदोषत्वात् । वादे निर्दिष्टदृष्टान्तपरित्यागस्यादोषत्वाच्चेति । इति शब्दोऽनुमानप्रकरणपरिसमाप्तौ वर्तते ॥

**इति श्रीनिवासबालनरसिंहभट्टसूनुना विठ्ठलेन विरचिते**
**प्रमाणपद्धतिव्याख्यानेऽनुमानप्रकरणव्याख्यानं समाप्तम् ॥**

# (३) ॥ अथागमपरिच्छेदः ॥

## आगमलक्षणम्

**(१) प्र.प.— निर्दोषः शब्द आगमः । निरभिधेयत्वेनान्वयाभावेन वाऽबोधकत्वं, विपरीतबोधकत्वं, ज्ञातज्ञापकत्वं, अप्रयोजकत्वं, अनभिमतप्रयोजकत्वं, अशक्यसाधनप्रतिपादनं, लघूपाये सति गुरूपायोपदेशनमित्यादि दोषरहितः शब्द आगमः । निर्दोषं वाक्यमिति वा ।**

**जना.**— क्रमप्राप्तमागमं लक्षयति ॥ **निर्दोष इति ।** इदं च निर्दोषः शब्द आगम इति प्रमाणलक्षणानुसारेण । निर्दोष इति निराकाङ्क्षादिव्युदासः । शब्द इति प्रत्यक्षादेरिति पदव्यावर्त्ये द्रष्टव्ये । नन्वत्र शब्दपदेन वाक्यस्य विवक्षितत्वे निर्दोषं वाक्यं वेत्यग्रिमलक्षणाभेदः । पदवाक्यसाधारणशब्दमात्रविविक्षायामेकपदमात्रस्याप्यागमत्वापत्तिः । न चेष्टापत्तिः । तत्रागमप्रामाण्यव्यापकसंसर्गबोधकत्वाभावात् । किञ्च के वा शब्ददोषा इत्यत आह ॥ **निरभिधेयत्वेनेति ॥ अबोधकत्वमिति ।** पदार्थसंसर्गाप्रमापकत्वमित्यर्थः । निरभिधेयत्वेन यथा शशविषाणमस्तीति । अन्वयाभावेन यथौदनं स्नात इति । विपरीतबोधकत्वं यथा जलेन दहेदिति । अवशिष्टं स्पष्टम् ॥ **इत्यादिदोषरहित इति ।** आदिशब्देनासन्निहितत्वसिद्धपरत्वयोर्ग्रहणम् ॥ **शब्द आगम इति ।** पदत्ववाक्यत्वौदासीन्येन तदुभयसाधारणशब्दत्वमित्यर्थः । न च तर्ह्येकपदमात्रस्य प्रामाण्यप्रसङ्गः । एकपदमात्रस्यान्वयाभावेनाबोधकत्वरूपदोषवत्त्वेन निर्दोषपदेनैव तन्निरासादिति भावः । शिष्याणां विषयव्याप्त्यर्थमागमो दुष्टवाक्यं चेति ब्रह्मतर्कानुसारेणागमस्य लक्षणान्तरमाह ॥ **निर्दोषमिति ।** अत्र निर्दोषशब्दार्थं पदव्यावर्त्यानि स्वयमेव वक्ष्यति । निर्दोषशब्देन पूर्वलक्षण इव प्रागुक्तसकलदोषराहित्यं विवक्षितम् । न च तर्हि निराकाङ्क्षादिवाक्यव्यावृत्तिसम्भवेन वाक्यग्रहणमनर्थकमिति वाच्यम् । तस्यातिव्याप्त्यादिलक्षणदोषपरिहारार्थकत्वाभावेऽपि शिष्याणां पदवाक्यादिस्वरूपज्ञापनार्थत्वेन सार्थकत्वात् । तदुक्तं तर्कताण्डवे । अत्र वाक्यग्रहणं शिष्याणां पदवाक्यादिस्वरूपज्ञापनार्थमिति ।

**राघ.**— क्रमप्राप्तमागमं लक्षयति ॥ **निर्दोष इति ।** शब्ददोषोक्तिपूर्वकं निर्दोषशब्दार्थं वदन् समग्रवाक्यार्थमाह ॥ **निरभिधेयत्वेनेत्यादिना ।** वाच्यहीनत्वेनेत्यर्थः । कचटतपानां जबगडत्वादित्यादिशब्दे कुण्डमजाजिनं दश दाडिमानि षडपूपा इत्यादावन्वयाभावेनाबोधकत्वमित्यबोधकत्वमेव दोषः । तत्र चैतद्द्वयं हेतुरिति सूचितम् । विपरीतबोधकत्वं वक्तुरनाप्त्यादिनाऽविद्यमानार्थकबोधकत्वम् । ज्ञातज्ञापकत्वं ज्ञातमात्रज्ञापकत्वं वह्निरनुष्ण इत्यादिवाक्ये । ''काकस्य कति वा

दन्ता'' इत्यादाविवाप्रयोजकत्वम् । विरक्तस्य वाणिज्योपदेश इवानभिमतप्रयोजनकत्वम् । हिमाचले सञ्जीवन्युपदेश इवाशक्यसाधनप्रतिपादनम् । पिपासुं दाक्षिणात्यं प्रति गङ्गातीरे कूपखननोपदेश इव लघूपाये गुरूपायोपदेशनम् । आदिपदेनातिव्यवहितान्वयित्वातिदुर्बोधकपदवाक्योपेतत्वादिग्रहः । प्रमाणलक्षणोक्त्यनुरोधेनैकं लक्षणमुक्त्वाऽऽगमो दुष्टवाक्यं चेति तत्त्वनिर्णयोक्तब्रह्मतर्कवाक्यानुसारेण लक्षणान्तरं पदवाक्यादिस्वरूपप्रकाशनायाह ॥ **निर्दोषवाक्यमिति वेति ।** आगम इत्यनुषङ्गः ।

**वि.**— आगमलक्षणमाह ॥ **निर्दोष इति ।** प्रमाप्रतिबन्धकदोषरहित इत्यर्थः । तान्त्रिकव्यवहारोपयोगिलक्षणमाह ॥ **निरभिधेयत्वेनेति ।** गवादिपदे गकारदेरागमत्वव्यवहाराभावादभिधेयराहित्याभावः । अनासन्नेऽनाकाङ्क्षे च तदभावान्वयबोधयोग्यत्वाभावः । अयोग्ये तदभावाद्विपरीतबोधकत्वाभावः । पुनरुक्ते तदभावादज्ञातज्ञापकत्वाभावः । काकदन्तादिवाक्ये तदभावादप्रयोजकत्वाभावः । द्रव्यार्थिनं प्रति विद्याद्युपदेशे तदभावादभिमतप्रयोजनकत्वाभावः । तक्षचूडामण्यानयनोपदेशे तदभावादशक्यसाधन प्रतिपादकत्वाभावः । फलतौल्ये समीपस्थजलपानादि विहाय दूरस्थतदुपदेशे तदभावादसम्भवल्लधूपाये गुरूपायोपदेशत्वाभावः । आदिशब्देनातात्पर्यविषयकत्वाभावश्चोक्तः । आकाङ्क्षादेर्दोषाभावत्वेनोपयोगाभावाल्लक्षणान्तरमाह ॥ **निर्दोष इति ।** तथा च वाक्य पदेनाकाङ्क्षादिमत्त्वे उक्तेऽज्ञातज्ञापकत्वादेर्दोषाभावत्वमुक्तं भवति ।

**वेदे.**— क्रमप्राप्तमागमं लक्षयति ॥ **निर्दोषेति ।** निर्दोषपदव्यावर्त्यदोषान्दर्शयन् लक्षणवाक्यं व्याख्याति ॥ **निरभिधेयत्वेनेत्यादिना ।** अबोधकत्वे निमित्तप्रदर्शनार्थमुक्तं निरभिधेयत्वेनान्वयाभावेनेति । इदमुपलक्षणम् । आकाङ्क्षाऽऽसत्त्यभावाभ्यामप्यबोधकत्वं द्रष्टव्यम् । अत्र निरभिधेयत्वेन जबगडदेत्यादावन्वयाभावेन कुण्डमजाजिनमित्यादावाकाङ्क्षाभावेनायमेवेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ वाऽऽसत्त्यभावेन विलम्बेनोच्चारिते गामानयेत्यादावबोधकत्वं प्रसिद्धमिति द्रष्टव्यम् । विपरीतबोधकत्वादौ योग्यतातात्पर्यभ्रमादिकं निमित्तमिति प्रसिद्धत्वान्नोक्तम् । विपरीतबोधकत्वं च जगन्मिथ्येत्यादि प्रतिवादिवाक्ये द्रष्टव्यम् । ज्ञातज्ञापकत्वं नाम येन योऽर्थः प्रत्यक्षादिना निर्णीतस्तं प्रति तद्बोधकत्वं विवक्षितम् । ततश्च तस्यान्यं प्रति सार्थक्येऽपि तं प्रति दोषत्वम् । अप्रयोजकत्वं तु सर्वथा प्रयोजनशून्यत्वमतोऽनयोर्भेद इति द्रष्टव्यम् । न च बहुप्रमाणसंवादश्च दार्ढ्यहेतोरेवेत्युक्तत्वेन कथं ज्ञातज्ञापकत्वं दोष इति वाच्यम् । पूर्वप्रवृत्तप्रमाणेनाप्रामाण्यशङ्काकलङ्कितेनार्थानिर्णये उत्तरोत्तरप्रवृत्तप्रमाणानां तन्निर्णायकत्वेन दार्ढ्यहेतुत्वस्य तदर्थत्वात् । अत्र च निर्णीतज्ञापकत्वमेव दोषत्वेन विवक्षितमित्युक्तत्वात् । इदं च दोषद्वयं क्रमेण स्फीतालोकमध्यवर्तिघटप्रतिपादकवाक्ये काकदन्त-

परीक्षावाक्ये च प्रसिद्धम् । अनभिमतप्रयोजकत्वादिकं तु क्रमेण विरक्तं प्रति वाणिज्योपदेशे रोगार्तं प्रति मृतिहरहिममहीधरोत्तरसानुसिद्धसञ्जीवनीकथने, सुरसरित्तटे निविष्टं तृषितं प्रति कूपखननोपदेशे च द्रष्टव्यम् । आदिपदेन च भ्रान्तप्रतारकोक्तत्वसङ्ग्रहः । न तात्पर्यविषयत्वाभावस्य विपरीत-बोधकोक्त्यैव प्राप्तत्वात् तात्पर्यविशेषप्रतिपादकत्वे हि वाक्यस्य विपरीतबोधकत्वमेव भवति । शब्दः पदवाक्यात्मको न तु वाक्यात्मकैव । सिद्धान्ते वैदिकानामपि पदानां महायोगवृत्त्या भगवति प्रामाण्यस्योक्तत्वात् । न च यौगिकपदानामपि प्रकृतिप्रत्ययविभागेन च संसर्गबोधकतया वाक्यात्मतै-वेति वाच्यम् । तथाऽपि पदसमुदायरूपवाक्यात्मकत्वाभावात् । तथा चात्र लक्षणे पदवाक्योभय-विधोऽपि शब्दो लक्ष्यत्वेन विवक्षितः । अत एव पदसमुदायरूप एव वाक्यमात्रं लक्षीकृत्य प्रवृत्तं यदागमोऽदुष्टवाक्यं चेति ब्रह्मतर्कवाक्योक्तलक्षणं तदनुसारेण शिष्याणां पदवाक्यादिस्वरूपज्ञापनाय लक्षणान्तरमाह ॥ **निर्दोषमिति** । केचित्त्वाकाङ्क्षादेर्दोषाभावत्वेनोपयोगाभावाल्लक्षणान्तरमाहेत्याहुः ।

**अभि.— ॥ निरभिधेयत्वेनेति** । कचटतपानामित्यादिशब्दानां निरभिधेयत्वेनाबोधकत्वम् । दशदाडिमानि, षडपूपाः, कुण्डमजाजिनं पललपिण्डोऽधरोरुकमेतत्कूर्मायाः स्फैय्यकृतस्य पिता प्रतिशीन इत्यादिवाक्यानामन्वयाभावेनाबोधकत्वम् । जगन्मिथ्येत्यादीनां विपरीतबोधकत्वम् । स्फीता-लोकमध्यवर्तिघटप्रतिपादकवाक्यस्य ज्ञातज्ञापकत्वम् । काकदन्तविचारवाक्यस्याप्रयोजनत्वम् । विरक्तं प्रति वाणिज्योपदेशस्यानभिमतप्रयोजनत्वम् । हिममहीधरोत्तरसानुसिद्धमृत सञ्जीवनीकथनवाक्यस्या-शक्यसाधनप्रतिपादनत्वम् । तृषितं प्रति गीर्वाणतरङ्गिणीसमीपे कूपखननोपदेशवाक्यस्य लघूपाये सति गुरूपायोपदेशनं दोषः । आदिपदेन भ्रान्तप्रतारकवाक्यगत प्रतारकत्वरूपदोषसङ्ग्रहः। अत्रायं विवेकः। अबोधकत्वं विपरीतबोधकत्वं चेति दोषद्वयं प्रमाणविघातकम् । ज्ञातज्ञापकत्वादिकं त्वागमस्य विघातकम् । न तु प्रामाण्यस्य । एवं तर्हि ज्ञातज्ञापकवाक्यानां प्रमाणत्रयेऽन्तर्भावो न लभ्यत इति चेन्न ॥ मा लाभि । यथा प्रत्यक्षानन्तर्भावादनुमानं पृथक् प्रत्यक्षानुमानयोरनन्तर्भावादागमस्तथा ज्ञात-ज्ञापकादीनां तृतीयानन्तर्भावे पृथक् प्रामाण्यं भविष्यति । न च त्रिविधमनुप्रमाणं प्रत्यक्षमनुमान-मागमश्चेत्यनुप्रमाणत्रैविध्योक्तिविरोध इति वाच्यम् । उपादेयानुप्रमाणत्रैविध्यकथन परत्वात्तस्य । तदुक्तम् । ''याथार्थ्यमेव मानत्वं तन्मुख्यं ज्ञानशब्दयोरि''ति । याथार्थ्यमेव मानत्वं न त्वज्ञातज्ञाप-कत्वादिविशिष्टमिति भावः । प्रमाणलक्षणे स्मृत्यनुवादयोर्नाप्रामाण्यम् । यथार्थानुभवत्वादित्युक्तम् । अवश्यं चैतदेवं विज्ञेयम् । ज्ञातवेदार्थं पुरुषं प्रति प्रयुक्तवेदवाक्यस्य ज्ञातज्ञापकत्वेनाप्राण्यप्रसङ्गात् । न च तदिष्टम् । अपौरुषेयत्वस्याप्रामाण्यविरोधित्वाभावे तदङ्गीकारवैय्यर्थ्यप्रसङ्गात् । ननु पुरुषविशेषं प्रति तस्याप्रामाण्येऽप्यज्ञातवेदार्थं प्रति प्रामाण्यमिति चेत् । अङ्गीकृतं तर्ह्येकं प्रत्यनुपादेयमन्यं प्रति

तूपादेयं याथार्थ्यं तूभौ प्रतीति । न हि लौकिकं वाक्यं सर्वान्प्रति ज्ञापकमेव । किन्तु वेदवद्विभागे- नैवेति । येन ज्ञातज्ञापकस्य वेदस्य प्रामाण्येऽपि लौकिकस्य न स्यादिति । एतेन प्रमाप्रतिबन्धकत्वा- भावाज्ज्ञातज्ञापकत्वादीनामदोषत्वमिति परास्तम् । प्रमाणदोषाणामेवंविधत्वेऽप्यागमदोषाणामनेवं- विधत्वात् ।

आद.— **वासुदेवार्यहृत्पद्मगतमध्वहृदब्जगः ।**
**श्रीहयास्यः सदा पायाद्भूयाज्ज्ञानप्रदो मम ॥ १ ॥**

शब्दप्रमाणं निरूपयितुमुपक्रमते ॥ **निर्दोषेति** । प्रमाज्ञानादिपुरुषदोषाप्रयोज्य इत्यर्थः । आप्तोक्तत्वं तु न लक्षणम् । अपौरुषेयवेदेऽव्याप्तेः । ननु वेदोऽपीश्वरोक्त इति चेत् । किमाप्तोच्चरित- मात्रमाप्तोक्तत्वं किं वाऽऽप्तिमूलत्वम् । नाद्यः । आप्तेनानूदितस्याप्यनाप्तवाक्यस्य प्रामाण्यापत्तेः । नान्त्यः । तन्निश्चयोगायाभावात् । अथोच्येत । निर्दोषत्वस्यापि निश्चयो न सम्भवति । न चापौरुषेय- त्वेन तन्निश्चयः । तन्निश्चयस्याप्ययोगात् । न च कर्तृप्रसिद्ध्यभावादेव तन्निश्चयः । गूढकर्तृकेऽप्य- पौरुषेयत्वेन केनचिद्विप्रलम्भकेन प्रसिद्ध्युत्पादनसम्भवेन संशयनिवृत्त्युपायाभावात् । न च विंश- ल्लक्षणत इत्यादिपुराणवाक्यपर्यालोचनया गुणविशेषविशिष्टपुरुषवाक्यात्तन्निश्चयस्तत्राप्तिनियतेः प्रमित- त्वादिति वाच्यम् । वेदप्रामाण्यसन्देहदशायां तदनुसारिपुराणेष्वपि प्रामाण्यसन्देहेन निश्चयायोगात् । अन्यथा पुराणादिनेश्वरस्याप्तत्वनिश्चयसम्भवेन तद्वाक्यत्वेनापि प्रामाण्यसिद्ध्यापातात् । किञ्चादिसृष्टौ हिरण्यगर्भं सृष्ट्वेश्वर उपदिशति । हिरण्यगर्भस्य च स्वपितृत्वेन सर्वकर्तृत्वनिश्चयसत्त्वेन च तस्मि- न्नाश्वासः सम्भवत्येव । एवं तदुपदेशेन तत्सृष्टानां वसिष्ठादीनामेवं क्रमेण परम्परोपदेशेनाधुनिका- नामपि प्रामाण्यनिश्चयोपपत्तिः । तथा च वेदः प्रमाणं महाजनपरिगृहीतत्वात्पुराणादिवदित्यनु- मानेनेश्वरोक्तत्वेऽपि प्रामाण्यसिद्धिः । हिरण्यगर्भस्यादिकार्यकर्तृत्वं प्रसिद्धम् । तेन च सार्वज्ञादेः कल्पनम् । स्वस्य पुत्रत्वेन तत्प्रीतिविषयत्वेन स्वं प्रत्यविप्रलम्भकत्वमनुमानतः सिद्धं ज्ञानार्थमुपदेशेन प्रसङ्गानुकूल्यं च । एवं च वक्त्राद्यानुकूल्येनाप्तिमूलत्वं प्रामाण्यं च सिद्ध्यति । एवं तदुपदेशपरम्परया स्वस्य तदीयप्रेमपात्रत्वादि नोक्तरीत्या वक्त्राद्यानुकूल्यनिश्चयद्वारा प्रामाण्यनिश्चयोपपत्तिः । एवमेव लोके स्वपित्रादावाप्तिनिश्चयस्य तन्मूलकव्यवहारस्य च दृष्टत्वात् । अन्यथा सर्वलोकव्यवहारो- च्छेदापत्तिः । अवश्यं भवद्भिरप्येषा प्रक्रियाऽङ्गीकर्तव्या । अन्यथेश्वरोपदेशस्यावश्यकत्वेन तेन वेदस्यापौरुषेयत्वप्रतिपादनेऽपि तत्राश्वासानुपपत्तिः । किमयमपौरुषेयवाक्यमपौरुषेयत्वेनोपदिशति किं वा स्वकृतमेवापौरुषेयं वदतीति संशयनिवृत्त्युपायाभावेन संशयानिवृत्तिप्रसङ्गात् । किं च किमिदं

नामापौरुयत्वं यन्नास्तीत्युच्यते । ईश्वरेण ब्रह्माणं प्रत्युपदिश्यत इति भवद्भिरप्यङ्गीकृतत्वात्क्रम-विशिष्टानामुच्चारणस्यैव वाक्यकर्तृरूपत्वात् । न चेश्वरोऽन्यदीयोच्चारणमपेक्ष्योच्चारयति । न च पूव-कालीनोच्चारणमनपेक्ष्योच्चारणकर्तृत्वमेव स्वतन्त्रकर्तृत्वम् । तच्च न सम्भवति । पूर्वकालीन-स्वकर्तृकोच्चारणमपेक्ष्यैवोच्चारणकर्तृत्वादिति वाच्यम् । पूर्वोच्चारणस्य स्मृतिदृढतरसंस्कारद्वारैव स्वोत्तरकालीनोच्चारणप्रयोजकत्वस्य सर्वत्रेष्टत्वेन प्रकृते तदुत्पादनासम्भवेन पूर्वोच्चारणस्योत्तरोच्चारण-प्रयोजकत्वासिद्धिः । किन्तु सजातीयोच्चारणमनपेक्ष्यैवेति भवति स्वतन्त्रः कर्ता । किमतोऽ-न्यद्भारतादावीश्वरकृतत्वं नाम भारतादौ तत्प्रसिद्धिश्चावताररूपेण कृतत्वात् । आदिसृष्टौ वेदस्य कृतत्वेनाकर्तृकत्वप्रसिद्धिसम्भवात् । वेदेन भारतादिनेवोच्चारयितृपुरुषाभिप्रेतार्थबोधोत्पत्तिरपि स्वीकृतै-वोच्चारयितुरीश्वरज्ञानजन्यत्वं तत्समानविषयकत्वं चेदजन्यबोधे वर्तते । वेदजन्यबोधश्च स्वोच्चार-यितरीश्वरे स्वसमानविषयकज्ञानस्यानुमापकं भवतीति । तत्कृतवाक्यत्वं च वर्तत एवेत्यपौरुषेयत्ववचनं रिक्तमेवेति चेदत्रोच्यते । स्वसजातीयोच्चारणाधिकरणकालत्व व्यापकस्वजातीयक्रमोच्चारणध्वंसाधि-करणत्वक्रमवत्त्वस्यैवापौरुषेयत्वपदार्थत्वात् । भारतादौ क्रमोच्चारणस्यैतत्कल्प एव कृतत्वेन तत्सजातीयक्रमोच्चारणस्य पूर्वमभावेनापौरुषेयत्वाभावात् । यदि चापभ्रष्टभाषाक्रमस्यापौरुषेयत्वं नापादयितुं शक्यते । तासां भाषाणामनित्यत्वेन पूर्वपूर्वकल्पे एतद्भाषाया एवाभावेनैतादृशानुपूर्व्या अभावादित्युच्यते । तथाऽपि संस्कृतभाषाया नदीतीरे पञ्च फलानि सन्तीत्याद्यानुपूर्व्या अपौरुषेयत्वा-पत्तिर्दुर्वारा । पूर्वपूर्वतनैरेतादृशानुपूर्व्या उच्चरितत्वसम्भवात् । ईश्वरेणाप्युच्चरितत्वसम्भवात् । न चेष्टापत्तिः । विप्रलम्भकोदीरिततादृशवाक्यस्यापि प्रामाण्यापत्तेः । यदि विप्रलम्भादिदोषमूलत्वेन न प्रामाण्यापत्तिरित्युच्यते तर्हि निर्दोषत्वमेव प्रामाण्यप्रयोजकमिति तदेव वक्तव्यम् । किमपौरुषेयत्वा-ग्रहेण । उक्तवाक्ये व्यभिचारेण निर्दोषत्वस्याननुमापकत्वाच्चेति चेन्न ।

स्वसजातीयक्रमोच्चारणकालत्वव्यापकस्वोच्चारणप्रयोजकबोधसमानविषयकबोधेच्छाप्रयोज्यसमान कर्तृकस्वजातीयक्रमोच्चारणध्वंसाधिकरणत्वक्रमवत्त्वस्यैवापौरुषेयत्वपदार्थत्वेन दोषाभावात् । उक्ता-पौरुषेयत्वस्य निर्दोषकत्वसाधकत्वसम्भवात् । अनादिकालीनानन्तबोधेषु तत्पुरुषीयदोषमूलकत्वकल्पने कल्पनागौरवेण तदभावस्यैव सिद्धेः । विप्रलम्भकवाक्यत्वविशिष्टतादृश वाक्यस्याभिन्नत्वेनातादृश-वाक्यत्वात् । तद्भिन्नतादृशानुपूर्व्यास्तादृशत्वे निर्दोषत्वेन प्रामाण्यमेवेति । यद्वा । स्वोच्चारणपूर्व-कालीनस्वसजातीयक्रमोच्चारणजन्यक्रमप्रत्यक्षाजन्योच्चारणविषयीभूतक्रमत्वं पौरुषेयत्वं तदन्यत्व-मपौरुषेयत्वमित्यङ्गीक्रियते । भारतादौ स्वोच्चारणपूर्वकालीनस्वसजातीय क्रमोच्चारणस्यस्वपदेन प्रथमोच्चारणजन्यप्रत्यक्षविषयीभूतक्रमग्रहणेऽप्रसिद्धत्वेन तज्जन्यप्रत्यक्षविषयीभूतस्वसजातीयक्रम-

ज्ञानस्याप्यप्रसिद्ध्या तज्जन्यत्वाभाववदुच्चारणविषयत्वं तादृशभारतादिक्रमेऽक्षतम् । क्रमस्य वक्ष्यमाणरीत्या प्रतिक्षणं भिन्नत्वेन बौद्धत्वपक्षेऽपि बुद्धिभेदेन भिन्नभिन्नत्वेन प्रथमप्रत्यक्षविषयीभूत-क्रममादाय लक्षणसमन्वयस्य सुलभत्वात् । वेदे च प्रथमप्रत्यक्षविषयीभूतक्रमस्त्वप्रसिद्ध इति सर्वस्यापि वेदरूपक्रमस्य स्वोच्चारणपूर्वकालीनोच्चारणजन्य ज्ञानविषयत्वेन तादृशक्रमज्ञान-जन्योच्चारणविषयत्वं नैकस्यापि वेदरूपक्रमस्येति तद्भदन्यत्वादपौरुषेयत्वमेवेति । नदीतीरे पञ्च फलानि सन्तीत्यादीनि विप्रलम्भकोदीरितानि नेदृशानि । तदानीं तद्वाक्योच्चारणकर्तुस्तादृशक्रमज्ञानस्य स्वाभिप्रेतबोधौपयिकाकाङ्क्षादिज्ञानजन्यत्वेन पूर्वोच्चारणजन्यक्रमज्ञानजन्यत्वात्पौरुषेयत्वमेव । न हि लौकिकाः स्वाभिप्रेतार्थबोधाय वाक्यविशेषं प्रयुञ्जानास्तत्सदृशपूर्वकालीनक्रमज्ञानमपेक्षन्ते । किन्तु स्वाभिप्रेतबोधौपयिकत्वस्य पूर्वमाकाङ्क्षादीनां ज्ञातत्वेन तादृशाकाङ्क्षादिशालिपदविशेषान्प्रयुञ्जन्ति । कदाचित्पूर्वानुभूत तत्सदृशज्ञानक्रमसत्त्वेऽप्यन्यथासिद्धमेव । न हि तादृशविशेषयुक्तं वाक्यं तादृशा-काङ्क्षादिमत्त्वज्ञानाभावे प्रयुञ्जन्ति । तत्सत्त्वेऽश्रुतक्रमविशेषवन्तं वाक्यं प्रयुञ्जन्ति । अतो न लौकिक-वाक्यस्यापौरुषेयत्वापत्तिरिति । ननु सिद्धान्ते वर्णानां नित्यत्वेन व्याप्तत्वेन दैशिककालिक-क्रमयोरसम्भवेन तद्विजातीयक्रमस्याननुभाविकत्वेन कथं क्रमोत्पत्तिः । न च व्यञ्जकध्वनिक्रमेण क्रमाद्वर्णानामभिव्यक्त्या व्यक्तिक्रम एव वर्णानां क्रम इति वाच्यम् । विकल्पासहत्वात् । तथा हि । किं व्यक्तिर्नाम तज्ज्ञानं तदुत्पत्तिर्वा तदतिरिक्तं वा किञ्चित् । नाद्यः । वर्णनिष्ठतया प्रतीयमानस्य क्रमस्य बुद्धिनिष्ठत्वायोगात् । न च बौद्ध एव क्रमः परम्परया वर्णनिष्ठतया प्रतीयते । कर्दमगतस्य कार्ष्ण्यस्य वस्त्रे प्रतीतिवत् । अत एव कृष्णं वस्त्रमिति प्रतीतिवद्व्यवहारवत्क्रमिका वर्णा इति व्यवहार इति वाच्यम् । बुद्ध्यनुपस्थितावपि साक्षात्सम्बन्धेनैव पूर्वोत्तरत्वरूपक्रमप्रतीतेरनुभवात् । न च तादृशानुभवो भ्रम एव । साक्षात्सम्बन्धेन कर्दमगतकार्ष्ण्यादेर्भाने तत्प्रतीतेर्भ्रमत्ववदिति वाच्यम् । तत्र भ्रमजनकस्य कर्दमवस्त्रयोः स्फुटभेदाग्रहस्येवात्र तादृशदोषाभावात् । न हि वर्णतद्बुद्ध्योर-भेदग्रहस्य भेदाग्रहस्य वाऽऽनुभाविकत्वम् । अत एव कृष्णं वस्त्रमिति व्यवहारवदत्रापि परम्परा-सम्बन्धेन भानेऽपि क्रमिका वर्णा इति व्यवहार इति निरस्तम् । तत्र तादृशव्यवहारबीजस्य स्फुटभेदा-ग्रहादेः सत्त्वेऽप्यत्र तदभावात् । स्फुटभेदाग्रहादेस्तादृशव्यवहारप्रयोजकत्वस्य गौरोऽहमित्यादि-व्यवहारप्रयोजकत्वस्याचार्यैरेवोप पादितत्वेन क्लृप्तत्वात् । किञ्च बुद्धिक्रमस्यैव परम्परया वर्णेषु भाने कस्यचित्पुंसः किञ्चिद्वाक्योच्चारणकाले एकवर्णज्ञानार्थमुत्पादितेन ध्वनिना दैवाद्वर्णान्तरज्ञाने सति तद्वर्णोत्तरत्वस्य तद्वर्णेऽसत्त्वेन तद्वर्णे तदुत्तरत्वं नास्त्येव । असदेवोत्तरत्वं प्रमितमिति बाधानुभवो न स्यात् । न च तत्सजातीयबुद्धौ तदुत्तरत्वाभावेन तद्वाक्यावगाहिबुद्धिक्रमसजातीयत्वाभाव एतद्बुद्धिक्रमे

प्रतीयत इति वाच्यम्। अनुभवविरोधात्। अस्मिन्वाक्ये तद्वर्णोत्तरत्वमेतद्वर्णे नास्त्येवेति प्रत्ययस्यानुभाविकत्वात्। एतद्बुद्धिस्तद्बुद्धिसजातीया नेत्येव प्रत्ययापत्तेः। किञ्चैकैकवर्णानुभवजन्यसंस्कारसचिवेन मनसा सर्वेषां वर्णानामेकदैव ज्ञानोत्पत्तेः। तत्र प्रतीयमानस्य क्रमस्य बुद्धिनिष्ठत्वानुपपत्तेस्तत्प्रतीतेर्भ्रमत्वापत्तिश्च। वाक्यरचयितृबुद्धावेकैकस्यैव वर्णस्य भानमिति नियमाभावात्। यादृशवर्णज्ञानोत्तरं वर्णद्वयावगाह्येकमेव ज्ञानं जातं तत्तद्बुद्ध्युपाधिकस्य तद्वर्णोत्तरत्वस्य क्रमस्य वर्णद्वये तुल्यतया वृत्तित्वापत्तिः। तज्ज्ञानविषयीभूतवर्णयोः क्रमिकत्वानुपपत्तिश्च। न चैकपदस्यैकज्ञानविषयत्वसम्भवेऽपि पदघटकवर्णानां तद्बुद्ध्यनुपाधिकत्वेन पूर्वपूर्वतनबुद्धिक्रमेणैव क्रमोपपत्तिरिति वाच्यम्। वर्तमानतया प्रतीयमानस्य पूर्वतनबुद्धिनिष्ठत्वासम्भवाद्बुद्धिनाशेन तत्क्रमस्यापि नाशात्। क्रमे वर्तमानत्वं नैव प्रतीयत इत्याग्रहेऽप्येकैकवर्णात्मकानां पदानां द्विचतुर्णामेकबुद्ध्युपारूढत्वसम्भवेन तत्र तत्तद्वर्णविषयकबुद्धिक्रमाभावेन तत्र क्रमप्रतीत्यनुपपत्तिः। न च वाक्यरचनाकाले एकवर्ण एकबुद्धौ प्रतीयते न त्वपर इति वाच्यम्। प्रमाणाभावात्। संस्कारपाटवात्पदद्वयावगाहिबुद्धेरपि सम्भवात्। एतेनैतदपि निरस्तम्। दैशिककालिकक्रमविलक्षणः क्रमः क्रमिकबुद्ध्या वर्णेष्वेवोत्पद्यते। यथा दैशिकात्कालिकः क्रमः कालिकाद्दैशिकः क्रमः परस्परविजातीयोऽङ्गीक्रियते। प्रकृतेऽप्यनुभवबलात्तद्विलक्षणक्रमाङ्गीकारसम्भवादिति। उक्तस्थले गतेः। न चोक्तस्थले एकयैव बुद्ध्या विषयीकृतेषु वर्णेषु क्रमो जन्यत इति वाच्यम्। पूर्वक्रमाभावे तद्बुद्धौ भानानुपपत्तेः। प्रथमक्षणे तद्बुद्धेरसदर्थावगाहित्वे भ्रमत्वापत्तेश्च। बुद्धिक्षण एव क्रमोत्पत्त्यङ्गीकारे बुद्धिजन्यत्वानुपपत्तेः। किञ्चैकस्मिन्वाक्ये एकस्यैव वर्णस्य क्रमः प्रतीयते। न च वर्णेषु क्रमोत्पत्तिपक्षे तद्युज्यते। स्वस्यैव स्वनिरूपितपूर्वोत्तरयोर्विरोधेनानुपपत्तेः। न च प्रामाणिकत्वेन विशेषबलेन परिहारो युज्यते। वर्णानामुत्पत्त्यङ्गीकारेणापि क्रमोत्पत्त्या स्वस्यैव स्वपूर्वोत्तरत्वयोरप्रामाणिकत्वात्। अन्यथा सर्वत्राप्येवं वक्तुं शक्यत्वेन विरोधमात्रोच्छेदापत्तेः। किञ्चास्मिन्वाक्ये द्वौ ककाराविति द्वित्वं प्रतीयते। न चैकस्मिन्द्वित्वं युज्यते। भेदव्याप्तत्वाद्वर्णैकत्वस्याद्याप्यसिद्धत्वात्। अनेन बुद्धिक्रमपक्षो निरस्तः। क्रमस्य कथञ्चित्परम्परया वर्णेषु भानाङ्गीकारेऽपि द्वित्वस्य साक्षाद्वर्णनिष्ठतया प्रतीत्या तदनुपपत्तेः सत्त्वात्। न द्वितीयः। अपसिद्धान्तात्। न तृतीयः। उत्पत्तिज्ञप्त्यतिरिक्ताया व्यक्तेरप्रामाणिकत्वात्तदपेक्षया वर्णोत्पत्त्यङ्गीकारस्यैव लाघवात्। ध्वन्यतिरिक्तानां वर्णानां तेषु तारत्वमन्द्रत्वादीनां च ध्वनिविशेषव्यङ्ग्यत्वादीनां चाकल्पनादिति चेत्। अत्रोच्यते। वर्णानां नित्यत्वेऽपि विशिष्टस्योत्पत्त्यङ्गीकारपक्षे तत्तत्क्षणविशिष्टानां वर्णानां प्रतिक्षणमुत्पत्तेः क्रमः कालिक एव तादृशविशिष्टवर्णेषु सम्भवति। विशिष्टयोर्भिन्नत्वेन पूर्वक्षणसम्बन्धविशिष्टो यः ककारस्तदुत्तरत्वस्योत्तरक्षणसम्बन्धविशिष्टे

ककारे तत्पूर्वस्य पूर्वक्षणविशिष्टे ककारे सत्त्वेन न स्वस्यैव स्वपूर्ववृत्तित्वादिविरोधः । विशिष्टयोर्भिन्नत्वेन तत्र द्वित्वस्यापि सम्भवेन न द्वित्वप्रत्ययानुपपत्तिः । क्रमस्योक्तरीत्या विशिष्टगतस्य प्रामाणिकत्वेनैकबुद्धेस्तादृश क्रमविशिष्टवर्णद्वया वगाहित्वोपपत्तिः । विशिष्टशुद्धयोरैक्येन विशिष्टगतपूर्वोत्तरत्वादीनां वर्णनिष्ठतया प्रतीतिः । न च क्रमावगाहिबुद्धौ विशिष्टस्य भानमेव नास्तीति वाच्यम् । कालानवगाहिबुद्धेरप्रामाणिकत्वेन तत्तत्क्षणविशिष्टानां वर्णानामेव प्रतीतेः । न चैतादृशस्य क्रमस्य स्वत एव निरन्तरमुत्पत्तेः पुरुषकर्तृकत्वानुपपत्तिरिति वाच्यम् । ज्ञायमानक्रमस्यैवार्थबोधकत्वेन ज्ञाने पुरुषकर्तृकत्वसत्त्वेन तद्विशिष्टक्रमेऽपि पुरुषकर्तृकत्वोपपत्तेः । न च तर्हि सर्वेषां तत्कर्तृकत्वापत्तिरिति वाच्यम् । स्वसजातीयक्रमप्रत्यक्षानुकूलव्यापारध्वंसाधिकरणक्षणावृत्तितादृशव्यापारकर्तृत्वस्यैव तत्कर्तृकत्वपदार्थत्वात् । अस्मिन्पक्षे तादृशव्यापाराविषयत्वमपौरुषेयत्वमिति बोध्यम् । यद्वाऽनुभवबलादैशिकक्रमापेक्षया विलक्षण एव कालिकः क्रमः कालिकक्रमापेक्षया विलक्षणो दैशिकः क्रमः । तथा बौद्धोऽप्यन्यो दैशिकक्रमकालिकक्रमविलक्षणः क्रमो वर्णेषूत्पद्यत इत्यङ्गीक्रियते । स च बुद्धिजन्यः । स च यद्बुद्धिजन्यः क्रमः स च तत्कर्तृक इत्युच्यते । न च स्वस्यैव स्वपूर्वोत्तरत्वद्वित्वादीनामनुपपत्तिः । विशेषबलादनुभवादेव तत्सिद्धेः । क्रमविशिष्टेषु द्वित्वादीनामपि सम्भवाच्च । न चैकस्मिन्नेव द्वित्वबहुत्वयोरङ्गीकारे एकस्मिन्नेव घटे द्वौ घटाविति प्रत्ययापत्तिः । तत्रापि तत्तत्क्षणविशिष्टघटेषु द्वित्वादिप्रतीत्यसम्भवात् । विद्यमानस्य सर्वस्य प्रतीतिनियमाभावेन तादृशप्रतीतिनिर्वाहकसामग्र्या अकल्पनात् । यत्र प्रतीतिः प्रामाणिकी तत्र सामग्री कल्प्यते । न च विशिष्टस्यातिरिक्तत्वमेव त्यज्यतामिति वाच्यम् । तस्यान्यत्र निपुणतरमुपपादितत्वात् । न च वर्णानामुत्पत्त्यङ्गीकारेण क्रमाद्युपपत्तिः किं न क्रियते विलक्षणक्रमाङ्गीकारे गौरवापत्तेरिति वाच्यम् । वर्णनित्यत्वस्य प्रत्यभिज्ञादिप्रमाणैरन्यत्राचार्यैरेवोपपादितत्वात् । उत्पत्त्यङ्गीकारेऽपि मौनिकृतश्लोकस्य तत्कृतत्वानुपपत्तेश्च । न च मौनिना वर्णा उत्पद्यन्ते किन्तु तत्कृतरेखादिद्रष्ट्रा । तथा च प्राथमिकतादृशक्रमवद्वर्णोच्चारयितर्येव तच्छ्लोककर्तृत्वापत्तेः । मन्मते च मौनिबुद्ध्यैव क्रमस्योत्पन्नत्वेन तस्य तत्कर्तृत्वम् । अन्यस्य तु क्रमज्ञानाधीनत्वेन न तत्कर्तृत्वमित्युपपत्तेः । न च क्रमस्य बुद्ध्योत्पन्नत्वे प्रथमतो वर्णप्रत्यक्षकाल एव क्रमप्रतीतिर्न स्यादिति वाच्यम् । प्रथमवर्णप्रतीतिकाले इष्टापत्तेः । द्वितीयवर्णस्य प्रथमवर्णप्रतीतिजन्यक्रमविशिष्टत्वेन तद्विशिष्टप्रतीतेरनुपपत्त्यभावात् । न चैकवर्णाभिव्यञ्जकत्वेनाभिमतध्वनिना दैवादपरवर्णस्य व्यक्तौ तस्मिन्नपि तदुत्तरत्वसम्भवेन तद्वाक्याघटकवर्णेऽपि तदुत्तरत्वप्रसङ्ग इति चेत् । इष्टापत्तेः । नायं वर्णस्तद्वाक्यघटक इति बाधानुपपत्तिरिति वाच्यम् । क्रमविशेषविशिष्टवर्णसमुदायघटकत्वाभावेनोपपत्तेः । नायं वर्णस्तद्वर्णोत्तरोऽसदेवोत्तरत्वं प्रतीतमिति

तद्वर्णोत्तरत्वेऽसत्त्वावगाहिबाधानुपपत्तिरिति वाच्यम्। तादृशबाधस्यैवाभावात्। तद्वाक्येऽविद्यमानत्वेन प्रतीयते तच्चास्त्येव। मच्छ्रुतानुपूर्व्या तदुत्तरत्वमस्त्येव किन्तु तदभिप्रेतवाक्येषूत्तरत्वं नास्त्येव प्रतीयते तच्चास्त्येव। अनुभवात्। न चैकस्यामेव बुद्धावेकैकवर्णात्मकपदचतुष्टयस्यैकदैव संस्कारवशाज्ज्ञाने तत्र क्रमस्य तद्बुद्ध्याऽनुत्पत्त्या तेषु पदेषु क्रमभानानुपपत्तेरिति वाच्यम्। तत्र क्रमस्य तत्पूर्वतन-बुद्ध्योत्पन्नस्य भानाङ्गीकारात्। अन्यथा क्रमभासकसंस्कारानुपपत्तेः। तद्बुद्धौ क्रमस्याभाने एकदैव भाने क्रमप्रत्यक्षजनकव्यापार एव नोत्पद्यते। अन्यथा वर्णानामुत्पत्त्यङ्गीकार पक्षेऽप्येकदा चतुर्णा-मुत्पत्तिस्थले तवाप्यगतेः। नैकक्षणे उत्पद्यन्ते किन्तु क्रमादेवेति चेत्। नैकक्षणे ज्ञायन्ते किन्तु क्रमादेवेति समम्। न चैवं समूहालम्बनरूपैकबुद्ध्युपारूढानां वर्णानां शाब्दंबोधजनकत्वेन तत्र तद्बुद्ध्युत्पत्तिक्षणे पूर्वपूर्वबुद्धिनाशेन तदुपाधिक्रमस्यापि नाशेन कथं तत्र क्रमभानमिति वाच्यम्। संस्कारवशादतीतक्रमस्य भानोपपत्तेः। अन्यथा भवत्पक्षेऽप्यगतेः। एवमन्येऽपि क्षुद्रोपद्रवाः परिहरणीया इत्यलम्। अयं पक्षो यादवार्यैः सुधाटिप्पण्यां निपुणतरमुपपादितः। केचित्तु बुद्धिनिष्ठ एव क्रमः। तद्विषयताविशिष्टेषु प्रतीयते न त्वतिरिक्तः कल्पनीयो गौरवादिति वदन्ति। तत्पक्षे तत्तद्वर्णावगाहिपूर्वपूर्वबुद्ध्यनवगाहिक्रमविशिष्टावगाहि बुद्धिर्नास्त्येवेति वक्तव्यमित्यलं पल्लवितेन। नन्वेतादृशापौरुषेयत्वे किं मानमिति चेत्। लाघवमेवेति ब्रूमः। तथा हि। किमीश्वरश्चतुर्मुखाय यं वेदमुपदिदेश किमेतमेवैतत्पूर्वकल्प उपदिष्टवानन्यं वा। आद्ये एवमेव पूर्वकल्पे एतदानुपूर्वी-विशिष्टोपदेश इत्यागतमपौरुषेयत्वेन। द्वितीयपक्षेऽपि पूर्वकल्पीयो वेदः किमीश्वरबुद्धिस्थो न वा। नेति पक्षेऽज्ञानादिदोषप्रसक्तिः। आद्ये तद्विहायानुपूर्व्यन्तरनिर्माणे कारणाभावः। अन्यथैकस्मिन्नपि कल्पे दिनप्रलयादिभेदेन वेदान्तरनिर्माणप्रसङ्गः। न च भारतादावप्येवं प्रसङ्गः। पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु। क्रियन्तेऽतस्त्वनित्यानीत्यादि वाक्यादानुपूर्व्यन्तरनिर्माणस्य प्रमितत्वात्। लाघवात्प्रमितकर्तृत्वादित्युक्तेः सत्त्वाद्गौरवस्यापि पक्षे बाधकत्वस्य सत्त्वाच्च। न च भारतादौ प्रतिसर्गमुत्पत्तेः प्रमितत्वेऽपि तत्करणे किं निमित्तमिति चेत्। ईश्वरप्रवृत्तेः सर्वत्र स्वप्रयोजन-शून्यत्वात्प्रामाण्यनिश्चयायैकानुपूर्वीविशिष्टं वेदमुपदिशति। अन्यथा पूर्वोक्तिप्रकारेणाप्तिनिश्चयोपाया-भावेन प्रामाण्यनिश्चयायोगादिति प्रयोजनसत्त्वाच्च। न च सृष्ट्यादिकाले उत्पन्नस्य चतुर्मुखस्य स्वपितर्याश्वासोपपत्तिः। लोके तथा दृष्टत्वात्। तथा तत्सृष्टानामित्युपदेशपरम्परया महाजनपरि-गृहीतत्वलिङ्गेन प्रामाण्यनिश्चयोपपत्तिरिति वाच्यम्। केषाञ्चिदुक्तरीत्या सम्भवेऽपि विचारदशायां केषुचित्पुरुषेषूक्तपरम्परावत्त्वाद्विप्रलम्भकल्पनायां प्रमाणाभावेन प्रामाण्यनिश्चयानुपपत्तेः। बुद्धादे-रीश्वरावतारस्य स्वमातापितृवञ्चकस्य दृष्टत्वेन स्वपितृत्वेऽपि विचारशीलस्य चतुर्मुखस्याश्वासानु-

पपत्तेः । लोके बहुतरं पित्रादावनाश्वासस्यापि दृष्टेः । न चार्षौरुषेयत्वनिश्चयोऽपि कथमिति चेत् । पूर्वकल्पेऽधीता एव वेदा उपदेशाद्युद्बोधकेन स्मर्यन्त इत्यङ्गीकारात् । न च तत्र मानाभावः ।

**जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः ।**
**मुनीनां प्रतिभास्यन्ति भागेनैव न सर्वश ॥**

इत्यागमानां सत्त्वात् । अन्येषां तूक्तरीत्याऽप्रमितकर्तृत्वादिना निर्णयोपपत्तेः । न च गूढकर्तृकेऽप्युक्तापौरुषेयत्वप्रसङ्गः । अध्येतृसामान्यनिष्ठपूर्वतनत्वप्रकारकज्ञान विषयत्वरूपाप्रमितकर्तृत्वस्य वा प्रत्यक्षाद्यमूलत्वरूपाप्रमितकर्तृकस्य वा हेतुत्वेन विवक्षितत्वेन गूढकर्तृके तदभावेन व्यभिचाराभावात् । न च हेतोरज्ञानासिद्धिः । ऋष्यादिदृष्टवेदेषु तस्य हेतोर्ज्ञातुमशक्यत्वादिति वाच्यम् । तदृषिवाक्येन तत्रापि ज्ञातुं शक्यत्वात् । विंशल्लक्षण इति वाक्येन तत्रापि निश्चयसम्भवात् । वेदप्रामाण्यसन्देहदशायां तदनुसारिपुराणवचनेष्वपि प्रामाण्यसन्देहात्कथमयं निश्चय इति वाच्यम् । ऋष्याद्यदृष्टवेदेषु पुरातनत्वप्रसिद्ध्या प्रमितिकर्त्रङ्गीकारे कल्पने कल्पनागौरवेण यद्वाक्यं तत्सकर्तृकमेवेति नियमग्राहकमानाभावेनापौरुषेयवाक्यानङ्गीकारे धर्माधर्माद्यसिद्धिभयेन चावश्यमेवापौरुषेयवाक्यकल्पनाया आवश्यकत्वेन लोकेऽपौरुषेयत्वेन प्रसिद्धवाक्यं परित्यज्य वाक्यान्तरकल्पनाया अन्याय्यत्वेन लोकप्रसिद्धवेदस्यापौरुषेयत्वस्य प्रामाण्यस्य च सिद्ध्या तदनुसारिषु पुराणादिषु प्रामाण्यनिश्चयसम्भवेन तेन वाक्यविशेषे हेतुज्ञानसिद्धेः सम्भवात् ।

यस्य पुरुषस्य हेतुनिश्चयो नास्ति तद्वाक्यविशेषे वेदत्वसंशयः स्यात्तथाऽपि न दोषः । निश्चितवाक्यान्तरैर्धर्माधर्मसिद्धिसम्भवात् । तथा च प्रयोगः । वेदोऽनादिक्रमविशिष्टः क्रमस्य सादित्वे बाधकवत्त्वात् । यो यद्धर्मवत्त्वे बाधकसहितः स तद्धर्मवान्न भवति यथा सम्प्रतिपन्नः । बाधकानि कल्पनागौरवादीनि । अथवा वेदस्य यदि सादित्वं स्यात्तर्हि प्रमात्वेन निश्चितो न स्यात् । वेदकर्तर्याप्तत्वनिश्चयायोगाद्दोषशङ्कानिरासकस्याभावादिति दूषणानुमानं वा । न चेष्टापत्तिः । तार्किकैर्वेदप्रामाण्यस्याङ्गीकृतत्वेनेष्टापत्तेः कर्तुमशक्यत्वात् । वेदक्रमोऽनादिर्बाधकशून्यत्वे सति लघुभूतकल्पनाविषयत्वात्सम्प्रतिपन्नवत् । वेदोऽनादिरप्रमितकर्तृकत्वाद्व्यतिरेकेण पौरुषेयवाक्यवत् । यस्त्वप्रमितयद्धर्मकः स तच्छून्यो यथा सम्प्रतिपन्न इति सामान्यव्याप्तिर्वा । वेदक्रमोऽनादिरध्येतृसामान्यनिष्ठपूर्वतनत्वप्रतीतिविषयत्वात्प्रत्यक्षाद्यमूलकत्वाद्वा । न चासिद्धिः । ईश्वरोक्तत्ववादिनामीश्वरातिरिक्ताध्येतृसामान्यनिष्ठोक्तप्रतिपत्तिविषयत्वं तावत्सिद्धमेव । ईश्वरज्ञानस्य नित्यत्वेनैकत्वेनानादिकाले क्रमावगाहित्वेन क्रमस्य च प्रवाहत उक्तरीत्याऽनादित्वेन पूर्वतनत्वप्रकारकप्रतीतेः सम्भवात् । ईश्वर-

ज्ञानस्येन्द्रियाजन्यत्वेन प्रत्यक्षाद्यन्यत्वेन तन्मूलकत्वासम्भवाच्च । अथवेश्वरातिरिक्ताध्येतृसामान्य-निष्ठतादृशप्रतीतिविषयत्वमेव हेतुः । सृष्टेरिदं प्राथम्याभावेनानादिकालीनैः पुरुषैः पूर्वतनत्वेन ज्ञायमानत्वमनादित्वं विना न निर्वहतीत्यनादित्वसिद्धिः । नन्वेतावताऽपौरुषेयत्वनिश्चयेऽपि कथम-पौरुषेयत्वनिश्चयेन प्रामाण्यनिश्चयः । क्रमस्यानादित्वेऽपि तदुच्चारयितॄणामीश्वरादीनां तात्पर्यानु-सारेणैवार्थबोधकत्वात् । तेषु चाप्तत्वनिश्चयोपायाभाव एव । यदि तात्पर्यज्ञानमनपेक्ष्यैव बोधं जनयति तात्पर्यनिश्चायकशास्त्रवैय्यर्थ्यम् । एकानुपूर्व्या एव पदच्छेदादिना नानाविधार्थबोधकत्वेन सर्वार्थेष्वपि प्रामाण्यप्रसङ्गः । तथा च वस्तुनि द्वैविध्यापत्तिरिति चेन्न । क्रमस्यापौरुषेयत्वे पुरुषदोषा-प्रयोज्यज्ञानजननानुकूलशक्तिमत्त्वज्ञानेन प्रामाण्यस्योत्पत्तौ स्वतस्त्वेन प्रामाण्यसिद्धेः । न च क्रमस्यानादित्वेऽपि वक्तुरिच्छारूपतात्पर्यानुसारेण बोधजनकत्वाद्वक्तृदोषमूलकत्वशङ्काऽवर्जनीयैव । ईश्वरोक्तत्वपक्षे ईश्वरज्ञानेच्छयोर्नित्यत्वेन तत्प्रयोज्यत्वसत्त्वेऽपि निर्दोषत्वज्ञानं सम्भवति । ईश्वरेच्छाया नित्यज्ञानप्रयोज्याया निर्दुष्टत्वेन तस्या विप्रलम्भादिमूलत्वासम्भवात् । विप्रलम्भस्यागन्तुकेच्छा-प्रयोज्यत्वेनेश्वरस्य पूर्णत्वेन तदिच्छायां तदसम्भवादिति वाच्यम् । ईश्वरसिद्ध्युत्तरकालीनत्वादस्याः कल्पनायास्तस्या एवाभावादप्रत्यक्षत्वादीश्वरस्यानुमानेन तत्सिद्ध्यभावस्याकरेषूपपादितत्वादागमस्य च प्रामाण्य एव सन्देहात् । न च तर्हीश्वररूपाश्रयासिद्ध्या तत्रानाप्तत्वशङ्काऽपि कथमिति वाच्यम् । न वयमीश्वरत्वावच्छिन्नेऽनाप्तत्वशङ्केति ब्रूमः । येनायं दोषः स्यात् । किन्तु तादृशानुपूर्व्याः प्रथम-मुच्चारयितरि वाक्येषु प्रथमोच्चारयितृपुरुषदोषमूलकत्वस्य बहुतरमुपलम्भात् । उच्चारणस्यान्यदीय-बोधेच्छाप्रयोज्यत्वेन प्रथमोच्चारयिता स्वेच्छाविषयी बोधोत्पत्तये तत्साधनीभूतं वाक्यविशेषं तादृश-बोधौपयिकाकाङ्क्षादिशालिना मनसाऽनुसन्धाय प्रयुङ्क्ते इति तदिच्छाविषयीभूते ज्ञाने तदीयाज्ञानादि-मूलत्वशङ्काप्रयुक्ताप्रामाण्यशङ्कया तत्करणत्वरूपाऽप्रमाशङ्का भवति । द्वितीयप्रयोक्ता तच्छ्रवणमात्रेण तादृशक्रममुच्चारयतीति न तद्दोषमूलत्वशङ्का लोकानां भवतीति क्रमोच्चारणस्य प्रवाहतोऽनादित्वं स्वीक्रियते नेश्वरानुक्तत्वमङ्गीक्रियत इति नापसिद्धान्तरूपदोषः । तर्ह्यनादित्वाङ्गीकारेऽपि पुरुषेच्छानु-सारेण बोधजनकत्वात्कथमुक्तशङ्कानिवृत्तिरिति चेत् । पुरुषेच्छाया ज्ञानकारणत्वस्यैवाभावात् । आकाङ्क्षावशादेव ज्ञायमानायाः शब्दबुद्धिं प्रति कारणत्वम् । अन्यथा मूर्खेण बोधविशेषेच्छया वर्णमालाप्रयोगे कृते तदा बोधोत्पत्तिः स्यात् । अनिच्छया दैवाद्वाक्ये प्रयुक्ते बोधो न स्यात् । इच्छा तु स्वविषयीभूतबोधप्रयोजकाकाङ्क्षादिसम्पादनया वाक्यप्रयोग एवोपयुज्यत इति क्रमविशेष एव शाब्दबोधजननानुकूला शक्तिः स्वीक्रियते । स्वाभाविकी सैव तात्पर्यपदेनोच्यते । तत्प्रयोज्यबोधस्यैव प्रामाण्यं नाहिततादृशशक्तिप्रयोज्यबोधस्य तन्नियम इति न वस्तुनि द्वैविध्यापत्तिः । उपक्रमाद्यनु-

गुणाकाङ्क्षादिप्रयोज्या शक्तिः स्वाभाविकी तदननुगुणा त्वस्वाभाविक्याहितेत्युच्यते । स्वाभाविकी शक्तिर्दोषप्रयोज्या । न चेत्तत्र प्रामाण्यं नियतमेव । इत्थं च तात्पर्यज्ञानस्य कारणत्वाङ्गीकारेऽपि दोषाभावः । तथा हि । यथा घटादिपदानां घटरूपार्थबोधने सहजा शक्तिस्तथा वेदेऽप्यर्थविशेष-बोधजननानुकूला शक्तिः स्वाभाविकी । पदानामनादित्वेनानादिकाले तदर्थविशेषबोधजननानुकूलशक्तेः स्वाभाविकत्वात् । अनादिक्रमनिष्ठाया उपक्रमाद्यनुकूलाया अनादिकाले एकजातीयबोधानुकूलायाः शक्तेः स्वाभाविकत्वस्यैवोचितत्वात् । नन्वद्वैतबोधादीनामपि वेदतात्पर्यविषयसत्त्वेन तस्या अपि शक्तेरनादित्वेन तज्जन्याद्वैतज्ञानादेरपि प्रामाण्यापत्तिरिति वाच्यम् । तादृश ज्ञानानानुकूलायाः शक्तेरुपक्रमाद्यननुगुणत्वेन दोषमूलत्वेन दोषाभावात् । लोके उपक्रमाद्यननुगुणाया वाक्यनिष्ठ-बोधजनानुकूलशक्तेः स्वतन्त्रवक्त्रन्यसमवेतदोषमूलकत्वस्य प्रायः दृष्टत्वेन स्वाभाविकत्वासम्भवात् । न च तस्याः शक्तेः स्वतन्त्रवक्त्रन्यधर्मप्रयोज्यत्वमात्रसिद्धावपि दोषप्रयोज्यत्वनिश्चयः कथं तादृशानादिकालीनदोषस्याप्यदृष्टेरिति वाच्यम् । उपपत्तेः सर्वापेक्षया प्रबलत्वेन तद्विरुद्धत्वेन ज्ञानस्य बाधितत्वेन तत्करणस्याप्रामाण्यस्य तद्विषये आवश्यकत्वेन तादृशशक्तेर्दोषमूलत्वसिद्धेः सम्भवात् । अनादेस्तादृशदोषस्यायोग्यतादिरूपस्य तेनैव सिद्धेः । बृहद्भाष्यादौ तादृशशक्तौ तात्पर्यप्रयोगस्यानादि शाब्दबोधानुकूलत्वमात्रेण गौणो ज्ञेयः । किञ्चाद्वैतादिविषयकज्ञानस्य वेदेनायोग्यानामनादिकाले जायमानत्वेऽपि नैकजातीयत्वम् । तत्तद्बुद्धिदोषानुसारेण तत्तदुपपादनप्रकाराणां भिन्नभिन्नत्वमेव । अत एवेदानीमपि तदीयग्रन्थेषु नैकप्रकारेणोपपादनमस्ति किन्तु प्राचीननवीनग्रन्थेषूपपादनस्य भिन्न-प्रकारत्वं प्रायोऽस्तीत्यतो दोषमूलत्वम् । एवं सर्वसमयानां प्रवाहतोऽनादित्वेऽपि नैकप्रकारत्वं सर्वकल्पेष्विति दोषमूलत्वं नासम्भावितमिति ध्येयम् । वेदद्रष्टारस्तु पूर्वकल्पेऽधीततादृशक्रमत्वेन तदधीनज्ञानवन्त एव । एतत्कल्पे कालव्यवधानादिदोषेण विस्मृतत्वेऽपि योगविशेषाधीनपरमेश्वर-प्रसादादिना तादृशार्थज्ञानजननानुकूलशक्तिमत्तया तं वाक्यविशेषं स्मारयन्ति ।

इदमेव वेदद्रष्टृत्वं नाम । तथा च स्वाभिप्रेततथाविधबोधाय तं वाक्यं प्रयुञ्जन्ति । यथा घटादि-पदानि घटविशेषरूपार्थबोधाय घटादिपदानां तादृशव्यक्तिसदृशव्यक्तिबोधकत्वमिवानादिक्रमविशिष्ट-वाक्यशक्तेरपि तत्सदृशार्थविषयकत्वात् । वसिष्ठादीनां पूर्वकल्पीयवसिष्ठादिसदृशत्वेनैतत्कल्पीय-वसिष्ठादिघटितवाक्यार्थस्य पूर्वकल्पीयवसिष्ठादि घटितवाक्यार्थतुल्यत्वात्तादृशं बोधं जनयति । तादृश-तात्पर्यनिर्णयायैव शास्त्रस्य प्रवृत्तत्वेन न शास्त्रवैय्यर्थ्यम् । यस्त्वन्योऽर्थः प्रतीयते तादृशार्थ एव पूर्वं प्रतीत इति नियमाभावेन सादृशार्थबोधानुकूला शक्तिर्दोषप्रयोज्येति न तत्र प्रामाण्यापत्तिः । न च बौद्धादिशास्त्रे दोषप्रयोज्यतदभिप्रेतार्थबोधानुकूलशक्तेरेव गमकत्वदर्शनादत्राप्युपक्रमादयो वक्तृ-

समवेतेच्छाविषयत्वमेव बोधविशेषे ज्ञापयेयुः । न तु दोषाप्रयोज्यत्वं स्वाभाविकत्वं वा शक्ताविति कथमुपक्रमादिभिरुक्ततात्पर्यनिर्णय इति वाच्यम् । स्वतन्त्रवक्त्रन्यसमवेतदोषाप्रयोज्यशाब्दबोधानुकूल-शक्तेरेव तात्पर्यपदार्थत्वेनोपक्रमादीनां तज्ज्ञापकत्वाङ्गीकारात् । बौद्धादिशास्त्रे उपक्रमादिभिरुक्ततात्पर्ये ज्ञातेऽपि स्वतन्त्रवक्तृदोषप्रयोज्यत्वेन तन्निष्ठशक्तेरप्रामाण्यं तच्छास्त्रस्य । वेदे च स्वतन्त्रवक्तुरभावेन दोषसामान्याप्रयोज्यत्वं शक्तौ ज्ञायत इति प्रामाण्यसिद्धिः । अत एव वक्यविशेषे तात्पर्ये ज्ञातेऽपि वक्तुराप्तत्वसन्देहात्प्रामाण्यसन्देहः । न चेश्वर एव स्वतन्त्रो वक्ता वेदस्य तस्य सजातीयोच्चारण-मनपेक्ष्योच्चारणकर्तृत्वादिति तदीयविप्रलम्भादिमूलकत्वसन्देहः कथं निवर्ततामिति वाच्यम् । स्वसजातीयक्रमप्रत्यक्षानुकूलव्यापाराधिकरणकालानुत्तरकालवृत्तिस्वप्रत्यक्षानुकूलव्यापारकर्तृत्वस्यैव स्वतन्त्रकर्तृपदार्थत्वात् । तस्येश्वरेऽभावात् । यदा यदेश्वरो वेदमुच्चरति तदा तत्पूर्वमुच्चारणमस्त्येवेति तदनुत्तरत्वं कस्मिन्नप्युच्चारणे नास्तीति स्वतन्त्रकर्तृत्वं नास्त्येवेत्युच्चारणं विहाय व्यापारत्वेन निवेशात् । मौनिकृतश्लोके तत्कृतत्वनिर्वाहस्तत्रापि लेखनादिरूपव्यापारस्य सत्त्वात् । उक्तस्वतन्त्रकर्तुः सत्त्वे तज्जन्यबोधे दोषमूलकत्वादिशङ्का सम्भवति । तत्पूर्वकालेऽप्युच्चारणसत्त्वेन तस्मिन्नेतत्कालीन-विप्रलम्भप्रयोज्यकल्पनायां बीजाभावेन पूर्वकालीनोच्चारणेऽविप्रलम्भमूलकत्वसिद्धौ तत्सजातीयत्वेना-स्यापि तदमूलकत्वसिद्धेः । विप्रलम्भस्यानादित्वकल्पने सर्वेषां विप्रलम्भत्वकल्पने च महागौरवम् । किञ्च सर्वोच्चारणकर्तुरेकत्वसिद्धेरीश्वरसिद्धिं विना योगेन बहूनां पुरुषाणां विप्रलम्भादिदोषकल्पने गौरवमेव । न तूच्चारणेष्वेककर्तृकत्वे लाघवमित्येककर्तृकत्वं सिद्ध्यतीति कल्प्यम् । केषुचिदुच्चारणेषु ब्रह्मादिकर्तृकत्वस्य प्रत्यक्षसिद्धत्वेनैककर्तृकत्वस्य बाधितत्वात्तज्जन्यज्ञानस्य युक्त्यादिप्रमाणा-बाध्यत्वेनाप्रामाण्यनिश्चयाभावेन तदन्यथाऽनुपपत्त्याऽपि दोषमूलकत्वकल्पनायोगात् । ज्ञानानां परस्परं संवादित्वेन प्रमाणत्वाच्च । ईश्वरसिद्धिश्च वेदप्रामाण्यं विना न सम्भवतीति सिद्धे वेदप्रामाण्ये तेनैव विप्रलम्भकत्वादिदोषमूलकत्वाभावः सिध्यतीति नोत्पन्नज्ञानेऽप्रामाण्यशङ्काऽपीति ध्येयम् । न च वक्त्रिच्छैव तात्पर्यपदार्थो नोक्तशक्तिर्ममात्रैवार्थे तात्पर्यमित्यादौ तात्पर्यपदेनेच्छाया एव प्रतीतेरिति वाच्यम् । वाचकत्वं हि तात्पर्यं "यदर्था अखिला रवा" इत्यनुव्याख्याने सुधायां शाब्दबोध-जननानुकूलशक्तेरपि तात्पर्यपदार्थस्योक्तत्वात् । क्वचिदिच्छायास्तात्पर्यपदार्थत्वेऽप्युक्तशक्तेस्तात्पर्य-पदार्थत्वे बाधकाभावात् । यत्तु शाब्दप्रमानुकूला शक्तिस्तात्पर्य उपक्रमादिभिः सैव ज्ञाप्यत इति । तन्न । तथा सति बौद्धाद्यागमेषूपकमादिभिस्तात्पर्यस्य ज्ञायमानत्वेन तदागमस्यापि प्रामाण्यापत्तेः । तत्रोपक्रमादीनां प्रमानुकूलशक्तिसाधकत्वाभावे व्यभिचारित्वेन वेदेऽपि तत्साधकत्वासम्भवः । ननूपक्रमादयो बोधविशेषे वक्त्रिच्छाविषयत्वमेव साधयन्ति नोक्तां शक्तिमिति वाच्यम् । वाक्य-

सम्बन्धिनामुपक्रमादीनां स्वाव्यभिचारीभूतंस्वार्थसम्बद्धचर्थसाधकत्वस्यैवोचितत्वात् । वाक्योच्चारणेनैव तादृशबोधेच्छायाः सिद्धेः । वाक्यस्य परार्थत्वेन तत्प्रयोजकाकाङ्क्षादेरेव ज्ञाप्यत्वाच्च । किञ्च न वक्तृसामान्यसमवेतबोधसामान्येच्छाज्ञापकत्वम् । अतिप्रसङ्गात् । किन्तु स्वतन्त्रवक्तुः ।

तथा च वेदे च स्वतन्त्रवक्ता नास्तीति बाधनिर्णयवतां मीमांसकादीनां पक्षतावच्छेदकविशिष्ट-पक्षज्ञानाभावात्तात्पर्यानुमितिर्न स्यात् । किञ्च तात्पर्यज्ञानस्य शाब्दबोधकारणता न स्यात् । तात्पर्यग्रहदशायामेव फलीभूतबोधसिद्धेः । न च बोधविषयीभूतार्थयोः परस्परं संसर्गस्तात्पर्य-ज्ञानांशेनैव भासते किन्तु तत्तदर्थविषयकत्वेन तत्तदर्थप्रकारकत्वेन तत्तदर्थसंसर्गकत्वेनैव बोधो भासत इति न फलीभूतबोधसिद्धिरिति वाच्यम् । तादृशविशेष्यतानिरूपिततादृशसंसर्गावच्छिन्न प्रकारता-निरूपकत्वादिधर्मभानस्याश्रयीभूतवस्तुभानं विना भानायोगात् । तादृशज्ञाने जात एव तत्प्रत्यक्ष-वेलायां तद्धर्मभूततत्प्रकारकत्वादेर्भाने कालान्तरे तद्धर्मस्मृतावाश्रयाभाने बीजाभावात् । अपूर्वार्थ-विषयकशाब्दानुपपत्तेश्च । पूर्वं तत्समानाकारकज्ञानस्याभावेन तद्धर्मभूततत्तदर्थविशेष्यकत्वादि घटित-धर्मज्ञानाभावेन तेन रूपेण तात्पर्यज्ञानांशे बोधभानासम्भवात् । न च तज्ज्ञानवृत्तिविशिष्ट-विषयताज्ञानाभावेऽपि तत्तदर्थविशेष्यकत्वादीनां ज्ञानान्तरेऽनुभूतानां भानं सम्भवतीति वाच्यम् । तथा सति समूहालम्बनादिव्यावर्त्यभावेन विशिष्टावगाहिबोधनियमा भावप्रसङ्गात् । न चोपदेशादिना तद्धर्मज्ञानं सम्भवतीति वाच्यम् । यस्य नोपदेशादिस्तया पूर्वार्थबोधानुपपत्तेः । मन्मते तु स्वतन्त्र-वक्त्रन्यदोषाप्रयोज्यत्वेन शाब्दत्वरूपसामान्यधर्मेण भानोपपत्तिः । ननु तात्पर्यबोधस्य शाब्दबोध-कारणत्वमेव नास्ति । अत एव वाक्यादर्थद्वयप्रतीतौ तत्प्रामाण्यादिनिश्चयाय तात्पर्यविचारो दृष्ट इति चेत् । सत्यम् । विनाऽपि तात्पर्यज्ञानं वाक्यादर्थद्वयप्रतीतिरिति । तथाऽपि सत्त्वावगाहिबोधे तात्पर्य-ज्ञानं प्रयोजकम् । दोषशङ्कास्थले वाक्यादर्थप्रतीतावपि सत्त्वासत्त्वौदासीन्येन प्रतीयते बाधग्रह-कालीनवाक्यादिव । अत एवोक्ततात्पर्यरूपशक्तिप्रयोज्यत्वे सिद्धे वक्तुरुत्सर्गत आप्तत्वनिश्चये दोषा-प्रयोज्यत्वमेव ज्ञायत इति सत्त्वावगाही शाब्दबोधो जायते । सत्त्वावगाहिबोध एव शाब्दबोधपदेन व्यवह्रियत इति तादृशशाब्दबोधं प्रति तात्पर्यज्ञानस्य कारणत्वम् । अन्यथा योग्यताज्ञानस्यापि कारणत्वाभावप्रसङ्गात् । अयोग्यताज्ञानसत्त्वेऽपि वादिवाक्याच्छाब्दोत्पत्तेर्व्यभिचारात् । न च स शाब्दबोध एव न भवत्याहार्यमानसप्रत्यक्षमेवेति वाच्यम् । तद्वाक्याच्छ्रुतमित्यनुभवविरोधात् । अन्यथा सर्वस्यापि बोधस्य मानसत्वापत्तेः ।

ननु सर्वत्र शाब्दबोधे तात्पर्यज्ञानस्य कारणत्वमिति गतः पक्ष इति चेत् । मन्मते दोषाप्रयोज्या-काङ्क्षादेरेव तात्पर्यपदार्थत्वेनाकाङ्क्षाज्ञानाभावे शाब्दबोधस्यैवानुदयेनाकाङ्क्षारूप तात्पर्यज्ञानस्य सर्वत्र

कारणत्वात्। परन्तूपक्रमादिना दोषाप्रयोज्यत्वेन ज्ञाने सत्त्वावगाहिबोधमपि जनयति। दोषशङ्कास्थले सत्त्वानवगाहिबोधं जनयतीति दोषाभावात्। न चैवं सर्वत्रापि प्रथमं सत्त्वानवगाहिबोधस्ततस्तात्पर्य ज्ञानं ततः सत्त्वावगाहिबोध उत्पद्यत इत्यङ्गीक्रियतामिति वाच्यम्। सर्वत्र बोधद्वयस्यानुभवविरुद्ध-त्वात्। न चोत्सर्गतो वक्तरि दोषज्ञानाभावस्यापि सत्त्वावगाहिबोधे कारणत्वं स्यादिति चेत्। इष्टापत्तेः। तदभावे वाक्यात्संशयस्यैवानुभवसिद्धत्वात्। तस्मादुक्तशक्तिराकाङ्क्षादिज्ञानसाहित्येन शाब्दबोधानुकूला शक्तिर्भिन्नभिन्नैव क्रमविशेषवत्पदसमुदायस्यैव वाक्यत्वेन वाक्याद्बोधो जायत इत्यनु भवेन प्रतीयते। सैव न तु पदनिष्ठा शक्तिर्भिन्नाऽखण्डा। तत्र मानाभावात्। यथा चैतत्तथोपपाद-यिष्यते चोपरिष्टात्। एतेन तात्पर्यगर्भ एव श्रुतिकुमार्याः पुंयोगो मानमित्युदयेनोक्तम्। उक्तस्वतन्त्र कर्तृकत्वाभावेऽप्युक्ततात्पर्यसम्भवाद्वेदाप्रामाण्यवादिनां बौद्धादीनां कथमपौरुषेयत्वसाधनमिति चेत्।

तदनङ्गीकारे धर्माधर्मसिद्धिप्रसङ्गेन तैरप्यङ्गीकारयिष्यमाणत्वात्। तत्प्रकारश्च तत्त्वनिर्णयादौ प्रदर्शितो द्रष्टव्यः। प्रत्यक्षैकप्रमाणत्ववादिनो लोकायतिकस्य कथमिति चेत्। अनुमानादिप्रामाण्या-नङ्गीकारे तन्मूलवाग्व्यवहारादिकर्तुस्तस्य व्याहतभाषित्वेन जात्युत्तररूपनिग्रहस्थानेन निगृहीतत्वात्। तदङ्गीकारे च धर्मानिश्चयस्य कार्यत्वे तत्कारणे सामान्यतः सिद्धे तस्य चोक्तपरिशेषप्रमाणेना-पौरुषेयत्वसिद्धिः। तन्निश्चयस्य दोषमूलकत्वमेव सिद्ध्येदिति चेन्न। विचारपटूनां बहूनां प्रेक्षावतां विना प्रमाणं दोषकल्पने गौरवाद्वेदापौरुषेयत्वकल्पनस्य लघुत्वेन दोषस्य तन्निश्चयकारणत्वासिद्धेश्च वाक्यविशेषस्य सिद्धत्वात्। तस्य कर्तृप्रसिद्ध्यभावेन सकर्तृकत्वे प्रमाणाभावेनानुपलब्धिरूपलिङ्गेन चापौरुषेयत्वस्य सिद्धिसम्भवादिति कृतं विस्तरेण।

**वि.**— अनुमाननिरूपणानन्तं क्रमप्राप्तमागमं प्रमाणलक्षणानुसारेण लक्षयति॥ **निर्दोषः शब्द इति**। अनुमानस्य ये दोषास्तद्रहितः शब्द आगम इत्यन्यथाप्रतीतिवारणाय शब्ददोषकथनपूर्वकं निर्दोषशब्दार्थमाह॥ **निरभिधेयत्वेनेति**। निर्गतमभिधेयं वाच्यं यस्य तन्निरभिधेयं तस्य भावस्तत्त्वं वाच्यरहितत्वमिति यावत्। तथा च शब्दानामवाचकत्वेन वाचकत्वेऽप्यन्योन्यमन्वयाभावेन वा पदार्थान्वयाबोधकत्वमित्यर्थः। विपरीतबोधकत्वं विपरीतस्य विद्यमानार्थस्य बोधकं ज्ञापकं तस्य भावस्तत्त्वमित्यर्थः। ज्ञापकत्वं ज्ञातमात्रज्ञापकत्वमित्यर्थः। अप्रयोजनत्वं प्रयोजनरहितत्वमित्यर्थः। अनभिमतप्रयोजनत्वमनभिलषितप्रयोजनत्वमित्यर्थः। अशक्यसाधनप्रतिपादनं कृत्यसाध्येष्ट-साधनाभिधानमित्यर्थः। लघूपाये सति गुरूपायोपदेशनमनायाससाध्येष्टसाधने सति विद्यमाने बह्वायाससाध्येष्टोपायप्रतिपादनमित्यर्थः। अज्ञानसंशयविप्रलम्भमूलत्वमादिशब्दार्थः। इत्यादयो दोषाः

प्रमाप्रतिबन्धकास्तद्रहित इत्यर्थः । ननु ज्ञातज्ञापकत्वादयो न शब्ददोषास्तत्सद्भावेऽपि शब्देन प्रमोत्पत्तिदर्शनादिति चेन्न । सति ज्ञातज्ञापकत्वादौ शब्देन स्वार्थप्रमित्यनुदयात् । तथा हि । न तावच्छब्दात्प्रतीत एवार्थः । यजमानः प्रस्तर इत्यादिपौरुषेयवाक्यप्रतीतार्थस्य च शब्दार्थतापातात् । मीमांसावैय्यर्थ्याच्च । किन्तु तात्पर्यगोचर एव । अत एव यत्परः शब्दः स एव शब्दार्थ इति प्रेक्षावतां प्रवादः । तत्तात्पर्यगोचरार्थस्त्वज्ञात एव भवति । मानविरोधस्यैव मानान्तरप्राप्तेरपि तत्परना-विरोधित्वात् । अत एवानन्यलभ्यः शब्दार्थ इति विदुषां प्रवादः । यथोक्तं मायावादखण्डनटीकायाम् । अज्ञातो हि विषयो भवति । अन्यथाऽतिप्रसङ्गादिति । उक्तं सुधायाम् । ब्रह्मैव वाक्यार्थ इति चेन्न । तस्य स्वप्रकाशत्वादिति । तथा च ज्ञातज्ञापकशब्दप्रतीतार्थस्य शब्दार्थत्वाभावादज्ञातज्ञापक-शब्दस्याज्ञातविषयान्तराभावे सर्वथा निर्विषयत्वेन स्वार्थप्रमित्यजनकत्वान्न प्रामाण्यम् । गौरश्वः पुरुषो हस्तीत्यादिपदजात वज्ज्ञातज्ञापकवाक्यं दुष्टमप्रमां चेत्यभ्युपेयम् । ननु प्रमाकरत्वाज्ज्ञातज्ञापकं वाक्यं प्रमाणमिति चेन्न । यजमानः प्रस्तर इत्यादिवाक्यस्य प्रमासाधनत्वात्प्रमाणमित्यापातात् । न्यायसाम्यात् । यजमानः प्रस्तर इत्यादिवाक्यं स्वार्थाप्रमित्यसाधनत्वात्प्रमाणमिति चेत् । तहि ज्ञातज्ञापकं वाक्यं स्वार्थप्रमित्यजनकत्वान्न प्रमाणमविशेषात् । तस्माद्यथा यजमानः प्रस्तर इत्यादिवाक्यस्य भ्रमसाधनत्वेऽपि स्वार्थगोचरप्रमासाधनत्वाभावान्न प्रामाण्यम् । तथा ज्ञातज्ञापक-वाक्यस्य प्रमितिसाधनत्वेऽपि स्वार्थप्रमितिसाधनत्वाभावान्न प्रामाण्यमिति । न च ज्ञातज्ञापकशब्दस्य दुष्टत्वे प्रमाणत्वाभावे च स्मृत्यनुवादयोर्नाप्रामाण्यमिति प्रमाणलक्षणवाक्यविरोधः । प्रामाण्य-मनुवादस्य स्मृतेरपि च हीयत इत्यनुव्याख्यानविरोधश्च स्यात् । गृहीतग्राहिणोऽप्यनुवादस्य ताभ्यां प्रामाण्यकथनादिति वाच्यम् । विनाऽर्थस्य चानुवादस्यातथाविधेयनिषेधसंसर्गज्ञापकत्वादग्निर्हिमस्य भेषजमित्यादेश्चानुवादस्यार्थान्तरपरत्वाच्चानुवादस्य प्रामाण्येऽपि स्मृतिवदज्ञातज्ञापकत्वेनाविरोधा-दिति । एवं निष्प्रयोजनत्वमपि शब्ददोषः । तस्मिन्सति शब्देन स्वार्थप्रमित्यनुदयात् । तथा हि । शब्दबोध्योऽर्थो हि शब्दार्थः शब्देन बोधनीयश्चार्थः । साक्षात्परम्परया चादुष्टसाधनरूप एव । न तूदासिनः शब्दस्य परार्थत्वात् । न हि निष्प्रयोजनवाक्यानि परार्थानि सम्भवन्ति । व्याहतेः । अत एवोक्तं सुधायाम् । शास्त्रस्य विषयप्रयोजनाभ्यां भाव्यम् । प्रमात्वात्परार्थत्वाच्चेति । तथा च परार्थेन शब्देन परप्रयोजनरूपज्ञानविषय एव बोधनार्थो न त्वन्यदिति स एव परोपदेशरूपशब्दविषयो भवत्यतो निष्प्रयोजनमसौ काकदन्ता इति वाक्यं निर्विषयतया स्वार्थप्रमित्यजनकत्वादाकाङ्क्षाद्यङ्गरहित वाक्यवद्दुष्टमप्रमाणं भवति । यद्यपि फलवत्त्वं न प्रामाण्यं यार्थार्थ्यं प्रामाण्यमित्यङ्गीकारात् । नापि प्रामाण्यव्यापकम् । तृणादिज्ञाने प्रामाण्यसद्भावेऽपि निष्फलत्वदर्शनात् । तथा च कथं सफलत्वा-

भावः प्रामाण्याभावे तन्त्रम् । तथाऽपि वाक्यप्रामाण्यं सफलत्वनियतमिति निष्प्रयोजनवाक्यम-प्रमाणम्। तदुक्तं सुधायाम् । एतदुक्तं भवति । प्रामाण्यमात्रस्य प्रयोजनवत्त्वेन व्याप्त्यभावेऽपि तद्विशेषस्य वाक्यप्रामाण्यस्यास्त्येव पदानामिष्टसाधन एव । गृहीतसङ्गतिकत्वात् । पदसङ्गति-ग्रहणसव्यपेक्षस्यैव वाक्यस्य बोधकत्वात् । फलस्य विषयविशेषप्रामाण्यनिर्णयहेतुत्वाच्च । अतो व्यापकाभावे व्याप्याभावप्रामाण्याभावात्प्रामाण्याभावोपपादनमुपपन्नमेवेति । एतेन ज्ञातज्ञापकं वाक्यमपि निष्प्रयोजनत्वेनाप्रमाणं चेत्युक्तं वेदितव्यम् । एवमभिमतं प्रयोजनं विरक्तं प्रति वाणिज्योपदेशरूपं वाक्यमपि निष्प्रयोजनवाक्यतुल्यतया दुष्टमप्रमाणं चेति ज्ञातव्यम् । एवमशक्य-साधनमप्रतिपादकं "चोलेषु तृषितं पङ्गुं प्रति सन्ति सुरसति शीतलानि जलानी"ति वाक्यमपि निष्प्रयोजनवाक्यतुल्यत्वात् दुष्टमप्रमाणम् । न हीष्टसाधनमपि तत्कृत्यसाध्यं तस्येष्टसाधनं भवति । अतस्तदपि निष्प्रयोजनवाक्यवन्निर्विषयत्वाद्दुष्टमप्रमाणं चेति बोध्यम् । एवं सति लघूपाये गुरूपाये कस्याप्यपेक्षाभावात्प्रत्युत लघूपाय एव सर्वस्याप्यपेक्षासद्भावात्सति लघूपाये बुद्धिपूर्वकं तं परित्यज्य गुरूपायबोधकं परानभिलषितार्थबोधकत्वान्निष्प्रयोजनवाक्यतुल्यतया भवति दुष्टमप्रमाणम् । किञ्च सति लघूपाये बुद्धिपूर्वकं तं परित्यज्य गुरूपायबोधकं विप्रलम्भकवाक्यतुल्यत्वाद्भवति दुष्टमप्रमां चेति युक्तं ज्ञातज्ञापकत्वादीनां परार्थभूतशब्ददोषत्वमिति । "आगमोऽदुष्टवाक्यं चे"ति ब्रह्मतर्कानुसारेण लक्षणान्तरमाह ॥ **निर्दोषं वाक्यमिति वेति** । ननु निर्दोषः शब्द आगम इत्यत्र शब्दपदं वाक्यपरं न वा । नाद्यः । लक्षणद्वयाभावेन वाशब्दानुपपत्तेः । न द्वितीयः । प्रमाणलक्षणटीकायां निर्दोषः शब्द आगम इति लक्षणवाक्ये मूलस्थशब्दपदस्य शब्दो वाक्यात्मेत्यनेन वाक्यपरत्वकथनवैय्यर्थ्यादिति चेन्न। द्वितीयपक्षाङ्गीकारात् । न च तत्पक्षोक्तदोषप्राप्तिः । तत्रापि निर्दोषशब्दस्यैवागमलक्षणत्व-सम्भवेऽपि भगवत्पादैरानन्दतीर्थमुनिना ब्रह्मतर्कानुसारतः । "मानलक्षणमित्युक्तं सङ्क्षेपाद्ब्रह्मसिद्धय" इत्यनेन स्वग्रन्थस्य ब्रह्मतर्कानुसारित्वकथनात् । ब्रह्मतर्कानुसारित्वज्ञापनाय "निर्दोषः शब्द आगम" इत्यागमलक्षणस्थशब्दपदस्य शब्दो वाक्यात्मेत्यनेन वाक्यपरत्वकथनसम्भवेनावैय्यर्थ्यात् । पद्धतौ त्वावश्यकनिर्दोषत्वविशेषणादेव सकलागमाभासव्यवच्छेदसम्भवात्प्रमाणलक्षणोक्त यथाश्रुतागम-लक्षणवाक्यानुसारेणैकं लक्षणमभिधाय ब्रह्मतर्कानुसारेणापि लक्षणान्तरमुक्तमिति न कश्चित्क्षुद्रोपद्रवः। यद्वा प्रमाणलक्षणोक्तेऽप्यागमलक्षणवाक्ये शब्दपदं यथाश्रुतमेवास्तु । न चैवं सति शब्दो वाक्यात्मेति तट्टीकावचनवैय्यर्थ्यापत्तिः । वाक्यत्वस्य लक्षणशरीराप्रवेशेऽप्यागमरूपी शब्दो वाक्यात्मक एव न त्वेकपदरूप इति वस्तुस्थितिप्रदर्शनार्थम् । तद्वाक्यप्रवृत्त्युपपत्तेर्वैय्यर्थ्याभावात् । अत एव प्रमाणलक्षणटीकायां शब्दो वाक्यात्मेत्युक्तव्यावृत्तिकथनावसरे निर्दोष इत्यागमाभासनिवृत्तिरित्यनेन

निर्दोषत्वविशेषणादेव सकलागमाभासव्यावृत्तिरुक्ता । शब्द इति प्रत्यक्षस्य व्युदास इत्यनेन शब्दत्वरूपविशेषणादेव व्यावृत्तिरभिहिता । अन्यथा वाक्यमिति प्रत्यक्षस्य व्युदास इत्याद्यवक्ष्यत् । न चैवं सति प्रमाणलक्षणोक्तागमलक्षणस्य ब्रह्मतर्कानुसारित्वं न स्यादिति वाच्यम् । वाक्यत्वस्य लक्षणशरीरप्रवेशेऽपि ब्रह्मतर्कोक्तवाक्यात्मैव शब्द आगम इत्यभ्युपगमेन ब्रह्मतर्कानुनारित्वसिद्धेरिति ।

## पदलक्षणम्, वाक्यलक्षणम्

**(२) प्र.प.— विभक्त्यन्ता वर्णाः पदम् । आकाङ्क्षासन्निधियोग्यतावतां पदानां समूहो वाक्यम् । आकाङ्क्षा जिज्ञासा । सा चेतनधर्मः । तद्विषयत्वादर्थाः साकाङ्क्षाः । तत्प्रतिपादकत्वात्पदान्यपि । सन्निधिविलम्बेनोच्चरितत्वं पदधर्म एव । प्रतीतान्वयस्य प्रमाणविरोधाभावो योग्यता पदार्थधर्मः । तद्वाचकत्वात्पदान्यपि योग्यतावन्तीत्युच्यन्ते । तत्र पदत्वेन निरभिधेयत्वस्य, आकाङ्क्षासन्निधिभ्यामन्वयाभावस्य, योग्यतया विपरीतबोधकत्वस्य च निरासे सत्यशेषदोषनिरासार्थं निर्दोषग्रहणम् ।**

**जना.—** अत एव तदुक्तं वाक्यं निरूपयितुं तद्घटकपदलक्षणमाह ।। **विभक्त्यन्ता इति ।** पदानामाकाङ्क्षावत्त्वमुपपादयितुमुपक्रमते ।। **आकाङ्क्षेत्यादिना पदान्यपीत्यन्तेन ।** नन्वाकाङ्क्षायाश्चेतनधर्मत्वेन कथं पदानां साकाङ्क्षत्वमित्याशङ्क्य पदार्थद्वारेति मनसि निधायार्थानां प्रथमं साकाङ्क्षत्वं सम्पादयति ।। **तद्विषयत्वादिति ।** आनयेति प्रयोजकवृद्धेनाभिहिते किं गां घटं वेति तथा गामित्यभिहिते किमानयेत्युच्यत उत पश्येति प्रयोज्यवृद्धस्यानयन गवादिविषयाकाङ्क्षोदयादाकाङ्क्षाविषयत्वेन गवादिपदार्थाः साकाङ्क्षा इत्यर्थः । न ह्याकाङ्क्षाधारत्वेनैव साकाङ्क्षत्वमिति नियम. इति भावः । नन्वस्त्वेवं पदार्थानां साकाङ्क्षत्वं पदानां साकाङ्क्षत्वे किं मानमित्यत आह ।। **तत्प्रतिपादकत्वादिति ।** पदान्यपीत्यनन्तरं साकाङ्क्षाणीति शेषः । सन्निधिवत्त्वं च पदानां साक्षादेव । न त्वाकाङ्क्षावदर्थद्वारेति वक्तुं सन्निधिं निरूपयति ।। **सन्निधिरिति ।। पदधर्म एवेति ।** न त्वाकाङ्क्षावदर्थद्वारा पदधर्म इत्यर्थः ।। **प्रतीतेति ।** तात्पर्यविषयेत्यर्थः । मृदब्रवीदित्यादिवेदवाक्ये मृत्तिकाकर्तृकवचनक्रियान्वयस्य प्रमाणविरुद्धत्वेनायोग्यत्वापत्त्या तत्र वाक्यलक्षणस्याव्याप्तिवारणाय प्रतीतेति पदम् । मृच्छब्दस्य मृदभिमानिदेवतापरत्वेन तस्याश्च वचनकर्तृत्वात्प्रमाणविरोधाभावेन नाव्याप्तिरिति भावः । यत्तु प्रमाणलक्षणटीकायामन्योन्यान्वय योग्यतावदर्थाभिधायकत्वं योग्यत्वमित्युक्तं तत्र निश्चिताप्रामाण्यकादग्निना सिञ्चतीत्यादि वाक्याद्व्यावृत्तयोग्यतानिरूपणपरम् । न तु जलेन सिञ्चतीत्याद्यनाप्तवाक्याद्व्यावृत्तयोग्यता निरूपणपरम् । तद्व्यावृत्तेर्निर्दोषत्वविशेषणेनैव सिद्धेः । अतो न तद्विरोध इति परिहृतं

तर्कताण्डवे । नन्वत्र निर्दोषपदेनैव सकलवाक्याभासव्यावृत्तेर्वाक्यग्रहणं किमर्थम् । न च प्रत्यक्षादि-निरासार्थं तद्ग्रहणमिति वाच्यम् । तस्य पदपदेनाप्युपपत्त्या वाक्यग्रहणवैय्यर्थ्यात् । न च वाक्यपदस्य शब्द एव तात्पर्यमिति वाच्यम् । पूर्वलक्षणाभेदप्रसङ्गात् । ननु शिष्याणां पदवाक्यादिस्वरूपज्ञापनमैव तत्प्रयोजनमिति चेत् । न हीदं लक्षणगतपदस्य प्रयोजनम् । अतिव्याप्तिनिरासस्यैव तत्प्रयोजन-कत्वादित्याशङ्क्य गोबलीवर्दन्यायेन निर्दोषपदस्य सङ्कुचितपरत्वमङ्गीकृत्य वाक्यपदप्रयोजनमाह ॥ **तत्रेति** । निर्दोषत्वे सत्याकाङ्क्षायोग्यतासन्निधिमत्पदानि चागम इति लक्षणशरीरं मनसि निधायाह ॥ **पदत्वेनेत्यादिना** ॥ **अशेषदोषनिरासार्थमिति** । अबोधकत्वविपरीतबोधकत्वातिरिक्तज्ञातज्ञापकत्वादि सकलदोषवद्वाक्याभास निरासार्थमित्यर्थः । तर्कताण्डवे तु अत्र वाक्यग्रहणं शिष्याणां पदवाक्यादि-स्वरूपज्ञापनार्थम् । अत एव प्रमाणलक्षणटीकायां मूलस्थं शब्दपदं वाक्यपरमित्युक्तमिति वाक्यपद-स्वारस्यमात्रमुक्तम् ।

**राघ.**— वाक्यस्वरूपं विवक्षुस्तदुपयुक्तमाह ॥ **विभक्त्यन्ता इति** । वर्णा इति बहुवचनम-तन्त्रम् । तेन अ इति ब्रह्म कश्छन्दसां योगमित्यादावः क इत्यादेः पदत्वसिद्धिः । विभक्त्यन्ता इति व्यधिकरणबहुव्रीहिः । विभक्तिर्नाम सुप्तिङौ । विभक्तिश्च सुप्तिङौ विभक्तिसंज्ञौ भवत इति वैयाकरणोक्तेः । सुप्तिङन्तं पदमिति पाणिन्युक्तेः । तदनुरोधाद्विभक्त्यन्ता इत्युक्तम् । विभक्त्यन्त-त्वस्य वर्णाव्यभिचारेऽपि वर्णा इत्युक्तिः स्पष्टार्थं वा । स्फोटनिरासाय वेति ज्ञेयम् । केचित्तु देवदत्त इत्यादावन्तिमवर्णस्य विभक्त्यन्ततया पूर्वेषां तदभावाद्विभक्त्यन्तवर्णोपेतं पदमित्यर्थलाभाय वर्णा इत्युक्तिरित्याहुः । विभक्त्यन्तं पदमिति बहुवचनमतन्त्रम् । तेन गामानयेत्यादेरपि वाक्यत्वसिद्धिः । यत्पदार्थज्ञाने सति पदान्तरार्थविषयिणी जिज्ञासा भवति तद्वाचकयोः पदयोस्तादृशजिज्ञासाविषयार्थ विषयकत्वं साकाङ्क्षत्वमित्याह ॥ **जिज्ञासेत्यादिना** ॥ **पदान्यपीति** । साकाङ्क्षाणीति योज्यम् । वाक्यशरीरप्रविष्टविशेषणानां कृत्यान्याह ॥ **तत्रेति** । वाक्यलक्षण इत्यर्थः ॥ **पदत्वेनेति** । पदानामिति विशेषणोक्त्येत्यर्थः । सुपूतिङ्रूपविभक्त्यन्तत्वस्य ङ्याप्प्रातिपदिकादिति प्रातिपदिकाधीनत्वात् । प्रातिपदिकसंज्ञायाश्चार्थवदधातुरप्रत्ययः प्रातिपदिकमित्यर्थवत एव विधानात्तेन तन्निरास इति भावः ॥ **अशेषेति** । ज्ञातज्ञापकत्वादिप्रागुक्ताशेषदोषेत्यर्थः ।

**विज.**— अत एव वाक्यपदार्थमाह ॥ **आकाङ्क्षेति** । कथं तदर्थपदयोः साकाङ्क्षत्वमित्यत आह ॥ **तद्विषयत्वादिति** । तत्तद्रूपावच्छिन्नपदप्रयोज्य जिज्ञासाविषयत्वयोग्यज्ञानविषयान्वय प्रतियोगि-त्वाभिमतत्वं परार्थे आकाङ्क्षा । पूर्वोक्तजिज्ञासाविषययोग्यज्ञानजनकावच्छेदकरूपवत्त्वं पदस्येत्यर्थः ।

गामानयेत्यत्र कारकपदत्वावच्छिन्नगोपदप्रयोज्या जिज्ञासा क्रियान्वयज्ञानेच्छा तद्विषयत्वयोग्य-क्रियान्वयज्ञानं तद्विषयः क्रियान्वयः । तत्प्रतियोगित्वाभिमतत्वं क्रियाकारकयोराकाङ्क्षा । तादृश-ज्ञानजनकतावच्छेदकरूपं क्रियापदत्वादिकं पदस्याकाङ्क्षेति स्फुटम् ॥ **सन्निधिरिति** । निष्फलान्वय-बोधविरोधिव्यवधानाभाववद्वक्तृव्यापारविषयत्वमित्यर्थः । व्यापारश्चाभिप्रायोऽप्युच्चारणं वा तद्विषयत्वं वा तत्र तत्रास्त्येव । एवं च गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ व्यवधानेऽप्यन्वयबोधविरोधि-व्यवधानाभावः । ज्योतिष्टोमप्रकरणगतद्वादशाहीनस्येत्यादेर्द्वादशोपसक्तत्व प्रतिपादद्वादशाहविधिना सहासत्तिरस्त्येव व्यवधानेऽपि यस्य निष्फलत्वाभावात् । तेनैव क्रमेण पाठस्य दृष्टार्थतया निष्फलत्वा-भावादिति द्रष्टव्यम् ॥ **प्रतीतान्वयस्येति** । प्रमाणबाधित एकान्वयप्रतियोगिन्यपरान्वयप्रतियोगिसंसर्ग एव योग्यतेत्यर्थः । एवं च निर्दोषपदं निरभिधेयत्वाव्यतिरिक्ताभावपरमित्याह ॥ **तत्र पदत्वेनेति** ।

**वेदे.**— पदघटितत्वेन वाक्यं लक्षयितुं तावत्पदलक्षणमाह ॥ **विभक्तीति** । जातौ चेदं बहुवचनम् । अतो न वर्णद्वयात्मकपदेऽव्याप्तिरिति ध्येयम् । जबगडदेत्यादिवर्णसमूहेऽतिव्याप्तिवारणाय विभक्त्यन्ता इति । विभक्त्यन्ते पर्वतोऽग्निमानित्यादि वाक्येऽतिव्याप्तिवारणाय वर्णा इति । तत्र च वर्णानां पदत्वेन प्रवेशोऽपि न वर्णत्वेन प्रवेशोऽतस्तेन तद्व्यावृत्तिरिति ध्येयम् । आकाङ्क्षापदार्थमाह ॥ **आकाङ्क्षेति** । कथं तर्ह्यर्थे पदे च साकाङ्क्षत्वमित्यत आह ॥ **तद्विषयत्वादित्यादिना** । तद्विषयत्वात्त-द्विषयीभूतज्ञानविषयत्वादित्यर्थः । एवं चार्थानां परस्परज्ञानजन्यजिज्ञासाविषयज्ञान विषयत्वेनैव साकाङ्क्षत्वमित्युक्तं भवति ॥ **तत्प्रतिपादकत्वादिति** । स्वप्रयोज्यजिज्ञासाविषय ज्ञानजनकत्वादित्यर्थः। यत्पदप्रयोज्यजिज्ञासाविषयत्वयोग्यज्ञानाजनकतावच्छेदकत्वरूपवत्त्वं यस्य तेन सह तस्य तद्रूपमेवा-काङ्क्षेति यावत् । भवति हि घटमानयेत्यत्र घटमिति प्रकारकपदप्रयोज्या या जिज्ञासा । तस्या विषयत्वयोग्यं यत्क्रियाज्ञानं तज्जनकं यदानयेति क्रियापदं तन्निष्ठजनकतावच्छेदकं क्रियापदत्वं तत्राकाङ्क्षा । एवं कारकपदेऽपि कारकपदत्वमेवाकाङ्क्षेति द्रष्टव्यम् । इयं च जिज्ञासायोग्यताऽ-जिज्ञासितेऽप्यस्तीति नातिव्याप्तिः । न च तथाऽपि जिज्ञासायोग्यज्ञानजनकत्वं फलोपधानरूपमेवास्तु किं तदवच्छेदकरूपवत्त्वलक्षणयोग्यताविवक्षयेति वाच्यम् । तथात्वेऽन्वयबोधात्प्रागाकाङ्क्षाभावप्रसङ्गात् ॥ **पदान्यपीति** । साकाङ्क्षाणीत्युपचर्यन्त इत्यर्थः । एवमर्थाः साकाङ्क्षा इत्यत्रापि द्रष्टव्यम् । तद्विषय-त्वात्तत्प्रतिपादकत्वादिति च शक्यसम्बन्धप्रदर्शनपरमित्यवधेयम् ॥ **अविलम्बेनेति** । अव्यव-धानेनेत्यर्थः । इदं व्यवधानत उच्चारितेषु गामानयेत्यादिपदेष्वतिव्याप्तिवारणाय । नन्विदमनुपपन्नम् । मौनिश्लोके तत्कृतलिप्यनुमिते उच्चारणाभावेनाव्यापकत्वात् । न चैवमव्यवहितपदलिपिरेवासत्तिरे-वास्त्विति वाच्यम् । लिपेरप्युच्चारणस्थले भावेनासार्वत्रिकत्वात् । किञ्चैवं सत्याप्तेन

व्यवहिततयोच्चारिते कुलकादौ योजनयाऽन्वयबोधो न स्यात्। अथवा व्यवहितत्वेन पदतात्पर्यमासत्तिरिति विवक्षितमिति चेन्न। शुकबालादिवाक्येऽव्याप्तेः। गिरिर्भुक्तमग्निमानयेत्यनासन्नोदाहरणेऽतिव्याप्तेश्च। तत्राप्यव्यवहिततात्पर्यकत्वसम्भवात्। तस्मात्किमेतदिति चेदुच्यते। उच्चरितपदेन पदोपस्थित्यनुकूलवक्तृव्यापारमात्रं विवक्षितम्। अव्यवधानपदेन च निष्फलान्वयबोधविरोधि व्यवधानाभावोऽभिप्रेतः। एवं च वक्तृव्यापारत्वं लिप्युच्चारणेऽपि साधारणमिति न मौनिश्लोकादावतिव्याप्तिः। आप्तोक्तकुलकादौ व्यवहिततयोच्चारणेऽप्यव्यवहिततात्पर्यरूपस्य मौनिश्लोके लिपिरूपस्य शुकादिवाक्ये चोच्चारणरूपस्य वक्तृव्यापारस्य सत्त्वात्। नाप्यसन्नोदाहरणेऽतिव्याप्तिः। तत्र व्यवधानस्य निष्फलत्वात्। कुलकादौ च छन्दःसंरक्षणायालङ्काररसविशेषोदयाय च तत्र व्यवधानस्य वक्त्रा क्रियमाणत्वात्। गिरिर्भुक्तमित्यादौ च तादृशफलदर्शनात्। नापि प्रहरादिव्यवधानेनोच्चारिते गामानयेत्यादिपदसमूहेऽतिव्याप्तिः। तत्र प्रकृतान्वयबोधविरोधिभिः स्वस्वफलैरन्यैर्व्यवधानात्। एवं च निष्फलान्वयबोधविरोध्यव्यवहितवक्तृव्यापार विषयत्वमेव सन्निधिशब्दार्थ इति न कोऽपि दोष इति। ननूक्तेऽर्थे आकाङ्क्षासत्तिलक्षणे प्रमाणलक्षणटीकोदाहृतेऽनाकाङ्क्षितेऽसन्निहिते च विरक्तं प्रति वाणिज्योपदेशे चोलेषु वर्तमानं तृषितं प्रति सन्ति सुरसरिति शीतलानि जलानीत्युपदेशे च क्रमेणातिव्याप्तिरिति चेन्न। अत्र तयोरप्युक्तलक्षणलक्ष्यत्वस्याभिप्रेतत्वात्। न चैवं विरोधः। उक्तोदाहरणयोरगम लक्षणव्यावृत्तत्वस्योभयत्राप्यभिप्रेतत्वात्। इयांस्तु विशेषः। तत्रोक्तोदाहरणद्वये वाक्यस्वरूपान्तर्गताऽऽकाङ्क्षासत्त्योः क्रमेणाभावेन वाक्यतया वाक्यपदेन तद्व्यावृत्तिः सम्पादिता। श्रोतुराकाङ्क्षाभिधायकत्वे सति पूर्वपदसञ्जाताकाङ्क्षापूर्वकत्वमाकाङ्क्षा सन्निहितार्थाभिधायकत्वे सत्यविलम्बेनोच्चारितत्वं च सन्निहितत्वमित्याकाङ्क्षासत्तिलक्षणयोरुक्तत्वात्। अत्र पुनस्तदुदहारणद्वये वाक्यत्वप्रसिद्ध्यविरोधेन वाक्यतामङ्गीकृत्य निर्दोषत्वविशेषणेनैव तद्व्यावृत्तिः कृतेति। अत एव वक्ष्यति। आकाङ्क्षासन्निधिभ्यामन्वयाभावस्येत्यन्वयाभावस्यैव व्यावर्त्यत्वं न तूक्तोदाहरणद्वयस्य। नन्वेवमबोधकत्वविपरीतबोधकत्वानन्वितत्वदोषाणां वाक्यपदार्थासत्त्याकाङ्क्षादिनैव परिहारे निर्दोषत्वविशेषणं व्यर्थमित्याशङ्क्य परिहृति ॥ **तत्रेति** ॥ **पदत्वेनेति**। विभक्त्यन्तस्य निरभिधेयकत्वासम्भवादिति भावः। पद्यतेऽनेनेति व्युत्पत्त्या पदशब्देन साभिधेयत्वस्यैव प्राप्तेरिति वा ॥ **अशेषदोषेति**। तद्व्यतिरिक्तज्ञातज्ञापकत्वाद्यशेषदोष इत्यर्थः।

**आद.**— ॥ **आकाङ्क्षा चेतनधर्म इति** ॥ **तत्प्रतिपादकत्वात्पदान्यपीति**। तथा च तत्पदजन्याकाङ्क्षानिवर्तकत्वतदनिवर्त्याकाङ्क्षोत्थापकत्वान्यतरत्वमाकाङ्क्षेत्यर्थः। ननु नेदमाकाङ्क्षारूपम्। तथा सति नियमेनाकाङ्क्षोत्पत्त्यभावेन यत्राकाङ्क्षा नोत्पन्ना तत्र वाक्यस्य निराकाङ्क्षत्वापातात्। न

चाकाङ्क्षानुदयेऽपि तत्स्वरूपयोग्यत्वमक्षतमेवेति चेन्न । इच्छाविशेषत्वावच्छिन्नं प्रति पदविशेषत्वेन तज्ज्ञानत्वेन वा कारणताया अक्लृप्तत्वेन स्वरूपयोग्यत्वासम्भवात् । न च तत्पदजन्यार्थोपस्थिता-विच्छोत्पत्तेरानुभविकत्वेनोपस्थितिद्वारा पदस्य तज्ज्ञानस्य वा कारणत्वमिति वाच्यम् । उपस्थित्या तस्यान्यथासिद्धत्वात् । अन्यथा कुलालपित्रादेरपि घटकारणत्वापत्तेः । पर्यायवाचकैः पदैरेक-स्यैवार्थस्योपस्थित्याऽऽकाङ्क्षायाश्चोदयेन पदस्य तज्ज्ञानस्य वा कारणताङ्गीकारे पदान्तरजन्योप-स्थितिसाध्यजिज्ञासायां व्यभिचाराच्च । अव्यवहितत्वनिवेशेन व्यभिचारपरिहारगौरवम् । यत्र कार्य-कारणभावः प्रामाणिकस्तत्रैव व्यभिचारपरिहारोपायस्त्वयम् । न च प्रयोजकत्वमास्तामिति वाच्यम् । तत्रापि प्रमाणाभावात् । न च सामान्यधर्मावच्छिन्नज्ञानस्य तद्विशेषजिज्ञासां प्रति हेतुत्वं पदात्सामान्यस्योपस्थितौ विशेषजिज्ञासाया उदयात्सामान्यधर्मावच्छिन्नोपस्थितिजनकानां बहूनामपि पदानां तादृशजिज्ञासाप्रयोजकत्वमङ्गीक्रियत इति वाच्यम् । बहूनामपि प्रयोजकत्वाङ्गीकारेणा-काङ्क्षोपपादने गौरवात् । किञ्चाकाङ्क्षा तु स्वरूपतोऽशाब्दबोधहेतुः । सत्यामप्याकाङ्क्षायां तदज्ञाने शाब्दबोधादृष्टेः । असत्यामाकाङ्क्षायां तज्ज्ञानाच्छाब्दबोधोदयात् । किन्तु तज्ज्ञानत्वेन कारणता वाच्या । तथा चोक्ताकाङ्क्षाया अनुपस्थितावपि शक्तिज्ञानवतां समभिव्याहारज्ञानमात्रेण शाब्दबोध-स्यानुभवसिद्धत्वेनोक्ताकाङ्क्षाज्ञानस्य हेतुत्वं न सम्भवत्येव । न हि सर्वत्रेच्छाद्युत्पत्तिस्तज्ज्ञानं वा प्रामाणिकम् । तस्यैव समभिव्याहारस्याकाङ्क्षात्वात् । तथा च तत्पदोत्तरतत्पदत्वमेवाकाङ्क्षा न जिज्ञासेति चेत् । मैवम् । शाब्दबोधे वाक्यघटकानां पदानां पूर्वत्वोत्तरत्वादिज्ञानस्योपयोगाभावेन तद्घटितवाक्यरूपसमभिव्याहारज्ञानस्य कारणत्वासम्भवात् । एकानुपूर्व्या ज्ञानस्य कारणत्वाङ्गीकारे तद्वाक्यघटकयावत्पदघटिततद्विजातीयानुपूर्वीज्ञानादपि तादृशबोधस्यैवोत्पत्त्या व्यभिचारात् । अव्यवहितत्वनिवेशेन व्यभिचारपरिहारे तु गौरवम् । न च पर्यायवाचकपदान्तरसमुदायादपि तादृश-बोधोत्पत्त्या व्यभिचारेण तादृशोत्पत्तौ तत्तत्पदज्ञानस्यापि कारणत्वाभावप्रसङ्गेन तत्तत्पदज्ञान-व्यवहितोत्तरत्वनिवेशस्य भवन्मतेऽप्यावश्यकतया न गौरवमिति वाच्यम् । एकजातीयपदघटित-नानानुपूर्वीज्ञानस्य पृथक्कारणत्वाकल्पनेन तत्तदानुपूर्व्यवहितत्वनिवेशस्यानावश्यकत्वात् । तत्स्थले तत्तत्पदानां ज्ञानं परस्परान्वयज्ञानसहितं तावत्पदघटितनानानुपूर्वीज्ञानस्थलेऽनुगतमेवेति नाव्यवहितो-त्तरत्वनिवेशः । पदज्ञानस्य कारणतायास्तवाप्यावश्यकत्वेन तत्पदाव्यवहितोत्तरत्वनिवेशस्त्वत्पक्षेऽ-प्यावश्यक एव । न च भवदुक्तजिज्ञासोदयाभावेनोक्ताकाङ्क्षाया असार्वत्रिकत्वमिति वाच्यम् । तादृशजिज्ञासातन्निवृत्त्यन्यतरस्वरूपयोग्योपस्थितिजनकतावच्छेदकरूपावच्छिन्नत्वस्याकाङ्क्षारूपत्वात् । गवदिपदेन च सामान्यतोऽन्वयोपस्थितेर्जायमानत्वात् । सामान्यधर्मावच्छिन्नज्ञानस्य विशेषजिज्ञासा-

स्वरूपयोग्यत्वस्य सर्वसम्मतत्वात् । तादृशं च विभक्तित्वनामत्वादिवैजात्यमेव तत्स्वरूपयोग्यतावच्छेदकरूपत्वस्यैवाकाङ्क्षापदार्थत्वात् । न च विभक्तित्वादिकं न जातिः । सत्त्वादिना वर्णव्याप्यजातिना साङ्कर्यात् । नाप्यखण्डोपाधिः । व्याकरणान्तरकारेणान्यथासङ्केतस्य कर्तुं शक्यत्वात् । कल्पान्तरे राम इत्यानुपूर्व्यां राज्ञ इत्यादाविव षष्ठीविभक्त्यन्तत्वसङ्केतस्यापि कर्तुं शक्यत्वेन ङस इत्यानुपूर्व्याः षष्ठीत्वपञ्चमीत्वादीनां कर्तृसङ्केतानुसारेण सत्त्वेनाव्यवस्थितत्वेनाखण्डोपाधित्वानुपपत्तेः। तथा च सङ्केतत्वमेवेति वाच्यम् । तथा च पाणिन्यादिज्ञानशून्यानां शाब्दानुपपत्तिरिति वाच्यम् । वेदापौरुषेयत्ववादिनामस्माकं विभक्तित्वादीनामनाद्यनन्तकाले एकजातीयत्वेन जातित्वे बाधकाभावात्। साङ्कर्यस्य जातिबाधकत्वे मानाभावात् । अत एव मालात्वादिकं प्रत्यक्षबलाज्जातिरेवाखण्डोपाधित्वं वाऽस्तु तावताऽपि बाधकाभावात् । पाणिन्यादयस्तु गुरुमुखाद्व्याकरणादिकं ज्ञात्वैव कृतवन्तः । येनाक्षरसमाम्नायमधिगम्य महेश्वरात्कृत्स्नं व्याकरणं प्रोक्तमित्युक्तेः । न च व्याकरणस्याप्यनादित्वप्रसङ्गः । इष्टापत्तेः । सर्वसमयानामपि प्रवाहतोऽनादित्वस्याङ्गीकृतत्वात् । आनुपूर्व्या अनादित्वाभावेन वेदाद्वैलक्षण्यस्योपपत्तेः । यद्वा पदानां परस्परान्वितस्वार्थबोधकस्वरूपयोग्यत्वमेवाकाङ्क्षा । तादृशपदानामेवाकाङ्क्षाजनकत्वतन्निवर्तकत्वं सम्भवतीति परस्परं तत्स्वरूपयोग्यत्वं सम्भवति । तज्ज्ञानमेव शाब्दजनकम् । तच्चेदं पदमेतत्पदार्थान्वितस्वार्थबोधकमित्याकारम् । तथा च पदार्थयोरन्वयस्य तत्प्रतियोगिकपदार्थान्तरप्रतियोगिकान्वयत्वेन ज्ञातत्वेऽपि स्वरूपतोऽज्ञातत्वान्न शाब्दबोधवैयर्थ्यापत्तिः । अत एव सामान्यतोऽन्विताभिधानशक्तिमन्त्यपि पदानि पदान्तरसन्निधानादुक्ताकाङ्क्षाज्ञानरूपसहकारिसामर्थ्याद्विशेषतोऽन्वयमपि बोधयन्ति । परन्त्वन्वयनिष्ठा विषयताऽन्वयत्वरूपसामान्यधर्मावच्छिन्ना पदशक्तिप्रयोज्या । अन्वयांशेऽन्वयतावच्छेदकविशेषसंयोगित्वादिविषयताऽऽकाङ्क्षा ज्ञानप्रयोज्या । न च पदानामेव विशेषान्वयाभिधाने आहितशक्तिमत्त्वोक्तिविरोधः । आकाङ्क्षाज्ञानस्य पदैर्जायमाने बोधे सहकारित्वेन पदेष्वेव तादृशशक्तेराधानात् । करणनिष्ठशक्ति विशेषसम्पादकत्वस्यैव सहकारिरूपत्वात् । आलोकादौ तथा दृष्टत्वात् । अत्र विशेषस्तूत्तरत्र शक्तिविचारे वक्ष्यामः । व्युत्पन्नस्य क्रियात्वकारकत्वादिज्ञानेऽप्युक्ताकाङ्क्षाज्ञानादिभावेन शाब्दबोधः । अन्यथेदं क्रियापदं द्वितीयादिविभक्तिमत्पदमिति ज्ञानमात्रवतोऽपि शाब्दबोधापत्तेः । न चेष्टापत्तिः । अनुभवविरोधात् । विपरीतव्युत्पन्नस्य क्रियाकारकत्वाद्यज्ञानेऽप्यन्वयज्ञानमात्रेण शाब्दबोधोदयात् । न हि प्रमायां तस्यापि पदस्य स्वसमानविभक्तिकसमभिव्याहृतानामन्तरे भेदसम्बन्धेनान्वय इति ज्ञानवतः शाब्दबोधो न जायत इति वक्तुं युक्तम् । अतस्तदर्थान्वितस्वार्थबोधकमिदं पदमित्याकाङ्क्षाज्ञानस्यैव हेतुता । न चैतादृशाकाङ्क्षाज्ञानवतः पुरुषस्याभ्रान्त-

त्वापत्तिः । नामार्थयोरप्युक्ताकाङ्क्षाज्ञानसाहित्येन भेदसम्बन्धेन बोधकत्वशक्तेः सत्त्वादिति वाच्यम् । स्वाभाविकशक्तिमत्त्वज्ञानस्यैवाकाङ्क्षारूपत्वेन विपरीतव्युत्पत्तिरूपदोषबलात्तादृशबोधजनकत्वरूप-शक्तिमत्त्वेऽपि तादृशशक्तेराहितत्वेनास्वाभाविकत्वेन स्वाभाविकशक्तिमत्त्वरूपाकाङ्क्षाज्ञानस्य भ्रमत्वात् । न च तच्छक्तेरस्वाभाविकत्वमित्यत्र किं मानमिति वाच्यम् । अनाद्यनन्तकालेषु पुरुषेष्व-भेदावगाहिबोधजनकत्वेन तादृशशक्तेः स्वाभाविकत्वे सिद्धे क्वचिदेव काले एकद्वित्रादिपुरुषेषु तादृश-बोधजनकत्वस्य वेत्रबीजादौ कदलीकाण्डजननशक्तेरिवास्वाभाविकत्वस्यैवोचितत्वात् । न च नामार्थयोरनादिकालेऽभेदावगाहि बोधजनकत्वमुत्तरत्रापि तथेत्यत्र किं नियामकमिति वाच्यम् । वेदापौरुषेयत्वस्यैव नियामकत्वात् । न च स्वाभाविकशक्तिमत्त्वस्यैवाकाङ्क्षारूपत्वं कुत इति वाच्यम् । विपरीतव्युत्पत्तिमतोऽन्यथाऽपि बोधं जनयति । ज्ञानवतोऽपि तादृशबोधानुदयेन सामान्यतस्तादृश-बोधानुकूल शक्तिमत्त्वस्काङ्क्षारूपत्वासम्भवात् । न चैवं लक्षणया बोधजनकत्वशक्तेरप्याहितत्वेन तदवगाहिज्ञानस्याकाङ्क्षाज्ञानरूपत्वाभावे तत्राकाङ्क्षाज्ञानासम्भवेन बोधो न स्यादिति वाच्यम् । लक्षणया पदार्थविषयबोधजननानुकूलशक्तेराधानसत्त्वेऽप्यन्वयबोधस्य लक्षणया कदाऽप्यजननेनान्वय-बोधशक्तौ लक्षणाप्रयोज्यत्वासम्भवेन समभिव्याहृतपदार्थसंसर्गनिष्ठसांसर्गिक विषयताकबोधजननानु-कूलस्वाविकशक्तिमत्त्वरूपाकाङ्क्षाज्ञानसम्भवेन दोषाभावात् । अत एवापभ्रष्टभाषायां व्यवहारानुसारेण तथैव व्युत्पत्तिरिति । नन्वपभ्रष्टभाषायां प्रथमात्वादिविभक्तित्वादिज्ञानशून्यानां शाब्दबोधोदयान्न क्रियात्वकर्मत्वादिज्ञानं शाब्दधीहेतुः । अन्यत्र बोधो क्लृप्तसामग्रीबलादेव संस्कृतेऽपि बोधाङ्गीकार-स्योचितत्वादिति चेन्न । परस्परान्वितस्वार्थबोधकत्वज्ञानादेव शाब्दाङ्गीकारपक्षे दोषाभावस्य स्फुटत्वात् । क्रियात्वादिज्ञानस्य कारणतामतेऽप्यानुपूर्व्या भिन्नत्वेऽपि तत्र तदीयसङ्केतादिना क्रियात्वकारकत्वादिवैजात्यानां तत्र सत्त्वात् । तादृशवैजात्यस्य स्वरूपतो ज्ञानमेव वैजात्यप्रयोजकं न तु षष्ठ्यादिपदवाच्यत्वज्ञानमिति दोषाभावात् । सङ्केतयितृज्ञानाभावेऽपि क्रियात्वादिज्ञानमात्रेणैव शाब्दोत्पत्तेः सम्भवात् ॥ **सन्निधिरिति** ॥ **उच्चरितमिति** । उपलक्षणमेतत् । लिखितत्वादिकमपि ग्राह्यम् । तज्ज्ञानाधिकरणकालवृत्तिज्ञानोत्पत्तिप्रयोजकवक्तृव्यापारविषयत्वमित्यर्थः । तथा च मौनिश्लोकादावपि सम्भवति । न च व्यवहितपदानामपि योजनयाऽन्वयबोधस्यानुभवसिद्धत्वात्कथं सन्निधेः शाब्दहेतुत्वम् । यदि च तात्पर्यरूपवक्तृव्यापारमादाय सन्निधिरानीयते तदा गिरिर्भुक्त-मग्निमान्देवदत्तेनेत्यादिवाक्यानामपि सन्निधिसत्त्वापत्तिः । तथा चासत्तिरहितवाक्यस्यैव दुर्मिलत्वा-पत्तिरिति वाच्यम् । प्रहरे प्रहरे उच्चरितस्य गामानयेत्यादिवाक्यस्यैव सुमिलत्वात् । गिरिर्भुक्त-मित्यादिवाक्ये यदि तात्पर्यज्ञापकं किञ्चिदस्ति तदा सन्निधिमत्त्वे इष्टापत्तिः । तदभावे ज्ञायमान-

व्यापारत्वस्यैव सन्निधित्वेन तदभावात्। अत एवोच्चारणस्याज्ञानेऽविलम्बेनोच्चारितेऽति सन्निधिर्नाङ्गी क्रियते । वस्तुतस्तु पदयोः सन्निधिरेकक्षणवृत्तित्वज्ञानमेव तत्प्रयोजकत्वाद्व्यापारोऽपि सन्निधिरित्युच्यते । केचित्तु स्वसमानाधिकरणज्ञानादिदोषाननुमापकं यत्पदयोर्व्यवधानं तदप्रयोजकवक्तृव्यापारविषयत्वं सन्निधिः । इत्थं च गिरिर्भुक्तमित्यादौ यदि किञ्चित्प्रयोजनोद्देशेन व्यवधानं तदा सन्निधिरस्त्येव । यदि न प्रयोजनोद्देशस्तदा तद्व्यवधानप्रयोजकव्यापारस्य वक्तृव्यापारदोषानुमापकत्वान्न सन्निधिरिति वदन्ति । न चाध्याहारस्थले वाक्यत्वानुपपत्तिः । अध्याहृतपदसन्निधेरभावादिति वाच्यम् । तत्राप्यध्याहारज्ञापकस्य कर्तृव्यापारस्य सत्त्वात् । तदभावे न्यूनत्वेन वाक्याभासत्वात् ।

ननु सन्निधेर्वाक्याङ्गत्वं कस्मादङ्गीकर्तव्यम् । सत्यपि व्यवधाने सन्निधेरुक्तरीत्या सम्पादयिष्यमाणत्वात् । न च सन्निध्यभावेऽसन्निहितपदज्ञानासम्भवेन शाब्दानुपपत्तिरिति वाच्यम् । असन्निहितपदस्याप्याकाङ्क्षानुसारेण स्मरणसम्भवादिति चेन्न । उपादेयत्वघटितप्रामाण्यस्य सन्निध्यभावेऽनुपपत्तेः । विना प्रयोजनं तत्पदोच्चारणाद्यभावे तत्पदस्य वाऽन्यस्य वाऽध्याहारस्तन्त्रादिकं वेत्यत्र नियामकाभावेन तात्पर्यानिश्चयेन बोधानुपपत्तेः । कथञ्चितात्पर्यज्ञानसम्भवेऽपि पदबोधनार्थे वाक्ये स्फुटप्रतीतिविरोधिव्यवधानस्य प्रयोजनानुसन्धानादिप्रयोजकाप्रयोज्यस्य कर्तुर्मौर्ख्यादिमात्रप्रयोज्यत्वे सिद्धे तन्मूलकत्वसन्देहेन वाक्यप्रामाण्यसन्देहाच्छुकादि वाक्यवदनुपादेयत्वाच्च । चोलदेशस्थितस्य पिपासोः सुरसरिति शीतलानि जलानि सन्तीत्यादिवाक्यव्यावर्तनाय सन्निहितार्थाभिधायकत्वमपि विशेषणं देयम् । अन्यत्रोक्तत्वात् । अथवा शाब्दबोधोपयोगिसन्निधिरत्राभिहितः । तदुपयोगित्वं च प्रदर्शितमेव । तत्रोपादेयत्वप्रयोजकसन्निधिरभिहित इत्यास्तां विस्तरः ॥ प्रतीतावन्वयप्रमाणविरोधोऽयोग्यतेति । अत्रेदं बोध्यम् । योग्यताज्ञानं न शाब्दबोधधीहेतुः । मानाभावात् । न च बाधकालेऽपि शाब्दबोधापत्तिः । सत्त्वावगाहिबोधानङ्गीकारादिति वाच्यम् । अयोग्यताज्ञानस्य प्रतिबन्धकत्वादेव शाब्दबोधानुदयात् । न च योग्यताज्ञानस्य कारणत्वम् । अयोग्यताज्ञानस्य प्रतिबन्धकत्वं वेत्यत्र विनिगमनाविरह इति वाच्यम् । प्रत्यक्षादिस्थले तद्वत्ताबुद्धिं प्रति तदभावात्तन्निर्णयस्य प्रतिबन्धकतायाः क्लृप्तत्वात् । सत्यपि योग्यताज्ञाने लौकिकसन्निकर्षादिना बाधबुद्ध्युत्पत्तौ तृतीयक्षणे शाब्दबोधापत्तेः । समूहालम्बनात्मिकाया योग्यताज्ञानादिघटितायाः शाब्दसामग्र्याः सत्त्वात् । एवमपूर्वार्थविषयकस्य संशयात्मकस्यापि ज्ञानस्य पूर्वमसत्त्वात्किन्तु सन्निधिरिव वाक्यांशभूतेति ॥ **अशेषदोषनिरासार्थमिति** । ज्ञातज्ञापकत्वासाध्यकथनादि दोषनिरासार्थमित्यर्थः ।

**वि.—** निर्दोषं वाक्यमिति द्वितीयलक्षणे वाक्यस्वरूपजिज्ञासायामुपोद्घातसङ्गत्या पदस्वरूपमाह ॥ **विभक्त्यन्ता वर्णा इति ।** वाक्यलक्षणमाह ॥ **आकाङ्क्षासन्निधियोग्यतावतामिति ।** गौरश्वः पुरुषो हस्तीत्यादिनिराकाङ्क्षपदसमूहव्यवच्छेदायाद्यं विशेषणम् । व्यवधानेनोच्चारितस्य देवदत्त गामानयेत्यादिपदसमूहस्य व्यवच्छेदाय द्वितीयं विशेषणम् । अग्निना सिञ्चेदित्यादिपदजातव्यावृत्त्यर्थं तृतीयं विशेषणम् । केयमाकाङ्क्षेति । जिज्ञासायामाह ॥ **आकाङ्क्षेति ।** पूर्वपदसञ्जातार्थपदार्थान्तर-जिज्ञासाऽऽकाङ्क्षेत्यर्थः । इयमाकाङ्क्षा साक्षात्पदगतेति निरासायाह ॥ **चेतनधर्म इति ।** चेतनस्य श्रोतुर्धर्म इत्यर्थः । कथं तर्हि पदानां साकाङ्क्षत्वमित्यत आह ॥ **तद्विषयत्वादिति ।** पूर्वपदसञ्जात-श्रोतृविषयत्वादर्थाः पदार्था आकाङ्क्षासम्बन्धिन इत्यर्थः । तत्प्रतिपादकत्वात्पूर्वपदसञ्जातश्रोतृ-जिज्ञासाविषयपदार्थबोधकत्वादित्यर्थः । पदान्यपि साकाङ्क्षाणीत्येतल्लिङ्गव्यत्ययेनात्रानुवर्तते । पदानि पूर्वपदसञ्जातजिज्ञासारूपाकाङ्क्षाविषयार्थ बोधकत्वरूपपरम्परासम्बन्धेन साकाङ्क्षाणि भवन्तीति भावः। यद्वा केयमाकाङ्क्षेति जिज्ञासायां साकाङ्क्षार्थप्रतिपादकत्वमाकाङ्क्षेति वक्तुमर्थसम्बन्ध्याकाङ्क्षास्वरूपं तावदाह ॥ **आकाङ्क्षेति ।** पूर्वपदसञ्जाता जिज्ञासाऽऽकाङ्क्षपदगताऽऽकाङ्क्षशरीरप्रविष्टाऽऽकाङ्क्षेत्यर्थः । इत्येवमाकाङ्क्षोऽर्थधर्म इति मन्दानां प्रतीतिपरिहारायाह ॥ **चेतनधर्म इति ।** अर्थ पूर्ववत् । तर्हि कथमियमर्थसम्बन्धिनीति जिज्ञासायामाह ॥ **तद्विषयत्वादिति ।** विषयविषयिभावलक्षणसम्बन्धेनेय-माकाङ्क्षाऽर्थसम्बन्धिनीति भावः । इदानीं पदगताकाङ्क्षामाह ॥ **तत्प्रतिपादकत्वादिति ।** श्रोतृ-जिज्ञासितार्थप्रतिपादकत्वात् पदान्याकाङ्क्षावन्तीत्यर्थः । पदार्थाः साकाङ्क्षास्तथा पदान्यपि साकाङ्क्षा-णीत्यपेरर्थः । पूर्वपदसञ्जातश्रोतृजिज्ञासाविषयार्थबोधकत्वं पदगताकाङ्क्षेति भावः । प्रमाणलक्षण-टीकायां तु पूर्वपदसञ्जाताकाङ्क्षापूर्वकत्वमाकाङ्क्षावत्त्वमित्युक्तम् । तत्र पूर्वपदं प्रथमोपस्थितपदं तेन स्वजन्यज्ञानद्वारा सञ्जाताकाङ्क्षा पूर्वपदोपस्थितिजन्यपदार्थान्तरजिज्ञासैव । जिज्ञासापूर्तिश्च जिज्ञासितार्थाभिधानेन भवतीति तत्पूर्वकं पदानां तद्विषयार्थप्रतिपादकत्वमेव । अतस्तेनापि पूर्वपदसञ्जातश्रोतृजिज्ञासाविषयार्थप्रतिपादकत्वमेवोक्तमिति न विरोधशङ्कावकाशः । यद्यपि प्रमाणलक्षणटीकायां श्रोतुराकाङ्क्षितार्थाभिधायित्वपूर्वपदसञ्जाताकाङ्क्षापूर्वकत्वं चाकाङ्क्षावत्त्वम् । तेन विरक्तं प्रति वाणिज्योपदेशस्य निराकाङ्क्षत्वमशक्यत्वं चाभ्युपेयम् । तथाऽप्यावश्यकनिर्दोषत्व-विशेषणादेव तद्व्यवच्छेदासम्भवात्पूर्वपदसञ्जातश्रोतृ जिज्ञासाविषयार्थप्रतिपादकत्वमात्रेण पदेषु साकाङ्क्षत्वव्यवहाराच्च । विरक्तं प्रति वाणिज्योपदेशस्य वाक्यत्वमभ्युपेत्य पद्धतावन्वयाबोधोपयुक्ता-काङ्क्षामात्रमुक्तम् । प्रमाणलक्षणटीकायां तु शब्दस्य परार्थत्वात्पराभिलषितज्ञानविषयस्यैव पदार्थशब्दबोध्यतया परापेक्षितत्वस्यैव वाक्यार्थत्वाद्वाक्यार्थ भूतान्वयबोधकत्वस्य गौरश्वः पुरुषो

हस्तीति पदजाते विरक्तं प्रति वाणिज्योपदेशरूपपदजाते च समा गौरश्वः पुरुषो हस्तीति पदजातवद्विरक्तं प्रति वाणिज्योपदेशरूपपदजातमपि निराकाङ्क्षं वाक्यं चेत्यभिप्रेत्य तद्व्यावृत्त्यर्थं श्रोतुराकाङ्क्षितार्थाभिधायकत्वमप्याकाङ्क्षाशरीरे प्रवेशितं तथाविधाकाङ्क्षारहितत्वाद्विरक्तं प्रति वाणिज्योपदेशरूपं पदजातमपि न वाक्यमित्युक्तम् । तथा च विवक्षाभेदेन ग्रन्थद्वयप्रवृत्तेर्विरोधशङ्काऽनवकाश इति । सन्निधिलक्षणमाह ॥ **सन्निधिरविलम्बेनोच्चरितत्वमिति** । पदानामव्यवधानेनोच्चारविषयत्वं सन्निधिरित्यर्थः ।

ननूच्चारणविषयत्वं पत्रलिखितमौनिश्लोकादावङ्गुल्यादिचेष्टाविशेषित ज्ञापितपदसमूहरूपे वाक्ये च नास्तीति तत्र सान्निध्याभावप्रसङ्ग इति चेन्न । उच्चारितत्वमित्यस्य पदोपस्थित्यनुकूलव्यापारविषयत्वोपलक्षणत्वात् । पदोपस्थित्यनुकूलो व्यापारः क्वचिदुच्चारणात्मा क्वचिल्लिपिरूपः क्वचिच्चेष्टाविशेषरूप इति सर्वत्र पदोपस्थित्यनुकूलव्यापारविषयत्वमस्तीति नातिव्याप्तिः । लाक्षणिकपदप्रयोगस्तु प्रायेणोच्चारणं पदोपस्थित्यनुकूलो व्यापार इति ज्ञापनाय । यद्यपि प्रमाणलक्षणटीकायां सन्निहितार्थाभिधायकत्वमविलम्बेनोच्चारितत्वम् । तेन चोलेषु तृषितं प्रति सन्ति सुरसरिति शीतलानि जलानीत्युपदेशस्य विलम्बेनोच्चारितपदानां च वाक्यत्वनिरास इत्युक्तत्वात् । पद्धत्युक्ताविलम्बोच्चारितत्वरूपसन्निधियुक्तत्वमपि चोलेषु तृषितं प्रति सन्ति सुरसरितीत्यादिपदजातं सन्निधिरहितमवाक्यं चेत्यभ्युपेयम् । तथाऽप्यावश्यकनिर्दोषत्वविशेषणादेव तद्व्यवच्छेदसम्भवात् । पद्धत्युक्ताविलम्बेनोच्चारितत्वमात्रेणापि पदेषु सन्निहितत्वव्यवहाराच्च । चोलेषु तृषितं प्रति सुरसरितीत्यादिपदजातं वाक्यमित्यभ्युपेत्य पद्धतावन्वयबोधोपयुक्तासत्त्यपरपर्याय सन्निधिमात्रमुक्तम् । प्रमाणलक्षणटीकायां विलम्बेनोच्चारितपदजातेऽसन्निहितार्थाभिधायकपदजातपरापेक्षितप्रतीतिविषयान्वयाबोधकत्वसाम्यादसन्निहितार्थबोधकं चोलेषु तृषितं प्रति सन्ति सुरसरितीत्यादिपदजातं सन्निधिरहितमवाक्यं चेत्यभ्युपगम्य तद्व्यावृत्त्यर्थं सन्निधिलक्षणे सन्निहितार्थाभिधायकत्वं प्रवेशितम् । तावता न कश्चिद्विरोधः ॥ **विवक्षाभेदेन ग्रन्थद्वयप्रवृत्तेरिति** । सन्निधिरर्थधर्मोऽप्यस्तीति हेतोः शब्दसाम्यादयमपि सन्निधिरर्थधर्म इति मन्दप्रतीतिवारणायाह ॥ **पदधर्म एवेति** । योग्यतालक्षणमाह ॥ **प्रतीतान्वयस्येति** । पदसमूहरूपशब्दप्रतीतपदार्थानामन्वयस्येत्यर्थः । सन्निधिवदियं योग्यता पदधर्म इति प्रतीति निरासायाह ॥ **पदार्थधर्म इति** । प्रमाणविरुद्धान्वयप्रतियोग्यतापदार्थगतानां योग्यतेत्याशयः । कथं तर्हि पदानि योग्यतावन्तीत्यत आह ॥ **यद्वाचकत्वादिति** । प्रमाणविरुद्धान्वयप्रतियोगिबोधकत्वादित्यर्थः । परम्परासम्बन्धेन योग्यतासम्बन्धित्वात्पदानि योग्यतावन्तीत्यर्थः । यद्वा पदानां योग्यता नाम केति जिज्ञासायां योग्यतावदर्थप्रतिपादकत्वं योग्यतेत्यभिप्रेत्य योग्यताशरीरप्रविष्टार्थधर्मभूत-

योग्यतां तावदाह ।। **प्रतीतान्वयस्येति** । अर्थधर्मो योग्यतेत्यन्वयः । पदगतयोग्यतामाह ।। **तद्वाचकत्वात्पदान्यपीति** । प्रमाणाविरुद्धान्वयप्रतियोग्यभिधायकत्वं पदगतयोग्यतेति भावः । प्रमाणलक्षटीकायां त्वन्योन्यान्वययोग्यतावदर्थभिधायकत्वं योग्यत्वमित्युक्तम् । अन्योन्यान्वयोऽन्योन्य-निरूपितान्वय इति यावत् । तस्य योग्यता प्रमाणाविरोध इति भावः । तदर्थप्रतिपादकत्वं पदानां योग्यत्वं योग्यतेत्यर्थः । तथाऽत्रापि प्रमाणविरुद्धान्वयप्रतियोग्यार्थाभिधायकत्वं योग्यतेत्युक्तत्वान्न विरोधशङ्कावकाश इति । आगमलक्षणवाक्ये पदकृत्यमाह ।। **तत्रेति** । द्वितीयागमलक्षणवाक्य इत्यर्थः ।। **पदत्वेनेति** । पदस्य वाचकत्वात्पदत्वेन निरभिधेयत्वस्य निरास इति भावः ।। **योग्यतयेति** । योग्यतायाः सदर्थबोधकत्वनियतत्वात् । योग्यतया विपरीतबोधकत्वनिरास इति भावः ।

**(३) प्र.प.— पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितं वाच्यवाचकभावसम्बन्धग्रहण-संस्कारानुगृहीतमन्त्यवर्णसन्निकृष्टं श्रोत्रमनेकेष्वपि वर्णेष्वेकां पदबुद्धिं जनयति । तथा पूर्वपूर्व-पदानुभवजनितसंस्कारसहकृतमन्त्यपदविषयं श्रोत्रमनेकेषु पदेष्वेकां वाक्यबुद्धिमाकाङ्क्षाद्यनुसारेण जनयति । तेन वर्णानां पदानां च सहानवस्थितप्रतीतीनामपि समुदायो युज्यते ।**

**जना.—** ननु विभक्त्यन्तेष्वनेकेषु वर्णेष्वेकं पदमिति प्रतीत्यनन्तरं पदानां समूहो वाक्यमिति प्रत्येतव्यम् । पदप्रतीतिरेव तावद्वर्णेषु न सम्भवति । विकल्पासहत्वात् । तथा हि । कलशमित्यादि-पदेष्वेकैकवर्णस्यैकैकपदप्रमितिविषयत्वमुत मिलितानाम् । नाद्यः । ककारमात्र एव पदप्रतीति-प्रसङ्गात् । न द्वितीयः । आशुतरविनाशिक्रमिकोच्चारणरूपव्यञ्जकव्यङ्ग्यानां वर्णानां युगपद्बुद्धा-वनारोहेण बुद्धिकृतमेलनायोगात् । वर्णानां सर्वगततया यद्दैशिकं मेलनं तस्य सदातनत्वेनानेकेषु वर्णेष्वेकं पदमिति प्रतीत्ययोगादित्यत आह ।। **पूर्वेति** । श्रोत्रं वर्णेष्वेकां पदबुद्धिं जनयतीत्यन्वयः । यदुक्तमेकैकवर्णस्य पदबुद्धिविषयत्वमुत मिलितानामिति तत्र द्वितीयकल्पमुपादत्ते ।। **अनेकेष्विति** । ननु सन्निकर्षाभावे कथं श्रोत्रं वर्णेषु पदबुद्धिं जनयेदित्यत आह ।। **अन्त्येति** । अन्त्यवर्णश्रवणकाल इति शेषः । नन्वन्त्यवर्णश्रवणकाले श्रोत्रस्यान्त्यवर्णसम्बन्धमात्रसत्त्वेऽपि पूर्ववर्णसन्निकर्षाभावात्कथं पूर्वान्त्यवर्णेषु पदबुद्धिरित्यत आह ।। **पूर्वेति** । एवं च यथा पूर्वानुभवसंस्काररूपसहकारिसहकृतस्य चक्षुषः पूर्वोत्तरकालसम्बन्धावगाहिप्रत्यभिज्ञाजनकत्वं तथेहापीति भावः । श्रोत्रस्यानेकेषु वर्णेष्वेकं पदमिति प्रतीतिजनकत्वे मार इत्यत राम इति प्रतीत्यापत्तिः । यतो मार इत्यत्र यावन्तो वर्णास्तावन्त एव राम इत्यत्रापि । एवं नव वन नदी दीन राजा जारेत्यादावपीत्यत आह ।। **वाच्यवाचकेति** । वाच्यवाचकभावसम्बन्धग्रहणसंस्कार आकारशिरस्करेफोपरि मकारविषयकः । एवं नवमित्यादावपि द्रष्टव्यम् । तत्सहकृतेत्यर्थः । एवं मारेत्यादिश्रवणकाले तत्सदृशसंस्काराभावेन न पदप्रतीतिरिति

भावः । एवं क्रमिकोच्चारणविषयेष्वनेकेषु वर्णेष्वेकं पदमिति प्रतीतिजननप्रकारमुपपाद्य तादृशपदेष्वेकं वाक्यमिति प्रतीतिमुपपादयति ॥ **तथेति** । नन्वेवं देवदत्त ओदनं स्नातः सरसि भुक्त्वा यातीत्यत्रौदनस्नातपदयोरेकवाक्यताप्रतीतिः स्यादित्यत आह ॥ **आकाङ्क्षाद्यनुसारेणेति** । तत्र च परस्परमाकाङ्क्षाविरहान्नैकवाक्यताप्रतीतिरिति भावः । एवं पदवाक्यप्रतीत्युपपादनस्य प्रयोजनमाह ॥ **तेनेति** ॥ **समुदायो युज्यत इति** । तथा च पदानां समूहो वाक्यमिति प्रागुक्तलक्षणं घटत इति भावः।

**राघ.**— ननु व्याप्तानां वर्णानां कथं मेलनेन पदत्वम् । पदानां वा कथं समूहीकरणमित्यत आह ॥ **पूर्वपूर्वेति** । अर्थवत्त्वज्ञानं विनेदं पदमित्यनुत्पत्तेरर्थवत्त्वज्ञानायोक्तं वाच्यवाचकेत्यादि विशेषणम् । तेन कचटतपेत्यादावुक्तसामग्रीसत्त्वेऽपि पदत्वबुद्धेरभावाद्व्यभिचार इति निरस्तम् । तत्र सङ्केत-ग्रहणसंस्कारानुग्रहाभावादिति । एवमनाकाङ्क्षादिपदकदम्बे पूर्वपदेत्यादिनोक्तकारणकलापे सत्यपि न वाक्यत्वबुद्धिरिति चोद्यनिरासायाकाङ्क्षाद्यनुसारेणेत्युक्तम् । एवमेकबुद्धिविषयतोपपादनेन फलितमाह ॥ **तेनेति** । एकबुद्धिविषयतोपपादनेनेत्यर्थः । सहानवस्थितप्रतीतीनामिति बहुव्रीहिः । क्रमेणोत्पन्न-प्रतीतिविषयाणामित्यर्थः ।

**विज.**— ननु क्रमिकवर्णसमूहरूपपदस्यैवासम्भवेन पदसमूहोऽसम्भावित एवेत्यत आह ॥ **पूर्वपूर्ववर्णेति** । शक्तत्वरूपपदज्ञानोपयोगितया वाच्यवाचकेत्याद्युक्तम् । एवमाकाङ्क्षेत्यादिवाक्य-त्वज्ञानोपयोगितयेत्युक्तम् ।

**वेदे.**— ननु क्रमविशेषविशिष्टवर्णसमूहस्य पदत्वं वाच्यम् । न च नित्येषु व्याप्तेषु च वर्णेषु कालतो देशतो वा स्वतः क्रमः सम्भवति । अतः प्रतीतिक्रमेणैव तेषु क्रमो वक्तव्यः । न चैवं समुदाये सम्भवति । प्रतीतीनामाशुतरविनाशित्वेन मेलनासम्भवात् । अतो वर्णेषु पदत्वमेव ज्ञातु-मशक्यम् । कुतस्तद्धटितं वाक्यत्वमित्याशङ्कायां तावत्पदत्वबुद्धिमुपपादयति ॥ **पूर्वपूर्वेति** । अव्युत्पन्न-स्यान्त्यवर्णश्रवणेऽपि वाक्यत्वबुद्धेरभावादाह ॥ **वाच्यवाचकेति** । गौरश्व इत्यादावन्त्यपदश्रवणेऽपि वाक्यत्वबुद्धेरभावादाह ॥ **आकाङ्क्षाद्यनुसारेणेति** ॥ **समुदायो युज्यत इति** । प्रत्येकं वर्णपद-प्रतीतीनामुक्तरीत्या मेलनासम्भवेऽपि प्रत्यभिज्ञास्थल इव श्रोत्रमन्त्यवर्णपदसम्बद्धं पूर्ववर्णसंस्कार-सहकृतं तावद्वर्णपदविषयकमेकं समूहालम्बनप्रत्यक्षरूपं ज्ञानं जनयति । तथा चैकज्ञानविषयत्वेन तेषु समुदायो युज्यत इति भावः । न चैवं क्रमानुपपत्तिः । संवृतेष्वमुक्तज्ञानेनावगाहनात् । यत्तु सुधाया-मेकस्मृत्युपारूढानामित्युक्तं तन्मतान्तराभिप्रायेण । वर्णानुभवाहितसंस्कारानन्तरं तावद्विषयकैक-समूहालम्बनस्मृत्याऽपि पदत्वादिबुद्ध्युपपत्तिरिति स्वमत एव प्रकारान्तरमिति ध्येयम् ।

**अभि.**— ननु वर्णानां नित्यविभुत्वेऽपि नानेकेषु वर्णेष्वेका पदबुद्धिर्युक्ता । वर्णश्रवणस्य क्रमिकत्वेन युगपदनेकवर्णश्रवणाभावात् । एकावच्छेदेनावस्थितानेकवृक्षाणां युगपद्दर्शनस्यैव वनप्रतीति हेतुत्वात् । एवमेवानेकपदेषु वाक्यबुद्धिरनुपपन्नेति । अत आह ॥ **पूर्वपूर्वेत्यादिना ॥ एतेनेति ।** पूर्वश्रवणकाले सहानवस्थितप्रतीतानामप्यन्त्यवर्णसम्बद्धश्रोत्रेण सर्ववर्णविषयकप्रतीतिजननाद्वर्णानां विवक्षितसमुदायो युज्यते । तथाऽन्त्यपदसम्बद्धश्रोत्रेण सर्वपदविषयकप्रतीतिजननात्पदानां विवक्षित-समुदायो युज्यत इत्यर्थः ।

**आद.**— ननु नैकस्य वर्णस्यार्थबोधकत्वम् । इतरवर्णोच्चारणस्य वैय्यर्थ्यापत्तेः । क्रमविशिष्टानां पदानां नैकस्मिन्क्षणेस्थितिः सम्भवति । प्रतिक्षणं नाशात् । वर्णानां नित्यत्वेऽपि क्रमरहितानां बोधकत्वेऽतिप्रसङ्गात् । क्रमविशिष्टानां क्रमप्रयोजकबुद्धिनाशेन नाशात् । तथा च पदस्य वाक्यस्य चैकक्षणे स्थित्यसम्भवात्कथं बोधकत्वम् । अनेकेष्वपि वर्णेष्वेकत्वबुद्धिश्च । न च क्रमविशिष्टवर्णानां नष्टत्वेऽपि तज्ज्ञानस्यैव बोधकत्वमिति वाच्यम् । पदादेकस्माद्वाक्याद्वाऽर्थं स्मरामि प्रत्येमीत्यनुभव-व्याकोपदेकत्वादेः सर्वथाऽनुपपत्तेश्च । किञ्च ज्ञानाद्बोधाङ्गीकारेऽपि पदं श्रुतं वाक्यं श्रुतमित्यनुभवः पदादिषु वर्तमानत्वावगाह्यनुभवसिद्धः । न च पदेषु वाक्येषु वा वर्तमानत्वं विना घटते । अन्यथा भ्रमत्वापत्तेः । न चैवमन्त्यवर्णस्य वर्तमानत्वमात्रेण प्रामाण्यं घटते । तथा सत्येकवर्णमात्र-प्रत्यक्षानन्तरमपि तथानुभवप्रसङ्गः । न चान्त्यवर्णप्रत्यक्षमेव तदाकारमिति वाच्यम् । तथा सति दोषवशात्तद्घटकवर्णाश्रवणेऽप्यन्त्यवर्णश्रवणमात्रात्तथानुभवप्रसङ्गः । न च यावद्वर्णप्रत्यक्षमेकदा सम्भवति । तदभिव्यञ्जकानां ध्वनानां यौगपद्यसम्भवात् । किञ्च पदत्वाश्रये यदि श्रुतत्वमात्रेण तथानुभवः सम्भवति तदैकैकवर्णस्य श्रुतत्वमात्रेण श्रुतमिति धीः स्यात् । एवं स्मृतमित्यपि धीः स्यात् । तद्घटकस्य पूर्वपूर्ववर्णस्य श्रुतत्वात्स्मृत्वाच्च प्रत्यक्षसामग्रीबलादुत्तर वर्णप्रत्यक्षमेव जायते । न पूर्वपूर्ववर्णस्मृतिरिति वाच्यम् । परस्परप्रतिबन्धकत्वे मानाभावात् । पश्चादेकाक्षरस्मरणाभावेऽपि पदं स्मृतं वाक्यं स्मृतमित्यनुभवापत्तेः । पदत्वादीनां व्यासज्यवृत्तित्वेन तदवच्छेदेनैव धर्मान्तरस्य भानं न तु तत्सामानाधिकरण्येनेत्युच्यते । तदा पदं श्रुतं वाक्यं श्रुतमिति प्रत्यक्षानुपपत्तिः । तस्माद्वर्णातिरिक्तं पदवाक्यपदवाच्यं स्फोटाख्यं किञ्चिदङ्गीकर्तव्यम् । तदेव शाब्दधीजनकमिति न वर्णसमुदायस्य पदत्वं तत्समुदायस्य वाक्यत्वं वा युक्तमित्यत आह ॥ **पूर्वपूर्ववर्णेति** । तथा च श्रावणप्रत्यक्षविषयत्वस्य सर्वेषु वर्णेषु सत्त्वाच्छ्रुतमित्यनुभवः । आकाङ्क्षादिवशादेकार्थप्रतिपादकत्वरूपोपाधिनैकत्वप्रतीतिः । नानावृक्षेष्वेकस्थानस्थितत्वोपाधिनैकं वनमिति धीवद्वर्तमानत्वमपि किञ्चित्स्थूलकालस्थितत्वमेव प्रतीयते न तु क्षणमात्रवृत्तित्वम् । तथाऽननुभवात् । वर्णसमुदायातिरिक्तस्य स्फोटादेरप्रामाणिकत्वा-

न्नाङ्गीकार्यत्वमिति भावः । संस्काररूपसन्निकर्षबलादतीतानां वर्णानां क्रमस्य च भानं सम्भवतीति भावः । अव्युत्पन्नस्य पदत्वबुद्धेरनुदयात् । वाच्यवाचकभावसम्बन्धग्रहणसंस्कारानुगृहीतमिति । आकाङ्क्षाद्यज्ञाने एकवाक्यत्वबुद्धेरनुदयात् ।। **आकाङ्क्षाद्यनुसारेणेति ।**

**वि.—** ननु वर्रानां समूहमन्तरेण पदत्वायोगात् वर्णानां पदानां च समूहेन भाव्यम् । न च वर्णानां समूहः सम्भवति । न चैकदेशस्था वर्णाः समूह इति सम्भवति । वर्णानां विभुत्वाद्भिन्नदेशस्थ-वर्णाभावेन व्यावृत्त्यसिद्धेः । नाप्येककालस्थवर्णाः समूह इति सम्भवति । वर्णानां नित्यतयैकपद-व्यावृत्त्यभावात् । नाप्येकप्रतीतिस्था वर्णा वर्णसमूह इति सम्भवति । उत्तरवर्णप्रतीतिकाले पूर्ववर्ण-प्रतीत्यभावे नानेकवर्णानामेकप्रतीतिविषयत्वासम्भवात् । वर्णसमूहासम्भवादेव वर्णसमूहरूपपद-समूहस्य सुतरामसम्भवात्पदसमूहो वाक्यमित्ययुक्तमित्यत आह ।। **पूर्ववर्णानुभवेति ।** यद्यपि वर्णानां विभुत्वान्नित्यत्वाच्च देशकालापेक्षया पूर्वत्वमन्तिमत्त्वं चायुक्तमेवं वर्णात्मकपदानामप्ययुक्तम् । तथाऽपि यद्वर्णे प्रतीत्यनुकूलोच्चारणादिरूपव्यापारः प्राथमिकः स पूर्वो वर्णो यद्वर्णप्रतीत्यनुकूल उच्चारणादि-व्यापारोऽन्तिमः स चान्तिमो वर्ण इति वर्णानां पूर्वत्वमन्तिमत्वमेवं पदानामपीति ज्ञेयम् । पूर्ववर्णानु-भवजनितेत्यत्र वर्णपदेन पदमप्युपलक्ष्यते । अन्तिमपदविषयत्वमित्यत्र पदमित्यनेन वर्णोऽप्युपलक्ष्यते । अनेकेषु पदेष्वित्यत्र पदपदं वर्णस्याप्युपलक्षकम् । तथा वाक्यबुद्धिमित्यत्र वाक्यपदं पदस्याप्युप-लक्षकमिति ज्ञेयम् । ननु पदवाक्यजिज्ञासारहितस्योक्तरूपमपि श्रोत्रमनेकेषु वर्णेषु पदेषु च पदं वाक्य-मिति बुद्धिं जनयतीति कथमेवमुक्तिरित्यत आह ।। **आकङ्क्षाद्यनुसारेणेति ।** पदवाक्यजिज्ञासानु-सारेणेत्यर्थः ।। **तेनेति ।** वर्णानां पदानां च समूहालम्बनरूपैकबुद्धिविषयत्वेन युगपदवस्थानरहित-प्रतीतिविषयाणामपि वर्णानां पदानां च समुदायं समूहो युज्यत इत्यर्थः ।

## व्यक्तय एव पदवाच्याः

**(४) प्र.प.— आगमोऽपि सम्यक् श्रुतः समयस्मरणानुगृहीतः शाब्दन्यायानुसन्धानसहित एव स्वार्थस्य बोधको न तु सत्तामात्रेण । जातिरेव वाच्या पदानां व्यक्तयस्तु लक्ष्या इति भाट्टाः । जातिविशिष्टा व्यक्तयो वाच्या इति वैशेषिकाः । क्वचिज्जातिः क्वचिद्व्यक्तिरिति वैयाकरणाः । क्वचिज्जातिः क्वचिद्व्यक्तिः क्वचिदाकृतिरिति नैयायिकाः । अन्यापोह इति बौद्धाः । व्यक्तय एव वाच्याः समयप्रतिपत्तौ तु सादृश्यमुपधानमित्याचार्याः ।**

**जना.—** नन्वश्रुतवाक्यस्याश्रुतपदार्थसङ्गतिकस्याननुसंहितोपक्रमादिन्यायस्य च पुरुषस्य वाक्यार्थ प्रमित्यनुदयादनुप्रमाणलक्षणस्यात्राव्याप्तिरित्यत आह ।। **आगमोऽपीति ।** समयस्मरणानुगृहीतो

वाच्यवाचकभावस्मरणसहकृत इत्यर्थः ॥ **शाब्दन्यायेति** । शाब्दन्याया उपक्रमोपसंहारादयः । तदनुसन्धानसहिता एवेत्यर्थः । एवं च समयोपक्रमादिन्यायानुसंहितस्यैव शब्दस्य लक्ष्यत्वात्तस्य च वाक्यार्थप्रमितिसाधनत्वान्नातिव्याप्तिरिति भावः । ननु स्वार्थस्य बोधक इत्युक्तम् । कोऽसौ पदार्थः । कश्च वाक्यार्थ इत्याशङ्क्य तौ निरूपयिष्यन्प्रथमं तावदनुवदति ॥ जातिरित्यादिना इति बौद्धा इत्यन्तेन । स्फुटतरानल्पदोषवत्त्वादेतेषां पक्षानामनुवाद एव निराकरणम् । अतः केवलानुवादो न कर्तव्य इत्याचार्याशयं तत्र लेशतो दर्शयिष्यामः ॥ **जातिरेवेति** । व्यक्तीनामनन्तत्वेन शक्तिग्रहासम्भवादित्याह ॥ **एवेति** । तर्हि गामानयेत्यत्र कथं व्यक्तेः प्रतीतिः । कथं च विभक्त्यर्थकर्मत्वान्वय इत्यत आह ॥ **व्यक्तयस्त्विति** । एवं च व्यक्तेः प्रकृतवृत्तिविषयत्वात् प्रतीतिविभक्त्यर्थान्वयाद्यं युज्यत इति भावः । अत्रेदं दूषणजातं भाट्टपक्षे । तथा हि । शक्यतावच्छेदकेन तीरत्वादिनोपस्थित एव तीरादौ गङ्गादिपदस्य लक्षणा दृष्टा । न चात्र व्यक्तिर्जातिं विना रूपान्तरेणोपस्थिता । गौरिति प्रतीत्या जातिव्यक्त्योरेवोल्लेखात् । अतो न व्यक्तौ लक्षणा । प्रत्युत शक्तिग्राहकस्यानयनादिव्यवहारस्य व्यक्तावेव सम्भवात्पदानां तत्रैव शक्तिः । किञ्च यस्यां व्यक्तौ गौर्नष्टा गौर्दीर्घा गौः शुक्ला गौः सास्नादिमती गौरनेका गौर्गच्छति गां बधानेत्यादौ प्रयोगप्रतीत्योः प्राचुर्यं तस्यां व्यक्तौ लक्षणा । तद्विपरीतायां जातौ शक्तिरित्यतिसाहसमित्यादि तर्कताण्डवोक्तं तत्रैव द्रष्टव्यम् । विस्तरभयान्नेह कृत्स्नमुच्यते । व्यक्तीनामानन्त्याच्छक्तिग्रहानुपपत्तिं स्वयमेवाचार्यमतकथनेन परिहरिष्यति ॥ **जाति-विशिष्टा इति** । केवलव्यक्तीनामनन्तत्वेन तास्वेकस्य पदस्य शक्तिग्रहासम्भवेऽपि जातिविशिष्टासु तास्वेकपदशक्तिग्रहः सम्भवतीति वैशेषिकानामभिमानः । अत्रेदं दूषणं द्रष्टव्यम् । जातिविशिष्टा व्यक्तयो वाच्या इति कोऽर्थः । अनेका व्यक्तय एवैकेन गोत्वेनेव जातिव्यक्ती एकेन धर्मेण क्रोडीकृतैकपदार्थ इति वा जातिविशिष्टमेकमेव शक्यं प्रवृत्तिनिमित्तं तु विशिष्टत्वमिति । अथवा व्यक्तिरेव शक्या जातिस्तु प्रवृत्तिनिमित्तमिति । नाद्यः । द्वयोरनुगतस्यैकस्य क्रोडीकारस्यायोगात् । अभावाच्च । न द्वितीयः । विशिष्टत्वस्याजातित्वेनाननुगतत्वात् । अनुगतगोत्वादेरननुगतशक्यशरीर एव प्रवेशेनाननुगमतादवस्थ्यात् । किञ्चैवं शाब्दीधीर्विशिष्टविशेष्यिका विशिष्टत्वप्रकारिका च स्यात् । न चेष्टापत्तिः । गोव्यक्तिविशेष्यकगोत्वप्रकारकबुद्धेरेवानुभवात् । न तृतीयः । अस्मत्सिद्धान्ता-नतिरेकादिति ॥ **क्वचिज्जातिरिति** । ब्राह्मणादिपदेष्वित्यर्थः । **क्वचिद्व्यक्तिरिति** ॥ आकाशादि-शब्देष्वित्यर्थः । एतत्पक्षे चानुगतवाच्याभावो दोषः स्पष्ट एवेति द्रष्टव्यम् ॥ **क्वचिदिति** । पूर्ववज्जातिव्यक्तिपदार्थौ द्रष्टव्यौ ॥ **क्वचिदाकृतिरिति** । गजादिशब्देष्वित्यर्थः । नैय्यायिकास्तार्किकैक-देशिन इत्यर्थः । अस्मिन्नपि पक्षे शक्याननुगम एव दोष इति द्रष्टव्यम् ॥ **अन्यापोह इति** । येन पदेन

यः पदार्थः प्रतीयते तदन्यान्यत्वमित्यर्थः । घट इत्युक्तेऽघटो न भवतीत्यर्थ इति भावः । एकस्मिन्पक्षे घटशब्दस्याघटान्यार्थकत्वादघटशब्दस्य घटभिन्नार्थकत्वाद्धटपदार्थप्रतिपत्तावघटपदार्थप्रतीतिरघट-पदार्थप्रतीतौ घटपदार्थप्रतीतिरित्यन्योन्याश्रयदोषो द्रष्टव्यः । एवमितरपक्षाननूद्याचार्यपक्षस्यैव स्वपक्षत्वादाचार्यमतमाह ॥ **वक्तव्य इति** । शक्तिग्राहकस्यानयनादिव्यवहारस्य व्यक्तिष्वेव सम्भवादिति भावः । अत्रैवकारेण भाट्टाद्युक्तरीत्याऽनुगतजात्यादीनां वाच्यता निषिध्यते । न त्वनुगतजात्यादेः प्रवृत्तिनिमित्तता । तथा सति सुधाविरोधापत्तेः । उक्तं हि सुधायाम् । ते ते व्यावृत्ताकारा एव तैस्तैर्द्रव्यगुणकर्मसामान्यैर्निमित्तैस्तत्तच्छब्दवाच्या इति । गोत्वादेः प्रकारत्वेनाप्रतीतौ शाब्दप्रतीतौ निर्विकल्पकत्वापाताच्च । प्रवृत्तिनिमित्तस्य प्रकारत्वनियमात् । भट्टोक्तरीत्या लक्षणया-ऽऽक्षेपेण व्यक्तिप्रतीत्यङ्गीकारे गामानयेत्यादौ जातिव्यक्त्योर्युगपत्प्रत्ययो न स्यात् । अपि च वह्नि-विवक्षया प्रयुक्तेन धूमपदेन वह्नेरिव गौरस्तीत्यादौ व्यक्तिविवक्षया प्रयुक्तेन गोपदेन व्यक्तिधीर्न स्यादित्याद्युक्तं तर्कताण्डवे । विस्तरभयान्नेह प्रपञ्चयते । ननु व्यक्तामानन्त्यात्कथमतीतानागत-विप्रकृष्टासु तासु शक्तिग्रहः । तस्मादनिच्छताऽप्यच्छमतिनाऽतीतानागतादिसकलव्यक्त्युपस्थितये सकलव्यक्तिकोडीकारक मनुगतसामान्यमङ्गीकार्यमिति नैयायिकशङ्कमाह ॥ **समयेति** । समयप्रतिपत्तौ वाच्यवाचकभाव सम्बन्धज्ञाने । उपधानमित्युक्त्या सादृश्यं न गोव्यक्तिवद्वाच्यम् । नापि गोत्ववत्प्रवृत्तिनिमित्तम् । किन्तु प्रत्यासत्तित्वेन गोत्वादिविशिष्टव्यक्त्युपस्थापकमिति सूचितम् । तथा च सादृश्येनैवातीतानागतादिसकलगोव्यक्त्युपस्थितिसम्भवादुपस्थापितसकलव्यक्तिषु पदस्य शक्ति-ग्रहः सम्भवति । अतो नैतदर्थमनुगतसामान्यमङ्गीकार्यमिति भावः । ननु सादृश्यस्यातीतादि व्यक्तिप्रतियोगिकत्वात्प्रतियोगिभूतव्यक्त्युपस्थित्यनतरं सादृश्यज्ञानं सादृश्यज्ञानानन्तरं सकल व्यक्त्युपस्थितिरित्यन्योन्याश्रय इति चेन्न । पदस्य व्यक्तिषु भूयो व्यवहारादिदर्शनदशायां प्रतियोगि-भूतवर्तमानपिण्डान्तरस्य प्रत्यक्षेणैव ज्ञातत्वेनान्योन्याश्रयानवकाशात् । यद्वाऽऽदौ स्वरूपसदेव सादृश्यं योगजधर्मवत्संस्कारवच्चातीतादिकमुपस्थाप्य पश्चात्सामग्रीसत्त्वेनातीतादि प्रतियोगित्वेनापि ज्ञातमुपधानं भविष्यतीत्यदोषः । योगजधर्मादिवत्स्वरूपसतैव सादृश्येनोपस्थापित परस्परसदृश-नानागोत्वावच्छिन्नव्यक्तिषु समयप्रतिप्रत्तिरिति सुदृढं समर्थितं तर्कताण्डवे । विस्तरभयान्नेह तन्यते । सुधायां तु नायं गौरित्युपदेशो व्याप्तिग्राहकः । तस्य चायं चैतत्सदृशाश्च सर्वे गोशब्दवाच्या इत्येवंपरत्वात् । अवगतव्याप्तिश्च पिण्डान्तरं दृष्ट्वाऽनुमिमीतेऽयं गोशब्दवाच्यस्तादृशत्वादिति । न चात्र दृष्टान्ताभावः । पुरोवृत्तिगोपिण्डे स्वप्रतियोगिकसादृश्याभावादिति शङ्क्यम् । आप्तवाक्येन व्याप्त्यवगमे दृष्टान्तापनेक्षणात् । तथा च पृथिव्याः पृथिवीशब्दवाच्यत्वेऽनुव्याख्यानोक्तसादृश्यं लिङ्गमिति पक्षान्तरमुक्तम् ।

**राघ.—** ननु कथमस्य वाक्यस्य यथार्थज्ञानसाधनत्वेनानुप्रमाणता । परेण तादृशवाक्योच्चारणे कृतेऽपि व्यासक्तस्य बधिरादेश्च तथासङ्केतानभिज्ञस्य प्रकरणानभिज्ञस्य च बोधाजननादित्यत आह ॥ **आगमोऽपीति** । न केवलमुपपत्तिरित्यपेरर्थः । न सत्तामात्रेण बोधक इत्यन्वयः । तस्य सहकारिण आह ॥ **सम्यगित्यादिना** । पूर्वं योग्यता पदार्थधर्म इत्युक्तम् । पदार्थस्वरूपं स्वाभिमतं विवक्षुः पराभिमतांस्तावदनुवदति ॥ **जातिरेवेति** ॥ **क्वचिज्जातिरिति** । एको व्रीहिरेके व्रीहय इत्यादौ । जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामित्युक्तेः ॥ **क्वचिदिति** । घटा वृक्षा इत्याद्येकशेषस्थले । सरूपाणामेकशेष इत्युक्तेः ॥ **क्वचिज्जातिरिति** । गौर्नित्येत्यादौ । क्वचिद्धटोऽनित्य इत्यादौ व्यक्तिः । पिष्टमयी गौरित्यादौ आकृतिरित्यर्थः । अन्यापोहोऽन्यव्यावृत्तिः । घट इत्यत्र घटशब्दार्थोऽघट-व्यावृत्तिरित्यर्थः ॥ **व्यक्तय एवेति** । परस्परव्यावृत्तघटत्वादितत्तन्निष्ठासाधारणधर्म विशिष्टा व्यक्तय इत्यर्थः । एवकारोऽनुगतजातिनिरासार्थः । प्राग्जातिपदेन तादृशधर्मस्यैव प्रस्तुतत्वात् । नन्वनुगत-जात्यभावे व्यक्तीनामानन्त्येन सङ्केतग्रहायोग इत्यत आह ॥ **समयप्रतिपत्ताविति** । सादृश्यमुपधान-मुपाधिः । निमित्तमिति यावत् । चक्षुस्सन्निकृष्टे पुरोवृत्तिगोपिण्डादौ विद्यमानेनातीतानागत-सर्वगोप्रतियोगिकेन सादृश्येन स्वप्रतियोगिष्वनन्तगवादिषु प्रतियोगितासम्बन्धेनोपस्थापितेषु गोपद-शक्तिग्रहसम्भवादिति । यथा परमते पुरोवृत्तिनिष्ठगोत्वजात्या स्वविशेषणतासम्बन्धेन सर्वगोपिण्डे-षूपस्थापितेषु गोपदशक्तिग्रहस्तद्वदिति भावः । विस्तरस्तु तर्कताण्डवे ॥ **इत्याचार्या इति** । इति व्युत्पत्तिरपि हि तादृशेनैव गम्यत इत्यनुव्याख्यानोक्तेरिति भावः ।

**विज.—** ननु पदासत्त्वेऽप्यर्थप्रत्ययात्कथं शब्दस्य प्रामाण्यमित्यत आह ॥ **आगमोऽपीति** । तथा चान्वयबोधजनकज्ञानविषयशब्दत्वस्यैव प्रमाणतेति भावः । निरभिधेयत्वेनेत्यत्रोक्तमभिधेयं स्वमतेन वक्तुं मतान्तराण्याह ॥ **जातिरेवेति** । अखण्डशब्देन नियतैकधर्मविशिष्टबोधस्थले जाति-र्वाच्या । गोत्वरूपेण वाच्यता अखण्डादिविशेषात्मकव्यक्तिरूपेण लक्ष्यतेति । एवमस्यैव वस्तुनो वाच्यता लक्ष्यतेत्यर्थः ॥ **जातिविशिष्टा इति** । जातिव्यावृत्ता व्यक्तयो वाच्या इत्यर्थः ॥ **क्वचिदिति** । गवादिपदे जातिः संज्ञाशब्दादौ व्यक्तिरित्यर्थः ॥ **क्वचिज्जातिः क्वचिद्व्यक्तिः क्वचिदाकृतिरिति** । व्यक्तिविशेषणतया जातिर्जातिविशिष्टा व्यक्तिरिति यावत् । आकाशादिपदे व्यक्तिः । यथासम्भवं गवादिपदे आकृतिरित्यर्थः ॥ **अन्यापोह इति** । अनश्वादिव्यावृत्तिरूपं सामान्यमित्यर्थः । व्यवहारा-धानत्वाद्युपपत्तेर्व्यवहारस्य च व्यक्तावेव सम्भवाद्व्यवहारविषय एव शक्तेर्युक्ततया व्यक्तेरेव वाचित्वौ-चित्यात् । आनन्त्यव्यभिचारपरिहाराय परं जातेः प्रवृत्तिनिमित्ततया पदशक्तिविषयता वाच्या । जातेश्चैकत्वे प्रमाणाभावान्न तत्सम्भव इति । सादृश्यमेवोपाधिः सङ्गताविति स्वमते उद्भाव्यमाह ॥ **व्यक्तय इति** । सादृश्यानुगमत्वादि प्रागेवोक्तम् ।

**वेदे.**— नन्वगमस्य श्रवणत्वेऽपि पदाश्रविणः श्रवणेऽप्यगृहीतसङ्गतिकस्य विस्मृतसङ्गतिकस्य वा सङ्गतिग्रहेऽप्युपक्रमादि शब्दन्यायानुसन्धानरहितस्य पुंसः प्रमापकत्वाभावात्कथं प्रामाण्यमित्यत आह ॥ **आगमोऽपीति** । न सत्तामात्रेणेत्युपलक्षणम् । न श्रवणमात्रेणेत्यादि द्रष्टव्यम् । समयस्मरणानुगृहीत इत्यत्र पदशक्तिग्रहस्य सहकारित्वमुक्तम् । तद्विषयं स्वमते निर्धारयितुं तावद्धेयताज्ञापनायातिरोहितदोषाणि मतान्तराण्यनुवदति ॥ **जातिरेवेत्यादिना** । जातेरेकत्वादुपदेशादिना तत्र शक्तिग्रह उपपद्यते । व्यक्तीनामनन्तत्वेन प्रतिव्यक्तिशक्तिग्रहासम्भवादपूर्व व्यक्तिव्यवहाराद्यनुपपत्तेः । कतिपयव्यक्तिष्वेव च शक्तिग्रहेणा पूर्वव्यक्तिव्यवहारादेर्नियामकाभावेन व्यभिचारित्वात् । तस्माज्जातिरेव वाच्या । तस्याश्चानयनाद्यनुपपत्त्या तदाश्रयीभूता व्यक्तिर्लक्ष्यत एवेति भावः । अत्र शक्तिग्राहकवृद्धव्यवहारादेर्व्यक्तावेवोपलम्भेन तत्रैव शक्तिग्रहकल्पना युक्ता । न जातौ । कदाऽपि वृद्धव्यवहाराद्यदर्शनात् । अनुगतजात्यनुपपत्तेर्वक्ष्यमाणत्वात् । आनन्त्यव्यभिचारयोश्च निरसिष्यमाणत्वात् । गामानयेत्यादौ मुख्यार्थानुपपत्त्यभावेन लक्षणयाऽपि व्यक्तिलाभासम्भवाच्चेत्यादिदोषो द्रष्टव्यः ॥ **जातिविशिष्टा इति** । अन्यथाऽऽनन्त्यव्यभिचारयोः प्रसङ्ग इति भावः । अत्रापि प्रष्टव्यम् । किं जातिविशिष्टमेकमेव शक्यं प्रवृत्तिनिमित्तं तु विशिष्टत्वमिति किंवा व्यक्तिरेव शक्त्या जातिस्तु प्रवृत्तिनिमित्तमिति । आद्ये विशिष्टस्याप्यानन्त्येन विशिष्टत्वस्य चाजातित्वेनानुगतत्वासम्भवादानन्त्यव्यभिचारतादवस्थ्यम् । शब्दव्यक्तिविशेष्यक जातिप्रकारकबोधस्यैवानुभवेन विशिष्टविशेष्यकविशिष्टत्वप्रकारकबोधापत्तिश्च । द्वितीयेऽप्यसार्वत्रिकत्वम् । आकाशादिपदेषु जात्यादिपदेषु वा प्रवृत्तिनिमित्तजात्यभावात् । तत्र प्रकारान्तरकल्पनेन द्वैविध्यकल्पनया कल्पनागौरवमित्यादि तत्रास्वरसोऽनतिरोहित इति द्रष्टव्यम् ॥ **क्वचिदिति** । गवादिपदेषु जातिः क्वचित्संज्ञाशब्दादिषु व्यक्तिरित्यर्थः । इदमपि द्वैविध्यकल्पने कल्पनागौरवप्रसङ्गेनायुक्तमिति स्फुटमेव ॥ **क्वचिज्जातिरिति** । जत्यादिपदेष्वित्यर्थः । तत्र जात्यन्तराभावेन तद्विशिष्टानुपपत्त्या जातेरेव वाच्यत्वात् । क्वचित् आकाशव्यक्त्यादिपदेषु । तत्रैकव्यक्तित्वेनाकाशत्वादेः सत्तया तुल्यत्वेन व्यक्तित्वस्य चाजातित्वेन जातिविशिष्टस्यावाच्यत्वाद्व्यक्तिरेव वाच्येति भावः । क्वचित् आकृत्यादिपदेषु । पृथिवीत्वादिना साङ्कर्येणाकृतित्वस्याजातितया तद्विशिष्टासम्भवेनाकृतेरेव तत्र वाच्यत्वमिति भावः । इदमुपलक्षणम् । क्वचिद् गवादिपदेषु जात्याकृतिविशिष्टव्यक्तिर्वाच्येत्यपि द्रष्टव्यम् । अत्राप्यनेककल्पनया कल्पनागौरवम् । गवादिपदानां त्वाकृतिविशिष्टव्यक्तौ शक्त्यङ्गीकारे च वैशेषिकपक्षोक्तविकल्पानुपपत्तिरूप दोषापरिहारः । आकृतेरपि गवादिपदवाच्यत्वे सास्नादिमान्गौरित्यत्र सास्नादिमत्पदं पुनरुक्तं स्यादित्याद्यरुचिर्नायुक्तेति ध्येयम् ॥ **अन्यापोह इति** । अतद्व्यावृत्तिरित्यर्थः । अत्राप्यतद्व्यावृत्तेरनुगतत्वे किं

सामान्येन गौरित्यादिविधिमुखप्रत्ययवेद्येन व्यावृत्तिप्रयोजकतयाऽऽवश्यकेनापराद्धम् । अननुगतत्वे त्वानन्त्यव्यभिचारापरिहार उभयत्र गौरवं चेत्यनभिमतिर्बीजमूह्यम् । इदानीं स्वमतमाह ॥ **व्यक्तय एवेति** । द्रव्यगुणक्रियाजात्यादिकं तु विशेषणभूतं प्रवृत्तिनिमित्तमिति शेषः । अत्रावधारणेन विशेष्यभूतानां व्यक्तीनामेव शक्यत्वात्पर्यायवाच्यत्वम् । प्रवृत्तिनिमित्तानां तु शक्तिं प्रति विषयतया भासमानत्वेऽपि न शक्यत्वमिति सूचयति । उक्तं च सुधायाम् । ते ते व्यावृत्ताकारा एव तैस्तैर्व्यावृत्तैर्द्रव्यगुणकर्म सामान्यैर्निमित्तैस्तत्तच्छब्दवाच्या इति । न च विशेष्यवद्विशेषणानामपि शक्तिं प्रति विषयतया भासमानत्वे शक्यत्वमस्त्विति वाच्यम् । शक्तिं प्रति विषयतया भासमानं यद्विशेष्यं तस्यैव शक्यशब्दार्थत्वात् । अन्यथा विशेषणानामपि शक्यत्वेन तेषु शक्यवृत्तित्वासम्भवेन शक्यतावच्छेदकत्व रूपप्रवृत्तिनिमित्ततायोगात् । विशेष्यमात्रस्य शक्यत्वे तु विशेषणानां तदनतिरिक्तवृत्तित्वेन शक्यतावच्छेदकत्वोपपत्तेः । न चैवं शब्दाद्विशेषाणां प्रतीतिर्न स्यादिति वाच्यम् । शक्यत्ववत्तदवच्छेदकत्वस्यापि शाब्दधीविषयत्वे तन्त्रत्वात् । कथमन्यथा परमते आकाशादिपदाशक्यस्य शब्दाश्रयत्वस्य धीः ।

**अभि.**— तेषां मतस्वरूपव्याक्रियैव तन्मतव्याक्रियेत्याशयेनाह ॥ **जातिरेवेति** ॥ **जातिविशिष्ट इति** । जातिशब्दः शब्दनिमित्तपरः । तथा चाकाशादयः सर्वेऽपि शब्दानिमित्तविशिष्टवस्तुवाचिन इत्यर्थः ॥ **क्वचिज्जातिरिति** । गवादिशब्देषु जातिः क्वचित्संज्ञाशब्देषु व्यक्तिर्वाच्येत्याहुरित्यर्थः ॥ **क्वचिज्जातिरिति** । घटत्वादिशब्दे जातिराकाशादिशब्देषु व्यक्तिः सास्नादिमच्छब्दे आकृतिर्गवादिशब्देषु त्रितयमपीत्याहुरित्यर्थः । यथाऽऽह । व्यक्त्याकृतिजातयः पदार्था इति ॥ **अन्यापोह इति** । अतद्व्यावृत्तिरित्यर्थः ॥ **व्यक्तय एवेति** । व्यज्यन्त इति व्यक्तयः । शब्दजन्यज्ञानविषय इत्यर्थः । यस्माच्छब्दाज्झटिति यावन्तोऽर्थाः प्रतीयन्ते तावन्तस्तच्छब्दवाच्या इति भावः । घटशब्देन घटघटत्वयोः प्रतीयमानत्वात्स शब्दस्तत्र शक्तः । शुक्लशब्दः गुणगुणिनोः शक्तः । गतशब्दः क्रियातदाश्रययोर्दण्डिशब्दो दण्डदेवदत्तयोः शक्त इत्यादि द्रष्टव्यम् । एतेन शब्दानां व्यक्तिमात्रे शक्तत्वात्सर्वेऽपि शाब्दबोधा निर्विकल्पकाः स्युरिति परास्तम् ।

**आद.**— ॥ **शाब्दज्ञानानुसन्धानसहित इति** । नमार्थयोरभेदेनैवान्वय इत्यादिरीत्याऽऽकाङ्क्षाज्ञानसहकृत इत्यर्थः । उपक्रमादिज्ञानानुसन्धानसहित इति वाऽर्थः ॥ **क्वचिज्जातिः क्वचिद्व्यक्तिरिति क्वचिदाकृतिरिति** ॥ **अकृत्यादिपदानामित्यर्थः** । पृथिवीत्वादिना साङ्कर्येणाकृतित्वस्य जातित्वाभावेनाकृतिरेव वाच्येति भावः । क्वचिद्व्यक्तिरित्यादावपि व्यक्तिपदादीनामित्यर्थः ॥

**व्यक्तित्वस्याप्यजातित्वादिति ॥ अन्यापोह इति ।** घटपदस्याघटव्यावृत्तिभाने वाऽर्थ इत्यर्थः ॥ **व्यक्तय एव वाच्या इति ।** अयं भावः । शक्तिर्नाम न सङ्केतः । किन्तु वाच्यवाचकभावः सम्बन्धः । वाचकत्वं च शाब्दबोधजनकत्वमेव । पदज्ञानस्य बोधजनकत्वेऽपि पदानामप्यनुभवानुसारात्कल्प्यते बोधकत्वम् । वाक्यादर्थं प्रत्येमि वाक्याद्बोधो जात इत्यनुभवात् । प्रयोजकत्वं वाऽस्तु । तस्यैव शक्तिरूपत्वमङ्गीक्रियते । इदं पदमेतादृशार्थबोधकमिति ज्ञाने सत्येव बोधोदयस्यानुभवात् । न हि बालस्य शक्तिग्रहवेलायां सङ्केतितत्वग्रहो जायते । किन्तु वाक्यविशेषस्य बोधविशेषजनकत्व-मनुमायावापोद्वापाभ्यां पदविशेषस्यार्थविशेषबोधकत्वं प्रतीयते । तज्ज्ञानादेव व्यवहार इति । यत्र सङ्केतेनार्थविशेषबोधकत्वं तत्र सङ्केतेनार्थबोधकत्वशक्तिराविर्भवति । तज्ज्ञानादेवोत्पत्तिः । एवं चानन्यलभ्यस्यैव शब्दार्थत्वात् । जातिं विना व्यक्तेर्भानायोगेन जातेर्भानसम्भवे तदंशे पदस्य शक्त्यङ्गीकारे मानाभावः । ननु तत्पदजन्यबोधविषयत्वस्यैव तत्पदवाच्यत्वपदार्थत्वेन तत्पदवाच्यत्वा-भावोक्तीरिक्तेति चेत् । अत्राहुः । तथा सति कालादेः सर्वप्रत्ययवेद्यत्वेन गवादिपदजन्यप्रतीति-विषयत्वाद्गवादिपदवाच्यत्वं स्यात् । एवं गोभाने तद्वृत्तिरूपादीनां सास्नादीनामपि भानात्तेषामपि गवादिपदशक्यत्वं स्यात् । आकृतेरपि वाच्यत्वपक्षे सास्नादीनामपि शक्यत्वाङ्गीकारेऽपि रूपादेः परिमाणादेरपि वाच्यत्वं न केनाप्यङ्गीक्रियते । न च गवि रूपादेः सास्नादेर्व्यापकतया दृष्टत्वेन तत्संस्कारवशात्पदजन्यप्रतीतौ भानेऽपि तत्र पदशक्तिर्न प्रयोजिका । ज्ञानसामान्यप्रयोजकसामग्र्यैव कालभानसम्भवेन तत्रासाधारिणी शक्तिरिति न कालस्य सर्वपदवाच्यतेति वाच्यम् । हन्त तर्हि शक्तिग्रहवेलायां यस्य प्रवृत्तिनिमित्तत्वं गृहीतं तज्ज्ञानं विना तद्वस्तुबोधाभावस्यानुभवसिद्धत्वेन पूर्वं प्रवृत्तिनिमित्तवत्तया तद्वस्तुज्ञानस्यावश्यकत्वेनोक्त ज्ञानलक्षणसन्निकर्षेण प्रवृत्तिनिमित्तस्य भान-सम्भवेन तदंशे शक्तिकल्पने वीजाभात् । अत एव तच्छब्दवाच्यत्वसन्देहे प्रवृत्तिनिमित्तधर्मो हेतुतया तच्छब्दवाच्यत्वं प्रत्यापयति । स्वस्यापि शक्यत्वे प्रवृत्तिनिमित्तत्वमेव न स्यात् । स्वस्मिन्स्वभावेऽपि तच्छब्दप्रवृत्तिसत्त्वेन प्रवृत्तिव्यभिचारात् । एवं गवादिपदेर्गोत्वादिके तात्पर्यविषयीभूते लक्षणा च न स्यात् । तस्मान्न पदजन्यप्रतीतिविषयत्वमात्रं वाच्यत्वम् ॥

किन्त्वन्वयविषयतायाः साक्षान्निरूपिता या विषयता तदाश्रयत्वमेव वाच्यत्वम् । सैव विषयता पदशक्तिप्रयोज्या । न च शक्तिग्रहवेलायां विशेषस्यापि गृहीतत्वेन तस्यापि तत्संस्कारादिनैव भानमास्ताम् । संसर्गमात्रस्य पदशक्त्या भानमस्त्विति वाच्यम् । संसर्गमात्रे शक्त्यङ्गीकारे किञ्चिन्निष्ठसांसर्गिकविषयताकबोधजनकमिदं पदमित्याकारकत्वापत्त्या तत्र घटपदाद्घटरूपव्यक्तिबोध नियमाभावप्रसङ्गात् । घटनिष्ठविषयता निरूपितसंसर्गताशालिबोधनजनकपदमिदमित्याकारकत्वे घट-

विषयताऽपि पदप्रयोज्येत्यागतमेव शक्यत्वम् । अन्यधर्मविशिष्टत्वस्यापि पूर्वं ज्ञानसत्त्वेऽपि तात्पर्ये तदन्वयस्यापि बोधापत्तेः । विशेषशक्त्यङ्गीकारे तु व्यक्त्यन्तरे शक्त्यङ्गीकारे तु व्यक्त्यन्तरप्रतियोगिकान्वयबोधकशक्तेरभावादेव नापत्तिः । न च बाधितस्य पूर्वोपस्थितस्य धर्मान्तरस्याप्यन्वयप्रतियोगितयाऽनुयोगितया वा भासमाने विशेष्ये भानापत्तिः । इष्टापत्तेः । अत एव घटमानयेत्यादौ स्वकीयत्वाच्छिद्रत्वादेर्घटादौ भानम् । अन्यथाऽन्यदीयघटस्याप्यानयनापत्तेः । न च प्रवृत्तिनिमित्तधर्मस्य नियमेन भानं स्यादिति वाच्यम् । प्रवृत्तिनिमित्तधर्मविशिष्टे शक्तेर्ज्ञातत्वेन प्रवृत्तिनिमित्तस्य भानं विना विशिष्टस्य भानासम्भवात् । न चैवं प्रवृत्तिनिमित्तेऽपि शक्तिरागतैव । तथा च नैयायिकमताविशेषः स्यादिति वाच्यम् । न्यायमते प्रवृत्तिनिमित्तविशिष्टे शक्तेर्भानेऽपि धर्मिपारतन्त्र्येण प्रवृत्तिनिमित्तेऽपि भानं स्वीकार्यम् । मन्मते विशिष्टस्य भिन्नत्वेन तद्धर्मभानं विना तद्धर्मविशिष्टस्य भानायोगेन धर्मांशे शक्तेर्भानाभावेन विशेषसत्त्वात् । तथा च पदशक्तिज्ञानप्रयोज्याविषयता व्यक्तावेवेति व्यक्तय एव वाच्या न तु जातयः । ननु संसर्गस्यापि पदप्रयोज्यविषयताश्रयत्वेनैवेत्यवधारणानुपपत्तिः। जातिमात्रव्यवच्छेदार्थकत्वात् । संसर्गतारूपविषयताया अस्वतन्त्रत्वेन विशेष्यताया एव मुख्यात्वात्तदाश्रय एव वाच्यत्वव्यवहारस्य युक्तत्वाच्चेति । सादृश्यमित्युपलक्षणम् । शक्यतावच्छेदकत्वेनाभिमतधर्मान्तरम् । उपधानं स्वविशिष्टे शक्यत्वज्ञापकं न तु स्वातन्त्र्येण शक्यमित्यर्थः । केचित्तु व्यक्तय एवेति विशिष्टस्यातिरिक्तत्ववादिनां विशिष्टं विशेष्यापादानकं तेन सह भिन्नाभिन्नं क्वचिदभिन्नमपि विशेषवत् । एवं च गवादिपदेषु गोत्वादिविशिष्टरूपा व्यक्तय एव वाच्याः । तदभिन्नत्वाद्गवादयोऽपि वाच्या इत्युच्यन्ते । गोत्वादिकं तु विशिष्टाद्भिन्नमिति न वाच्यमिति भावः । अत एव गोत्वं गोपदवाच्यमिति ज्ञानं तन्मतेऽपि भ्रम इति । सादृश्यं जातिरित्यर्थः । सादृश्यातिरिक्तजात्यङ्गीकारे मानाभावेन सादृश्यस्यैव जातित्वमित्यभिप्रायेणेदम् । सादृश्यं च सामान्यं वा धर्मान्तरं वेति नान्यावयवसंयोग इति वक्ष्याम इत्युक्तं सुधायामन्यथाख्यातिवादे रामानुजमतनिराकरणप्रस्तावे । अत एव सूत्रकृता सादृश्यवाचकं तथा जातिवाचकं सामान्यपदं प्रयुक्तं गतिसामान्यादितरे त्वर्थसामान्यादित्यत्र सादृश्यसामान्ययोरैक्यमिति सूचनमेव तत्फलम् । अन्यथा सूत्रस्याल्पाक्षरत्वाय साम्यादित्येव ब्रूयात् । प्राचीनटिप्पण्यां प्रकारान्तरेण सामान्यपदस्य प्रयोजनस्य कथनेऽप्यविरुद्धत्वादिदमपि प्रयोजनकथनं युक्तमेवेत्याहुः । परे तु प्रवृत्तिनिमित्तस्य नियमेन भानं तु व्यक्तेः प्रवृत्तिनिमित्तवत्तयाऽज्ञातत्वे तत्पदबोध्यत्वासम्भवेन नियमेन पूर्वं तथा ज्ञातत्वात्पदजन्यप्रतीतौ नियमेन भासकसामग्रीसत्त्वादेव भवति । धर्मान्तराणां न नियमेन भानम् । नियमेन तद्भासकसामग्र्यभावात् । ननु शाब्दबोधसंस्कारस्य ज्ञानस्वाऽर्थान्तरभासकत्वं न सम्भवति । करणासन्निकृष्टस्य ज्ञाने भानेऽति प्रसङ्गात् । संस्कारस्य

ज्ञानस्य वा मनःपरिणामत्वेन मनःसम्बन्धित्वान्मनस एव सन्निकर्षत्वं युज्यते । मनसश्चक्षुरादिनिष्ठ-प्रत्यक्षानुकूलशक्त्युत्तम्भकत्वान्मनसः संस्कारस्य मनोद्वारा चक्षुरादिसन्निकर्षत्वं तज्जन्यप्रत्यक्षेऽ-र्थान्तरभासकत्वं च युज्यते । *मनसश्चक्षुरादिनिष्ठशक्त्युत्तम्भकत्वाभावे मनसाऽसन्निकृष्टेन चक्षुषा* प्रत्यक्षप्रसङ्गात् । शाब्दबोधेऽनुमितौ च मनः साधारणमेव कारणम् । *तत्सम्बन्धिसंस्कारस्य पदज्ञान*-रूपकारणम् । सम्बन्धित्वाभावात् तत्सन्निकर्षासम्भवात् तज्जन्यबोधे प्रवृत्तिनिमित्तस्य भानं न सम्भवति । यथाकथञ्चित्सम्बन्धित्वस्यातिप्रसञ्जकत्वान्न सन्निकर्षताप्रयोजकत्वम् । संस्कारानुगृहीत-मनोजन्यत्वस्याप्यङ्गीकारे मानसप्रत्यक्षत्वापत्तिः । न चैकस्मिन्नेव शाब्दत्वप्रत्यक्षत्वयोरङ्गीकारो युक्तः। तथा सत्युक्तन्यायेन सर्वत्र शाब्दबोधे पदात्स्वरूपतो व्यक्तिभानसम्भवेन धर्मविशेषांशे प्रत्यक्ष-त्वाङ्गीकारापत्त्या प्रत्यक्षत्वस्य शाब्दत्वव्यापकत्वापत्त्या त्रिविधं प्रमाणमिति विभागव्याघातापत्तिः । एवं सर्वत्रापि वाक्ये न्यूनताया दोषत्वापत्तिः । संस्कारबलादेव शाब्दबोधोपपत्त्या पदाभावेऽपि दोषाभावात् । एवमध्याहारादेः करिष्यमाणस्यासङ्गत्वापत्तिश्चेत् । सत्यम् । संस्कारस्य न भासकत्वं सर्वत्रेति तथाऽप्यनुमितौ व्याप्त्यनिरूपकस्यापि व्यापकतावच्छेदकस्य व्याप्तिज्ञाने व्यापकतया भाना-देवानुमितौ साध्यांशे भानमिव पदनिष्ठशक्यनिरूपकस्यापि प्रवृत्तिनिमित्तधर्मादेः पदवृत्तितावच्छेदक-तया वृत्तिग्रहे भानस्यैव शाब्दबोधे भाने निमित्तत्वेन भानोपपत्तेः वृत्तितावच्छेदकत्वं च वृत्तिग्रहे इतरव्यावर्तकतया वृत्तिनिरूपके प्रकारतया भासमानत्वमेव शक्यत्ववच्छक्यतावच्छेदकत्वस्यापि सन्निकर्षत्वसम्भवात् । अशक्यत्वमात्रेण भानानुपपत्तौ व्याप्यनिरूपकत्वेन व्याप्यतावच्छेदकादेरपि भानानुपपत्तिप्रसङ्गः । न चैवं पदज्ञानेनैव भानाङ्गीकारे तदनुकूला शक्तिरागतैव पदेऽपीति वाच्यम् । सत्त्वेऽपि तज्ज्ञानस्यावश्यकत्वात् । अज्ञायमानायाः शक्तेराकाङ्क्षा ज्ञानादावपि सत्त्वेन तस्या रूढिपदार्थत्वाभावात् । यस्य ज्ञायमानाशक्तिर्भासिका तस्यैव वाच्यत्वम् । एवं च शक्यांश एव ज्ञायमाना शक्तिर्बोधकारणमिति व्यक्तिरेव वाच्या । प्रवृत्तिनिमित्तांशे शक्तिज्ञानस्याकारणत्वात् । प्रवृत्तिनिमित्तस्यावाच्यत्वमिति गोपदाद्गोरेव भानम् । आकृत्यादीनां तु पाश्चात्यमानसबोधेऽनुमानादिना वेति बोध्यमित्याहुः ।

**वि.—** नन्वासम्यक् स्वार्थज्ञापको ह्यागमो भवति । तथा च स्वरूपेण सतोऽपि निर्दोषशब्दस्य स्वार्थबोधकत्वात्कथं निर्दोषशब्द आगम इत्युच्यत इत्यत आह ।। **आगमोऽपीति** । निर्दोषः शब्द आ सम्यग्ज्ञापकोऽपीत्यर्थः । श्रुत इत्यनेन ज्ञातत्वमुपलक्ष्यते । अन्यथा ज्ञातशब्दः सम्यक् स्वार्थज्ञापको भवतीति सम्यगित्युक्तम् । समयः पदानां वाचकत्वरूपा शक्तिरित्यर्थः । शब्दन्यायो वाक्यार्थ-प्रतीत्यनुकूलोपक्रमादिन्याय इत्यर्थः । चक्षुरादिवत्स्वरूपसत्तामात्रेण निर्दोषशब्दस्य स्वार्थबोधकत्वा-

भावेऽपि सम्यग्ज्ञातस्य शक्तिस्मरणादियुतस्य तदस्तीत्यागमशब्दार्थत्वं युक्तमिति भावः । निर्दोषः शब्दः सम्यग्ज्ञातः समयस्मरणादिसहकृतपदो वाऽर्थसंसर्गरूपस्वार्थबोधक इत्युक्तम् । तत्र पदार्थः क इति जिज्ञासायां वाद्यन्तरोक्तप्राकारस्य हेयताज्ञापनाय परोक्तप्रकारमनुवदति ॥ **जातिरेवेत्यादिना ।** पदानां जातिरेवाभिधेया न तु व्यक्तिरित्यर्थः । तर्हि गोपदाद्गोव्यक्तेः कथं प्रतीतिरित्यत आह ॥ **व्यक्तयस्त्विति ।** स्वमतमाह ॥ **व्यक्तय एवेति ।** पदानां व्यक्तय एव वाच्या न तु वाद्यन्तरोक्तरीत्या जातिरेव जातिविशिष्टा व्यक्तिर्वा जातिर्वा व्यक्तिर्वा क्वचिदवयवसंस्थानविशेषरूपाकृतिर्वाऽन्यापोह-रूपेतरव्यावृत्तिर्वा वाच्येत्यर्थः । शक्तिग्राहकस्यानयनादिव्यवहारस्य व्यक्तावेव सम्भवाद्व्यक्तेरेव वाच्यत्वे सम्बन्धाभावेन शब्दात्तत्प्रतीत्ययोगाच्च व्यक्तय एव वाच्याः । न च लक्षणया व्यक्तिप्रतीतिः। समयस्य वृत्तिरूपवाच्यवाचकभावसम्बन्धेनैव तत्प्रतीत्युपपत्तौ बाधकाभावेनामुख्यवृत्तिरूपामुख्य-सम्बन्धकल्पनायोगादिति भावः । ननु व्यक्तेरेव वाच्यत्वे गोपदाद्गोपदवाच्यत्वविशिष्टव्यक्तिप्रतीतिर्न स्यादतिप्रसङ्गादिति चेन्न । वाच्यस्येव वाच्यतावच्छेदकस्यापि शब्दजन्यप्रतीतिविषयतायां तन्त्रत्वेनाति प्रसङ्गाभावात् । शब्देन प्रवृत्तिनिमित्तगोत्वादिविशिष्टव्यक्तेः प्रतीतिसम्भवात् ।

ननु गोत्वस्य प्रत्याश्रयं भेदेनैव तद्गोगतगोत्वस्य गोशब्दप्रवृत्तिनिमित्तमिति व्यक्त्यन्तरेऽसत्त्वात्कथं गोपदप्रवृत्तिनिमित्तत्वमिति वाच्यम् । प्रत्याश्रयभिन्नानां द्रव्यमिव गुणकर्मणामिव प्रत्याश्रयं भिन्नस्य सामान्यस्यापि प्रवृत्तिनिमित्तत्वसम्भवात् । दण्डिशुक्लपाचकशब्दप्रवृत्तिनिमित्तेषु दण्डशुक्लकर्मसु दण्ड-त्वादिकमस्तीति चेत् । किं तावता प्रवृत्तिनिमित्तादीनां दण्डादीनामननुगतत्वापरिहारात् । न ह्येकं दण्डत्वादिकं सकलदण्डादिसम्बन्धीत्येतावतैकोदण्डादिरपि सकलदण्ड्यादिसम्बन्धीति सम्भवति । अनुभवविरोधात् । गोत्वादिसामान्यानामपि धर्मित्वेन प्रतियोगित्वेनैकसादृश्यसम्बन्धाद्दण्डादेरिव प्रवृत्तिनिमित्तापत्तेश्च । तदुक्तं सुधायाम् । ते ते प्रवृत्ताकारा एव तैस्तैर्व्यावृत्तैर्द्रव्यगुणकर्म-सामान्यैर्दण्डादिरूपद्रव्यैः शुक्लादिरूपगुणपचनादिरूपकर्मगोत्वादिरूपैः सामान्यैर्निमित्तैः प्रयोजकै-र्वाच्या इत्यर्थः । यद्वा व्यक्तय एव वाच्या इत्यत्र परमतोक्तप्रकारव्यवच्छेदमात्रमेवकारार्थः । न तु प्रवृत्तिनिमित्तव्यवच्छेदोऽपि । न चैवं जातिविशिष्टव्यक्तेर्वाच्यत्वनिरासायोगः । अनुगतगोद्वारैः प्रवृत्तिनिमित्तत्ववाच्यत्वं चाभ्युपेत्य पराभिमतनित्यानेकसमवेतजातिविशिष्टव्यक्तेर्वाच्यत्वानङ्गीकारेण तत्पक्षनिरासस्मभवात् । तस्मिन्पक्षे सुधायां निमित्तैरिति तृतीया सह योगे तथा च तैस्तैर्व्यावृत्तैरेव प्रत्याश्रयं भिन्नैरेव द्रव्यगुणकर्मसामान्यैः प्रवृत्तिनिमित्तैः सहितास्ते ते विभिन्ना दण्डादिरूपव्यक्तयो वाच्या इति सुधार्थः । ननु व्यक्तयो वाच्या इत्युक्तम् । अतीतानागतेति विप्रकृष्टसम्बन्धिज्ञानासम्भवेन सर्वोपसंहारेण तत्सम्बन्धरूपशक्तेर्ज्ञातुमशक्यत्वात् । अनन्तव्यक्तिसङ्ग्राहकस्यैकस्याभावेनैव व्यक्तयो

वाच्या इति निर्णयायोगाच्चेत्यत आह ॥ **समयप्रतिपत्ताविति** । पदपदार्थयोर्वाच्यवाचकभावरूपः सम्बन्धः । समयस्तस्य प्रतिपत्तौ सर्वोपसंहारेण प्रतीतावत्रैवेति निर्णयरूपप्रतीतौ च सादृश्यं पदार्थानामन्योन्यसादृश्यमुपाधानमुपाधिः प्रयोजकमित्यर्थः । इदमुक्तं भवति । समयप्रतीतौ विषयभूतं यत्प्रयोजकं तत्प्रवृत्तिनिमित्तमित्युच्यते । यत्तटस्थं तत्र तन्त्रं तदुपधानमिति व्यवह्रियते । तथा च यथा सर्वनाम्नो वक्तृबुद्धिस्थतामुपधानीकृत्यार्थेषु शक्तिर्गृह्यते । तथा गवादिपदानामपि सादृश्यमुपधानीकृत्यार्थेषु शक्तिर्गृह्यते । यदत्रोक्तम् । सकलव्यक्तिरूपसम्बन्धिग्रहासम्भवात्तत्सम्बन्ध रूपशक्तिग्रहो न सम्भवतीति । तदयुक्तम् । यथाऽनुगतधर्मवादे इन्द्रियसन्निकृष्टव्यक्तिनिष्ठगोत्वाभिव्यङ्ग्यान्तरङ्गसादृश्यसामान्यस्य सकलव्यक्तिसम्बन्धित्वेनेन्द्रियप्रत्यासत्तितया सकलव्यक्त्युपस्थापकत्वादुपस्थितेषु व्यक्तिरूपसम्बन्धिषु शक्तिग्रहस्तथाऽस्मन्मतेऽपीन्द्रियसन्निकृष्टव्यक्तिनिष्ठगोत्वाभिव्यङ्ग्यान्तरसादृश्यस्यातीतानागत विप्रकृष्टसकलव्यक्तिप्रतियोगित्वेन सकलव्यक्तिसम्बन्धित्वादिन्द्रियप्रत्यासत्तित्वेन सकलव्यक्त्युपस्थापकत्वादुपस्थापितव्यक्तिरूपसम्बन्धिषु शक्तिग्रहोपपत्तेः । सादृश्यमपि नैकमस्तीति चेत् । किं तावतेन्द्रियसन्निकृष्टव्यक्तिनिष्ठस्यैकस्यैव सादृश्यस्य सकलव्यक्तिवृत्तित्वाभावेऽपि सकलव्यक्तिसम्बन्धित्वेन प्रत्यासत्तितया सकलव्यक्त्युपस्थापकत्वात् समयप्रतीतिप्रयोजकत्वोपपत्तेः । नापि सकलव्यक्तिसङ्ग्राहकाभावेनैतावान्वाच्य इति निर्णयाभावः । सकलगोव्यक्तीनां धर्मत्वेन प्रतियोगित्वेनैकसादृश्यसम्बन्धित्वेन गोत्वाभिव्यङ्ग्यसादृश्य सम्बन्धियावांस्तावान् गोशब्दवाच्य इति निर्णयसम्भवादिति । तदुक्तं सुधायाम् । सादृश्यस्य सम्बन्धित्वेऽपि प्रतियोगिनिरूप्यत्वेनानुगत फलसाधकत्वानुभवादिति । सादृश्यस्य व्यावृत्तत्वेऽपि प्रत्याश्रयं भिन्नत्वेऽपि प्रतियोगिनिरूप्यत्वेन प्रतियोगिपदमधिकरणस्याप्युपलक्षणम् । प्रतियोग्यधिकरणनिरूप्यत्वेनानुगतफलस्यानन्तव्यक्तिरूपसम्बन्ध्युपस्थितेः । सर्वोपसंहारेण शक्तिग्रहस्यैतावान्वाच्य इति निर्णयस्य च साधकत्वानुभवात् । प्रयोजकत्वाभावादित्यर्थः ।

## योग्यतरान्विताभिधानवादः

**(५) प्र.प.— ननु समयो नाम पदानां पदार्थानां च वाच्यवाचकभावसम्बन्धः । स च सम्बन्धिष्वज्ञातेषु ज्ञातुमशक्य इति पदार्थज्ञानस्य प्रागेव सिद्धत्वात्किमागमस्य प्रयोजनम् । उच्यते । यथा ज्ञातयोरपि धर्मधर्मिणोः संसर्गोऽनुमानेन बोध्यते । तथा ज्ञातानामेव पदार्थानामन्वयविशेषस्यागमो बोधकः । पदानां पदार्थमात्रविषयत्वेनान्वयबोधकं न किञ्चिदस्तीति चेत् । अत्र वर्णपदाभिव्यक्तोऽखण्डः स्फोटाख्यः शब्दोऽन्वयबोधक इति वैयाकरणा ब्रुवते । वर्णमालेत्यपरे ।**

**वाक्यान्त्यो वर्ण इत्यन्ये । पदानां सान्निध्यमिति केचित् । पदैरभिहिताः पदार्था एवाकाङ्क्षादि-शालिन इति भाट्टाः । सर्वेषां पक्षाणामप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च पदान्येवान्वित-स्वार्थाभिधायिनीति प्रेक्षावन्तः । तत्र प्रत्येकमपि पदान्वयविशेषाभिधानसमर्थानीति प्राभाकराः । प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहित-शक्त्यन्तराणि विशेषतोऽप्यन्वितान्स्वार्थानभिदधति । तथाऽनुभवादित्याचार्याः ।**

**जना.—** ॥ **नन्विति** ॥ **प्रागेवेति** । समयप्रतिपत्तेरिति शेषः ॥ **यथेति** ॥ **ज्ञातयोरिति** । व्याप्तिग्रहकाल इति शेषः ॥ **धर्मधर्मिणोरिति** । साध्यपक्षयोरित्यर्थः ॥ **पदानामिति** ॥ **पदार्थ-मात्रविषयत्वेनेति** । तत्तन्मात्रप्रतिपादकत्वेनेत्यर्थः ॥ **न किञ्चिदिति** । समुदायभूतपदापेक्षयाऽतिरिक्त समुदायाभावादिति भावः ॥ **अत्रेति** । अस्मिन् प्रचोद्य इत्यर्थः । अखण्डो नित्य इत्यर्थः । स्फोटे प्रमाणं नास्तीति विष्णुतत्त्वनिर्णयटीकायां प्रतिपादितत्वादेतदनुपपन्नमिति ज्ञेयम् ॥ **वर्णमालेति** । एतन्मते गौरश्वः पुरुषो हस्तीत्यादेरप्यन्वयबोधापत्तिरिति दूषणं द्रष्टव्यम् ॥ **वाक्यान्त्य इति** । एतन्मतेऽश्रुतपूर्ववर्णस्याप्यन्त्यवर्णश्रवणमात्रेणान्वयबोधापत्तिः । पूर्ववर्णानुभवजनितसंस्कारसहकृत इत्यादि विशेषणदाने चास्मत्सिद्धान्तानतिरेक इति दूषणं द्रष्टव्यम् ॥ **पदानामिति** । अत्रापि गौरश्वः पुरुष इत्यादिपदजातादन्वयबोधापत्तिरिति दूषणं द्रष्टव्यम् ॥ **पदैरिति** । अत्रापि पदार्थानामतीता-नागतादिरूपत्वेनान्वयबोधकत्वं न सम्भवति । शब्देनायमर्थो ज्ञात इत्यनुभवबाधश्च । गौरश्वः पुरुषो हस्तीत्यन्वयबोधापत्तिरिति दूषणानि द्रष्टव्यानि ॥ **सर्वेषामिति** । अत्राप्रामाणिकत्वमुक्तप्रकारेण पञ्चस्वपि पक्षेषु द्रष्टव्यम् । प्रमाणविरुद्धत्वात्पदैरेवामुमर्थं प्रत्येमीत्यनुभवरूपप्रमाणविरुद्धत्वादित्यर्थः। पदैरेवामुमर्थं प्रत्येमीति साधारणानुभवादिति भावः ॥ **अन्वितेति** । स्वसमभिव्याहृतेतर-पदार्थान्वितेत्यर्थः ॥ **प्रेक्षावन्त इति** । प्राभाकरा वयं चेत्यर्थः । ननु पदानामन्विताभिधानविषये प्राभाकराणामस्माकं च किं सर्वात्मना साम्यं नेत्याह ॥ **तत्रेति** । पदानामेवान्वितस्वार्थाभिधायित्वे सिद्धे सतीत्यर्थः ॥ **प्रत्येकमपीति** । पदान्तरसमभिव्याहारेऽपीत्यर्थः ॥ **इति प्राभाकरा इति** । वस्तु-तस्तु नैवम् । आकाङ्क्षादिमत्पदान्तरसमभिव्याहारेणैव विशेषान्वयलाभे सति तत्र पदानां सामर्थ्य-कल्पने मानाभावादिति भावः । प्राभाकरग्रहणसूचितं तन्मतविलक्षणं स्वमतमाह ॥ **प्रत्येकमिति** । पदान्तरसमभिव्याहारेऽपीत्यर्थः ॥ **सामान्यत इति** । न विशेषत इत्यर्थः । अनेन प्राभाकरमतं प्रतिक्षिपति । तथा च सामान्यान्विते पदानां शक्तिरिति स्वमतमिति सूचयति । आवापोद्वापाभ्यां प्राथमिकव्युत्पत्तिकाले प्राथमिकव्युत्पत्तिहेतुनाऽन्वितविषयकेण व्यवहारेण सामान्यतो योग्येतरान्वित एव पदानां शक्तिग्रहादिति भावः । तदुक्तमनुव्याख्याने ।

**शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ।**
**अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथेति ।**

अत्र बहु वक्तव्यमस्ति । विस्तरभयादुपरम्यते । ननु पदानां विशेषान्विते शक्त्यभावे कथं तद्विशेषान्वयबोध इत्यत आह ॥ **पदान्तरेति** । पदान्तरसन्निधानमेवाहितशक्त्यन्तरमेषां तानीत्यर्थः । न तु पदान्तरसन्निधानेनाहितशक्त्यन्तर माधेयशक्तिर्येषामित्यर्थः । शक्तिद्वयाङ्गीकारे गौरवात् । पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषे पर्यवसान एव हेतुर्न पुनरविद्यमानशक्त्याधान इति सुधा-विरोधाच्च । पदानां सामान्यान्विताभिधायित्वे किं मानमित्यत आह ॥ **तथेति** । प्राथमिकव्युत्पत्तिकाले क्रियाश्रवणे कारकविशेषजिज्ञासायां कारकमात्रश्रवणे च क्रियाविशेषजिज्ञासा च जायते । पदात् सामान्यान्वयज्ञानाभावे विशेषजिज्ञासा च न स्यात् । तस्याः सामान्यान्वयज्ञानसाध्यत्वादिति भावः ।

**राघ.**— पदानामर्था एवागमार्थ इति मत्वा शङ्कते ॥ **नन्विति** । पदार्थेभ्योऽन्योऽस्त्यागमार्थ इति सदृष्टान्तं प्रतिज्ञापूर्वमाह ॥ **उच्यत इत्यादिना** । अन्वयविशेषस्य क्रियाकारकादिरूपान्वय-विशेषस्येत्यर्थः । अन्वयसामान्यस्यापि पदार्थस्येव पदेनैव पदान्येवेत्यादिना वक्ष्यमाणदिशा बोध्यत्वादन्वयविशेषस्येत्युक्तम् । घटकर्मकमानयनमित्यादिरूपविशेषस्य पदकदम्बकरूपागमो बोधक इत्यर्थः । आगमस्यान्वयविशेषबोधकत्वेनोक्तं सार्थक्यमयुक्तमिति शङ्कते ॥ **पदानामिति** । इति चेच्छङ्कसे । अत्र त्वच्छङ्कितार्थविषय इत्यर्थः । वर्णमालेत्यादावन्वयविशेष बोधिकेत्यादिरूपेण यथा योगमनुषज्यते । स्मर्यमाणा वर्णमालेत्यर्थः । अप्रामाणिकत्वात्प्रमाण विरुद्धत्वादिति । पदानामेव सामान्यतो योग्येतरान्वितस्वार्थबोधकत्वस्य सर्वानुभवसिद्धत्वात्स्फोटादि नाऽन्वयबोधस्यानानु-भाविकत्वादिति भावः । स्फुस्टीकृतमेतेद्धतुद्धयं

**शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ।**
**अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा ॥**

इति जिज्ञासाधिकरणानुव्याख्यानस्थचतुर्थपादव्याख्यानावसरे सुधायाम् । प्रपञ्चितं च तर्कताण्डवेऽन्विताभिधानवादे ॥ **तत्रेति** । पदान्येवान्वितस्वार्थाभिधायिनीत्युक्तार्थविषये प्राभाकरा इत्याहुरित्यर्थः । पदान्तरसन्निधानाहितशक्त्यन्तराणीति बहुव्रीहिः । व्याख्यातमेतद्वाक्यं तर्कताण्डवे । पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरमेषामित्यर्थः । न तु पदान्तरसन्निधानेनाहितं शक्त्यन्तरमाधेयशक्तिर्येषामित्यर्थः । शक्तिद्वयाङ्गीकारे गौरवात् । पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसानहेतुः । न पुनरविद्यमानशक्त्याधाने हेतुरिति सुधाविरोधश्चेति ॥ **इत्याचार्या इति** ।

**अतः सामान्यतो ज्ञातः पदान्तरबलात्पुनः ।**
**भवेद्विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिता ॥**

इत्यादि भक्तिपादीयानुव्याख्यानोक्तेर्युक्तिरपि तत्रैव ज्ञेयेति भावः ।

**विज.**— शब्दस्याज्ञातज्ञापकतां समर्थयितुं शङ्कते ॥ **नन्विति** । समाधत्ते ॥ **उच्यत इति** । शक्यं हि बोधनीयम् । न च पदार्थातिरिक्तोऽन्वयः शक्यस्तज्ज्ञापकतया प्रामाण्यमसम्भवतीति स्वाभिप्रायं शङ्कित्वाऽऽह ॥ **पदानामिति** । परिहर्ताऽन्वयबोधकत्वं समर्थयन्मतान्तराणि निगदेनैव परिहृतान्याह ॥ **अत्रेति** । प्रत्येकवर्णस्याबोधकत्वात् । शब्दानां नित्यविभुतया क्रमासम्भवेन तत्कृत-विशेषानुपपत्तेरेकं पदमिदमिति व्यवहाराच्चाखण्डः स्फोटाख्यः शब्दपदैरभिव्यक्तौ बोधक इत्यर्थः । अत्राभिव्यञ्जकत्वं यादृशस्य तादृशस्यैव बोधकत्वं सम्भवतीति स्फुटोऽप्रामाण्याख्य इत्यभिव्यक्तिपदेन परिहारः सूचितः । द्वितीयादिपक्षद्वयं पदमालाभ्यामन्त्यवर्णं च शक्त्यन्तराभावादयुक्तम् ॥ **पदाना-मिति** । सान्निध्यमुपलक्षणम् । आकाङ्क्षायोग्यतयोरपि । तथा च सान्निध्यादिसाहित्येन पदानां पदार्थशक्तानामन्वयबोधकत्वमिति फलितोऽर्थः । एतदप्ययुक्तम् । पदार्थशक्ततया ज्ञानेनान्वयबोधा-सम्भवात् । यच्छक्ततया पदं ज्ञायते तस्यैव बोधकत्वात् पदानामन्यथाऽतिप्रसङ्गादिति ॥ **पदैरिति** । पदार्थोपस्थित्यैवान्वयबोधात्पदार्थोपस्थितौ च पदवृत्त्युपयोग इति न शक्येदेवेति भावः । एवं सत्यन्वयबोधस्य शब्दत्वं न स्यादिति पदार्था एवेति वदता परिहृतम् । पदार्थोपस्थितिद्वारा पदानामुपयोगशक्तिं विनाऽन्वयबोधोपयोगः शब्दस्यैव वृत्त्यैव बोधकत्वादिति भावः । गुरुः स्वमत-साधारणमंशमाह ॥ **सर्वेषामिति** । गुरुमते विशेषमाह ॥ **प्रत्येकमिति** । सामान्य एव शक्तिर्विशेषान्वयबोधानुकूलानुशक्तिः । पदान्तरसन्निधानाहितेत्यर्थः । तत्र प्रमाणमनुभव इति तथेत्य-नेनोक्तम् । पदविशेषसन्निधानेऽन्वयविशेषानुभव इति तावदनुभवसिद्धम् । शब्दस्यानुभवः शक्ति-साध्योऽन्यथाऽतिप्रसङ्गात् । तत्र पदान्तरासन्निधाने सामान्यशक्तावपि विशेषबोधानुकूलं शक्त्यन्तरमेव वाच्यमिति भावः ।

**वेदे.**— ननु त्वन्मतेऽपि शक्तिग्रहकाले सर्वगोव्यक्त्युपस्थित्यसम्भवात्कथं गोशब्दस्य सर्वगो-व्यक्त्युपसंहारेण शक्तिग्रहः । अनुगतसामान्यस्यानङ्गीकारात् । आनन्त्यव्यभिचारपरिहारोपायानुप-न्यासाच्चानुपपत्तिरवशिष्टेत्यत आह ॥ **समथेति** । व्युत्पत्तिरपि हि सादृश्येनैव गम्यत इति तदुक्तेरिति भावः । उपधानं लिङ्गं न शब्दशक्तिविषयतया प्रवृत्तिनिमित्तम् । यथा गन्धवत्त्वं पृथिवीपद-प्रवृत्तिनिमित्तमपि तद्वाच्यत्वे लिङ्गमित्यर्थः । एवं च न युगपदेन सर्वत्र शक्तिग्रहः । येन सर्व-

व्यक्त्युपस्थितिरपेक्षिता स्यात् । किञ्चित्सन्निकृष्टव्यक्तिषूपदेशादिनैव शक्तिग्रहेऽनन्तरमसन्निकृष्ट-व्यक्तिष्वनुमानेनैव शक्तिग्रह इति भावः । अस्ति तावत्सादृश्यं नाम पदार्थान्तरमखण्डं प्रत्यक्षादि-सिद्धम् । सङ्गतिग्रहणोपायाश्चानेके । तत्र यदा परोपदेशेन व्युत्पत्तिस्तदाऽयं गौरित्युपदेशवाक्यं व्याप्तिग्राहकतयोपयुज्यते । वक्तृश्रोत्रोः सर्वत्र व्युत्पत्तिकामत्वेनोक्तवाक्यस्यायमेतत्सदृशाः सर्वेऽपि गोशब्दवाच्या इत्यर्थकत्वात् । यदा तु व्यवहारतो व्युत्पद्यते तदाऽपि भूयोव्यवहारादिदर्शनेन सादृश्यव्याप्यतावगमो भवति । ततश्चैतद्वाक्यादिना त्ववगतव्याप्तिः पिण्डान्तरदर्शनेऽनुमिनोति । अयं गोशब्दवाच्यो भवितुमर्हति तत्सदृशत्वादिति । आगमगम्यव्याप्तौ दृष्टान्तनियमाभावान्न दृष्टान्ता-भावदोषः । न च गवये व्यभिचारः । सास्नादिमत्त्वप्रयुक्तान्तरङ्गसादृश्यस्यैव लिङ्गत्वात् । अन्यथा परमते उपमितौ गोसदृशपश्वेतरस्यापि गवयशब्दवाच्यताधीः स्यादिति सुधानुसारेण व्याख्येयम् । ननु तथाऽपि सर्वव्यक्त्युपस्थित्युपायानिरूपणेन सर्वोपसंहारेण व्याप्तिग्रहानुपपत्त्याऽनुमानेनापि शक्ति-ग्रहोऽनुपपन्न एवेति चेत् । सामान्याकारेण सर्वव्यक्त्युपस्थितेः साक्षिरूपत्वेन प्राणभृन्मात्रसिद्धत्वात् । तदुक्तमनुव्याख्याने । अतः सर्वे पदार्थाश्च सामान्यात्साक्षिगोचरा इति । यद्वा सादृश्यमुपधानं प्रत्यासत्तिरित्यर्थः । एवं च यथा परमते सामान्यप्रत्यासत्त्याऽशेषगोव्यक्त्युपस्थितौ तासु गोपदशक्ति-ग्रहस्तथाऽस्मन्मतेऽप्युपदेशव्यवहारादिना शक्तिग्रहकाले उपस्थितगोव्यक्तिविशेषधर्मिकातीतानागत-सकलगोव्यक्तिप्रतियोगिकसादृश्यप्रत्यासत्तिकेन्द्रियेणैव सकलगोव्यक्त्युपस्थितिसम्भवेन तत्र शक्ति-ग्रहोपपत्तिः । इयांस्तु भेदः । त्वन्मते जातिरतीताद्याश्रिता । मन्मते तु सादृश्यं ध्वंसादि-वत्सप्रतियोगित्वेन तत्सम्बद्धमिति । युक्तं च तदनाश्रितत्वेऽपि संस्कारवत्प्रत्यासत्तित्वेन तदुपस्थाप-कत्वम् । न च सादृश्यप्रतियोगित्वं व्यक्तिषु नानेति वाच्यम् । तवापि गोत्वसमवायस्याश्वादावपि सत्त्वेनाधारत्वमात्रस्य कालेऽपि सत्त्वेन स्वरूपसम्बन्धिविशेषाणामेव तत्तद्व्यक्तिरूपाणां गौरित्यादि-धीनियामकत्वात् । पुरोवृत्तिगोव्यक्तौ चोक्तसादृश्यप्रतियोगित्वरूपसन्निकर्षाभावेऽपि प्रत्यभिज्ञाया-मिदमंशस्येन्द्रियसंयोगादिनैव तदुपस्थित्युपपत्तिः । अनुगतजातेश्चैतदपेक्षया लघुत्वेऽप्यप्रामाणिक-त्वादस्यैव प्रत्यासत्तित्वम् । अनुगताकारबुद्धेर्गुणादावपि सत्त्वेनानुगत्यसाधकत्वात् । अनेकानुगतित्वे च जातेर्द्वित्वादिवद्यावत्स्वाश्रयं विनाऽप्रतीतिप्रसङ्गादिति तर्कताण्डवानुसारेण व्याख्येयम् ॥ **पदार्थ-ज्ञानस्येति** । उक्तरीत्या साक्षिरूपस्य वा सादृश्यविशेषप्रत्यासत्तिकेन्द्रियजन्यस्यैवेत्यर्थः । पदार्थ-मात्रस्येत्यर्थः । व्यक्तेरेव शक्यत्वेनोक्तत्वादिति भावः ॥ **न किञ्चिदिति** । **तथा** चान्वयविशेष-बोधकत्वेनागमस्य सार्थक्योपपादनं युक्तमिति भावः । अत्र स्वयं समाधातुमन्येषां समाधानानि तावदनूद्य दूषयति ॥ **अत्रेत्यादिना** ॥ **वर्णपदाभिव्यक्त इति** । अनेन पदवाक्यस्फोटसद्भावे प्रमाणं

सूचितम् । तथा हि । वर्णाः पदानि च न प्रत्येकमर्थमुपस्थापयन्ति । समुदायोऽपि नाशुतरविनाशिनां सम्भवति । नित्यत्वेऽपि प्रतीयमानानामबोधकत्वेनाशुतर विनाशप्रतीतिसमुदायस्याप्यसम्भवेन तावद्वर्णपदविषयकैकसमूहालम्बनाङ्गीकारे चावश्यकक्रमानुपपत्त्याऽर्थप्रतीत्यनुपपत्त्युपपत्तेः । एतावत्पदाभिव्यक्तमेकं स्फोटाख्यं वाक्यं चाङ्गीकर्तव्यमित्यर्थप्रत्यायकत्वान्यथाऽनुपपत्तिरेव तत्र च मानम्। तस्य चाखण्डत्वेन तत्रापि प्रत्येकसमुदायपक्षोक्तदूषणानवकाश इत्याह ॥ **अखण्ड इति** । एकवचनेन चानेकेष्वपि वर्णेषु पदेषु चैकं पदमेकं वाक्यमित्येकत्वोल्लेखिप्रत्यक्षप्रतीतिरपि तत्र मानमिति सूचयति ॥ **सान्निध्यमिति** । आकाङ्क्षादिमत्पदसमभिव्याहारविशेष इत्यर्थः ॥ **सर्वेषामिति** । तथा हि । तावताद्यपक्षस्फोटेऽर्थापत्तिरूपप्रमाणमुपन्यस्तम् । तदनुपपन्नम् । अप्रतीतस्यार्थप्रत्यायकत्वेऽतिप्रसङ्गेन प्रमाणान्तरस्य च तत्प्रापकस्याभावेन तयैवार्थापत्त्या तत्प्रतीतावितरेतराश्रयत्वप्रसङ्गात् । प्रतीते हि स्फोटेऽर्थप्रतीतिस्तस्यां च सत्यां तदन्यथाऽनुपपत्त्या स्फोटप्रतीतिरिति । न चैकं पदमेकं वाक्यमित्येकार्थावलम्बिनी प्रत्यक्षप्रतीतिस्तत्र प्रमाणान्तरमस्तीत्युक्तमिति वाच्यम् ।

अनेकेषु वृक्षेष्वेकं वनमिति प्रतीतिवदुपपत्तेः । अन्यथा तत्राप्यनेकवृक्षातिरिक्तैकवनस्वीकारापत्तिः। न च तत्रानेकेषामेकस्थानस्थितत्वोपाधिनैक्यप्रतीतिः । अत्राप्येकार्थप्रत्यायकत्वोपाधिनैक्यप्रतीतिसम्भवात् । एकार्थप्रत्यायनं च नानुपपन्नम् । एकस्मृतिसमारूढानां तदुपपत्तेः । अनुभवक्रमोपहितानामेव तेषां स्मृत्यावगाहनान्न क्रमानुपपत्तिरिति हि व्यवस्थापितमधस्तात् । अन्वयप्रतीतेश्चान्यथोपपादयिष्यमाणत्वात् । एवमप्रामाणिके स्फोटेऽर्थप्रत्ययेन शक्त्यङ्गीकारे च कल्पनागौरवपराहतेश्च। नापि द्वितीयः पक्ष उपपद्यते । प्रमाणाभावात् । अन्वयप्रत्ययस्य च वक्ष्यमाणरीत्याऽन्यथोपपन्नस्य त्वत्पक्षानपेक्षत्वात् । प्रमाणान्तरस्य चादर्शनात् । क्रमोपेतानां द्वित्राणां पञ्चषाणां वर्णानां स्मरणसम्भवेऽपि महावाक्यस्थानां शतसहस्रसङ्ख्याकानां स्मरणं दुःशकमेवेत्यनुभवविरोधाच्च। वक्ष्यमाणरीत्या लघूपाये सम्भवति प्रयासगौरवकल्पनापराहतेश्चेति । तृतीयेऽप्युक्तरीत्या प्रमाणाभावः स्पष्ट एव । युक्तिविरोधश्च । केवलस्यान्त्यवर्णस्यान्वयप्रत्यायकत्वे पूर्ववर्णोच्चारणवैय्यर्थ्यप्रसङ्गेन पूर्ववर्णक्रमविस्मृतावन्वयाप्रत्यायकत्वेन च पूर्ववर्णैः सहैकस्मृत्युपारूढस्य तस्य वाक्यार्थप्रत्यायकत्वे वाच्ये स्मृतिस्था वर्णाः पदत्वेनानुसङ्गृहीता वाक्यार्थमवगमयन्तीत्यस्मदभिमतस्यैव प्राप्तत्वेन बकबन्धरीतिप्रसङ्गादिति । चतुर्थपञ्चमपक्षयोरप्यन्वयबोधे उपायान्तरस्य वक्ष्यमाणत्वेन प्रमाणान्तरस्यानिरूपणे न प्रमाणाभावो व्यक्त एव । समभिव्याहारस्य पदार्थानां वा प्रमाणान्तरतापत्तिरुभयत्रान्वयस्याशब्दत्वापत्तेश्चेति । अन्विताभिधानवादिनां समाधानमाह ॥ **पदान्येवेति** । प्रेक्षावन्त इत्यनेनेदमेव स्वसमाधानमपीति सूचयति । ननु पदानां स्वार्थे तदन्वये च शक्तिद्वयकल्पने

गौरवमित्यत उक्तमन्वितस्वार्थाभिधायिनीति । एकयैव शक्त्याऽन्वितस्वार्थाभिधानाङ्गीकारान्न गौरवमिति भावः । न चैवं व्यक्तय एवेत्युक्तावधारणविरोधः । तस्य प्रवृत्तिनिमित्तव्यवच्छेदकमात्रार्थत्वेनान्वयाव्यावर्तकत्वात् । न चायमपि पक्षोऽप्रामाणिकः । प्राथमिकव्युत्पत्तिहेतुनाऽन्वितविषयकेण व्यवहारेणेतरान्वित एव शक्तिग्रहस्य प्रेक्षावदनुभवसिद्धत्वात् । वाक्यार्थस्य शाब्दत्वान्यथाऽनुपपत्तिश्चात्र मानम् । न चान्वयस्य पदशक्यार्थप्रतियोगित्व रूपपरम्परासम्बन्धेन शाब्दत्वोपपत्तिरिति वाच्यम् । पदप्रवृत्तिविषयत्वे लक्षणसाक्षात्सम्बन्धस्यैव शाब्दत्वमर्यादाहेतुत्वात् । अन्यथा शक्यघटसम्बन्धिगुरुत्वादेरपि घटपदात्प्रतीतिप्रसङ्गः । अन्विताभिधानेऽपि विशेषं वक्तुं प्राभाकरमतं तावदनुपोदयत्वज्ञापनायानुवदति ॥ **तत्रेति** । अन्विताभिधानेऽपीत्यर्थः । अत्रेदमनभिमतिबीजम् । क्रियापदेनानयनरूपे क्रियाविशेषेऽभिहिते घटपदेन तदन्वितघटाभिधानम् । एवं घटपदेन घटरूपे कारकविशेषेऽभिहिते क्रियापदेन तदन्वितक्रियाभिधानमित्यन्योन्याश्रयत्वम् । पदार्थवैय्यर्थ्यं च । अत एवैतद्दोषद्वयसूचनाय प्रत्येकमपि पदानीत्युक्तम् । न च वाच्यं पदानां प्रथमं पदार्थाननन्वितानभिधाय पश्चादन्योन्यान्वितांस्तानेवाभिदधतीति क्वान्योन्याश्रयत्वमिति । द्विरभिधानकल्पनाया अप्रामाणिकत्वात् । अचेतनेषु विरम्यव्यापारानुपपत्तेश्च । अथाऽपि स्यात् । प्रथमं पदानि साहचर्यवशादनन्वितस्वार्थान्स्मारयन्ति । पश्चादितरेतरस्मारितेनार्थेनान्वितस्वार्थानभिदधतीति न पदान्तरवैय्यर्थ्यम् । नापीतरेतराश्रयत्वमिति । मैवम् । सर्वदैव हि पदान्वितेनैव स्वार्थेन गृहीतसाहचर्याणि न केवलेन । तानि कथं केवलं पदार्थमात्रं स्मारयितुमीशते । यथानुभवं हि स्मरणेनोत्पत्तव्यं न तु प्रयोजनमनुसृत्य। तथा चोक्तम् । दोषद्वयमपरिहार्यमिति । इदानीमेतद्दोषद्वयसमाधानाय श्रीमदार्यसूर्यभिमतान्विताभिधानमाह ॥ **प्रत्येकमिति** । अतः सामान्यतो ज्ञातः पदान्तरबलात्पुनः । भवेद्विशेषतो ज्ञातस्तेन स्यादन्वितोक्तितेति तदुक्तेरिति भावः । प्रत्येकं हि पदानि सामान्यत आकाङ्क्षितसन्निहितयोग्येतरान्वितस्वार्थाभिधानसामर्थ्यानि न पदान्तरमपेक्षन्त इति नान्योन्याश्रयत्वम् । पदानां सामान्यतो योग्येतरान्वितस्वार्थाभिधायकत्वेऽन्वयविशेषजिज्ञासा न स्यात् । सामान्यतो ज्ञाते हि विशेषजिज्ञासा दृष्टा । न च पदं विनाऽन्यत्सामान्यतोऽन्वयज्ञानजनकं क्लृप्तम् । अनुमानेन कल्पनस्य चानानुभाविकत्वादिति भावः । नन्वथाऽप्यत्र विशेषान्वयप्रतिपत्तिर्निर्निबन्धना पदान्तरं च न प्रयोजनवदित्यत उक्तं पदान्तरेति । अयं भावः । पदान्तरस्य विशेषान्वयप्रतीतार्थत्वेनैव सार्थक्यम् । न चैवं पदानां प्रत्येकं सामान्यतो योग्येतरान्वये शक्तिः । पदान्तरसमभिव्याहारेण विशेषान्वये च शक्तिरिति कल्पनागौरवमिति वाच्यम् । या शक्तिः पदान्तरसमभिव्याहारनिरपेक्षा सामान्यान्वयबोधिका तस्या एव पदान्तरसमभिव्याहारसापेक्षाया विशेषान्वयबोधे पर्यवसानाङ्गीकारात् । न चैवं

पदान्तरसन्निधानाहितशक्त्यन्तराणीत्यनुपपन्नमिति वाच्यम् । पदान्तरसन्निहितमेवाहितशक्त्यन्तरं लब्धं सहकार्यन्तरं येषामित्यर्थत्वात् । न तु पदार्थसन्निधानेनाहितं शक्त्यन्तरमाधेया शक्तिर्येषामिति शक्तिद्वयाङ्गीकारगौरवात् । पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतुर्न पुनरविद्यमानशक्त्याधानमिति सुधाविरोधाच्चेति । यद्वा प्रत्येकं पदानि सामान्यतो योग्यतरान्वित-स्वार्थेषु शक्तानि । तेषु पदान्तरसमभिव्याहाररूपसहकारिसामर्थ्येन विशेषतोऽप्यन्वितस्वार्थ-बोधानुकूलशक्त्यन्तराभिधानमिति । यथान्यासमेव साधु । गौरवस्य प्रामाणिकत्वेन ग्राह्यत्वादत एवाह ॥ **तथाऽनुभवादिति** । न चैवं सुधाविरोधः । न पुनरविद्यमानशक्त्याधान इति सुधावाक्यस्य पदान्तर समभिव्याहारात्पूर्वमन्वयसामान्येऽपि शक्तिर्नेत्येतन्निषेधपरत्वेन सावकाशतया तदानुकूल्येनैव तद्ग्रन्थ व्याख्यानोपपत्तेः । अत एवाहिकुण्डलाधिकरणे सुधायामसकृदाधेयशक्त्यन्तरमेवोक्तमिति ज्ञातव्यम् ।

**अभि.— ॥ समयेति** । सङ्केतग्रहे सादृश्यं कारणमित्याचार्या वदन्तीत्यर्थः । यद्यपि सादृश्यं नानुगतम् । तथाऽपि सर्वव्यक्तिगतसादृश्येषु परचित्तगोव्यक्तिः प्रतियोगिनीति प्रतियोग्यैक्यादनुगमः । तथा परमते दण्डनामननुगमेऽपि दण्डत्वस्यैक्यादनुगतव्यवहारहेतुत्वमिति भावः । ननु वाच्यताया जातिव्यक्तिसाधारणत्वान्न्यूनवृत्तिघटत्वं न वाच्यतावच्छेदकं स्यादिति चेन्न । अनतिप्रसक्तत्वेना-वच्छेदकत्वसम्भवात् । न च घटस्य घटत्वमिव घटस्याप्यन्यदेव वाच्यतावच्छेदकत्वं वाच्यमिति वाच्यम् । घटत्वस्य स्वनिर्वाहत्वेन वाच्यतावच्छेदकान्तरानपेक्षणात् ।

**आद.— ॥ सर्वेषां पक्षाणामप्रामाणिकत्वादिति** । तथा हि । न तथा स्फोटस्यान्वय-बोधकत्वपक्षो युक्तः । तस्यैवाप्रामाणिकत्वात् । न तावदन्वयबोधानुपपत्त्या तत्कल्पनम् । पदानामेवान्वयबोधकत्वोपपत्तेः । एकबुद्ध्युपारूढानां वर्णानामेव पदत्ववाक्यत्वप्रकारकबुद्धि-विषयत्वस्य पूर्वमुपपादितत्वात्तदतिरिक्तस्फोटस्याननुभवात् । किञ्च स्फोटः प्रतीतोऽन्वयबोधं जनयत्य प्रतीतो वा । अन्त्येऽतिप्रसङ्गः । आद्ये तत्प्रतीतिरेकैकेन वर्णेन सर्वैर्वा । आद्ये वर्णान्तरो-च्चारणवैय्यर्थ्यम् । द्वितीये वर्णानां नित्यत्वादप्रतीतैरेव वर्णैस्तत्प्रतीतिरिति वाच्यम् । न च वर्णानां प्रतीतिर्युगपत्सम्भवति । तद्व्यञ्जकध्वनीनामभावात् । अत एकबुद्ध्युपारूढानामेव पूर्वोक्तरीत्या स्फोटप्रत्यायकत्वं वाच्यम् । तथा च तेनैवान्वयबोधोपपत्तिरिति । भारतादौ स्फोटस्य ब्रह्मसभायां पृथक् स्थितिः क्वचित्पुस्तकेषु श्रूयते । तत्प्रक्षिप्तं पदवाक्याभिमानिदेवतापरं वा बोध्यम् । पदवाक्यातिरिक्तस्फोटस्योक्तत्वे तु स्पष्टताऽभिमानिदेवतापरं बोध्यम् । नापि सान्निध्यम् । तच्च ज्ञातमेवान्वयबोधकं वाच्यम् । अन्यथा पदयोः सान्निध्यस्य सर्वदा सत्त्वेन सर्वदाऽन्वयबोधप्रसङ्गात् ।

तथा च तत्पदनिष्ठं यत्पदसमभिव्याहृतत्वज्ञानमन्वयबोधकमित्युक्तं स्यात् । तथा सति गौरश्वः पुरुषो हस्तीत्यादावपि पदानां सन्निधिसत्त्वादन्वयबोधापत्तेः । न चाकाङ्क्षावैधुर्यान्नान्वयबोध इति चेत् । केयमाकाङ्क्षा ॥ पदानां परस्परं समभिव्याहारश्चेत् । अस्त्येव तादृश्याकाङ्क्षा । न च यादृश-समभिव्याहाराद्यादृशबोधो भवति तादृशबोधे तादृशसमभिव्याहारस्याकाङ्क्षत्वं स्वीक्रियते । उक्तवाक्ये गवादौ पुरुषसम्बन्धित्वप्रकारबोधस्य कदाऽप्यजायमानत्वात्तत्राकाङ्क्षा न स्वीक्रियत इति चेत् । तर्ह्यपूर्वार्थविषयकबोधो वाक्यान्न स्यात् । तादृशबोधस्याबुद्धिस्थत्वेन तज्जनकत्वरूपाकाङ्क्षाज्ञानस्य तद्वाक्ये ज्ञातुमशक्यत्वात् । एवं कुलालादौ व्यवहितान्वयस्थले च योजनया बोधो न स्यात् । तत्र तयोः पदार्थयोरन्वयबोधो भवति । तयोः सान्निध्यभावात् ।

न च योजनानुसारेणानुसन्धानविषयीभूतवाक्यान्तरस्यैवान्वयबोधकत्वम् । श्लोकस्तु तादृश-वाक्यान्तरानुसन्धानप्रयोजक एवेति वाच्यम् । तर्ह्यबोधकत्वरूपाप्रामाण्यप्रसङ्गात् । न चेष्टापत्तिः । बोधकवाक्यान्तरस्फोरकत्वादेव प्रामाण्याभिमान इति वाच्यम् । अपौरुषेयस्य वेदवाक्यस्या-प्रामाण्यप्रसङ्गात् । अस्मादेव वाक्यादर्थं प्रत्येमि नान्यस्मादित्यनुभवविरोधाच्च । अस्य पदस्यात्रान्वय इति ज्ञानस्य भ्रमत्वोपपत्तिश्च । एतत्क्रमघटकैतत्पदस्यैतत्क्रमघटकव्यवहितपदान्वितत्वाभावात् । तदन्वितत्वं च तदर्थान्वितस्वार्थबोधकत्वमेव तस्यानङ्गीकारात् । एकस्य विशेषपदवाचकस्यानेक-विशेषणवाचकपदानां सन्निधेरानेतुमशक्यत्वात्तत्र प्रत्येकं बोधापत्त्या वाक्यभेदापत्तिश्च । अस्मदुक्त-रीत्या प्रत्येकं परस्परान्वितज्ञानसहकारेण पदज्ञानेनैवान्वयबोधोपपत्तौ उक्तसमभिव्याहारस्य पृथक् पृथग्रूपेण कारणत्वाङ्गीकारे बीजाभावाच्च । किञ्च गौरश्व इति वाक्यादपि प्रथमायाः सम्बन्धि-त्वार्थकत्वं गवादिपदार्थान्वितस्वार्थबोधकं चेति विपरीतव्युत्पत्तिमतः पुरुषसम्बन्धित्वविशिष्टगवादि-विषयकबोधजनकस्य दृष्टत्वेन तादृशबोधे आकाङ्क्षा नास्तीति वक्तुं शक्यत्वमेव । न च तादृशानुपूर्व्या आकाङ्क्षारूपत्वसत्त्वेऽपि तादृशविपरीतव्युत्पत्तिघटितसामग्र्याः फलव्याप्यत्वं स्वीक्रियते । अतो न तादृशव्युत्पत्त्यभावकाले तादृशान्वयबोधापत्तिरिति वाच्यम् । तथाऽपि तादृशव्युत्पत्तिमतोऽपि पदविभागज्ञानाभावेऽपि तादृशबोधापत्तेः । पदज्ञानस्यापि सामग्रीकोटौ निवेशे तत्तत्पदज्ञानविपरीत-व्युत्पत्तिघटितसामग्र्यैव तादृशफलोत्पत्तिसम्भवेन सामग्रीकोटौ समभिव्याहारनिवेशे प्रयोजनाभाव एव । गौरश्वः पुरुषो हस्तीति वाक्यादिवत्तादृशविपरीतव्युत्पत्तिमतः पुरुषस्य पुरुषोऽश्वो गौर्हस्तीति वाक्याद्बोधो न जायत इति न युज्यते वक्तुम् । तस्मान्न हि तत्त्वादिरूपाकाङ्क्षाऽन्वयबोधिका । नापि परस्परान्वितस्वार्थबोधकानीमानि पदानीत्याकारकाकाङ्क्षाज्ञानसाहित्येन पदानामन्वयांशे शक्त्यभावे तदर्थान्वितस्वार्थबोधकत्वज्ञानस्य भ्रमत्वापत्तेः । नन्वन्वयबोधकत्वावगाहित्वे भ्रमत्वं स्यात् । न

चैतदस्ति । किन्त्वन्वयविषयतानिरूपितस्वार्थबोधजनकत्वावगाहित्वमेव । अतो न दोष इति चेत् । तर्ह्यन्वयबोधकस्याकस्मिकत्वापत्तेः । तत्सामीप्यज्ञानमेवान्वयबोधजनकमिति तु निरस्तमेव । *सामीप्यज्ञानाभावेऽपि* तदन्वितस्वार्थबोधकमिति ज्ञानसत्त्वे तयोरन्वयबोधस्तदभावे तदभाव इत्यन्वयात् । अत एव पदैरभिहिताः पदार्था एवान्वयबोधोपयोगिन इति पक्षोऽपि परास्तः । पदैरर्थोपस्थितावप्युक्ताकाङ्क्षाज्ञानाभावेऽन्वयबोधाभावस्यानुभवसिद्धत्वात् । अन्यथा षष्ठ्यन्तत्वादि-ज्ञानाभावेऽपि नामभ्यामुपस्थितयोरर्थयोस्तात्पर्यज्ञानवशाद्भेदान्वयबोधप्रसङ्गः । पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः । खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीरित्याद्युक्तवतस्तव पदविशेष-जन्यपदार्थोपस्थितेरेव शाब्दबोधे हेतुत्वं नान्यस्येति पक्षाभावात् । सत्त्वे वाऽस्मदुक्तज्ञानाभावकाले बोधाभावस्य तत्सत्त्वे आकाङ्क्षारहितादपि वाक्याद्बोधोदयस्यानुभवसिद्धत्वान्न पदार्थोपस्थिति-प्रयोज्याऽन्वयविषयता । न च श्वेतोऽश्वो धावतीति धीः कथमुत्पद्यते । पदानामेवाभावेन भवदुक्ता-काङ्क्षाज्ञानस्य तत्रासम्भवादिति वाच्यम् । तज्ज्ञानस्य शाब्दबोधरूपत्वाभावात् । अन्यथा श्वेतोऽश्वो धावतीति मया श्रुतमित्यनुव्यवसायापत्तेः । किन्त्वनुमानरूपत्वमेव कल्पयामीत्यनुभवात् । अधिक-माकरे ज्ञेयम् । तस्मात्पदान्येवाभिधायकशक्तिमन्त्यन्वय विषयतायाः पदप्रयोज्यत्वादिति ॥

**तत्र प्रत्येकमिति ।** सामान्यतोऽन्वयाभिधानशक्त्यङ्गीकारेऽपिविशेषतोऽप्यन्वयाभिधानशक्तिरङ्गी-कर्तव्या । अन्यथाऽन्वय विशेषबोधस्याकस्मिकत्वापत्तेः । आकाङ्क्षाज्ञानस्य भ्रमत्वापत्तेश्च । तत् पदार्थान्वितस्वार्थबोधकमित्याकारकत्वेनान्वयविशेषबोधानुकूलशक्त्यभावेऽप्रामाण्यस्य दुर्वारत्वात् । एवं तात्पर्यज्ञानस्यापि भ्रमत्वापत्तिश्च । उपपत्त्याद्यानुकूल्यादिदं पदमेतत्पदार्थप्रतियोगिकैतादृशान्वय बोधानुकूलशक्तिमदिदं पदमित्याकारत्वेन तादृशशक्त्यभावेऽप्रामाण्यस्य दुर्वारत्वात् । तथा च विशेषतोऽप्यन्वयाभिधानशक्तिसिद्धौ गौरवात्प्रयोजनाभावाच्च सामान्याभिधायकत्वं नास्त्येव प्रमाणा-भावाच्चेति भावः । स्वमतमाह ॥ **प्रत्येकं सामान्यतो योग्यतरान्वितस्वार्थाभिधानशक्तिमन्तीति ।** अयमाशयः । पदानां सामान्यतोऽन्वयाभिधानशक्त्यभावे शक्तिग्रह एव न सम्भवति । अन्वयबोधस्य सम्भन्धिभूतप्रकारोपस्थितिं विनाऽसम्भवात् । गोपदस्य शक्तिग्रहः कर्मत्ववाचकद्वितीयया कर्मत्वोपस्थितावेव भवति । द्वितीयया कर्मत्वोपस्थितिस्तच्छक्त्यैवेति वक्तव्यम् । गोपदत्वेनैव स्थितेरप्यङ्गीकारे द्वितीयाया वैय्यर्थ्यापत्तेः । तात्पर्यग्राहकत्वाङ्गीकारे गोपदस्यैव नानार्थत्वापत्तेः । विनिगमकाभावेन द्वितीयाया एव गवान्वितकर्मत्ववाचकत्वं गोपदमेव तात्पर्यग्राहकमित्यापत्तिश्च । निरर्थकत्वे पदव्याघातः । शक्त्योपस्थितश्च गोरूपस्थितिं विना संसर्गभानायोगेन गोपदजन्य-गव्युपस्थितिं *विना न सम्भवतीति* तमपेक्षत इत्यन्योन्याश्रयात् । न चैकैकपदप्रत्यक्षानन्तरं शक्तिग्रहो

नास्त्येव किन्तु पदद्वयश्रवणानन्तरमेकदा पदद्वयशक्तिग्रहः सम्भवति । प्राथमिकव्युत्पत्तिवेलायां गामिति पदद्वयरूपसमुदायस्य परस्परान्वितस्वार्थबोधकशक्तेरवधृतत्वादिति चेत् । तर्हि तादृशशक्तेः समुदायनिष्ठत्वेनैकैकपदस्य शक्तिकल्पनायां बीजाभावः । शक्तिग्रहवेलायामेव शाब्दसमानकारक-बोधसत्त्वेन वाक्यवैयर्थ्यापत्तेश्च । गोपदश्रवणेन कर्मत्वादीनामुपस्थितिप्रसङ्गश्च । यादृशशक्तिस्मरणेन गौः स्मर्यते तादृशशक्तिज्ञाने कर्मत्वादीनामपि भातत्वाच्छक्तेरस्मृतौ गोरपि स्मृतिर्न स्यात् । यादृश-पदद्वयात्मिकानुपूर्वी कदाऽप्यस्मृता तादृशानुपूर्व्याः सकाशाद्व्युत्पन्नस्य बोधानुपपत्तिश्च । अस्मत्पक्षे चैकैकपदस्य शक्तिग्रहसत्त्वेन शाब्दोपपत्तेः । तस्माच्छक्तिग्रहवेलायां गवादिपदात्तत्तदन्वय-बोधेऽप्यावापोद्वापाभ्यामन्वयसामान्यबोधकत्वमेव पदानामनुमिमीते तद्घटत्वावच्छिन्नं प्रति तत्तद्दण्डस्य कारणत्वेऽनुभूते सामान्यतो घटत्वावच्छिन्नं प्रति घटत्वावच्छिन्नस्य कारणत्ववत्तत्तद्वाक्यस्थतत्तत्पदानां तत्तत्प्रत्ययाद्यर्थप्रतियोगिकसंसर्गबोधजनकत्वेऽनुभूते सत्यन्वयव्यतिरेकाभ्यां सामान्यतो गोपदस्य योग्येतरपदार्थप्रतियोगिकान्वयबोधकारणस्यैवानुमातुं युक्तत्वात् । न चान्वयस्य प्रकारतया विशेष्यतया वा न बोधकत्वम् । सम्बद्धा गौरित्यादिवाक्यतो गौरित्यस्याविलक्षणबोधजनकत्वप्रसङ्गात् । विशेष्य-तया बोधकत्वे सम्बन्धवाचकत्वमेव स्यात् । अतः सामान्यतोऽपि संसर्गतयैव संसर्गभानमुपेयम् । न च प्रतिसम्बन्धिनं विना संसर्गतया भानं युज्यते । अतः पदान्तरेण प्रतिसम्बन्ध्युपस्थितिरपेक्षिता । तेनाप्यर्थोपस्थितावेतत्पदजन्योपस्थितिरपेक्षितेत्यन्योन्याश्रयता समानैवेति चेत् । गवाद्येकैकपदस्यैव योग्येतरान्वितस्वार्थबोधकत्वोपगमात् । तथा च योग्येतरत्वोपलक्षितकिञ्चित्पदार्थान्विता गौरिति बोधः। अथवा योग्यत्वेतरत्वयोः शक्तिग्रहे उपलक्षणतया भानेन पदजन्यबोधे न तयोर्भानम् । किन्तु सामान्यरूपेण । किञ्चिद्वती गौरिति वा गोसम्बन्धिनीति वा बोधः । न च सम्बन्धवत एव वाच्यत्वप्रसङ्गः । सम्बन्धनिष्ठविषयतायाः संसर्गतारूपत्वेन तन्निरूपितविषयताया अनवच्छिन्नत्वेन वाच्यत्वाभावात् । शक्तिग्रहे शक्यतावच्छेदकतया भासमानधर्मावच्छिन्नविषयताया एव वाच्यत्व-रूपत्वात् । न च शक्तिग्रहे भासमानयोग्यत्वेतरत्वयोः कथं तज्जन्यबोधे भानाभाव इति वाच्यम् । अहमादिपदानामुच्चारयितृत्वापेक्षितपुरुषत्वाद्यवच्छिन्ने शक्तिग्रहसत्त्वेऽपि सर्वनामतदादिपदानां बुद्धि-विषयतावच्छेदत्वोपलक्षितधर्मावच्छिन्ने शक्तिग्रहसत्त्वेऽपि तत्तत्पदजन्यबोधे उच्चारणकर्तृत्वबुद्धिविषय-त्वादीनां न भानं किन्तु स्वरूपत एव यथा योग्येतरत्वादीनां भानाभावसम्भवात् । योग्यत्वं नाम प्रत्ययाद्यन्यतमत्वम् । इतरत्वं च पदान्तरोपस्थाप्यत्वम् । वर्णानामेकत्वेऽपि क्रमविशिष्टानां भिन्न-भिन्नत्वं पदानां न विरुद्धम् । नन्वेकपदात्कथं शाब्दबोध इति चेत् । का तत्र कथन्ताऽनुभवेनैव सिद्धत्वात् । अत एव गौरित्युक्ते सामान्यत इतरप्रतियोगिकत्वेनान्वयप्रतीत्या सम्बन्ध्याकाङ्क्षाऽन्वय-

विशेषाकाङ्क्षा च जायते । अन्यथा सामान्यरूपेणोपस्थितिरूपेच्छासामग्र्यभावाद्विशेषरूपावच्छिन्न-जिज्ञासा न स्यात् । न च गोपदात्सामान्यत इतरान्वयविशिष्टबोधे पदान्तरसन्निधानेऽपि कथं विशेषान्वय इति चेत् । आकाङ्क्षाज्ञानतात्पर्यरूपसहकारिसामर्थ्येन गवादिपदानां शक्तिज्ञानसाहित्येन विशेषतोऽन्वयबोधकत्वाङ्गीकारात् । सहकारिणां विपरीतशक्त्याधायकत्वस्याधिकशक्त्याधायकत्वस्य च बहुलमुपलम्भात् ।

न चाकाङ्क्षाज्ञानादेर्भ्रमत्वापत्तिरिति वाच्यम् । समभिव्याहृतपदार्थस्यापि योग्येतरत्वरूपसामान्य-धर्माक्रान्तत्वात्तत्प्रतियोगिकान्वयत्वरूपसामान्यधर्माक्रान्तत्वेन समभिव्याहृतपदविशेषार्थान्वय-बोधकत्वस्यापि योग्येतरान्वयत्वेन तद्बोधकत्वज्ञानस्य भ्रमत्वासम्भवात् । परन्तु पदान्तरज्ञानाकाङ्क्षादि ज्ञानरूपसहकारिसत्त्वे योग्येतरान्वयविशेषस्य बोधक इत्येतावन्मात्रस्याभिप्रेतत्वेन दोषाभावात् । न च सामान्यसामग्र्या विशेषसामग्रीं विना फलोपधायकत्वस्य कुत्राप्यदृष्टत्वेनाकाङ्क्षाज्ञानादिरूपविशेष-सामग्र्यभावकाले कथं पदज्ञानशक्तिज्ञानरूपसामान्यसामग्रीमात्रेण फलोपधानमिति वाच्यम् । अनुभवबलेनाकाङ्क्षाज्ञानाद्यनुपपत्त्या च सामान्यतोऽन्वयाभिधानोपधायकत्वाङ्गीकारात् । अन्यथा पदादर्थानुपस्थितावर्थयोरन्वयस्यायोग्यत्वादिशङ्काया उक्ताकाङ्क्षाज्ञानस्यैवासम्भवात् । न चाकाङ्क्षा-ज्ञानस्यैव शाब्दबोधसामान्याकारत्वे वाक्यवैय्यर्थ्यापत्तिरिति वाच्यम् । आकाङ्क्षाज्ञानेऽन्वयस्य संसर्ग-तया भानाभावेन दोषाभावात् । तत्पदार्थप्रतियोगिकैतदन्वयनिष्ठसंसर्गताकैतत्पदार्थनिष्ठविशेष्यता-कबोधजनकमिदं पदमित्याकारकत्वेन संसर्गतांशेऽन्वयस्य प्रकारतया भानात् । न च शक्तिद्वयं कल्पनीयं स्यात् । सत्कार्यभावकाले योग्येतरवती गौरित्याकारकबोधानुकूला शक्तिः सहकारि-समवधानोत्तरं योग्येतरत्वानवगाहिकर्मत्ववती । गौर्गोनिष्ठं कर्मत्वमित्यादिविशिष्टबोधजनकत्वरूपमिति गौरवमिति वाच्यम् । सहकार्यभावकालेऽपि योग्येतरत्वानवगाहिनः सामान्यरूपेण वा गोरूपधर्मेण वा शाब्दबोधे प्रतिसम्बन्धिनो भानस्योक्तत्वात्संसर्गतांशेऽप्यवच्छेदकतया विशेषधर्मस्य भानाभावेऽपि सामान्यरूपेण वा स्वरूपतो वा संसर्गस्य संसर्गतया भानमित्युक्तमेव । परन्तु सहकारिसत्त्वे सामान्यरूपस्येव विशेषरूपस्य सम्बन्धिनि संसर्गे च भानमधिकमस्तीत्यङ्गीक्रियत इति शक्तिद्वय-कल्पनाया अभावेन दोषाभावात् । सहकारिणो जायमाने बोधेऽधिकपदार्थभासकत्वमात्राङ्गीकारा-द्गौरवाभावात् । योग्यत्वादेर्भानस्यानुभवसिद्धत्वे तु तत एव दोषाभावाद्भवताऽपि पदार्थोपस्थिति-जनकत्वशक्तेः शाब्दबोधानुकूलशक्तेरिति द्वयस्याङ्गीकृतत्वेन साम्यात् । मया स्मारकी शक्तिरङ्गी-क्रियते । भवता शाब्दबोधानुकुलेत्यधिका स्मारक्याः शक्तेर्भवताऽप्यावश्यकत्वात् । अन्यथा पदात्पदार्थस्मृतेरिति सुधाविरोधादिति चेन्न । मयाऽपि योग्येतरान्वितस्वार्थजनकत्वरूपोभय-

साधारणी शक्तिरङ्गीक्रियत इति दोषाभावात् । वस्तुतस्तु परैः स्मारकत्वस्याङ्गीकृतत्वेन तद्रीत्यैव सुधायां व्यभिचारस्य कथितत्वात् । अत एव हरिहरादिस्मृतिर्गृहीता ।

नन्वेकपदस्य शाब्दबोधजनकत्वे मानाभावः । पदादर्थस्मृतौ सत्यामाकाङ्क्षादिज्ञानसाहित्येन विशिष्टशाब्दबोधोदयसम्भवात् । न चानुभवजनकत्वस्यापि सम्भवात्स्मारकत्वमेव कुत इति वाच्यम् । एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वस्य क्लृप्तत्वेन पदार्थयोः शक्तिरूपसम्बन्धस्य ज्ञानत्वेनान्यत्र क्लृप्तरीत्यैवार्थस्मृतिसम्भवादिति चेन्न । शक्तिज्ञानस्य शाब्दबोधज्ञानं प्रति कारणतायाः क्लृप्तत्वेन शक्तिज्ञानस्यैतत्पदमेतदर्थवाचकमित्याकारत्वेन तस्यैव पदार्थस्मृतिरूपत्वेन तदतिरिक्तपदार्थोपस्थित्यङ्गीकारस्य प्रयोजनाभावाच्छाब्दसामग्र्याः स्मृतिं प्रति प्रतिबन्धकत्वेनार्थस्मृतेः शाब्दकारणात्वाङ्गीकारपक्षेऽपि तद्घटितसामग्र्याः शक्तिग्रहवेलायामेव सत्त्वादुपस्थित्यन्तरासम्भवाच्च । न च पदजन्यार्थोपस्थितेरेव कारणत्वेन शक्तिग्रहकाले सा नास्तीति वाच्यम् । पदज्ञानेनैव संस्कारोद्बोधद्वारा पदसम्बन्धिशक्तेः स्मारणात् । सम्बन्धश्चैकप्रतियोगिकत्वेनापरानुयोगिकत्वेनैव पूर्वमनुभूतत्वेन तथैव स्मृतिं जनयति । सा स्मृतिश्च सम्बन्ध्यवगाहिनी च भवति । न तु द्वितीयक्षणे जायमानस्मृतेरपि तेनैव सम्भवेन सम्बन्धिस्मृतेरन्यथासिद्धत्वात् । अत एव शक्तिग्रहोत्तरा स्मृतिः पदजन्यैव न भवति । पदस्य तज्ज्ञानस्य वा स्वज्ञानजन्यप्रथमभूतशक्तिस्मृत्याऽन्यथासिद्धत्वात् । सुधायां पदात्पदार्थस्मृत्युक्तिरपि शक्तिग्रहविवक्षयेति मन्तव्यम् । पदस्य तज्ज्ञानस्य वाऽर्थविषयकशाब्दबोधजनकत्वाभावे पदार्थयोः सम्बन्धान्तरानिरूपणेन सम्बन्धावगाहिज्ञानस्य भ्रमत्वापत्तिश्च । न चेश्वरसङ्केतविषयत्वरूपसम्बन्धोऽस्तीति न भ्रमत्वापत्तिरिति वाच्यम् । ईश्वरानङ्गीकर्तॄणामुक्तसम्बन्धज्ञानाभावेन पदार्थस्मृतेरसम्भवेन तेषां शाब्दबोधाभावप्रसङ्गात् । सम्बन्धान्तरज्ञानेन शाब्दबोधाङ्गीकारे सर्वत्र तज्ज्ञानेनैव शाब्दबोधत्वोपपत्तौ सङ्केतज्ञानस्य कारणत्वे मानाभावः । न लोके सङ्केताच्छब्दोदयस्यानुभवसिद्धत्वेन प्रकृतेऽपीश्वरसङ्केतः स्वीक्रियत इति वाच्यम् । अन्यत्रापि पदेषु सङ्केतेन शाब्दबोधजननानुकूला शक्तिरुत्पद्यते । तज्ज्ञानेनैव शाब्दबोधो जायत इत्यङ्गीकारेण कुत्रापि सङ्केतज्ञानस्य शाब्दबोधकारणत्वानङ्गीकारात् । तत्पदेष्वपभ्रष्टभाषायां सङ्केतयितृपुरुषज्ञानाभावेऽपि सङ्केतज्ञानाभावेऽपि बालस्यावापोद्धापाभ्यां व्युत्पत्तेर्जायमानत्वेन व्यभिचारात् । शक्तिज्ञानस्यैव व्युत्पत्तिपदार्थत्वात् । न च स्वाभाविकसम्बन्ध एव शक्तिर्न शाब्दबोधकजनकत्वमिति वाच्यम् । तदतिरिक्तसम्बन्धान्तराङ्गीकारे मानाभावात् । अस्मदुक्तशक्तिज्ञानेनैव शाब्दबोधोत्पत्तेर (तयैव शाब्दबोधस्य जायमानत्वेना) नुभवसिद्धत्वाच्च । एकपदप्रत्यक्षेऽपि पदं श्रुतमितिवत्पदादर्थो बुद्ध इत्यनुभवात् ।

सम्बन्धविशेषज्ञानेच्छानुपपत्त्या चैकस्यापि पदस्य शाब्दबोधजनकत्वमङ्गीकर्तव्यमेव बाधकाभावाच्चेति । किञ्च गवादिपदाद्गोः स्मृतिसम्भवेऽपि सामान्यतः किञ्चित्पदार्थनिष्ठविषयतानिरूपितसांसर्गिकविषयितानिरूपितगोनिष्ठविषयताका किञ्चिद्वती गौरित्याकारा स्मृतिर्न सम्भवति । सामान्यत इतरान्वितगोपदसम्बन्धित्वेनाज्ञातत्वात् । तत्तत्पदसमाहाररूपवाक्यस्य तत्तत्पदान्वयबोधकत्वमनुमायावापोद्वापाभ्यां सामान्यतोऽन्वयाभिधायकत्वस्य कल्पनीयत्वात् । एकदा पदानामन्वयविषयकत्वेऽनुभूते सति सामान्यतोऽन्वयविशिष्टस्य तत्तत्पदसम्बन्धित्वेनाननुभूतत्वेन विशिष्टस्मृतिः सम्भवेत्। प्रथमतस्तस्यैवानुपपत्तेरेकैकपदस्यान्वयानुभावकत्वस्यानङ्गीकारात् । समुदायस्य तु विशेषतोऽन्वयाभिधायकत्वात् । न च तादृशान्वयविशिष्टबोधकमिति ज्ञानमेव स्मृतिजनकमिति युज्यते। शक्तिज्ञानस्यान्वयप्रकारकत्वात् । पदार्थोपस्थितेरन्वयसंसर्गकत्वात् । अनुभवस्य समानाकारकस्मृतिजनकत्वनियमात् । अन्यथाऽतिप्रसङ्गात् । तादृशस्मृत्यभावे विशेषजिज्ञासाऽनुपपत्तेः । स्मृतावननुभूतस्य सामान्यतोऽन्वयस्य प्रतिसम्बन्धिनश्च भानायोगेन कर्मत्वस्य तदन्वयस्य पूर्वं ज्ञातस्य संस्कारबलेन भानस्यैवोचितत्वात् । मन्मते तु वाक्यस्य परार्थत्वेनाज्ञातज्ञापकत्वाय शाब्दबोधेऽपूर्वस्य वस्तुनो भाननियमेन कर्मत्वातिरिक्तस्यैवोत्सर्गतः प्रतीतिसिद्धौ तज्ज्ञानस्यासिद्धवत्तत्रेच्छोत्पत्तिः सम्भवति । तस्मात्पदानां सामान्यतो विशेषतश्चान्वयाभिधानशक्तेरपि प्रामाणिकत्वेन न गौरवावकाशः ॥ छ ॥

शक्तिप्रसङ्गाच्छब्दवृत्तिर्निरूप्यते । शाब्दबोधौपयिका शक्तिर्नवविधा । रूढिर्योगो योगरूढिर्लक्षणा रूढलक्षणोपचारो रूढोपचारो महायोगो महायोगरूढिश्चेति । तत्र लोके सप्तविभागवति वृत्तिद्वयम् । तत्र प्रयोगमात्रप्राचुर्येण किञ्चित्प्रवृत्तिनिमित्तज्ञाप्या शक्ती रूढिः । यथा मण्टपादिपदानां ग्रहविशेषे मण्टपत्वादिरूपप्रवृत्तिनिमित्तवत्येव बहुप्रयोगसत्त्वात् । सा च ज्ञातैव शाब्दबोधोपयोगिनी न स्वरूपसती वर्णपदसमुदायनिष्ठा । अवयवार्थसहकारेणार्थविशेषबोधोपयोगिनी समुदायनिष्ठा शक्तिर्योगः । सा च कृत्तद्धितादिसमासनिष्ठाऽज्ञात एव बोधोपयोगिनी । यथा पङ्कजादिपदं भेकादौ । तत्र तदवयवीभूतपङ्कपदजनिधातुडप्रत्ययानां शक्तिज्ञानेन पङ्कजनिकर्तृत्वावच्छिन्नस्य बोधः समुदायनिष्ठः । वाक्यस्यापि स्वावयवीभूतपदशक्तिज्ञानसहकारेण विशिष्टार्थबोधजनकत्वसत्त्वाद्यौगिकत्वापत्तिरिति न शङ्क्यम् । वाक्यरूपे समुदाये तादृशशक्तेरभावात् । आकाङ्क्षाज्ञानपदज्ञानशक्तिज्ञानादिघटितसामग्र्यैव बोधोदयस्योपपादितत्वात् । प्रवृत्तिनिमित्तमपेक्ष्य बहुप्रयोगज्ञाप्याऽवयवार्थसहकारेणापि धर्मान्तरावच्छिन्नप्रवृत्तिनिमित्ताश्रयमात्रबोधिका समुदायनिष्ठा शक्तिर्योगरूढिः । यथा पङ्कजपदस्य पद्मे । तत्र पद्मस्वरूपप्रवृत्तिनिमित्तमपेक्ष्यैव प्रेक्षावद्भिः प्रचुरप्रयोगस्य क्रियमाण-

त्वाद्भेकादौ प्रचुरप्रयोगाभावादवयवार्थसहकारेण बोध्यमानस्य पङ्कजनिकर्तृत्वावच्छिन्नस्य बोधात्। न च योगरूढेर्वृत्त्यन्तरम्। कुतः। योगरूढिभ्यां द्वाभ्यामेवोपपत्तेः। यस्य योगज्ञानं तस्य पङ्कज-निकर्तृत्वावच्छिन्नस्य बोधः। यस्य रूढिज्ञानं तत्र पद्मत्वावच्छिन्नस्य बोधः। यस्योभयज्ञानं तस्योभयबोध इत्यस्यैव युक्तत्वात्। न ह्येकत्र हेतौ व्यभिचारबाधरूपदोषद्वयसमाहारे तत्र बाधविशिष्टव्यभिचारस्य पृथक् दोषतोद्भावनीयता वाऽस्ति। अत एवोक्तं सुधायाम्। समाहारवृत्तयो ह्येता इति। किञ्च योगोऽज्ञात एवावयवशक्तिसहकारेण शाब्दोपयोगी रूढिस्त्वन्यनैरपेक्ष्येण ज्ञाता सती कथं योगत्वरूढित्वयोर्विरुद्धयोः समाहारः सञ्जाघटीतीति वाच्यम्। पङ्कजादिवृत्तिद्वयाङ्गीकारे गौरवात्। लाघवेन योगरूपशक्तिरेव प्रयोगप्राचुर्यरूपसहकारिवशाज्ज्ञाता सती पद्मत्वबोधिके-त्यङ्गीकारात्। केवलयोगस्य केवलरूढेश्चार्थबोधकत्वे ज्ञातत्वाज्ञातत्वसापेक्षत्वनिरपेक्षत्वरूपविरुद्ध-धर्मवत्त्वेऽप्यस्य तद्विलक्षणत्वेन बाधकाभावात्। या बहुप्रयोगज्ञाप्या समुदायशक्तिस्तस्या एवावयवार्थ सहकारेण पङ्कजनिकर्तृत्वादिधर्मवैशिष्ट्यबोधकत्वाङ्गीकारे बाधकाभावात्। समाहारवृत्तय इत्यस्य धर्मद्वयसमाहारवत्यर्थकत्वेन विरोधाभावात्। अत एव चतुर्थपादीयसुधायां वृत्त्यन्तरमेव रूढलक्षणा-दृष्टान्तेनोपपादितम्।

यत्तु पङ्कजपदस्य रूढ्यतिरिक्तयोगोऽवश्यमङ्गीकार्योऽन्यथा सति तात्पर्ये भेकादिबोधाभावप्रसङ्गात्। न च पद्मत्व विशिष्टबोधानुकूला वृत्तिरेव ज्ञाता भेकादिसाधारणरूपेण बोधयति। ज्ञाता सती पद्मत्वविशिष्टमित्युक्तम्। पङ्कजपदं भेके न रूढमिति प्रत्ययात्। योगरूढ्या भेकत्वावच्छिन्नबोधकमिति प्रत्ययापत्तेश्च। भेके रूढिर्नास्तीति चेत्। माऽस्तु भेकबोधकवृत्तौ रूढित्वं वर्तत एवेति। तस्माद्रूढिभिन्ना योगरूपा वृत्तिरावश्यिक्येव। तस्यैव पद्मबोधस्यापि सम्भवे रूढौ योगत्वाङ्गीकारे गौरवमिति। तदसत्। योगाद्रूढेः प्रबलत्वेन रूढार्थस्यैव प्रथममुपस्थित्या पङ्कजपदेन पङ्कजन्यत्वेन पद्मबोधस्यैवानुपपत्तेः। रूढेर्योगापहारकत्वस्य सर्वसम्मतत्वात्। रूढिज्ञानोत्तरमवयवशक्तिज्ञानादि-पर्यन्तं विलम्बे कारणाभावाद्रूढिज्ञानवतां प्रथमं पद्मत्वावच्छिन्नस्य द्वितीयं पङ्कजन्यत्वावच्छिन्नस्य प्रेक्षावतां बोधापत्तेः। मन्मते तु प्रेक्षावद्भिः पङ्कजन्यत्वेनापि पद्मत्वविशिष्टव्यक्तिबोधाय पद्मत्वरूप-प्रवृत्तिनिमित्तमपेक्ष्यैव पद्म एव प्रचुरप्रयोगस्य क्रियमाणत्वेनैकया वृत्त्या पद्मरूपव्यक्तिविशेषस्यैवोप-स्थितिः। पद्मत्वं तु शक्यतावच्छेदकत्वेन प्रतीयते। प्रवृत्तिनिमित्तस्य न शक्यत्वमित्यधस्तादुक्तमेव। तथा च पङ्कजन्यत्वेनापि रूपेण भेकाद्यनवगाहि बोधप्रयोजकत्वाज्झटित्युपस्थापकत्वाच्चैकस्यैव योगत्वं रूढित्वं चोपपद्यते। अत एवास्य केवलरूढ्यपेक्षया केवलयोगापेक्षया वैलक्षण्यम्। केवलयोगस्य रूढिसमकालमनुपस्थापकत्वात्। सामान्यतो धर्मविशेषप्रकारकबोधं जनयित्वा ततस्तद्धर्मवत्त्वज्ञान-

साहित्येन स्वबोध्यधर्माश्रिययत्किञ्चिद्व्यक्त्यवगाहिबोधजनकत्वाच्च । अनेनैवाभिप्रायेण सुधायां यथा लक्षणमात्रया रूढलक्षणाया अतिरिक्तत्वमित्युक्तम् । प्रयोगप्राचुर्येण रूढ्यर्थबाधग्रहादिकमनपेक्ष्यार्थोपस्थापकत्वाद्रूढलक्षणया अर्थोपस्थापकत्वाद्रूढितुल्यत्वात्केवललक्षणाया झटित्यर्थानुपस्थापकत्वात्तयोर्वैलक्षण्यमित्याशयात् । न च स्वविषये रूढिसमानाधिकरणस्य योगस्य रूढिसमकालमर्थोपस्थापकत्वमस्त्विति वाच्यम् । पङ्कजन्यत्वेन रूपेण भेकादीनामप्युपस्थित्यापत्तेः । शक्यसम्बन्धग्रहाधीना शक्यसम्बन्धिपदार्थान्तरबोधानुकूला शक्तिर्लक्षणा । तज्ज्ञानमपि सामान्यत एव तात्पर्याद्यनुपपत्तिज्ञानसाहित्येन शक्यसम्बन्धिपदार्थान्तरबोधानु कूलशक्तिमद्भविष्यति । लक्षणा ज्ञानाधीना । अर्थबोधकत्वशक्तिरहिता न स्वाभाविकी । कस्मिंश्चिदेव काले केषाञ्चिदेव पुरुषाणामर्थविशेषाणामनियमनेन बोधकत्वेन कादाचित्कत्वात् । यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य तीरे । तत्र गङ्गापदप्रवृत्तिनिमित्तवत्प्रवाहसामीप्यरूपशक्यसम्बन्धवत्तीरे बोधेच्छयोच्चरितमिति ज्ञानेन तीरबोधकत्वमाविर्भवति । तत्र भविष्यत्त्वेनैव लक्षणारूपशक्तिज्ञानान्न भ्रमत्वम् । तत्र प्रवाहसम्बन्धितीरवृत्तिर्घोष इत्यन्वयबोधः । तेनातिसामीप्यादिबोध एव लाक्षणिकपदप्रयोगस्य फलम् । तत्रैव प्रयोगप्राचुर्ये रूढलक्षणा । न चानादितात्पर्यविषयत्वादियं शक्तिः स्वाभाविक्येवेति वाच्यम् । क्वचिदेव वाक्ये मञ्चादिपदानां मञ्चस्थपुरुषबोधकत्वतात्पर्यानुपपत्तिज्ञानरूपसहकारिबलादेव न सर्वत्र । नापि पदज्ञानमात्रात् । नापि शक्योपस्थितिं विनेति न स्वाभाविकत्वम् । आहितत्वेऽपि तादृशशक्तेः पूर्वपूर्वकालीनतादृशशक्तिसादृश्याज्झटित्यर्थोपस्थापकत्वं प्रयोजनाद्यनुसन्धानापेक्षया पूर्वपूर्वप्रयोगानुसारेण प्रयोज्यमानत्वादभिधातुल्यत्वेन विलक्षणत्वमिति भावः । केचित्तु रूढलक्षणा स्वाभाविकशक्तिरूपैव । न च केषुचिद्वाक्येषु तथोपस्थापकत्वेऽप्यसार्वत्रिकत्वान्न स्वाभाविकत्वमिति वाच्यम् । नानार्थगवादिपदेषु गृष्ट्यादीनामिव बहुधा वार्याद्यनुपस्थापकत्वात्तत्र स्वाभाविकी शक्तिर्न स्यात् । न च तर्हि लक्षणात्वानुपपत्तिः । प्रवृत्तिनिमित्तमनपेक्ष्य तत्सम्बन्धमात्रमपेक्ष्य प्रयुज्यमानत्वेन लक्षणात्वसम्भवात् । प्रवृत्तिनिमित्तवत्सम्बन्धापेक्षप्रयोगाविषयत्वस्यैव लक्षणात्वपदार्थत्वात् । शक्यसदृशबोधानुकूला शक्तिरुपचारः । स च यद्धर्मव्यङ्ग्यं सादृश्यं बोधयति तद्धर्माणां पश्चाद्बोधको भवतीति गौणीत्युच्यते । मुख्यार्थगुणयुक्तार्थान्तरे वृत्तिर्गौणीति प्रमाणलक्षणटीकायामुक्तेः । तद्वाक्यस्य तादृशगुणबोधौपयिकत्वस्यैवार्थत्वात् । सादृश्यबोधेऽपि पश्चात्सादृश्यव्यञ्जके बाधात्तदौपयिकत्वं घटते । अत एव गौणीत्युच्यते । गुणानामननुगतत्वेन सिंहवृत्तिक्रौर्यादेर्देवदत्तादावसम्भवेन तत्सदृशक्रौर्यादिमत्त्वस्यैव बोधकत्वाङ्गीकारे सादृश्यबोधकत्वस्यावश्यकत्वप्राप्तेः । सादृश्यबोधे त्वर्थान्तराभिव्यञ्जकगुणानां बोधो भवत्येवेति तद्वाक्यस्यैवात्र तात्पर्यमिति ज्ञानात् । यथा सिंहो देवदत्त इत्यादि । तत्र

सिंहपदार्थः सिंह एव तत्र देवदत्ते सिंहाभेदस्य बाधग्रहे सति सादृश्यरूपं बोधयति । संसर्गतावच्छेदकतया सादृश्यत्वमपि बोधयति । तत्र पदार्थयोर्मुख्यार्थकत्वेऽपि समानविभक्तिकपदान्तरार्थान्वितस्वार्थबोधकत्वमित्याकाङ्क्षाज्ञानकार्याभेदरूपान्वयस्याभानेन पदान्तरसमवधानरूपसामानाधिकरण्यस्यामुख्यत्वम् । अत एव लक्षणापेक्षया मुख्यवृत्तिरियम् । तदुक्तमनुव्याख्याने । सम्बन्धयुक्तसादृश्यं सम्बन्धो वाऽप्यमुख्यतः । वृत्तिहेतुरिति ज्ञेयः पूर्वायोगेऽपरग्रह इति । लक्षणायां पदानामेवामुख्यार्थबोधकत्वात् । अत्र तु सामानाधिकरण्यमात्रस्यामुख्यत्वात् । अत एवोक्तं सुधायाम् । तत्त्वमसीत्यादौ सामानाधिकरण्यमात्रस्यामुख्यत्वमिति ।

न च तत्र तत्पदार्थस्य ब्रह्मण आधेयतासम्बन्धेनासिपदार्थसत्तायामन्वयः । तस्याश्रयतासम्बन्धेन त्वंपदार्थेऽभेदबोधस्त्वार्थिक इति वाच्यम् । तथा सति सत्ताया उभयानुगतत्वमात्रेणोपपत्तावर्थतोऽप्यभेदभेदानुपपत्तेः । असाधरणसत्तैवासुधातोरर्थ इति तु न वाच्यम् । धातुना सत्तामात्रोपस्थितेः । तर्हि कथमभेदलाभ इति चेत् । आख्यातार्थ आश्रय एव । तस्याभेदेन त्वंपदार्थेऽन्वये सति शब्दत एवाभेदबोधसम्भवात् । न चाश्रयत्वमेवाख्यातार्थः । आश्रयत्वत्वस्याखण्डोपाधित्वेन शक्यतावच्छेदकलाघवादिति वाच्यम् । आश्रयत्वस्याखण्डोपाधित्वे बाधकाभावात् । एवं च शब्दत एवाभेदबोधोपपत्तावार्थिकत्वाङ्गीकारस्यानुचितत्वात् । एवं चाभेदबोधकाकाङ्क्षायाः सादृश्यबोधकत्वेन सामानाधिकरण्यस्यैवामुख्यत्वम् । तत्त्वप्रकाशिकायामङ्गीकारवादेनासिपदार्थस्यामुख्यत्वमुक्तम् । तत्रासिपदस्यासाधारणधर्मार्थकत्वेऽप्यसाधारणधर्मसदृशधर्म एवार्थः । सादृश्यघटितार्थबोधकत्वाद्गौणी वृत्तिरिति भावः । न च लक्षणयैव सादृश्यबोधोपपत्तौ वृत्त्यन्तराङ्गीकारो व्यर्थः । न च संसर्गतया बोधानुपपत्तिः प्रकारतयैव तद्बोधसम्भवादिति वाच्यम् । तथा सत्यमात्य इव राजेत्यादावभेदस्य बाधितत्वग्रहोत्तरं नियमेन सादृश्यस्यैव नियमाभावप्रसङ्गात् । राजपदस्य भृत्येऽपि लक्षणायाः सम्भवात् । गौणार्थस्य सादृश्यस्यापि तात्पर्याद्यनुपपत्त्या बाधग्रहोत्तरमेव भृत्यत्वादिबोधस्यानुभवसिद्धत्वात् । मन्मते तु गौण्याऽभेदप्रयोजकाकाङ्क्षास्थल एव प्रवृत्तेः । लक्षणाया यथेच्छं सार्वत्रिकत्वेन गौण्याः प्रबलत्वमिति तदर्थस्यैव प्रथममुपस्थितिर्युज्यते । एवं लक्षणाया यत्र शक्यसम्बन्धज्ञानं तद्रूपावच्छिन्नस्य शक्यसम्बन्धत्वेनैव बोधजनकत्वम् । उपचारस्य तु सादृश्यत्वेनेति फलभेदाद्भेदः । न च प्रतियोगित्वादिरूपसम्बन्धवत्सादृश्यत्वेनैव सादृश्यबोधोऽस्त्विति वाच्यम् । लक्षणास्थले सम्बन्धत्वेनैव सम्बन्धबोधात् । अत्र तु प्रतियोगित्वादिना रूपेण स्वरूपतो वा संसर्गतया प्रतियोगित्वादीनां भानाल्लक्षणास्थले शक्यसम्बन्धस्य प्रकारतया भानात् । तस्माद्गौणी विजातीया वृत्तिः । तज्ज्ञानं त्वभेदबोधकाकाङ्क्षाशालिविशेषणबोधपदसामान्यं तद्बोधे सादृश्यबोधकशक्तिमद्भविष्यतीति सामान्यत एव

भविष्यति । एतज्ज्ञानवतोऽभेदग्रहसाहित्येन सादृश्यप्रकारको वा संसर्गको वा बोधो भवति । तत्रैव प्रयोगप्राचुर्ये रूढोपचारः । रूढलक्षणावदस्यापि पृथग्वृत्तित्वं ज्ञातव्यम् । निरतिशयधर्मवत्त्वे महायोग इन्द्रादिशब्दानां भवति । तत्र योगेन बोध्यमानस्यैश्वर्यादेर्निरतिशयस्य भगवत्येव सत्त्वात् । न चेन्द्रादिशब्दानां रूढिरप्यङ्गीकर्तव्या । अन्यथा तत्र तत्र विद्वद्रूढेरङ्गीकृतत्वेन तद्विरोधापत्तेरिति वाच्यम् । तत्र विद्वद्रूढेरित्यस्य विद्वत्कर्तृकप्रयोगप्राचुर्यादित्यर्थकत्वेन विरोधाभावात् ।

न च योगलभ्यस्यैश्वर्यादेरितरसाधारण्यात्कथं भगवन्मात्रबोधकत्वं भगवन्मात्रबोधतात्पर्येण विद्वत् प्रयोगश्चेति वाच्यम् । केवलयोगलभ्यार्थस्येतरसाधारण्येऽपि महायोगलभ्यार्थस्येतरसाधारण्याभावात् । न च तथाऽपि रूढ्यभावे विद्वत्प्रयोगसत्त्वेऽपि रूढार्थानिन्द्रादीन्विहाय भगवत एव प्रथममुपस्थितिर्न सम्भवति । रूढेः प्राबल्येन तदर्थोपस्थितेरेवौचित्यादिति वाच्यम् । शास्त्रीयव्यवहारसामान्यस्य विद्वत्कर्तृकत्वेन तात्पर्यानुसारेणैवार्थोपस्थापकत्वात् । विदुषां तु योगेनार्थबोधतात्पर्यस्यैव सत्त्वात् । तात्पर्यनिश्चयस्य परस्परं विदुषां परीक्षकाणां च सत्त्वेन दृढतरसंस्कारसचिवपदैर्योगार्थस्यैवोपस्थितेस्तत्तद्व्यवहारे तात्पर्यानुसारेणार्थबोधकत्वस्य सुप्रसिद्धत्वात् । न हि म्लेच्छादिवाक्यस्थयवादिपदैः प्रसिद्धयवाद्युपस्थितिर्भवति । किन्तु तत्सङ्केतानुसारेणैवार्थविशेषोपस्थितिः । न च वाच्यं संस्कारसचिवयोगेनैवेन्द्रादिपदैरपि भगवद्बोधसम्भवेन महायोगाख्यवृत्त्यन्तराङ्गीकारो निरर्थक इति श्रीमदादियौगिकपदेषु प्रवृत्तिनिमित्तस्य श्रीमत्त्वादेर्यत्राधिक्यज्ञानं तस्यैव प्रथममुपस्थापकत्वस्यानुभवसिद्धत्वात् । प्रवृत्तिनिमित्ताधिक्यानुसारेण मुख्यत्वस्याङ्गीकर्तव्यत्वात् । तत्र भगवत्यनन्याधीननिरतिशयप्रवृत्तिनिमित्तसद्भावान्महायोगस्यावश्यकत्वात् । न हि महायोगो नाम योगभिन्नवृत्त्यन्तरं किन्तु तत्प्रभेद एव । न च तर्ह्येकापेक्षयैकस्य मुख्यत्वेन तज्ज्ञानसाहित्येन तत्तदर्थस्य प्रथममुपस्थापकत्वशक्तेर्विलक्षणत्वेन योगस्यैव नानाविधत्वापत्त्या योगापेक्षया पृथक् परिगणनानुपपत्तिः । तज्ज्ञानस्य मोक्षसाधनत्वेन पृथग्गणनसम्भवात् । न च नवविधत्वानुपपत्तिः । तदितरयोगस्यैव योगशब्देन धर्तव्यत्वात्सर्वपदासम्बन्धियोग्यत्वेनानुगमस्यापि सम्भवात् । महायोगस्य सर्वसम्बन्धित्वाद्रूढेर्योग इति विभागवाक्येन रूढियोगयोरेकस्मिन्नर्थे सामानाधिकरण्याभावस्य प्रतीतेस्तादृशयोगसमानाधिकरणरूढेरेव योगरूढिपदेन धर्तव्यत्वाद्योगो द्विविध इत्येव विभागः कुतो न क्रियत इति चेत् । लोके विद्यमानसप्तवृत्त्यपेक्षया मुख्यत्वज्ञापनाय तथैव विभागस्य कर्तव्यत्वात् । योगप्रभेदत्वेऽपि पृथग्ग्रहणेन तज्ज्ञानात् । अन्यथेतरयोगापेक्षया मुख्यत्वज्ञानमात्रं भवेत् । विद्वत्प्रयोगो योगतात्पर्यक एवेति निश्चयसत्त्वेऽपीन्द्रादीनामपि योगे बाध्यैश्वर्यवत्त्वादिरूपप्रवृत्तिनिमित्तत्वेन तान्विहाय भगवत एव प्रथममुपस्थितेरनुपपत्तेश्च । केवलयोगापेक्षया महायोगस्य वैलक्षण्यम् । ननु रूढानामपि शब्दानां स्वार्थेषु मध्ये मुख्यस्यैवोपस्थापकत्वान्

महारूढिरपि प्रत्येकं वृत्तिः प्रत्येकं परिगणनीया स्यात्। बोधकस्यैव शक्तिरूपत्वात्। स्वार्थेषु मध्ये यन्मुख्यं तद्बोधकत्वशक्तेर्विजातीयत्वात्। तदुक्तं भाष्ये। मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषत इतीति चेत्। सत्यम्। सर्वेषामपि शब्दानां स्वार्थेषु मुख्यबोधकत्वमस्त्येव। परन्तु मुख्यज्ञानसहकृतस्यैव सूत्रादिपदान्मुख्यत्वज्ञानसहिताद्ब्रह्मसूत्रस्य बोधेऽपि केवलं प्रवृत्तिनिमित्तसूत्रत्वज्ञानमात्रेण न प्रथममुपस्थापकत्वेन वृत्त्यन्तरम्। रूढेर्ज्ञाताया एवार्थबोधकत्वेन विश्वतोमुखत्वादिधर्मावच्छिन्नवाचकं सूत्रपदमिति ज्ञानमात्रे सूत्रपदस्य बोधकत्वात्। न हि मुख्यसूत्रवाचकं सूत्रपदमिति ज्ञानमप्यपेक्षितं किन्तु प्रवृत्तिनिमित्तवत्सु मध्ये मुख्यत्वं यत्र ज्ञातं तस्यैव प्रथममुपस्थितिः। एतावन् मात्रेणातिरिक्तत्वे आकाङ्क्षाज्ञानसाहित्येन पदानां विशेषान्वयबोधकत्वेन विशेषान्वयेऽपि वृत्त्यन्तरत्वप्रसङ्गः।

ननु शाब्दबोधजननानुकूलज्ञानविषयीभूतशब्दनिष्ठशाब्दबोधानुकूलशक्तेरेव शब्दवृत्तिपदार्थत्वेन विशेषान्वयशक्तेस्तादृशत्वाभानेन वृत्तिलक्षणानाक्रान्तत्वान्न वृत्त्यन्तरत्वप्रसङ्ग इति चेत्। समं प्रकृतेऽपि। स्वार्थेषु मध्ये मुख्यबोधकत्वरूपशक्तिज्ञानस्य शाब्दबोधानुकूलत्वान्न तस्य वृत्त्यन्तरत्वमिति समम्। ननु तत्पदात्प्रथममुपस्थितौ तत्पदवाच्येषु मुख्यत्वज्ञानं न प्रयोजकं किन्तु प्रवृत्तिनिमित्तस्याधिक्यज्ञानं मुख्यत्वज्ञानं वा। तथा च भगवतीवान्यत्रापि महायोगः कुतो नाङ्गीक्रियत इति चेत्। आधिक्यस्य मुख्यत्वस्य वा तदितरत्र व्यवस्थितत्वाभावेन तज्ज्ञानेन नियमनेन भगवदितरेषु कस्यचिदर्थस्योपस्थितेरसम्भवेन तत्र महायोगाङ्गीकारस्यासम्भवात्। राघवयादवादिपदैर्यदुकुलोत्पन्नत्वादिप्रवृत्तिनिमित्तेषु तारतम्याभावेनाधिक्यमुख्यत्वज्ञानाभावेऽपि धर्मान्तरप्रयोज्यमुख्यत्वज्ञानमात्रेण रामकृष्णाद्युपस्थितेरनुभवसिद्धत्वेन मुख्यत्वज्ञानस्य प्रथमोपस्थितिकारणत्वस्य क्लृप्तत्वाच्च। निरतिशयितमुख्यत्वादेर्भगवद्धर्मेषु व्यवस्थितत्वेन नियमेन नाङ्गीकर्तव्या। गुणलाभस्य योगेनैव सम्भवात्। विष्णुत्वादेः प्रवृत्तिनिमित्तत्वाङ्गीकारे मानाभावात्। इन्द्रादिमात्रवृत्तीन्द्रत्वादेर्भगवति कथमप्यसम्भवात्। तस्मादिन्द्रादिशब्दानां महायोग एवेति। नन्वेवं चेद्योगस्य शब्दवृत्तित्वाभावप्रसङ्गः। योगज्ञानस्य शाब्दबोधेऽनुपयोगादिति चेन्मैवम्। अभिप्रायविशेषसद्भावात्। तथा हि। योगपदादर्थविशेषबोधस्तु समुदायशक्तिज्ञानानपेक्षोऽवयवशक्तिज्ञानमात्रेण भवति। तदनन्तरमैश्वर्यादिरूपधर्मस्य प्रवृत्तिनिमित्तत्वज्ञानानन्तरं यस्मिन्व्यक्तौ तादृशो धर्मो ज्ञायते तद्व्यक्तिवाचकत्वज्ञानं भवति। तद्व्यक्तिविषयकः शाब्दबोध इत्यनुभवः। तथा च याऽवयवशक्तिज्ञानसाहित्येन तद्धर्मविशिष्टबोधानुकूला शक्तिः सैव तद्धर्मविशिष्टबोधानुकूलत्वेन ज्ञानाप्रवृत्तिनिमित्तज्ञानसापेक्षा व्यक्तिविशेषविषयकशब्दोपयोगिनीति रूढिवदेवास्य शब्दवृत्तित्वम्। प्रमाणलक्षणे शब्दप्रवृत्तिनिमित्तविवक्षया वृत्तियोगोऽवयववृत्तिर्योग इति द्विविधयोगस्योक्तत्वात्। तत्रावयववृत्तिरित्यस्यावयववृत्तिज्ञानाधीनवृत्तिरित्यर्थस्य

सुधाद्यनुसारेण वक्तव्यत्वात् । तथा चाज्ञताया योगरूपशक्तेर्धर्मविशेषविशिष्टबोधानुकूलत्वेऽपि ज्ञाताया एव व्यक्तिविशेषबोधकत्वम् । प्रवृत्तिनिमित्तस्य योगस्थल इव संस्कारादेव भानसम्भवादित्याशयवता व्यक्तय एव वाच्या इत्युक्तम् । अन्यथा रूढिस्थल एवेत्यवक्ष्यत् ।

एवं लक्षणाऽपि शक्यसम्बन्धज्ञानाधीनशब्दनिष्ठाऽर्थान्तरबोधाकूला शक्तिः । साऽपि पदानां मुख्यार्थानुपपत्तौ तत्सम्बन्ध्यर्थान्तरबोधकत्वमिति सामान्यतो ज्ञातैव बोधोपयोगिनी । एवमुपचारोऽपि सादृश्यबोधानुकूला शक्तिः । सोऽप्यैक्यानुपपत्तौ समानविभक्तिकविशेषणपदं सादृश्यगमकमिति सामान्यतो ज्ञात एव सादृश्यबोधौपयिकः शब्दवृत्तित्वं सम्भवति । यद्यप्याकाङ्क्षाज्ञानस्य तत्पदार्थान्वितस्वार्थबोधकत्वमित्याकारत्वे तस्य शाब्दोपयोगित्वेन तद्विषयीभूतविशेषान्वयबोधकशक्तेरपि शब्दवृत्तित्वापत्तिरस्ति । तथाऽपि विशेषान्वये बोधानुकूलत्वेन रूपेण तज्ज्ञानस्यानपेक्षितत्वात्तेन रूपेण न वृत्तित्वम् । शाब्दानुकूलशक्तित्वेन रूपेण वृत्तित्वं त्वङ्गीक्रियत एव । तात्पर्यरूपशक्तिरपि न शाब्दसामान्योपयोगिनी । विनाऽपि तात्पर्यं शाब्दबोधोदयात् । किन्तु सत्त्वावगाहिबोध एवेति न तस्या अपि वृत्तिरूपत्वमिति मन्तव्यम् । निरतिशयानन्याधीनप्रवृत्तिनिमित्तकयोगस्येतरासाधारण्येन व्यवस्थितत्वेनेतरासाधारण्याद्भगवतः सर्ववेदमुख्यार्थत्वस्योपपादकत्वात्तस्यैव पृथग्गणना युक्ता । रूढ्या प्रवृत्तिनिमित्तवत्त्वाबोधनात् । प्रवृत्तिनिमित्तज्ञानानन्तरमेव रूढेरर्थबोधकत्वान्न गुणसम्पादकत्वं किन्तु योगस्यैव । महायोगस्यापि प्रवृत्तिनिमित्तेषु प्रमाणान्तरेण निरतिशयत्वादिज्ञानानन्तरमेव प्रवृत्तिरिति न गुणसम्पादकत्वमिति तस्य पृथग्ग्रहणं न युक्तमिति प्रतिभाति । तथाऽपि तज्ज्ञानस्य मोक्षसाधनत्वात्पृथगुत्कीर्तनमित्युक्तमेव । न केवलमिन्द्रादिशब्दानां महायोगः किन्तु पदवर्णस्वरादीनामखिलध्वनीनां महायोगः । सर्वे वेदाः सर्वे घोषा इति श्रुतेः । न च ध्वनीनामवाचकत्वात्कथं भगवत्परत्वमिति वाच्यम् । तासामपि नादादिरूपवर्णव्यञ्जकत्वात् । ध्वन्युत्पादकस्य चतुर्मुखस्य भगवद्गुणबोधे तात्पर्यसद्भावाच्च । एवं म्लेच्छादिभगवज्ज्ञानशून्यपुरुषोच्चारितसर्वशब्दानां भगवद्बोधे तत्तत्पुरुषाणां तात्पर्याभावेऽपि मुख्यवक्तुः प्राणराजस्य तात्पर्यसत्त्वात्तात्पर्यतः सर्वशब्दप्रतिपाद्यत्वं द्रष्टव्यम् । यद्यपीच्छारूपपुरुषतात्पर्यस्य न शाब्दबोधोत्पत्तावुपयोगस्तथाऽपि तात्पर्यरूपशक्तिसम्पादकतयोपयोग इति मन्तव्यम् ।

यत्त्वनेकवर्णात्मकानां पदानां भगवति योगसम्भवेऽप्येकैकवर्णानामपि प्रत्येकं वाचकत्वस्यावश्यकत्वेन तत्र योगासम्भवः । वर्णानां कूटस्थतया व्याप्तत्वेनाखण्डत्वेन तदवयवाभावादिति केवलरूढिरेवेश्वरेऽङ्गीकर्तव्येति । तदसत् । न ह्यवयवत्वं नाम तदारम्भकत्वं तद्घटकत्वं वा विवक्षितम् । तथा सति सर्वस्यापि पदस्य नित्यत्वे कस्यापि सावयवत्वानुपपत्तेः । क्रमविशिष्टस्यानित्यत्वेऽपि

पङ्कपदजनिधातुडप्रत्ययादीनां पङ्कजपदावयवत्वानुपपत्तेः । किन्तु यद्यत्पदधातुप्रत्ययादीनां शक्तिज्ञानसहकारेण यत्पदस्य बोधकत्वं तद्धातुप्रत्ययादीनां तत्पदावयवत्वम् । यदा पङ्कजपदस्य पङ्कपदजनिधातुडप्रत्ययाः । यथा वा राजपुरुषपदस्य षष्ठी विभक्तिः । एवं चैकवर्णात्मकस्यापि पदस्य तादृशावयवाः सम्भवन्त्येव । यथा रेफस्यैकवर्णस्य रमधात्वादि । न च तर्हि व्याकरणाप्रामाण्यापत्तिस्तत्र धात्वादिनिष्पन्नत्वोक्तेरिति वाच्यम् । वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः । व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यत इति । तन्न्यायस्यात्राप्यनुसर्तव्यत्वात् । सर्वज्ञस्य ब्रह्मणो बुद्धौ सर्वेषां शब्दानां व्याकरणशास्त्रोक्तसंज्ञादीनां च क्रमादेव भगवदिच्छया व्याकरणप्रामाण्याय भानसम्भवात् । ब्रह्मणाऽपि पूर्वजन्मनि व्याकरणस्याधीतत्वेन तत्संस्कारस्य भानप्रयोजकस्य सत्त्वाच्च न कोऽपि दोषः । यत्तु व्याकरणोक्तार्थस्य मिथ्यात्वेऽपि महातात्पर्यविषयीभूतशब्दसाधुत्वासाधुत्वयोः सत्यत्वात्प्रामाण्योपपत्तेः । अद्वितीयब्रह्म महातात्पर्यं वेदान्तिनामिति तत्तुच्छम् । शब्दसाधुत्वे महातात्पर्यसत्त्वेऽपि मुख्यतः प्रतिपाद्यावान्तरतात्पर्यस्यापि सत्त्वेन तस्य मिथ्यात्वे भ्रमतात्पर्यकत्वरूपाप्रामाण्यस्यावर्जनीयत्वादवान्तरतात्पर्यविषयीभूतार्थस्य हेतुतयैव शब्दसाधुत्वबोधकत्वेन तस्य मिथ्यात्वे साधकत्वानुपपत्तेः । अन्यथा मिथ्याभूतेन धूमेन जलह्रदेऽपि वह्निसिद्ध्यापत्तेः । एकत्राप्रामाण्येऽन्यत्रापि प्रामाण्ये विश्वासानुपपत्तेश्च । उभयत्रापि तात्पर्यसाम्यात् । दृष्टान्तस्त्वतीवासङ्गतः । अद्वितीये ब्रह्मणि तात्पर्यस्य खण्डितत्वात् । अवान्तरतात्पर्यविषयीभूतार्थस्य मिथ्यात्वानङ्गीकारत्वाच्च । यद्वा वर्णानां व्याप्तत्वेनाव्याकृताकाशादेरिव हस्तवितस्त्यादिरूपांशत्वेन तेषामपि पृथगर्थवाचकत्वसत्त्वेन तेषां शक्तिज्ञानसहकारेणार्थविशेषप्रतिपादकत्वसम्भवेन प्रत्येकं वर्णानां यौगिकत्वं तदवयवानां च तैर्वर्णैः सहात्यन्ताभिन्नत्वेन वर्णानां यौगिकत्वे तदवयवानां च यौगिकत्वमुपपद्यते । तज्ज्ञानं तु चतुर्मुखस्य सम्यक् । अन्येषां तात्त्विकानां देवानां यथाधिकारं सम्भवति । अत एव श्रुतिः । ''कश्छन्दसां योगमावेद धीर'' इति । क इत्यस्योभयार्थत्वेनान्येषां सम्यग्ज्ञानाभावः । ब्रह्मणस्तु सम्यग्ज्ञानमित्यर्थद्वयलाभात् । आवेदेत्यस्य सम्यग्वेदेत्यर्थत्वात् । तथा च वृत्तिस्तु द्विविधा मुख्यामुख्यभेदात् । मुख्या त्रिविधा । रूढिर्योगरूढिर्योगश्चेति । तत्र योगोऽपि द्विविधः । मुख्यः परममुख्यश्चेति । परममुख्योऽपि द्विविधः । महायोगो महायोगरूढिश्चेति । तौ च भगवत्येव । अमुख्या द्विविधा । उपचारो लक्षणा चेति । उपचारोऽपि द्विविधः । रूढोपचार उपचारश्चेति । लक्षणाऽपि द्विविधा । रूढलक्षणा लक्षणा चेति । एतेषां लक्षणानामुदाहरणानि तूक्तान्येवेत्यलम् ॥ **अपौरुषेयो वेद इति** । तत्प्रकारश्च पूर्वमेव विवेचितः ।

**वि.—** नन्वागमरूपप्रमाणस्य प्रयोजनं वाच्यं परार्थत्वात् । प्रयोजनं च तस्य प्रतीतिरेव । प्रयोजनभूतं च ज्ञानं किमिति प्रष्टुः पदार्थज्ञानं तावन्न प्रयोजनमित्याशयेनाह ॥ **नन्विति** । पदार्थ-

ज्ञानस्य प्रागेव सिद्धत्वात् । पदार्थरूपसम्बन्धिज्ञानस्य प्रागेव शक्तिज्ञानात्प्रागेव । सिद्धत्वात्सद्भावादित्यर्थः । तथा च तस्य परानपेक्षितत्वान्न परार्थागमप्रयोजनमिति भावः । तथा च प्रश्नबीज सद्भावात्पृच्छति ॥ **किमागमस्येति** । अनुमानस्येवागमस्याप्यज्ञातविषयसद्भावात्तदज्ञानं प्रयोजनमित्याशयेनोत्तरमाह ॥ **उच्यत इति** । धर्मधर्मिणोर्व्यापकरूपधर्मितद्धर्मिरूपपक्षयोरित्यर्थः ॥ **अन्वयविषयस्येति** । पदेनान्वयसामान्यज्ञानसम्भवाद्विशेषपदोपादानम् । आगमः पदार्थसंसर्गविशेषस्य बोधक इत्युक्तम् । तन्न युक्तमिति शङ्कते ॥ **पदानामिति** । पदार्थमात्रविशेषत्वेन पदस्य यथार्थे शक्तिरूपः सम्बन्धः स्वपदार्थः स एव विषयो ज्ञेयो यस्य तत्पदार्थमात्रविषयं तस्य भावस्तत्त्वं तेन पदार्थमात्रज्ञापकत्वेनेति यावत् । मात्रपदेनान्वयसामान्यमन्वयविशेषश्च व्यावर्त्यते । अन्वयस्यान्वयसामान्यस्यान्वयविशेषस्य च ज्ञापकं न किञ्चिदित्यर्थः । पदसमूहातिरिक्तवाक्याभावात्पदानां च शक्तिरूपस्वरूपसम्बन्धवदर्थमात्रज्ञापकत्वेनान्वयेऽवयविशेषे च सम्बन्धाभावात्तद्बोधकं न किञ्चिदस्तीति भावः । अत्र वाद्यन्तरोक्तपरिहारांस्तावदाह ॥ **अत्रेति** । एवं शङ्कायां कृतायामित्यर्थः । वर्णपदाभिव्यक्तिर्वर्णात्मकपदैरभिव्यङ्ग्यः स्फोटाख्यो वाक्यस्फोटनामकोऽखण्डो वर्णरूपावयवरहितः शब्दो वाक्यात्मकशब्दोऽन्वयस्य पदार्थानां सामान्यान्वयस्य विशेषान्वयस्य च ज्ञापक इत्युत्तरं वैय्याकरणा आचक्षत इत्यर्थः ॥ **वर्णमालेति** । पदातिरिक्तवर्णमालेत्यर्थः । अभावस्येत्यस्य लिङ्गव्यत्ययेन बोधक इत्यस्य ब्रुवत इत्यस्य चावृत्तिरनुसन्धेया ॥ **वाक्यान्त्यो वर्ण इति** । पदान्तवर्णव्यावृत्त्यर्थं वाक्यपदोपादानम् । अत्राप्यन्वयस्येत्यादेरनुवृत्तिरनुसन्धेया ॥ **पदानामिति** । आकाङ्क्षायोग्यतावतां पदानां सान्निध्यं सन्निधिमत्त्वं सन्निधिरित्यर्थः । अत्राप्यन्वये सत्यस्य लिङ्गव्यत्ययेन बोधक इत्यस्य चानुवृत्तिर्द्रष्टव्या ॥ **पदैरभिहिताः पदार्था एवेति** । एवकारेण पदानि व्यावर्त्यन्ते । गौरश्वः पुरुषो हस्तीति पदैः प्रतिपादिताः पदार्था अन्वयबोधं जनयन्तीत्याकाङ्क्षाशालिन इत्युक्तम् ॥ **अत्राप्यन्वयस्येति** । पदस्य विभक्तिव्यत्ययेन बोधक इत्यस्य ब्रुवत इत्यस्य चावृत्तिः कार्या । एवं परोक्तपरिहाराननूद्य तद्दूषणपूर्वकं स्वसिद्धान्तमाह ॥ **सर्वेषामिति** । एवमनूदितानां सर्वेषां पक्षाणामुक्तशङ्कापरिहारप्रकाराणां प्रमाणशून्यत्वात्प्रमाणबाधितत्वाच्च पदान्येवान्वितस्वार्थाभिधायीनि प्रत्येकं पदान्येव सामान्यतो योग्येतरान्वितस्वार्थवाचीनीति ते प्रेक्षावन्तो ब्रुवत इत्यर्थः । पदान्येवेत्यत्रैवकारेण न वाक्यं व्यावर्तयति । प्रेक्षावन्त इत्यनेनान्विताभिधानस्य प्रामाणिकतां प्रमाणविरुद्धतां च सूचयति । अयमभिसन्धिः । न तावदाद्यः पक्षः सम्भवति । श्रूयमाणवर्णवदघटितखण्डवाक्यातिरिक्ताखण्डस्फोटाख्यवाक्यस्यैवा प्रामाणिकत्वेनाखण्डशब्दोऽन्वयबोधक इति पक्षस्य सुतरामप्रामाणिकत्वात् । नन्वन्वयभानार्थं तत्कल्पनमिति वाच्यम् । वर्णघटितखण्डस्यैव सामान्यतोऽन्वितस्वार्थे गृहीतसङ्गति-

कत्वेनान्वयस्य भानार्थमखण्डशब्दकल्पनायोगात् । न च तत्र विवादः । प्राथमिकव्युत्पत्ति-हेतुनाऽन्वितविषयकेण वृद्धव्यवहारेण योग्येतरान्वितस्वार्थ एव पदानां शक्तिग्रहात् । अन्यथा गामानयेत्यनेन क्रियासामान्यान्वितस्वार्थानुपस्थितेः । सामान्यज्ञानसाध्यक्रियाविशेषे जिज्ञासाभाव-प्रसङ्गात् । न च कर्मत्वस्य क्रियान्वितव्याप्तिकत्वात्कर्मत्वे नानुमिते क्रियासामान्ये तद्विशेषा जिज्ञासा भवतीति वाच्यम् । तदानीं सहचारज्ञानादिवेद्याया व्याप्तेरुपस्थितिनियमाभावेन कर्मत्वेन क्रिया-सामान्येनान्वयानुमानायोगात् । अन्यथा जातेर्व्यक्तिवृत्तित्वनियमाच्छक्यजातिसम्बन्धेनैव व्यक्तेः प्रतीत्या जात्याऽन्वितव्यक्तौ शक्त्यसिद्धिप्रसङ्गात् । तस्मादनेकवर्णघटितपदानामन्वित एव स्वार्थे शक्तिग्रहात्तेनैवान्वयप्रतीत्युपपत्तेः । न तदर्थः खण्डः शब्दः कल्पनीयः । किञ्चान्वित एव स्वार्थे पदानां शक्तिग्राहकप्रमाणविरोधादखण्डस्फोटाख्यं वाक्यं न सामान्यान्वयबोधकम् । नापि द्वितीयः पक्षः सम्भवति । पदातिरिक्तवर्णमालाया अप्रामाणिकत्वात्पदरूपवर्णमालायाः पदार्थमात्रशक्तत्वे-नान्वयबोधकत्वस्य पूर्वपक्षिणैवोक्तत्वाच्च शक्तिग्राहकप्रमाणेनान्वित एव स्वार्थे पदानां शक्ति-ग्रहादनेकपदरूपवर्णमालाया अन्वयबोधकत्वस्य शक्तिग्राहकप्रमाणविरुद्धत्वाच्च । नापि तृतीयः पक्षो युक्तः । अन्त्यवर्णस्यैकस्य वाऽन्वयबोधकतायां मानाभावात् । अन्त्यवर्ण इत्यत्र वर्णपदं पदपरमिति चेन्न । अन्त्यपदस्याप्येकस्यैवान्वयबोधकत्वे पदान्तरवैय्यर्थ्यात् । पदान्तरसन्निहितमन्त्यपदमन्वय-बोधकमिति चेन्न । अन्त्यपदवैय्यर्थ्यात् । पदान्तरसहितं पदमन्वयबोधकमित्यङ्गीकारे तु चतुर्थपक्षा-नतिरेकात् । पदस्यान्विते शक्तिग्रहाच्छक्तिग्राहकप्रमाणविरोधाच्च । नापि चतुर्थः पक्षः सम्भवति । पदस्यैवान्वयबोधकत्वेन पदसान्निध्यस्यान्वयबोधकत्वकल्पनस्याप्रामाणिकत्वात् । पदवृत्तिविषयस्यैव शब्दबोध्यतया तदविषयस्यान्वयस्य शब्दत्वायोगाच्च । पदसान्निध्यस्यार्थबोधकत्वे पदस्यान्विते शक्तिग्राहकप्रमाणविरोधाच्च । नापि पञ्चमः पक्षो युक्तः । पदैरभिहितानां शक्तिग्रहाद्बाधकाभावाच्चा-न्विताभिधानपक्षो युक्त इति ।

नन्वस्तु पदानां सामान्यतो योग्येतरान्वितस्वार्थाभिधायित्वं तथाऽपि विशेषान्वयबोधकं न किञ्चि-दस्तीति चोद्यस्य किमुत्तरमिति जिज्ञासायां वाद्यन्तरोक्तमुत्तरमाह ।। **तत्रेति** । विशेषान्वयबोधकं न किञ्चिदस्तीति चोद्यस्य किमुत्तरमिति जिज्ञासायामित्यर्थः । अन्वयविशेषाभिधानसमर्थान्यन्वय-विशेषस्य कारकविशेषेण वा कारकविशेषस्य क्रियाविशेषेण वा संसर्ग इति यावत् । तस्याभिधानेऽ-भिधया वृत्त्या बोधने. समर्थानि शक्तानीत्युत्तरं प्राभाकरा वर्णयन्तीत्यर्थः । प्राभाकरपदोपादानेन विशेषान्विताभिधानसाधुतां सूचयति । तदुक्तं सुधायाम् । ये तु विशेषान्वय एव पदानां शक्ति-रित्यास्थिषत तन्मतनिरासायान्वित इति सामान्येनोक्तमिति । विशेषान्विताभिधानस्यासाधुत्वं

कथमिति चेदित्थम् । किं पदान्तरसापेक्षाण्येव पदानि विशेषान्वितस्वार्थाभिधायीन्युत तन्निरपेक्षाणि । नाद्यः । क्रियापदेनानयनरूपक्रियाविशेषेऽभिहिते घटपदेन तदन्वितस्वार्थाभिधानं घटपदेन घटरूपकारकविशेषेऽभिहिते क्रियापदेन तदन्वितस्वार्थाभिधानमित्यन्योन्याश्रयात् । न चायं दोषः सामान्यान्विताभिधानवादेऽस्ति । अन्योन्यनिरपेक्षाणामेव पदानां सामान्यान्वितस्वार्थाभिधायित्वस्यानुभवसिद्धत्वात् । तदुक्तं सुधायाम् । स्यादिदं विशेषाभिधानवादिनां दूषणं सामान्यान्विताभिधानवादे तु नायं दोषः । प्रत्येकं पदान्याकाङ्क्षित सन्निहितयोग्यान्वितस्वार्थाभिधानसमर्थानि पदान्तरमपेक्षन्त इति नेतरेतराश्रयत्वमिति । न द्वितीयः । पदान्तरनिरपेक्षस्यैकस्य पदस्य विशेषान्वितस्वार्थबोधकत्वस्यानुभवविरुद्धत्वात् ॥ **पदान्तरवैय्यर्थ्याच्चेति** । स्वमतमाह ॥ **प्रत्येकमिति** । प्रत्येकं पदान्तरनिरपेक्षाण्येव सामान्यतः क्रियात्वादिरूपसामान्यधर्मपुरस्कारेण योग्येतरान्वय अहो ॥ स्वित् पदार्थस्यान्वितस्वार्थस्य विशेषाकारेण स्वाभिधेयत्वेन स्वाधर्मस्याभिधानेऽभिधावृत्त्या बोधने शक्तानि पदानि पदान्तरस्य सनिधानेन योगेनाहितं प्रापितं शक्त्यन्तरं सामान्यावयवज्ञापनशक्तिमन्ति सन्तीति यावत् । विशेषतोऽप्यानयनरूपक्रियात्वादि धर्मविशेषपुरस्कारेणाप्यन्वितानि योग्येतरार्थेन विशिष्टार्थान्स्वार्थान्विशेषाकारेण स्वाभिधेयत्वेन स्वार्थानभिधानशक्त्या बोधयन्तीत्यर्थः । एतत्कुत इत्यत आह ॥ **तथेति** । तेन प्रकारेण पदानां प्रत्येकं सामान्यान्वयबोधकत्वेन पदान्तरसापेक्षाणां च तेषां विशेषान्वयबोधकत्वेन चानुभवात्प्रमितत्वादित्यर्थः । आचार्याः प्राहुरिति शेषः । एतदुक्तं भवति । कारकपदनिरपेक्षाणामेव क्रियापदानां कारकसामान्यान्वितस्वार्थेऽभिधारूपा शक्तिः क्रियापदनिरपेक्षाणां कारकपदानां तु क्रियासामान्यान्वितस्वार्थेऽभिधारूपा शक्तिः । अत एव पदानि प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थज्ञापनशक्तिमन्ति भवन्ति । तथैवानुभवात् । विशेषान्वये तु पदानां नाभिधानरूपा शक्तिः । इयमेव विशेषान्वयप्रतीतिः । पदान्तरसन्निधानरहितशक्तिभिः पदैर्भवति न तु पदान्तरनिरपेक्षैः । तथैवानुभवात् । तदुक्तं सुधायाम् । प्रत्येकं पदानि सामान्यतोऽन्वयाभिधायीनि । विशेषान्वितार्थप्रतीतिस्तु पदान्तरसन्निधानाहितशक्तिभिः पदैर्भवतीत्येतदनुभवसिद्धमित्यर्थ इति । तथाऽप्यवाच्यस्य विशेषान्वयस्य कथं शब्दात्प्रतीतिरिति चेत् । पदान्तरसमभिव्याहारादिति ब्रूमः । तदुक्तं सुधायाम् । अत एव सामान्यान्विताभिधानवादे वाक्यार्थविशेषाप्रतिलम्भ इति निरस्तम् । पदान्तरसमभिव्याहाराद्विशेषप्रतिपत्त्युपपत्तेरिति । ननु तर्हि किमनया सामान्यान्वयेऽभिधानशक्त्या पदार्थमात्रशक्तेरेव पदैः पदान्तरसमभिव्याहाराद्विशेषान्वयस्यैव प्रतीतिसम्भवादिति चेन्न । शक्तिग्रहणसमये पदानां सामान्यान्वितस्वार्थे शक्तेर्गृहीतत्वेन तत्परित्यागायोगान् । क्रियाविशेषजिज्ञासार्थं गामिति कारकपदस्य क्रियासामान्यान्विते शक्तेरावश्यकत्वात् । अन्यथा पदानां जातावेव शक्तिर्व्यक्तेराकाङ्क्षादिवशाद्धीरित्यापातात् ।

ननु तथाऽपि पदसम्बन्ध एवार्थः पदसमूहरूपवाक्येन बोधनीयः । अन्यथा गामानयेति रासभादेरपि वाक्यबोध्यतापातात् । तथा च पदवृत्तिविषयत्वमेव पदसमूहरूपवाक्यजन्यप्रतीतिविषयतायां तन्त्रमिति पदवृत्त्यभ्युपगमात् । संसर्गो हि विशेषप्रतियोगिविशेष एव । तथा च संसर्गः प्रतियोगिविशेषौ च गामानयेति पदवृत्तिविषय इति नोक्तशङ्कावकाशः । तथाऽपि नोक्तपदवृत्तिविषयः संसर्गविशेष इति चेत् । किं तावता यद्वाक्यप्रविष्टपदवृत्तिविषयो यावांस्तावानेव तत्पदघटितवाक्यबोध्य इत्यङ्गीकारेणातिप्रसङ्गलेशाभावात् । एतेन संसर्गविशेषज्ञापनासमर्थं कारकपदं क्रियापदसमभिव्याहारात्संसर्गविशेषज्ञापनासमर्थं कारकपदं क्रियापदसमभिव्याहारात्संसर्गविशेषज्ञापनशक्तमिति चोद्यं निरस्तम् । पदान्तरसमभिव्याहारेण संसर्गविशेषज्ञानशक्तेस्तत्राहितत्वेन व्याहत्यभावात् । तदिदमुक्तं पदान्तरसन्निधानाहितशक्तिभिः पदैर्भवतीत्यनुभवसिद्धम् ॥ **इत्यर्थ इति** । न चैवं सति पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसानसम्भवहेतुर्न पुनरविद्यमानशक्त्याधान इति सुधाविरोधः स्यादिति वाच्यम् । पदान्तरसन्निधानरूपसमभिव्याहारो हि सामान्यस्य वाच्यवाचकयोरभेदव्यपदेशस्यायं वै लोको महानाम्नीत्यादौ दर्शनात् । अन्वयवाचिनः पदस्य विशेषपर्यवसानमन्वयविशेषबोधकत्वं तत्र हेतुर्न पुनरविद्यमानशक्त्याधाने पदान्तरसमभिव्याहारात्प्राक् पदानामन्वयविशेषेऽविद्यमानशक्तिरभिधारूपा शक्तिस्तदाधानेन हेतुरित्येवं परत्वेनास्य वाक्यस्य पदान्तरसन्निधानाहितान्वयविशेषज्ञापनशक्तिनिषेधपरत्वाभावात् । तस्मात्प्रत्येकं सर्वाण्यपि पदान्यभिधारूपशक्त्यायोग्येतरसामान्यान्वितस्वार्थज्ञापनशक्तिमन्ति च पदान्तरसन्निधानाहितयोग्येतरविशेषान्वितज्ञापनशक्तिमन्ति सन्त्यन्वयविशेषं ज्ञापयन्तीत्याचार्याणां पक्षः साधुरिति ।

## अपौरुषेयागमस्वरूपम्

**(६) प्र.प.— आगमो द्विविधः । अपौरुषेयः पौरुषेयश्चेति । तत्रापौरुषेयो वेदः पौरुषेयोऽन्यः । वर्णाः सर्वत्र कूटस्थनित्याः । सर्वगताश्च । पदान्यपि नियतान्येव । तेषां पदार्थसम्बन्धोऽपि स्वाभाविक एव । तथाऽपि वाक्ये पदानामानुपूर्वीविशेषस्य स्वतन्त्रपुरुषपूर्वकत्वभावाभावाभ्यामयं भेदः ।**

**जना.— ॥ पौरुषेय इति ॥ अन्य इति** । वेदादन्यः । वाक्यसङ्घ इति शेषः । आगमे पौरुषेयापौरुषेयविभागानुपपत्तिं स्वयमेवाशङ्क्य निराकरोति ॥ **वर्णा इत्यादिनाऽयं भेद इत्यन्तेन ।** तथाऽपीत्युत्तरत्र श्रवणाद्वर्णा इत्यतः प्राग्यद्यपीति शेषः । सर्वत्र वेदे लौकिकवाक्ये चेत्यर्थः । कूटस्थनित्या निर्विकारा नित्याश्चेत्यर्थः । नित्यत्वे हेतुः कूटस्थेति । तथा च वेदलौकिकवाक्ययोः

कालिकक्रमवद्वर्णाघटितत्वतद्घटितत्वपौरुषेयत्वपौरुषेयत्वविभागो नोपपद्यत इति भावः । तदुभयगतवर्णानां दैशिकक्रमभावाभावाभ्यामप्ययं विभागो नोपपन्न इत्याह ॥ **सर्वगतश्चेति** । पदे विद्यमानवर्णानामुच्चारणपौर्वापर्यभावाभावाभ्यामप्ययं भेदो नोपपद्यत इत्याह ॥ **पदान्यपीति** ॥ **नियतान्येवेति** । नियतोच्चारणविषयवर्णघटितान्येवेत्यर्थः । उभयगतपदानामर्थसम्बन्धस्य स्वाभाविकत्वास्वाभाविकत्वाभ्यामप्ययं भेदो न सम्भवतीत्याह ॥ **तेषामिति** । एतत्कल्पे कलशशब्दो घटवाची । पूर्वकल्पे त्वन्यवाचीत्यत्र प्रमाणाभावादिति भावः । समाधत्ते ॥ **तथाऽपीति** ॥ **स्वतन्त्रेति** । अनधीततादृशसन्दर्भवक्त्वे सति तत्प्रवक्ता स्वतन्त्रपुरुषः । तादृशश्च लौकिकवाक्ये कालिदासादिः । वेदवाक्ये तादृशो नास्त्येव । प्रवाहतोऽनाद्यध्यापकपरम्परया पूर्वतनमेवेदमध्यापयाम इति वेदस्यानुसन्धीयमानत्वादिति भावः ।

**राघ.**— एवं निर्दोषं वाक्यमागम इत्युक्तवाक्यस्वरूपं तस्य यथार्थज्ञानसाधनत्वप्रकारं ज्ञातज्ञापकत्वादिदोषराहित्यं चोपपाद्य सर्वोऽप्यागमः पौरुषेय इति मतं निरसितुं विभागेन निर्दिशति ॥ **आगमो द्विविध इति** । नन्वाशुतरविनाशिवर्णसमुदायरूपपदसमुदायात्मकवेदस्य कथमपौरुषेयतेत्यत आह ॥ **वर्णा इति** । सर्वत्र वेदे तदन्यत्र च कूटवद्गगनवत्तिष्ठन्तीति कूटस्थाः । कूटं खं विदलं व्योमेत्युक्तेः । ते च ते नित्याश्च निर्विकारनित्याः । न प्रकृत्यादिवत्पटादिवद्वाऽनित्याः ॥ **पदान्यपि नियतानीति** । सर्वत्रेत्यनुषङ्गः । एकजातीयानुपूर्विकाणि ॥ **सम्बन्धोऽपीति** । वाच्यवाचकभावरूपसम्बन्धोऽपीत्यर्थः । नन्वेवं सति केन हेतुना पौरुषेयापौरुषेयविभाग इत्यत आह ॥ **तथाऽपीति** । उक्तरीत्या सर्वसाम्येऽपीत्यर्थः । अयं भेदः पौरुषेयापौरुषेयभेद इत्यर्थः ।

**विज.**— ननु वर्णनित्यत्वस्य पदत्वौपयिकवर्ण इत्यस्य च लोके वेदे चाविशेषात्पदानुपूर्व्याश्चानुपयोगात्कुतोऽयं पौरुषेयत्वादिविभाग इत्यत आह ॥ **वर्णा इति** ॥ **कूटस्थनित्या इति** । तथा च व्यक्तेरेव नित्यत्वम् । न तु प्रवाहस्येत्यर्थः । सोऽयं गकार इत्यादिप्रत्यभिज्ञयैकैकगकारादिसिद्धेस्तारत्वादेर्जातित्वे सङ्करादनुगतव्यवहारायोगात् । सजातीयसाक्षात्कारप्रतिबन्धावच्छेदकत्वादिनाऽनुगमे प्रतिबन्धकत्वनानुगतगकारादिव्यक्तेरेव तादृशव्यवहारसम्भवे जातिवैय्यर्थ्यादुपाधिरूपस्य च तस्य कालभेदेनैकस्मिन्नपि सम्भवात् । एककाले व्यापके वर्णे प्रदेशभेदेन गमने विहङ्गतदभावयोरिव सम्भवात् । भेदकाभावेन वर्णा व्यापकाः । अत एव नित्याश्चेति भावः ॥ **तथाऽपीति** । बुद्धागमादितुल्यतापरिहाराय "श्रुतिर्वाव नित्या अनित्या वा स्मृतयो याश्चानित्या वाच" इति श्रुत्या वेदस्य नित्यत्वावगतेर्वर्णनित्यत्वमात्रस्य स्मृत्यादावपि सत्त्वात् । आनुपूर्व्याश्चोच्चारणत्वघटिताया नित्यत्वा-

योगात् । प्रतिसर्गमनन्तानुपूर्व्यादिकल्पने च गौरवात् । नियतानुपूर्वीकत्वरूपापौरुषेयत्वसिद्धिः । स्मृत्यादौ त्वनित्यत्वोक्तेर्वर्णानित्यत्वस्य त्वयोगात्क्रमानित्यत्वस्य च वेदेऽपि सत्त्वादनियतानुपूर्वीकत्वपौरुषेयत्वसिद्धिरिति भावः ।

**वेदे.**— एवमागमसामान्यलक्षणमभिधायेदानीं तद्विभागमाह ॥ **आगम इति** । आद्यं लक्षयति ॥ **तत्रेति** । तयोर्मध्य इत्यर्थः । वेदत्वमेवापौरुषेयत्वमागमत्वमित्यर्थः । वेदत्वं चाप्रमितकर्तृवाक्यत्वम् ॥ **अन्य इति** । अभिमतकर्तृकं प्रमाणवाक्यत्वमित्यर्थः । उक्तविभागापपत्तिमाशङ्क्य परिहरति ॥ **वर्णा इत्यादिना** । अत्र यद्यपीति पूरणीयम् । सर्वत्र लोके वेदे चेत्यर्थः । एतच्च पदानि सम्बद्ध इत्यत्रापि योज्यम् । कूटस्थनित्या निर्विकारतयैव नित्याः । न तु प्रकृत्यादिवदित्यर्थः । प्रसङ्गादाह ॥ **सर्वगता इति** । नित्यत्वसाधनाय सर्वगतत्वमिति तु मन्दम् । क्षणेषु व्यभिचारात् । नियतान्येकप्रकाराणि ॥ **स्वाभाविका एवेति** । न तु सङ्केतापरपर्यायेश्वरेच्छारूप इत्यर्थः । तथात्वे गङ्गाशब्दात्तीरं प्रत्येत्विवतीश्वरेच्छायाः सन्मात्रविषयायाः कार्यैकोन्नेयायाः सत्त्वेन गङ्गाशब्दस्य तीरेऽपि शक्तिप्रसङ्गात् । अस्माच्छब्दादयमर्थोबोद्धव्य इतीश्वरेच्छाया एव शक्तिरूपत्वेनाङ्गीकारात् । चक्षुषा घटं प्रत्येतु धूमेन वह्निं प्रत्येत्वितीश्वरेच्छयैव चक्षुर्धूमयोर्घटवह्निभ्यां सम्बन्धो न तु संयोगव्याप्ती इत्यपि स्यादिति भावः। तथा च पौरुषेयापौरुषेयागमयोर्वर्णपदपदार्थसम्बन्धानामेकरूपेण वाक्यभेदस्य चातिप्रसञ्जकत्वेनाविभाजकतयोक्तविभागो निर्निबन्धन एवेति भावः ॥ **आनुपूर्वीति** । क्रमविशेषेत्यर्थः ॥ **स्वतन्त्रेति** । स्वजातीयोच्चारणमनपेक्ष्योच्चारयिता पुरुषः स्वतन्त्र इत्युच्यते । यथा भारतस्य व्यासः । वैदिके तु तत्पूर्वकत्वाभावः । तत्क्रमेणैव तैर्वर्णैरित्यागमसिद्धः । तथा चोभयत्र वर्णपदपदार्थ सम्बन्धविभागाभावेऽपि वाक्यगतक्रमविशेषे स्वतन्त्रकर्तृत्वभावाभावाभ्यामयं विभागो युक्त इति ध्येयम् । अपौरुषेयागमानङ्गीकारे च धर्मादीनां स्वर्गादिहेतुत्वासिद्धिप्रसङ्गः । एतादृशधर्माधर्मयोः स्वर्गनरकविशेषकारणत्वमित्यत्र प्रत्यक्षानुमानयोरप्रवृत्तेः । पौरुषेयागमस्य चाप्यनिश्चयेन तदनिर्णायकत्वादिति द्रष्टव्यम् ।

**अभि.**— ॥ **अपौरुषेय इति** । नन्वपौरुषेयस्यागमैकदेशत्वाभिधानमयुक्तम् । यथार्थज्ञानसाधनत्वाभावात् । तथा हि । यश्च पौरुषेयो वेदः स न तेन क्रमेण बोधकः किन्त्वन्यक्रमेण बोधकः। तत्क्रमविशिष्टश्च नापौरुषेयः । क्रमव्यत्यासादिति चेन्न । अपौरुषेयक्रमेणैव बोधकत्वाङ्गीकारात् । व्यवहितानामपि पदानां योग्यतावशादन्वयप्रतीतिजनकत्वात् । किमर्थं ह्यन्वय सन्धानमिति चेन्न । झटिति परबोधनोपायत्वात् । अवश्यं चैतदेवं विज्ञेयम् । यथाश्रुतवाक्यार्थबोधानन्तरमन्वयक्रमेण

वाक्यान्तरस्य सर्वैरुन्नीयमानत्वात् । पश्यसि शिरसा भगिनीं वहसि चक्षुषा कुम्भमित्यत्र भगिनीं चक्षुषा पश्यसि कुम्भं शिरसा वहसीत्यन्वयक्रमविशिष्ट वाक्यद्वयोन्नयनं न स्यात् । अबोधकस्य वाक्याभासनिश्चयस्यानुचितत्वात् । न हि कुण्डमजाजिनं पललपिण्डोऽधरोरुकमेतत्कुमार्याः स्फैय्य-कृतस्य पिता प्रतिशीन इति वाक्यं दृष्ट्वा वाक्यान्तरमुन्नेतुं प्रयतन्ते । किं नामाबोधकत्वादसाधुतामेव प्रतिपद्यन्ते । तेन मन्यामहे व्यवहितपदोपेतवाक्यमेव बोधकमिति । सौकर्याय त्वन्वयक्रम-विशिष्टवाक्यान्तरोन्नयनमिति ॥ **अनुपपद्यमानार्थदर्शनादिति** । उपपादकबुद्धिरर्थापत्तिफलमित्यर्थः । एतेनार्थापत्तेरनुमानत्वं प्रतिज्ञाय फलीभूतज्ञानस्यार्थापत्तित्व कथनमयुक्तमिति परास्तम् ।

**आद.**— ॥ **वर्णा इति** । ध्वनयो नाभसा उच्चारेणोत्पद्यन्ते । ते च वर्णव्यञ्जका-स्तत्तद्वर्णव्यञ्जकाः । ध्वनयश्च विजातीया एव । अतो वर्णानां नित्यत्वेऽपि व्याप्तत्वेऽपि न सर्वदा सर्वेषां वर्णानां सर्वेषां प्रत्यक्षापत्तिः । नित्यत्वं व्याप्तत्वं च पूर्वश्रुत एवायं गकारः काश्यां श्रुता एवैते वर्णा इति प्रत्यभिज्ञानादित्यादिकं सविस्तरं तत्त्वनिर्णयादौ प्रतिपादितम् । बाधकानि चोद्धृतानि । किञ्च ध्वनीनामेव वर्णत्वे कदाचिद्ध्वनिश्रवणेऽपि वर्णाश्रवणं न स्यात् । न च ध्वनिर्वर्णरूप इति न वाच्यम् । पार्श्वस्थस्यान्यस्यापि वर्णाश्रवणप्रसङ्गात् । न च करणदोषो ध्वनिवृत्तिवैजात्यस्य गृहीतत्वात् । अन्यथा चैत्रस्यैवायं ध्वनिर्नमैत्रस्येति धीर्न स्यात् । न च कत्वादिप्रत्यक्षप्रतिबन्धकदोषः कल्प्यतेऽतो न कत्वादिप्रत्यक्षापत्तिरिति वाच्यम् । सामान्यतो वर्णत्वस्यापि प्रत्यक्षापत्तेः । ध्वनिरेव श्रुतो न वर्ण इत्यनुभवव्याकोपश्च । वर्णेषु ध्वनित्वाभावेन ध्वनित्वप्रत्यक्षाभावप्रसङ्गश्च । न च प्रत्यक्षं भ्रमः । बाधकाभावात् । न च ध्वनित्वं वर्णेष्वप्यस्ति । शब्दो द्विविधः । ध्वन्यात्मको वर्णात्मकश्चेति विभागाविरोधात् । मन्मते तु ध्वनिश्रवणेऽपि वर्णाश्रवणेन तथाऽनुभवो युज्यते । न च व्यञ्जक-ध्वनिश्रवणेऽपि वर्णाश्रवणे बीजाभावः । तस्य ध्वनेस्तं पुरुषं प्रत्यव्यञ्जकत्वात् । अभ्यासपाटवादिना पुरुषान्तरस्य व्यञ्जकत्वोपपत्तेः । किञ्च पक्ष्यादिध्वनिभिस्तज्जातीयानां वर्णाभिव्यक्तिस्तावदङ्गीकार्या । अन्यथा ध्वनिमात्रस्यावाचकत्वेन पक्ष्यादीनां परस्परं कथनादेरभावप्रसङ्गात् । न चेष्टापत्तिः । पुराणादिविरोधात् । पुराणादिषु भाषणादिकर्तृत्वस्य प्रतिपादनात् । न च पक्ष्यादिध्वनिषु वर्णत्व-मङ्गीकर्तुं शक्यम् । बहुधा प्रयत्नेऽपि कदाऽपि तदप्रत्ययात् । तद्भाषाभिज्ञानां वर्णाभिव्यक्तेश्च । अतो ध्वनिव्यतिरिक्ता वर्णा ध्वनिव्यङ्ग्या इति सिद्धम् । अधिकमाकरे व्यक्तम् । ग्रन्थगौरवभिया नेह प्रपञ्च्यते ।

**वि.**— सर्वोऽप्यागमः पौरुषेय इति मतं कुमतमिति ज्ञापनायागमविभागमाह ॥ **आगमोऽपि द्विविध इति** । अपौरुषेयः पुरुषाप्रणीतः पौरुषेयस्तत्प्रणीत इति द्विविध इत्यर्थः । तौ काविति

जिज्ञासायामाह ।। **तत्रेति** । तयोरपौरुषेयागमो वेदस्तदन्यागमः पौरुषेय इत्यर्थः । वर्णानां स्वरूपेण वैकदेशस्थत्वेन वा पुरुषकृतत्वाकृतत्वाभ्यां भेदाद्भेदात्मकस्यागमस्यायं भेदः कथ्यते । उत पदानां पुरुषकृतत्वाकृतत्वाभ्यां भेदात्तदात्मकस्यागमस्यायं भेदः । आहोस्वित्पदार्थसम्बन्धस्य पुरुषकृतत्वा-कृतत्वाभ्यां भेदात्तादृशसम्बन्धवत्पदात्मकस्य वाऽयं भेद इति विकल्पं हृदि निधाय पक्षत्रयमपि न सम्भवतीत्याशयवानाह ।। **वर्णा इत्यादिना** । सर्वत्र सर्वस्मिन्नागमे प्रविष्टवर्णाः कूटस्थनित्या उत्पत्तिविनाशरहिताः सर्वगताः सकलदेशस्था इत्यर्थः । सर्वस्याप्यागमस्य स्वरूपेणैकदेशस्थत्वेन च पुरुषानुत्पन्नवर्णात्मकत्वात् । स्वरूपेणैकदेशस्थत्वेन वा पुरुषकृतवर्णात्मकत्वस्यागमे क्वाप्यभाव-वद्वर्णानां पौरुषेयत्वापौरुषेयत्वाभ्यां भेदात्तादृशवर्णात्मकस्यागमस्यायं भेद इत्ययुक्तमिति भावः । अत्र वर्णानां विनाशाभावकथनं वस्तुस्थितिप्रदर्शार्थमिति ज्ञेयम् ।। **पदान्यपीति** । सर्वत्रेत्यनुवर्तते । नियतान्येव नियतक्रमाण्येव न त्वनियतक्रमाणीत्यर्थः । सर्वस्याप्यागमस्य नियतानुपूर्वीकपदात्मकत्वेन पुरुषप्रणीतपदात्मकत्वस्यागमे क्वाप्यभावात्पदानां पौरुषेयत्वापौरुषेयत्वाभ्यां भेदात्तादृशपदात्मकत्व-स्यागमस्यायं भेद इत्यपि न युक्तमिति भावः ।। **तेषामिति** । अत्रापि सर्वत्रेत्यनुवर्तते । सर्वत्र तेषां पदानां पदार्थैर्वाच्यवाचकभावलक्षणसम्बन्धोऽपि स्वाभाविक एव पुरुषेणाकृत एवेत्यर्थः । सर्वस्याप्यागमस्यापौरुषेयपदार्थसम्बन्धवत्पदात्मकत्वेन पुरुषकृतपदार्थसम्बन्धवत्पदात्मकत्वस्यागमे क्वाप्यभावात् । पौरुषेयपदार्थसम्बन्धत्वापौरुषेयपदार्थसम्बन्धत्वाभ्यां भेदात्तादृशपदात्मकस्यायं भेद इत्यपि न युक्तमित्याशयः । नियामकसद्भावाद्युक्तोऽयमागमभेद इत्याह ।। **तथाऽपीति** । यद्यप्युक्तरीत्याऽयमागमभेदोऽनुपपन्नस्तथाऽपि वा वाक्यात्मकान्यागमे प्रविष्टानां पदानामपूर्वविशेषस्य क्रमविशेषः स्यात्तत्पदमात्रसम्बन्धिनी याऽनुपूर्वी तदतिरिक्तायाः सकलपदार्थसम्बन्धिन्या आनुपूर्व्या इति यावत् । स्वतन्त्रपुरुषपूर्वकत्वभावाभावाभ्यां स्वतन्त्रः पुरुषः प्राचीनानुपूर्व्यपेक्षारहितः पुरुष-पूर्वभावी यस्य स तथा तस्य भावस्तत्त्वं पुरुषजन्यत्वमिति यावत् । तस्य सत्त्वासत्त्वाभ्यामयं भेदोऽ-पौरुषेयः पौरुषेय इत्येवंरूप आगमविषयागम इत्यर्थः । प्राचीनानुपूर्व्यनुसारेणाध्यापकैर्वेदवाक्यानु-पूर्वीकरणात्स्वतन्त्रपदोपादानमिति ज्ञेयम् । यद्वाक्यापूर्वी स्वतन्त्रपुरुषाप्रणीता तद्वाक्यमपौरुषेयम् । यद्वाक्यानुपूर्वी तत्तत्प्रणीता तत्पौरुषेयमिति व्यवस्थासम्भवादुक्तागमविभागो युक्त इति भावः ।

**(७) प्र.प.— आगमोऽनुमान एवान्तर्भवतीति वैशेषिकादयः । तदसत् । व्याप्त्याद्यननु-सन्धान एव वाक्यार्थप्रतीतेरनुभवात् । अपौरुषेयः पृथक् प्रमाणम् । पौरुषेयस्त्वनुमानमिति प्राभाकराः । तदप्यसत् । उभयत्र सामग्रीसाम्येऽपि विशेषकल्पकाभावात् । तदेतानि त्रीण्येव प्रमाणानि ।**

**जना.**— ॥ **आगम इति** । द्विविधोऽपीत्यर्थः ॥ **अनुमान एवेति** । तथा च त्रिविधमनुप्रमाणमिति पूर्वो विभागोऽनुपपन्न इति भावः । ज्योतिष्टोमेन स्वर्गकामो यजेतेति प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धा अनुमिमते । इमानि पदानि स्वस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि । आकाङ्क्षादिमत्पदकदम्बकत्वात् । गामानयेति पदकदम्बकवदिति । तथा चानुमानविधयैव प्रमाणमिति भावः ॥ **व्याप्तीति** । अनुमानविधया बोधकत्वपक्षेऽवश्यं व्याप्त्याद्यनुसन्धानपुरस्सरमेव वाक्यार्थप्रतीतिः स्यादिति भावः ॥ **उभयत्रेति** ॥ **सामग्रीति** । आकाङ्क्षादिसामग्रीसाम्य इति भावः । एवमागमस्य पृथक् प्रामाण्यं प्रसाध्यानुप्रमाणत्रैविध्यमुपसंहरति ॥ **तदिति** ॥ **प्रमाणानीति** । अनुप्रमाणानीत्यर्थः ।

**राघ.**— पूर्वं त्रिविधमनुप्रमाणमित्युक्तत्रयाणां लक्षणोदाहरणादिना स्वरूपं प्रतिपाद्याधुना विभागोऽयं न्यूनाधिकसङ्ख्याव्यवच्छेदायान्यतमस्यान्यतमेऽन्तर्भावनिरासायाधिकप्रमाणानां त्रिष्वेवान्तर्भावसूचनाय चेति भावेन त्रैविध्यं साधयितुमितःपरमुक्तेष्वेवान्तर्भाव्यानीत्यन्त उत्तरो ग्रन्थः । तत्रान्तर्भावमतं तावदनूद्य निराह ॥ **आगम इति** । **व्याप्त्यादीति** । लिङ्गमादिपदार्थः ॥ **सामग्रीसाम्येऽपीति** । आकाङ्क्षादिमत्पदकदम्बश्रवणसङ्केतस्मरणशब्दन्यायोपक्रमाद्यनुसन्धानरूपायावाक्यार्थबोधसामग्र्याः साम्य इत्यर्थः । एतन्मतनिरासेनागमद्वैविध्यमपि दृढीकृतं भवति ॥ **तदिति** । तस्मादागमोऽनुमानेऽन्तर्भूत इत्यस्यायुक्तत्वादेतानीयता ग्रन्थेन प्रपञ्चितानि प्रत्यक्षादीनीत्यर्थः ।

**विज.**— नन्वागमस्य पृथक् लक्षणाद्युक्तिरनर्थिका । तस्यास्तु तयैव प्रमाणत्वादिन्यूनत्वशङ्कां परिहर्तुमाह ॥ **आगम इति** । शब्दो लिङ्गतयैवार्थबोधक इत्यर्थः । एतानि पदानि तात्पर्यविषयस्वस्मारितार्थमिथःसंसर्गज्ञानपूर्वकाण्याकाङ्क्षादिमत्त्वादिति वा । एते पदार्थास्तात्पर्यविषयपरस्परसंसर्गवन्तस्तादृक्पदस्मारितत्त्वादिति वाऽनुमानम् । पूर्वत्र पदज्ञानस्योत्तरत्र पदार्थज्ञानस्य पक्षज्ञानत्वेपयोगः । आकाङ्क्षादेर्लिङ्गविशेषणतया तज्ज्ञानोपाय इति । शाब्दज्ञानोपयुक्तत्वाभिमतोपयोगतौल्ये ज्ञानावच्छेदकतया संसर्गभानाभ्युपगमादन्वयबोधस्य शब्दप्रयोज्यत्वे सति तादृक्पदानां वक्तृज्ञानव्याप्तिप्रतिसन्धानं विनाऽन्वयबोधाभावः परस्याभिमतः । क्लृप्तप्रमाणविधयैवान्वयबोधनिर्वाहादिति । तदेतद्दूषयति ॥ **तदिति** । न च क्लृप्तप्रमाणविधयैव तत्सम्भवे व्याप्त्यप्रतिसन्धाने वाक्यार्थे प्रतीतेरसिद्धिः । तथा सति पदार्थोपस्थितौ मानससंसर्गबोध इत्येवोक्त्या तत्सम्भवादनुभवविरुद्धव्याप्त्यादिरिति सन्धानकल्पनानुपपत्तेः । साक्षात्त्वाननुभवात्तु मानसत्वत्यागेऽनुमितित्वाननुभवादपि तथा । तवानुमितेर्व्यापकावच्छेदकप्रकारकतया तात्पर्यविषयत्वेन संसर्गभानेऽपि घटकर्म-

त्वान्वयस्यानयने कर्मभूतघटान्वयस्य बोधसिद्धेश्च । चैत्रो दण्डीत्यादौ दण्डादेर्विशेषणविशेष्यभावेन भानादनुमानेन च तादृशबोधासम्भवात् । तत्र पदार्थविशिष्टसंसर्गस्यैव भानात् । पदानामन्वित-शक्ततया पदार्थोपस्थापकत्वाभ्युपगमे वाक्यार्थबोधकत्वस्यासम्भवाच्चेति भावः । लोके वक्तृज्ञान-सम्भवादनुमानेन संसर्गबोधता वेदे तु तदसम्भवाच्छब्दविधयैव बोधकत्वमिति । गुरुमतमाह ॥ **अपौरुषेय इति** ॥ **उभयत्रेति** । वेदे क्लृप्तायाः शाब्दबोधसामग्र्या लोके सम्भृतत्वे व्याप्तिप्रति-सन्धानविलम्बेनाबोधकत्वमयुक्तमित्यर्थः । प्रमाणाधिक्यं परिहर्तुमाह ॥ **तदेतानीति** । कल्पनीय-त्वाभिमतव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिज्ञानं करणम् । तस्मात्कल्पनीयत्वाभिमतज्ञानं फलं तदनुमानमेवेत्यर्थः ।

**वेदे.**— नन्वागमस्य न पृथग्लक्षणाद्युक्तिर्युक्ता । तस्यानुमान एवान्तर्भावात् । तथाहि । यो यानि पदानि प्रयुङ्क्ते स तत्पदार्थसंसर्गज्ञानवानिति सामान्येन स्वात्मनि नियमेन प्रतीतेः पश्चात्पदसमूहज्ञाने तेन वक्तुस्तत्पदार्थसंसर्गज्ञानानुमाने तदवच्छेदकतया वाक्यार्थसिद्धिसम्भवादिति मन्यमानानां मतमुपन्यस्य दूषयति ॥ **आगम इति** ॥ **व्याप्त्यादीति** । अयमाशयः । पदसमुदायमात्रस्य व्यभिचारितया लिङ्गत्वेनाकाङ्क्षादिमत्पदकदम्बकस्यैव लिङ्गत्वे वाच्ये तादृशपदकदम्बकज्ञानमात्रेणैव व्युत्पन्नस्य वाक्यार्थावगतौ वक्तृज्ञानाविनाभावप्रतीत्यादिकल्पने गौरवम् । तदननुसन्धानेऽपि वाक्यार्थप्रतीतेरनुभवसिद्धत्वादिति ॥ **पृथगिति** । वक्तुरभावेन तज्ज्ञानावच्छेदकतया संसर्गसिद्ध्य-सम्भवादिति भावः ॥ **अनुमानमिति** । उक्तरीत्या वक्तृज्ञानावच्छेदकतया संसर्गानुमानसम्भवादिति भावः ॥ **सामग्रीति** । यथा वेदे आकाङ्क्षादिमत्पदसमूहज्ञानमात्रेण वाक्यार्थप्रतीतौ न व्याप्त्यादि-प्रतिसाधनविलम्बेन विलम्बस्तथा लोकेऽपि तादृशपदसमूहज्ञानस्यावश्यकतयाऽनेनैव वाक्यार्था-वगमसम्भवेऽतिरिक्तव्याप्त्यादिज्ञानरूपकारणविशेषकल्पने मानाभावादिति भावः । प्रमाणाधिक्य-मतनिरासप्रस्तावनायोक्तमुपसंहरति ॥ **तदेतानीति** ।

**आद.**— ॥ **आगमोऽनुमान एवान्तर्भवतीति** । विमतानि पदानि स्वस्मारितार्थसंसर्गज्ञान-पूर्वकाण्याकाङ्क्षादिमत्पदकदम्बकत्वान्मदुच्चरितपदकदम्बवदिति प्रयोगो द्रष्टव्यः ॥ **व्याप्त्यनुसन्धान एवेति** । उपलक्षणमेतत् । दोषान्तराण्यपि द्रष्टव्यानि । तथा हि । शुकोच्चरितवाक्ये संसर्गज्ञान-पूर्वकत्वाभावेऽप्युक्तहेतुसत्त्वाद्व्यभिचारः । न च शुकस्योपदेष्टुस्तत्संसर्गज्ञानपूर्वकत्वं वर्तत एवेति वाच्यम् । दैवात्केनाप्यनुपदिष्टपदक्रमोच्चारणसम्भवे तत्र व्यभिचारस्य दुर्वारत्वात् । यादृच्छिकपि-पीलिकालिप्या स्मृतपदकदम्बेषु व्यभिचारश्च । किञ्च केयमाकाङ्क्षा । यदि नैयायिकरीत्या पदानां

समभिव्याहारो गौरश्वः पुरुषो हस्तीति मूर्खाद्युच्चरितपदेषु व्यभिचारः । यादृशसमभिव्याहाराद्बोधोऽसिद्धस्तादृशसमभिव्याहारश्च वाक्याच्छब्दबोधं विना दुर्ज्ञेय इति हेतोरज्ञानासिद्धिः । यदि च तदर्थान्वितस्वार्थबोधकत्वप्रकारकज्ञानविषयत्वं तर्हि बोधकत्वाभावेन विशेषणासिद्धिः । भ्रमसाधारणज्ञाननिवेशे वर्णमालायां व्यभिचारः । न चानुमिति मादायाकाङ्क्षोपपादनीया । प्रथमतो हेतुज्ञानाभावेनानुमितेरेवासम्भवादित्यादिदोषा द्रष्टव्या इत्यलम् ॥ **अपौरुषेयः पृथक् प्रमाणमिति** । तत्र संसर्गज्ञानपूर्वकत्वस्य बाधितत्वादिति भावः ।

**वि.—** त्रिविधमनुप्रमाणं प्रत्यक्षानुमानागमाश्चेत्युक्तम् । तत्रागमस्यानुमानान्तर्भावात् । अनुप्रमाणत्रैविध्यमयुक्तमिति शङ्कावारणायागमस्यानुमानान्तर्भाववादिनां मतं दूषयितुमनुवदति ॥ **वैशेषिकादय इति** । आहुरिति शेषः । आदिपदेन सौगता उच्यन्ते । दूषयति ॥ **तदसदिति** । तदनुमानान्तर्भूत आगम इति मतमसत् । दुष्टमित्यर्थः । तत्र हेतुमाह ॥ **व्याप्त्यादीति** । व्याप्तिसमुचितदेशवृत्तित्वपक्षज्ञानाभावदशायामेव वाक्यार्थस्यासंसर्गे विशेषस्यानुभवात्प्रतीतेरित्यर्थः । व्याप्तिज्ञानं समुचितदेशवृत्तित्वज्ञानं पक्षज्ञानं चानुमितिसामग्री तदभावेऽपि वाक्याज्ज्ञायमानवाक्यप्रतीतिः । अतस्तत्करणं वाक्यं नानुमानान्तर्भूतमिति भावः । पौरुषेयागमस्यानुमानान्तर्भूतत्वादागमद्वैविध्यमयुक्तमिति शङ्कावारणायानुमानान्तर्भावं वदतो मतं दूषयितुमनुवदति ॥ **अपौरुषेय इति** । अपौरुषेयागमः पृथक् प्रमाणमनुमानातिरिक्तं प्रमाणमित्यर्थः । प्राभाकरा आहुरिति शेषः ॥ **उभयत्रेति** । पौरुषेयवाक्यापौरुषेयवाक्यद्वयप्रतीत्योः सामग्र्योः कारणचक्रस्य साम्ये एकविधत्वमेवेति । विषयस्य वाक्यफलत्वानुमानफलत्वरूपवैरूप्यस्य कल्पकाभावादित्यर्थः । यत्प्रतीतिसामग्र्येकरूपा तज्ज्ञानकरणं प्रमाणमप्येकरूपमेवेति भावः । प्रमाणमुपसंहरति ॥ **तदेतानीति** । तस्मात्प्रत्यक्षानुमानेष्वेकस्यान्यत्रानन्तर्भावादेतानि प्रत्यक्षादीनि त्रीण्येव न्यूनाधिकसङ्ख्यारहितानि त्रीण्यनुप्रमाणानीत्यर्थः ।

## अर्थापत्त्यादीनामन्तर्भावप्रकारः

**(८) प्र.प.— एतेष्वेवार्थापत्त्यादीनामन्तर्भावः । तथा हि । अनुपपद्यमानार्थदर्शनात्तदुपपादके बुद्धिरर्थापत्तिः । यथा जीवंश्चैत्रो गृहे नास्तीति ज्ञाने सति बहिर्भावज्ञानम् । अत्र यद्यप्येकैकस्य बहिर्भावलिङ्गत्वं नोपपद्यते । व्यभिचारात् । तथापि चैत्रो बहिरस्ति जीवनवत्त्वे सति गृहेऽसत्त्वात् । यो जीवन्यत्र नास्ति स ततोऽन्यत्रास्ति । यथाऽहमिति मिलितयोर्जीवनगृहाभावयोर्लिङ्गत्वमुपपद्यत एव ।**

**जना.**— नन्वर्थापत्त्यादेरपि पृथक् प्रमाणस्य सत्त्वात्त्रीण्येव प्रमाणानीत्ययुक्तमित्यत आह ॥ **एतेष्वेवेति** । अन्तर्भावमुपपादयितुं प्रतिजानीते ॥ **तथा हीति** । यन्नोपपद्यते तदनुपपद्यमानं विवक्षितम् । यस्याभावेऽनुपपत्तिस्तदुपपादकम् । उपपादके बुद्धिरुपपादकविषयिणी बुद्धिरित्यर्थः । अर्थापत्तिमुदाहृत्य दर्शयति ॥ **यथेति** । बहिर्भावज्ञानमित्येतदनन्तरमर्थापत्तिरित्यनुवर्तते । अत्र बहिःसत्त्वज्ञानलक्षणफलेऽर्थस्यापत्तिः कल्पनेति षष्ठीसमासेनार्थापत्तिशब्दो वर्तते । बहिःसत्त्वज्ञानकरणे जीवत्वे सति गृहेऽभावज्ञाने त्वर्थापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्तत इति फलकरणसाधारणः । एवमुत्तरत्रोपमानाभावादिशब्दोऽप्युभयसाधारणो द्रष्टव्यः । तत्र पराभिमतफलस्यानुप्रमाणेष्वन्तर्भावः । पराभिमतपृथक्फलस्य चानुप्रमाणफलेऽन्तर्भाव इति सङ्क्षेपो द्रष्टव्यः । वहिर्भावमनुमानेन साधयितुं लिङ्गं परिशेषेण द्रढयति ॥ **अत्रेति** । अत्र जीवनवत्त्वगृहासत्त्वयोर्मध्ये ॥ **व्यभिचारादिति** । जीवनवत्त्वमात्रस्य गृहनिष्ठपुरुषे व्यभिचाराद्गृहेऽसत्त्व मात्रस्य च मृते व्यभिचारादित्यर्थः ।

**राघ.**— ॥ **अनुपपद्यमानेति** । येन विना यन्नोपपद्यते तदुपपादकम् । अन्यदुपपाद्यम् । तत्रानुपपद्यमानार्थदर्शनं करणम् । उपपादविषयबुद्धिः फलम् । फलप्राधान्यविवक्षया बुद्धिरर्थापत्तिरित्युक्तम् ॥ **इति ज्ञाने सतीति** । प्रत्यक्षेण शब्देन चेति भावः । बहिर्भावज्ञानं बहिस्थत्वज्ञानम् । जायमानं बहिर्भावज्ञामर्थापत्तिरित्यर्थः ॥ **अत्रेति** । दलद्वयात्मकेऽनुपपद्यमानेऽर्थ इत्यर्थः ॥ **व्यभिचारादिति** । जीवत्वगृहासत्त्वयोः क्रमाद्गृहे सत्त्वे मृते च व्यभिचारादित्यर्थः ।

**वेदे.**— ननु कथमनुप्रमाणत्रित्वम् । अर्थापत्त्यादीनामन्येषां विद्यमानत्वादित्यत आह ॥ **एतेष्विति** । यथासम्भवमिति शेषः । अर्थापत्तिं तावदनुमानेऽन्तर्भावयितुं तल्लक्षणमाह ॥ **अनुपद्यमानेति** । प्रात्यक्षिकबहिःसत्त्वबुद्ध्यतिव्याप्तिवारणाय पूर्वभागः । अन्तर्भावमाह ॥ **अत्रेत्यादिना** ॥ **एकैकस्येवेति** । जीवित्वस्य गृहाभावस्येत्यर्थः ॥ **व्यभिचारादिति** । गृहगते जीवित्वमात्रस्य मृते च गृहाभावमात्रस्य बहिःसत्त्वव्यभिचारादित्यर्थः ॥ **उपपद्यत एवेति** । न च व्याप्तिप्रतिसन्धानविधुराणामपि गृहाभावदर्शनेन बहिःसत्त्वबुद्धेः कथमेतदिति वाच्यम् । गृहाभावस्य बहिःसत्त्वं विनाऽनुपपत्तिरिति न त्वन्मतेऽपि तावदवश्यकम् । तदभावे गृहाभावदर्शनमात्रेण बहिःसत्त्वबुद्धेरननुभवात् । अनुपपत्तिज्ञानमेव च व्याप्तिज्ञानम् । अनुपपत्तिरविनाभाव इत्येतयोरेकार्थत्वेन नाम्नैव विवादपर्यवसानादिति ।

**वि.**— ननु प्रमाणत्रयमध्ये एकस्यान्यत्रान्तर्भावाभावेऽप्यर्थापत्त्यादेः पृथक्प्रमाणस्य सत्त्वात्त्रीण्येवेत्यवधारणानुपपत्तिरित्यत आह ॥ **एतेष्वेवेति** । प्रत्यक्षानुमानागमेष्वेवेत्यर्थः । उपमानादि-

रादिशाब्दार्थः । कथमत्रान्तर्भाव इति जिज्ञासायामन्तर्भावमुपपादयति ॥ **तथा हीति** । अर्थापत्तिरनुमानान्तर्भूतेत्याशयेनार्थापत्तिस्वरूपमाह ॥ **अनुपपद्यमानार्थदर्शनेति** । यथा येन विनोपपद्यते नावतिष्ठते तस्यानुपपद्यमानार्थस्य दर्शनात्प्रमितेरुपपादके यस्मिन्सति यदुत्पद्यते तस्मिन्नुपपादके बुद्धिप्रमितिरर्थापत्तिः । फलरूपार्थापत्तिरित्यर्थः । अनुपपद्यमानार्थश्च लिङ्गमेवेति वाऽर्थापत्तिः पृथक्प्रमाणमिति हृदयम् । लक्ष्ये लक्षणसत्त्वं दर्शयति ॥ **यथेति** । जीवंश्चैत्रो गृहे नास्तीति चैत्रस्य जीविवत्गृहाभावयोरनुपपद्यमानयोरर्थयोः प्रमितौ सत्यां बहिर्भावज्ञानं गृहाद्बहिःसत्त्वस्योपपादकस्य प्रमितिर्भवतीत्यर्थः । अनुपपद्यमानार्थप्रमितेरनुमानत्वेऽनुपपद्यमानार्थस्य लिङ्गत्वमभ्युपेयम् । तदयुक्तमिति शङ्कते ॥ **यद्यपीति** । यद्यप्यत्राप्यनुपपद्यमानार्थयोर्जीवनगृहा- भावयोरेकैकस्यैकं चैकं च तस्यैकैकस्यैकस्य जीवित्वस्यैकस्य गृहासत्त्वेति यावत् । लिङ्गत्वं बहिर्भावव्याप्यत्वं न युज्यत इत्यर्थः । कुतो न युज्यत इत्यत आह ॥ **व्यभिचारादिति** । गृहवर्तिनि पुरुषे जीवित्वस्य मृते च पुरुषे गृहासत्त्वस्य बहिःसत्त्वरूपसाध्येन विनाऽवस्थानादित्यर्थः । जीवनगृहासत्त्वयोः प्रत्येकं व्यभिचारेणालिङ्गत्वेऽपि जीवनविशिष्टगृहासत्त्वस्य व्यभिचाराभावात् लिङ्गत्वमुपपद्यत इत्याशयेन परिहरति ॥ **तथाऽपीति** । व्यभिचाराज्जीवनगृहासत्त्वयोर्लिङ्गत्वासम्भवेऽपीत्यर्थः । इत्यनेन प्रकारेण मिलितयोर्जीवनगृहाभावयोर्जीवित्वगृहासत्त्वयोर्लिङ्गत्वबहिर्भावयोर्व्यापनत्वं युज्यत एवेत्यर्थः ।

**(९) प्र.प.— विरुद्धयोर्विशेषणविशेष्यभावानुपत्तिरिति चेन्न । सामान्यविशेषयोरविरोधस्य स्वस्मिन्नेव दृष्टत्वात् । आत्यन्तिकविरोधे त्वर्थापत्तिरपि न प्रवर्तते । किन्तु विप्रतिपत्त्या सन्देह एव भवतीति ।**

**जना.—** भ्रान्तः शङ्कते ॥ **विरुद्धयोरिति** । विरुद्धयोर्जीवनवत्त्वगृहासत्त्वयोरित्यर्थः । विरुद्धयोर्विशेषणविशेष्यभावोऽनुपपन्न इति कोऽर्थः । किं देशकालादिभेदेन परिहार्यविरोधवतोरिति किंवा देशकालादिनाऽपरिहार्यविरोधवतोरिति विकल्प्याद्यं निराह ॥ **सामान्येति** । जीवनवत्त्वं सामान्यम् । गृहेऽसत्त्वमधिकरणविशेषघटिताभावरूपत्वाद्विशेषः । तयोरित्यर्थः ॥ **स्वस्मिन्निति** । यः पुरुषो बहिर्भावं कल्पयति तस्मिन्नित्यर्थः । अर्थापत्तिपृथक्प्रामाण्यवादिनि प्राभाकरादाविति वाऽर्थः । द्वितीयमिष्टापत्त्या परिहरति ॥ **आत्यन्तिक एवेति** । देशकालादिव्यवस्थाया अपरिहाराय विरोध उपस्थिते सतीति शेषः । तर्हि तदा किं प्रवर्तत इत्यत आह ॥ **किन्त्विति** ।

**राघ.—** ॥ **सामान्यविशेषयोरिति** । जीवनस्य क्वापि सत्त्वाभावस्य चान्योन्यं विरोधेऽपि जीवनस्य क्वचिद्गृहप्रदेशे सत्त्वाभावस्य वृक्षत्वचूतत्वाभावयोरिवाविरोधस्य स्वात्मन्येव गृहाद्बहिर्निर्गते

दर्शनादित्यर्थः । ननु यत्र पुरुषे जीवनं क्वाप्यसत्त्वं चावधारितं तत्र कथमनुमानप्रवृत्तिरित्यत आह ॥ **आत्यन्तिकेति** । अर्थापत्तेरपि तादृशस्थलेऽप्रवृत्तेर्न तत्रानुमानतोपपादनायास इति भावः ॥ **विप्रतिपत्त्येति** । विरुद्धार्थयोः प्रतीत्या जीवनग्राहकमप्रमाणमुत क्वाप्यसत्त्वग्राहकमप्रमाणमिति वा यत्र क्व चास्ति वा मृतो वेति सन्देह एव भवतीत्यर्थः । इतिशब्दोऽर्थापत्त्यन्तर्भावसमाप्तौ । एवमग्रेऽपि ।

**विज.**— ॥ **विरुद्धयोरिति** । जीवनगृहाभावयोरित्यर्थः ॥ **सामान्येति** । सर्वत्रासत्त्व-जीवनत्वविरोधि न त्वेकदेश इत्यर्थः । ननु जीवी गृह एवेति ज्ञानवतः कथं लिङ्गप्रतिसन्धानमित्यत आह ॥ **आत्यन्तिकेति** । तत्र जीवनग्राहकेण गृहाभावग्राहकेण बहिःसत्त्वनिश्चयः किन्तु जीवनसंशय एव परम् । तवाप्यनुपपद्यमानजीवित्वनिश्चयावश्यकत्वेनार्थाद्वेति नियमग्राहकेण चेत्यर्थः ।

**वेदे.**— गूढाभिसन्धिः शङ्कते ॥ **विरुद्धयोरिति** । जीवनगृहाभावयोरित्यर्थः । अविदिताभिप्राय इव परिहरति ॥ **सामान्येति** । विरोधो हि तदा स्यात् । यदि जीवग्राहकज्योतिःशास्त्रस्य गृहेऽस्तीत्यर्थः स्यात् । यदि वा गृहाभावग्राहकप्रत्यक्षेण जीवनाभावः प्रतीयेत । न चैवं ज्योतिःशास्त्रेण सामान्यतः क्वचिज्जीवबोधनात् । प्रत्यक्षेण च गृहेऽसत्त्वबोधात् । सामान्ये सत्त्वस्य विशेषेऽसत्त्वस्य च स्वस्मिन्नेव सहभावदर्शनेनान्योन्यमविरुद्धत्वादिति भावः । यो हि मातापितृभ्यां सुशिक्षितो जातु गृहान्निर्गच्छति सोऽन्यानपि तथा मन्यमानो जीवप्रमाणस्य गृहे सत्त्वमेवार्थं प्रतिपद्यते । गृहाभावप्रमाणे च गृहासत्त्वे प्रमितिकथनविरोध इति पूर्वपक्षिणा स्वाभिसन्धिमुद्घाटिते सत्याह ॥ **आत्यन्तिक इति** । अर्थापत्तेर्बहिःसत्त्वनिश्चयो विप्रतिपत्त्येति त्वदुक्तरीत्या प्रमाणद्वयविरोधेन बहिःसत्त्वसन्देह एव स्यान्न तु निश्चय इत्यर्थः ।

**अभि.**— ॥ **विरुद्धयोरिति** । जीवनं भावरूपसत्त्वं गृहेऽसत्त्वं तु तत्प्रतियोगिकाभावः । विरुद्धयोर्भावाभावयोर्विशेषणविशेष्यभावानुपपत्तिरिति भावः ॥ **सामान्यविशेषयोरिति** । अत्र विशेष शब्देन प्रतियोगिवाचिना तदभावो लक्ष्यते । ततश्च सामान्यधर्मावच्छिन्नस्य सत्त्वस्य विशेषाभावेन सहाविरोधस्य स्वस्मिन्नेव दृष्टत्वादित्यर्थः । एतेन जीवनगृहाभावयोर्भावाभावरूपत्वेन सामान्य-विशेषभावाभावात् । सामान्यविशेषयोरविरोधस्य स्वस्मिन्नदृष्टत्वादित्ययुक्तमिति परास्तम् ॥ **विप्रति-पत्त्येति** । अयं तावच्चैत्रो जीवन्नित्युक्त्वा नास्तीत्याह । न चार्थद्वयसमावेशो युक्तः । परस्पर-विरुद्धत्वात् । ततश्च किमाद्यवाक्यानुसारेण सत्त्वं प्रतीम उतोत्तरवाक्यानुसारेणासत्त्वं प्रतीम इति सन्देह एव भवति । नार्थापत्तिः प्रवर्तत इत्यर्थः ।

**वि.—** जीवित्वविशिष्टस्य गृहासत्त्वलिङ्गत्वे जीवित्वस्य विशेषणत्वं वाच्यम् । न च तत्सम्भवतीति शङ्कते ॥ **विरुद्धयोरिति** । सहानवस्थाननियमरूपविरोधयोरित्यर्थः । जीवनगृहाभावयोरित्यनुवर्तते । जीवित्वेऽपि देशान्तर इव गृहेऽपि सत्त्वस्य प्राप्तत्वात्तयोर्विरोध इति ज्ञेयम् । परिहरति ॥ **सामान्यविशेषयोरिति** । जीवता क्वचित्स्थातव्यमिति नियमात् । जीवित्वे गृहासत्त्वाद्यौदासीन्येन देशसामान्ये सत्त्वं प्राप्तम् । न तु गृहरूपदेशविशेषे सत्त्वम् । तथा च जीवित्वेन प्राप्तं क्वचिद्देशे सत्त्वं यत्सामान्यं गृहरूपदेशविशेषसत्त्वाभावरूपयोर्विरोधस्तयोर्विरोधाभावस्य स्वस्मिन्नेव सर्वैर्दृष्टत्वादित्यर्थः । गृहरूपदेशविशेषासत्त्वस्य जीवनप्राप्तदेशसामान्यवृत्तित्वेनाविरोधत्वस्य जीवित्वेनाप्यविरोधात् । जीवित्वविशिष्टस्य गृहासत्त्वस्य लिङ्गत्वमिति हृदयम् । तयोर्विरोधानङ्गीकारे बाधकमाह ॥ **आत्यन्तिकविरोधे त्विति** । जीवनगृहाभावयोरित्यनुवर्तते । योगत्वाश्रयत्वयोरिव जीवनगृहाभावयोरित्यनुवर्तते । योगत्वाश्रयत्वयोरिव जीवनगृहाभावयोरात्यन्तिको नियतः सद्भावस्थानो विरोधस्तस्मिन्नङ्गीकृते त्वर्थापत्तिरपि जीवत्वे सति गृहासत्त्वरूपानुमानं यथा तथा प्रकृतप्रमाणत्वे पराभ्युपगतानुपपद्यमानार्थप्रमितिरपि न प्रवर्तते बहिःसत्त्वनिश्चयाय न प्रवर्तत इत्यर्थः । जीवित्वगृहासत्त्वयोः सहानवस्थाननियमरूपात्यन्तिकाविरोधवादे तयोरेकस्मिंश्चैत्रनिश्चायकाभावेन जीवंश्चैत्रो गृहे नास्तीत्यनुपपद्यमानार्थापत्त्युत्थानस्यैवायोगादिति भावः । यद्वा न प्रवर्तते नोत्पद्यत इत्यर्थः । जीवगृहाभावयोरात्यन्तिकविरोधो नैकस्मिंश्चैत्रे तस्मिन्निश्चायकाभावः । तर्हि चैत्रस्य जीवनगृहासत्त्वावेदकाभ्यां किमुत्पद्यत इति पृच्छति ॥ **विप्रतिपत्त्येति** । विरुद्धप्रतिपत्तिर्विप्रतिपत्तिस्तया जीवनगृहाभावयोर्विरोधाभावेनेति यावत् । सन्देह एव चैत्रो जीवी वा गृहेऽसन्वेति सन्देह एव भवति भवेदित्यर्थः । विरोधभानकालीनस्थाणुत्वपुरुषत्वावेदकत्वयोरिव विरोधभानकालीनजीवनगृहाभावावेदकयोः संशयजनकाताया एव युक्तत्वादिति भावः । इति शब्दोऽर्थापत्तेरनुमानान्तर्भावकथनपरिसमाप्तौ वर्तते ।

**(१०) प्र.प.— सादृश्यज्ञानसाधनमुपमानम् । तत्र तेनायं सदृशः सदृशाविमावित्यादि वा ज्ञानं प्रत्यक्षजम् । गोगवयौ सदृशाविति वाक्यजं त्वागम एव । गृह्यमाणे स्मर्यमाणसादृश्यं दृष्ट्वा स्मर्यमाणे यद् गृह्यमाणसादृश्यं प्रत्येति तदनुमानमेव ॥ नन्वनुभूयमानगतत्वेन प्रतीयमानं सादृश्यं करणम् । स्मर्यमाणगतं प्रमेयम् । तत्कथमनयोर्व्यधिकरणयोर्लिङ्गलिङ्गिभाव इति चेन्न स गौरेतद्गवय सदृशः । अस्य गवयस्य तद्गोसदृशत्वात् । यो यत्सदृशः स तत्सदृशः । यथा यमो यमान्तरेणेति व्याप्तिसम्भवेन व्यधिकरणस्यादोषत्वात् । एतद्गवयगतसादृश्यप्रतियोगित्वस्य वा लिङ्गत्वेन सामानाधिकरण्याच्चेति ।**

**जना.**— विप्रतिपत्त्या विरोधस्फूर्त्या सादृश्यज्ञानसाधनमुपमानाख्यं प्रमाणान्तरमङ्गीकर्तव्यमिति वदतां जरन्नैयायिकानां मतमाह ॥ **सादृश्येति** । एतन्मते उपमीयते येन तदुपमानमित्युपमानशब्दः करणसाधनो ज्ञातव्यः । तस्य प्रत्यक्षानुमायोरन्तर्भावमाह ॥ **तत्रेत्यादिना** । वाक्यजमित्येतदनन्तरं सादृश्यज्ञानमिति शेषः । गृह्यमाणपदार्थस्य सादृश्यज्ञानात्स्मर्यमाणपदार्थगतसादृश्यज्ञानमुपमानमिति मीमांसकाभिमतोपमानस्यान्तर्भावमाह ॥ **गृह्यमाणेति** । कश्चिन्नागरिको वनं गतश्चक्षुषा गृह्यमाणे गवये स्मर्यमाणस्य गोस्सादृश्यं दृष्ट्वा स्मर्यमाणे गविगृह्यमाणगवयप्रतियोगिकसादृश्यं प्रत्येति जानाति । एवं च गृह्यमाणपदार्थगतसादृश्यज्ञानात्स्मर्यमाणपदार्थगतसादृश्यानुमितौ गृह्यमाणपदार्थगतसादृश्यमेव लिङ्गं वाच्यम् । अन्यस्य लिङ्गस्य तदाऽपरामर्शादिति दृढीकृत्य तत्रानुपपत्तिं मीमांसकः शङ्कते ॥ **नन्विति** । करणं करणीभूतज्ञानविषय इत्यर्थः । व्याप्त्यभावस्थल एव हेतुसाध्ययोर्वैय्यधिकरण्यं दोषः । अत्र च व्याप्तिसत्त्वान्न दोष इति वक्ष्यन्वैय्यधिकरण्येनानुमानं प्रयुज्य दर्शयति ॥ **स गौरित्यादिना** ॥ **व्याप्तिसम्भवेनेति** । हेतोः साध्यं विनाऽनुपपत्तिलक्षणव्याप्तिसम्भवेनेत्यर्थः । हेतोरसाध्येन विनाऽनुपपत्तिरेव व्याप्तिः । न तु सामानाधिकरण्यम् । तदभावेऽप्यधोदेशे नदीपूरलक्षणलिङ्गेनोर्ध्वदेशे वृष्टिलक्षणसाध्यप्रमित्युदयादिति भावः । वैभवात्पूर्वसाध्ये हेत्वन्तरं प्रयुज्य तस्य सामानाधिकरण्यमस्तीत्याह ॥ **एतदिति** । स गौरेतद्गवयसदृशः । एतद्गवयगतसादृश्यप्रतियोगित्वात् । यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः । यथा यमो यमान्तरेणेत्यनुमानमत्र च द्रष्टव्यम् ।

**राघ.**— मीमांसकाभिमतोपमानं लक्षणोक्तिपूर्वमन्तर्भावयति ॥ **सादृश्यज्ञानेति** । तत्त्रिविधं भवति । तेनायं सदृश इति वा सदृशावेताविति वा चक्षुरुन्मीलनानन्तरं जायमानं ज्ञानम् । इमौ सदृशावित्युपदेशानन्तरं जायमानज्ञानसाधनं वा । स्मर्यमाणगतसादृश्यज्ञानसाधनभूतं गृह्यमाणपिण्डगतसादृश्यज्ञानं वेति । तत्त्रयमपि क्रमादन्तर्भावयति ॥ **तत्रेति** । सादृश्यज्ञानसाधत्वेनाभिमतेषु मध्य इत्यर्थः । ज्ञानशब्दः प्रमापरः ॥ **आगम एवेति** । अन्तर्भवतीति योज्यम् ॥ **गृह्यमाण इति** । पट्टणे गामनुभूय वनं गतस्य गवयदर्शने सति गृह्यमाणगवये स्मर्यमाणपट्टणस्थगोसादृश्यं दृष्ट्वा स्मर्यमाणगोपिण्डे यद्गृह्यमाणं गवयसादृश्यं प्रत्येति । गृहे स्थिता गौर्गृह्यमाणगवयसदृश्ये तस्य तत्सदृशत्वादिति प्रत्येतीत्यर्थः । तत्र गवयनिष्ठसादृश्यज्ञानंमुपमात्वेन परसम्मतमनुमानमेवेत्यर्थः । प्रमेयं प्रमातव्यमित्यर्थः । तुष्यतु दुर्जन इति भावेनाह ॥ **एतद्गवयगतेति** ।

**विज.**— ॥ **व्याधिकरणत्वस्येति** । तेन विना तदनुपपत्तेरेव लिङ्गत्वप्रयोजकत्वादिति भावः ।

**वेदे.**— शाब्दोपमानस्य यथायोग्यमुक्तान्तर्भावं वक्तुं तावल्लक्षणमाह ।। **सादृश्येति** । अस्यान्तर्भावमाह ।। **तत्रेत्यादिना** । गृह्यमाणे गवयादौ स्मर्यमाणं गवादिकं द्रष्टव्यम् ।। **व्याप्तिसम्भवेनेति** । उक्तरीत्या व्याप्तिप्रविष्टसम्बन्धानां बहुविधत्वेन सामानाधिकरण्यस्यैव व्याप्तिघटकत्वाभावादिति भावः । अभ्युपेत्याह ।। **एतदिति** ।

**अभि.**— ।। **सादृश्यज्ञानसाधनमिति** । सादृश्यज्ञानसाधनस्य प्रत्यक्षादिजन्यत्वासम्भवात्किञ्चिदतिरिक्तकारणमभ्युपेयम् । तदेवोपमानमिति भावः ।

**वि.**— उपमानस्य प्रत्यक्षानुमानागमेष्वन्तर्भावं वक्तुमुपोद्घातसङ्गत्या तल्लक्षणमाह ।। **सादृश्यज्ञानसाधनमिति** । तस्यान्तर्भावमाह ।। **तत्रेति** । सादृश्यप्रमारूपफलेष्वित्यर्थः । तेनायं सदृश इति वेमौ सदृशाविति वा ज्ञानं यथार्थसादृश्यज्ञानं प्रत्यक्षरूपप्रमाणजन्यमित्यर्थः । एतादृशसादृश्यप्रमायाः प्रत्यक्षफलत्वेन तत्करणमुपमानं प्रत्यक्षमेवेति भावः ।। **तेनायं सदृशः सदृशाविमाविति** । वाक्यजनितज्ञानमित्यनुवर्तते । ब्राह्मणोऽस्य मुखमासीदित्यादिवदागमजन्यत्वादागम एवेत्यर्थः । वाक्यरूपसादृश्यप्रमासाधनमागम एव वाक्यरूपत्वादागमस्येति भावः ।। **गृह्यमाणे स्मर्यमाणसादृश्यं दृष्ट्वेति** । प्रत्यक्षेण ज्ञायमाने गवये स्मर्यमाणगोसादृश्यदर्शनानन्तरं स्मर्यमाणे नगरस्थे गवि यद्यस्माद्गवयगतत्वेन प्रतीयमानात्स्मर्यमाणगोसादृश्यादिति यावत् । गृह्यमाणस्य गवयस्य सादृश्यं जानाति तत् । तद् गृह्यमाणगवयत्वेन ज्ञायमानं स्मर्यमाणगोसादृश्यं लिङ्गमित्येतदयुक्तमिति शङ्कते ।। **नन्विति** । तत्तद्गृह्यमाणस्मर्यमाणगतं सादृश्यमित्यनुवर्तते । तत्तस्मात्कारणभूतस्य गोसादृश्यस्य गवयसादृश्यस्य गोनिष्ठत्वात् । व्यधिकरणयोर्भिन्नाश्रययोरनयोः करणप्रमेयरूपसादृश्ययोः कथं लिङ्गलिङ्गिभावोऽनुमापकानुमेयभाव इत्यर्थः । अनुमेयव्याप्तिकरणस्य व्याप्तिपक्षधर्मताविरहान्नानुमापकत्वमिति भावः । परिहरति ।। **नेति** । इति व्याप्तिसम्भवेनानेन प्रकारेण भूतसादृश्यस्याविनाभावरूपव्याप्तिसम्भवेनेत्यर्थः । उपलक्षणमेतत् । समुचितदेशवृत्तित्वेनेत्यपि द्रष्टव्यम् । व्यधिकरणत्वस्य साध्यव्यापकत्वस्यादोषत्वाद्धेतुदोषत्वाभावादित्यर्थः । तुष्यतु दुर्जन इति न्यायेन वैय्यधिकरण्यस्य हेतुदोषत्वमभ्युपेत्य समानाधिकरणं लिङ्गमाह ।। **एतद्गवयेति** ।

**(११) प्र.प.— अभावज्ञानकरणमभावप्रमाणम् । तत्रेदानीं कौरवाद्यभावो भारताद्यागमादवगम्यते । देवदत्तस्य चक्षुराद्यभावो रूपाद्यदर्शनलिङ्गगम्यः । सुखाद्यभावप्रमितिस्तु साक्षिप्रत्यक्षेणैव । पुरोवृत्तिघटाद्यभावप्रमितिस्तु झटिति जायमाना प्रत्यक्षफलमेव । न त्वनुपलब्धिमात्रजन्या । अपरोक्षज्ञानत्वात् । अनुपलब्धिस्त्ववर्जनीयसन्निधिरेव । यत्र त्वन्धकारे हस्त-**

**प्रसारणादिरूपपरामर्शेन घटाभावं प्रत्येति न तदाऽनुपलब्धिः करणम्। किन्तु लिङ्गत्वेनैव। अत्र घटो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादिति। एवं प्रातर्गजाद्यभावज्ञानमनुपलब्धिलिङ्गजन्यम्। अभावस्येन्द्रियसन्निकर्षानुपपत्तिरिति चेन्न। भाववदभावस्यापीन्द्रियसन्निकर्षे बाधकाभावात्। बहुलज्ञानेऽल्पज्ञानं सम्भवः। यथा शतमस्तीति ज्ञाने पञ्चाशज्ज्ञानम्। तदप्यनुमानमेव। देवदत्तः पञ्चाशद्वान्। शतवत्त्वात्। यथाऽहमिति प्रयोगसम्भवात्। प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः परिशेषः। यथा देवदत्तयज्ञदत्तावेताविति ज्ञाने सत्येकस्मिन्नायं यज्ञदत्त इति प्रतिषेधे देवदत्तबुद्धिः। इयमनुमानजन्या। अयं देवदत्तः। देवदत्तयज्ञदत्तयोरन्यतरत्वे सत्ययज्ञदत्तत्वात्। व्यतिरेकेण यज्ञदत्तवदिति प्रयोगोपपत्तेः। उपक्रमादीन्यप्यनुमानान्येव। अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम्। यथाऽत्र वटे वैश्रवणोऽस्तीति वाक्यं तदागम एव एवमन्यान्यपि प्रमाणान्युक्तेष्वेवान्तर्भाव्यानि।**

जना.— अभावप्रमाणमनुप्रमाणेष्वन्तर्भावयितुं तल्लक्षणमाह ॥ **अभावेति**। अभावज्ञान-लक्षणफलस्य यथासम्भवमागमादिसाध्यत्वान्न तदर्थं प्रमाणान्तरमपेक्षितमित्युपपादयति ॥ **तत्रे-त्यादिना बाधकाभावादित्यन्तेन**। तत्र विषयीभूतानामभावानां मध्ये। इदानीं कौरवनाशोत्तरकाले ॥ **आगमादिति**। इदानीं तत्र प्रत्यक्षाद्यप्रवृत्तेरिति भावः। रूपाद्यदर्शनलिङ्गगम्योदेवदत्तो न चक्षुष्मान्। रूपाद्यदृष्टत्वादिति लिङ्गगम्य इत्यर्थः ॥ **पुरोवृत्तीति**। झटिति शीघ्रम्। अनुमानादिजन्यत्वे व्याप्त्यनुसन्धानादिविलम्बितत्वेन झटित्यभावप्रमितिर्न स्यादिति भावः। एवकारव्यावर्त्यमाह ॥ **न त्विति**। न त्वनुपलब्धिमात्रजन्या पररीत्याऽनुपलब्धिरूपकारणजन्या नेत्यर्थः। न त्वनुपलब्धि-सहितेन्द्रियजन्या वेत्यर्थः। अनुपलब्धिस्त्ववर्जनीयसन्निधिरित्यनुपदमेव वक्ष्यमाणत्वात्। कुत इत्यत आह ॥ **अपरोक्षेति**। इन्द्रियकरणकत्वाभावेऽपरोक्षज्ञानत्वं न स्यादिति भावः। नन्वनुपलब्धेर-भावज्ञानं प्रति करणत्वाभावे घटाद्युपलब्धावपि घटाद्यभावज्ञानापत्तिः। अतोऽकामेनाप्यनुपलब्धि-करणकत्वमभावज्ञानस्याङ्गीकार्यमित्यत आह ॥ **अनुपलब्धिस्त्विति**। पटं प्रत्यन्यथासिद्धरासभतन्तु-रूपादिवदवर्जनीयसन्निधिरित्यर्थः। ननु मा भूज्झटित्यभावप्रतीतावनुपलब्धेः करणत्वम्। अन्धकारादौ परामर्शपूर्वकाभावज्ञाने तु स्यादित्यत आह ॥ **यत्र त्विति**। प्रत्येति पुरुष इति शेषः ॥ **तदेति**। नन्वनुपलब्धेः करणत्वे जितमनुपलब्धिप्रामाण्यवादिनेत्यत आह ॥ **किन्त्विति**। एवं चानुपलब्धिरूपलिङ्गज्ञानमेवाभावज्ञाने कारणम्। न तु स्वरूपे सत्यनुपलब्धिरिति भावः। अनुपलब्धेर्लिङ्गीभावज्ञानभवनप्रकारमभिनीय दर्शयति ॥ **अत्रेति**। ननु कश्चित्पुमान्प्रातर्गजाद्यज्ञानवता मार्गेण राजमन्दिरं गच्छन् गजादि निकटवृत्ति वस्तुजातं च पश्यंस्तदा गजास्तित्वनास्तित्वयोरुदासीन एव गच्छति। वस्तुतो मार्गे प्रातर्गजो नाभूदेव। पुनर्गजवार्तानभिज्ञ एव स्वगृहमेति। तं प्रति सायं

कश्चित्पृच्छति । वस्तुतः प्रातस्तत्र गजोऽभूद्वा न वेति । एवं प्रष्टारं प्रति राजमन्दिरादागतो वदति प्रातस्तत्र गजो नाभूदिति । तस्य प्रातर्गजाद्यभावज्ञानमनुपलब्धिरूपलिङ्गजन्यमित्यवश्यमास्थेयम् । प्रत्यक्षानुमानयोः प्रातर्गजाभावविषय उदासीनत्वादित्यत आह ॥ **एवं प्रातरिति** । अनुपलब्धि-रूपलिङ्गजन्यं प्रातःकाले स्वरूपसता सायमनुसंहितेनानुपलब्धिरूपलिङ्गेन जन्यत इति भावः । स मार्गस्तदानीं गजाभाववान् । स्मरणार्हगजयोगित्वेनास्मर्यमाणत्वे सति स्मर्यमाणत्वादित्यनुपलब्धि-लिङ्गमनुमानमत्र द्रष्टव्यम् ।

पुरोवृत्तिघटाद्यभावप्रमितिस्तु झटिति जायमानेत्यत्र शङ्कते ॥ **अभावस्येति** । सन्निकर्षानुपपत्ति-रद्रव्यत्वायुतसिद्धत्वेन चेन्द्रियाभावयोः संयोगसमवायानुपपत्तिरिति भावः । परिहरति ॥ **भाव-वदिति** । इन्द्रियसन्निकर्षे इन्द्रियसंयोगादिलक्षण इत्यर्थः । द्रव्ययोरेव संयोग इति तु नैयायिकानां परिभाषामात्रमिति भावः । तदुक्तं विष्णुतत्त्वनिर्णयटीकायाम् । कोऽसौ सन्निकर्ष इति चेत्संयोग इति ब्रूम इत्यादि । सम्भवमनुमानेऽतर्भावयितुं तत्स्वरूपमाह ॥ **बहुलेति** । बहुलज्ञाने बहुलमस्तीति ज्ञाने । तदुदाहृत्य दर्शयति । **यथेति** । पञ्चाशज्ज्ञानं पञ्चाशदस्यास्तीति ज्ञानमित्यर्थः । अन्तर्भावयति ॥ **तदपीति** । अनुमानं प्रयुज्य दर्शयति ॥ **देवदत्त इति** । परिशेषमनुमानेऽन्तर्भावयितुं तल्लक्षणमाह ॥ **प्रसक्तेति** । प्रतिषेध इत्यनन्तरमन्यस्मिन्पुरुष इति शेषः । अयमिति पक्षनिर्देशः । देवदत्त इति साध्यनिर्देशः ॥ **उपक्रमादीनीति** । उपक्रमोपसंहारादितात्पर्यलिङ्गानीत्यर्थः । अयमेतच्छब्द-तात्पर्यगोचरः । (अप) वादं विनोपक्रान्तत्वात् । यत्र यदुपक्रम्यते तत्र तदपवादाभावे तत्तात्पर्यगोचर इत्याद्यनुमानान्यूह्यानि ॥ **तदागम एवेति** । अदुष्टवाक्यरूपत्वादिति भावः । उक्तन्यायमन्यत्राप्यति-दिशति ॥ **एवमिति** । अन्यान्यपि हस्ताङ्गुलिचेष्टादीनीत्यर्थः । उक्तेष्वनुमानादिष्वित्यर्थः ।

**राघ.—** ॥ **अभावेति** । प्रमेयाभावज्ञानकरणं यत्तदभावप्रमाणमित्यर्थः । अभावज्ञान-करणमनेकविधम् । यथायथं प्रत्यक्षादित्रय एवान्तर्भूतं न ततः पृथगिति भावेनाह ॥ **तत्रेति** । अभावेषु मध्य इत्यर्थः । तदानीं तत्र प्रत्यक्षमागमो वाऽपि भवतीतीदानीमित्युक्तिः ॥ **भारताद्यागमादिति** । अतोऽनुपलब्धिरूपं प्रमाणं तदर्थं पृथङ्नाभ्युपेयमिति भावः ॥ **चक्षुरादीति** । श्रोत्राद्यभावः शब्दाद्यज्ञानलिङ्गगम्य इत्यादिपदार्थः । ननु झटिति जायमानघटाद्यभावप्रमितिस्थले योग्यघटा-द्यनुपलब्धिबलाज्जायमानाभावप्रमितिरनुपलब्धिप्रमाणमात्रजन्या कुतो नेत्यतः सयुक्तिकं निराह ॥ **पुरोवृत्तीति** । मात्रेति परमतानुवादो न तु साऽपि कारणमिति भावेन तदुक्तिः । अवर्जनीयसन्निधि-रेवेत्यग्रिमवाक्यविरोधात् । वर्णनित्यत्ववादे तर्कताण्डवे नेन्द्रियस्यानुपलब्धिः सहकारिणीत्युपक्रम्य

युक्तिभिरुपपादनाच्च । तर्हि पृथक् प्रमाणत्वं प्राप्तमिति पृच्छति ॥ **किन्त्विति** । ननु प्रातश्चत्वरादौ प्रतियोगिस्मृत्यभावेन गजाद्यभावमनुभूय देशान्तरं गतो गजस्मृतिमान्प्रातस्तत्र गजो नासीदिति प्रतिपद्यते । तत्र नासीदिति प्रत्यक्षस्य प्रवृत्तिरतोऽनुपलब्धिः प्रमाणत्वेनोपेयेत्यत आह ॥ **एवमिति** । प्रातश्चत्वरे गजो नासीत्तत्तुल्यपरिमाणानां सत्यप्युपलम्भे तस्याप्युपलम्भात् । व्याघ्रादिवत् । न चासिद्धः । पूर्वं तत्तुल्यपरिमाणानामुपलम्भेऽपि तदुपलम्भो नासीत् । तत्तुल्यपरिमाणानां स्मरणे सत्यपि तस्य स्मरणाभावादिति स्मृत्यभावलिङ्गेन गजाद्युपलब्ध्यभावनिश्चयसम्भवात् । स्मृत्यभावश्च साक्षिवेद्य इति नानवस्थादोष इति भावः । विस्तरस्त्वर्थापत्त्युपमाभावानुमानान्तर्गताः क्वचित् । प्रत्यक्षान्तर्गतो भावः सुखादेर्नियमेन च । अन्यत्र झटिति प्राप्त इत्यादिभक्तिपादीयानुव्याख्यान सुधयोर्ज्ञेयः ॥

**बाधकाभावादिति** । द्रव्ययोरेव संयोग इत्यस्याप्रामाणिकत्वेन द्रव्यत्वापत्तिरिति बाधकं न शङ्कार्हमिति भावः ॥ **बहुलेति** । बहुत्वसङ्ख्याविशिष्टवस्तुज्ञाने सति न्यूनसङ्ख्याविशिष्टार्थज्ञानं यज्जायते तत्सम्भवप्रमाणामित्यर्थः । फलप्राधान्यविवक्षयैवमुक्तिः । परिशिष्यमाणे बुद्धिः परिशेष इत्यपि फलप्राधान्यविवक्षयोक्तिः । अयमिति पक्षर्दिशो देवदत्त इति साध्योक्तिः ॥ **उपक्रमादीति** । उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादाः श्रुतिलिङ्गवाक्यप्रकरणस्थानानि चेदमेतत्परं तदुपक्रम-वत्त्वाद्यद्यदुपक्रमं तद्वाक्यं तत्परं यथा सम्मतमित्यादिरूपेण व्याप्तिमपेक्ष्य तात्पर्यगमकत्वादनुमाना-न्येवेत्युक्तम् । एतेऽप्यारम्भाद्याश्च युक्तस्य आगमार्थावसित्यर्था नियतव्याप्तयोऽखिला इत्याद्यनु-व्याख्यानसुधयोर्व्यक्ताः । वैश्रवणः कुबेरः । वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः । पर्वते पर्वते रामः सर्वत्र मधुसूदन इत्यादिरागम एव । न त्वैतिह्यरूपं पृथक् प्रमाणमैतिह्यमागमभेद इति भगवत्पादोक्तेरिति भावः ॥ **एवमन्यान्यपीति** । नयनाङ्गुल्यादिचेष्टावर्णज्ञापकरेखादीन्यस्तङ्गतः सविता गच्छ गच्छसि चेत्कान्ते इत्यादिवाक्यानि चानुमानादिषु यथासम्भवमन्तर्भाव्यानीत्यर्थः ॥ **अर्थापत्त्यादेरन्तर्भावोक्तिः ॥**

**विज.—** अनुपलब्धेर्जनकत्वमभ्युपेत्यात्रापादनमुक्तम् । वस्तुतस्तु तदपि नास्तीत्याह ॥ **अनुपलब्धिस्त्विति** । न च घटोपलम्भे तदभावोपलम्भप्रसङ्गः । प्रमापादनस्य घटवति विषया-भावेनासम्भवात् । अभाववति तु प्रतियोगित्वभ्रमजनकदोषत्वस्यैव प्रतिबन्धकत्वादिति भावः ॥ **योग्यत्वे सतीति** । प्रतियोगितत्सन्निकर्षातिरिक्तप्रतियोग्यनुभावकसमवधाने सतीत्यर्थः ॥ **एवमिति** । प्रातश्चत्वरे गजो नासीत् । स्मरणार्हत्वे सत्यस्मर्यमाणत्वादिति स्मरणाभावो लिङ्गमेवेत्यर्थः ॥

**बहुलेति** । अधिकवृत्तिसङ्ख्याज्ञाने न्यूनवृत्तिसङ्ख्याज्ञानमित्यर्थः ॥ **प्रसक्तेति** ॥ उपस्थिताभावज्ञानेनैककोटिज्ञानमित्यर्थः ॥ **उपक्रमादिति** । तात्पर्ये तेषां लिङ्गत्वादिति भावः ॥ **अनिर्दिष्टेति** । विशेषतोऽपरिज्ञातवक्तृकमित्यर्थः ॥ **एवमिति** । श्रुतिलिङ्गादीन्यपीत्यर्थः । तत्र श्रुतेः स्फुटोऽन्तर्भावः। लिङ्गस्य तु शेषाशेषित्वादौ लिङ्गत्वम् । वाक्यादेश्च स्फुटोऽन्तर्भावः । प्रसङ्गादाह ॥ **तदेषामिति** ।

**वेदे.**— ॥ **झटितीति** । अपरामर्शेनेत्यर्थः । अनुपलब्धेः कारणत्वमभ्युपेत्यानुपलब्धिमात्रेत्युक्तम् । वस्तुतस्तु तस्या अभावज्ञानकारणत्वमेव नास्तीत्याह ॥ **अनुपलब्धिरिति** । व्यभिचारादन्यथासिद्धेश्चेति भावः । तथा हि विनश्यदवस्थघटे कपाले घटोऽस्तीति चाक्षुषसाक्षात्कारे तदुत्तरक्षणे घटध्वंसेऽनन्तरमेव चक्षुषा घटध्वंससाक्षात्कारस्य जायमानत्वेन व्यतिरेकव्यभिचारः । ध्वंससाक्षात्कारोत्पत्तिक्षणं व्यवहितपूर्वक्षणे ध्वंसोत्पत्तिक्षणरूपे उक्तरूपघटसाक्षात्कारस्य स्थित्या तदभावरूपानुपलब्धेरभावात् । अवश्यकेनेन्द्रियेणान्यथासिद्धेश्च । अन्यथाऽऽभावग्रहे भावानुपलब्धिरिवाभावानुपलब्धिरपि भावग्रहहेतुः स्यात् । तस्यास्तत्रान्यथासिद्धत्वे प्रकृताया अपि तथात्वमिति । न च प्राप्त्यभावः संयोगस्यैव सम्भवात्। द्रव्ययोरेव संयोग इति प्रक्रियायाश्चाप्रामाणिकत्वात् । तदभावेऽपि विशेषणतायाः सम्भवाच्च । तदनादरेऽनुपलब्ध्याऽपि क्वचिदेवाधिकरणेऽभावो गृह्यत इत्युपपादयितुमशक्यमिति भावः । किञ्चानुपलब्धिव्यतिरेकप्रयुक्तो नाभावज्ञानव्यतिरेको येन तस्यास्तत्र हेतुत्वं स्यात् । न चैवं घटोपलम्भेऽपि तदभावज्ञानं स्यादिति वाच्यम् । घटोपलम्भस्य प्रमात्वे तत्र विषयतत्सन्निकर्षयोरभावेनाभावप्रत्यक्षानुदयात् । न चाभावभ्रमः स्यादिति वाच्यम् । तज्जनकदोषाभावात् । दोषाणां कार्यैकोन्नेयत्वात् । भ्रमत्वेऽपि तज्जनकदोषस्यैव प्रतिबन्धकत्वेन भ्रमरूपघटोपलम्भस्य प्रतिबन्धकत्वे तदुत्पत्तिकालेऽभावज्ञानापत्तिः । न च विनिगमकाभावः । अनुपलब्धेः पूर्वं सत्त्वात् । कार्यसहभूतप्रतिबन्धकाभावो हेतुरिति तु ज्ञानरूपप्रतिबन्धकाभावाव्यतिरिक्तविषयम् । अन्यथासिद्धेरप्रतिबन्धकतापत्तेः । अधिकरणज्ञानसमयेऽभावज्ञानापादने बाधकाभावाच्च । न च विशिष्टज्ञानमात्रे सामान्यत एवासंसर्गग्रहस्य हेतुत्वात्तस्य चानुपलब्धिपर्यवसानात्तस्या हेतुत्वमिति वाच्यम् । आनुमानिकपीतत्वासंसर्गग्रहेऽपि पीतप्रत्यक्षोदयेन तस्यैवासंमतेः । ननु जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षव्यतिरेकः प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकानुपलब्धिव्यतिरेकप्रयुक्तः । अतोऽनुपलब्धेर्हेतुत्वं प्राप्तमेवेति चेन्न । जातेर्योग्यव्यक्तिवृत्तितयैव योग्यत्वेन तत्र पृथिवीत्वस्य योग्यत्वे तदभावस्याप्ययोग्यत्वेन क्लृप्तयोग्यसन्निकर्षाभावादेव पृथिवीत्वाभावो न प्रत्यक्षः । न त्वक्लृप्तयोग्यानुपलब्धिव्यतिरेकादिति साधूक्तमनुपलब्धिरवर्जनीयसन्निधिरिति । नन्विन्द्रियव्यापाराभावेऽप्यन्धकारे घटाभावज्ञानमनुपलब्धिमात्रेणैव जायमानमुपलब्धमिति चेत् । सत्यम् । तत्रापि नानुपलब्धेरनुपलब्धितयोप-

योगोऽपि तु लिङ्गतयैवेत्याह ॥ **अत्र त्विति** । अतीन्द्रिये व्यभिचारवारणाय योग्यत्वे सतीत्युक्तम् । इन्द्रिययोग्यत्वे सतीत्यर्थः । ननु तथाऽपि प्रातर्गजाद्यभावज्ञाने कालव्यवधानेनेन्द्रियव्यापारो नास्त्येव । न चोक्तलिङ्गसम्भवोऽसिद्ध्यापत्तेः । प्रतियोगिनो गजस्योपलभ्यमानत्वात् । प्रातःकालीनगजस्य चायोग्यत्वात् । तथा च तदर्थमभावस्य पृथक् प्रामाण्यमङ्गीकार्यमित्यत आह ॥ **एवमिति** ॥ **अनुपलब्धीति** । अनुपलब्धेश्च प्रातःकालीनगजानुभवाभावरूपायाः स्मरणाभावाल्लिङ्गानुमेयाया लिङ्गत्व मात्रमतो नोक्तदोषः । अन्यथा त्वन्मतेऽपि तत्राभावज्ञानस्यानुपलब्धिजन्यत्वं न स्यादिति भावः ॥

**सन्निकर्षेति** । संयोगसमवाययोरसम्भवादिति भावः ॥ **बाधकाभावादिति** । प्रक्रियामात्रस्य चाप्रामाणिकत्वेनेन्द्रियाभावयोरपि संयोगस्यैव सम्भवादिति भावः । प्रसक्तप्रतिषेधे ज्ञात इति शेषः ॥ **अयमिति** । घटादौ व्यभिचारवारणाय सत्यन्तम् ॥ **उपक्रमेति** । तात्पर्यानुमापकत्वादिति भावः ॥ **अनिर्दिष्टेति** । अनिश्चितेत्यर्थः । तदिति । सत्यं चेदिति वाक्यशेषः । ननु तथाऽपि शाकुनिलिप्य-क्षरचेष्टानां तथा श्रुतिलिङ्गादीनां नैयायिकोपमानस्य च पृथग्विद्यमानत्वान्नित्यत्वानुपपत्तिरित्यत आह ॥ **एवमिति** । यथासम्भवमिति शेषः । अयं भावः । शाकुनिविशिष्टस्येष्टार्थानुमापकत्वेन शाकुनमनु-मानान्तर्भूतम् । एवमपशाकुनेऽपीष्टार्थविघातितावनुमानं द्रष्टव्यम् । लिप्यक्षरचेष्टायाश्च वर्णस्मरण-हेतुतया प्रत्यक्षेऽन्तर्भावः । उक्तं हि सुधायाम् । पुरुषलिपिरपि पदमिव पदार्थस्य वर्णानां स्मरण-हेतुरेवेति । न चात्र पुरुषलिपिरेवोक्ता नाक्षरचेष्टेति वाच्यम् । भक्तिपादे सुधायां शाकुनिलिप्य-क्षरचेष्टानामन्तर्भावस्य विलक्षणाधिकरणे सूचितत्वादित्युक्तत्वात् । न च विलक्षणाधिकरणस्थमुक्तं वाक्यं विनाऽक्षरचेष्टान्तर्भावसूचकं तत्रत्यं वाक्यान्तरमस्तीति वाच्यम् । मनस एव स्मृतिकारणत्वेन लिप्यादिदर्शनस्य संस्कारोब्दोधकत्वेन चरितार्थस्य कथं प्रत्यक्षत्वमिति । अर्थोपसर्पणतत्संयोग-सहितचक्षुरादिवदवान्तरव्यापार सहितेन्द्रियस्यैव प्रत्यक्षत्वेन लिप्यादिदर्शनजन्यसंस्कारोद्बोधरूपा-वान्तरसहितस्य मनस एव स्मरणकरणत्वे लिप्यादेरपि प्रत्यक्षशरीरान्तःप्रविष्टत्वेन प्रत्यक्षत्वमेवेत्यभि-प्रायात् । न चैवं चेष्टायाश्चानुमानान्तर्भावादिति तत्त्वनिर्णयटीकाविरोध इति वाच्यम् । तत्रार्थविशेष-बोधकभ्रूविक्षेपचेष्टाया एवाभिप्रेतत्वेनाक्षरचेष्टान्तर्भावानुक्तेः । अक्षरचेष्टाभिप्रायत्वे तु चेष्टकबुद्धिस्थ-शब्दानुमापकत्वेन वा तदवबुद्धार्थानुमापकत्वेन वाऽनुमानान्तर्भावादिति पररीत्यैवोक्तत्वादविरोध इति द्रष्टव्यम् । श्रुतिलिङ्गादीनां च तात्पर्यानुमापकत्वे नानुमानत्वमेव । वाक्यप्रकरणादीनां स्वार्थे आगमत्वमपि नैयायिकोपमानमप्यनुमानान्तर्भूतमेव । अयं गवयशब्दवाच्यः । अगोत्वे सति गोसदृश-त्वात् । व्यतिरेकेण घटवदित्याद्यनुमानसम्भवादिति ।

**अभि.—** ॥ **अभावज्ञानकारणमिति** । अभावज्ञानकारणस्य प्रत्यक्षादिजन्यत्वासम्भवात्किञ्चित्करणत्वमभ्युपेयम् । तदेवाभावप्रमाणमित्यर्थः ॥ **न त्वनुपलब्धिमात्रजन्यत्वमिति** । परोक्तमनुपलब्धिमात्रजन्यत्वमित्यर्थः । एतेन त्वनुपलब्धिजन्येत्युक्त्या कारणत्वस्य सिद्धत्वात्पुनरनुपलब्धिरवर्जनीया सन्निधिरित्युक्तमयुक्तमिति परास्तम् । अस्य वाक्यस्य परोक्तनिषेधे तात्पर्येणानुपलब्धेः कारणत्वे तात्पर्याभावात् । ननु विमर्शपूर्वकं सायङ्काले राजद्वारि सञ्चरणवतः पुनः प्रातः सञ्चरणवतो गजदर्शने सति नाभूदत्र पूर्वेद्युः सायं गज इति ज्ञानमुपजायते । नेदं ज्ञानमिन्द्रियजन्यम् । असन्निकर्षात् । नापि लिङ्गशब्दाभ्यां तदभावात् । अतः प्रत्यक्षानुमानागमादिव्यतिरिक्तं किञ्चित्प्रमाणमभ्युपेयमित्यत आह ॥ **एवं प्रातर्गजेति** । अयं गज एतद्देशावच्छेदेन पूर्वेद्युरसन् । व्यासङ्गादिप्रतिबन्धकाभावेऽपि तत्राननुभूतत्वात् । अननुभूतत्वं तथा स्मर्तुं योग्ये सत्यस्मर्यमाणत्वादिति लिङ्गेन सिद्धमित्युपलब्ध्यभावलिङ्गतयैव तज्ज्ञानमुपजायत इति न तदर्थं प्रमाणान्तरं कल्प्यमिति भावः । एतेन प्रातरिति नाभावविशेषणम् । असमर्थसमासप्रसङ्गात् । किन्तु ज्ञानविशेषणम् । ततश्च तत्कालीनविषयेण सन्निकर्षसम्भवात्प्रत्यक्षजन्यत्वोपपत्तौ लिङ्गजन्यत्वकथनमयुक्तमिति परास्तम् । प्रातः पूर्वकालीनगजाभावज्ञानस्य विवक्षितत्वात् । प्राग्यदुक्तमभावस्य प्रत्यक्षवेद्यत्वं तदाक्षिपति ॥ **अभावस्येति** ॥ **बहुलज्ञान इति** । अल्पज्ञानकरणं बहुलज्ञानं सम्भवप्रमाणमित्यर्थः । नन्वल्पैज्ञानसाधनं बहुलज्ञानमिति कथं विरोधादित्याक्षिपति ॥ **यथेति** । यथा कथं न कथमपि । ततश्चासम्भवीति भावः । उत्तरमाह ॥ **शतमस्तीति** । पञ्चाशज्ज्ञानमित्यतः परमनुभवसिद्धमिति शेषः। ततश्च बहुलज्ञानेनाल्पज्ञानस्यानुभवसिद्धत्वेन विरोधाभावान्नासम्भव इति भावः । एतेन लक्षणप्रमाणाभ्यां फलीभूतज्ञानस्य सम्भवत्वलाभात्तस्यानुमानेऽन्तर्भावकथनमयुक्तमिति परास्तम् ॥ **प्रसक्तप्रतिषेध इति** । प्रसक्तप्रतिषेधे परिशिष्यमाणे या बुद्धिस्तद्धेतुभूतः प्रसक्तप्रतिषेधः परिशेष इत्यर्थः ॥ **इयमपीति** । फलीभूता परिशिष्यमाणे बुद्धिरित्यर्थः ॥ **प्रयोगोपपत्तेरिति** । यद्यप्यनुमानप्रयोगप्रकाराणां विचित्रत्वादेवं प्रयोगः कर्तव्य इति न निर्बन्धः । तथाऽप्येकविध एवानुमानप्रकार इति निर्बन्धे प्रसिद्धप्रयोगवदत्रापि प्रयोग उपपद्यत इति भावः । एतेन किमियं लौकिकी प्रतीतिराहोस्वित्स्व समयानुरोधात्कल्प्यते । नाद्यः । पूर्वोक्तिप्रयोगं विनैव प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिदर्शनात् । न द्वितीयः । अप्रामाणिकत्वादिति परास्तम् । यद्यनैवं लौकिकी प्रतीतिस्तथाऽपि व्याप्तिबलेनार्थगमकत्वात्परिशेषोऽनुमानमित्येतावन् मात्रस्यैवं लौकिकी प्रतीतिस्तथाऽपि व्याप्तिबलेनार्थगमकत्वात्परिशेषोऽनुमानमित्येतावन्मात्रस्यैव विवक्षितत्वात् । एवं जातीयके सर्वत्र द्रष्टव्यम् । ननु शाकुनिलिपिचेष्टादीनां पृथक् प्रमाणानां विद्यमानत्वात्कथं प्रमाणत्रित्वमित्यत आह ॥ **एवमन्यानीति** ।

आद.— ॥ **भाववदभावस्येति** । द्रव्ययोरेव संयोग इति नैयायिकप्रक्रियाया अप्रामाणिकत्वेन संयोगस्यैव सम्भवादित्याशयः । न च तर्हि मूलाभावयोरपि संयोग एव सम्बन्धः स्यादिति चेत् । इष्टापत्तेः । न च घटवत्यपि भूतले घटो नास्तीति प्रत्ययापत्तिः । न चाभावो नास्तीति शक्यते वक्तुम् । पूर्वं नास्तीति प्रतीत्यनुपपत्तेः । न च घटस्येवाभावस्याप्यन्यत्र गमनं निष्क्रियात्वादिति । न च प्रतियोगिज्ञानस्य प्रतिबन्धकत्वेन नाभावधीरिति युक्तम् । दोषवशादुत्पन्नस्य प्रामाण्यापत्तेरिति चेत् । अभावे क्रिया नास्तीत्यत्रापि मानाभावेनाभावस्यान्यत्र गमनाङ्गीकारेऽपि दोषाभावात् । अत्रेदानीं घटो नास्तीति प्रतीतेर्घटदशायां तत्कालावच्छेदेन तद्भूतलसंसर्गविशिष्टघटप्रतियोगि सत्त्वात्तदभावाभावेनासम्भवात् । यत्काले नास्तीति प्रतीतिस्तत्कालवृत्तितद्भूतलसंसर्गविशिष्टघटरूप-प्रतियोगिनोऽसत्त्वादेव युज्यते । इदानीमपि तत्कालावच्छेदेनैतद्भूतलविशिष्टप्रतियोगिनोऽसत्त्वादेव युज्यते । इदानीमपि तत्कालावच्छेदेनैतद्भूतलविशिष्टघटो नास्तीत्याकारकप्रतीतेरापत्ताविष्टापत्तिः । अधिकन्तु गुरुपादकृततत्त्वोद्योतप्रकाशे द्वैतद्युमणौ द्रष्टव्यम् ॥ **ज्ञानजनकातिरिक्तेति** । ज्ञानपदं प्रमापरम् । तथा च प्रमाजनकत्वेनोभयसम्मतान्यजन्यत्वं वाऽस्मत्सम्मतान्यत्वं वेत्यर्थः । तादृशश्च गुणत्वे पराभिमत एव । स च प्रत्यक्षादिष्वेकजातीयो न भवतीत्युक्तरूपेण तस्यानुगमः कृतः । एतादृशदोषजन्यत्वान्नाप्रामाण्यस्य स्वतस्त्वमिति भावः । केचित्तु । ज्ञानत्वावच्छिन्नोत्पादकसामग्र्य-घटकपदार्थघटितसामग्र्यनधीनोत्पत्तिकत्वमित्यर्थः । न च दोषाभावस्यापि प्रमाजनकत्वेन ज्ञानत्वा-वच्छिन्नाजनकत्वेनोक्तस्वतस्त्वानुपपत्तिरिति वाच्यम् । सहजशक्तिं प्रतिबध्य विपरीतशक्त्या-विर्भावकत्वेन दोषाणामप्रामाण्यस्य दोषघटितसामग्रीजन्यत्वेऽपि दोषाभावस्य कारणताया अनङ्गी-कारेण सामग्रीकोटौ दोषाभावस्यानिवेशात् । न च सामान्यधर्मावच्छिन्नसामग्र्या विशेषधर्मा-वच्छिन्नसहकृताया एव फलजनकत्वेन ज्ञानोत्पत्तिं विना प्रामाण्योत्पत्त्ययोगेन विशेषसामग्री-घटकपदार्थस्य ज्ञान इव प्रामाण्येऽपि प्रयोजकत्वेन स्वतस्त्वानुपपत्तिरिति वाच्यम् । ज्ञानोत्पत्ति-प्रयोजकत्वेऽपि प्रामाण्योत्पत्तिप्रयोजकत्वानङ्गीकारात् । न च विशेषसामग्र्यभावकाले प्रामाण्या-नुत्पत्त्या सामग्रीव्याप्तेर्व्यभिचारो ज्ञानत्वावच्छिन्नोत्पादकत्वेन क्लृप्ता ये ये धर्मास्तत्तन्मात्रवृत्ति-समुदायत्वावच्छिन्नोत्तरज्ञानाधिकरणकालत्वस्य प्रामाण्यव्याप्तत्वेन सामग्रीव्याप्तेर्व्यभिचाराभावात् । न च नियतपूर्ववृत्तीनां सर्वेषां सामग्रीकोटौ निवेशः । तथा सति दोषाभावेऽपि सामग्रीकोटाववश्यं निवेश्य इति वाच्यम् । स्वनिष्ठकार्यानुकूलशक्तिविघटकपदार्थानधिकरणतादृशसमुदायत्वावच्छिन्नाधि-करणकालाव्यवहितोत्तरकालत्वम् । यत्र कार्याधिकरणत्वं तत्रेति सामग्रीव्याप्तेर्विवक्षितत्वात् । दोषकाले कार्यानुत्पादेऽपि दोषाभावात् । न च विनिगमकाभावेन दोषाभावस्यैव सामग्रीकोटौ निवेशश्च कर्तव्य

इति गौरवस्यैव विनिगमकत्वात् सामग्रीनिष्ठशक्तिविघटकत्वेन दोषाननुगमय्य तदभावस्यैकस्यैव निवेशोऽस्त्विति वाच्यम् । तथाऽपि तदभावेषु कारणतारूपशक्तिकल्पनायां मानाभावेन तत्कल्पनाया अधिकत्वेन गौरवानपायात् । अन्यथा भर्जनाभावादेरपि वेत्राङ्कुरसामग्रीकोटौ निवेशो वेत्राङ्कुर-कारणत्वं च स्यात् । तत्रापि भर्जनकाले सामग्रीसत्त्वेऽपि वेत्राङ्कुरानुत्पत्त्या सामग्रीव्याप्ते-र्व्यभिचारेणासम्भवात् । तस्मात्सर्वत्रापि सामग्रीव्याप्तौ प्रतिबन्धकानधिकरणत्वं सामग्र्यधिकरणकाले निवेश्यमेव । प्रतिबन्धकाभावस्य कारणत्वं त्वन्यत्र खण्डितमिति नास्तीति । तथा च ज्ञानत्वावच्छिन्नोत्पादकत्वेन क्लृप्ता ये ये धर्मास्तत्तन्मात्रवृत्तिसमुदायत्वावच्छिन्नाधिकरणकालोत्तर-ज्ञानाधिकरणकालत्वं यत्र तज्ज्ञानप्रामाण्याधिकरणत्वं तत्रेति व्याप्तिरिति भाव इत्याहुः ।

**वि.—** अभावाख्यप्रमाणस्य प्रत्यक्षान्तर्भावं वक्तुं तल्लक्षणमाह ॥ **अभावज्ञानकरणमिति ।** ज्ञानपदं प्रमापरम् । अन्तर्भावमाह ॥ **तत्रेति ।** अभावरूपप्रमाणगम्येष्वित्यर्थः । येषां कौरवादयः प्रतियोगिनः प्रत्यक्षास्तेषां कौरवादिप्रध्वंसः प्रत्यक्षगम्योऽपि भवतीति ज्ञापयितुमिदानीमित्युक्तम् । आगमैकवेद्यप्रतियोगिप्रध्वंसाद्यभावग्राहकं प्रमाणमागम एवेति भावः ॥ **चक्षुराद्यभाव इति ।** घ्राणा-दीन्द्रियमादिशब्दार्थः । रूपाद्यदर्शनेत्यत्र गन्धादिरादिशब्दार्थः । अनुमानैकवेद्यप्रतियोगिकाभावग्राहकं प्रमाणमनुमानमिति भावः ॥ **सुखाद्यभावप्रमितिरिति ।** सुखादिसाक्षिवेद्यमादिशब्दार्थः । साक्षिणैव स्वरूपेन्द्रियेणैव । आविर्भवतीति शेषः । साक्षिवेद्यप्रतियोगिकाभावग्राहकं प्रमाणं साक्ष्येवेति भावः । साक्षिवेद्यसुखाभाव इव बाह्येन्द्रियवेद्यघटाद्यभावः किं प्रतियोगिग्राहकप्रत्यक्षैकवेद्य इति जिज्ञासाया-मस्तीति विशेषणमित्याशयेनाह ॥ **पुरोवृत्तीति ।** पुरोवर्तिनीन्द्रियसन्निकृष्टे देशे झटिति शीघ्रं व्याप्त्या-द्यनुसन्धानाभावकाल इति यावत् । जायमाना पटाद्यभावप्रमितिस्तु प्रत्यक्षफलं प्रत्यक्षरूपकरणसाध्यैव नानुपलब्धिफलमित्यर्थः । पुरोवृत्तिपदोपादानेनासन्निकृष्टदेशे जायमानघटाद्यभावप्रमितिर्न प्रत्यक्ष-फलमिति सूचयति । पुरोवर्तिनि देशेऽपि व्याप्त्याद्यनुसन्धानभावदशायां जायमाना प्रमितिर्न प्रत्यक्षफलमिति ज्ञापनाय झटितीत्युक्तम् । ननु पुरोवर्तिनि देशे झटिति जायमानघटाद्यभावप्रमिति-रुपलब्ध्यभावेन भवत्यनुलब्धिफलमेवास्त्वित्यत आह ॥ **न त्वनुपलब्धिमात्रजन्येति ।** मात्रपदेन प्रत्यक्षरूपं करणं व्यावर्त्यते । नानुपलब्धिकरणजन्येत्यर्थः । तत्र हेतुमाह ॥ **अपरोक्षज्ञानत्वादिति ।** घटाद्यभावं साक्षात्करोमीत्यनुभवात्स घटाभावप्रमितिसाक्षात्कारः साक्षात्कारस्य प्रत्यक्षफलमिति न साऽनुपलब्धिरूपकारणजन्येति भावः । अनुपलब्धेस्तदकरणत्वे तदभावेऽपि सा स्यादित्यत आह ॥ **अनुपलब्धिस्त्ववर्जनीयसन्निधिरेवेति ।** योग्यानुपलब्धिरवर्जनीयोऽपरिहरणीयः । नियत इति यावत् । सन्निधिः पूर्ववृत्तित्वं यस्याः सा भावग्रहे भावानुलब्धिरिवाभावग्रहेऽभावानुपलब्धिर्न करणं किन्तु तस्याः प्रतिबन्धकाभावत्वेन नियतपूर्ववर्तित्वमात्रमिति भावः ।

नन्वस्तु पुरोवर्तिनि देशे झटिति जायमाना घटाद्यभावप्रमितिः प्रत्यक्षफलम् । तत्र विलम्बेन जायमाना घटाद्यभावप्रमितिस्त्वनुपलब्धिफलमास्तामित्यत आह ॥ **यत्र त्विति ।** यत्र पुरोवर्तिनि देशे यत्र तु यदा त्वन्धकारे करचरणप्रसरणादिरूपेणान्वेषणेन घटाद्यनुपलम्भे सति तदभावं जानाति । अनुपलब्धिर्योग्यानुपलब्धिः । करणं तदभावज्ञानकरणं भवतीत्यर्थः । तर्ह्यनुपलब्धिः पृथक् प्रमाणं स्यादित्यत आह ॥ **किन्तु लिङ्गत्वेनैवेति ।** व्याप्यत्वेनैव करणं न प्रकारान्तरेणेत्यर्थः । अयमभिसन्धिः । अनुपलब्धिरभावे पृथक् प्रमाणमिति वदतोपलम्भयोग्यस्यानुपलब्धिरभाव ज्ञानकरणं नानुपलब्धिमात्रमित्युच्यते । तत्कस्य हेतोरनुपलब्धिमात्रस्याभावव्यभिचारादिति चेत् । किं योग्यानुपलब्धिर्भावव्यभिचारिणी । बाढमिति चेत् । हन्त तर्हि व्याप्तिसापेक्षाऽनुपलब्धिरर्थं गमयतीत्यभ्युपगतं स्यात् । तथा च व्याप्यभूतानुपलब्धिज्ञानार्थं हस्तप्रसरणोपयोग इति व्याप्यत्वेन ज्ञातायास्तस्या अनुमानात्तेनैव कारणत्वमिति । अनुमानप्रयोगप्रकारं दर्शयति ॥ **अत्रेति ।** इन्द्रियसन्निकृष्टप्रदेश इत्यर्थः । योग्यत्वे सत्युपलब्धियोग्यत्वे सतीत्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति । **एवमिति ॥** राजद्वारे प्रातर्गजो नासीत् । योग्यत्वे सति तदानीमनुपलम्भादिति प्रयोगसम्भवात् । प्रातर्गजाद्यभावज्ञानं योग्यानुपलब्धिरूपलिङ्गजन्यमिति भावः । यद्यत्र घटो नास्तीति प्रतीतिगोचराभावो नान्योन्याभावः । घटवति भूतले तथाप्रतीतिप्रसङ्गात् । तथाप्रतीतावपि तस्याः प्रमात्वप्रसङ्गाच्च । नापि तद्ध्वंसप्रागभावौ घटसामानाकारत्वात्तयोः स्वकालप्रतियोगिसमयविरोधात् । नापि तदत्यन्ताभावः । शशशृङ्गं नास्तीत्यबाधितप्रतीतिगोचरस्य शशशृङ्गात्यन्ताभावस्य स्वकाले प्रतियोगिसत्ताविरोधित्वेनास्याप्यत्यन्ताभावत्वे घटसमानकालत्वायोगात् । अस्तीति प्रतीतस्य घटादेः स्वकाले सत्त्वात्स्वकाले सत्त्वकालत्रयासत्त्वरूपकालत्रयवृत्तिनिषेधप्रतियोगित्वयोर्व्याहतत्वेन कालत्रयवृत्तिनिषेधरूपात्यन्ताभावासम्भवात् । अन्यथेह भूतले घटो नास्तीति प्रतीतिविषयाभावस्य घटप्रतियोगिककालत्रयवर्तिनिषेधत्वे कालत्रयेऽप्यसच्छशशृङ्गमिति प्रतीतिवत्कालत्रयेऽप्यसन्घट इति प्रतीत्यापातात् । तस्माद्घटकालीनस्यास्य निषेधस्य घटप्रध्वंसत्वादिवद्घट प्रतियोगिकत्रैकालिकनिषेधप्रतियोगित्वमपि न सम्भवति । तथाऽप्यस्त्यत्र घट इति प्रतीतेस्तत्संसृष्टघटविषयत्वेन तद्विरुद्धाया नास्त्यत्र घट इति प्रतीतेस्तत्संसृष्टघटनिषेध एव विषयः । तत्संसृष्टघटनिषेधस्तु घटकाले घटनिषेधत्वावच्छिन्नस्यास्त्येव घट इति प्रत्यक्षबाधितत्वेन घटकालीनस्यास्य निषेधस्याघट इति घटप्रतियोगिकत्वाभावात् । संसर्गप्रतियोगिकत्वमेवाभ्युपेयम् । विशिष्टप्रतिषेधस्य विशेषप्रतियोगिकत्वे बाधिते विशेषणप्रतियोगिकत्वस्य स्वर्गी ध्वस्तः स्वर्गी भविष्यतीत्यादिप्रतीतिगोचरा विशिष्टनिषेधव्यवस्थितत्वात् । तथा च घटतद्देशसंसर्गो यदि भावी तर्ह्यत्र घटो नास्तीति प्रतीतिविषयस्तत्प्राग-

भावः। यद्यतीतस्तर्हि ध्वंसः । यदि तु कदाऽपि न भवति तर्हि तदत्यन्ताभावादेव घटतद्देशासंसर्गः कदाऽपि नास्तीत्यबाधितप्रतीतेरित्यभावः प्रत्यक्षवेद्य इत्युक्तम् । तदयुक्तमिति शङ्कते ॥ **अभावस्येति ।** प्रत्यक्षता प्रत्यक्षविषयसत्तेत्यर्थः । संयोगः समवायश्चेति द्वावेव संसर्गौ । तयोश्च भावद्वयधर्मत्वेन भावस्येन्द्रियार्थसन्निकर्षासम्भव इति शङ्कितुराशयः ।

**परिहार इति चेति ।** घटादिभाववत्तदभावस्येन्द्रियेण सन्निकर्षाङ्गीकारे विरोधिप्रमाणाभावादित्यर्थः । संयोगाभावो बाधक इति चेन्न । द्वयोरेव संयोग इति परकीयनियमस्याप्रामाणिकत्वेन घटादिभाववत्तदभावस्यापीन्द्रियसन्निकर्षाङ्गीकारे बाधकाभावात् । तत्र श्रोत्रेन्द्रियेण समवायोऽस्तीति चेत् । तथाऽपीन्द्रियेण संयोगसमवायरहितरूपादिभाववदभावस्यापीन्द्रियेण सन्निकर्षाङ्गीकारे बाधकाभावात् । संयुक्तसमवायस्तत्रास्तीति चेत् । तथाऽपि तद्रहितरूपत्वादिभाववदभावस्यापीन्द्रियेण सन्निकर्षाङ्गीकारे बाधकाभावात् । संयुक्तसमवेतसमवायरूपः परम्परासम्बन्धस्तत्रास्तीति चेत् । तथाऽपि रूपत्वादिभाववदभावस्यापीन्द्रियेण संयुक्तविशेषणतारूपपरम्परासम्बन्धात्मकसन्निकर्षाङ्गीकारे बाधकाभावात् । इन्द्रियसंयुक्तघटादौ रूपादेरिवेन्द्रियसंयुक्तभूतले तदभावस्यासम्बन्धात् । न च तत्रापि विवादः । भूतलाभावसम्बन्धस्य घटाभाववद्भूतलमित्यबाधितप्रत्यक्षसिद्धत्वात् । अन्यथा भावाभावयोः प्रतियोग्यनुयोगिभावकार्यकारणभावव्याप्यव्यापकंभावादिरूपसम्बन्धाभावस्यान्यस्वकीयमित्यादि व्यवस्थायाश्चासम्भवापत्त्या लोकव्यवहारोच्छेदप्रसङ्गादिति । सम्भवाख्यप्रमाणस्यान्तर्भावं वक्तुं तल्लक्षणमाह ॥ **बहुलज्ञान इति ।** बहुलसङ्ख्यावत्त्वकज्ञाने सति जायमानमल्पसङ्ख्यावत्त्वज्ञानं फलरूपसम्भवाख्यमित्यर्थः । लक्ष्ये लक्षणानुगतिं दर्शयति ॥ **यथेति ।** सम्भवस्यान्तर्भावमाह ॥ **तदपीति ।** प्रातर्गजाभावज्ञानकरणवदल्पसङ्ख्यावत्त्वज्ञानकरणमप्यनुमानमेवेत्यर्थः । अनुमानप्रयोगप्रकारं दर्शयति ॥ **देवदत्त इति ।** परिशेषाख्यप्रमाणस्यान्तर्भावकथनाय तल्लक्षणमाह ॥ **प्रसक्तप्रतिषेध इति ।** प्रसक्तयोरिमावेताविति प्रतीतयोरेकस्मिन्नितरव्यावृत्तिज्ञाने सति परिशिष्यमाणे व्यावर्त्यमाने परिशिष्ट इति यावत् । बुद्धिरर्थविशेषोऽयमिति निश्चयः फलरूपपरिशेष इत्यर्थः । प्रसक्तव्यावृत्तिप्रतीतिः करणरूपविशेष इति हृदयम् । तदुक्तं प्रमाणलक्षणटीकायाम् । प्रसक्तव्यावृत्तिप्रतीतिः परिशेष इति ।

लक्षणलक्ष्ये दर्शयति ॥ **यथेति ।** नायं यज्ञदत्त इति प्रतिषेधे नायं यज्ञदत्त इति व्यावृत्तिज्ञाने सति जाते देवदत्तबुद्धिः परिशिष्टे देवदत्तोऽयमिति निश्चयो भवतीत्यर्थः । तस्यान्तर्भावमाह ॥ **इयमपीति ।** फलरूपसम्भववदियमपीत्यपेरर्थः । फलरूपपरिशेषस्यानुमानजन्यत्वेन तत्करणं परिशेषाख्यप्रमाण-

मनुमानमेवेति भावः । परिशेषानुमानस्थलेऽनुमानप्रयोगासम्भवात्कथं परिशेषस्यानुमानत्वमित्यत आह ।। **अयमिति ।** विमत इत्यर्थः । देवदत्त इति निर्देशः । देवदत्तातिरिक्ते विष्णुमित्रे व्यभिचारवारणाय सत्यन्तं विशेषणम् । इति प्रयोगवदुपपत्तेस्तादृशो यो व्यतिरेक्यनुमानप्रयोगस्तद्वदुपपत्तेः । परिशेष-प्रवृत्तिस्थलेऽप्येवंविधप्रयोगसम्भवादित्यर्थः । यद्वेति प्रयोगवतः परिशेषस्यानुमानसम्भवादित्यर्थः । उपक्रमादिप्रमाणानामन्तर्भावमाह ।। **उपक्रमादीन्यपीति ।** प्रकरणादिरुपक्रमः । उपसंहारादिशब्दार्थः । अनुमानान्येव वाक्यतात्पर्यलिङ्गान्येवेत्यर्थः । यत्र वाक्यपदं प्रक्रम्यते तत्तात्पर्यगोचर इत्यादिरूप-व्याप्तिज्ञानमपेक्ष्य प्रक्रमादीनां तात्पर्यज्ञानस्यापेक्षितत्वादनुमानत्वमिति भावः । ऐतिह्याख्यप्रमाण-स्यान्तर्भावं वक्तुमैतिह्यस्वरूपमाह ।। **अनिर्दिष्टप्रवक्तृकमिति ।** अनिर्दिष्टो विशिष्यानुक्तः प्रवक्ता यस्य तत्तथा । प्रवादपारम्पर्यं परम्परैव पारम्पर्यम् । वचनप्रवाह इत्यर्थः । अनिर्दिष्टप्रवक्तृकवाक्य-परम्पराव्यवच्छेदायानिर्दिष्टेति विशेषणम् । लक्ष्ये लक्षणं दर्शयति ।। **यथेति ।** वैश्रवणःपिशाचोऽस्तीत्यनिर्दिष्टवाक्यप्रवक्तृकवाक्यमित्यर्थः । तस्यान्तर्भावमाह ।। **तदिति ।** तदैतिह्यमागमलक्षणवत्त्वा-दागम एव भवतीत्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति ।। **एवमिति ।** एवमुक्तविधयाऽन्या-न्यप्यन्तर्भावितप्रमाणातिरिक्तानि चेष्टाविशेषरेखाविशेषादीन्यपि प्रमाणान्यर्थविशेषज्ञापकान्युक्तेषु त्रिविधतयोक्तेषु प्रमाणेष्वन्तर्भाव्यान्यन्तर्भूतत्वेन ज्ञेयानीत्यर्थः । नन्वनुप्रमाणं केवलप्रमाणं च त्रिविधमित्यस्तु तथाऽपि तत्प्रामाण्यं प्रत्याश्रयं भिन्नमेव । भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपीत्यनुव्याख्यानोदाहृतश्रुतेर्धर्मिणामिव धर्माणामप्येकत्वे मानाभावाच्च । अथ भिन्नेषु घटेषु घटोऽय-मित्यनुगतप्रत्ययो घटत्वैक्ये मानमिति चेत् । किं तत्प्रत्ययस्यानुगतत्वमेकत्वं वैकघटत्वप्रकारत्वं वा समानघटत्वप्रकारत्वं वा । नाद्यः । अनेकेष्वयं रूपीति प्रत्ययवद्घटोऽयमिति प्रत्ययस्यानेकत्वेनैक-त्वायोगात् । एकत्वेऽपि तत्प्रत्ययस्य तदेवेदं घटत्वमिति घटत्वैक्यागोचरत्वेन घटत्वैक्ये मानाभावाच्च । न द्वितीयः अनेकघटत्ववादिनं प्रत्येकघटत्वप्रकारत्वासिद्धेः । अनेकेषु घटेषु घटत्ववैशिष्ट्य-गोचरत्वेऽप्यस्य प्रकारस्यानेकघटवृत्तिघटत्वैक्ये उदासीनत्वेनैकप्रकारत्वस्याङ्गीकर्तुमशक्यत्वाच्च । अन्यथा भिन्नेषु घटाद्यर्थेष्वाधारोऽयमाधारोऽयमाधेयोऽयमाधेयोऽस्वीयोऽयं स्वीयोऽयं प्रतियोग्योऽयं प्रतियोग्योऽयं विशेष्योऽयं विशेष्योऽयमित्यादिप्रत्ययस्यैकाधारत्वादिप्रकारत्वापातात् । अभावेष्वभावोऽयमभावोऽयमित्यादिसाक्षात्कारस्यैकाभावात्वादिप्रकारत्वापाताच्च । न चाभावेष्य-भावत्वादिकं भावेषु च विद्यमानमाधारत्वादिकमित्यनुगतधर्मवादिभिर्नैय्यायिकादिभिरभ्युपगम्यते पदार्थनियमलोपप्रसङ्गात् । सम्बन्धिभिन्नसम्बन्धस्य केनाप्यनभ्युपगमेनाधाराधेयभावादेः सम्बन्धि-रूपतयैकत्वायोगाच्च । न तृतीयः । परेष्टासिद्धेरस्मदिष्टसिद्धेश्च । तथा च प्रत्याश्रयं भिन्नं प्रमाण्य-माश्रयोत्पत्तेः प्रागाश्रयसदसत्त्वेनोत्पत्तिमदेवेत्यभ्युपेयम् ।

# प्रामाण्यविचारः

(१२) प्र.प.— नन्वेतेषां प्रमाणानां प्रामाण्यमप्रमाणानामप्रामाण्यं च केनोत्पद्यते केन वा ज्ञायत इति चेत् । उच्यते । तत्र ज्ञानानामुभयं स्वत एवेति साङ्ख्या मन्यन्ते । ज्ञानजनकातिरिक्तजनकानपेक्षत्वमुत्पत्तौ स्वतस्त्वम् । ज्ञानज्ञापकातिरिक्तज्ञापकानपेक्षत्वं ज्ञप्तौ स्वतस्त्वम् । उभयं परत एवेति नैयायिकादयः । ज्ञानजनकातिरिक्तकारणजन्यत्वमुत्पत्तौ परतस्त्वम् । ज्ञानज्ञापकातिरिक्तप्रमाणापेक्षत्वं ज्ञप्तौ परतस्त्वम् । तत्र ज्ञानमिन्द्रियादिजन्यं प्रामाण्यं पुनरिन्द्रियादिगुणजन्यम् । तथाऽप्रामाण्यं तद्दोषजन्यम् । एवं ज्ञानं मानसप्रत्यक्षवेद्यम् । तत्र प्रामाण्यमप्रामाण्यं च संवादविसंवादलिङ्गगम्यमिति । प्रामाण्यं परतोऽप्रामाण्यं स्वत इति बौद्धाः । प्रामाण्यं स्वतोऽप्रामाण्यं परत इति पक्षङ्गीकुर्वाणा अपि भाट्टाः प्रामाण्यविशिष्टं ज्ञानं ज्ञातताविशेषेणानुमीयत इति ज्ञप्तौ स्वतस्त्वम् । अप्रामाण्यं तु विसंवादाद्यनुमानान्तरवेद्यमिति परतस्त्वं मन्यन्ते । स्वप्रकाशज्ञानेनैव प्रामाण्यविशिष्टज्ञानं सिद्ध्यति । अप्रामाण्यं तु नास्त्येवेति प्राभाकराः । इन्द्रियादिमात्रेणैव प्रामाण्यविशिष्टं ज्ञानमुत्पद्यते । गुणास्त्वकिञ्चित्कराः । अप्रामाण्यं दोषसहकृतेन्द्रियादिभिरुत्पद्यते । तथा ज्ञानं तत्प्रामाण्यं च साक्षिणैव ज्ञायते । अप्रमाणज्ञानस्वरूपमात्रं साक्षिवेद्यम् । तदप्रामाण्यं त्वनुमेयमित्याचार्याः ।

जना.— ॥ **नन्विति** । प्रमितीनां तत्साधनानां चेत्यर्थः । प्रामाण्यं यथार्थत्वं यथार्थज्ञानसाधनत्वं चेत्यर्थः । अप्रमाणानामप्रमितीनां तत्साधनानां चेत्यर्थः । अप्रामाण्यमयथार्थत्वमयथार्थज्ञानसाधनत्वं चेत्यर्थः । स्वमते प्रमाणानां प्रामाण्योत्पादकग्राहके वदन् शिष्याणां मतभेदप्रतिपत्त्यर्थं परमतानुवादव्याजेनैव स्वतस्त्वपरतस्त्वशब्दार्थावाह ॥ **तत्रेति** । प्रामाण्योत्पादकादौ वक्तव्ये सतीत्यर्थः । उभयं प्रामाण्यमप्रामायं चेत्यर्थः । स्वतस्त्वं प्रामाण्यस्येति शेषः । ज्ञापकातिरिक्तानपेक्षत्वमित्येतदनन्तरमपि प्रामाण्यस्येति शेषः ॥ **उभयमिति** । ज्ञानप्रामाण्यजननं तज्ज्ञप्तिश्चेत्यर्थः । तत्रोत्पत्तौ परतस्त्वशब्दार्थमाह ॥ **ज्ञानजनकेति** । ज्ञप्तौ परतस्त्वशब्दार्थमाह ॥ **ज्ञानज्ञापकेति** । नैयायिकमते प्रामाण्याप्रामाण्ययोरुत्पत्तिज्ञप्त्योः परतस्त्वमुपपादयति ॥ **तत्रेत्यादिना** ॥ **इन्द्रियादिगुणेति** । इन्द्रियलिङ्गोपमानशब्दानां यथाक्रमं भूयोऽवयवेन्द्रियसन्निकर्षयथार्थलिङ्गपरामर्शयथार्थसादृश्यज्ञानयथार्थतात्पर्यज्ञानानि गुणाः । तज्जन्यमित्यर्थः । तद्दोषजन्यं तेषामिन्द्रियादीनां यथाक्रमं काचकामलाद्ययथार्थलिङ्गपरामर्शा यथार्थसादृश्यज्ञानतात्पर्यभ्रमा दोषाः । तज्जन्यमित्यर्थः ॥ **तत्र प्रामाण्यमप्रामाण्यं चेति** । प्रामाण्यं संवादादिलिङ्गगम्यमप्रामाण्यं विसंवादादिलिङ्गगम्यमिति यथायोग्यमन्वयो ज्ञेयः । अङ्गीकुर्वाणा इत्यनेन भाट्टानामस्माकं च प्रामाण्यस्वतस्त्वविषये साम्य-

मभिप्रैति । तर्हि किं सर्वात्मना साम्यमित्यतोऽपिशब्दसूचितमुपपादनविषये वैषम्यमस्तीत्याह ॥ **प्रामाण्यविशिष्टमिति** । ज्ञातताविशेषेण प्रामाण्यविशिष्टज्ञानजनितेनेत्यर्थः ॥ **विसंवादादिति** । ममोत्पन्नं जलज्ञानमप्रमाणम् । विसंवादिप्रवृत्तिजनकत्वादित्याद्यनुमानानन्तरं ज्ञाततालक्षणलिङ्गापेक्षया ॥ **अप्रामाण्यं तु नास्त्येवेति** । अयथार्थज्ञानरूपधर्मिण एवाभावादित्यर्थः । क्व स्वतस्त्वपरतस्त्वे इत्येवकारार्थः । अङ्गीकुर्वाणा अपीत्यनेन प्रामाण्यस्वतस्त्वं स्वसिद्धान्त इत्युक्तप्रायत्वात्साङ्ख्योक्तयोरेव स्वतस्त्वपरतस्त्वशब्दार्थयोः स्वसम्मतत्वाच्चाविशिष्टं स्वमते प्रामाण्यादिस्वतस्त्वाद्युपपादयति ॥ **इन्द्रियादिमात्रेणेति** । एवकारव्यावर्त्यमाह ॥ **गुणा इति** । प्रामाण्यग्रहणकाले सन्निहिता अपि संवादिलिङ्गज्ञानादयो गुणाः पटं प्रति रासभतन्तुरूपादिवदकिञ्चित्कराः । प्रामाण्येऽनुपकारिण इत्यर्थः । यादृच्छिकसंवादादिस्थले गुणाभावेऽपि याथार्थ्यदर्शनादिति भावः । ज्ञानगतस्याप्रामाण्यस्योत्पत्तौ परतस्त्वमुपपादयति ॥ **अप्रामाण्यमिति** । ज्ञानसामान्यसामग्रीभूतात्मनो योगाद्यतिरिक्तदोषजन्यत्वादप्रामाण्यं परत इत्यर्थः । एवं ज्ञानप्रामाण्याप्रामाण्ययोरुत्पत्तौ स्वतस्त्वपरतस्त्वे उपपाद्य तयोर्ज्ञप्तौ स्वतस्त्वपरतस्त्वे उपपादयति ॥ **तथेत्यादिना** । ज्ञानगतस्याप्रामाण्यस्य ज्ञप्तौ परतस्त्वमुपपादयति ॥ **अप्रमाणज्ञानेति** ॥ **मात्रमिति** । इदं च साक्षिणोऽप्रामाण्यज्ञापकविसंवादलक्षणापवादकाननुसन्धानदशायां द्रष्टव्यम् ॥ **तदप्रामाण्यं त्विति** । अत्र विशेषवाचिना तुशब्देनापवादकदशायामप्रामाण्यं साक्षिवेद्यमिति सूचयति । उक्तं हि सुधायाम् । साक्ष्यपवादकसद्भावेऽप्रामाण्यमपि गृह्णातीति । या तु विष्णुतत्त्वनिर्णयटीकायामनुमेयमेवाप्रामाण्यमित्युक्तिः सा साक्षिणोऽप्रामाण्यग्रहणे शक्तिर्विसंवादायत्तेत्यभिप्रेत्य । अत एव तत्रैव न पुनर्ज्ञानग्राहकमात्रग्राह्यमित्युक्तम् । वादावल्यां चाप्रामाण्यस्यानुमेयतादशायामित्युक्त्वा न चाप्रामाण्यं क्वचिदपि निरपेक्षेण साक्षिणा निश्चितचरमित्युक्तम् । अनुमेयं विसंवादादिलिङ्गेनेति शेषः ।

**राघ.—** एवं निरूपितानि केवलानुप्रमाणानि तदाभासाश्चोक्ताः । तत्र केवलानुप्रमाणानां प्रामाण्यं किमुत्पत्तिज्ञप्त्योरेकप्रकारमुतानेकप्रकारम् । तथा किं प्रामाण्यमिवाभासानामप्रामाण्यमुत्पत्तिज्ञप्त्योरेकप्रकारमुत भिन्नप्रकारमिति भावेन पृच्छति ॥ **नन्वेतेषामिति** । एषां प्राङ्निरूपितानामित्यर्थः । इन्द्रियादिमात्रेणेत्यादिना स्वमतं विवक्षुः परमतानि तावदनुवदति ॥ **तत्रेति** । केनेति कृतचोद्यविषये । ज्ञानतत्करणयोर्मध्य इति वाऽर्थः । उभयं प्रामाण्यमप्रामाण्यं च ॥ **स्वत एवेति** । उत्पद्यते ज्ञायते चेत्यनुषङ्गः । एवमग्रेऽपि । किमिदं स्वतस्त्वमित्यत आह ॥ **ज्ञानेति** । उभयमित्यत्रापि ज्ञानानामित्यनुवर्तते । परतस्त्वं निर्वक्ति ॥ **ज्ञानजनकेति** । ज्ञानकाराज्ज्ञानज्ञापकाच्चातिरिक्तं किमित्यत आह ॥ **तत्रेति** । उत्पत्तिज्ञप्त्योर्मध्य इत्यर्थः । तथेत्यनन्तरं ज्ञानमिन्द्रियादि-

जन्यमित्यनुषज्यते ।। **तद्दोषेति** । इन्द्रियलिङ्गादिदोषजन्यमित्यर्थः । संवादविसंवादेति यथाक्रममन्वयः ।। **प्रामाण्यविशिष्टज्ञानमिति** । प्रामाण्यं तदाश्रयज्ञानं चोभयमनुमेयमित्यर्थः ।। **अनुमानान्तरेति** । ज्ञानं ज्ञाततालिङ्गेनानुमेयं तदप्रामाण्यं तु विसंवादद्दुष्टकरणजन्यत्वादिरूपानुमानान्तरवेद्यमित्यर्थः । ज्ञानतदप्रामाण्ययोरनुमेयत्वाविशेषेऽप्यनुमानभेदात्परतस्त्वमिति भावः ।। **स्वप्रकाशे ज्ञानेनैवेति** । व्यवसायरूपघटादिज्ञानं स्वप्रकाशम् । तत्स्वात्मानं स्वनिष्ठप्रामाण्यं च सहैव गृण्हाति । इति ज्ञानग्राहकातिरिक्तानपेक्षत्वात्स्वतस्त्वमिति भावः । तर्हि स्वनिष्ठाप्रामाण्यस्यापि ग्रहणप्रसङ्गात्तस्यापि स्वतस्त्वसिद्धिरित्यत उक्तम् ।। **अप्रामाण्यं तु नास्त्येवेति** । एतेन जायमानं सर्वं ज्ञानं प्रमाणं सदेव जायत इत्युत्पत्तावपि स्वतस्त्वमुक्तं भवति । एवमुपन्यस्तपञ्चपक्षाणामनुभवादिविरोधेन स्फुटदूषणत्वाद्वा साङ्ख्यमतस्याप्रामाण्यस्वतस्त्वस्वीकारादपि मायी वदति । साङ्ख्यनयानुव्याख्यानसुधयोर्नैयायिकादिमतस्य प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य च । अनवस्थाऽन्यथा हि स्यादप्रामाण्यं तथाऽन्यत इति जिज्ञासानयानुव्याख्यानसुधयोर्देवतानयभाष्यटीकयोर्न विलक्षणत्वनयभाष्यटीकयोस्तत्वनिर्णयादौ च तथा बौद्धमतस्य च । सर्वस्यापि न चाभावो विश्वं सदिति गम्यत इत्यादिना माध्यमिकनयानुव्याख्यानादौ च भाट्टप्राभाकरमतयोश्च न ज्ञानदृष्टिमात्रेण प्रामाण्यमवसीयत इति ज्ञानपादीयानुव्याख्यानसुधयोर्विवृतदूषणत्वाद्वाऽत्रानुक्तिः । स्वमतमाह ।। **इन्द्रियादीति** । ज्ञानसामग्रीमात्रेणैवेत्यर्थः ।। **दोषसहकृतेति** । दुष्टबुद्धीनामेवाप्रामाण्यशङ्केति परतोऽप्रामाण्यमिति तत्त्वनिर्णयोक्तेरिति भावः ।। **तदप्रामाण्यं त्वनुमेयमिति** । व्याख्यातमेतद्वाक्यं तर्कताण्डवे । या तु टीकायामप्रामाण्यमनुमेयमित्युक्तिः सा साक्षिणाऽप्रामाण्यग्रहणे विसंवादापेक्षा नियतेत्यभिप्रेत्य । अत एव वादावल्याम् । न चाप्रामाण्यं क्वचिदपि निरपेक्षसाक्षिणा निश्चितचरमिति । उक्तं हि सुधायाम् । साक्ष्यपवादसद्भावेऽप्रामायमपि गृण्हातीति ।

**विज.**— ननूक्तप्रमाणानामपि वादिविप्रतिपत्तेः प्रामाण्यकारणस्य विशिष्य निश्चये परस्परं सर्वत्र दोषदर्शने सामान्यतोऽपि तन्निश्चयसम्भवात्तत एव प्रामाण्यग्राहकस्याप्यनवधारणाच्च न प्रामाण्यव्यवस्था सम्भवतीति सांवृत एव प्रमाणप्रमेयभावो न वास्तव इत्याशयेन तटस्थः प्रत्यवतिष्ठते ।। **नन्वेतेषामिति** । प्रमाणपदस्य भावकरणव्युत्पन्नतयोभयत्र प्रश्नोऽयम् । गुणस्यानुगतस्यानिर्वचनादननुगतस्य चानुगतकार्याहेतत्वादित्याशयः । प्रामाण्याश्रयकारणस्य प्रामाण्यकारणत्वमुपचर्य प्रश्नः । न च प्रामाण्यहेतुदोषाभाव एव तद्धेतुरस्तु तदभावकूटस्य हेतुत्वादननुगमस्य तत्रादोषत्वादिति मीमांसकमतमाशङ्क्याह ।। **अप्रमाणानामिति** । अननुगमेन दोषाभावस्य प्रामाण्यहेतुत्वमेव न सम्भवति । न वा तदभावकूटस्य प्रामाण्यहेतुत्वम् । शङ्खे पीतत्वभ्रमहेतुपीतद्रव्ये सति तदभावा-

भावेऽप्यपीतत्वप्रमोत्पत्तेरित्याशयः । ननु प्रामाण्याप्रामाण्ययोः प्रमाणसिद्धत्वे तत्कारणेनावश्यं केनचिद्भवितव्यमिति किमत्र विशेषजिज्ञासयेत्याशङ्क्याह ॥ **केवलेति** । न स्वतःप्रामाण्यग्रहोऽनभ्यासदशापन्नज्ञाने संशयानुपपत्तेः । नापि परतोऽनवस्थापत्तेरिति प्रमाणसिद्धत्वमेवासिद्धमित्याशयः ॥ **तत्रेति** । प्रामाण्याप्रामाण्यकारकज्ञापकविचारे कर्तव्य इत्यर्थः । उभयं प्रामाण्याप्रामाण्यं चोत्पद्यते ज्ञायते चेति शेषः । ननु स्वत एवोत्पद्यत इत्ययुक्तम् । पूर्वोत्तरभावविशेषरूपकार्यकारणभावस्य भेदनियतत्वात् । स्वशब्दस्य स्वकीयार्थत्वेऽनिष्टापत्तिरिति पारिभाषिकं स्वत इत्यस्यार्थमाह ॥ **ज्ञानजनकातिरिक्तेति** । प्रमातदन्यसाधारणधर्मावच्छिन्नकार्यताप्रतियोगिककारणातिरिक्तानपेक्षत्वमित्यर्थः । अन्यथा गुणदोषयोरपि ज्ञानजनकत्वेन परतः पक्षसाधारण्यादिति ध्येयम् । नन्वेवं सर्वत्र प्रमात्वाप्रमात्वप्रसङ्गे तदुभयवैचित्र्यानुपपत्तिः । कारणवैचित्र्याभावात् । तस्माद्यत्कार्यं यत्कार्यविजातीयं तत्कार्यविजातीयकरणजन्यम् । घटविजातीयपटादिवदिति द्वयोरपि परतस्त्वमिति चेन्न । द्वयोरप्यौत्सर्गिकयोः क्वचिदपवादकेनापवादानपवादाभ्यां वैचित्र्योपपत्तौ गुणदोषयोः कारणत्वाकल्पनादिति तात्पर्यम् । ननु तथाऽपि प्रामाण्यस्याज्ञानरूपत्वेन स्वतो ज्ञप्तिरनुपपन्ना । न च शब्दोऽयं स्वाश्रयपरः । ज्ञानस्य स्वसन्निकर्षव्याप्याद्यजन्यत्वेन स्वाविषयतया स्वाधर्मप्रामाण्यग्राहकत्वात् । प्रामाण्यस्य ज्ञानघटितत्वेन धर्म्यग्रहेऽपि शब्दादिवद् ग्रहस्यासम्भवात् । ज्ञानं प्रमेति ज्ञानगतत्वेन प्रामाण्यग्रहस्य व्यवहाराङ्गत्वेन प्रकृते विचारणीयस्यालाभश्च । नापि स्वाश्रयग्राहकपरः । परतस्त्वपक्षाविशेषादित्यत आह ॥ **ज्ञानज्ञापकातिरिक्तेति** । प्रतिबन्धदोषासमवहिततया वस्त्वाश्रयानुव्यवसायग्राह्यत्वमित्यर्थः । अन्यथा परतः पक्षावरणादिति ध्येयम् ।

ननु नैतद्युक्तम् । प्रमात्वाप्रमात्वयोः सामान्यकारणताश्रयतत्तद्व्यक्तिभेदाधीनत्वात् । व्यक्तिभेदवद्यमजवैजातिवच्चानुगतधर्मस्यापि तथैवोपपत्तेः । स्वरूपसम्बन्धगर्भत्वेन प्रमात्वस्यानुगमासम्भवाच्च । यद्वा दोषतदभावौ सामग्र्यावच्छेदकौ न हेतू । तथा चानुगतकार्यस्याननुगतादनुत्पत्तेरपवादकदोषगुणाभावयोरवच्छेदकत्वेऽन्यत्रापि प्रतिबन्धकाभावहेतुतोच्छेदापत्तेश्च । किञ्च तयोरवच्छेदकत्वहेतुत्वे चासाधारणकारणसिद्धेः परतस्त्वपर्यवसानात् । न चासाधारणभावानपेक्षत्वं तत्त्वं गौरवात् । तथात्वेऽपि वा गुणदोषाभावापेक्षया तदुभयोरेव हेतुत्वमवच्छेदकत्वं वा लाघवादुचितम् । किञ्चाविशेषादर्शनादेर्भावस्य हेतुत्वमेवापतितमेवेत्यस्मिन्मते साङ्ख्या इत्यनेनास्वारस्यं विभाव्य मतान्तरमाह ॥ **उभयं परत एवेति** । आदिपदार्थो वैशेषिकः । ननूपपत्तिः सर्वस्य परत एव । ज्ञप्तिरपि ज्ञानभिन्नस्य तथैवेति सिद्धसाधनमाशङ्क्य तदुभयं व्याचष्टे ॥ **ज्ञानजनकेति** । यद्यपि गुणदोषयोरपि ज्ञानहेतुत्वाद्बाधः । न च प्रमात्वाप्रमात्वयोरेव ज्ञानभिन्नानित्योपाधिरूपयोस्तद्द्वयहेतुर्न

ज्ञान इति वाच्यम् । विषयाविशेषरूपप्रामाण्याज्ज्ञानभिन्नत्वासम्भवात् । विषयात्मकत्वे तु सुतरां तद्व्याजन्यत्वात् । तथाऽपि पूर्वोक्तसाध्याभावोऽर्थः न च तत्रापि तत्प्रागभावस्य साधारण्यात्तदादाय सिद्धसाधनम् । भावत्वेनापि कारणविशेषणात् । प्रमामात्र इत्यनेकवृत्तिधर्मावच्छिन्नकार्यता-प्रतियोगिककारणजन्यत्वस्य विवक्षितत्वादिति भावः । न चैवमपि दोषाभावेन सिद्धसाधनम् । गुणेनान्यथासिद्ध्या तद्धेतुत्वाकल्पनात् । न च भूयोऽवयवेन्द्रियसन्निकर्षसत्त्वेऽपि पित्तादिप्रतिबन्धान्न श्वैत्यादिप्रमेति तदभावहेतुतावश्यकीति वाच्यम् । क्वचिदन्वयव्यतिरेकाभ्यां किञ्चिदभावस्य हेतुत्वेऽपि पक्षतावच्छेदकप्रमाणत्वावच्छेदेन साध्यसिद्ध्यभावेन सिद्धसाधनासम्भवात् । अर्थान्तरस्य गौरवेणैव निरासादित्याशयः ॥ **ज्ञानज्ञापकेति** । दोषासमवहितस्ववृत्तिवर्तमानज्ञानग्राहकयावद्ग्राह्यत्वम् । परमतसिद्धप्रामाण्यग्राहकभिन्नयावदग्राह्यत्वं वेत्यर्थः । यथाश्रुते प्रामाण्यग्राहकलिङ्गादेरपि ज्ञान-ग्राहकत्वाद्बाधापत्तेरित्यवधेयम् । प्रामाण्यस्य परतस्त्वमुत्पत्तौ व्युत्पादयति ॥ **तत्रेति** । अप्रामाण्यो-त्पत्तौ तदाह ॥ **अप्रामाण्यमिति** । ज्ञप्तौ परतस्त्वमाह ॥ **एवमिति** । ज्ञप्तौ तयो संवादेति संवादिप्रवृत्तिजनकत्वेत्यर्थः। आदिपदार्थस्तु गन्धादिव्याप्यवृत्तिपृथिवीत्वादिव्यापकप्रकारकज्ञानत्वादि ।

नन्वेवं प्राथमिकप्रामाण्यज्ञानानुपपत्तिः । साध्याप्रसिद्ध्याऽन्वयव्यतिरेकव्याप्त्योरग्रहात् । व्याघात-दण्डस्य स्वार्थानुमाने सर्वत्र सम्भवात् । क्वचिन्मनसा प्रामाण्यग्रहे सर्वत्र तथात्वादविशेषात् । न च प्राग्भावीयसंस्कारात्प्रामाण्यस्मृतिः । अपूर्वचैत्रत्वादिप्रकारकज्ञानप्रामाण्यस्य प्रागनुभवेन स्मरणा-योगात् । प्रमेयत्वादिसामान्येन तत्स्मरणस्य प्रकृतानुमानानुपयोगात् । अथ प्रामाण्यघटकं घटकत्वप्रकारकत्वं पुरोवृत्तिविशेष्यकत्वं पुरोवर्तिनं घटत्वं जानामीत्यनुव्यवसायगम्यमेव तद्विशेष्ये च घटत्त्ववत्त्वं ग्राह्यमिति विचारः । तथा चेदं ज्ञानं घटकत्वाभाववद्विज्ञानविशेष्यत्वं घटवृत्ति । अघटावृत्तित्वेऽपि वृत्तिमत्त्वादित्यादिना प्रामाण्यानुमितिरिति चेत् । मैवम् । प्रामाण्यवदप्रामाण्य-स्यापि दुर्ग्रहत्वेन तदभावानुमानासम्भवात् । मनसा तद्ग्रहे प्रामाण्यग्रहोऽपि तथैवास्तु किमनुमान-प्रयासेनेति चेत् । अत्र वदन्ति । न तावत्साध्यप्रसिद्धौ पक्षतद्विशेष्यग्रहे वोपायनियमः । क्वचित् कथञ्चिदुपपत्तेः । तदत्र केचिन्मनसैव प्रमात्वग्रहः । तथा हि । अयं घट इति ज्ञाने तदनुव्यवसाये च सति पुनस्तथैव ज्ञाने स्मृत्युपनीयतप्रथमव्यवसाये द्वितीयव्यवसायोपनीतघटत्वविशिष्टत्वस्य मनसा परिच्छेदे न किञ्चिद्बाधकम् । काव्यमूलसंसर्गज्ञानत्वात् । एवं कुत्रचिच्चक्षुरादिनाऽपि प्रमात्वज्ञानं घटत्वेन गृह्यमाणे पूर्वानुव्यवसायोपनीतघटत्वप्रकारकज्ञानविशेष्यकप्रमात्वज्ञानमयं घटोऽत्र च घटत्व-प्रकारकमिदं ज्ञानमित्येतावतैव निष्कपटव्यवहारोपपत्तेः । तावद्दूरस्यानपेक्षितत्वात् । अपेक्षितत्वेऽपि मानसज्ञानान्तरसम्भवात् । एवं क्वचित्प्रागभावीयसंस्कारवशात्स्मृतस्य क्वचित्तु दैवादप्रामाण्यस्यैव

प्रामाण्यग्रहोक्तप्रकाराभ्यां प्रथमोपस्थितौ तदभावानुपूर्वकोक्तानुमानेन प्रामाण्यस्यानुमिति र्भवतीति न काचिदनुपपत्तिः । ग्रन्थस्तु संवादविसंवादलिङ्गादित्यादिपदलिङ्गयोर्व्यत्यासेन योजनीयमिति । अत्रायं प्रयोगः । चाक्षुषघटत्वप्रमात्वं कार्यतावच्छेदकम् । कार्यतावच्छेदकत्वबाधकत्वावच्छिन्नाभावात् । घटवत् । चाक्षुषघटत्व प्रमात्वं कार्यतावच्छेदकम् । मन्मतसिद्धकार्यतावच्छेदकत्वावच्छिन्नभिन्नत्वात् । इत्याद्युत्पत्तौ । ज्ञप्तौ त्वयमनुव्यवसायो न प्रमात्वविशिष्टैतज्ज्ञानविषयको मन्मतसिद्धविषयत्वावच्छिन्नभिन्नत्वात् । अप्रमात्ववदित्यादि । एवं मतान्तरेऽपि ग्राहकत्वाभिमततज्ज्ञानान्तर्भावेन साध्यमूहनीयम् । स्यादेतत् । प्रथमहेतौ बाधकाभावोऽसिद्धः । दण्डविशेषाद्धटविशेषवत्सामान्यकारणताश्रयतत्तद्व्यक्तिविशेषादेव तत्तत्प्रामाण्यव्यक्त्युपपत्तेः । तत्तद्धटत्वादिवच्चाक्षुषप्रमात्वादेरपि कार्यतावच्छेदकत्वे मानाभावात् । अथ कार्यगतं वैचित्र्यं न कारणप्रयोज्यम् । आकस्मिकत्वेवैचित्र्यानुपपत्तेः घटत्वपटत्ववैचित्र्यवत् । नाप्यननुगततत्तद्व्यक्तिप्रयोज्यानुगतकार्यस्याननुगतादनुपपत्तेः। तत्तद्धटत्वादिकं त्वननुगतमननुगततत्तत्प्रागभावप्रयोज्यमेव । संस्थानादिविशेषस्त्वनुगतो यदि केषुचिद्धटेषु तदा कुलालादिविशेषप्रयोज्य एव साधकसत्त्वाद्बाधकासद्भावानिश्चयादिति चेन्न । नीलघटत्वादिवत्सामग्र्यन्तरोपपाद्यत्वेन कार्यतावच्छेदकानुपपत्तेः । कार्यवृत्तेरनुगतधर्मस्य सर्वस्यैव कार्यतावच्छेदकनियमो गृहविशेषवृत्तिघटत्वादेरतत्त्वात् । तथा हि । घटत्वविशेष्यकत्वे घटगोचरपटभ्रमे सामग्री या च घटभ्रमे घटत्वप्रकारकत्वे सामग्री ताभ्यामेव परस्परसमवहिताभ्यां नीलघटत्ववत्प्रमात्वोपपत्तेः । न तस्य कार्यतावच्छेदकत्वम् । यत्त्ववच्छेदकप्रविष्टभागयोर्यत्र पृथक् कार्यतावच्छेदकत्वं तत्रैवेदम् । विशिष्टोपाधेः कार्यतावच्छेदकत्वे बाधकम् । न चात्र घटत्वे कारणमस्तीति नायं दोष इति । तत्तुच्छम् । कार्यतावच्छेदकस्यान्यथासिद्धिमात्रेणैवावच्छेदकान्तराक कल्पनात् । अथ न तदुभयमात्रं प्रमात्वम् । घटपटयोः पटघटभ्रमेऽतिव्याप्तेः । किन्तु तादृशविशेषावच्छेदेन तत्प्रकारकत्वम् । तच्च सामग्रीद्वयप्रयोज्यम् । उक्तभ्रमेऽपि प्रसङ्गादिति तदवच्छेदेन सामग्र्यन्तरमावश्यकमिति चेत् । अत्र ब्रूमः । तद्व्यक्तिधर्मिकघटत्वप्रकारकत्वावच्छेदेन तद्धर्मिकघटत्वासंसर्गाग्रहस्य तत्र तदग्रहप्रतिबन्धकदोष विशेषाभावादेश्चातिप्रसङ्गार्थमवश्यं कारणत्वे किं घटधर्मिकघटत्वप्रकारकत्वावच्छेदेन कारणान्तरकल्पनयाऽऽवश्यकविशेषकारणेन गुणानामन्यथासिद्धः । न च प्रमामात्रहेतुत्वादयमेव गुणो दोषाभावरूपत्वात् । अन्यथा तत्प्रागभावस्यासाधारणकारणत्वात्स एव गुण इति विवाद एवानुपपन्नः । तस्माद्बाधकाभावोऽसिद्धः । द्वितीयहेतुश्चात एव प्रयोजक इति नोत्पत्तौ प्रमात्वस्य परतस्त्वम् । नापि ज्ञप्तौ व्यवसायप्रत्यासत्त्यन्तरत्वेऽतथात्वे वा तदुपनीतो विषयो मानसानुव्यवसाये भासत इति सर्वसिद्धम् । एवं च कविकाव्यमूलमानसप्रत्यक्ष इवोपनीतविशेष्य-

विशेषणयोर्मनसा वैशिष्ट्यग्रहे किञ्चिद्बाधकं पश्यामः । तथा चानुव्यवसाये विशेष्यत्वेन भासमाने पूरोवर्तिनि प्रकारतया भासमानघटत्वादिवैशिष्ट्यग्रहे किमवसिष्यते ॥ **प्रामाण्ये ज्ञातव्य इति ।** स्वत एव प्रामाण्यधीरित्युक्तहेतोरप्रयोजकता । चैवमपि प्रकारत्वविशेष्यत्वयोः पूर्वाज्ञातत्वेन तद्घटित-प्रमात्वस्यानुव्यवसाये प्रकारत्वासम्भवः। फलबलेन प्रतियोगित्वाभावत्वयोरिवाज्ञातयोरपि प्रकारत्वात्। वस्तुतोऽयं घटोऽत्र घटत्वप्रकारकत्वमित्येतावतैव निष्कापट्यव्यवहारादप्रकारत्वेऽपि न क्षतिः । नन्वेवमनभ्यासदशापन्नज्ञाने प्रमा नैवेति सन्देहानुपपत्तिः । अनुव्यवसायेन प्रमात्वनिश्चयात् । तदभावे धर्मिज्ञानाभावेन ज्ञानविशेष्यकसन्देहासम्भवादिति चेत् । किमेतावता सामग्रीसत्त्वेऽपि न प्रमात्व-ज्ञानमिति वक्तुमध्यवसितोऽसि । ननु त्वमपि किं विरोधिविशेषदर्शने सत्त्वेऽपि सन्देहोऽस्तीति वक्तु-मुद्यतोऽसीति सुवचम् । सन्देहाज्ञाने भासमानेऽपि तत्र स्थले सामग्री विद्यमानाऽपि प्रमात्वज्ञान-मभिप्रैषि । अनुभवसिद्धापलापमेव वा । उभयथाऽप्यविचारकतेति चेत् । मैवम् । किन्त्वनुव्यवसायं विनैव कोटिद्वयस्मृत्या सन्देहे धर्मिज्ञानसंशयहेतुत्वे मानाभावात् । विशिष्टज्ञानसामान्यसामग्र्यैवो-पपत्तेः । न चातीतादिविशेष्यकसंशये धर्मिज्ञानहेतुत्वाद्यविशेषयोरिति न्यायेन सामान्यत एव तद्धेतुत्व-मिति वाच्यम् । तत्र सन्निकर्षत्वेनैव तदपेक्षणाल्लौकिकसन्निकर्षत्वेन तदपेक्षणात् । तत्र सन्निकर्षत्व-स्यानुगतस्याभावान्न तथा कारणता । तथा सत्यसिद्धसन्निकर्षकल्पनानुपपत्तेः ।

नाप्यभावज्ञानत्वादधिकरणसन्देहेऽपेक्षितमिति वाच्यम् । तद्धेतुत्वेऽपि मानाभावात् । भावेऽपि वा लौकिकप्रत्यक्ष एव तथा । अन्यथाऽभाववदिति सामान्यज्ञाने व्यभिचारात् । नापि सन्देहे धर्मिनिय-मार्थं तज्ज्ञानापेक्षा । अवश्यतद्धीसामग्र्यैवोपपत्तेः । नापि तत्कोटिसहचरितानेकधर्मवद्धर्मिज्ञान-तत्कोट्युत्कटसन्देहे हेतुत्वात्सामान्यत एव तस्य हेतुत्वमिति वाच्यम् । उत्कटत्वं हि न जातिः । अव्याप्यवृत्तित्वात् । चाक्षुषादिना सङ्करापत्तेश्च । किन्तु तादृशधर्मविशिष्टतत्कोटिविषयत्वम् । तच्च तादृशधर्मभानसामग्र्यैवान्यथोपपन्नं न सामग्र्यन्तरकल्पनम् । नन्वेवमपि सन्देहोऽनुपपन्नः । प्राथमिकानुव्यवसायपूर्वं तन्निश्चयाभावेऽपि ज्ञानग्राहकसामग्रीरूपप्रामाण्यग्राहकसामग्र्या एव प्रतिबन्धकत्वात् । यज्ज्ञानं यत्र प्रतिबन्धकं तत्सामग्र्यपि तत्र प्रतिबन्धिकेति नियमात् । अन्यथा पुरुषत्वव्याप्यदर्शनलक्षणे तत्सन्देहापत्तिरिति चेन्न । दोषेण प्रतिबन्धाद्घटत्वादिसन्देहवदुपपत्तेः । एतेनाधर्मधीहेतुत्वे सत्यामपि सामग्र्यां दोषेण कदाचिद् घटत्वादिग्रहप्रतिबन्धात्तत्सन्देहवदत्रापि दोषेण प्रतिबन्धात्तदग्रहे ज्ञानधर्मिमात्रज्ञानात्सन्देहोत्पत्तिर्व्याख्याता । न हि कदाचिद् घटसन्देह-दर्शनाद्व्यक्तिभानसामग्री न जातिग्राहिका । नन्वत्र सामग्र्येव नास्तीत्येव लाघवात्कल्प्यम् । न तु कल्पयित्वा दोषस्य प्रतिबन्धकत्वं गौरवात् । तथा हि । सुरभिचन्दनमित्यादौ ज्ञानोपनीतस्य

स्वातन्त्र्येण वैशिष्ट्यं गृह्यते । न तु घटत्वेन जानामीत्यादौ । तेन यत्रोपनायकं ज्ञानं फलीभूतं तत्र न स्वातन्त्र्येण स्ववैशिष्ट्यं ग्राहयेत् । अत्र तु तथेति कल्प्यत इति कुतोऽनुव्यवसायेन प्रामाण्यशङ्केति । अत्र ब्रूमः । किमेतावता व्यवसायग्रहे सामग्री प्रतिबन्धिकाऽभिमता । अथवा गृह्यमाणज्ञानेनोपनायकताऽभिमता । नाद्यः । काव्यमूलभूतोपनयस्थले गन्धवति पृथिवीत्वोपनयनानन्तरमित्याद्युक्त-प्रामाण्यग्रहस्थले चोपनायकज्ञानाभावेन व्यभिचारात् । नान्त्यः । लाघवात्स्वविषयकसविकल्पकत्वे-नोपनायकताकल्पनात् । अग्रे संशयोपपादकदोषस्यैव कल्पनौचित्यात् । अन्यथा वह्नेरपि दशाविशेष-विशिष्टत्वादिना कारणत्वे प्रतिबन्धकमात्रोच्छेदापत्तेः । जातेर्व्यक्तिग्राहकग्राह्यतानुपपत्तेश्च । तस्मान्न ज्ञप्तावपि प्रमाणस्य परतस्त्वमिति । अस्वरसं नैयायिका इत्यनेनोद्भाव्य मतान्तरमाह ॥ **प्रामाण्यं स्वत इति** । अयमाशयः । उक्तरीत्योभयोर्न स्वतस्त्वमिति विशेषसामग्र्योपपत्तौ नोभयत्रापि तत्कल्पनं गौरवात् । तथा चापरमौत्सर्गिकज्ञानस्य सामग्रीप्रयोज्यमेवोपपादकं विनेति स्थिते किं तथेति विचारे लाघवात्प्रमात्वमेव तथाऽन्वयत्वप्रमात्वं गौरवात् । न च विशेषसामग्र्यवयवे लाघवात्प्रमात्वे कल्प्यतामिति वैपरीत्यापत्तिरिति वाच्यम् । ज्ञानसामान्यसामग्र्यनिर्वाह्य एव विशेषसामग्र्याः कल्पनीयत्वेनौत्सर्गिककल्पनस्यैव प्राथमिकत्वात् । तत्रैव लाघवानुसरणाद्यपवादकं विना ज्ञानसामग्री प्रमामेव जनयति । दोषेण त्वपवादकेन प्रमाशक्तिनिरोधदोषसाहित्येनाप्रमाम् । अत एव प्रमात्वस्य सामान्यसामग्रीप्रयोज्यत्वेन प्रमाऽपि स्यात् । अन्यथा ज्ञानमपि न स्यादित्यदूषणम् । प्रमाभ्रम-शक्त्योर्भेदात् । अप्रमास्थले प्रमाशक्तिनिरोधादिति । न चैवं दोषस्य प्रमाशक्तिनिरोधमात्र-प्रयोजकत्वान्नाप्रमासामग्रीनिवेश इति कथमप्रमापर इति वाच्यम् । किमेतावता प्रामाण्ये विशेषसामग्र्येव माऽस्त्वित्यभिमतं प्रमाशक्त्यभाव एव वा तथेति । नाद्यः । प्रमायामपि तदापत्तेः । न द्वितीयः । दोषाधीनशक्त्यभावापेक्षया दोषस्यैव लाघवात् । प्रथमोपस्थापितत्वाच्च । भावस्याकारणत्वाच्च । न च परोक्तरीत्याऽसंसर्गग्रहादिघटितसामग्र्यैव प्रमात्ववदप्रमात्वस्याप्य-न्यथोपपत्तेः । घटे सर्वसामग्रीसत्त्वेऽपि घटत्वप्रमानुत्पत्तेर्दोषावश्यकत्वात् । न चैवमघटे प्रमानुत्पत्त्या गुणोऽप्यावश्यकः । तत्र प्रमाशक्तिनिरोधादिति नाप्रमात्वप्रतिबन्ध्यवाकश इत्याकल्पनीयं सुहृदयैः । नन्वेतावदाचार्यमतसाधारणमित्यलं विशेषोपन्यासेनेत्याशङ्क्य ज्ञप्तिस्वतस्त्वे वैलक्षण्यात्पृथगुपन्यास इत्याशयेनाह ॥ **अङ्गीकुर्वाणा अपीति** ॥ **ज्ञातताविशेषेणेति** । यावज्ज्ञानग्राहकग्राह्यत्वमेव ज्ञप्ति-स्वतस्त्वम् । न तु ज्ञानानुव्यवसायगम्यत्वम् । ज्ञानातीन्द्रियत्वादिति भावः । यद्यपि ज्ञातताविशेषः प्रमितत्वमवान्तरवैचित्र्यं प्रमात्वनिश्चयपूर्वं दुर्ज्ञानमिति । कथं स प्रामाण्यानुमापकः । अन्यथा प्रमितत्वेनाप्रमात्वस्यापि स्वतो वेदनापत्तेः । तथाऽपि विशेषो घटत्वप्रकारकत्वादिः । तथा चाहं

घटत्वप्रकारकज्ञानवान् । तत्प्रकारकज्ञाततावत्त्वादित्येवं ज्ञानानुमितौ व्यवसायोपनीतघटविशेष्यकमपि भासते । ज्ञातातात्वस्य तद्विषयविषयकत्वनियमात् । न च प्रत्यक्ष एव तथा । मन्मते प्रत्यक्षाभावेन श्यामाभिषिक्तानुमितावेव विद्यमानसमानाधिकरणज्ञानत्वेन तन्नियमकल्पनात् । पुरोवर्तिनं घटत्वेन जानामिति ज्ञानज्ञानस्य फलस्य सर्वसिद्धत्वेन तदुपास्य सर्वैरेवमेव वाच्यत्वात् । अत एवाप्रमाऽपि प्रमेत्येव गृह्यते । तथाऽयं पटत्वप्रकारकधीविशेष्यः । तादृशज्ञातताश्रयत्वादित्येवं व्यापकतावच्छेदकत्वादिनैव विशेष्यत्वप्रकारकभानसम्भवान्नानुमितावुपनीतभानकल्पनं युक्तम् । सम्बन्धितावच्छेदकवत्तयैवेत्यादिनियमस्यापि प्रत्यक्षपरत्वात् । अन्यथा ज्ञानादिपदजन्यज्ञानाज्ञाने व्यभिचारादिति न तद्बलेनापि धर्मधर्मिवैशिष्ट्यज्ञानम् । घटत्वप्रकारकज्ञाततावत्त्वाद्वेत्यनुमितावप्यनुभवसिद्धतदाकारतारक्षार्थमनुमितौ लाघवोपनीतस्यैव व्यवसायोपनीतस्यापि विषयता कल्प्या । अप्रामाण्ये तु नेयं सामग्री व्यवसायानुपनेयत्वादित्याशयेनाह ॥ **अप्रामाण्यं त्विति** । ननु ज्ञानमतीन्द्रियं जानामीति ज्ञाने लिङ्गपरामर्शस्य कदाऽप्यनपेक्षणात् । अन्यथा घटादावपि तथापत्तेः । तथाऽपि ज्ञातताख्यं पदान्तरमस्ति । यल्लिङ्गं ज्ञानव्यवसायज्ञातताविशिष्टव्यवहारवत्स्वरूपसम्बन्धेनैवोपपत्तेः । अनागतादिविषये तस्यावश्यकत्वाच्च । न च तथाऽपि घटत्वप्रकारकोच्छेदादिकमेव हेतुः स्यात् । परतस्त्वादिसाधारण्यात् । अत एव घटोऽयं घटत्वप्रकारकज्ञानविशेष्यः । तादृशज्ञातताश्रयत्वादित्यादि स्वत एवानुमानमपास्तम् । न्यायमतसाधारण्यात् । न च तन्मते विशेषणधियो हेतुत्वात् । न यावज्ज्ञानग्राहकग्राह्यत्वं स्वतस्त्वं विवादानन्तरत्वाद्युक्तेर्मतान्तरमाह ॥ **स्वप्रकाशेति** । अयमाशयः । ज्ञानवत्त्वेनैतज्ज्ञानावश्यकत्वे लाघवादग्राह्यज्ञानात्मकमेव तदा क्रियते । ज्ञानान्तरगम्यत्वेऽनवस्थापत्तेरिति सर्वज्ञानमिदमहं जानामीत्याकारम् । साध्याप्रसिद्ध्या प्रथमानुमित्यर्थप्राक्तनसंस्कारानुसरणापत्तेश्च । तत्र च प्रामाण्यघटकयावदंशभावान्न प्रामाण्यग्रहाप्यर्थमन्यापेक्षा । उत्पत्तिस्वतस्त्वं तु पूर्ववदेवेति नोक्तम् ॥ **अप्रामाण्यं त्विति** । न चैवमप्रामाण्यं दोषादिति सिद्धान्तविरोधः । विसंवादिव्यवहारस्य तदर्थत्वादिति भावः । ननु लौकिकज्ञानं स्वप्रकाशं स्वविषयताप्रयोजकस्वसन्निकर्षाद्यजन्यत्वात् । अन्यथाऽतिप्रसङ्गात् । न च वेद्यत्वेऽनस्था । अविरललग्नज्ञानज्ञानधारानभ्युपगमात् । कदाचित्केनचित्स्वमतान्तर्भाव्यापि सर्वग्रहणसम्भवादित्यत्र प्राभाकरा इत्यनुशयमुद्भाव्य पारमार्थिकं स्वमतमाह ॥ **इन्द्रियमात्रेणेति** । अत्र सर्वाऽपि भेदवासना भेदमतव्युत्पादनावसरे उक्ता । ज्ञप्तौ तु विशेषमाह ॥ **तथा ज्ञानमिति ॥ साक्षिणैवेति** । इदमात्राकूतम् । लौकिके ज्ञानं न स्वप्रकाशं नाप्यनुमेयमित्युक्तम् । नापि मानसव्यवसायगम्यम् । अनवस्थापत्तेः । न च सामान्यप्रत्यासत्त्या शब्दादिना वा कदाचित्सत्त्वे गोचरज्ञानसम्भवान्नैवमिति वाच्यम् । सामान्य-

प्रकारकज्ञानस्य वैशिष्ट्याज्ञानेऽपि स्वतन्त्रप्रमात्वे शृङ्गत्वादिसामान्येज्ञानस्य शशशृङ्गादिप्रमाणत्वापत्तेः। विशेषप्रमाणावतारावश्यकत्वात्। तस्मान्नित्येन साक्षिणैव सर्वज्ञानग्रहणमिति वाच्यम्। स च साक्षी ग्राह्यज्ञानोपनीतविषयावच्छिन्नं तदगोचरयति। अन्यथाऽतिप्रसङ्गादिति तदुपनीतत्वाविशेषाद्विशेष्यविशेषण इव तदुभयवैशेष्यमपि गोचरयतीति मीमांसकमत इव स्वतः सर्वत्र प्रमात्वधीः। अप्रामाण्यघटकस्तु विषयो न व्यवसायोपनीत इति साक्षिवेद्य इति मतान्तरापेक्षत्वात्परतो वेद्यमुच्यते। नन्वनित्यं ज्ञानविषयताकारणं नियम्येति भवति। तत्र व्यवसायोपनयानुपनयाभ्यां विशेषः। नित्यज्ञानविषयता तु न तथा। किन्तु स्वाभाविकीति विषयसत्तामात्रमपेक्षत इत्यप्रमायामप्रमात्वमपि गृह्णीयादिति चेन्मैवम्। ज्ञानसामग्रीत्वाभिमतस्य नित्यज्ञानसम्बन्धरूपत्वात्। अन्यथा सर्वदा सर्वव्यवहारप्रसङ्गात्। ननु साक्षिशब्देन किमात्मसमवेतं ज्ञानमुच्यते। उतात्मैव। नाद्यः। अस्मदादीनां तादृशज्ञाने मानाभावात्। व्यवहारस्य लौकिकज्ञानाधीनत्वात्। नान्त्यः। आत्मनो ज्ञानरूपतायां मानाभावात्। जानाम्यहं न तु ज्ञानमेवाहमिति सर्वेषामबाधितानुभवात्। न च ज्ञानव्यवहारस्योक्तदोषैः प्रकारान्तरेणासम्भवात्तदर्थं स्वप्रकाशज्ञानात्मकत्वमात्मन इति वाच्यम्। तथ सति ग्राह्यज्ञानानामेवान्यथाऽनुपपत्तिसमाधाने स्वप्रकाशताकल्पनौचित्यात्। इति उच्यते। आत्मनः कदाऽपि संशयविपर्ययागोचरत्वात्स्वत्प्रकाशज्ञानरूपत्वं वाच्यम्। अनित्यज्ञानान्तरवेद्यत्वे तदभावे संशयाद्यपत्तेः। न च सुखादिन्यायस्तत्रापि साक्षिसिद्धमेव। संशयविरोधित्वात्। घटादिव्यवहारस्तु न साक्षिमात्रादिति तत्र संशयः। न च सुखादिवद्वेद्यत्वे न संशयादिविषयत्वम्। जीवात्मनो नित्यत्वाज्ज्ञानाधारत्वाच्च तदनुपपत्तेः। किञ्च श्रुतिरप्यत्र मानम्। यद्वैतं न पश्यति पश्यन्नेव तं पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुत्या विशेषविज्ञानाभावेऽपि नित्यस्वरूपविज्ञानावगतेः। विज्ञानमानन्दं ब्रह्मेति। अयं पुरुषः स्वयंज्योतिरिरिति च श्रुतिरित्यत आह॥

**अप्रमाणज्ञानस्येति**। मात्रपदेन प्रामाण्यव्यवच्छेदः। यद्यपीदं परमात्मविषयं तथाऽप्यात्मनः सामान्यतस्तत्त्वे किं मानमित्यत्रैतच्छ्रुतिवाक्यमुदाहृतमिति। आत्ममात्रस्य तत्त्वे भाष्यादौ श्रुतिरवगन्तव्या। न चात्मनो ज्ञानसाधनत्वेन गौणम्। तत्र ज्योतिष्टं ज्योतिः साधनत्वस्य सर्वदा सत्त्वेनात्रेति विशेषणवैय्यर्थ्यात्। गौणत्वव्यावर्तकस्वयंशब्दविरोधाच्च। नापि परमार्थपरेयं श्रुतिः। अत्रेत्यनेन परामृष्टावस्थायास्तत्रासम्भवात्। अयमिति प्रत्यक्षनिर्देशानुपपत्तेश्च। घटं जानामीत्यादिप्रत्ययस्तु साक्षिरूपान्तःकरणविषयकः। नित्यं साक्षिसत्वेऽपि कदाचिद्घटाद्यव्यवहारेण तस्यावश्यकत्वात्। नन्वेवं साक्षि एवानुव्यवसायरूपस्य प्रामाण्यग्राहकत्वे तस्य भ्रमत्वासम्भवादप्रमायां प्रमात्वग्रहानुपपत्तिः। अत एव तत्र मनोवृत्त्यन्तरस्यैव ग्राहकत्वं न तु साक्षिण इत्यभ्युपगमात्। न चैवं प्रमाया-

मपि तदेवास्तु किमर्धजरतीयन्यायेनेति वाच्यम् । उक्तन्यायेन साक्षिण आवश्यकत्वात् । ज्ञाने प्रामाण्ये वा ज्ञानधाराभ्युपगमेऽनवस्थापत्तेरित्याशयः । नन्वेवं प्रमात्ववदप्रमात्वमपि साक्षिवेद्यमेवास्त्वित्यत आह ॥ **तदप्रामाण्यं त्विति** । अत्र च वासना प्रागुक्ता । अत एव तत्र कदाचित्सन्देहेऽपि साक्षिवेद्यत्वे तु सुखादाविव स न स्यादिति भावः । नन्वेवं साक्षिवेद्यतया प्रमात्वे सन्देहो न स्यादिति चेन्न । दोषाभावरूपग्राहकसामग्र्याः साक्षिसम्बन्धत्वाभिधानेन सर्वसामञ्जस्यात् । यद्यप्यन्तरर्थे ज्ञानसुखादौ न साक्षिणः प्रत्यासत्त्यन्तरापेक्षा । तथाऽपि बहिरर्थघटितत्वात्प्रामाण्ये तथात्वेऽपि न काऽप्यनुपपत्तिरिति ।

**वेदे.**— नन्वेषां सप्रमाणानां प्रामाण्यस्याप्रमाणानामप्रामाण्यस्य चोत्पत्तिज्ञप्त्योर्निरूपयितुमशक्यत्वेन निश्चये एवं भूतैरित्यादिना वक्ष्यमाणप्रमाणाभिन्नतया निश्चितप्रामाण्यकप्रमाणसाध्यो नित्यानित्यत्वादिनिश्चयोऽनुपपन्न इति तटस्थः शङ्कते ॥ **नन्विति** । केनोत्पद्यत इति । न केनापीत्यर्थः । एवमग्रेऽपि । न तावत्प्रामाण्याप्रामाण्ये ज्ञानगते तत्कारणमात्रजन्ये । तर्हि सर्वत्रापि ज्ञाने तदुभयापत्तेः । नाप्यतिरिक्तकारणजन्ये । तदनिरूपणात् । प्रमामात्रे अनुगतस्यैकस्य गुणस्याप्रमामात्रेऽनुगतस्यैकस्य दोषस्य चाभावाच्चेति भावः ॥ **केन वेति** । न ज्ञानग्रहणमात्रेण । तदुभयसंशयानुपपत्तेः । नापि तद्ग्राहकातिरिक्तेनानवस्थानादिति भावः । अत्र समाधानं वक्तुं तावदन्यसमाधानानि तेषां हेयताज्ञापनायानुवदति ॥ **तत्रेत्यादिना** ॥ **स्वत एवेति** । उत्पत्तौ ज्ञप्तौ चेत्यर्थः । उत्पत्तौ स्वतस्त्वं निर्वक्ति ॥ **ज्ञानजनकेति** । प्रमातदितरसाधारणधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयातिरिक्तानपेक्षत्वमित्यर्थः । अन्यथा गुणदोषयोरपि ज्ञानजनकत्वेन परतस्त्वपक्षसाधारण्यापत्तेरिति ध्येयम् । ज्ञप्तौ तन्निर्वक्ति ॥ **ज्ञानज्ञापकेति** । अत्र ज्ञानज्ञापकपदेन ग्राह्यप्रामाण्याश्रयविषयकाप्रतिबद्धानुव्यवसायो विवक्षितः । तदतिरिक्तं प्रामाण्यानुमित्यादिरूपं प्रतिबद्धानुव्यवसायरूपं च तदनपेक्षत्वं तदग्राह्यमिति नञ्द्वयेनोक्तानुव्यवसायत्वं लक्ष्यते । तथा चाप्रतिबद्धयावत्स्वाश्रयग्राहकानुव्यवसायग्राह्येव पर्यवस्यति । नञ्द्वयगर्भतयोक्तिस्तूपपादनाय । यथाश्रुते प्रामाण्यानुमितेरपि ज्ञानग्राहकत्वेन तदतिरिक्तानपेक्षत्वस्य न्यायमतसाधारण्येन सिद्धसाधनतापत्तेरिति ध्येयम् । अत्र ग्राह्यप्रामाण्यस्याप्रामाण्यशङ्कादिना प्रतिबद्धानुव्यवसायग्राह्यत्वाभावेन बाधवारणायाप्रतिबद्धेति विशेषणम् । न्यायमतेऽप्यनुव्यवसायविशेषग्राह्यत्वं प्रामाण्यस्याप्यस्तीति सिद्धसाधनतावारणाय यावदित्यनुव्यवसायविशेषणम् । ग्राह्यप्रामाण्ये यावदित्यनुव्यवसायग्राह्यत्वस्य बाधितत्वात् । स्वाश्रयग्राहकेति स्वाश्रयग्राहकज्ञानमात्रविवक्षायां ज्ञानं गुणो घटज्ञानमित्यादिशब्दजन्यस्वाश्रयविषयकज्ञानग्राह्यत्वाभावेन पुनर्बाध एव ततोऽनुव्यवसाय इति । अनुव्यवसायशब्देन च प्रत्यक्षमेव

विवक्षितमतो न कोऽपि दोष इति । अत्रेदमस्वरसबीजम् । प्रामाण्याप्रामाण्ययोर्ज्ञानकारणमात्रजन्यत्वे एकत्रैव ज्ञाने तयोरुत्पत्त्या तद्विषये वैरूप्यं स्यात् । न च यदा ज्ञानकारणं गुणोपेतं तदा तत्र प्रामाण्यमेवोत्पद्यते । अप्रामाण्यजननशक्तेर्गुणेन प्रतिबन्धात् । एवं यदा दोषोपेतं तदाऽप्रामाण्यमेव दोषेण प्रामाण्यजननशक्तिप्रतिबन्धादिति वाच्यम् । ज्ञाने उभयाकारयोरिव करणेऽपि तदुभयाकारजनन शक्त्योर्विरुद्धत्वेन युगपदङ्गीकर्तुमुचितत्वात् । वेदेऽप्रामाण्यजननशक्तिप्रतिबन्धकगुणनिरूपणाच्च । एवं तयोर्ज्ञानग्राहकमात्रग्राह्यत्वे एकत्रैव ज्ञाने उभयग्रहापत्त्या न कुत्रापि निःशङ्कव्यवहारादिकं स्यात् । तदुभयसंशयश्च क्वापि न स्यादित्यादिकं द्रष्टव्यम् । नैयायिकादय इत्यादिपदेन वैशेषिकाणां ग्रहणम् । उत्पत्तौ परतस्त्वं निर्वक्ति ॥ **ज्ञानेति** । प्रमाप्रमासाधारणधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयातिरिक्तकारणजन्यत्वमित्यर्थः । अतः स्वतस्त्वनयेऽपि प्रत्यक्षरूपज्ञानप्रामाण्यस्याप्यनुमितिरूपज्ञानजनकलिङ्गज्ञानातिरिक्तचक्षुर्जन्यत्वेन सिद्धसाधनतेति शङ्कानवकाशः । ज्ञप्तौ तन्निर्वक्ति ॥ **ज्ञानेति** । उक्तानुव्यवसायातिरिक्तप्रमाणेनैव ग्राह्यत्वमित्यर्थः । अन्यथा प्रामाण्यस्य ज्ञानग्राहकानुव्यवसायातिरिक्तप्रामाण्यानुमित्यादिग्राह्यत्वं स्वतस्त्वनयेऽपीति सिद्धसाधनता स्यादिति द्रष्टव्यम् । उत्पत्तौ परतस्त्वमुपपादयति ॥ **तत्रेति** । ज्ञप्तौ तदुपपादयति ॥ **एवमिति** । अत्र प्रामाण्यस्योत्पत्तिज्ञप्त्योः परतस्त्वं युक्तम् । प्रामाण्यस्य चोत्पत्तौ परतस्त्वं तावन्न युक्तम् । अनित्यप्रमामात्रेऽनुगतगुणाभावात् । न च प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षस्यानुमितिप्रमायां सल्लिङ्गपरामर्शस्य शब्दप्रमायामाप्तोक्तत्वस्य गुणत्वं सम्भवतीति वाच्यम् । पीतः शङ्ख इति भ्रमस्थले भूयोऽवयवेन्द्रियसन्निकर्षेऽपि श्वैत्यप्रमानुदयात् । दोषस्य प्रतिबन्धकत्वे चावश्यकत्वाद्दोषाभावसहकृतेन्द्रियादेव प्रमाऽस्तु । गन्धप्रागभावावच्छिन्ने घटे गन्धवान्पृथिवीत्वादित्यत्र सल्लिङ्गपरामर्शसत्त्वेऽप्यनुमितिप्रमाभावेन न तस्यापि गुणत्वम् । बाधस्य तत्र प्रतिबन्धकत्वे च दोषाभावसहकृतानुमितिसामान्यसामग्रीत एवानुमितिप्रमाऽस्तु । किमसाधारणगुणेन । बाधाभावस्य च विषयसत्त्वा पर्यवसन्नस्य प्रमामात्रसाधारण्येनानुमिति प्रमामात्रे गुणत्वासम्भवात् । संवादिशुकबालादिवाक्यजप्रमायामाप्तोक्तत्वगुणाभावेना प्रमात्वापातात् । ईश्वरसिद्धेश्चप्रमाया गुणजन्यसिद्ध्युत्तरकालीनत्वेन नेश्वररूपात्तमादाय तत्रोक्तदोषपरिहारः । प्रकारन्तरेणेश्वरसिद्धावपि तज्ज्ञानादेरास्यन्तर्गतस्य जन्यमात्र साधारण्येन शब्दः प्रमायामसाधारण्ये मानाभावाच्च । शाब्दप्रमायां योग्यतैव गुण इति चेत् । अर्थरूपयोग्यताया प्रमामात्रसाधारण्यादसारण्येन योग्यतानिर्वचनेऽपि मदिष्टवेदापौरुषेयत्वाविरोधित्वेन त्वदिष्टेश्वरसिद्ध्यननुगुणन्वेन चैवं विधगुणजन्यत्वस्य साधनेऽर्थान्तरत्वापातात् । तस्मात्प्रामाण्यस्य नोत्पत्तौ परतस्त्वम् । नापि ज्ञप्तौ । संवादादिरूपहेत्वभावेऽपि सुखादिज्ञानप्रामाण्यग्रहणात् । बाह्यार्थज्ञानप्रामाण्यग्रहणेऽपि संवादादेरप्रामाण्यशङ्कानिरासोपक्षीणत्वेन न हेतुत्वम् । संवादादिनाऽप्रामाण्यशङ्कापगमेऽप्रामाण्येऽनुव्यवसायग्राह्यत्वस्यानुभवसिद्धत्वात् । अन्यथाऽनवस्थानात् ।

प्रतिबद्धानुव्यवसायेन प्रामाण्यग्रहणेन संशयोपपत्तेरप्रतिबद्धतद्ग्राह्यत्वस्यैव स्वतस्त्वशब्दार्थत्वेनोक्तत्वादित्यादिबाधकमाविष्करोति । नैयायिका इत्यनेन बौद्धपक्षेऽप्यप्रामाण्यस्य स्वतस्त्वे सर्वत्राविश्वासेन निःशङ्कव्यवहारविलोपः प्रामाण्यपरतस्त्वे चानवस्थेति दूषणं स्फुटमेवेति नोक्तम् ॥ **अङ्गीकुर्वाणा अपीति** । अनेनायमेव स्वपक्षस्तदाऽयमुपपादनमेव न सम्मतमिति सूचयति ॥ **ज्ञातताविशेषणेनेति** । प्रमाहिततज्ज्ञानमेवेत्यर्थः । अत्रापि ज्ञानातिरिक्तं ज्ञातताया अप्रामाणिकत्वं प्रामाण्यसिद्धौ प्रमाहिततज्ज्ञानतासिद्धिस्तत्सिद्धौ चासिद्धिरित्यन्योन्याश्रयत्वं चेत्यादि बाधकं च द्रष्टव्यम् । प्राभाकरमते तु वृत्तिज्ञानस्य जडत्वेन स्वप्रकाशत्वानुपपत्तिः । अप्रामाण्यस्य बाधबोध्यस्यापलापायोगश्चेत्यरुचिर्द्रष्टव्या। पूर्वं सूचिते स्वमते तावत्प्रामाण्यस्योत्पत्तौ स्वतस्त्वमुपपादयति ॥ **इन्द्रियादीति** । अकिञ्चित्करा उक्तरीत्या व्यभिचारादिति भावः । अप्रामाण्यस्योत्पत्तौ परतस्त्वं स्वयमुपपादयति ॥ **अप्रामाण्यादिति** । अव्यभिचारादिति भावः । प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वं स्वयमुपपादयति ॥ **तथेति** । निरुक्तानुव्यवसाय एवास्मन्मते साक्षिरूप इति भावः ॥ **साक्षिणैवेति** । साक्षि ज्ञायत एवेत्यर्थः। तेनानुमित्यादिनाऽपि प्रामाण्यग्रहणेन यथाश्रुतमयुक्तमिति शङ्कानवकाशः । अप्रामाण्यस्य ज्ञप्तौ परतस्त्वमुपपादयति ॥ **अप्रामाण्येति** । अनुमेयमिति तु सम्भवादिनेति शेषः । इदं काचित्क्वाभिप्रायेण । वस्तुतस्तु विसंवादिसापेक्षसाक्षिविषयत्वमप्रामाण्यस्य । न चैवं स्वतस्त्वापत्तिः । साक्षिणाऽप्रामाण्यग्रहणनियमेन विसंवादापेक्षणात्तस्य परतस्त्वोपपत्तेः । न तु सर्वत्रानुमेयमेवाप्रामाण्यम् । भ्रमत्वमभ्रमत्वं च यदैवानुभवोपगममित्याचार्योक्तेः । विसंवादिसापेक्षसाक्षिवेद्यत्वस्य टीकाकारैरेवात्र कथितत्वाच्च ॥ **आचार्या इति** । प्रामाण्यं च स्वत एव परतोऽप्रामाण्यमित्यादि-तदुक्तिरिति भावः ।

**अभि.**— नन्वेतेषां प्रमाणमिति ज्ञानानां याथार्थ्यलक्षणं प्रामाण्यं केनोत्पद्यते केन वा ज्ञायते । अप्रमाणानां ज्ञानानामयथार्थत्वं केनोत्पद्यते केन वा ज्ञायत इत्यर्थः ॥ **उच्यत इति** । हेयताज्ञापनाय परमतमनूद्योपादानताज्ञापनायाचार्यमतानुवादेन समाधानमुच्यत इत्यर्थः । एतेनोच्यत इति प्रतिज्ञाय तन्मतानुवादो न युक्त इति परास्तम् ॥ **तत्र ज्ञानानामिति** । भ्रान्तवाक्यादिजन्यज्ञानाप्रमाणस्य स्वतस्त्वसम्भवेऽपि न वेदादिजन्यविभ्रमाप्रमाणस्य स्वतस्त्वं सम्भवति । वेदानामप्रामाण्यप्रसङ्गात् । ततश्च साङ्ख्यमतमयुक्तमिति भावः ॥ **उभयं परत एवेति** । इन्द्रियादीनामप्रामाण्यजननशक्तेरिव प्रामाण्यजननशक्तेरपि स्वाभाविकत्वाभावप्रसङ्गात् । इन्द्रियादिकं प्रमाणमेव नाप्रमाणमिति न स्यादिति तन्मतमयुक्तमिति भावः ॥ **अप्रामाण्यं स्वत इति बौद्धा इति** । तथा सति प्रत्यक्षानुमानयोरप्रामाण्यस्यैवोचितत्वेन प्रामाण्याङ्गीकारायोगात् तन्मतमयुक्तमिति भावः । ज्ञातताविशेषेणानुमेयमिति ज्ञानव्यतिरिक्तायां ज्ञाततायां प्रमाणाभावेन तन्मतमयुक्तमिति भावः । **अप्रामाण्यं तु नास्त्येवेति** । अप्रामाण्यस्य स्वानुभवसिद्धत्वात्तन्मतमप्रामाणिकमेवेति भावः ॥ **इन्द्रियादिमात्रेणैवेति** ॥ **ज्ञानमिति** । ज्ञानं गृह्णन्साक्षी प्रमाणमेव निर्धारयतीति भावः । नन्विदं सुधाविरुद्धम् । तथा हि ।

अत्रैषा प्रक्रिया सर्वमपि ज्ञानं साक्षी गृह्णाति । यदाऽस्य बाधो भविष्यति तदैतदप्रमाणं न चेत्प्रमाणमेवेति तत्प्रामाण्यमपि गृह्णाति । सति प्रयोजने प्रामाण्यादिजिज्ञासायां परीक्षामनुसृत्य प्रामाण्यं व्यवस्थापयति । अलाभे तु परीक्षाया विशेषावधारणात्तदुदास्त इति परीक्षारूपज्ञानस्य संशयात्मकत्वाभिधानादिति चेन्नैवम् । सुधार्थापरिज्ञानात् । तथा हि । इयमत्र सुधावाक्ययोजना । सर्वमपि ज्ञानमिति प्रमाणमप्रमाणं चोभयविधं ज्ञानं साक्षी गृह्णाति । इयांस्तु विशेषः । यद्यस्य गृह्यमाणस्य ज्ञानस्य फलान्तरे बाधो भविष्यति तदा तज्ज्ञानमप्रमाणमिति हेतोर्ज्ञानमित्येव गृह्णाति । न तु प्रमाणमिति विषयाभावात् । न हि चक्षुर्घटग्रहणसमर्थमित्येतावता गटाभाववति घटं गृह्णाति । येन साक्षी बाधकज्ञाने प्रामाण्यं गृह्णीयात् । न चेद्गृह्यमाणस्य बाधो भविता तर्हि प्रमाणमेकं ज्ञानमिति तत्प्रामाण्यं गृह्णातीत्यर्थः । अवश्यं चैतदेवं विज्ञेयम् । अस्य वाक्यस्य साक्ष्याकारप्रदर्शनत्वेन चेत्प्रमाणमेवेति गृह्णातीत्येतावता पूर्णत्वेन प्रामाण्यमपीति पदयोर्वैयर्थ्यापातात् । भाविबाधकशून्यं प्रमाणं सर्वविज्ञानं झटिति नियमेन प्रामाण्यतया गृह्णाति । किन्तु क्वचिद्विशेषोऽप्यस्तीत्याह ॥ **सति प्रयोजन इति ।** प्रमाणभूतज्ञानग्रहणसमये दोषवशात्प्रामाण्यग्रहणशक्तौ प्रतिबद्धायां ज्ञानमात्रं गृहीत्वा सति प्रयोजने परीक्षामनुसृत्य प्रामाण्यं व्यवस्थापयति । न चेदुदास्त इत्यर्थ इति । तदुक्तं तत्त्वनिर्णयटीकायाम् । साक्ष्येव ज्ञानं तत्प्रामाण्यं च विषयीकर्तुं क्षमः । किन्तु कारणान्तरोपनिपातजेन मानसापराधेन प्रतिबद्धो ज्ञानमात्रं गृहीत्वा प्रामाण्यग्रहणस्य नेष्टे । यथा स्वयमेव गतिसमर्थो गजः गोक्षुरकादिना प्रतिबद्धो न चलितुं क्षमते । तत्र युक्त्यनुसन्धानरूपपरीक्षावसरः । सा च बुद्धिदोषमात्रं निरस्यति । तस्मिन्निरस्ते साक्षी स्वमहिम्नैव प्रामाण्यं गोचरयति । यद्गोक्षुरकाद्यपसरणे स्वयमेव गजो गच्छतीति ॥ **तदनुमेयमिति** । उपलक्षणमेतत् । बाधादिसहकार्यवशात्साक्षिणाऽपि गृह्यत इति ग्राह्यम् ।

**आद.—— ॥ ज्ञानज्ञापकातिरिक्तेति ।** ज्ञानविषयकज्ञानजनकातिरिक्तानपेक्षज्ञानविषयत्वमित्यर्थः । यद्यप्यप्रामाण्यस्याप्येतादृशस्वतस्त्वमस्ति । अप्रामाण्यज्ञानस्य नियमेन ज्ञानविषयकत्वेनाप्रामाण्यज्ञानजनकस्य ज्ञानज्ञापकातिरिक्तत्वाभावात् । न चाप्रामाण्यादिपदादप्रामाण्योपस्थितिर्ज्ञानाविषयिणी सम्भवतीति ज्ञानज्ञापकातिरिक्तजन्यज्ञानविषयत्वरूपं स्वतस्त्वं न सम्भवतीति न वाच्यम् । तर्हि प्रामाण्यपदात्प्रामाण्योपस्थितेरपि तादृश्या जनात्प्रामाण्यस्यापि तदनुपपत्तिः । यदि च प्रामाण्यपदार्थघटकतया ज्ञानभानमस्तीत्युच्यते तर्ह्यप्रामाण्येऽपि तथा तथाऽपि ज्ञानज्ञापकातिरिक्तानपेक्षसिद्धिकत्वमित्यर्थः । प्रामाण्यपदादिना प्रामाण्यसिद्धिः प्राथमिकज्ञानेनैव तत्सिद्धेः । तथा च ज्ञानविषयकं यत्प्राथमिकं ज्ञानं तद्विषयत्वं स्वतस्त्वपदार्थो ज्ञानविषयकं प्राथमिकं ज्ञानम् । परमतेऽनुव्यवसायो मानसः । भाट्टमते ज्ञाततालिङ्गकानुमितिः । अस्मन्मते साक्षी तद्विषयत्वमादाय पर्यवसितो भवति । साक्षिणो नित्यत्वेऽपि विशेषबलाज्ज्ञानात्मना व्यक्तिः। तत्र स्वस्यैव प्रयोजनकत्व मित्यादिकं वर्तत एव । जन्यत्वं जनकत्वं तत्साधारणमेव निवेश्यमिति न दोषः । अप्रामाण्यस्य

दोषजन्यत्वादिलिङ्गेनैव सिद्ध्या नोक्तस्वतस्त्वम् । स्वतस्त्वं साक्षिविषयमित्युक्तौ परमतेऽप्रसिद्धिः । साक्षिणोऽङ्गीकारात् । प्रत्यक्षविषयत्वमित्युक्तौ भाट्टमतेऽप्रसिद्धिः । तन्मते ज्ञानस्यातीन्द्रियत्वात् । अतः प्राथमिकज्ञानत्वेन निवेशः । प्राथमिकत्वं च स्वविषयविषयकस्वसमानाधिकरणस्वाव्यवहितोत्तरज्ञानध्वंसाधिकरणकालानुत्पत्तिकत्वम् । तथा च प्रामाण्यस्य स्वतस्त्वं नाम स्वाश्रयविषयकस्वाश्रयसमानाधिकरणस्वाश्रयोत्तरज्ञानध्वंसाधिकरणकालाजन्यस्वाश्रयसमानाधिकरणतदुत्तरतद्विषयकज्ञानविषयत्वमिति । भाट्टमते ज्ञानानुत्पत्त्यर्थं व्याप्तिज्ञानस्यावश्यकत्वात्तदुत्तरकालाजन्यत्वं ज्ञानज्ञानरूपानुमितेर्न सम्भवतीति विशेषणकोटौ ज्ञाने स्वाश्रयविषयकत्वनिवेशः । यद्यपि ज्ञाततासामान्यं ज्ञानजन्यमिति व्याप्तिज्ञानस्य सामान्यरूपेण व्याप्तिविषयकत्वमप्यस्ति । तथाऽपि स्वाश्रयनिष्ठतद्व्यक्तिप्रकारकत्वमित्यर्थकत्वान्न दोषः । केनापि योगेन तवोत्तरत्रैतद्विषयकज्ञानविशेषो भवतीत्युपदेशे कृते सति तेन तज्ज्ञानस्य पूर्वमेव सत्त्वात्तत्प्रामाण्ये बाधवारणाय स्वोत्तरत्वनिवेशः । तत् ज्ञानस्य तत्प्रामाण्याश्रयज्ञानोत्तरत्वाभावेन तद्ध्वंसाधिकरणकालजन्यज्ञानविषयत्वेऽपि बाधाभावात्। केचित्तु । स्वाश्रयविषयकमित्यस्य स्वाश्रयनिष्ठतद्व्यक्तित्वनिष्ठानवच्छिन्नविषयताकत्वमिति वा तद्व्यक्तिं जानामीति व्यवहारजनकमिति वाऽर्थः । एवं चोपदेशादिजन्यज्ञानस्याताद्दशान्न दोष इति नोत्तरत्वं पृथङ्निवेशनीयमित्याहुः । विशेष्यीभूतज्ञाने सामानाधिकरण्यनिवेशान्नेश्वरादिज्ञानमादाय सिद्धसाधनता। तज्ज्ञाने प्रामाण्यभानरूपेष्टसिद्धये स्वाश्रयविषयकत्वनिवेशः । पूर्वोक्तपूर्वजातज्ञानमादाय प्रामाण्यविशेषे सिद्धसाधनतावारणायोत्तरत्वनिवेशः । अवच्छेदकावच्छेदेनानुमितेरुद्देश्यत्वेऽपि तत् प्रामाण्ये उक्तस्वतस्त्वरूपेष्टसिद्धये उत्तरत्वनिवेश इति सर्वं सार्थकम् । वस्तुतस्तु भट्टमतसाधारणस्वतस्त्वनिरुक्तेरनावश्यकत्वाज्ज्ञानविषयकप्रत्यक्षविषयत्वमेव स्वतस्त्वं वाच्यम् । दोषशङ्कया यत्र प्रामाण्यं साक्षी न गृह्णाति तत्र कथमिति चेत् । तत्रापि सामान्यतः प्रामाण्यभानाङ्गीकारात् । न च प्रामाण्ये संशयाद्यनुपपत्तिः । याद्दशज्ञानग्रहणवेलायां यत्र दोषशङ्का तत्र साक्षीयं प्रमेति न विषयीकरोति । किन्तु दोषाजन्यज्ञानसामान्यं प्रमेति सामान्यतः प्रामाण्यं गृह्णाति । इदं च ज्ञानं दोषजन्यत्वज्ञानसहकृतमेवाप्रामाण्यसन्देहादीनां निवर्तकम् । प्रवृत्त्याद्यङ्गं च न केवलमिति तज्ज्ञाने दोषाजन्यत्वज्ञानाभावात्संशयादिः प्रवृत्तिप्रतिबन्धकोऽपि भवति । यदा परीक्षाया दोषाजन्यत्वनिश्चयस्तदा तत्सहितं साक्षिरूपं सामान्यतः प्रामाण्यावगाहिज्ञानं संशयादिकं निवर्तयतीति प्रवृत्तिमप्युत्पादयति । इदमेव सम्मुग्धप्रामाण्यग्रहणमित्युच्यते । अनेनैवाभिप्रायेण तत्त्वनिर्णयादौ दोषशङ्कारूपप्रतिबन्धकाभावे स्वमहिम्नैव साक्षी प्रामाण्यं गृह्णातीत्युक्तम् । यदा दोषजन्यत्वज्ञानं नास्ति तदा कार्याक्षमत्वादगृहीतप्रायमेव । यदा तु तज्ज्ञानं तदा कार्यक्षमत्वाद्गृह्णातीत्युच्यते । तज्ज्ञानं प्रामाण्यमित्यादिव्यवहारोऽपि भवति । न च सर्वत्रैवमेव सम्मुग्धप्रामाण्यमेव गृह्यतामिति शङ्क्यम् । दोषास्फूर्तिदशायां दोषजन्यत्वावच्छेदेन प्रामाण्यग्रहणासम्भवात् । तज्ज्ञानव्यक्तावेव प्रामाण्यं

गृह्णाति। यत्र तत्स्फूर्तिस्तत्र प्रामाण्यग्रहणस्वभावत्वात्साक्षी सम्मुग्धं प्रामाण्यं गृह्णाति । यत्र दोषनिश्चयस्यत्र सहकारिसामर्थ्यादप्रामाण्यग्रहणानुकूला शक्तिरुत्पद्यते । भर्जनेन वेत्रबीजेषु कदलीकाण्डजनानुकूलशक्तिवत् । तथा चेदमप्रमाणमिति गृह्णाति । इत्थं चाज्ञायमानप्रामाण्यं नास्त्येव । किन्त्वप्रामाण्यादिसंशयनिवृत्तिप्रवृत्यादि स्वरूपयोग्यप्रत्यक्षविषयत्वं वर्तत एवेति न कोऽपि दोषः । स्वतस्त्वसाधनेऽनुमितिप्रामाण्यस्य स्वतस्त्वाङ्गीकारात्सिद्धसाधनतेति न शङ्क्यम् । तदतिरिक्तप्रामाण्यानां पक्षीकरणात् । प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वमेवाप्रामाण्यस्य परतस्त्वमेवेत्यत्र साधकान्यत्रोक्तानि बाधकानि चोद्धृतानि ।

(१३) प्र.प.— **करणानां तु ज्ञानजनकत्वशक्तिरेव स्वकारणासादिता प्रामाण्यजनकत्वशक्तिः । अप्रामाण्यजनने त्वन्या शक्तिर्दोषवशादाविर्भवति । ज्ञप्तिस्तु परत एव । इन्द्रियादिस्वरूपस्य यथायथं स्वप्रमाणवेद्यत्वात् । यथार्थज्ञानसाधनत्वस्यानुमानवेद्यत्वादिति । तदेवं भूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिकं निश्चित्य विषयेषु विरक्तस्य शमदमादिसम्पत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवणमनननिदिध्यासनान्यादरनैरन्तर्याभ्यां बहुकालमनुष्ठितवतो भगवत्साक्षात्कारे सत्यत्युद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्टनिवृत्तिविशिष्टानन्दादिस्वरूपाविर्भावलक्षणा मुक्तिर्भवतीति ॥**

**जयतीर्थमुनीन्द्रेण बालबोधाय निर्मिता ।**
**प्रमाणपद्धतिर्भूयात्प्रीत्यै माधवमध्वयोः ॥ १ ॥**

**॥ इति श्रीमज्जयतीर्थपूज्यचरणविरचितप्रमाणपद्धतावागमपरिच्छेदः सम्पूर्णः ॥ ३ ॥**

**जना.**— करणप्रामाण्यस्योत्पत्तौ स्वतस्त्वमुपपादयति ॥ **करणानामिति** ॥ **ज्ञानजनकत्वशक्तिरेवेति** । तथा च ज्ञानजनकत्वशक्तिप्रामाण्यजनकत्वशक्त्योरेकत्वमेव करणप्रामाण्यस्योत्पत्तौ स्वतस्त्वमिति भावः । करणगताप्रामाण्यस्योत्पत्तौ परतस्त्वमुपपादयति ॥ **अप्रामाण्येति** । आविर्भवति चक्षुरादाविति शेषः । ज्ञानजनकत्वशक्त्यप्रामाण्यजनकत्वशक्त्योर्भेद एव करणगताप्रामाण्यस्योत्पत्तौ परतस्त्वमिति भावः। करणप्रामाण्यस्य ज्ञप्तौ परतस्त्वमुपपादयति ॥ **ज्ञप्तिस्त्विति** । करणप्रामाण्यस्येति शेषः । तदेवोपपादयति ॥ **इन्द्रियादीति** ॥ **स्वप्रमाणेति** । यथायथं साक्षिणाऽनुमानेन च स्वप्रमाणेन वेद्यत्वादिति भावः ॥ **अनुमानवेद्यत्वादिति** । इन्द्रियादिग्राहकानुमानाद्यतिरिक्तानुमानवेद्यत्वादित्यर्थः । इदं च प्रामाण्यस्य ज्ञप्तौ परतस्त्वकथनं करणस्य करणग्राहकमात्रग्राह्यत्वरूपं स्वतस्त्वं नेत्याभिप्रेत्य । अत एव सुधायां करणानां तु ज्ञप्तौ स्वतस्त्वं नास्त्येवेत्यादिनाऽत्रोक्तं पक्षमुक्त्वाथवा ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वमिति पक्षान्तरमुक्तम् । उत्पत्तौ स्वतस्त्वं तु करणगताया यथार्थज्ञानजननशक्तेः करणगता या

सहजा ज्ञानजननशक्तिस्तद्वत्सहजत्वं वा तदभिन्नत्वं वा । एतदेवोक्तमधस्तात्करणानां तु ज्ञानजनकत्व-शक्तिरेवेत्यादिना । इत्थं निरूपितानां प्रमाणानां ज्ञानस्य फलमाह ।। **तदेवं भूतैरिति ।** एवं भूतैराभास-विविक्तैरित्यर्थः । अत्र षष्ठ्यन्तैरधिकारिस्वरूपमुक्तम् । श्रवणं शब्दजन्यं ज्ञानम् । मननमुपपत्तिजं ज्ञानम् । निदिध्यासनं निरन्तरचिन्ता । तदुक्तं व्यासतीर्थैः ।

**श्रवणं शब्दजं ज्ञानमुपपत्त्यनुचिन्तनम् ।**
**मतिर्निरन्तरा चिन्ता निदिध्यासनमुच्यत ।।** इति ।

मुक्तिस्वरूपे विवादात्तत्स्वरूपनिरूपणार्थमुक्तम् ।। **अशेषेति ।** इत्यशेषमतिमङ्गलम् ।।

**इति श्रीमद्दक्षिणमधुरश्रीनिवासभट्टोपाध्यायानां शिष्यस्य जनार्दननामिनः कृतौ प्रमाणपद्धतिटिप्पणे जयतीर्थविजयनाम्नि आगमपरिच्छेदः सम्पूर्णः ।। ३ ।।**

**राघ.— ।। स्वकारणेति ।** इन्द्रियादिकारणानां कारणेन या ज्ञानजनना शक्तिरुत्पन्ना सैव तेषां कारणेनासादिता सम्पादिता प्रामाण्यशक्तिरित्यर्थः । अत्र विशेषः करणगताया यथार्थज्ञानजननशक्तेः करणगता करणहेत्वासादिता सहजा या ज्ञानजननशक्तिस्तद्वत्सहजत्वं वा तदभिन्नत्वं वेति तर्कताण्डवोक्तिदिशा ध्येयः । एवं भ्रमस्थले दोषेण प्रामाण्यजननशक्तिप्रतिबन्धेऽपि न ज्ञानानुत्पत्ति-शङ्का । तच्छक्तेरप्रतिबन्धात् । अभेदपक्षे तु प्रामाण्यांश एव प्रतिबन्धो न ज्ञानांश इति फलबलात् कल्प्यमिति शक्तिभेदपक्षे द्वयोः सहजत्वान्न परतस्त्वापत्तिः । अत एवाह ।। **अप्रामाण्यजनने त्वित्यादि ।** तत्र ज्ञानजननाप्रामाण्यजननशक्त्योर्भेदेऽप्यन्यस्याहितत्वेन सहजत्वाभावात्परतस्त्व-मित्यर्थः ।। **यथायथमिति ।** बाह्येन्द्रियस्वरूपं रूपज्ञानादिलिङ्गगम्यम् । मनस्तु साक्षिगम्यम् । लिङ्गशब्दस्वरूपं तु चक्षुः श्रोत्रादिप्रत्यक्षगम्यम् । इन्द्रियलिङ्गशब्दरूपत्रयस्यापि यथार्थज्ञानसाधनत्व-रूपं प्रामाण्यं तु संवादिज्ञानजनकत्वादिलिङ्गेनानुमेयमिति स्वरूपग्राहकातिरिक्तग्राह्यतया परतस्त्वं तत्प्रामाण्यस्येत्यर्थः । तर्कताण्डवे या तु पद्धतौ ज्ञाप्तिस्तु परत एवेत्युक्तिः सा करणस्वरूपग्राहक-मात्रग्राह्यत्वं नेत्यभिप्रेत्य ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य ग्राह्यत्वं स्वतस्त्व-मिति सुधोक्त्या विवक्षाभेदेन स्वतस्त्वमपि करणानां ज्ञप्तौ ध्येयमित्युक्तम् । निरूपितप्रमाणस्वरूप-स्योपयोगं वदन्परमपुमर्थेन संयोगमाह ।। **तदेवमिति ।** तत्तस्मादर्थाव्यभिचारित्वादेवंभूतैः सम्यक् परीक्षितैः प्रत्यक्षादिप्रमाणैर्नित्यानित्यत्वसारासारपरमपुरुषार्थत्वतादृशत्वादिकं निश्चित्यानित्यासारादि-रूपविषयेषु विरक्तस्य निवृत्तमनस्कस्य । शमदमादीत्यादिपदेन शान्तो दान्त उपरतस्तितिक्षुः समाहित इति श्रुत्युक्तग्रहः । श्रवणं गुरूपदेशजन्यं वाक्यार्थज्ञानम् । मननं तु गुरूपदेशादवगतार्थे युक्त्यनुसन्धानम् । निदिध्यासनं नाम श्रवणमननाभ्यामुत्पन्नतत्त्वनिश्चयजन्यसंस्कारपरिणामरूपं भगवद्विग्रहस्य मनसा निरन्तरावलोकनम् ।। **आदरनैरन्तर्याभ्यामिति ।** आदरः स्नेहविशेषः । नैरन्तर्यमविच्छिन्नता । ताभ्याम् ।। **आनन्दादीति ।** ज्ञानबलप्रकाशादिरादिपदार्थः । कृतं प्रकरण-मवान्तरप्रयोजनं सूचयन् भगवति गुरौ चार्पयति ।। **जयतीर्थेति ।**

**प्रमाणपद्धतेर्भावदीपो योऽयं विनिर्मितः ।**
**राघवेन्द्रेण तेन स्यात्प्रीतो विष्णुस्सदा मम ॥ १ ॥**
**कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥ २ ॥**

**इति श्रीप्रमाणपद्धतिभावदीपे सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते शब्दप्रकरणम् ।**

**विज.—** करणप्रामाण्यस्योत्पत्तौ स्वतस्त्वमाह ॥ **करणानां त्विति** । करणप्रामाण्यं हि प्रमाकरणत्वरूपम् । तच्च योग्यतावच्छेदकशक्त्यात्मकम् । सा च शक्तिर्न ज्ञानजननशक्तितो भिन्ना । गौरवान्मानाभावाच्च । सैव कार्यबले सिद्धौ नागन्तुकहेतुसापेक्षा । किन्तु भावसामग्रीजन्यैवेत्येतदेव तस्याः स्वतस्त्वनाम । तदाहुः । नित्यनियतैव सा शक्तिरनित्ये भावहेतुजेति । न च भावकार्यत्वेन समवायिजन्यत्वान्नास्या आश्रयेण सहोत्पादसम्भव इति वाच्यम् । स्वसमवायिमात्रस्य सर्वत्राप्यभावात् । समवायित्वेन तत्र हेतुत्वे मानाभावात् । अव्यवहितोत्तरक्षणे भावानामशमक्तत्वेन रूपादिकार्यजनकतापत्तेश्च । शक्त्यनुकूलशक्तेरपि समानाधिकरणायाः स्वीकार्यत्वेन व्यवस्थापत्तेश्च । न चैवेयं प्राणाणिकी प्रथमशक्तेरेवमेवादौ कार्येऽनुभवादप्रसङ्गेन परस्परविरोधात् । नन्वेकत्वं शक्तौ ज्ञानत्वस्य कार्यतावच्छेदकत्वान्न तस्यामपि प्रमात्वमपि तथेति वाच्यम् । दोषाभावान्मनस्त्वस्य जन्यज्ञाने साक्षिसाक्षात्कारे चोभयत्र हेतुतावच्छेदकत्वात् । एतेन ज्ञानशक्तिव्यापिका शक्तिरन्यैव प्रमात्वप्रयोजिकेत्यपास्तम् । नन्वेवं चक्षुरादिप्रमात्वशक्तेरपि भावहेतुजज्ञानशक्तिरूपैवेति साऽपि स्वत एव स्यादित्यत आह ॥ **प्रामाण्यजनने त्विति** । अयमाशयः । न तावज्ज्ञानशक्तिरेव प्रमाशक्तिः । एकशक्तिप्रयोजकत्वे प्रमाप्रमयोः सर्वत्र सङ्करापत्तेश्च । न चैवं प्रमाशक्तिरेवान्याऽस्तु । ज्ञानशक्तेरेव कल्पनीये लाघवेन प्रमाप्रयोज्यस्यैव कल्पनात् । नन्वन्याऽपि सा भावहेतुजैवास्त्विति स्वमतमनिवार्यमिति चेन्न । तस्या ज्ञानशक्त्यनपेक्षाया अप्रमाप्रयोजकत्वे तत्र ज्ञानत्वानापत्तेः । तदपेक्षणे तु तस्याः प्रमाशक्तित्वेन प्रमाभ्रमसंस्कारापत्तेः । तथा च दोषेण पूर्वशक्तिं निरुध्य विनाश्रयाच्च प्रमाशक्तिरेकैवान्योत्पद्यत इत्येवं वाच्यम् । साहजिकज्ञानशक्तिरप्रमाशक्तिं विना स्यादिति सुस्थमेव तत् । ननु चक्षुरादिकरणानां प्रमारूपफलानुमेयत्वापत्तेः । न च प्रमा प्रमाकारणत्वेनैवानुमानाद्यावत्स्वाश्रयग्राहकग्राह्यत्वं स्वतस्त्वं तत्रापि स्यादित्याशङ्क्याह ॥ **ज्ञप्तिरस्त्विति** । अत्र हेतुर्यथार्यमिति । ज्ञानक्रियामात्रेण कारणमात्रस्य प्रमां विनाऽप्यनुमातुं शक्यत्वादित्यर्थः ॥ **अनुमानेति** । अनुमानविशेषेत्यर्थः ॥

**विजयीन्द्रयतिः कश्चित्कृतवान्भाववर्णनम् ।**
**प्रमाणपद्धतेः प्रीत्यै जयश्रीपूर्णमध्वयोः ॥ १ ॥**

**इति श्रीमज्जयतीर्थपूज्यचरणविरचितायाः प्रमाणपद्धतेष्टीकायां विजयीन्द्रयतिविरचितायां तृतीयप्रकरणव्याख्या समाप्ता ॥**

**वेदे.——** इदानीं करणगतयाथार्थ्यं ज्ञानजनकत्वशक्तिरूपप्रामाण्यस्योत्पत्तौ स्वतस्त्वमुपपादयति ॥ **करणानां त्विति** । तु शब्देनात्रत्यस्वतस्त्वविशेषं सूचयति । ज्ञानजनकशक्त्यभिन्नत्वं वा तज्जनकमात्रजन्यत्वं चोक्तरूपकरणप्रामाण्ये स्वतस्त्वमिति । करणगतायथार्थजनकत्वशक्तिरूपाप्रामाण्यस्य तु ज्ञानजनकत्वशक्तिभिन्नत्वं वा तज्जनकातिरिक्तजन्यत्वं वा परतस्त्वं विवक्षितमित्यभिप्रेत्योपपादयति ॥ **अप्रामाण्येति** । आविर्भवति जायते । करणप्रामाण्यस्य ज्ञप्तिप्रकारमाह ॥ **ज्ञप्तिरिति** । अत्र परत एवेत्युक्तिः स्वाश्रयीभूतकरणग्राहकमात्रग्राह्यत्वरूपस्वतस्त्वं नेत्यभिप्रेत्य । वस्तुतस्त्वप्राप्तिज्ञानजनकमात्रग्राह्यत्वरूपं स्वतस्त्वमेव विवक्षितम् । अत एव सुधायां करणानां ज्ञप्तौ स्वतस्त्वं नास्त्येवेत्यादिनेममेव पक्षमुक्त्वा । अथवा ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वमिति पक्षान्तरमुक्तम् ॥ **यथायथमिति** । इन्द्रियस्वरूपस्यानुमानेन लिङ्गस्वरूपस्य प्रत्यक्षादिनाऽऽगमस्वरूपस्य श्रोत्रेण वेद्यत्वादित्यर्थः ॥ **अनुमानेनेति** । तदन्वयव्यतिरेकानुविधायीत्युक्तस्वरूपेत्यर्थः । प्रेक्षावत्प्रवृत्त्यै स्वग्रन्थस्याधिकार्यादिकं दर्शयन्मोक्षसम्बन्धमाह ॥ **तदिति** । एवम्भूतैराभासविविक्तैः । अत्र षष्ठ्यन्तैरधिकारिस्वरूपमुक्तम् । भगवत् प्रसादादित्यनेन भगवानेव विषय इति सूचितम् । मुक्तिस्वरूपे वादिविवादात्तत्स्वरूपनिर्धारणायाह ॥ **अशेषेति** । अविशिष्टेन प्रकरणस्य मुक्तिं प्रति परम्परया साधनमेवोपपादनम् । अत्र सर्वत्रागमादिप्रमाणमन्यत्रोदाहृतं द्रष्टव्यमित्यशेषमतिमङ्गलम् ॥

**तर्कताण्डवसन्न्यायसुधादौ यः प्रपञ्चितः ।**
**भावो जयमुनेरत्र स एवाल्पतयेरितः ॥ १ ॥**
**यो वासवीनयनकञ्जविकासभानुरानन्दतीर्थहृदयाम्बुजसन्निविष्टः ।**
**कृष्णः स तुष्टिमुपयातु सदिष्टहेतुदृष्टिर्मदीयकरणात्स्वव्रतादमुष्मात् ॥ २ ॥**

**इति श्रीवेदेशतीर्थविरचितः श्रीमज्जयतीर्थकृतप्रमाणपद्धतेर्भावविवरणे तृतीयपरिच्छेदः समाप्तः ॥**

**अभि.——** ॥ **करणानां त्विति** । उपलक्षणमेतत् । अप्रमाणानां शक्त्यादिवचसां तमोयोग्येन्द्रियाणां विरुद्धहेत्वाभासानां वा ज्ञानजननशक्तिरेवाप्रामाण्यजननशक्तिः । प्रामाण्यजनने तु सहकारिवशादन्या शक्तिराविर्भवतीत्यपि ग्राह्यम् । एतेन कदाऽपि प्रमाजननशक्त्यभावाद्विरुद्धादिहेत्वाभासानां प्रामाण्यजनकशक्तेः स्वाभाविकत्वाङ्गीकारे न युक्त इति परास्तम् । ननु प्रमाणलक्षणविभागादिनिरूपणमयुक्तम् । प्रयोजनाभावात् । न च मोक्षः प्रयोजनं तस्य भगवज्ज्ञानैकसाध्यत्वाभावादित्यत आह ॥ **तदेवंभूतैः प्रमाणैरिति** । तत्त्वं द्विविधं प्रमाणं प्रमेयं चेति । प्रमाणरूपतत्त्वनिर्णयायेदं प्रकरणमारब्धम् । प्रमेयात्मकतत्त्वनिर्णयस्तु तत्त्वसङ्ख्यानादौ भविष्यति । तथा च द्विविधतत्त्वनिर्णयानन्तरमेवंभूतैः प्रमाणैर्नित्यत्वानित्यत्वादिकं निश्चित्य विरक्तस्य श्रवणादिद्वारा भगवदपरोक्षे जाते मोक्षो भवतीति युक्तं प्रमाणस्वरूपनिरूपणमिति भावः । एतेन प्रमाणमज्ञातानां

ज्ञानसाधनत्वासम्भवात्तत्सिद्ध एव तत्त्वस्य ज्ञातव्यत्वाद्वा । नाद्यः । अनुमानागमयोर्ज्ञातकारणत्वेन तत्स्वरूपनिरूपणस्य कथञ्चिदावश्यकत्वेऽपि प्रत्यक्षनिरूपणवैय्यर्थ्यप्रसङ्गात् । ईशलक्ष्म्यदिज्ञान-स्वरूप निरूपणायोगाच्च । न द्वितीयः । भावाभावतदितरतत्त्वनिरूपणस्य कर्तव्यतापातादिति निरस्तम् । ग्रन्थान्तरे तन्निरूपणं करिष्यामीति भावेनाह ॥ **प्रमाणस्वरूपमात्रनिरूपणादिति ॥**

**रामचन्द्रः प्रसन्नो मे यदि केनापि कर्मणा ।**
**सतां तुष्टिकरं नित्यं भूयादभिनवामृतम् ॥ १ ॥**

**इति श्रीमत्सत्यनिधितीर्थश्रीमच्चरणाराधकेन श्रीसत्यनाथयतिना विरचिते प्रमाणपद्धतिव्याख्यानाभिनवामृते तृतीयपरिच्छेदः समाप्तः ॥**

**आद.**— अस्य ग्रन्थस्य बालबोधार्थं प्रवृत्तत्वेन वस्तुस्थितिरेवोक्तेति मन्तव्यम् । प्रमाणनिरूपण परग्रन्थस्य विषयाद्यनुबन्धचतुष्टयशून्यत्वान्नारम्भणीयत्वमिति शङ्कापनोदायाह ॥ **तदेवम्भूतैरिति ।** तथा चास्य प्रकरणत्वेन शास्त्रैकदेशत्वेन शास्त्रीयाविषयादिकमेवास्य विषयादिकमिति भावः। शास्त्रैक-देशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् । आहुः प्रकरणं नामेति तल्लक्षणोक्तेः । एवं च भगवानेव विषयो मोक्ष एव फलमिति भावः । समापितप्रकरणो भगवांष्टीकाकारः स्वकृत्या भगवत्प्रीतिं प्रार्थयते ॥ **जयतीर्थेति ।** माधवो लक्ष्मीपतिः । मायायाः धव इति व्युत्पत्तिरिति । तेन सकलवाङ्मनसदेवतायाः श्रीलक्ष्या अपि प्रीतिराशासिता भवति । मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतमित्युक्तेः । मधु सुखकरं शास्त्रं यस्येति बहुव्रीहिणा महानन्दसम्पादकशास्त्रकर्तेत्यर्थः। तेन गुरुत्वं परमेष्टत्वं च सूचितं भवतीत्यशेषमतिमङ्गलम् ॥

**शास्त्रमालोड्य तत्सारः शक्त्या निश्चित्य युक्तितः ।**
**भीमाम्बागर्भसम्भूतनृसिंहेन प्रकाशितः ॥ १ ॥**
**कमलाबाहुपाशाभ्यां बद्धः श्रीहयशीर्षवान् ।**
**अनेन कर्मणा भूयात्प्रीतो मे मध्ववल्लभः ॥ २ ॥**

**इति श्रीमट्टीकाकृत्पादविरचितप्रमाणपद्धतिभावप्रकाशकः श्रीमद्व्याघ्रपुरीवासिवासुदेवाचार्यशिष्य-श्रीश्रीनिवासाचार्यशिष्य नरसिंहविरचित आदर्शनामा ग्रन्थः समाप्तिमगमत् ॥**

**वि.**— इतिशब्दः प्रमाणलक्षणादिनिरूपणपरिसमाप्तौ वर्तते । ननु प्रमाणादिकथनेनेदमेव प्रमाणं नान्यदित्याद्यवधारणात्मा निश्चयो भवति । न च प्रमाणादिस्वरूपनिर्णयः स्वतः पुरुषार्थोभवत्य-तस्तत्प्रयोजनत्वज्ञापनाय स्वतः पुरुषार्थभूतमुक्त्युपयोगितामाह ॥ **तदेवंभूतैः प्रमाणैरिति ।** तस्मात् परोक्तप्रमाणलक्षणप्रमाणविभागादेरयुक्तत्वादेवंभूतैरस्मदुक्तलक्षणविभागाद्यनुसारेण सम्यङ्निश्चित-श्रुतिस्मृत्यादिभिः पदार्थानां नित्यत्वानित्यत्वादिकं निश्चित्य केषाञ्चित्पदार्थानां नित्यत्वमुत्पत्ति-विनाशराहित्यादिकमित्यनुवदति । विनाशित्वमादिपदोक्तमुत्पत्तिरहितत्वे सति विनाशित्वे सत्युत्पत्ति-

राहित्यमसारत्वादि सम्यग्ज्ञात्वा स्रक्चन्दनवनितादिषु विषयेषु रागरहितस्य शमदमादिसम्पत्तिमतो बुद्धेर्भगवन्निष्ठता शमः शान्तिर्वा । दम इन्द्रियनिग्रहः । द्वन्द्वसहिष्णुत्वादिरादिशब्दार्थः । तद्रूपायाः सम्पत्तिः सम्पत्तिद्वतं वासुदेवैकशरणस्य । वा गतिगन्धयोरिति धातोः । स्वभक्तसंरक्षणार्थं स्वाभक्त-निग्रर्थं च गमनशीलत्वाद्वा । षूञ् प्राणिप्रसव इति धातोः । जगत्प्रसवितृत्वात् वा चासौ सुश्चेति वासुः । दिवु क्रीडाविजिगीषास्तुतिमोदमदस्वप्नकान्तिष्वितिधातोः । देवदेवः । वासुश्चासौ देवश्चेति वासुदेवः । वस निवास इति धातोः । वासुः । दिवु क्रीडेति धातोः । दीप्यमानत्वाद्देवः । वासुश्चासौ देवश्चेति वादुदेवः। वस आच्छादन इति धातोः । दुर्जनान्प्रति स्वस्वरूपाच्छादकत्वाद्वासुः । दिवु क्रीडेत्यादेः क्रीडाशीलत्वाद्देवः । वासुश्चासौ देवश्चेति वासुदेवः । बलरूपत्वाद्वः । बवयोरभेदात् । असुरूपत्वा-त्सकलप्राणिनां प्राणरूपत्वादसुः । दा दान इति धातोर्भक्ताभीष्टप्रदातृत्वाद्देः । वृतु वर्तन इति धातोः सर्वप्रवर्तकत्वाद्वः । वश्चासावसुश्चासौ देश्चासौ वश्चेति वासुदेवः । ''वानात्सुतेर्देवनाद्वासुदेवो वा वासाद्युतेश्छादनात्क्रीडया च । बलादसुत्वाद्दातृतो वर्तनाच्च तं वासुदेवं प्रवदन्ति सन्त'' इति वचनात् । तथा चैतादृशगुणयुक्तत्वेन वासुदेवनामा मुक्तिप्रदो भगवानेकशरणं मुख्याश्रयो मुख्यरक्षितो वा यस्य तस्य तद्विषयाणि वासुदेवविषयकाणि श्रवणमनननिदिध्यासनानि । आचार्या उपदेशपूर्वकवाक्यार्थज्ञानं श्रवणमुपक्रमादिन्यायैर्वेदार्थानुचिन्तनं मननम् । स्वयोग्यध्यानं निदिध्यासनम्। भाव्यनुष्ठितवचन इत्यन्वयः । श्रवणाद्यनुष्ठाने इतिकर्तव्यतामाह ॥ **आदरनैरन्तर्याभ्यामिति** । माहात्म्यज्ञानपूर्वको बहुमान आदरः । नैरन्तर्यमवधानं ताभ्यां भगवत्साक्षात्कारे स्वबिम्बभूत भगवदपरोक्षज्ञाने जाते उद्रिक्तयाऽऽ-विर्भूतयोत्कृष्टया वा तद्भक्त्या तस्मिन्भगवति माहात्म्यज्ञानपूर्वकत्वादि विशेषणविशिष्टः स्नेहो भक्तिस्तया जाताद्भगवत्प्रसादाद्भगवत उत्तमाग्रहात् । अशेषानिष्टनिवृत्तिविशिष्टः स्नेहो भक्तिस्तया जाताद्भगवत् प्रसादाद्भगवत उत्तमानुग्रहात् । अशेषानिष्टनिवृत्तिविशिष्ट अशेषाणि निःशेषाण्यनिष्टानि दुःखकारणान्य विद्याकामकर्मादीनि तेषां विवृत्तियुक्तानन्दादिस्वरूपाविर्भावलक्षणानन्दसुखं ज्ञानं यथेष्टशक्त्यादिरादि-शब्दार्थः। आनन्दादि यत्स्वस्य रूपं स्वभाव स्तस्याभिव्यक्तिरूपा मुक्तिर्भवतीत्यर्थः । आनन्दाख्याऽभि व्यक्तिः स्वरूपज्ञाने प्रतिभासः । जीवयोग्यतानुसारेणाशेषार्थविषयीकरणं शक्तेरप्रतिबलत्वमित्यनु-सन्धेयम् । इति शब्दः प्रकरणसमाप्तौ वर्तते। नन्वस्तूक्तरीत्येदं प्रकरणं सफलम् । तथाऽपि परोपदेशात्मकस्यास्य प्रकरणस्य परार्थत्वेन स्वार्थत्वाभावात्स्वस्येदं प्रकरणं व्यर्थमिति शङ्कावारणाय स्वकृतेनानेन प्रकरणेन स्वस्य भगवत्स्वरूप प्रयोजनं प्रार्थयते ॥ **जयतीर्थमुनीन्द्रेणेति** । बालबोधाय बालानामल्पमतीनां बोधाय प्रमाणादिस्वरूपनिर्णयायेत्यर्थ इति ॥ छ ॥

**प्रमाणपद्धतेर्व्याख्या बालबोधाय निर्मिता ।**
**विठ्ठलेन तया भूयात्प्रीतिर्माधवमध्वयोः ॥ १ ॥**

**इति श्रीनिवासबालनृसिंहभट्टसूनुना विठ्ठलभट्टेन रचितायां प्रमाणपद्धतिटीकायामागमविवरणं समाप्तम् ॥**

*॥ ग्रन्थश्चायं सम्पूर्णः ॥*

# द्वैतवेदान्तप्रतिष्ठानेन प्रकाशिताः ग्रन्थाः
## Publications of Dvaita Vedanta Foundation

| | | Price (Rs.) |
|---|---|---|
| संस्कृत ग्रन्थाः | | |
| 1. | न्यायामृतम् Vol. I, Vol. II & Vol. III | 750/- |
| 2. | ऋग्भाष्यम् Vol.I | 270/- |
| | ऋग्भाष्यम् Vol.II | 300/- |
| 3. | ब्रम्हसूत्रभाष्यम् | |
| | with eight commentaries Vol. I, II, | 270/-each |
| | Vol. III to VII | 200/-each |
| 4. | श्रीमद्भागवतम् with यादवार्य and सत्यधर्म commentaries. | |
| | Vol. I, II, III | 200/- each |
| | Vol. IV, Vol. V | 300/- each |
| | Vol. VI, VII | 200/- each |
| 5. | तात्पर्यचन्द्रिका Vol. I to III | 300/- each |
| 6. | सुमध्व विजयः Vol. I & II | 200/- each |
| 7. | विष्णुतत्वविनिर्णयः with English translation | 40/- |
| 8. | सत्तत्त्वरत्नमाला | 65/- |
| 9. | सर्वमूलग्रन्थाः-गीताभाष्यम्, गीतातात्पर्यम् | 70/- |
| 10. | पूर्णप्रज्ञदर्शनम् | 15/- |
| 11. | मध्वसिद्धान्तसारः | 24/- |
| 12. | जयतीर्थविजयः | 40/- |
| 13. | तत्वप्रकाशिका (ब्रह्मसूत्रभाष्यटीका) | |
| | with English translation | 25/- |
| 14. | मिथ्यात्वानुमानखण्डनम् | 40/- |
| 15. | प्रमाणवचनसङ्ग्रहः Vol. I, II & III each volume | 80/- |
| | ---"--- Vol. IV | 100/- |

| | | |
|---|---|---|
| 16. | वादावली | 100/- |
| 17. | उपाधिखण्डनम् | 80/- |
| 18. | अध्यात्मरसरञ्जनी | 40/- |
| 19. | भागवत तात्पर्य निर्णय Vol. I & Vol. II | 300/- each |
| 20. | न्यायसुधा Vol. I & Vol. II | 400/- each |
| 21. | न्यायविवरणम् | 100/- |
| 22. | श्लोकतात्पर्य चन्द्रिका | 40/- |
| 23. | प्रमाणपद्धतिः | 300/- |
| 24. | तर्कताण्डवम् | 400/- |
| 25. | मायावादखण्डनम् | 20/- |

**English**

| | | |
|---|---|---|
| 1. | Madhva's Philosophy of Vishnu Faith | 75/- |
| 2. | Brihadaranyakopanisad | 70/- |
| 3. | Aupaniṣadam Darśanam | 20/- |
| 4. | Commentaries on Bhagavadgita | 100/- |
| 5. | Principal Upaniṣads Vol.I & II | 220/- |
| 6. | Environment in Puranas | 300/- |

**ಕನ್ನಡ**

| | | |
|---|---|---|
| ೧. | ದ್ವೈತ ವಾಙ್ಮಯ ಮತ್ತು ಇತಿಹಾಸ ಸಂಪುಟ-೧ | 60/- |
| ೨. | ದ್ವೈತ ವಾಙ್ಮಯ ಮತ್ತು ಇತಿಹಾಸ ಸಂಪುಟ-೨ | 75/- |
| ೩. | ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರ ಜೀವನ ಚರಿತ್ರೆ ಮತ್ತು ಉಪದೇಶಗಳು | 80/- |
| ೪. | ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರ ದ್ವೈತದರ್ಶನ | 40/- |
| ೫. | ದ್ವೈತ ವಾಙ್ಮಯ ಕೊಡುಗೆ | 20/- |
| ೬. | ದೇವರ್ಷಿ ನಾರದರು | 40/- |



# Executive Committee of Dvaita Vedanta Studies and Research Foundation, Bangalore

**Chairman**

**Sri N. Narasimha Rau** I.A.S.
Formerly Chief Secretary to Govt. of Karnataka

**Vice-Chairman & Hon. Director**

**Prof. K.T. Pandurangi**
Formerly Prof. of Sanskrit, Bangalore University

**Academic Adviser**

**Prof. D. Pralhadachar**
Vice-Chancellor, Rastriya Sanskrit Vidyapeetha University, Tirupati

**Hon. Secretary**

**Sri A.B. Shyamachar**

**Hon. Treasure**

**Sri N.T. Mannur**
Formerly Deputy Secretary, Finance Dept. Govt. of Karnataka

**Members**

**Sri D.S. Raghavendrachar,** I.A.S.
Formerly Secretary to the Governor of Karnataka

**Sri C. Sudhindra**
Formerly Member Secretary, Water Resources Board, Govt. of India

**Vidwan Satyadhyanacharya**

**Sri S.R. Pandurangi**

**Sri Bindu Madhava Kerur**

**Sri R.K. Moktali**

